अष्टादश महापुराण की रचना की है, किन्तु, साधारण सुधीगण के दो सुसङ्गत अर्थ विशिष्ट पद्यों की रचना भी कठिन है

'मुने पुराणानि दशाष्ट साक्षात् श्रुत्यर्थगर्भाणि सुदुष्कराणि ।
कृतानि पद्यद्वयमत्र कर्तुं को नाम शक्नोति सुसङ्गतार्थम् ॥'

(शङ्करदिग्विजय । २४)

जिसका समर्थन आचार्य शङ्कर ने देवताधिकरण में 'तस्मात् समूलम् इतिहासपुराणम्' यह कहते हुए किया तथा आचार्य सायण ने भी भाष्योपक्रमणिका में आपात दृष्टि से विरुद्ध रूप में परिलक्षित विषय का मीमांसा शास्त्रोक्त पद्धति के अनुसार प्रामाण्य स्थापित किया है । अतः - यह मानना ही होगा कि विज्ञानद्रुम-सत्यता-शिखरिणी-समारूढ़-समाज के लिए वर्तमान युग में यह उपकारक है । अग्निकुण्ड एवं यज्ञमण्डप आदि की निर्माण-प्रक्रिया ही आज के गृह निर्माण एवं चित्रकला आदि का मूलाधार है । दक्षिण और बङ्गाल में आज नारियाँ इसी परम्परा से दक्ष प्रातः गृहद्वार पर अनायास श्रुति सम्मत चित्र का निर्माण कर कल्याण की कामना करती हुई अनायास ही चित्रकला की प्राथमिक शिक्षा देती हैं । मीमांसा हजारों अधिकरण के सहस्रधा विचार करने पर हजारों न्याय स्थापित होते हैं, उसी के समान भौतिक वाक्यों का यथार्थ ज्ञान सम्भव होता है । यदि आधुनिक न्यायाधीश इस न्याय की पद्धति से न्याय निर्णय की दिशा प्रशस्त करें तो निश्चित ही निर्णय में विपर्यय की सम्भावना नहीं होगी ।

मीमांसादर्शन के सूत्रों के आधार पर दर्शनशास्त्र के आलोच्य सृष्टितत्त्व, आत्मतत्त्व एवं ईश्वरतत्त्व आदि के विषय में स्पष्टतः निर्देश नहीं है, किन्तु वट-बीज के समान अवस्थित इन तत्त्वों का उद्‌घाटन परवर्ती आचार्यों ने किया है— संसार अनादि होने से सृष्टि और प्रलय नहीं है ; आत्मा वेद विहित कर्म का कर्ता एवं उसका फल भोक्ता होने से व्यावहारिक जीव ही आत्मा है अर्थात् शरीरातिरिक्त अहङ्कार ही आत्मा है और वह जन्म, मरण, स्वर्ग और नरक आदि के साथ सम्बन्धयुक्त है । चिरविनष्ट फल की उपपत्ति के लिए अपूर्व नामक पदार्थ माना है, ईश्वर फलप्रद नहीं है । अपौरुषेय वेद का स्वतः प्रामाण्य है । इसीलिए शङ्कर-दिग्विजय ने कहा है—'निरास्यमीशं श्रुतिलोकसिद्धं श्रुतेः स्वतो मात्वमुदाहरिष्यन्' (६।८९) मीमांसा-सिद्धान्त में अतीन्द्रिय सुख नहीं है, वेद क्रिया का प्रतिपादक है । भाट्टमत में विपरीत ख्याति और प्रभाकरमत में अख्याति ही भ्रम में भासमान होती है । प्रभाकरमत में क्रियान्वित शब्द में शक्ति है एवं अन्विताभिधानवाद माना गया है । भाट्टमत में सिद्धवस्तु में शक्ति है एवं अभिहितान्वयवाद है । याग, दान होमादि वैध कर्म है एवं ब्रह्महत्या, कलञ्जभक्षण आदि निषिद्ध कर्म है । मीमांसा के सिद्धान्त में शास्त्रोक्त चतुर्थी विभक्तियुक्त शब्द से त्यज्यमान द्रव्य का उद्देश्यीभूत ही देवता है । तात्त्विक दृष्टि से जिस नाम से जिस शब्द में जिस भाव में जो भी देवता शास्त्र उद्देश्यीभूत हो किन्तु वैदिक दृष्टि से जैसा पूर्व

विवरण प्रस्तुत किया है 'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' (ऋग्वेद १।१४८।३६) इत्यादि श्रुति के आधार पर सनातन एक परमेश्वर से अतिरिक्त कुछ भी नहीं है।

पञ्चमहायज्ञ एवं इष्टि सोमादि यज्ञ के द्वारा ही इस महापाप-पंकिल शरीर को ब्राह्मी किया जाता है (महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः)। इसलिए अवश्य कर्तव्य नित्य नैमित्तिक और का कर्म काम्य अनुष्ठान करना चाहिए। द्रव्य देवता एवं देवता के उद्देश्य से द्रव्य त्याग ही प्रधान कर्म है। इस प्रधान कर्म के निर्वाह के लिए अनेक अन्य अङ्ग कर्म भी किये जाते हैं, मन्त्र सभी जगह अनुस्यूत है।

मननात् मन्त्रः इस वेदवचनानुसार यज्ञीय द्रव्य देवता आदि के ध्यान या चिन्तन से प्रापित है उन्ही का नाम मन्त्र है। (विधायकं ब्राह्मणम्) कर्तव्यता का प्रतिपादन करने वाला ही ब्राह्मण है। विधि तीन प्रकार की है---(१) अपूर्व विधि, (२) नियम विधि, (३) परिसंख्या विधि। इनका पुनः चार भेद है--(१) उत्तरास्ति विधि, (२) विनियोग विधि, (३) प्रयोग विधि, (४) अधिकार विधि। अतिदेश और उपदेश के आधार दो प्रकार के हैं। इन्हीं विधियों के द्वारा धर्म प्रवृत्त होता है। मीमांसा द्वादश लक्षण है, अर्थात् १२ अध्याय है। इन १२ अध्यायों में बारह पदार्थ विचारित है और उसी में धर्म का स्वरूप मीमांसित होता है।

प्रथम अध्याय प्रमाण लक्षण है, इसमें धर्म के प्रमाण सम्बन्ध में आलोचना की गई है। वेद की विधि ही साक्षात् धर्म में प्रमाण है। अर्थवाद विधि का आनुगुण्य संपादन करता है, अतः वह भी धर्म में प्रमाण हैं। ये विधियां एवं मन्त्रार्थवाद मूलक मनु आदि स्मृतियाँ भी वेदमूलक होने से धर्म में प्रमाण हैं। अतः वेदमूलक न होने पर वे प्रमाण नहीं है। शिष्टाचार यह वेद विरुद्ध न होने पर धर्म में प्रमाण है। किन्तु वेद विरुद्ध या शास्त्र विरुद्ध शिष्टाचार ग्रहण योग्य नहीं है। यथाविधि वेदादि शास्त्र का ग्रहण कर उसके अनुसार आचरण एवं उसी का ग्रहण और आचरण पुत्र शिष्य आदि में संक्रमण करना शिष्ट पदवाच्य है। इसलिए इससे विपरीत कोई भी शिष्ट नहीं हो सकता है, इस अध्याय में चार पाद हैं।

मीमांसा के द्वितीय अध्याय का नाम भेद लक्षण है। उत्पत्ति विधि के द्वारा बोधित धर्म इस द्वितीय अध्याय के चारों पाद में आलोचित है। अतः द्वितीय अध्याय में उत्पत्ति विधि की आलोचना ही प्रधान है

तृतीय अध्याय का नाम शेष लक्षण है। शेष का अर्थ अङ्ग या उपकारक होता है, जो अङ्गी का अर्थात् प्रधान का उपकारक होता है। इनकी ही आलोचना तृतीय अध्याय के आठ पादों में की गई है। इसके द्वारा विनियोग विधि के स्वरूपादि की भी आलोचना होती है। विनियोग विधि के द्वारा श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान और समाख्या-रूप छः प्रमाणों की सहायता से अङ्गत्व बोधित होता है।

चतुर्थ अध्याय का नाम प्रयोग लक्षण है। कौन कर्म किसके द्वारा प्रयुक्त अपूर्व होता है, वह कर्म का प्रयोजक है या नहीं। इस रूप में प्रयोग सम्बन्धीय विषय में इस अध्याय में वर्णित हैं।

पंचम अध्याय का नाम क्रमलक्षण है। श्रुति, अर्थ, पाठ, स्थान, मुख्य एवं प्रवृत्ति के अनुसार कर्म का परम्पराक्रम में विचार इस अध्याय के चार पाद के द्वारा वर्णित है। चतुर्थ और पंचम अध्याय में प्रयोग विधि विषय की आलोचना है।

छठा अध्याय अधिकार लक्षण है। किस कर्म में किसका अधिकार है? यह छः अध्याय के आठ पाद में वर्णित है। अतः छठें अध्याय में अधिकार विधि की आलोचना है। इन छः अध्यायों में उपदेश विधि का प्राधान्य है।

सप्तम और अष्टम अध्याय के चार पादों में सामान्यातिदेश एवं विशेषातिदेश का निरूपण है। अतः इसे सामान्यतः अतिदेश लक्षण कहा गया है।

नवम अध्याय के चार पादों में ऊह विषय का विचार किया गया है। इसलिए इसका नाम ऊह लक्षण है।

दशम अध्याय के आठ पाद में बाध विषयक विचार है, इसीलिए इसे बाध लक्षण कहा जाता है। इसीलिए इसे बाध लक्षण भी कहा जाता है।

एकादश अध्याय में तन्त्रों के सम्बन्ध में विचार है—इसलिए इसे तन्त्र लक्षण कहा जाता है। इसमें चार पाद हैं।

बारहवें अध्याय में प्रसंग विषय का विचार है। अतः इसे प्रसंग लक्षण कहा जाता है। इसमें चार पाद हैं।

**मीमांसक आचार्य**

मीमांसा वेद के समान ही अनादि है। किन्तु जैमिनि के सूत्रकाल से संबद्ध मीमांसा विचार उपलब्ध होने से ऐतिहासिक दृष्टि से इन्हें ही पूर्वाचार्य माना जा सकता है। यह सत्य है कि उन्होंने अपने सूत्रों में अनेक मीमांसक आचार्यों का उल्लेख किया है। पाश्चात्य दृष्टिकोण से ऐतिहासिक तथ्यों के साक्ष्य पर जैमिनि का समय ईसा पूर्व तृतीय से चतुर्थ शतक तक माना गया है। यह बादरायण के समकालीन है, क्योंकि ब्रह्म सूत्र में जैमिनि का नाम मिलता है। साथ ही पूर्व मीमांसा सूत्र में भी बादरायण का नाम उल्लिखित है[1]। जैमिनि को बादरायण शिष्य माना गया है। इन्हें सामवेद का

---

१. जैमिनि सूत्रों में उपलब्ध कतिपय आचार्य :—आत्रेय (मी० ६।१।२६) ऐतिशायन (मी० ३।२।४३), कामुकायन (११।१।५०) कार्ष्णाजिनि (६।७।३२), बादरायण (मी० १।१।५) बादरि (मी० ३।१।३), लावुकायन (६।७।३७) आदि। अतः, इसे वेद के समान प्राचीन मानना अनुचित नहीं है। कुमारिल ने ही कहा है—
'इतिकर्तव्यता मात्रं मीमांसा पूरयिष्यति'

भार प्राप्त था—कुमारिल भट्ट के तन्त्रवार्तिक से यह अवगत होता है कि जैमिनि ने छान्दोग्यानुवादादि ग्रन्थों की रचना की थी। किन्तु यह ग्रन्थ उपलब्ध नहीं है। मीमांसा शास्त्रों के संकर्ष काण्ड की रचना जो चार अध्याय में थी वह भी जैमिनि ने की थी। उसमें उपासनातत्त्व का विश्लेषण था। इसी संकर्ष काण्ड का दूसरा नाम देवता काण्ड था। प्रपञ्च हृदय में चार अध्याय में इस ग्रन्थ के प्रथम अध्याय में वर्णित विषय देवता तत्त्व का वर्णन है। द्वितीय अध्याय में विधि, अर्थवाद, नामधेय देवता का विशेषत्व आदि वर्णित हैं। तृतीय अध्याय में देवता एक ही साथ में अनेक शरीर को धारण कर सकते हैं, अनेक स्थान में व्यक्त हो सकते हैं और अपनी इच्छानुसार तिरोहित हो सकते हैं। चतुर्थ अध्याय में सत्कर्म के फलस्वरूप देवत्व लाभ अपवर्ग या क्रममुक्ति का निर्देशन है। देवता तत्त्व का प्रतिपादन होने के कारण ही यह उपासना काण्ड के नाम से विख्यात है।

महामुनि बोधायन ईसा से पूर्व का माना गया है। इन्होंने द्वादशलक्षणी मीमांसा के चार अध्यायात्मक संकर्ष काण्ड एवं उत्तर मीमांसा के ऊपर कृतकोटिभाष्य नामक विशाल भाष्य की रचना की थी। वृत्तिकार उपवर्ष ने बीस अध्याय के ऊपर वृत्ति की रचना की थी। अनन्तर देवस्वामी ने उत्तर कांड के चार अध्यायों को छोड़कर सोलह अध्याय पर भाष्य की रचना की थी। भवदास भट्ट ने भी संक्षिप्त व्याख्या की थी। ये नाम प्राचीन उक्ति से ही ज्ञातव्य है। कालक्रम ने भगवान् शबर स्वामी ने सिद्धान्त बोधोपयोगी संक्षिप्त भाष्य की रचना की जो आज प्राचीनतम आदर्श स्थानीय है। भाष्य का लक्षण लिखते हुए कहा गया है जिसमें श्रुतगत पदों का ग्रहण कर स्वनिबद्ध सूत्रानुकारी पदों की व्याख्या की है उसी को भाष्य कहा जाता है।

सूत्रस्थं पदमादाय पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

भाष्य लक्षण की ओर विशेष दृष्टिपात न करने के कारण न देवानां देवतान्तराभावाद् इत्यादि अनेक भाष्य वचनभिक्ष भ्रान्ति क्रम में परिगणित हो गया है।

इस प्रकार के वर्णन की सार्थकता प्रदर्शन प्रसंग में यह कहा जा सकता है, शिष्टों का ऐसा व्यवहार रहा है कि विद्वान् संक्षेपोक्ति पूर्वक विस्तृत विषय में प्रस्तुत करते हैं, यही विद्वानों की शैली है। 'इष्टं विदुषां लोके समासव्याससाधारणम्' भाष्यकार की प्रामाणिकता और श्रेष्ठता तो इसी से सिद्ध है कि ज्ञानमूर्ति शंकर ने भी अपने भाष्य में यद्यपि 'शास्त्रतात्पर्यविदामनुक्रमणम्' इत्यादि अंश में पूजार्थक बहुवचन का प्रयोग किया है। यह सत्य है कि आचार्य शंकर ने शास्त्रतात्पर्यवेत्ता कहते हुए भी उनका खण्डन किया है, क्योंकि शबरस्वामी कर्मवादी थे और आचार्य शंकर ज्ञानात्मक अद्वैतवादी थे। शबरस्वामी ने यागयज्ञ की प्रधानता क्रम में देव-देवी के विग्रहवत्त्व का खण्डन किया है, और आचार्य शंकर ने आसमुद्र हिमाचल भारत के सभी देवी-

देवताओं की स्तुति कर उनकी पूजा और प्रतिष्ठा के साथ विग्रहवती पंचदेवता की उपासना के साथ उनकी प्रतिष्ठा की है। अतः दोनों का कार्य विरुद्ध है। वस्तुतः शंकर के विषय में पंचदेवों की उपासना को वेद विरुद्ध व्यवहार सिद्ध करना भी आपात-रमणीय है, क्योंकि कृष्णयजुर्वेद के मैत्रायणी शाखा में रुद्र महादेव, गौरी, गणेश, ब्रह्मा, विष्णु एवं सूर्य की उपासना के लिए उनकी गायत्री पठित है। अग्नि चयन कार्य विषय कह कर उस चित् अग्नि में पूजा के लिए महादेव शिव का आवाहन करने के लिए मन्त्र में कहा गया है।

देवानां च ऋषीणां चासुराणां च पूवजंम्।
महादेवं सहस्राक्षं शिवमावाह्याम्यहम् ॥

शिव के सम्बन्ध में श्रुति कहती है—

तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्।

शक्ति के सम्बन्ध में कहा गया है—

उदगाङ्गो चयाय विद्महे गिरिसुताय धीमहि तन्नो गौरी प्रचोदयात्।

गणपति के सम्बन्ध में कहा गया है—

तत् कराटाय च विद्महे हस्ति मुखाय धीमहि तन्नो दन्ती प्रचोयात्।

विष्णु के सम्बन्ध में कहा गया है—

तत्केशवाय विद्महे नारायणाय धीमहि तन्नो विष्णुः प्रचोदयात्।

सूर्य के सम्बन्ध में कथित है—

तद् भास्कराय विद्महे प्रभाकराय धीमहि तन्नो भानुः प्रचोदयात्।

कार्तिकेय के सम्बन्ध में कथित है—

तत्कुमाराय विद्महे कार्तिकेयाय धीमहि तन्नो स्कन्दः प्रचोदयात्।

ब्रह्मा के विषय में—

तच्चतुर्मुखाय विद्महे पद्मासनाय धीमहि तन्नो ब्रह्मा प्रचोदयात्।

(बर्लिनप्रकाशित मैत्रायणी संहिता अग्निचिति प्रकरण ११९-१२०)

अतः, पञ्च देवो उपासना अश्रौत नहीं है। अतः इस अंश में दोनों भाष्यकारों का सिद्धान्त विरुद्ध नहीं है। कर्मवाद के सम्बन्ध में भी पारमार्थिक दृष्टि से विरोध नहीं है। अशुद्ध चित्त कामना वशीकृत जीव ज्ञानमार्ग का पथिक नहीं हो सकता है वह कर्म मार्ग का ही अधिकारी है। चित्त शुद्धि के लिए यज्ञदान तप कर्म अवश्य ही अनुष्ठेय है। यह ज्ञानमर्गी भी मानते हैं। मीमांसा दर्शन में 'यजति चोदना द्रव्यदेवता-क्रियं समुदाये कृतार्थत्वात्। (४।२।२७)।

कल्पसूत्रकार कात्यायन ने भी 'यज्ञं व्याख्यास्यामः द्रव्यं देवतात्यागः' (१।२।१।२) यही कहा है। इसी विषय को श्रुति भी कहती है 'यस्यै देवतायै हविर्गृहीतनस्त्वतां ध्यायेत वषट् करिष्यन्' ।

ऐतरेय ब्राह्मण (३।१।८) इत्यादि वेद वचन से देवता का ध्यान कर हविष्य का त्याग करना चाहिए। यह भी दोनों पक्ष में स्मरणीय हैं। शबरस्वामी ने मीमांसा दर्शन के (९।१।९) देवताधिकरण भाष्य में कहा है वह प्रौढ़िवाद मात्र है। क्योंकि खण्डदेव ने अपने भाट्टकौस्तुभ में इस विषय का सिद्धान्त उपस्थापित किया है। भाष्यकार ने छठे अध्याय के प्रथम पाद के पंचम सूत्र के तिर्यगाधिकरण भाष्य में 'न देवानां देवतान्तराभावाद्' इस बचन से सामञ्जस्य भी नहीं होता है। वहाँ टीका में कुमारिल भट्ट ने कहा है येषां शब्द एव देवता तेषां अप्युक्तो ग्रन्थः अर्थात् जिसके मत में विग्रहवान् देव नहीं हैं अपि तु शब्दमयी देवता है उस मत में यह युक्ति संगत नहीं होता है। अतः यदि यह माना जाय कि देवता का विग्रहवत्त्व का आलाप सामञ्जस्य की दृष्टि से शास्त्रीय सिद्धान्त नहीं है। अन्यथा संकर्षकाण्ड की देवततत्त्वालोचना व्यर्थ हो जायगी। इसीलिए उत्तर मीमांसा के देवताधिकरण में पाँच विग्रह प्रदर्शित किया गया है।

विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता।
फलप्रदानमित्येतद् पञ्चकं विग्रहादिकम् ॥

इच्छानुसार शरीर धारण यज्ञ में प्रदत्त हविः का भक्षण, सभी पर प्रभुत्व, हविः की प्राप्ति से तृप्ति, फलदातृत्व ये पाँच विग्रहादि कहे गये हैं। अतः कर्म-प्रतिपादनपरक-मीमांसा शास्त्र में कर्म का प्राधान्य स्वाभाविक है। इस विषय में एवं विस्तृत विश्लेषण आगे के खण्डों में प्रस्तुत करने जा रहा हूँ एवं आचार्यों का इतिहास भी अन्य खण्ड में प्रस्तुत करूँगा। इस प्रसङ्ग में इतना ही कहना उचित होगा कि कर्म और ज्ञान का प्राचीर शास्त्रीय विषय विशेष में शास्त्रीय तात्पर्य न होने के कारण परवर्तीकाल की देन है। आर्यभावना दीप्ति की उपासना है और स्वर्गचिन्मयभूमि मुक्ति और प्रस्तुत प्रकाशन में एक ही है। जैमिनि प्रणीत मीमांसा सूत्र शबरस्वामि प्रणीत शाबरभाष्य कुमारिलभट्टकृत तन्त्रवार्तिक, गोविन्द स्वामिकृत भाष्य विवरण जिसे युधिष्ठिर मीमांसक ने सर्वथा दुर्लभ माना है उसका प्रथम प्रकाशन एवं तंत्रवार्तिक की श्री सोमेश्वरभट्ट विरचित सर्वानवद्यकारिणो न्यायसुधा एवं अन्त में भाष्य का सार संकलन 'भाष्यभावप्रकाशिका' प्रस्तुत किया गया है।

मैं अपने पूज्य गुरुदेव विद्यावाचस्पति, श्री ब्रह्मदत्तद्विवेदी का आभार वहन करता हूँ एवं दार्शनिकसार्वभौम न्यायरत्न तर्करत्न स्व० दामोदरलाल गोस्वामी जिनके द्वारा मुझे इन ग्रन्थों के लेखन की शक्ति प्राप्त हुई। पंडितप्रवर मीमांसारत्न श्री यस० सुब्रह्मण्य शास्त्री ने इस ग्रन्थ के प्रकाशन में पूर्ण सहयोग एवं अनेक शास्त्रीय समस्याओं के

समाधान में अनवरत योगदान किया है। अतः मैं इनके प्रति कृतज्ञता वहन करता हूँ, पूज्यपाद डॉ० एस० बागची का निर्देशन ही इन शास्त्रीय गवेषणा का एकमात्र सम्बल है। आचार्य प्रवर विद्यामार्तण्ड श्रीबदरीनाथ शुक्ल का आशीर्वाद ही मेरे इस कठिन कार्य के लिए सदा सेतु का काम करता है। पंडितप्रवर सतकारी मुखर्जी का आशीर्वाद ही इस कृति का उपादान है। श्री प्रेमीशङ्कर शर्मा एम० ए० एवं आजाद चन्द्रशेखर चौरसिया ने इसके श्लोक सूची आदि में अतिशय सहयोग प्रदान किया है अतः वे धन्यवाद के पात्र हैं। स्व० भूतनाथ सप्ततीर्थ का मीमांसादर्शन से इस ग्रन्थ लेखन में सहयोग रहा है, अतः उनका मैं कृतज्ञ हूँ। अन्य जिन आचार्यों की कृतियों से मुझे सहयोग प्राप्त हुआ है उन सभी का मैं आभारी हूँ। इस ग्रन्थ के लेखन एवं सम्पादन में श्रीमती कुसुमलता गोस्वामी का धैर्य एवं सहयोग अविस्मरणीय है।

तारा प्रकाशन के अधिकारी उत्साहसम्पन्न विद्याप्रेमी श्री रमाशङ्कर पाण्ड्या एवं उदीयमान विद्याप्रेमी रविशङ्कर पाण्ड्या के उत्साह एवं कार्य दक्षता की प्रशंसा के साथ उन्हें ईश्वर इनके कार्यों में अतिशय साफल्य प्रदान करे इस आशा के साथ मैं प्रथम भाग को विद्वज्जनों के सम्मुख उपस्थापित कर रहा हूँ। यदि पाण्ड्या जी की प्रेरणा से बाध्य न होता तो इस जटिलतम कार्य का भार वाहन नहीं करता।

पद्मविभूषण पट्टाभिराम शास्त्री जी ने अपनी प्रस्तावना के द्वारा इस ग्रन्थ में वैशिष्ट्याधान किया है। अतः मैं उनकी कृतज्ञता वहन करता हूँ।

—महाप्रभुलाल गोस्वामी।

# मीमांसादर्शन-विषय-सूची

**विषयाः** **पृष्ठ-संख्या**

## औदुम्बराधिकरणम्

अथ मन्त्राधिकरणम्

## शिष्टाकोपाधिकरणम्

# मीमांसादर्शनम्

[ भावप्रकाशिकाभावार्थोपबृंहित-भाष्यविवरण-
न्यायसुधाव्याख्योपेत-तन्त्रवार्त्तिकव्याख्यान-
सनाथीकृत-शाबरभाष्यसहितं जैमिनि-
प्रणीतं मीमांसादर्शनम् ]

## प्रथमो भागः

# मीमांसादर्शनम्

## प्रथमाध्याये द्वितीयः पादः

### आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्माद-नित्यमुच्यते ॥ १.२.१ ॥ [पू०]

#### शाबरभाष्यम्

'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्'[1]। प्रजापतिरात्मनो वपामुदक्खिदत्[2]। देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्'[3] इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि। तानि किं कञ्चिद्धर्मं प्रमिमते, उत नेति भवति विचारणा। तदभिधीयते। क्रिया कथमनुष्ठीयेतेति हि तां [4]वेदितुं समाम्नातारो वाक्यानि समामनन्ति। तद्यानि वाक्यानि क्रियां नावगमयन्ति, क्रियासम्बद्धं वा किञ्चित्, एवमेव भूतमर्थमन्वाचक्षते रुदितवान्रुद्रो, वपामुच्चिखेद प्रजापतिः, देवा वै दिशो न प्रजज्ञिर इत्येवं जातीयकानि, तानि कं धर्मं प्रमिमीरन्? अथोच्येत—अध्याहारेण वा विपरिणामेन वा, व्यवहितकल्पनया वा, व्यवधारणकल्पनया वा, गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यत इति, स कल्प्यमानः कः कल्प्येत? रुद्रः किल रुरोद अतोऽन्येनापि रोदितव्यम्। उच्चिखेदात्मनो वपां प्रजापतिरतोऽन्योऽप्युत्खिदेदात्मनो वपाम्। देवा वै देवयजनकाले दिशो न प्रज्ञातवन्तः, अतोऽन्योऽपि दिशो न प्रजानीयादिति।

तच्चाशक्यम्। इष्टवियोगेन[5], अभिघातेन वा यद्बाष्पनिर्मोचनम्, तद्रोदनमित्युच्यते। न च तदिच्छातो भवति। न च कश्चिदात्मनो वपामुत्खिद्य, तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात्। न च देवयजनाध्यवसानकाले केचिद् दिशो मुह्येयुः। अत एषामानर्थक्यम्। तस्मादेवं जातीयकानि वाक्यान्यनित्यानीत्युच्यन्ते। यद्यपि च नित्यानि, तथाऽपि न नित्यमर्थं कुर्वन्तीति। स एष वाक्यैकदेशस्याऽऽक्षेपो न कृत्स्नस्य वाक्यस्य। नन्वेकदेशाद्विना साकाङ्क्षः पदसमूहो न पर्याप्तः स्वस्मै प्रयोजनाय। अत आक्षिप्त एवेति। नैवम्। भवति हि कश्चित्पदसमूहो योऽर्थवादेभ्यो विनाऽपि विदधाति किञ्चिदर्थम्। यानि पुनस्तैः सह संयुज्यार्थान्तरे वर्तन्ते, तान्येकदेशाक्षेपेणाऽऽक्षिप्यन्ते ॥ १ ॥

---

१. तै० सं० १–५–१। २. तै० सं० २–१–१। ३. तै० सं० ६–१–५।
४. अनुष्ठेयेतिः वदि० पु०। ५. अ इष्टवियोगादिना।

## भाष्यविवरणम्

यस्मादाविरभूद्विश्वं यत्र च प्रविलीयते।
तत्स्वतः सच्चिदानन्दं नमस्यामः परं महः ॥ १ ॥

प्रणमामि गणेशानं देवीं वाचं तथा गुरून्।
यत्कृपालोकनादेव मनो मे शुद्धतामगात् ॥ २ ॥

श्रीमच्छाबरभाष्यस्य मया शिष्यहितैषिणा।
कुमारिलोक्तभावस्य क्रियते विवृतिर्मया ॥ ३ ॥

अस्याधिकरणस्य विषयमाह--सोरोदीदित्यादिना। सङ्गतयस्त्वेवंद्रष्टव्याः--अथातो धर्मजिज्ञासेति प्रमाणादिभिः धर्मे जिज्ञास्यतया प्रतिज्ञाते किं तत्र प्रमाणमित्यपेक्षायां प्रथमेऽध्याये प्रमाणं निरूप्यते, तेनार्थवादादिप्रामाण्यनिरूपणस्यापि धर्मप्रमाणविचारत्वादस्त्यध्यायसङ्गतिः, पादसङ्गतिस्तु प्रथमे सूत्रे समस्तस्य वेदस्य विवक्षितार्थतया प्रामाण्यप्रतिज्ञायां सत्यामपि अर्थवादादिप्रायाण्यस्य विधिप्रामाण्याधीनत्वात् विधिभागस्यैव धर्मे प्रामाण्यं प्रतिज्ञाय प्रसाधितं प्रथमे पादे, अधुना धर्मप्रमितावर्थवादादीनामुपयोगतद्विशेषाभावेनाप्रामाण्यमाशङ्क्य, तत्प्रतिपादनेन प्रामाण्यं प्रतिपाद्यत इत्येवं मन्तव्याः।

यद्वोत्तरसूत्रसन्दर्भपर्यालोचनया चोदनाशब्दस्य वेदमात्रपरत्वावगमात् समस्तस्यैव वेदस्य धर्मे प्रामाण्यं चोदनासूत्रे प्रतिज्ञातम्। तच्च परतः प्रामाण्यादिनिषेधेन समस्तस्य विध्याद्यात्मनो वेदस्यापातप्रतिपन्नैकवाक्यताबलेनाविवेचितावान्तरव्यापारं सामान्यतः प्रतिपादितम्, सम्प्रत्यर्थवादादीनामुपयोगमात्राभावेन प्रातिस्विकोपयोगाभावेन चाक्रियार्थत्वादाक्षिप्योपयोगतद्विविशेषप्रतिपादनेन समाधीयत इति।

वेदाधिकरणसङ्गतिस्तु चोदनानां प्रामाण्ये पदपदार्थसंबन्धौत्पत्तिकत्वादिभिः प्रतिपादितेऽनन्तराधिकरणेन वेदपौरुषेयतया तदवयवानां तासां पौरुषेयत्वेनाप्रामाण्यमाशङ्क्य, वेदापौरुषेयत्वप्रतिपादनेन चोदनानामपि तथात्वेन प्रामाण्ये प्रतिपादिते वेदावयवत्वेन धर्मप्रमाणतया बुद्धिसमारूढानामर्थवादादीनां तत्र प्रामाण्यमस्ति न वेति विचार्यते इति। अत्र चाद्येऽधिकरणे सर्वेषामेवार्थवादमन्त्रनामधेयानामक्रियार्थत्वेनानर्थक्यमाशङ्क्याध्ययनविधिपरिग्रहाविशेषात् सामान्यतः क्रियार्थत्वं विधिना त्वेकवाक्यत्वात् इति सूत्रावयवेन प्रतिपाद्य, विशेषतोऽर्थवादानां द्वारविशेषाभावेनाक्रियार्थत्वमाशङ्क्य द्वारविशेषः प्रतिपाद्यते। न चैवं सत्यर्थवादमात्रोदाहरणासंभवः सामान्यविनियोगप्रतिपादनदशाया मन्त्रनामधेययोरुपलक्षणत्वात् विशेषविनियोगप्रतिपादनाभिप्रायेण च तावन्मात्रोदाहरणं मन्त्रापेक्षया च प्रवृत्त्यङ्गत्वेन पदैकवाक्यत्वेन चार्थवादानां

विधिसन्निधानादर्थवादाधिकरणप्राथम्यम् । चिन्ताप्रयोजनं त्वर्थवादानां धर्मप्रमित्युपयोगितया प्रामाण्यसिद्धिरिति ।

अध्ययनविधिपरिग्रहात् अक्रियार्थत्वाच्च संशयमाह—**तानीति—कश्चिदिति** । यथाश्रुतशब्दप्रतिपादितं स्वार्थपर्यवसानानुपपत्तिकल्पितचोदनाप्रमाणकं वा स्वसन्निधिपठितविधिप्रमाणकं वेत्यर्थः । धर्ममित्यधर्मस्याप्युपलक्षणम्, तत्तस्यां विचारणायाम् अभिधीयते पूर्वपक्षः अक्रियार्थत्वेनानर्थक्ये साधनीये हेतोरन्यथासिद्धिनिरासाय सूत्रकृताम्नायस्य क्रियार्थत्वादित्युक्तम्, तस्यान्यथासिद्धिं परिहरन् पूर्वपक्षमाह—**क्रियेत्यादिना** । क्रिया=प्रवृत्तिनिवृत्तिलक्षणार्थभावना, सा कथम्, केन प्रकारेणानुष्ठेयेत्यपेक्षायां तत्प्रतिपत्तिद्वारेण तद्गतेष्टानिष्टसाधनत्वप्रतिपत्तये वाक्यानि समामनन्तीत्यर्थः, क्रियाबोधनव्यापारेण वेदस्य धर्माधर्मयोः प्रामाण्यमिति प्रतिपादितम्, चोदनालक्षणो धर्म इत्यादिनेत्याशयः । ततः किमित्यपेक्षायां स्वशक्त्यवगतधर्मप्रामाण्यं तावन्न संभवतीत्यानर्थक्यमतदर्थानामिति सूत्रांशं योजयन्नाह—**तद्यानीति** । तत्तथासत्येवंजातीयकानि यानि क्रियाभावं गमयन्ति, तानि न कञ्चिद्धर्मं प्रमिमीरन्नित्यन्वयः ।

ननु क्रियाप्रातिपदिकत्वाभावेऽपि यथा साध्यसाधनेतिकर्तव्यताप्रतिपादकानां प्रामाण्यम् । तद्वत्किं न स्यात् अत आह—**क्रियासम्बद्धमिति** । किं तर्हि तान्यवगमयन्ति इत्यत्र आह—**एवमिति** । एवमित्युक्तं दर्शयति—**रोदितवानिति** । एवमर्थवादानां श्रुत्या क्रियार्थत्वाभावेन धर्मप्रामाण्ये निरस्ते, वृत्त्यन्तरमाश्रित्य क्रियार्थत्वं चोदयति—**अर्थेति** । कश्चित् क्रियारूपः साक्षात्क्रियार्थत्वाभावेनानर्थक्यकल्पनात् कथञ्चित् क्रियार्थत्वेन धर्माधर्मप्रामाण्यकल्पनं वरम्, अन्यथाध्ययनविधिविरोधादिति भावः । वृत्त्यन्तराणामत्यन्तासंभवेनाध्याहारपक्षमाश्रित्य समाधत्ते—**स कल्प्यमान** इति । यद्यप्युपादानवदुपेक्षाया अपि प्रमाणफलत्वेनाध्ययनविधेस्तद्विषयतयाप्युपपत्तेः न विधिकल्पकत्वं तथाभ्युपेत्योच्यत इति सूचयितुं कल्प्यमान इत्युक्तम् । अतीते रुद्ररोदनादौ प्रमाणान्तराभा ··· ··· सत्यत्वनिश्चयात् तद्द्वारेणापि न विधिकल्पनेति किलकारः ।

दिशो न ज्ञातवन्तः—दिङ्मूढा आसन् । दिशो न प्रजानीयादिति दिक्षु मुह्येदिति यावत् । एवमध्याहारेण विधिकल्पनाप्रकारमनूद्य दूषयति—**तच्चेति** । कल्पनं तच्छब्दार्थः । कुत इत्याशङ्क्य कल्प्यमानार्थस्येच्छानधीनतया दुरनुष्ठानत्वेन दृष्टविरुद्धत्वादित्याह —**इष्टेत्यादिना** । अभिघातः—दण्डप्रहारादिः ।

न चेष्टवियोजनादिद्वारापि तत्कर्तुं शक्यम्, तत्रापोच्छाया असंभवात्, मङ्गलाचरणशीलतावादिशास्त्रविरोधाच्चेति भावः । वपोत्खननस्यापि इच्छासंभवेन वाक्यशेषोक्ततूपरयागानुष्ठानासंभवेन चाशक्यानुष्ठानत्वेन दृष्टविरुद्ध-

त्वादात्मरक्षणकर्तव्यताप्रतिपादकशास्त्रविरोधाच्च न विधानमित्याह—न हीति—दिङ्मोहस्य चापुन्तन्त्रत्वेन दृष्टविरुद्धत्वात् 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादिशास्त्रविरोधाच्च न कर्त्तव्यमित्याह—न चेति ।

ननु माभूद्विधिकल्पना स्वार्थपर्यवसानमेवैषामस्तु, अथ वा किं विधिकल्पनया प्रामाण्याभ्युपगमेन प्राशस्त्यादिलक्षणाद्वारेण स्वसन्निहितविध्येकवाक्यतया धर्मप्रामाण्योपपत्तेरिति शङ्कां परिहरन्नुपसंहरति—**अत इति** । अतः क्रियाबोधनद्वारेण धर्माधर्मप्रमापकत्वाभावादेषामर्थवादानामानर्थक्यं निष्प्रयोजनत्वमेव युक्तमित्यर्थः ।

अयं भावः प्रयोजनवदर्थपर्यवसायित्वमध्ययनविधिपर्यालोचनया वेदमात्रस्य भवताभ्युपगतमेव । न चार्थवादानां स्वार्थपर्यवसायिनां तद्युज्यते, तत्प्रतीत्या प्रयोजनादर्शनात् । अतः प्राशस्त्यादिद्वारा विध्येकवाक्यत्वमेवैषां प्रामाण्यप्रयोजकमाश्रयितव्यम् न च तत्र प्रमाणमस्ति, न च प्राशस्त्यादिणक्षणैवैकवाक्यत्वे प्रमाणम् सर्वत्रैकवाक्यताधीनत्वाल्लक्षणायाः तस्या अपि तदधीनत्वे परस्पराश्रयदोषप्रसङ्गात् । न च प्रयोजनवदर्थाववोधपरत्वं वेदस्य प्रतिपादयन्नध्ययनविधिरेवैकवाक्यत्वे प्रमाणमिति वाच्यम् । अध्ययनविधेरर्थवादशक्त्यनुसारित्वेन तदवगमितस्यैव विशिष्टस्यार्थस्योपेक्षादिफलवत्त्वकल्पनायामेव तस्य सामर्थ्यादिति आनर्थक्यप्रतिपादनफलतया सूत्रशेषं व्याचष्टे—**तस्मादिति** ।

नन्वर्थवादेष्वप्यपौरुषेयत्वादिनित्यत्वहेतुसाम्यात् कथमनित्यत्वव्यपदेशः तत्राह—**यद्यपीति** । तथापि नित्यानां चोदनानां यत्कार्यं धर्माधर्मप्रमितिलक्षणम्, तन्न कुर्वन्तीति कृत्वा नित्या नित्यविलक्षणानि[1] अप्रमाणानीत्युच्येरन्नित्यर्थः । अन्यैर्वृत्तिकारैरिदं सूत्रं सर्ववेदप्रामाण्याक्षेपार्थं व्याख्यातम् ।

अर्थवादाप्रामाण्ये हि स्तुतिनिन्दादिलक्षणेतिकर्तव्यतांशाभावेन शब्दभावनासंभवात् चोदनाप्रामाण्यस्याक्षिप्तत्वं स्यादिति तां निराकरोति—**स एष इति** । वाक्यस्यैकदेशो वाक्यैकदेशः, विध्युद्देशातिरिक्तस्य वेदभागस्येति यावत् । अर्थवादादीनामविशेषेण धर्मं प्रत्यनुपयोगस्यापि पूर्वपक्षिणोऽभिमतत्वम् ।

न चेह वाक्यभेदमङ्गीकृत्य पूर्वपक्षप्रतिपादनात् एकवाक्यत्वासंभवेन वाक्यैकदेशत्वासंभवः, सिद्धान्त्यभिमतैकवाक्यत्वमाश्रित्यैकदेशत्वोक्त्यविरोधात् ।

यद्वा क्रय्योः, गौरियं हि सम्पन्नबहुक्षीरेत्यादौ कारकपदानामिव स्तावकपदानामप्येकवाक्यत्वदर्शनात्, वेदेऽप्येकवाक्यत्वसंभवमाश्रित्य तस्य वेदे द्वाराभावेन निर्वाहमपश्यतः प्रत्यवस्थानात् पूर्वपक्षेप्येकवाक्यत्वमाश्रितमेवेति न विरोधः ।

---

१. नित्यानित्यविलक्षणानीति मातृकायां पाठः ।

ननु समस्ताक्षेपवादिनामप्येकदेशाक्षेप इष्ट एवेति आशङ्कावधारणं विवक्षितमिति दर्शयन्नाह—**नेति**। विध्युद्देशानां धर्मप्रमितिहेतुत्वस्य प्रतिपादितत्वादिति भावः। तत्र वृत्तिकाराभिप्रेतं सर्वाक्षेप हेतुं निराकर्तुमाविष्करोति—**नन्विति**। एकदेशोऽर्थवादादिः पदसमूहो विध्युद्देशः स्वस्मै प्रयोजनाय—स्वीयधर्मप्रमितिरूपकार्यसम्पादनायेत्यर्थः। अपर्याप्तौ हेतुः **साकाङ्क्ष इति**। अतस्तदाक्षेपेणाक्षिप्ता एव पदसमूहरूपा विध्युद्देशा इत्यर्थः।

निराकरोति—**नैवमिति**। न तावत्सर्वो विध्युद्देशः सार्थवादः, वसन्ताय कपिञ्जलानालभेतेत्यादेश्शुद्धस्यापि दर्शनात्, यत्र तु 'वायव्यं श्वेतमालभेते' त्यादौ तद्वत्त्वम्, तत्रापि न तदाक्षेपेण सर्वाक्षेपनियम इत्याह—**भवति हीति**। कश्चिद्वायव्यं श्वेतमित्यादिः, कश्चिदर्थमिवान्तरवाक्यार्थं श्वेतालम्भनादिरूपम्, किमर्थानि तर्ह्यर्थवादपदानीति चेत् तत्राह—**तैरिति**। अर्थान्तरे—स्तुतिस्तुत्यसम्बन्धात्मके महावाक्यार्थे तर्ह्येकदेशाक्षेपेण महावाक्यस्याक्षेपः स्यादित्याशङ्क्य सिद्धसाधनतामाह—**तानीति**। अर्थवादपदैः संयुज्य महावाक्यार्थे वर्तमानान्येकदेशाक्षेपेणाक्षिप्यन्त इति अर्थवादाप्रामाण्येन महावाक्यार्थाविवक्षायामप्यवान्तरवाक्यार्थविवक्षा दुर्निवारेति भावः॥ १॥

तन्त्रवार्त्तिकम्

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते॥ १॥

सामान्यतः प्रामाण्ये सिद्धेऽधुना विभज्य विनियोगः प्रतिपाद्यते। अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यते। तत्र पूर्वपक्षवाद्यभिप्रायः। 'चोदनालक्षोणोऽर्थो धर्म; वै० सू० १।१।१० इत्युपक्रमात्, 'तस्य ज्ञानमुपदेशः' इति परामर्शात्, तद्भूतानां क्रियार्थेन समाम्नाय इत्युपसंहाराद्विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितम्, न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः, नाप्यनधिगतार्थबोधनं मुक्त्वाऽन्यः शब्दस्य व्यापारोऽस्तीत्युक्तमेव। अतश्च यावन्त्येव साध्यसाधनेतिकर्तव्यतावाचित्वेन विधिप्रतिषेधान्तर्गतानि, तेषां भवतु प्रामाण्यम्, यानि त्वतिरिक्तार्थान्यर्थवादमन्त्रनामधेयानुपातीनि 'सोऽरोदोदिषे त्वोर्जे त्वोद्भिदेत्येवमादीनि, तानि सत्यप्यपौरुषेयत्वे, अर्थाभिधानसामर्थ्ये च धर्माधर्मयोरप्रमाणम्, अतदर्थत्वात्। यथाश्रुतगृहीतानां तावत्प्रतीत्यनुपलब्धेः प्रसिद्धमेवातदर्थत्वम्।

अथ कयाचिच्छब्दवृत्त्या तादर्थ्यं कल्प्येत, एवमपि व्यवस्थाहेत्वभावान्न धर्माधर्मयोरवधारणं स्यात्। यदेव हि वाक्यं गृहीतं तदेवाध्याहारविपरिणामादिभिर्यथेष्टं कल्पयितुं शक्यते। तद्यथा सोऽरोदीदित्येवमेव तावद्वाक्यं विशिष्ट-

पुरुषाचरितोपन्यासद्वारा रोदनकर्तव्यतापरम्। अथ वा महतामप्येवंविधाः प्रमादाः संभवन्ति, तस्मात्प्रयत्नेन वर्जयितव्यमिति। अतो विधिप्रतिषेधयोरस्फुटत्वाद्धर्माधर्मत्वेन निर्णये शक्त्यभावः। शास्त्रदृष्टविरोधादयश्च स्थिता एव।

यत्तु भूतान्वाख्यानमात्रं यथावस्थितैः प्रतिपाद्यते, तत्र यद्यपि सत्यत्वमस्त्येव। तथाऽपि न तेन प्रयोजनमित्यानर्थक्यम्। अपि च 'धूम एवाग्नेर्दिवे'त्यादीनां स्वार्थेऽप्यप्रामाण्यं वक्ष्यते। विध्येकवाक्यत्ववशेनैव तेषां रूपभङ्गः क्रियते। न च तस्यापि किञ्चित्प्रमाणमस्ति। भिन्नैरपि हि तैः किञ्चित्प्रतिपादयितुं शक्यमेव। न च तत्प्रतिपादयतां निष्प्रयोजनतेत्यविज्ञायमानप्रयोजनवदर्थान्तरकल्पना शक्या। न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति, सुवर्णदर्शनता कल्प्यते। सर्वाण्येव च प्रमाणान्युपयुज्यमानमनुपयुज्यमानं वाऽर्थमात्मगोचरतापन्नं गमयन्ति। तेनैव चैषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते। अन्यथा ह्युपादानमेवैकं फलं स्यात्। अपि च प्रमाणोत्पत्त्युत्तरकालं प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा विज्ञायते, न तु तद्वशेन प्रमाणोद्भूतिः। तस्माद्यो यद्रूपोऽर्थः प्रतीयते, स तथैव प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा प्रतिपद्यते। न हि प्रयोजनवदेव प्रमातव्यमिति कश्चिन्नियमहेतुरस्ति। यत्रापि तावत्स्वाधीनः प्रमाणविनियोगः, तत्राप्येतद् दुर्लभं किमुताबुद्धिपूर्वनित्यावस्थितवेदोत्थापितज्ञानग्राह्ये। न च वेदस्य प्रयोजनवदर्थाभिधानशक्तिः प्रथममवधृता। अयमेव हि परीक्षाकालो वर्तते कीदृशं पुनर्ब्रवीतीति। तच्च विदित्वा यथानुरूपमनुष्ठातुं क्षमा वयम्, न तु वेदं पर्यनुयोक्तुम्, किमयं निष्प्रयोजनमभिदधाति तद्वाऽभिदधत्किमर्थं प्रयत्नेन धार्यत इति। सर्वपुरुषाणां केवलं प्रतिपत्तृत्वेन पारतन्त्र्याद्वेदग्रहणोत्तरकालं च परीक्षावसरात्। न ह्यनधीतवेद एवाऽऽदौ परीक्षितुं क्षमः। पश्चात्परीक्षमाणस्य तु नाबुद्धिपूर्वनिर्वृत्तमध्ययनं प्रकरणगतन्यायेन निश्चयहेतुर्भवति। तस्माद्यथैवाग्निहोत्रादिवाक्यानां गम्यमानप्रयोजनवत्त्वादानर्थक्यं निष्प्रमाणकमिति नाऽऽश्रीयते, तथैवैषां प्रयोजनवत्त्वं नाऽऽश्रयितव्यम्। न हि यथावगताभ्युपगमादन्यत्किञ्चित्साधीयः परीक्षकाणाम्। योऽपि च क्लेशेन स्तुतिनिन्दात्मकोऽर्थः कल्पयेत, स भावनयाऽशक्यानन्तःपातित्वान्न गृह्यते। तया चागृहीतं न विधिप्रतिषेधावाश्रयतः। तदनाश्रितं च दूरे पुरुषार्थाद्भवतीति।

अपि चैवंविधेषु स्तुतिनिन्दाकल्पनायामितरेतराश्रयप्रसङ्गः। स्तुतिनिन्दात्मकत्वेनैव ह्येकवाक्यता, तया चानुन्मीलितस्तुतिनिन्दोत्प्रेक्षाश्रयणम्। न चान्यतरमूलप्रसिद्धिरस्ति, यतो व्यवतिष्ठेत। तस्मात्पृथगवस्थितानां दृष्टत्वादानर्थक्यमेवोपपन्नतरमिति। **स एष वाक्यैकदेशस्येति।** विध्युद्देशातिरिक्तस्य सिद्धान्ताभिप्रायेणैकदेशत्वं न तु पूर्वपक्षे, भिन्नवाक्यत्वाभ्युपगमात्। अथ वा वाक्यानां

मध्य एकदेशाक्षेपः कतिपयानामित्यर्थः। तत्र यानि तावत्केवलविधियुक्तानि तेषु नैवाऽऽशङ्का। यान्यपि लिङादिमन्ति प्रागर्थवादेभ्यो विधिसमर्थानि, तैः संयुज्यार्थान्तरे स्तुतिस्तुत्यसंबन्धे वर्तन्ते, तेषामर्थवादाभावे तन्मात्रमेव हीयते। न तु विधित्वेन पुरुषार्थताऽपि। यानि तु वर्तमानापदेशयुक्तानि स्तुतिनिरपेक्षविध्यसमर्थानि। यथा **"यस्य खादिरः स्रुवो भवति, स च्छन्दसामेव रसेनावद्यति"**[1], इत्येवमादीनि। तान्येकदेशद्वारेण समस्तान्याक्षिप्यन्ते ॥१॥

**सर्वानवद्यकारिणी न्यायसुधा**

आनन्दात्मनि विश्ववैभवभवाविर्भावसम्भावितः।
स्वेच्छाधीसचिवः पुरन्दरपुरीशानः स्वयं खेलति॥
तत्कारुण्यकटाक्षकुड्मलकलाकान्तोदयाघूर्णितः।
स्वात्मानन्दसुधाम्बुधिर्विजयते धीमान्महेन्द्रामृतः॥ १ ॥
यद्यप्यूषरमुप्तमेत्य गुरुणा बीजम्महेन्द्रामृतम्।
क्षेत्रश्चित्रमनेकधोरु फलति प्राप्यात्मनोऽनर्घ्यताम्॥
यन्मेघस्तुतवाङ्निरन्तरसुधासारैः समासिञ्चितम्।
सोऽयं सर्वसुहृज्जनार्दनजगज्जीयाज्जगन्मण्डनम्[2] ॥ २ ॥
उमानन्दनमाराध्य शारदामीश्वरं गुरुम्॥
कृत्स्नशास्त्रप्रसादेन व्याख्यास्ये तन्त्रवार्त्तिकम्॥ ३ ॥

अत्र भाष्यकारेणार्थवादानुदाहृत्य किञ्चिद्धर्म्मं प्रमिमते, उत नेति विचारितम्। तदयुक्तम्। प्रथमपाद एव सर्वाप्रामाण्यकारणनिरासेन सर्वात्मकवेदप्रामाण्यस्य सुस्थापितत्वात्। अथ साध्यसाधनेतिकर्त्तव्यतान्वितभावनाप्रतिपादकपदसमुदायमात्रेण श्रेयःसाधनरूपधर्मप्रमितिसिद्धेः, तदतिरिक्तानां वायुक्षेपिष्ठादिपदानां धर्मप्रमितावनुपयोगमाशङ्क्य, उपयोगोऽत्रोच्यते। ततो विधिमन्त्रनामधेयान्यप्युदाह्रियेरन्। धर्मप्रमित्यनुत्पादकत्वेन चानुपयोगित्वे अर्थवादादेर्दोषाभावेऽपि प्रामाण्यायोगादयमेव विचारः प्राग्भावी स्यात्। चोदनासूत्रप्रतिज्ञातप्रामाण्यस्य विधिभागस्य प्रसिद्धधर्मसंयोगस्य परतः प्रामाण्यनिरासेन प्राक् प्रामाण्योक्तावर्थवादादिविचारोऽप्रतिज्ञातविषयत्वादसङ्गतः स्यादित्याशङ्काचतुष्टयं निराकर्तुमाह—सिद्धप्रमाणभावस्येति। तत्रार्थवादार्पितप्राशस्त्यमन्त्रस्मारितनामधेयावच्छिन्नधात्वर्थानुरक्तभावनाविषयप्रवर्त्तकपरत्वेन चोदनाशब्दस्य मन्त्रार्थवादाद्युपेतमहावाक्यविषयत्वाज्जिज्ञासासूत्रेण चाध्ययनविधिदृष्टार्थताप्रतिपादनेन सकलवेदप्रामाण्योपक्षेपादौत्पत्तिकत्वादियुक्तिसाधारण्याच्च वेदमात्रप्रामाण्यस्य प्रतिज्ञापरत्वेऽपि, यागेन स्वर्गमित्यादिसाध्यसाधनभावप्रतिपादकशब्दाभावेन धर्मप्रमित्यशक्तत्वादसम्भवदर्थविषयत्वमाशङ्क्य धर्मप्रमितिशक्तिप्रदर्शनार्थत्वेन चोदनात्वसङ्कीर्त्तनो-

१. तै० सं० ३।　　　२. इमौ श्लोकौ २ पु० न भवतः।

पपत्तेरुपदेशो हि भवतीति चोदनाख्योपदेशत्वस्य हेतुत्वेन भाष्यकृता व्याख्यातत्वाद्वेदवाक्यानि धर्मे प्रमाणं चोदनात्वादिति प्रतिज्ञासूत्रार्थावधारणादर्थवादादिप्रामाण्यविचारस्य प्रतिज्ञासङ्गतिनिरूपणार्थं वेदग्रहणम्, सिद्धेऽपि सामान्यतो वेदप्रमाण्ये तद्विशेषस्यार्थवादादेस्तदसंभवाशङ्कानिरासार्थत्वेनास्य विचारस्यापौनरुक्त्यनिरूपणार्थं विवेककीर्त्तनम्। सिद्धग्रहणेन चैतद्दर्शयति। प्रमाकरणत्वं प्रमाणत्वम्।

न च प्रथमे पादे धर्मप्रमोत्पत्तिसिद्धयङ्गीकारेण तत्र वेदस्य करणत्वमुच्यते। प्रत्यक्षादेस्तत्करणत्वनिषेधाच्छब्दस्य च प्रमाणान्तरादृष्टेऽर्थे कारणत्वासिद्धेः तस्मात्कारणाभावेन धर्मप्रमानुत्पत्तिमाशङ्क्य कारणान्तराभावेऽप्याकाङ्क्षासन्निधियोग्यतासध्रीचीनपदार्थप्रतिपादनद्वारेणापौरुषेयत्वात्प्रमाणान्तरानपेक्षः स्यात् एव निरस्तदोषाशङ्कस्य वेदस्य कारणत्वोपपत्तेर्धर्मप्रमारब्धकार्यसद्भावस्तत्र प्रतिपादितः, इह त्वर्थवादादिरूपस्य वेदभागस्य तत्राकरणत्वमाशङ्क्य करणत्वं प्रतिपाद्यत इति स्पष्टमेवापौनरुक्त्यं करणनिरूपणार्थे तु प्रथमपादे सत्युक्तप्रमाणभावस्येत्यवक्ष्यत्। धर्मप्रमाया वेदकार्यत्वप्रतिपादनेन त्वर्थात्सिद्धयदपि वेदस्य करणत्वं संमुग्धरूपेणैव सिध्येन्नार्थवादादिविशेषरूपेणेति प्रतिपादयितुं सर्वश इत्युक्तम्।

अर्थवादादिप्रामाण्यासिद्धौ सर्वात्मकवेदप्रामाण्यासिद्धेः संमुग्धाभिप्रायः सर्वशब्दो व्याख्येयः। परतः प्रामाण्यादिद्वारा अप्रामाण्ये सकलस्य वेदस्य निरस्तेऽप्यर्थवादादीनामबोधकत्वेनाप्रामाण्यमाशङ्क्य धर्मबोधोपयोगित्वमिह प्रतिपाद्यमित्युपयोगशब्देनोक्तम्। अर्थवादोदाहरणं त्वानर्थक्यमतदर्थानामित्यविशेषश्रवणात् प्रदर्शनार्थम्, द्वारप्रविशेषप्रतिपादने चार्थवादमात्रस्य द्वारविशेषोऽत्राधिकरणे प्रतिपाद्यत इति दर्शयितुम्। सामान्यतः स्तुत्युपयोगित्वासिद्धौ लाक्षणिकस्तुत्यादिद्वारविशेषस्याशक्यकल्पनत्वात्पूर्वं सामान्योपयोगे विचार्ये। सर्वेषामेवोदाहरणत्वमिति विध्यर्थवादमन्त्राणामित्यनेनोक्तम्।

सिद्धे च धर्मप्रमाख्ये कार्ये कियतो वेदभागस्य तत्र कारणनेति विचारावसरो भवतीत्यधुनेत्यनेनोक्तम्। तस्मात्सर्वमदुष्टम्।

श्लोकं व्याचष्टे—**सामान्यत** इति।

यद्वा प्रतिपादितमपि सकलवेदप्रामाण्यमर्थवादादिष्वसम्भवादाक्षिप्येह समाधीयते इति। अन्यथा श्लोकं व्याचष्टे—**अवधृतप्रामाण्यस्ये**ति। अस्मिन्व्याख्याने सामस्त्यं सर्वशब्दार्थः। विध्यर्थवादमन्त्राणामिति तस्यैव विवरणम्। विध्यादिग्रहणस्योपलक्षणत्वाद्व्याख्याने नामधेयग्रहणम्।

इह हि द्विपर्वा विचारः। पूर्वं तावदेषामक्रियार्थत्वेनानुपयोगमाशङ्क्याध्ययनविधिबलाद्विधिना त्वेकवाक्यत्वादिति सूत्रावयवेन, तत्तुल्यं च साम्प्रदायिकमित्यनेन च सूत्रेण निराकृतं द्वारासंम्भवात् पुनरुज्जीव्यार्थवादानां तावत् द्वारविशेषोऽस्मिन्नधिकरणे चिन्त्यते। तस्मादनेन सूत्रेण सामान्यविशेषरूपेण पूर्वपक्षद्वयं तन्त्रेणोच्यते। आम्नायस्य

'तद्भूतानां क्रियार्थेन समाम्नाय' इत्यनेन न्यायेन क्रियार्थत्वावधारणादर्थवादादीनां तदसम्भवादानार्थक्यम्। अथाप्यध्ययनविधिबलादेषां कथं चित्क्रियार्थत्वं कल्पयितुमारभ्यते, तथाप्यर्थवादानां तावद् द्वारासम्भवाद् दुःपरिहरमानर्थक्यमिति। भाष्यमप्येवमेव योज्यम्। सामान्योपयोगप्रतिपादनं विना विशेषोपयोगप्रतिपादनासम्भवस्य **'अतो यावद्वेद एव पुरुषार्थतया सकलमात्मानं न प्रतिपादयति, तावदप्रमाणमि'**त्यत्र वक्ष्यमाणत्वात्।

तदभिधीयत इत्यादिपूर्वपक्षभाष्यं व्याचष्टे—**तत्रेत्यादिना प्रसिद्धमेवातदर्थत्वमित्यन्तेन।** विध्युपयोगस्यापि पूर्वपक्षिणोऽनिष्टत्वात्साध्यसाधनेतिकर्त्तव्यतान्वितभावनाप्रतिपादकपदसमूहपरो विधिशब्दः। चोदनोपदेशशब्दावपि तत्परौ पूर्वपक्षी मन्यते।

यद्वैतद्ग्रन्थपर्यालोचनयार्थवादादीनामेवेहोपयोगश्चिन्त्यते। पूर्वं तु विधिग्रहणं न केवलं विधेरेवोपयोगः, किं त्वर्थवादादीनामपीत्येवं नेयम्। धर्माधर्मोपयोगिविचारोपक्रमाद्धर्माधर्मविषयमेव प्रामाण्यमभिप्रेतम्; विधिनिषेधयोरेव चोदनोपदेशशब्दाभ्यां धर्माधर्मप्रामाण्याभिधानादतद्रूपस्यार्थवादादेर्न तत्र प्रामाण्यम्, नाप्यन्यत्र 'तद्भूतानां क्रियार्थेन समाम्नाय' इति सर्वस्य समाम्नायस्य क्रियार्थत्वावधारणेन भूतान्वाख्यानपरत्वानभ्युपगमादित्यर्थः। न चैतत्प्रक्रियामानम्; किं तु न्याय्यमेवेति यथाक्रमं फक्किकाद्वयेनोक्तम्।

**'उक्तमेवेति'** अर्थेऽनुपलब्धे इत्यत्रेत्यर्थः। तदनेन क्रियेत्यादि समामन्तीत्यन्तो भाष्यावयवो व्याख्यातः। तद्यानीत्यादिभाष्यं व्याख्यातुमतश्चेत्याद्युक्तम्। कं धर्मं प्रमिमीरन्निति काक्वा सूचितो ऽर्थो यथाश्रुतेत्यादिना प्रकाशितः।

एवं सर्वेषामनुपयोगित्वे पूर्वपक्षिते अध्ययनविधिसामर्थ्योपबृंहितसिद्धान्तसूत्रगततुशब्दोपक्षिप्तं तुल्यं साम्प्रदायिकसूत्रोपपादितपुरुषार्थानुबन्धित्वनिर्वाहाय अध्याहारादिनापि क्रियार्थत्वं यथासम्भवं कल्प्यमिति पूर्वविचारसिद्धान्तनिरूपणार्थमथोच्यतेत्यादिभाष्यं तद्व्याचष्टे—**अथ कयाचिदिति।।** द्वारविशेषानिर्द्धारणेन पुनः प्रत्यवस्थानार्थं स कल्प्यमान इत्यादिभाष्यम्। तद्व्याचष्टे—**एवमपीत्यादिनाऽनर्थक्यमित्यन्तेन।** कः कल्प्येतेत्यनेनोक्तमनवधारणं दर्शयितुमुद्ग्राह्यः प्रतिषेधाध्याहारोपन्यासः चिरवृत्तेष्टवियोगध्यानादिना रोदनादिशक्यताशङ्कापरिहाराय शास्त्रविरोधोपन्यासः। रोदनवपोत्खननदिङ्मोहेषु यथाक्रमं मङ्गलाचारात्मरक्षणप्राङ्मुखभोजनशास्त्रविरोधः। अश्रुणश्च रजतपरिणामविरुद्धसद्यःशोषदर्शनाद् दृष्टविरोधः। पुरास्य सम्वत्सराद् गृहे रोदनं भवतीत्यत्र फलाभावमादिशब्देनाह। धर्माधर्मपरत्वाभावेऽपि सिद्धार्थकथनेनानर्थक्योपसंहारानुपपत्तिमाशङ्क्योक्तम्—**यत्तु भूतान्वाख्यानमात्रमिति।** क्रियत इत्यस्मिन्नर्थे प्रत्ययेन विवक्षिते तदनुग्रहार्थे पाकं पचतीतिवत् प्रतिपाद्यत इतिधातुप्रयोगः। वायुक्षेपिष्ठादिवाक्यानां स्वार्थसत्यत्वेऽपि अनुवादमात्रत्वाद्, धूमादिवाक्यानां च स्वरूपेऽप्यसत्यत्वादानर्थक्यम्। एवमपि प्राशस्त्यादिलक्षणया क्रियार्थत्वसम्भवादनर्थक्योपसंहारो न युक्त इति सिद्धान्ति-

मतमाशङ्कयाह—**विध्येकवाक्यत्ववशेन चेति**। तत्र निरासहेतुमाह—**न चेति**। लक्षणयैकवाक्यत्वकल्पने अन्योन्याश्रयापत्तेरिति भावः। श्रौतार्थाभिधानं तु भिन्नवाक्यत्वे ऽप्युपपन्नमित्याह—**भिन्नैरपीति**। न च निष्प्रयोजनत्वप्रसङ्गभयेन प्रतीयमानविषयत्यागेन विषयान्तरकल्पनोचिता प्रत्यक्षादावदर्शनादित्याह—**न चेति**। ननु अस्तु प्रमाणान्तरे तथा-शब्दे तु प्रयोजनवत्त्वाय श्रौतार्थत्यागेनार्थान्तरकल्पना युक्ता, बहुक्षीरादिवाक्ये तथा दर्शनादित्याशङ्कयाह—**सर्वाण्येवेति**। सर्वमेव वस्तु स्वविषय एव व्याप्रियते, न ह्यूर्णनाभः कदाचित्पदसूत्रं करोति। लौकिकवाक्ये तु प्रमाणं प्रत्यक्षादेरन्यथात्वकल्पनम्। तदभावे तत्रापि श्रौतार्थानतिक्रमादिति भावः।

तार्किकस्थितिपर्यालोचनस्यापि न प्रयोजनानुसारेण विषयकल्पनोचितेत्याह—**तेनैवेति** प्रयोजनवत एव प्रमेयत्वे तस्य हानोपेक्षानुपपत्तेः प्रमाणानां त्रैफल्यं न स्यादित्यर्थः। अप्रतीयमानस्य च प्रयोजनवत्तया ज्ञातुमशक्यत्वात्तद्विषयत्वमशक्यनिरूपणमित्याह—**अपि चेति**। प्रयोजनानुसारेण प्रमाणविषयकल्पनं निराकृतमुपसंहरति **तस्मादिति**।

प्रमातॄणां प्रयोजनवत्प्रमित्सायामपि प्रमाणशक्त्यानियमात्प्रमेयानियम इत्याह—**न हीति**। पुरुषाधीनेऽपि च चक्षुरादिव्यापारे प्रमेयानियमात्स्वतन्त्रे वेदे का वार्त्तेत्याह—**यत्रापीति**। प्रमाणान्तरस्य प्रयोजनवद्विषयत्वानियमेऽपि वेदस्य शास्त्रत्वेन हितोपदेशित्वात् प्रयोजनवद्विषयत्वनियमेन भाव्यमित्याशङ्कयाह—**न चेति**। कुतः प्रथममित्यपेक्षिते परीक्षात इति दर्शयितुमाह—**अयमेव हीति**। शास्त्रत्वस्यैव प्रागसिद्धेरिति भावः। न च वेदस्य निष्प्रयोजनार्थाभिधायित्वं तथाभूतस्य चादरणीयत्वं पर्यनुयोज्यमित्याह—**तच्चेति**। उभयत्र यथाक्रमं कारणमाह—**सर्वेति**। उत्तरकालतामुपपादयति **न हीति**। परीक्षणेन[1] हि पुरुषाधीनप्रामाण्यापत्तेर्नाध्येत्राऽऽदरमात्रेण प्रयोजनवत्त्वनिश्चय इत्याह—**पश्चादिति**। यथा दर्शपूर्णमासप्रकरणाधीतानामपि पूषाद्यनुमन्त्रणमन्त्राणां न तादर्थ्यनिश्चय इति दृष्टान्तार्थः। न चाग्निहोत्रादिवाक्येषु प्रयोजनवद्विषयत्वदर्शनाद्वेदवाक्यत्वेन वायुक्षेपिष्ठादिवाक्येष्वपि तथानुमानं युक्तम्। प्रतीतिविरोधादित्यभिप्रायेणोपसंहरति—**तस्मादिति**। इह च यानि त्वतिरिक्तार्थान्यर्थवादमन्त्रनामधेयानुपातीनीति सर्वेषां पूर्वनिर्दिष्टानां विध्येकवाक्यत्ववशेन चैतेषामित्यादिभिर्निर्दिष्टप्रतिनिर्दिष्टकैः सर्वनामभिः परामर्शाद्, धूम एवाग्नेर्दिवेत्यादीनामपीत्यत्राप्यादिशब्दस्योपक्रमवशेन सर्वविषयत्वात्सदृशविषयत्वे चार्थवादानामपि सर्वेषामपरामर्शापत्तेस्तुल्यहेतुत्वेन चैतावता ग्रन्थेन सर्वानुपयोगप्रतिपादन-

---

१. अध्ययनोत्तरकालीनपरीक्षणेन अध्येत्रादरमात्रेण वा न प्रयोजनवत्त्वनिश्चय इत्याह परीक्षणेन हीति प्रथमपक्षे हेतुमाह पुरुषाधीनप्रामाण्यापत्तेरिति। द्वितीयपक्षे वार्त्तिककृतैव दृष्टान्त उक्तः यथा पूषाद्यनुमन्त्राणां दर्शपूर्णमासप्रकरणपाठे सत्यपि न तदङ्गत्वनिश्चयस्तथादरमात्रेण न प्रकरणेन न च लिङ्गनिश्चयादित्यर्थः।

परतयैतद्भाष्यं व्याख्यातमिति गम्यते। मन्त्रेष्वपि[1] च प्रयोगविध्येकवाक्यत्ववशेना पूर्वसाधनरूपलक्षणा सिद्धान्तिनोऽभिप्रेतैवेति, न तद्वशेनाप्यर्थवादमात्रपरत्वनिश्चयः। व्याख्यातॄणां त्वर्थवादमात्रपरत्वेनेमं ग्रन्थं व्याचक्षाणानामभिप्रायं न विद्मः।

इदानीमेतदेव भाष्यमर्थवादमात्रानुपयोगप्रतिपादनपरतया व्याचष्टे—**योऽपि चेति**। सर्वानुपयोगसाधारणोपपत्त्यनुकर्षणार्थश्चशब्दः। क्लेशेनेत्यप्रतीयमानैकवाक्यताकल्पनेनेत्यर्थः। कल्प्येतेत्यनेनैतद्दर्शयति न तावत्स्तुतिनिन्दे एव निरूप्येते गुणदोषवत्त्वप्रतिपादनं हि स्तुतिनिन्दाशब्दाभ्याममभिप्रेतम्। तत्र यदीष्टानिष्टफलत्वम्, विधिप्रतिषेधविषयत्वं वा विशिष्टेतिकर्त्तव्यताकत्वं[2] वा गुणदोषवत्त्वं तदन्यतः सिद्धत्वान्नार्थवादापेक्षम्। न च वायुक्षेपिष्ठत्वादेर्गुणदोषवत्त्वं सर्वार्थवादाननुवृत्तेः श्रौतत्वाच्च तस्य, लाक्षणिकस्तुतिनिन्दार्थत्वसिद्धान्तभङ्गापत्तेः। न चान्यौ गुणदोषौ निरूप्येते। प्ररोचना[3] द्वेषजनकत्वेन च स्तुतिनिन्दयोरर्थवत्वं प्रयोजनवत्त्वमिष्यते। तत्र न तावदिच्छानिच्छे तच्छब्दवाच्ये विधिनिषेधावगतेष्टानिष्टफलत्वादेव तत्सिद्धेः। प्रवृत्तिनिवृत्तिप्रतिबन्धकविपरीतत्वेनालस्योत्साहभङ्गोऽपि[4] न। प्रवृत्तिनिवृत्तिहेतुभूतविधिनिषेधसिद्धत्वात्। तस्मान्न स्तुतिनिन्दाख्यः कश्चिदर्थः। न ह्यसावर्थवादगम्यो नापि तत्प्रयोजनमिति। एवं सिद्धान्त्यभिमतविधिनिषेधापेक्षितप्ररोचनाद्वेषजनकस्तुतिनिन्दासमर्पकत्वेन विधिनिषेधाभ्यां ग्रहणे निराकृते। यदि भावनान्तर्गतिः स्यात् ततस्तद्द्वारेण विधिनिषेधग्रहणात् पुरुषार्थानुबन्धित्वं भवेत्तच्च नाशङ्क्यमेवेति भावः।

अगम्यमानैकवाक्यत्वेष्वर्थवादेषु लाक्षणिकस्तुतिनिन्दार्थत्वकल्पने दुःपरिहरमितरेतराश्रयत्वमित्याह—**अपि चेति**। एतच्च पूर्वं सर्वानर्थाक्याय योजितमपीदानीमर्थवादानर्थक्याय प्रकटितमित्यपौनरुक्त्यम्। अर्थवादानर्थक्यमेवोपसंहरति—**तस्मादिति**। 'तस्मादनित्यमुच्यते' इत्येतत्सूत्रावयवव्याख्यानपरं तस्मादित्यादिभाष्यं स्पष्टत्वान्न व्याख्यातम्। वृत्तिकारान्तरैरेतत्सूत्रमर्थवादाप्रामाण्येन तदेकवाक्यतया साकाङ्क्षत्वाद्विध्युद्देशस्याप्यप्रामाण्यापत्तेः। प्राभाकरैरपि सकलवेदाप्रामाण्यपरतया व्याख्यातं तन्निराकरणार्थं स एष इत्यादिभाष्यम्। तत्र पूर्वपक्षे ऽर्थवादानां भिन्नार्थत्वेनैकवाक्यत्वायोगादेकदेशशब्दो न युक्त इत्याशङ्क्याह—**स एष इति**।

---

१. लक्षणया विध्येकवाक्यत्वशङ्कया अर्थवादमात्रपरत्वम्भविष्यतीत्याशङ्क्याह मन्त्रेष्वपीति। अर्थवादानामिव समभिव्याहारलक्षणैकवाक्यत्वाबाधेपि प्रयोगविध्येकवाक्यत्वमसत्येवेति चाह—प्रयोगेति। लिङ्गसमवायो हि विधिममन्त्रनामधेययोः—व्रीहीनवहन्तीत्यादौ अक्रियार्थत्वादितिहेतोः स्तुत्यत्वादिति भावः।

२. एकत्र प्रयाजादि परत्र खड्गोद्यमादि।

३. नापि स्तुतिनिन्दयोःप्रयोजनमित्याह—प्ररोचनेति।

४. न गुणदोषवत्त्वमित्यनुषङ्गः।

व्याख्यानान्तरमाह—**अथ वेति**। एतच्च विमर्शार्थम्, न निर्द्धारण इति षष्ठीसमास-निषेधात्सम्बन्धमात्रषष्ठ्यां च मध्यशब्दानुपपत्तेः। कर्मधारयेऽप्येकदेशशब्दस्योपसर्ज्जनत्वेन पूर्वनिपातापातादवयववाचित्वेन च कतिपयार्थत्वाभावात्। नन्वित्यादिवृत्तिकारान्तराभिप्रायविवरणार्थं भाष्यम्। तस्योत्तरं—**नैवेत्यादि**। तस्यार्थः न तावत्सर्वो विध्युद्देशोऽर्थवादापेक्षः, शुद्धस्यापि वसन्ताय कपिञ्जलानालभत इत्यादेर्दर्शनात्कश्चिदेव तु वायव्यं श्वेतमालमेतेत्यादिस्तदपेक्षः, तस्यापि विधिविधेयसम्बन्धरूपावान्तरवाक्यार्थेऽर्थवादपदनिरपेक्षस्य स्तुतिस्तुत्यसम्बन्धात्मके महावाक्यार्थरूपेऽर्थान्तर एव तदपेक्षा। ततश्चैकदेशाक्षेपरूप एव तेषामाक्षेपः। अर्थवादाप्रामाण्येन महावाक्यार्थाविवक्षायामप्यवान्तरवाक्यार्थविवक्षा दुर्निवारेति भावः। तत्र कश्चिदिति काक्वा सूचितमर्थं दर्शयति—**तत्रेति**। भाष्यार्थं व्याचष्टे—**यान्यपीति**। विधिप्रत्ययशून्येषु तर्हि—समस्ताक्षेपः स्यादित्याशङ्क्य सिद्धसाध्यतामाह—**यानि त्विति**।

यद्वा ऽनेनावृत्त्या खण्डशो भाष्यं व्याख्यायते—कश्चित्पदसमूहो नैव भवति नाप्रमाणत्वेन शङ्क्यो भवतीत्यर्थः। कश्चित्वर्थवादपदैः संयुज्यार्थान्तरे वर्त्तते, तत्र तान्यर्थवादपदानि केवलान्याक्षिप्यन्ते। पुनस्तानीत्यादि शुद्धार्थवादविषयत्वेनैव व्याख्यातम्। यानि केवलान्यर्थवादपदानि तच्छब्दनिर्दिष्टानि, तानि समस्तान्याक्षिप्यन्त इति ॥ १ ॥

**भावप्रकाशिका**

वेद में इष्ट फल के साधन के रूप में उपदिष्ट क्रिया ही धर्म है। अर्थात् वेदविहित याग, दान, होम आदि क्रिया ही धर्म है, कारण इसी के द्वारा पुरुष अभिलषित श्रेय का लाभ कर सकता है।

प्रथम पाद में इष्ट-फल-साधन वेद-विधि का प्रामाण्य प्रतिष्ठापित होने पर समग्र वेद का प्रामाण्य सूचित होता है। प्रथमाध्याय के द्वितीय पाद में केवल विधिबोधक वेदवाक्य का ही प्रामाण्य है, समग्र वेदवाक्य का नहीं—इस आशय से पूर्वपक्षी के मत का उत्थापन करते हुए महर्षि जैमिनि ने छः सूत्रों से पूर्वपक्ष का प्रतिपादन किया है। अनन्तर सिद्धान्ती ने "विधिना त्वेकवाक्यत्वात्" इत्यादि बारहसूत्रों से पूर्वोक्त पूर्वपक्ष का परिहार और सिद्धान्त का प्रतिपादन किया है।

पूर्वपक्षी ने "अथातो धर्मजिज्ञासा" इस सूत्र के द्वारा वेदार्थरूप धर्म का विचार करना कर्तव्य है—यह कहा है। इस सूत्र के विषयीभूत "स्वाध्यायोऽध्येतव्यः" इस वेदवाक्य से अवगत होता है कि सम्पूर्ण वेद में पुरुषार्थ की प्राप्ति का साधन सूचित किया गया है। धर्म और अधर्म का स्वरूप अवगत कर अधर्म का परित्याग-पूर्वक धर्म का अनुष्ठान करने पर पुरुषार्थ की प्राप्ति हो सकती है। इसलिए विधि एवं निषेध ही पुरुषार्थ का साधन है, अतः विधि और निषेध क्रियास्वरूप है, अतः वेद के जिस अंश से क्रिया का प्रतिपादन नहीं है उन वेदांशों को अप्रामाणिक ही मानना उचित है। विधि, मन्त्र, नामधेय और अर्थवाद इन चार भागों में वेद विभक्त है। वेद का विधि

भाग ही साक्षात् सम्बन्ध से पुरुषार्थ के उपायों का निर्देश करता है, अतः क्रिया प्रतिपादन करनेवाले वेद के अंशों का ही प्रामाण्य सिद्ध होता है। उपक्रम, उपसंहार और अभ्यास भी क्रियाप्रतिपादक वेद अंशों का प्रामाण्य सिद्ध करता है। "चोदना-लक्षणोऽर्थो धर्मः" इससे उपक्रम कर "तस्य ज्ञानमुपदेशः" इस मध्यस्थ वचन से इसी अर्थ का अभ्यास किया है और "तद्भूतानां क्रियार्थेन समाम्नायः" इस वाक्य से उपसंहार किया है, अतः वेद के विधि अंश का ही प्रामाण्य अवगत होता है। वेद के जिन अंशों से क्रिया का प्रतिपादन नहीं है, वे अंश अनर्थक हैं, उनके प्रामाण्य मानने का कोई भी उचित तर्क या हेतु नहीं है।

"आम्नायस्य" = आम्नाय (वेद) के "क्रियार्थत्वात्" विधि और निषेध रूप क्रिया के प्रतिपादन साधन होने से "अतदर्थानाम्" अतदर्थ अर्थात् क्रिया प्रतिपादन का साधन न होने से "आनर्थक्यम्" वे अंश निष्प्रयोजन हैं, "तस्मात्" इसलिए आनर्थ-क्यम् वे अंश निष्प्रयोजन हैं अर्थात् पौरुषेय वाक्यों के समान ही वे वेदवाक्य निष्प्र-योजन हैं "उच्यते" (यह) कहा गया है, क्योंकि, क्रियात्मक यागादिरूप धर्म का प्रतिपादन करना ही वेद का प्रयोजन है, इसलिए, वेद जिन अंशों से क्रिया का प्रतिपादन नहीं कर रहा है, उन वेदांशो को अनर्थक अर्थात् प्रयोजनशून्य मानना पड़ेगा और इसी कारण से वे वेदांश अनित्य अर्थात् पौरुषेय वाक्यों के समान अप्रामाणिक हैं।

मन्त्र, नामधेय और अर्थवाद में अर्थवाद की आलोचना में प्रथमाध्याय का प्रथमपाद परिसमाप्त हो जाता है एवं अर्थवाद वाक्यों की विधिजन्य प्रवृत्ति के विषय में विशेष रूप से अपेक्षा होने से इस पाद में उसी का विचार आवश्यक है। सोऽरो-दीत् तद्रजतस्य रजतत्वम्" (तै० सं० १।५।१) वे रोएँ थे इसलिए वही रजत का रजतत्व है। "प्रजापतिरात्मनोवपामुदखिदत्" (तै० सं० २।१।१) प्रजापति ने अपनी वपा को (अपने हृदय से) बाहर किया। "देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्" (तै० सं० ६।१।५) देवताओं ने देवयजन (देवपूजा, यज्ञ) का आरम्भ कर दिशा के निर्णय में समर्थ नहीं हुए, इत्यादि वेदवाक्य किसी प्रकार से क्रिया के प्रतिपादक नहीं हैं, अतः, इनको अनर्थक अर्थात् अप्रमाण मानना होगा। क्योंकि, इन वाक्यों का—रुद्र ने रोदन किया है, अतः, तुम लोग भी रोदन करो अथवा प्रजापति ने अपनी वपा अर्थात् हृदय का भेदन किया था। अतः, संसार के सभी वही करें। देवों का यज्ञ का अनुष्ठान करते हुए दिङ्मोह हो गया था, अतः संसार में भी वैसा होना उचित है—इत्यादि अर्थ नहीं हो सकते हैं। अतः, इस तरह के वाक्य अनित्य हैं। यद्यपि वेद अनादि हैं, वेदान्तर्गत सभी वाक्यों की स्वरूपतः अनित्यता नहीं हो सकती है तथापि ये वेद-वाक्य नित्य या सर्वकालीन धर्म और अधर्म के तत्त्वों का ज्ञापन नहीं करते हैं, अतः, ये पुरुषार्थ के साधन नहीं है, इसलिए लौकिक काव्यविद् के समान इन वाक्यों का प्रामाण्य नहीं है।

**आचार्य शङ्कर और वाचस्पति के अनुसार इस सूत्र का तात्पर्य**

आचार्य शङ्कर ने भी इस सूत्र को पूर्व पक्ष के रूप में उपस्थापित कर "तत्तु समन्वयात्" (ब्र० सू० १–१–४) इस सूत्र में सिद्धान्त का प्रदर्शन किया है। कर्म मीमांसकों ने शङ्का की है कि शास्त्र प्रमाण के द्वारा ब्रह्म का प्रतिपादन होता है, किन्तु, यह किसी भी तरह सङ्गत नहीं है, क्योंकि, शास्त्र के द्वारा ब्रह्म का प्रतिपादन नहीं हो सकता है, कारण, महर्षि जैमिनि ने कहा है कि वेद कर्तव्य कर्मों का ही प्रतिपादन करता है, वेद के जिन अंशों से किसी भी तरह कर्तव्य कर्म का प्रतिपादन नहीं हो रहा है, वे अंश निरर्थक हैं अर्थात् उन अंशों का प्रयोजन=सार्थक्य सिद्ध नहीं किया जा सकता है, वेद के वे अंश अप्रामाणिक हैं। इन सूत्रों के द्वारा आचार्य जैमिनि ने यही सिद्ध किया है कि समग्र वेदशास्त्र किसी रूप में कर्तव्य कर्मों का ही प्रतिपादन करते हैं, कर्तव्य कर्मों का प्रतिपादन करना ही वेद का स्वभाव है। वेदान्त शास्त्र अर्थात् उपनिषद् हम लोगों के लिए किसी कर्तव्य कर्म का उपदेश नहीं करती है, अतः, उपनिषद् की कोई सार्थकता नहीं है, ये निरर्थक हैं। इसलिए, उपनिषद् के प्रामाण्य पर अवगत ब्रह्मतत्त्व भी निरर्थक हैं। फलतः, "अथातो ब्रह्मजिज्ञासा" ( ब्र० सू० १।१।१ ) आदि सिद्ध ब्रह्मतत्त्व के प्रतिपादन के लिए निरर्थक है।

महर्षि जैमिनि वेद के उपनिषद् भाग को सर्वथा निरर्थक नहीं मान सकते हैं, क्योंकि मीमांसा दर्शन के "अथातो धर्मजिज्ञासा" (जै० सू० १।१।१) इस प्रथम सूत्र के आधार पर समग्र वेद का अध्ययन प्रतिपादित कर वेदार्थज्ञान उसका फल सिद्ध किया है। "स्वाध्यायोऽध्येतव्यः" (तै० आ० २।१५।१) (वेद का अध्ययन अवश्य करना चाहिए) इस वेदवचन के द्वारा समग्र वेद का अध्ययन ही विहित है, उपनिषद् भाग से अतिरिक्त वेद भाग का ही अध्ययन करना चाहिए, कर्मकाण्ड ही सार्थक है, उपनिषद् भाग या ज्ञानकाण्ड किर्यार्थक नहीं है, इसमें क्रिया या कर्तव्य का प्रतिपादन नहीं है, अतः निरर्थक या निष्प्रयोजन है—यह प्रतिपादन नहीं है; वेद के अध्ययन से वेदार्थ का ज्ञान होता है, यही यदि 'स्वाध्यायोऽध्येतव्यः' इस वाक्य का अर्थ जैमिनि को अभिमत है, तो उपनिषद् अंश परित्याग कर वेद का अध्ययन करना चाहिए—यह अर्थ किस प्रकार अवगत होगा ?

आशय यह है कि ब्रह्मसूत्र के तृतोय सूत्र "शास्त्रयोनित्वात्" (१।१।३) की व्याख्या के अनुसार इतना ही सिद्ध होता है कि शास्त्र ब्रह्म में प्रमाण है=शास्त्र-प्रमाण ब्रह्म है। ब्रह्म के शास्त्रप्रमाणकत्व की प्रतिज्ञामात्र इस वचन से की गई है, किन्तु, शास्त्रप्रमाणकत्व के लिए किसी हेतु का प्रदर्शन नहीं किया है। शब्द को ब्रह्म विषय में ज्ञापक मानने पर शब्द का प्रामाण्य ही नहीं हो सकता है, कारण, फलवत् अर्थ का प्रतिपादक होने पर ही शब्द का प्रामाण्य रहता है। 'ब्रह्म' सिद्ध

वस्तु है, इस सिद्ध वस्तु का बोधक वाक्य सर्वत्र फलवत् अर्थ का ही बोधक होगा—यह कोई आवश्यक नहीं है, कारण, कभी वह फलवत् अर्थ का बोधक हो सकता है और किसी स्थल में नहीं भी हो सकता है। जैसे—'नदी के तट पर फल हैं' यह शब्द सुनकर जो व्यक्ति फल का संग्रह करता है उसके लिए यह वाक्य फलवत् होगा और प्रमाण भी होगा, किन्तु, जो व्यक्ति उसका संग्रह नहीं करना चाहता है उसके लिए यह शब्द अर्थबोधक होने पर भी फलवत् नहीं होने से प्रमाण नहीं होगा। इसलिए सिद्ध वस्तु ब्रह्मबोधक वाक्य अर्थबोधक होने पर भी फलवत् नहीं हो सकते हैं, अतः, अप्रमाण भी हो सकते हैं। यह भी कहा जा सकता है कि रूपादिविहीन सिद्धवस्तु ब्रह्म के बोधक वाक्य से अवगत ब्रह्म यदि अन्य प्रमाण से गम्य होगा तो वेदान्तशास्त्रप्रमाणक ब्रह्म नहीं हो सकता है। यदि वह ब्रह्म अन्य प्रमाण से गम्य नहीं होता है तभी वह वेदान्त प्रमाण गम्य हो सकता है। यह सिद्ध ब्रह्म अन्य प्रमाण से वेद्य है या नहीं—यह जब तक निर्णीत नहीं हो जाता है, तब तक सिद्ध ब्रह्मबोधक वाक्य प्रमाण है या नहीं यह संशय उपस्थित रहेगा।

इसी प्रसङ्ग में आचार्य शङ्कर ने शङ्का की कि ब्रह्म शास्त्रप्रमाणगम्य कैसे हो सकता है, क्योंकि वेद क्रिया अर्थ का ही बोधक है और अन्य अर्थ बोधक वेद वाक्य का अप्रामाण्य ही सिद्ध होता है। अतः, वेद ब्रह्म के प्रति प्रमाण कैसे हो सकता है? फलतः ब्रह्म शास्त्रप्रमाणगम्य कैसे हो सकता है?

आचार्य वाचस्पति ने कहा है—जो शुद्ध-बुद्ध अर्थात् ज्ञानस्वरूप उदासीन स्वभाव अर्थात् निष्क्रिय है, वह उपेक्षणीय होता है, ब्रह्म भी ऐसा ही है, अतः, वह भी उपेक्षणीय है। यदि सिद्धवस्तु ब्रह्म वेदान्त से प्रतिपाद्य है तो वेदान्त किसी पुरुषार्थ का उपदेशक नहीं रहेगा। कारण, पुरुषार्थ से आशय है सुख साधन या दुःखनिवृत्ति साधन कर्म, किन्तु, वेदान्त ऐसे किसी पुरुषार्थ का उपदेश नहीं करता है, अतः, वेदान्त का क्या प्रयोजन है अर्थात् निष्प्रयोजन ही है। ब्रह्म सिद्धवस्तु है, अतः, प्रत्यक्ष आदि भी उसमें प्रमाण हो सकता है, अर्थात् प्रत्यक्ष आदि प्रमाण के द्वारा भी उसके स्वरूप की अवगति हो सकती है। ऐसी स्थिति में प्रत्यक्ष आदि प्रमाण से अवगत विषय में जैसे लौकिकवाक्य प्रमाण नहीं होता है, अपि तु, वह उसका अनुवादक ही होता है, फलतः, वह अप्रमाण ही होगा, इस स्थिति में ब्रह्म प्रतिपादक शास्त्र भी अप्रमाण क्यों नहीं होंगे? शास्त्र के द्वारा प्रतिपादित ब्रह्म सिद्ध वस्तु है, अतः, वह प्रत्यक्ष आदि प्रमाणों से ही गम्य वस्तु होगा। इसलिए सिद्धवस्तु का प्रमाण शास्त्र है यह कथन सङ्गत नहीं है। लौकिक वाक्य अन्य प्रमाणों से अवगत विषय का बोधक होने पर वह स्वतः प्रमाण नहीं होता है—यह सभी मानते हैं। वेदान्त की भी यही

स्थिति है तो यह भी स्वतः प्रमाण[1] नहीं होगा। इस प्रकार वेदान्त का अनपेक्षत्व लक्षण प्रामाण्य सङ्गत नहीं है।

वेदान्त का अप्रामाण्य या अप्रयोजनीयता उचित नहीं है। 'वेदाध्ययन करना चाहिए' इस विधि के द्वारा समग्र वेद की प्रयोजनवत्ता सिद्ध है। अतः, वेदान्त को ब्रह्म बोधक न मानकर वेदविहित अग्निहोत्रादि रूप कर्म के लिए अपेक्षित कर्ता, देवता आदि वस्तुओं का प्रतिपादक मानना ही उचित है। यदि कर्मबोधक वेदांश के सान्निध्य का अभाव वेदान्त (उपनिषद्) में होने से कर्मपरक मानना उचित न हो तो उपासनादिरूप क्रियापरक मानने में क्या आपत्ति है? ऐसा मानने पर प्रत्यक्षादि प्रमाण से अनधिगतविषयक होने से अनपेक्षत्वरूप प्रामाण्य और सप्रयोजनत्व भी सिद्ध होता है। आचार्य के इसी अभिप्राय से आचार्य शङ्कर ने इस सूत्र का पूर्वपक्ष के रूप में उपस्थापन किया है। इस सूत्र में भामतीकार ने आनर्थक्य का अर्थ अप्रयोजनवत्त्व माना है और यह अप्रयोजनवत्त्व अनुवादक मानने पर ही सम्भव है। आपात दृष्टि से आनर्थक्य का अर्थ अभिधेयरहितत्व ही होता है अर्थात् किसी प्रकार अर्थ न होना एवं निष्प्रयोजनत्व। उपनिषद् का श्रवणकर किसी व्युत्पन्न व्यक्ति को अर्थ का बोध होगा ही तब उपनिषद् का कोई अर्थ नहीं है—यह कथन सङ्गत नहीं है। यही कारण है कि आनर्थक्य का अर्थ निष्प्रयोजनवत्त्व अर्थ किया है। फलतः, ब्रह्म शास्त्रप्रमाण-गम्य नहीं है—यही पूर्वपक्ष के रूप में आचार्य शङ्कर ने किया है। किन्तु, परमर्षि जैमिनि के द्वारा प्रदर्शित सिद्धान्त पक्ष के साथ आचार्य शङ्कर का ऐकमत्य नहीं है। अतः, इस विरोध का विश्लेषण "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः।" (जै० सू० १।२।६) इस सूत्र के विश्लेषण प्रसङ्ग में करूँगा ॥ १ ॥

## शास्त्रदृष्टविरोधाच्च ॥ १.२.२ ॥

**शा०—'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्येवं जातीयकानां धर्मं प्रत्यप्रामाण्यम्, भूतानुवादात्। विपरिणामादिभिरपि कल्प्यमाने स्तेयं मृषोद्यं च कर्तव्यमित्यापतति। तच्चाशक्यं स्तेयानृतवादप्रतिषेधमबाधमानेनानुष्ठातुम्। न च विकल्पः, वैषम्यात्। एकः कल्प्यो विधिः; एकः प्रत्यक्षः।**

**अथ दृष्टविरोधः। 'तस्माद् धूम एवाग्नेर्दिवा ददृशे, नार्चिः। तस्मादर्चि-रेवाग्नेर्नक्तं ददृशे न धूमः' तस्माद् दृष्टविरुद्धं इति। 'अस्माल्लोकादुत्क्रम्याग्नि-**

---

१. प्रमाणसम्वादवाद या प्रमाणसंप्लववाद एवं प्रमाणासंप्लववाद या प्रमाणविसम्वाद-दाद। प्रथम मत में एक वस्तु में एक से अधिक प्रमाण रहने पर भी कोई भी अनुवादक या अनुवादकत्व निबन्धन अप्रमाण नहीं होता है। द्वितीय मत में एक से अधिक प्रमाण रहने पर जिस प्रमाण से जो प्रथम अवगत होता है वह प्रमाण ओर वाद में जिस प्रमाण से अवगत होता है उसमें अनुवादकत्व निबन्धन प्रमाण नहीं रहता है।

रादित्यं गतो रात्रावादित्यस्तम्' इत्येतदुपपादयितुमिदम् । उभयमपि दृष्टविरुद्ध-मुच्यते । तस्मान्नैषाऽवधारणा सिध्यतीति अपरो दृष्टविरोधः । न चैतद् विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा वचनम् प्रमाणम् तै० ब्रा० २।१।२, (गोप० ब्रा० पू० ५।२१) इति ।

अक्रियार्थत्वादनर्थकम् । अथायमर्थो नैवैतज्ज्ञायते, किं वा ब्राह्मणा वय-मुताब्राह्मणा वेति, प्रत्यक्षविरुद्धमप्रमाणम् । अपरः शास्त्रदृष्टेन विरोधः । को हि तद्वेद, यद्यमुष्मिल्लोकेऽस्ति वा न वा, (तै० सं० ६।२।२, ६।१।१) इति । यदि प्रश्नोऽयम्, अक्रियार्थत्वादनर्थकः । अथानवक्लृप्तिः, शास्त्रदृष्टेन विरोधः । अतः प्रत्यक्षविरुद्धमप्रमाणम् ॥ २ ॥

भा० वि०—सोऽरोदीदित्यादीनामानर्थक्ये हेत्वन्तरमाह—शास्त्रेति । तत्र सोऽरोदीदित्याद्युदाहरणानामतीतार्थविषयत्वेन योग्यानुपलब्ध्यभावात् स्वार्था-सत्यत्वानिश्चयेन तद्द्वारा विधिकल्पनायामपि धर्मं प्रत्यप्रामाण्यं शास्त्रदृष्टविरोधेन प्रसङ्गादुक्तमेव, तेन येषां स्वार्थेप्यसत्त्वं तेषां धर्मं प्रति प्रामाण्ये कैव कथेत्यभि-प्रेत्योदाहरणान्तरमाह—'स्तेनमिति । अस्मिन्नप्युदाहरणे विधिकल्पनायां शास्त्र विरोधं दर्शयितुं यथा श्रुत्यप्रमाण्ये पूर्वसूत्रं योजयति-एवमिति । सिद्धरूपस्यैव मनसः स्तेनत्वस्य, वाचोऽनृतवादिनीत्वस्य चानुवादादक्रियार्थत्वादप्रामाण्यमित्यर्थः ।

ननु तहृर्यध्याहारादिना क्रियार्थत्वं कल्प्यतामित्याशङ्क्यैतत्सूत्रगतशास्त्र-विरोधं व्याचष्टे–विपरिणामेति । वाङ्मनसयोः प्राधान्यादितरेन्द्रियैरपि तच्च-रितमनुवर्तितव्यमिति वाक्यार्थः स्यात्, ततश्च निषेधशास्त्रविरोध इत्याह—तच्चेति ।

ननु पाक्षिकबाधसंभवेऽपि नात्यन्तबाधः, विकल्पोपपत्तेः । विधेर्विशेषविषय-त्वान्निषेधस्य च सामान्यविषयत्वादतुल्यबलत्वेन विकल्पासंभव इति वाच्यम् । यथाकथञ्चिद्विधिशास्त्रार्थवत्त्वस्यैव विकल्पशब्देनाभिप्रेतत्वात् इत्यत आह—न चेति । विधिशास्त्रस्य कल्प्यत्वात्, क्लृप्तं निषेधशास्त्रं विधिविषयमप्या-स्कन्दन् तत्कल्पनामेव निरुणद्धि इति विध्यनवकाश एवेत्यभिप्रेत्याह—वैषम्यादिति । तदेवाह—एक इति । अन्यो निषेधः प्रत्यक्षः क्लृप्तः ।

सूत्रकारेण हि सिद्धान्ते स्तेनं मनः इत्यादावभिहितस्य शास्त्रविरोधस्य 'अप्राप्ताचानुपपत्तिरि'त्यादिनाऽकर्तव्यतापरत्वेन गुणवादत्वेन च परिहारमुक्त्वा, गुणवादनिमित्तं च रूपात्प्रायादिति दर्शयित्वा, पुनस्तस्योदाहरणान्तरेऽव्याप्ति-माशङ्क्य, दूरभूयस्त्वादित्यनेन परिहरिष्यते, तदनुसारेण दृष्टविरोधादित्यवयवं व्याख्यातुमुदाहरति–अथ दृष्टिविरोध इति । उदाहरणगततच्छब्दार्थमाह—

१. स्तेयमित्यादर्शकोशे पाठः ।

**अस्मादिति**। यस्माद्दिवाग्निरादित्यं गच्छति, तस्मादेव धूम एवाग्नेर्दिवा ददृशे नार्चिः, यस्माच्च रात्रावादित्योऽग्निम्, तस्मादेवार्चिरेवाग्नेर्नक्तं ददृशे, न धूमः इत्येवमेतदुपपादयितुं यद्वैतद्वाक्यम्, तदिहोदाहरणमित्यर्थः। तदुपपादनद्वयोरपि सन्ध्ययोः देवताद्वयसन्निधानमुपपादनीयान्तरं सूचयितुं तावदित्युक्तम्, सूत्रात्रयवं योजयति—**तदिति**। ददृश इति लडर्थे लिट्प्रयोगाद् धूम एवार्चिरेवेति द्वयमपि दृष्टविरुद्धम्, रात्रिन्दिवं धूमार्चिषोर्दर्शनात् इत्यर्थः। ततश्च यदनेन वाक्येन प्रतिपाद्यते, दिवाग्निरादित्यमनुप्रविशति रात्रावादित्यस्तमिति तस्यावधारणा न सिध्यत्तीत्याह—**तस्मादिति**।

ननु धूमगतभूयस्त्वाद्यभावाद्दिवा वह्निदर्शनाभावाभिधानमित्ययुक्तम्। अस्यापि निमित्तस्य ब्राह्मण्यज्ञानाभावाभिधानेऽव्याप्तेरिति शङ्कानिरासार्थं "स्त्र्यपराधाद्" इत्यादिसूत्रं तदनुसारेणोदाहरणान्तरमाह—**अपर इति**। अस्याप्यार्षेयवरणानुमन्त्रणविधिसन्निधिसमाम्नातस्यापि तत्स्तुत्यर्थत्वाप्रतीतेः न प्रामाण्यमित्याद्यसूत्रं तावद्योजयति—**अक्रियेति**।

ननु मा भूत्क्रियार्थत्वेनार्थवत्त्वम्, स्वतन्त्रब्राह्मण्याज्ञानप्रतिपादनेनैवास्त्विति मन्वानश्चोदयति—**अथेति**। प्रत्यक्षाद्यवगतोत्पाद्योत्पादकसंबन्धस्मरणानुगृहीतेन्द्रियेण ब्राह्मणत्वस्य प्रत्यक्षतोऽवगमात् तद्विरुद्धतदज्ञानवचनमप्रमाणमेवेति दूषयति—**प्रत्यक्षेति**। न च प्रत्यक्षेण सहाज्ञानवचनस्य विकल्पः, ज्ञानस्वरूपत्वेन विकल्पविषयत्वादिति भावः, अत्राक्रियार्थत्वेनानर्थक्यं सिद्धं कृत्वैतत्। अतश्चाज्ञानमप्रमाणमित्याह—**अत इति**। प्रत्यक्षज्ञानेनामुष्मिकफलवचनस्य दृढप्रतिपत्तिहेतुत्वरूपं प्राबल्यं विकल्पाशङ्कानिराससूचितं यदि ब्राह्मण्यादेर्दुर्ज्ञानत्वादज्ञानवचनम्, तर्हि परलोकादौ तदभावज्ञानवचनानुपपत्तिमाशङ्क्याकालिकेप्सेति सूत्रं तदनुसारेणोदाहरणान्तरमाह—**शास्त्रेति**। अस्मिन्नप्युदाहरणे प्रथमं तावदाद्यसूत्रं योजयति—**यदि हीति**। प्रश्नज्ञानादिसूचकतया सिद्धार्थत्वेनाक्रियार्थत्वादानर्थक्यमित्यर्थः। इदानीं शास्त्रदृष्टविरोधं प्रश्नपूर्वकं दर्शयति—**अथेत्यादिना**। अनवक्लृप्तिरनिश्चयोऽज्ञानम्, निश्चितवेदप्रामाण्यैरामुष्मिकफलस्य शास्त्रादेव ज्ञायमानत्वाच्छास्त्रदृष्टविरोधः, शास्त्रजनितेनामुष्मिकफलदर्शनेन विरोध इत्यर्थः ॥ २ ॥

त० वा०] वाङ्मनसयोर्विद्यमानमविद्यमानं वा स्तेयानृतवदनमुच्यमानं धर्मे स्वार्थेऽपि वा न प्रामाण्यं प्रतिपद्यते। अथ त्वध्याहारादिभिरेवं कल्प्येत वाङ्मनसयोः सर्वशरीरेषु चेष्टाः प्रति प्राधान्यादितरभूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति, ततः शास्त्रविरोधः। तत्रैतत्स्यात्—विहितप्रतिषिद्धत्वात् षोडश्यादिवद्विकल्प इति। इतरस्तु कल्पनीयक्लृप्तत्वेन वैषम्यमाह। ननु चात्यन्तदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति "प्रतिषेधः प्रदेशेऽनारभ्य विधाने

च", (अ० १० पा० ८ अ० १) इत्यत्र वक्ष्यते। सत्यम्। यस्य शास्त्रमन्तरेणाप्राप्तिरस्ति, तत्रैतदेवम्। यत्पुनरर्थप्राप्तं निषिध्यते, तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधा बलीयांसो भवन्तीति तत्रैव वक्ष्यते—"अर्थप्राप्तवदति चेदि"ति। स्तेयानृतवादयोश्च विनैव शास्त्रेण प्रवृत्तयोर्विधिनिरपेक्षोऽवस्थितः प्रतिषेध इति कल्प्यं विधिं बाधते। तस्मादानर्थक्यम् ॥

अतः परं स्वार्थेनैवाऽऽनर्थक्यं प्रतिपादयति। रात्रिन्दिवं धूमार्चिषोरपि दर्शनात् "धूम एवार्चिरेवेति" चैतद् द्वयमपि प्रत्यक्षविरोधादवधारणं न संभवति। अथ वा यदनेन प्रतिपाद्यते दिवाऽग्निरादित्यमनुप्रविशति रात्रावादित्योऽग्निमिति तदवधारणं नोपपद्यते। पूर्वोक्तस्य हेतोरसिद्धत्वात्। ततश्चाग्निसूर्ययोर्नक्तन्दिवं व्यवस्थितज्योतिष्ट्वप्रतिपादनाय स्तुतिरप्यसत्यत्वान्नावकल्पत इत्येषा वाऽनवधारणा। अथ वा सूर्यो ज्योतिरिति प्रातरयं मन्त्रोऽग्निर्ज्योतिरित्येष सायमित्येषा मन्त्रयोरवधारणा न सिध्यति। अथ वा समस्तो वेदः प्रमाणमित्येषाऽवधारणा न सिध्यतीत्यभिप्रायः। शास्त्रविरोधो दृष्टविरोधद्वयं पुनः शास्त्रदृष्टविरोध इति यत् सदृशन्यायानि सन्ति, क्रमभेदेन चोद्यते तत्परिहारसूत्रक्रमभेदानुरोधेन। 'न चैतद्विद्म' इत्यार्षेयवरणशेषोऽभिमतः। स चायं क्रियातत्संबन्ध्यनभिधानात्तद्विषयत्वेनाप्रमाणम्। न हि ब्राह्मणत्वाज्ञानसंदेहविपर्ययाः ब्राह्मणत्वादिजातिविषये आक्षेपसमाधानै केनचिदंशेन कर्मण्युपयुज्यन्ते। न च प्रत्यक्षविरुद्धाः स्तुतिः संभवति। न च स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम्। कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते। नायं शास्त्रविषयो, लोकप्रसिद्धत्वाद् वृक्षत्वादिवत्। कथं पुनरिदं लोकस्य प्रसिद्धम् प्रत्यक्षेणेति ब्रूमः। कस्मात्पुनर्मातापितृसंबन्धानभिज्ञाश्चक्षुः संनिकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते, शक्त्यभावात्। यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः। नैतत्तुल्यम्, वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते। न तु ब्राह्मणत्वम्। अपि च व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते। न चोपवीताध्ययनादिनिमित्तम्, वर्णत्रयसाधारणत्वात्। अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात्संदिग्धम्। सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वादनिश्चितम्। यस्त्वविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात्। नैष दोषः। क्वचिद्धि काचिज्जातिग्रहणे इतिकर्तव्यता भवतीति वर्णितमेतत्। तेन यथैवाऽऽलोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्तिमहत्त्वसंनिकर्षाकारविशेषादयोऽन्यजातिग्रहणेकारणम्, तथैवात्रोत्पादकजातिस्मरणम्। अयं चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षः, अन्येषां त्वनुमानाप्तोपदेशाद्यवगतकारणं भवति। न चावश्यं प्रत्यक्षावगतमेव प्रत्ययनिमित्तं भवति, चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात्। आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसंबन्धानुसारि प्रत्यक्षमित्येतत्साधितम्।

न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति, तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव। स्त्र्यपराधात्तु दुर्ज्ञानोऽयं संबन्ध इति स्वयमेव वक्ष्यति। न च तावन्मात्रेण प्रत्यक्षता हीयते। न हि यद्गिरिशृङ्गमारुह्य गृह्येत, तदप्रत्यक्षम्। न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता, लोकविरुद्धानुमानासंभवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानमनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। तथा च प्रतिकुलं गुणदोषस्मरणात् तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते। न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते। दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेत्, न त्वपत्यानां वर्णसंकरः। न च नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानम्, तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनीति, भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः। येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव, न त्वाचारनिमित्तवर्णविभागे प्रमाणं किंचित्। सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते, तत्रेतरेतराश्रयता भवेत्। ब्राह्मणादीनामाचारस्तद्वशेन ब्राह्मणादय इति। स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम्। तथैकेनैव प्रयत्नेन परपीडानुग्रहादिकुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः।

एताभिरुपपत्तिभिस्तवयं प्रतिपाद्यते। न तप आदीनां समुदायो ब्राह्मण्यम्, न तज्जनितः संस्कारः। न तदभिव्यङ्ग्या जातिः। किं तर्हि ? मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या। तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते, मासेन शूद्रीभवतीत्येवमादीनि कर्मनिन्दावचनानि, अथ वा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम्। पूर्ववच्चात्रापि क्लृप्तत्वात्प्रत्यक्षस्य, कल्प्येनाज्ञानविधिना सह विकल्पो न संभवति। अपि च तत्रानुष्ठानात्मकत्वाद्भवेदपि, न त्वत्र, वस्तुरूपाणामैकात्म्येनाविकल्प्यत्वात्। 'को हि तद्वेदेति पूर्ववदेवाज्ञानसंशयविपर्ययाणामनौपयिकत्वादानर्थक्यम्। निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैर्विज्ञायमानत्वात्स्वार्थेऽप्यातथ्यम् विकल्पाभावश्चानन्तरोक्तवत् ॥२॥

न्या० सु०—अत्र भाष्यकारेण स्तेनं मन इत्याद्युदाहृत्य एवंजातीयकानां धर्मं प्रति अप्रामाण्यम्, भूतानुवादादित्युक्तम्। तदेवंजातीयकानि कं धर्मं प्रमिमीरन्नित्यनेन गतार्थत्वात्पुनरुक्तमित्याशङ्क्य व्याचष्टे—वाङ्मनसोरिति। अनेनैवं भाष्यं व्याख्यातं भूतशब्दः

परमार्थवाची, यादृशं परमार्थतः प्रच्छन्नरूपत्वदीपचारिकं मनसःस्तेनत्वम्, प्रायिकं च वाचोऽनृतवादिनीत्वम्, तादृशानुवादमालोच्य धर्मं प्रत्यप्राण्यम्[1] अतथाभूतमुख्यरूपस्तेनानृतवादिनीत्वकीर्त्तने तु स्वार्थेऽप्यप्रामाण्यमिति भूतानुवादादिति विशेषणोपादानसामर्थ्यात् सूचितम्। ततश्च पूर्वोदाहरणेष्वतीतार्थकीर्त्तनेन योग्यानुपलब्ध्यभावात्स्वार्थासत्यत्वानिश्चयेऽपि धर्मं प्रत्यप्रामाण्यमुक्तम्। इह तु स्वार्थेऽप्यसत्यत्वमित्यधिकार्थत्वादपौनरुक्त्यमिति। अनेन चेहोदाहरणे पूर्वसूत्रमेवं योजितम्। मनसःस्तेनशब्दवाच्यपरस्वापहारित्वाभावाद्वाचश्चानृतवदनकर्तृत्वाभावान्मुख्यरूपस्तेनानृतवादिनीत्वकीर्त्तने स्वार्थासत्यत्वादानर्थक्यमभिधेयशून्यत्वं यथादृष्टार्थानुवादेऽप्यक्रियार्थत्वादानर्थक्यं निष्प्रयोजनत्वमिति। अध्याहारादिभिस्तु क्रियार्थत्वकल्पने प्रतिषेधशास्त्रविरोधापत्तेरानर्थक्यमेव युक्तमिति, शास्त्रविरोधसूत्रव्याख्यानार्थं विपरीणामादिभिरित्यादिभाष्यं तद्व्याचष्टे—**अथ त्विति**। न चेत्यादिभाष्यमाशङ्कापूर्वं व्याचष्टे—**तत्रेति**। अत्राशङ्कते—**ननु चेति**। पितृयज्ञे[2]ऽतिदेशप्राप्तस्य होतृवरणस्य न होतारं वृणीत इति निषेधः श्रूयते। दर्शपूर्णमासयोश्चानारभ्य विधिप्राप्तस्य ये यजामहस्य नानुयाजेषु यजामहं करोतीति। तत्रानयोर्नित्यं बाधो विकल्पेन वेति निरूपणार्थं नञ् अयं प्रतिषेधार्थः, पर्युदासार्थो वेति चिन्तायां पूर्वपक्षयिष्यते। श्रुत्या नञः प्रधानभूतविधायकान्वयेन निषेधार्थत्वं प्रतीतमपि नेक्षेतेत्यत्र व्रतशब्दसामानधिकरण्यादनङ्गीकृत्योपसर्ज्जनीभूतधात्वर्थान्वयेन पर्युदासोऽङ्गीकृतः। न त्विह तथा, विकल्पपर्युदासे ऽप्यपरिहार्यः, तस्यापि पर्युदसनीयप्राप्तिसापेक्षत्वात्। अन्यथा 'न सौम्येऽध्वर' इत्यस्यापि पर्युदासत्वापत्तेः।

किं चान्यत एव तदन्येषु प्राप्तेस्तदन्यमात्रसङ्कोचार्थत्वे च पर्युदासोपसंहारयोरभेदापत्तेर्न पर्युदासाख्यविध्यन्तरोपपत्तिः। तस्मात्प्रतिषेध एवायम्, ततश्च विहितप्रतिषिद्धत्वाद्विकल्प इति तत्र प्राप्तिसापेक्षस्यापि सुरापानादिनिषेधवद्विशेषनिष्ठत्वाद् बलीयस्त्वं स्यादित्याशङ्क्य विशेषनिष्ठेनापि निषेधेनात्मलाभायोगापत्तेः सामान्यरूपस्यापि विधेः स्वविषयादपनेतुमशक्यत्वादनपनीतस्य च शास्त्रस्यात्यन्तबाधायोगाद्विकल्पो दुःपरिहर इत्युक्तम्। न तुल्यहेतुत्वादुभयं शब्दलक्षणमिति। सिद्धान्तस्तु कर्तव्यत्वप्रतिपादनात्मकविधिविरोधित्वेनाकर्त्तव्यत्वप्रतिपादनात्मकनिषेधे जाग्रति विकल्पापत्तेस्तत्परिहाराय पर्युदासो ऽत्राङ्गीक्रियते, तस्य विषयसमर्पणेनानुकूलतया विकल्पानासञ्जकत्वात्तन्मात्रसङ्कोचनार्थोपसंहारात्तदन्यमात्रसङ्कोचार्थस्य पर्युदासस्य स्पष्टं वैलक्षण्यमित्यनवद्यम्।

परिहरति—**सत्यमिति**। दृष्टविरोधादीन्वक्ष्यमाणान्सर्वान्हेतूनभिधेयशून्यरूपानर्थक्यप्रतिपादनपरतया सामान्यतो व्याचष्टे—**अतः परमिति**। अत्र भाष्यकारेण धूम एवाग्नेर्दिवा ददृशे नार्चिरित्यादिदृष्टविरोधोदाहरणं दर्शयित्वा, तस्मान्नैषावधारणा सिध्यतीत्युक्तम्। तद्धम एवार्चिरेवेत्यवधारणानुपपत्त्युपसंहारार्थत्वेन तावद्व्याचष्टे—**रात्रि-**

---

१. पूर्वोक्तविपरीतमिति भावः।
२. चातुर्मास्ये साकमेधाख्ये तृतीये पर्वणि महापित्र्येष्टावित्यर्थः।

न्दिवमिति । यद्वैतेदवधारणद्वयानुपपत्त्युपसंहारस्य तस्मात् दृष्टविरुद्धमित्यनेनैव सिद्धत्वात्तदुपपाद्यस्य द्यस्य दिवाग्निरादित्यं गतो रात्रावादित्यस्तमित्यवधारणद्वयस्यासिद्धिप्रतिपादनार्थमेतद्भाष्यमित्याह—**अथ वेति** । स्वरूपपरत्वस्य वा सिद्धान्तिनोऽनिष्टत्वात्तत्रासत्यत्वे ऽपि न कापि क्षतिरित्याशङ्क्य स्वार्थासत्यत्वे निरालम्बनस्तुत्यनुपपत्तिम्, तदनुपपत्त्या वा तत्कल्प्यमन्त्रविध्यनुपपत्तिमेकदेशाप्रामाण्ये वा समस्तवेदप्रामाण्यावधारणानुपपत्तिं प्रतिपादयितुमेतदित्याह—**ततश्चेति** । एतच्च स्वार्थासत्यत्वप्रतिपादनस्य पूर्वंपक्ष्यभिप्रेतधर्माप्रामाण्योपयोगित्वप्रदर्शनार्थं व्याख्यानत्रयम् । न त्वनन्तरानिर्दिष्टस्य स्तुत्यादिरेवेति, सर्वनाम्ना निर्देशो युज्यते । एकैकोदाहरणे चोभयविरोधव्याख्यासिद्धेरुदाहरणद्वयमनर्थकम् । अथ परिहारवैलक्षण्यादुदाहरणद्वयम् । तथापि शास्त्रविरोधोदाहरणद्वयमुक्त्वा दृष्टविरोधोदाहरणं वाच्यम्, व्युत्क्रमे किं कारणमित्याशङ्क्याह—**शास्त्रेति** । प्रायादित्यनेनानृतवादिनीत्वालम्बने बाहुल्येऽभिहिते, धूम एवेत्यवधारणेऽपि भूयस्त्वाख्यस्य बाहुल्यस्यालम्बनत्वेन बुद्धिस्थत्वादनृतवादिनीत्वोदाहरणपरिहारानन्तरं धूमोदाहरणपरिहारेऽपि भूयस्त्वशब्देनोक्तंनार्चिरित्यदर्शनोक्त्यालम्बने च समीपगमनक्लेशनिबन्धने दुर्ज्ञेयत्वे दूरशब्देनोक्ते, ब्राह्मण्याज्ञानोक्तावपि स्त्रचपराधनिबन्धनस्य दुर्ज्ञेयत्वस्यालम्बनत्वेन बुद्धिस्थत्वात्तदनन्तर परिहार इति परिहारक्रमकारणम् । परिहाराणां सूत्रक्रमेण भेदेन चेति विग्रहः । उदाहरणानेकत्वकारणत्वेन परिहारभेदोक्तिः ।

'न चैतद्विद्म' इत्यत्राक्रियार्थत्वादप्रमाणमिति भाष्यकारेणोक्तम् । तत्सिद्धान्त्यभिमतस्तुत्यर्थत्वनिराकरणपरतया व्याचष्टे—**न चैतदिति** । आर्षेयप्रवरणशब्देनात्र 'प्रवरे प्रक्रियमाणे देवाः पितर' इति ब्रूयादित्यार्षेयवरणानुमन्त्रणविधिरभिप्रेतः । तेन चेहोदाहरणेऽनुमन्त्रणक्रियास्तुत्यप्रतीतेरानर्थक्यमित्याद्यं सूत्रं योजितम् । तदेवोपपादयति—**न हीति** । केन चिदंशेनेति—विधेयस्तुत्यंशेनान्यनिन्दांशेन वेत्यर्थः । यद्वा दृष्टविरोधित्वेनैव क्रियास्तुत्यर्थत्वासम्भवादानर्थक्यमनेनोक्तमित्येतदेव भाष्यमन्यथा व्याचष्टे—**न चेति** । अथायमर्थं इत्यनेनानर्थक्य एव दृष्टविरोधो हेतुरुक्तः । तद्व्याचष्टे—**न चेति** । चोदयति—**कथं पुनरिति** । शास्त्रेणेवेति । सवर्णायां स्वभार्यायामुत्पादितः सवर्ण एवासवर्णायां मूर्द्धावसिक्तादिः । परभार्यायां जीवत्पतिकायां कुण्डः, विधवायां गोलकः । पुनश्चोत्कर्षापकर्षाभ्यामन्यतरवर्णापत्तिरित्यादिशास्त्रैकगोचरत्वान्न प्रत्यक्षगम्यमित्यर्थः । परिहरति—**नायमिति** । एतदेवाशङ्कापूर्वकं विवृणोति—**कथं पुनरिति** । आशङ्किता स्वाभिप्रायमाविष्करोति—**कस्मात्पुनरिति** । सत्यपीन्द्रियव्यापारे प्रतीत्यभावान्न ब्राह्मणत्वादेः प्रत्यक्षत्वं युज्यते । न चोत्पादकजातिज्ञानस्य सहकारित्वं सम्भवति, आत्माश्रयदोषापत्तेः । प्रागुत्पादकजातिज्ञानादाप्तवाक्यजनितं ज्ञानं न प्रत्यक्षत्वेनाशङ्क्यमित्यनाख्यातग्रहणेनोक्तम् ।

यद्वानेन ग्रन्थेन ब्राह्मण्यादिजातिरपह्नूयते । सपिण्डानुवर्त्ती विजातीयेभ्यो व्यावृत्त आकारो जातिर्न च क्षत्रियादिभ्यो व्यावृत्तो ब्राह्मणेष्वनुवृत्तः कश्चिदाकारविशेषो मातापितृसम्बन्धज्ञनेनापि प्रतीयते । तस्माद् ब्राह्मणादिशब्दव्यपदेश्यमातापितृसन्तानजन्यत्वौ-

पाधिको ब्राह्मणादिशब्दः, न जातिवचनः। सन्तानस्य चानेकविप्रकृष्टकालपुरुषव्यासङ्गिनः प्रत्यक्षेण ग्रहीतुमशक्यत्वान्न तदुपाधिकस्य ब्राह्मण्यादेः प्रत्यक्षत्वं सम्भवतीति।

आशङ्काभिप्रायं परिहर्त्तुं दूषयति—**शक्त्यभावादिति**। अयमाशयः मातापितृसम्बन्धज्ञस्यापत्ये ब्राह्मण्यादिप्रत्ययस्तावत्सन्देहबाधरहितः स्वसंवेद्यः। न च निर्विषयः प्रत्ययो ऽस्तीत्युक्तम्। न चास्य सन्तानविशेषजन्यत्वं विषयः, निरालम्बनशब्दप्रयोगायोगेन जातिव्यतिरिक्तस्य सन्तानान्तरव्यावृत्तस्य विशेषस्यासम्भवात् न चास्मद्वाह्यद्वित्रिसन्तानमात्रे सन्तानः समाप्यते। येन सम्बन्धिविशेषेणैव सम्बन्धः सन्तानिविशेषेण सन्तानो विशेष्टुं शक्यते। यथा चैकदेशावस्थिता वृक्षा एव वनशब्देनोच्यन्ते। तथोत्पाद्योत्पादकक्रमेणावस्थिताः पुरुषा एव सन्तानशब्दवाच्याः। न सन्तानाख्यं किं चिद्वस्त्वस्ति। तस्मात्सर्वेषु ब्राह्मणेष्वनुस्यूतं प्रत्येकसमवेतं ब्राह्मणप्रत्ययविषयभूतं किं चिदवश्यमेष्टव्यम्। यच्चाकारविशेषो न प्रतीयत इत्युक्तम्। तत्र यद्याकारशब्देन संस्थानं मुद्रापरनामधेयमभिप्रेतम्, ततस्तस्य जातित्वानङ्गीकाराददोषः। ब्राह्मणप्रत्ययवेद्यस्तु धर्मविशेषोऽनुभवसिद्धत्वान्नापह्नवमर्हति। वृक्षत्वाद्यप्यनुभवारूढरूपातिरेकेण निरूपयितुमशक्यम्। शाखादिमद्रूपस्य संस्थानात्मकत्वेन जातित्वाभावात्संस्थानविशेषस्य हि प्रतिव्यक्तिविलक्षणत्वात्संस्थानमात्रस्य त्वन्यजातीयेष्वपि समानत्वादवान्तरविशेषस्य चानिरूपणादवयवविन्यासविशेषात्मकस्य संस्थानस्य निरवयवेष्वसंम्भवान्न **संस्थानमाकारमुद्रापरनामधेयं जातिरिष्यते**। तस्मात्समानाकारेष्वपि पिण्डेषु विलक्षणब्राह्मणप्रत्ययवेद्यब्राह्मण्यादिजातिर्नापह्नोतुं शक्यते। न चासौ शास्त्रस्य विषयः। प्रमाणान्तरागृहीतायां जातौ अगृहीतसम्बन्धत्वेन ब्राह्मण्यादिपदार्थाज्ञानात्। ब्राह्मणाद् ब्राह्मण्यां यो जायते, स ब्राह्मण इति वाक्यार्थानवधारणात्सम्बन्धाग्रहणादेव नानुमेयत्वम्, सदृशानुपपद्यमानार्थाभावादुपमानार्थापत्त्यसम्भवात्पारिशेष्यात्प्रत्यक्षत्वम्। उत्पादकजातिज्ञानात्तु प्रागप्रतीतेस्तस्य सहकारित्वं कल्प्यते, जात्यभेदेऽपि व्यक्तिभेदेन जातिव्यक्तिसम्बन्धभेदादुत्पादकव्यक्तिसम्बन्धितया जातिज्ञानमुत्पाद्य व्यक्तिसम्बन्धितया जातिज्ञाने कारणमित्यात्माश्रयत्वाप्रसङ्गः।

सहकार्यपेक्षत्वे ऽप्यैन्द्रियकत्वाव्याघाते दृष्टान्तमाह—**यथेति**। शब्दोल्लेखप्रतीतौ[1] चायं दृष्टान्तः। आशङ्किता तु वृक्षत्वस्य स्वरूपग्रहणे सहकार्यनपेक्षणाद्वैषम्यमाह—**नैतदिति**। शब्दोल्लेखप्रतीतावपि[2] शब्दातिरिक्तसहकार्यनपेक्षणादपरं वैषम्यमाह—**अपि चेति**। निमित्तान्तरग्रहणेनैतद्दर्शयति। प्रतीत्यन्यथानुपपत्त्या कल्प्यमानमपि शब्दातिरिक्तसहकारिग्राह्यात् ब्राह्मणत्वादन्यत्कल्प्यम्। न चोत्पादकगतं ब्राह्मणत्वमुत्पाद्यगतात् ब्राह्मणत्वादन्यदित्येकस्य कर्मकरणत्वायोगान्न तस्य सहकारित्वं युक्तमिति। उपवीतादीनां

---

१. नन्वगृहीतसङ्गतिनापि समनस्केन्द्रियसन्निकर्षे वृक्षत्वं गृह्यत एव तत्त्वेन परं न गृह्यत इत्यत आह शब्दोल्लेखेति। वृक्षोऽयमिति शब्दोल्लेखप्रतीतिरित्यर्थः।

२. वृक्षत्वज्ञाने शब्दातिरिक्तं सहकारि नापेक्ष्यते, ब्राह्मण्ये त्वपेक्षत इति वैषम्यमित्यर्थः।

तु व्यभिचारात्सहकारित्वमनाशङ्क्यमेवेत्याह—**न चेति**। अध्यापनादीनां ब्राह्मणस्यैव विधानादव्यभिचारमाशङ्क्याह—**अध्यापनाद्यपीति**। क्षत्रियवैश्यौ प्रति युज्यत इति क्षत्रियवैश्यप्रतियोगिक्षत्रियवैश्यौ वा प्रतियोगिनौ प्रतिसंबन्धिनौ यस्येत्यर्थः। नन्वध्यापनादिकारिणि लोके निर्विचिकित्सब्राह्मणप्रत्ययदर्शनात् न क्वचिदव्यभिचारमात्रेणाप्रामाण्याशङ्का युक्तेत्याशङ्क्याह—**यस्त्विति**। अध्यापनादीनां व्यभिचारित्वेन निर्विचिकित्सप्रत्ययोत्पादकत्वं न युक्तमिति भावः। परिहर्त्ता तून्मीलितनेत्रस्य ब्राह्मणोऽयमित्यसन्दिग्धाबाधितापरोक्षप्रत्ययोत्पत्तेर्ब्राह्मण्यप्रत्यक्षत्वापह्नवायोगादन्वयव्यतिरेकबलेनोत्पादकजातिज्ञानस्योक्तप्रकारेण परिहृतात्माश्रयदोषस्य सहकारित्वकल्पनैवोचितेत्यभिप्रायेणाह—**नैष दोष इति**। वृक्षे त्ववैषम्यलक्षणोऽध्यापनादिनिमित्तत्वासम्भवलक्षणो वा न दोष इत्यर्थः। यदि चान्यजातिग्रहणे सर्वत्रैकरूपं सहकारि स्यात्, ततोऽत्र तद्वैषम्यस्य दोषत्वं शङ्क्येतापि। न त्वेतदस्ति।

आकृतिवादे [तस्योपलक्षणं वापि क्वचित् केनचिदिष्यते] इत्यादिना जातिविशेषेषु यथादर्शनविलक्षणसहकार्यभिधानादित्याह—**क्वचिदिति**। रूपादेर्गुणविशेषस्यैव सुवर्णत्वादिजातिग्रहणे सहकारित्वदर्शनान्न जातेः सहकारित्वं कल्पयितुं युक्तमित्याशङ्क्यान्यत्रादृष्टमपीहैव प्रतीतिबलादवश्यं कल्पनीयमिति दर्शयन्नुपसंहरति—**तेनेति**। प्रतीतिबलादेव यथासम्भवं प्रत्यक्षानुमानाद्यवगतायाः सहकारित्वकल्पनं नायुक्तमित्याह—**अयं चेति**।

न च प्रत्यक्षावगतमेव प्रत्यक्षज्ञाने कारणमिति नियमो युज्यते, चक्षुरादौ व्यभिचारादित्याह—**न चेति**। न च जातिस्मरणव्यवधानमात्रेण चक्षुषोऽकारणत्वं वाच्यं प्रत्यक्षसूत्रे।

तत्र शब्दार्थसंबन्धमित्यादिना[1] स्मरणव्यवधानेऽप्यपरोक्षप्रतीतेः प्रत्यक्षत्वाभिधानादित्याह—**आन्तरालिकेति**। न च मातापितृसंबन्धानभिज्ञाप्रत्यक्षत्वमात्रेण तदभिज्ञाप्रत्यक्षत्वम्।

विमनस्का यदा केचिदित्यादिना[2] निराकृतत्वादित्याह—**न चेति**। ननु स्त्रीव्यभिचारशङ्कया मातापितृसंबन्धानिश्चयान्नापत्ये ब्राह्मण्यनिश्चयः कस्यचिदपि सम्भवतीत्याशङ्क्याह—**स्त्र्यपराधात्विति**। स्त्रीणां स्वातन्त्र्यनिषेधाद्भर्त्रादिभिः प्रयत्नेन रक्षणाद्योग्यानुपलब्ध्या व्यभिचारशङ्कायाः परिहर्तुं शक्यत्वाद्, दुर्ज्ञानत्वमात्रं मातापितृसंबन्धानभिज्ञस्य भवेन्न तु सर्वात्मना ज्ञानाभाव इत्यर्थः। एतच्च दुर्ज्ञानत्वादज्ञानवचनं गौणमिति स्त्र्यपराधेनेत्यत्र भाष्यकारो वक्ष्यतीत्याह—**इति स्वयमेवेति**। न च दुर्ज्ञानत्वमात्रेणाप्रत्यक्षत्वं शङ्क्यम्, गिरिश्टङ्गारोहणजन्यस्यापि दूरस्थपदार्थज्ञानस्य प्रत्यक्षत्वसिद्धेरित्याह—**न चेति**। ननु स्त्रीणां प्रायेण चञ्चलत्वदर्शनात् न वै स्त्रैणानि सख्यानि

---

१. स्मर्यते शब्दसम्बन्धो माभूत्प्रत्यक्षता तयोः। तदप्रत्यक्षभावेन न स्त्वर्थस्यापि वार्यते॥
२. तत्र शब्दार्थसंबन्धप्रमातुः स्मरतोऽपि वा। बुद्धिः पूर्वे गृहीतार्थसन्धानादुपजायते॥

सन्ति। शालावृकाणां हृदयान्येता स्त्रियाः इति च वेदेऽनुवादात्सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जत अशास्यं मन इत्यादिस्मृतेश्च। व्यभिचारस्वभावत्वावधारणाददृष्ट-व्यभिचारास्वपि स्त्रीत्वेन व्यभिचारोऽनुमास्यते पलाशत्वेनेव वृक्षत्वमित्याशङ्कयाह—**न चेति**। स्त्रीत्वस्य व्यभिचाराप्रयोजकत्वसूचनार्थोऽनुमाने कल्पनाशब्दः। न च निर्मूलकत्वेन लोकस्याप्रामाण्यम्, प्रयत्नेन रक्षणे योग्यानुपलब्धेर्मूलत्वसम्भवादिति दर्शयितुमाह—**विशिष्टेन हीति**। महाकुलीनानां पुरुषाणां स्त्रीरक्षणमेवात्मरक्षणम्, जायायां रक्ष्यमाणायामात्मा भवति रक्षित इति स्मरणात्।

यद्वा दुष्कुलप्रसूतत्वं व्यभिचारशीलत्वे प्रयोजकम्, न स्त्रीत्वमिति दर्शयितुं महाकुलीनत्वं स्त्रीणामुक्तम्। व्यभिचाराभावनिश्चयमेवाभियुक्तवृद्धव्यवहारेण द्रढयति—**अनेनैवेति**। व्यभिचाराभावानिश्चये हि निर्मूलत्वात् पितृपितामहादिपरम्परालेखनात्मक-समूहलेख्यं व्यर्थं स्यादिति भावः।

कुलपरीक्षापूर्वकेदानींतनपुरुषगतविवाहादिव्यवहारेणापि तमेव द्रढयति—**तथा चेति**। एतावत्प्रयत्नान्वेषणे योग्यानुपलब्धिपूर्विकया लोकप्रसिद्धया व्यभिचाराभावनिश्चयान्न स्त्रीत्वमात्रेणादृष्टव्यभिचारासु व्यभिचारानुमानं युक्तमित्युक्तम्। इदानीमनुमीयमानोऽपि व्यभिचारोऽनैकान्ततो वर्णसङ्करमापादयतीत्याह—**न चेति**। न च व्यभिचारोत्पन्न-त्वाभावेऽपि मातृव्यभिचारमात्रेणापत्ये वर्णसङ्करः शङ्क्यः। सावर्ण्योत्पत्तिकारणस्योत्पादकसवर्णत्वस्याविघातादित्याह—**तदपराधनिमित्तस्त्विति**। व्यभिचारोत्पन्नस्यापि वर्णान्तरव्यभिचारानिश्चये वर्णसङ्करानिश्चय इत्याह—**न चेति**।

ननु विन्नास्वेव विधिः स्मृत इत्यादिवचनाद्भर्तृव्यतिरिक्तसवर्णोत्पन्नस्यापि वर्णान्तरापत्तिः स्यादित्याशङ्कयाह—**सवर्णेन चेति**। गवादावुत्पादकसजातीयापत्योत्पाद-कत्वदर्शनेनेहापि तथानुमानान्न वर्णान्तरापत्तिः सम्भवतीति ब्राह्मणादिविहितकर्म्मा-नधिकारप्रतिपादनपरं विन्नास्वितिवचनं व्याख्येयं कुण्डगोलकवचनमपि सत्येव ब्राह्मण्येऽवान्तरसंज्ञाविशेषप्रतिपादनपरमिति उत्पादकासावर्ण्येऽपि क्वचिदन्यतरसवर्णोत्पत्ति-स्मरणान्नात्यन्तं तदुच्छेदः किमुत तत्सावर्ण्य इत्यतिशयार्थमाह—**सङ्करजातानामपि चेति**। एवं हि स्मर्यते।

जात्युत्कर्षो युगे ज्ञेयस्सप्तमे पञ्चमे ऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरमिति॥ या० स्मृ०

अस्यार्थः—क्षत्रियायां ब्राह्मणादुत्पन्ना कन्या मूर्धावसिक्ता ब्राह्मणाय दीयमाना मूर्द्धावसिक्तजातेरुत्कृष्टां[1] कन्यां जनयति, सापि ब्राह्मणाय दीयमाना कन्यान्तरमेवेत्येवं पञ्चमे युगे पुरुषान्तरे ब्राह्मण्योत्पत्त्या जात्युत्कर्षः। एवं वाशब्दात् षष्ठे वैश्यायां सप्तमे शूद्रायामिति। मूर्द्धावसिक्तादिपुत्रपरम्परायास्तु क्षत्रियादिस्त्रीणां तथैव पञ्चमादिषु क्षत्रियादिजातीयापत्योत्पत्तेरपकर्ष इति पूर्ववच्चाधरोत्तरमित्युत्तरत्रातिदेशात्सूचितम्,

१. ब्राह्मणजातितोऽपकृष्टानित्यधिकम् २ पु०।

नन्वस्यार्थस्य प्रत्यक्षेण विवेक्तुमशक्यत्वाद् ब्राह्मण्यादेश्च शास्त्रविषयत्वानङ्गीकारेण निर्मूलमेतत्स्मरणं स्यादत आह—**तत्र त्विति**। क्वचित्प्रत्यक्षावगतायां जातौ सम्बन्धग्रहणसम्भवात् गृहीतपदार्थकेन शास्त्रेणान्यत्र तत्प्रतिपादनं युक्तमिति मात्रशब्देन सूचितम्। प्रत्यक्षावगतिसम्भवादन्यत्र शास्त्रव्यापारो नाङ्गीकृतः, इह तु तदसम्भवाच्छास्त्रविषयत्वं नायुक्तमित्याह—**न हीति**। नन्वाकारसाम्येन क्वचिदपि ब्राह्मण्यादिविवेकस्य प्रत्यक्षेणावगत्यसम्भवात्सर्वत्रागमगम्यत्वमेवाङ्गीकार्यमित्याशङ्कां निराकुर्वन्नुपसंहरति—**तस्मादिति**। केनचिन्निमित्तेनेति स्वरविशेषादिनेत्यर्थः। स्मरणस्य स्वातन्त्र्येण प्रामाण्यायोगात्तन्मूलप्रदर्शनार्थं दर्शनग्रहणम्, तस्याप्युत्पादकजातिस्मरणनिरपेक्षेन्द्रियजन्यत्वायोगात्पूर्वोत्पादकजातिस्मरणं तत्सहकारीति निदर्शयितुं पारम्पर्यग्रहणम्, प्रत्यक्षत्वोपपादनफलमुपसंहरति—**इति भवतीति**।

ननु—

शमो दमस्तपः शौचं सत्यमार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म प्रचक्षते॥

इत्यादिस्मृतिपर्यालोचनया तपःप्रभृत्याचारयोगनिमित्तत्वेऽपि ब्राह्मणशब्दप्रवृत्तेस्तस्य प्रत्यक्षत्वेन दृष्टविरोधसम्भवात्किमिति महता क्लेशेन जातिः साध्यते। अत आह—**येषामिति**। प्रमाणाभावमुपपादयितुमाह—**सिद्धानां हीति**। अनवस्थितत्वापत्तेरप्याचारनिमित्तत्वं न युक्तमित्याह—**स एवेति**। **कारणान्तरमाह** तथेति।

ननु तपःप्रभृत्याचारयोगिनि लोके ब्राह्मणशब्दप्रयोगदर्शनात् कथं तन्निमित्तत्वनिरासः, अत आह—**एताभिरिति**। ब्राह्मणत्वप्रतिपादने द्योतकत्वमात्रं तपःप्रभृतीनां न तु ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वमित्यर्थः। यद्वा का तर्ह्यस्याः स्मृतेर्गतिरित्याशङ्क्यैतदुक्तम्। द्योतकत्वमात्रं स्मृत्या प्रतिपाद्यते, न तु तपआदीनां समुदायो ब्राह्मण्यं स्मृत्या प्रतिपाद्यत इत्यर्थः।

यदा तु पूर्वोक्तार्थोपसंहारपरत्वेनेयं फक्किका व्याख्यायते, तदा नैताभिस्तपःप्रभृतिभिरुपपत्तिभिरयं ब्राह्मणः प्रतिपाद्यते द्योत्यत इति योज्यम्, किं त्वेताभिरितरेतराश्रयप्रसङ्गादिभिरुपपत्तिभिरयमर्थः प्रतिपाद्यते, तदुच्यते न तप आदीनां समुदायो ब्राह्मण्यमिति।

ननु तपःप्रभृतीनां आचाराणां व्यभिचारित्वेन प्रत्येकं ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वायोगात् युगपदनुष्ठानाभावेन च समुदायाभावान्माभून्निमित्तत्वं तज्जनितस्य तु संस्कारस्य भविष्यति, अत आह—**नेति**। माभूच्छब्दप्रवृत्तिनिमित्तत्वम्, जात्यभिव्यञ्जकत्वं भविष्यत्यत आह—**नेति**। उभयत्र पूर्वोक्तमेवोपपत्तित्रयमति देष्टव्यम्। एवं तर्हि व्यञ्जकाभावेनाप्रत्यक्षत्वं स्यादित्यशङ्कानिराकरणार्थं पूर्वोक्तमभिव्यञ्जकं स्मारयति—**किं तर्हीति**। नन्वाचारनिमित्तत्वाभावे।

मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादिति।

वचनमनर्थकं स्यादित्यत आह—**तस्मादिति**। न तु सत्यपि प्रत्यक्षविरोधे विकल्पेन प्रामाण्योपपत्तेः प्रत्यक्षविरुद्धवचनमप्रमाणमिति भाष्यमयुक्तमित्याशङ्क्याह—**पूर्ववच्चेति**। विकल्पविषय एवायं न भवतीत्याह—**अपि चेति**।

को हि तद्वेदेति शास्त्रदृष्टविरोधोदाहरणे भाष्यकारेण पूर्वं तावदाद्यं सूत्रं योजितम् यदि **प्रश्न इति**। तद्व्याचष्टे—**पूर्ववदेवेति**। शास्त्रदृष्टविरोधप्रतिपादनार्थं यद्यनवक्लृप्तिरित्यादिभाष्यम्, तद्व्याचष्टे—**निश्चितेति** ॥ २ ॥

अर्थवाद वाक्यों के अप्रामाण्य में अन्य साधनों का प्रदर्शन करते हुए परमर्षि जैमिनि ने कहा है—शास्त्र से अवगत अर्थों के साथ विरोध है। अतः अर्थवाद वाक्य अप्रमाण है, कुछ अर्थवाद वाक्य प्रत्यक्ष विरुद्ध है और कतिपय अर्थवाद वाक्य शास्त्रदृष्ट विरुद्ध होते है अर्थात् प्रत्यक्ष एवं शास्त्रवचनों के द्वारा अवगत विषयों के विरुद्ध हैं। फलतः, शास्त्र-विरोध, दृष्ट-विरोध एवं शास्त्रदृष्टविरोध —इन तीन प्रकार के विरोधों के कारण अर्थवाद वाक्य अप्रमाण हैं। "स्तेनं मनः" "अनृतवादिनी वाक्" इत्यादि अर्थवाद वाक्यों में अध्याहार कर विधि की कल्पना की जाय तो यही अर्थ मानना होगा कि मन चोर है अतः स्तेय अर्थात् चौर्य कर्म करना चाहिए, वाणी अनृतवादिनी है, अतः, अनृतभाषण कर्तव्य है—इसी रूप में "यतः स्तेयं मनः अतः स्तेनं कर्तव्यम्", "यतः अनृतवादिनी वाक् अतः अनृतभाषणं कर्तव्यम्", किन्तु, चोरी करना एवं झूठ बोलना उचित नहीं है। इसी प्रकार "तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्च्चिस्तस्मादर्च्चिरेवाग्नेर्नक्तं ददृशे न धूमः", (तै० ब्रा० २।९।२) क्योंकि दिन में अग्नि का धूम ही दिखाई देता है, किन्तु 'अर्च्चिः' अग्नि शिखा नहीं दिखाई देती है एवं रात्रि में अग्नि की शिखा ही दिखाई देती है, किन्तु, धूम नहीं दिखाई देता है। "नचैतद् विद्मो वयं ब्राह्मणाः स्मोऽब्राह्मणा वा" (मैत्रायणी संहीता १।४।११) हम लोग ब्राह्मण हैं या अब्राह्मण है; यह नहीं जानते है, इत्यादि अर्थवाद प्रत्यक्ष विरुद्ध हैं। इसी प्रकार "को हि तद् वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा" (तै० सं० ६।२।२) परलोक में कुछ है या नहीं, इसको कौन जानता है, यह शास्त्रदृष्ट विरुद्ध है, कारण, "स्वर्गकामो यजेत" इत्यादि शास्त्रों से पारलौकिक फल का विषय अवगत होता है ॥ २ ॥

## तथा फलाभावात् ॥ १.२.३ ॥

**शा०—गर्गत्रिरात्रब्राह्मणं प्रकृत्योच्यते, शोभतेऽस्य मुखं य एवं वेद, (ता० ब्रा० २०। १६।६ तै ब्रा० ३।८।१०) इति। यदि भूतानुवादः, अनर्थकः। अथाऽध्ययनफलानुवादः। ततोऽसदनुवादः कालान्तरे फलं भविष्यतीति चेत्? न ह्यत्र प्रमाणमस्ति। विधिः स्यादिति चेत्? नैष विधिपरः 'द्रव्यसंस्कारकर्मसु' परार्थत्वात् फलश्रुतिरर्थवादः स्यात् (जै० सू० ४।३।१) इति चिन्तयिष्यत्येतदुपरिष्टात् किं फलविधिः, उतार्थवाद इति। इह तु किं भूतानुवादः**

**क्रियार्थो वेति। तेन न फलविधित्वान्निराकृतस्येहानर्थकोऽर्थवादविचार इति। आऽस्य प्रजायां वाजी जायते य एवं वेदेति चोदाहरणम् ॥ ३ ॥**

भा० वि०—अर्थवादानर्थक्ये हेत्वन्तरमाह–**तथेति**। यद्यपि "शोभतेऽस्य मुखं य एवं वेद" इत्येतावदुदाहरणम्, तथाप्येवं शब्दार्थं दर्शयितुं गर्गत्रिरात्रब्राह्मणं प्रकृत्येत्युक्तम्, अहीनविशेषविधायिब्राह्मणं प्रकृत्येत्यर्थः, अत्राप्याद्यसूत्रं योजयति–**यदीति**। यदि नाम गर्गत्रिरात्रब्राह्मणज्ञानकाले विद्यमानाया एव मुखशोभायाः सङ्कीर्तनम्, तथाप्यक्रियार्थत्वादानर्थक्यमित्यर्थः, इदानीं भूतानुवादत्वमेवात्र नास्तीति दर्शयितुं परपक्षमनुवदति—**अथेति**। अध्ययनस्यार्थावबोधपर्यन्तस्य फलं मुखशोभाऽनेनानूद्यते चेदित्यर्थः, तर्ह्यध्ययनानन्तरभाविन्या मुख्याया मुखशोभाया अनुपलम्भादसदनुवाद इति फलभावादिति सूत्रावयवयोजनया दूषयति—**तत इति**। कालान्तरफलत्वेन योग्यानुपलब्धिविरोधपरिहारं शङ्कते—**कालान्तरेति**। शोभतेऽस्य मुखमिति फलस्यानन्तर्यश्रवणात् मैवमिति तथेत्यवयवेन दूषयति—**नहीति**। तदनेन यथाभूतं मुखशोभादिफलत्वेन कीर्त्यते, तथा भूतस्याभावादानर्थक्यमिति सूत्रं योजितम्।

शोभतेऽस्येति फलविधिबलादेव फलस्य कालान्तरभावित्वावगमाद्वर्तमानापदेश एवायं न भवतीति शङ्कते—**विधिस्स्यादिति**। अधिकरणान्तरविरोधेन दूषयति—**नैषेति**। तत्र **हेतुर्द्रव्यस्संस्कारेति**। तत्र हि यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति, तीर्थे स्नाति, तीर्थमेव हि स जातानां भवति, वर्म वा एतद्यज्ञस्य क्रियते, यत्प्रयाजानूयाजाः इज्यन्ते, वर्म यजमानस्य भ्रातृव्याभिभूत्यै इत्यादीनि द्रव्यसंस्कारकर्मविषयाणि वाक्यान्युदाहृत्य किमेते फलविधयः, उतार्थवादा इति संशय्य पर्णत्वादेरप्राप्तत्वेनावश्यविधेयस्य फलाकाङ्क्षायां साक्षात्पुरुषार्थरूपश्रुतफलान्वयसंभवे पारम्पर्यपुरुषार्थरूपक्रतूपकाराख्यफलकल्पनायोगात् फलविधित्वमेवेति पूर्वपक्षयित्वा, यथाकथञ्चित् पुरुषार्थरूपफलवत्त्वेन विध्यनुपपत्तिशान्तेः विपरिणामकल्पनानुपपत्तेः यथाश्रुतवर्तमानफलत्वकीर्तनस्य चानुपलब्धिविरोधात्तफलनिधित्वमिति सिद्धान्तयिष्यते. तथेहापि विद्यायाः कर्मानुष्ठानयोग्यपुरुषकरणात् संस्कारत्वेन निराकांक्षत्वात् न शोभत इत्यादेः फलविधित्वं फलार्थवादत्वमेवेति भावः। पौनरुक्त्यात्तर्हि अत्र न विचारयितव्यमत आह—**इह त्विति**। इति चिन्त्यत इति विपरिणमय्यानुषङ्गः भूतानुवादो विद्यमानसिद्धानुवादः, अर्थानुत्रःदोऽसदनुवादः।

उदाहरणान्तरमाह—**आस्येति**। वेदानुमन्त्रणज्ञानवहो······वा······जवत् पुत्रवत्त्वसङ्कीर्तनस्याक्रियार्थत्वेनासदर्थत्वेन चाप्रामाण्योपपत्तेरित्यर्थः ॥ ३ ॥

त० वा०–यदि तावद्गर्गत्रिरात्रब्राह्मणवेदानुमन्त्रणज्ञानकाले विद्यमानयोरेव मुखशोभावाजिजन्मनीः संकीर्तनं न धर्मं प्रति प्रमाणम्। अथ त्वविद्यमानयोः

ततः स्वार्थेऽपि । वर्तमानापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः, कर्मानुष्ठानयोग्यपुरुषकरणाद्विद्यासंस्कारस्य दीक्षिततीर्थस्नानादिवन्निराकाङ्क्षत्वात्फलविधित्वं निराकरिष्यते पौनरुक्त्यात् तर्हि अत्र न विचारयितव्यमत आह—तेन फलविधित्वान्निराकृतस्येहाऽऽनर्थक्यार्थवादत्वविचार इति । स्तुत्यर्थताऽपि चासत्यस्य नास्तीति व्यवस्थितमेव ।। ३ ।।

न्या० सु०—अत्र भाष्यकारेण 'शोभतेऽस्य मुखमि' त्याद्युदाहृत्य आद्यन्तावत्सूत्रं योजितम्, यदि भूतानुवादोऽनर्थक इति तद्व्याचष्टे—यदि तावदिति । गर्गत्रिरात्रब्राह्मणोपक्रमोपन्यासस्य य एवं वेदेत्येवंशब्दव्याख्यानार्थत्वं गर्गत्रिरात्रब्राह्मणग्रहणेनोक्तम् । उदाहरणान्तरगतैवंशब्दस्य व्याख्यानार्थं वेदानुमन्त्रणग्रहणम् । विद्यमानयोरेवेत्यनेन यथादृष्टवचनत्वं भूतशब्दस्य दर्शितम् । सम्भवति च गर्गत्रिरात्राहोनविशेषविधायिब्राह्मणज्ञस्य परिहारसूत्रवक्ष्यमाणप्रकारेण मुखशोभा, वेदानुमन्त्रणज्ञस्य तु वाजिजन्मेति मन्त्रलिङ्गादपि गम्यते । प्रकृतसूत्रयोजनार्थम् अथाध्ययनफलानुवाद इति भाष्यं तद्व्याचष्टे—अथ त्विति । मुख्यरूपयोर्मुखशोभावाजिजन्मनोर्योग्यानुपलब्धिबोधितत्वादिति भावः । कालान्तरफलत्वेन योग्यानुपलब्धिविरोधपरिहारशङ्कानिराकरणार्थत्वेन सौत्रतथाशब्दव्याख्यानार्थं कालान्तर इत्यादिभाष्यं तद्व्याचष्टे—वर्त्तमानापदेशाच्चेति । तदनेन यथाभूतं मुखशोभाद्यनन्तरफलत्वेन कीर्त्यते तथाभूतस्याभावादानर्थक्यमिति सूत्रं योजितम् । फलविधित्वेनकालान्तरभावित्वावगमात् वर्त्तमानापदेशो ऽयं न भवतीत्याशङ्क्य 'द्रव्य संस्कार कर्मस्वि' त्यत्र निराकरिष्यमाणत्वान्नायं फलविधिरिति भाष्यकृतोक्तम् । तव विद्याया द्रव्यादिबाह्यत्वात्तदधिकरणविषयत्वमाशङ्क्य संस्कारान्तर्गतिं दर्शयितुमाह—कर्म्मानुष्ठानेति । तत्र हि 'यस्य पर्णमयी जुहूर्भवति' न स पापं श्लोकं शृणोति । तीर्थे स्नाति, तीर्थमेव समानानां भवति । वर्म्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजा, इज्यन्ते वर्म्म यजमानस्य भ्रातृव्याभिभूत्या, इत्यादीनि द्रव्यादिविषयाणि वाक्यान्युदाहृत्य किमेते फलविधयः फलार्थवादा वेति विचारयिष्यते । तत्र पर्णतादेरप्राप्तत्वेनावश्यविधेयस्य फलाकाङ्क्षायां साक्षात्पुरुषार्थरूपश्रुतफलसम्भवे पारम्पर्य्यपुरुषार्थरूपक्रतूपकाराख्यफलकल्पनायोगात्फलविधित्वेन पूर्वपक्षयित्वा, यथाकथंचित्पुरुषार्थरूपफलत्वेन विध्यनुपपत्तिपरिहाराद्रात्रिसत्रादिवद्विपरिणामकल्पनानुपपत्तेर्यथाश्रुतवर्त्तमानफलत्वसङ्कीर्तनस्य चानुपलब्धिविरोधान्न फलविधित्वमिति सिद्धान्तयिष्यते । चिन्तयिष्यत्येतदित्यादिभाष्यं पौनरुक्त्याशङ्कानिराकरणार्थत्वेन व्याचष्टे—न पौनरुक्त्यादिति । एवं तर्हि सिद्धान्त्यभिमतं स्तुत्यर्थत्वमेव पूर्वपक्षिणा निराकार्यमित्याशङ्क्य तदर्थमेव स्वार्थासत्यत्वनिरूपणमित्याह—स्तुत्यर्थतेति ।। ३ ।।

अर्थवाद वाक्यों से अन्य प्रमाणों से सिद्ध विषयों से विरुद्ध विषयों का निर्देश किया गया है, जिसका विश्लेषण पूर्व सूत्र के द्वारा उपलब्ध है । किन्तु, इतना ही नहीं, वरन्,

---

१. ब्र प्रक्रम्योच्यते ।

ऐसे भी फलों के विषय कहे गये हैं जो नहीं हो सकते हैं। जैसे:–"शोभतेऽस्य मुखं य एवं वेद" (ताण्ड्यमहाब्राह्मण २०।१६।६) "जो व्यक्ति इस प्रकार जानता है, उसका मुख शोभायमान होता है"। यह फल नहीं हो सकता है, कारण, इस प्रकार जानने से मुख कैसे शोभायमान हो सकता है ? इसी प्रकार "आस्य प्रजायां वाजी जायते य एवं वेद"। ',जो व्यक्ति इसको इस रूप में अवगत करता है, उसकी सन्तान वाजी (वाज=अन्न + इन =वाजी) अर्थात अन्नवान् या शस्यवान् होती है", इत्यादि अर्थवाद वाक्यों के फल दृष्ट नहीं होते हैं, अतः, अनेक स्थलों में अर्थवाद निष्फल अर्थात् जिस रूप के फल कहे गये हैं, उनकी प्राप्ति न होने से वे अर्थवाद अप्रमाण हैं। ॥ ३ ॥

## अन्यानर्थक्यात् ॥१.२.४॥

**शा०—पूर्णाहुत्या सर्वान् कामानवाप्नोति, पशुबन्धयाजी सर्वाल्लोकानभिजयति, तरति मृत्युं, तरति ब्रह्महत्याम्, योऽश्वमेधेन यजते, य उ चैनमेवं वेदेति। यदि भूतानुवादमात्रं तर्ह्यनर्थकम्। अथ फलविधिः, इतरेषामानर्थक्यम्। न ह्यकृत्वा पूर्णाहुतिमग्निहोत्रादयः क्रियन्ते। न चानिष्ट्वा अग्नीषोमीयेन सोमेन यजन्ते। न चानधीत्याश्वमेधमश्वमेधेन यजन्ते। तद्यथा, पथि जातेऽर्के मधूत्सृज्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुस्तादृशे हि तत्। अपि चाऽऽहुः—**

**"अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।**

**इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्" इति ॥ ४ ॥**

भा० वि०] विषयान्तरे तु स्वार्थपरत्वे दोषान्तरमप्याह–**अन्येति**। तत्राप्याद्यं सूत्रं तत्प्रदर्शनपूर्वं योजयति–**यदीति**। सर्वकामावाप्ति-सर्वलोकाभिजय-मृत्युतरणादीनां क्रियातच्छेषत्वाभावात्तद्विषयं वाक्यमनर्थकमित्यर्थः। यद्यपि फलविधित्वमेषां पूर्वसूत्रेणैव निरस्तप्रायम्। तथाप्यभ्युपेत्य दोषान्तरं वक्तुमुत्थापयति—**अथेति**। अत्रान्यानर्थक्यसूत्रं योजयन्नुत्तरमाह—**इतरेषामिति**—ततश्च क्लृप्तबहुविध्यनुग्रहाय पूर्णाहुत्यादिवाक्यानामेवाप्रामाण्यमिति भावः। आनर्थक्यमेव विवृणोति—**नहीत्यादिना**। अत्राग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात् पूर्णाहुतेः प्राग्भावः, अग्नीषोमीयस्य च पशोरौपवसथ्येऽहनि विहितत्वात् सोमयागात्प्राग्भावः, अश्वमेधस्य चाज्ञातस्यानुष्ठातुमशक्यत्वात् तज्ज्ञानस्य प्राग्भावः, ततश्च तैरेवाभिमतफलसिद्धेरन्यानर्थक्यमिति भावः।

नन्वल्पपूर्णाहुत्यादेरपि फलसिद्ध्या महतोऽग्निहोत्रादेरानर्थक्यसंभवात् किमिति पौर्वापर्यनियमादेवानर्थक्यं व्याख्यातमित्याशङ्क्याल्पत्वादिविशेषवतामपि समानफलानां परस्परानपेक्षाणां च यथारुच्यनुष्ठानसंभवात् नान्योनर्थक्यं दृष्टमित्यतः पौर्वापर्यनियमादेवोत्तरानर्थक्यं युक्तमिति मत्वा दृष्टान्तमाह—**तद्यथेति**। तेनैवेत्यवधारणेन···पथ्यन्तराभावप्रतिपादकेन पौर्वापर्यनियमस्सूचितः. दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—**तादृशं हि तदिति**। उक्तमर्थं

विद्वद्वचनेन दृढयति—अपि चाहुरिति। अर्के समीपे अयत्नलभ्ये फले यत्नाधानं गौरवादयुक्तमिति हेतुमाह—इष्टस्येति ॥ ४ ॥

त० वा०] अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि विधित्वाभ्युपैत्यवादेन तु दोषान्तरमभिधीयते। पूर्णाहुतेरग्निसंस्कारत्वात्पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वादश्वमेधज्ञानस्य च संस्कारत्वान्न तावत् फलविधित्वावसरः। यदि पुनरिष्यते, ततोऽन्यानर्थक्यम् समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते, तेषां यथारुच्यनुष्ठानान्नान्यानर्थक्यकरत्वम्। पूर्णाहुतिपशुबन्धयोस्त्वकृतयोरितरकर्मानधिकारात्। 'प्रथमं वा नियम्येते'त्यनेन न्यायेनावाप्ते फलेनोत्तरकर्मानुष्ठानप्रयोजनमस्तीति, तद्विध्यानर्थक्यम्। तथा च दृष्टान्तोऽपि तेनैव पथा मघ्वर्थिन इति यत्रान्यः पन्थाः पर्वतस्य, तत्र गच्छेयुरपि न तु तेनैव गच्छन्ति। तस्माद् भूयसां क्लृप्तानां विधीनामनुग्रहाय वरं कल्प्यानामेवानर्थकत्वम्। न च फलविशेषार्थिनः पराणि कर्माण्यविशेषश्रवणात्। न हि समानायां श्रुतावप्रत्यक्षः सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम्। न च स्तुतिरसत्यत्वादिति स्थितमेव ॥ ४ ॥

न्या० सु०] अत्र भाष्यकारेण पूर्णाहुत्याद्युदाहरणेषु यदि भूतानुवादमात्रमनर्थकमित्यनेनाद्यं सूत्रं योजयित्वाऽष्टाफलविधिरन्येषामानर्थक्यमित्यनेनान्यानर्थक्यसूत्रं योजितम्। तत्र फलाभावसूत्रमपि योजयितुं शक्यत्वात् किमिति न योजितमित्याशङ्क्यानन्तरेणैव निर्ज्ञातपारार्थ्येषु फलविधित्वनिराकरणन्यायेनात्रापि फलाभावस्य सुज्ञानत्वादित्याह—अनन्तरेणैवेति। कथमेषां तदधिकरणविषयत्वमित्याशङ्क्याह—पूर्णाहुतेरिति। यदीत्यादिभाष्यं व्याचष्टे—यदि पुनरिति। न ह्यकृत्वेत्यादिनान्यानर्थक्योपपादनार्थं पौर्वापर्य्यमुपन्यस्तम्। तत्र समानफलकर्माल्पत्वमात्रेणान्यानर्थक्योपपत्तेः पौर्वापर्योपन्यासो व्यर्थ इत्याशङ्क्याह—समानफलान्यपीति। अपिशब्देनाल्पत्वमहत्त्वमुपक्षिप्तमज्ञातस्यानुष्ठातुमशक्यत्वाद्युक्तमश्वमेधज्ञानस्य तदनुष्ठानात्प्राग्भावित्वम्, पूर्णाहुतिपशुबन्धयोस्तु कथमत आह—पूर्णाहुतीति। अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात्पूर्णाहुतेः प्राग्भावः। स एष औपवसथ्ये ऽहनि द्विदेवत्यः पशुरालब्धव्य, इत्यनेन वचनेनाग्नीषोमीयस्येति भावः—प्रथमं वा नियम्येति। 'वसन्ताय कपिञ्जलानालभेत' इत्याद्युदाहृत्य किं त्र्यादयः परार्द्धपर्य्यन्ता विकल्पेनालब्धव्या उत त्रय एवेत्येकादशे चिन्तयिष्यते। तत्र बहुवचनेन द्वित्वातिरिक्तसङ्ख्यासामान्यरूपबहुत्वाभिधायिनां तद्विशेषाकाङ्क्षायां परार्द्धातिरिक्तसङ्ख्याविशेषाभावात्तत्पर्यन्तत्र्यादिसंख्याविशेषाक्षेपात्समुच्चये संख्यान्तरोपजननेन सर्वविनाशापत्तेर्विकल्पेन विनियोग इति। बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यादित्यनेन पूर्वपक्षयित्वा, प्रथमं वा नियम्येत कारणादतिकमः स्यादि(जै०सू०११।१।७)त्यनेन त्रिसंख्योपादानं विना चतुराद्युपादानाशक्तेरवश्योपादेयत्रित्व-

१. ब न चानिष्ट्वा० इत्यस्य प्राक्।

**मात्रेण बहुवचनोपपत्तेरतिरिक्ताक्षेपे प्रमाणाभावात् त्रित्वनियम इति सिद्धान्तयिष्यते । दृष्टान्ते पौर्वापर्य्यादरार्थमेव तेनैव पथेत्युक्तमित्याह—तथा चेति । भवत्वन्यानर्थक्यमत आह—तस्मादिति । फलविशेषार्थत्वेन तर्ह्यन्येषामर्थवत्त्वं भविष्यतीत्यत आह—न चेति । नन्वेवमपि सिद्धान्त्यभिमतस्तुत्यर्थत्वानिराकरणात्पूर्वपक्षो न सिद्धः, अत आह–न चेति ॥ ४ ॥**

अन्यका अर्थात अर्थवाद से अतिरिक्त अनेक वाक्यों की अनर्थकता होने से अर्थवाद प्रमाण नहीं है । यदि अर्थवाद का प्रामाण्य स्वीकार किया जाय, तब अनेक स्थलों में विधिवाक्य अनर्थक या विफल होने लगेंगे, इसलिए, अर्थवाद को प्रमाण नहीं कहा जा सकता है ।

श्रुति में कहा गया है—"तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" । (तै०५।३।१२।१) जो व्यक्ति अश्वमेध यज्ञ करता है, एवं जो उसका इस प्रकार (स्वरूप) अवगत करता है, वह मृत्यु का अतिक्रमण करता है, पाप से उद्धार प्राप्त करता है तथा ब्रह्महत्या से छुटकारा प्राप्त कर लेता है । इस प्रसङ्ग में यह कहना है कि अश्वमेध का स्वरूप जानने से ही पूर्वोक्त फलों की प्राप्ति होती है, जो व्यक्ति यज्ञ करता है उसको भी पूर्व में वेद का अध्ययन करना पड़ता है, अतः, अध्ययन काल में ही अश्वमेध के स्वरूप की अवगति हो जाने से "अश्वमेधेन यजेत" यह विधि निरर्थक हो जायगी, कारण, अध्ययन के बिना तो यज्ञ का अधिकारी नहीं होता है और अध्ययन से ही फल की प्राप्ति हो जाने से पुनः यज्ञ का अनुष्ठान तो व्यर्थ ही होगा, क्योंकि, यज्ञ के अनुष्ठान के सम्पादन में जो कष्ट होता है उसकी तुलना में वेदाध्ययन एवं यज्ञविषयक शास्त्रीयज्ञान में श्रम नगण्य है, अतः, विना आयास के ही अभीष्ट की प्राप्ति हो जाने पर कौन बुद्धिमान् उस की प्राप्ति के लिए क्लेश सहन करने की इच्छा करेगा। इसी के उदाहरण स्वरूप भाष्यकारने कहा है—

अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥

पथ के किनारे अकवन (आक) के वृक्ष में यदि मधु की प्राप्ति हो जाती है, तब उसकी प्राप्ति के लिए पर्वत पर क्यों जायगा ? इसी प्रकार यदि अभीष्ट विषय की अनायास सिद्धि हो जाय तब कौन विद्वान् उसके लिए विशेष परिश्रम चाहेगा ? इसी प्रकार "पूर्णाहुत्या सर्वान् कामनाप्नोति" (थै० ब्रा० ३।८।१०।५) "पूर्णाहुति के द्वारा सभी कामनाएँ सिद्ध होती हैं" । इसी प्रकार "पशुबन्धयाजी सर्वान् लोकानभिजयति" । जो व्यक्ति निरूढ़पशुबन्धनामक यज्ञ करता है, वह स्वर्ग आदि सभी लोकों का लाभ करता है अर्थात् लाभ करता है इत्यादि सभी अर्थवाद अन्य विधियों के विघातक हैं । क्योंकि, अग्नि आधान कर्म में पूर्णाहुति देने से ही यदि सभी कामनाओं की पूर्ति हो तो अग्निहोत्र आदि कर्मों का विधान अनर्थक हो जायगा, क्योंकि, पूर्वसम्पादित अग्नि आधान के विना अग्निहोत्र आदि कर्मों का अनुष्ठान नहीं हो सकता है और पूर्णा-

हुति के विना अग्नि आधान कर्म सम्पन्न नहीं हो सकता है। इस प्रकार निरूढ़पशु बन्ध-नामक यज्ञ करने से ही यदि स्वर्गलोक की प्राप्ति हो जाती है तो इसके बाद कर्तव्य रूप में विहित ज्योतिष्टोम आदि का विधान विफल हो जायगा। अतः जिन अर्थवाद वाक्यों का पारलौकिक फल कहा गया है, वे अनर्थक होने से अप्रमाण हैं, क्योंकि विधिवाक्यों का प्रमाण निश्चित होने से अर्थवाद वाक्यों के द्वारा उनकों अन्यथा नहीं किया जा सकता है अर्थात् विधिवाक्यों का आनर्थक्य या अप्रामाण्य नहीं हो सकता है। वरन् निश्चित प्रामाण्यवाले विधिवाक्यों से अर्थवाद वाक्यों का ही प्रामाण्य बाधित होता है—यही युक्ति सङ्गत है ॥ ४ ॥

## अभागिप्रतिषेधाच्च ॥ १.२.५॥

**शा०] 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि, (तै०सं० ५।२।७)। इत्य-प्रतिषेधभागिनमर्थं प्रतिषेधन्ति। विज्ञायत एवैतदन्तरिक्षे दिवि चाग्निर्न चीयत इति। पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यम्, भवेच्चयनप्रतिषधार्थमेव तत्। अथा-प्रमाणम्। नैष विरोधो भवति। कथं तत्प्रमाणं यद् विध्यन्तरमाकुलयेत्, स्वयं चाऽऽकुलं स्यात्। न चेतव्यम्, हिरण्यं निधाय चेतव्यमिति ॥ ५ ॥**

भा० वि०] स्वार्थपर्यवमानाभ्युपगमे स्वस्यैव निर्विषयत्वप्रसङ्गं वाक्यान्तरे दर्शयति—**अभागीति**। अत्र प्रथममभागिसूत्रं योजयति—**अप्रतिषेधभागिनमिति**। कथमप्रतिषेधभागित्वं चयनस्येत्याशङ्क्यान्तरिक्षद्युचयनयोरप्राप्तत्वेन प्रतिषेधा-योग्यत्वं दर्शयति–**विज्ञायत** इति। पृथिवीचयनस्य तर्हि प्राप्तत्वात्तन्निषेधो योग्य-प्रतिषेध एवेत्यत आह–**पृथिवीति**। चशब्दः शङ्काद्योतकः 'इष्टकाभिरग्निं चिनुते' इत्यादिर्ह्यन्तरिक्षादावसंभवात् पृथिव्यामेवचयनं विधत्ते, न पृथिव्यामिति च तन्निषेधे निराधारचयनासंभवान् विधिबाध इत्यर्थः।

एतेन विधिविरोधात् निषेध्याभावाच्च निषेधासंभवप्रतिपादनेन विधि-विरोधात् पर्युदसितव्याभावाच्च पर्युदासोऽपि निरस्तो वेदितव्यः। न च निषेध-पर्युदासयोर्नित्यानुवादत्वमक्रियार्थत्वेनानर्थक्यप्रसङ्गात् इति चाद्यसूत्रयोजना द्रष्टव्या। न च न पृथिव्यामिति निषेधस्य चयनविधिना सह विकल्पः, पृथि-व्यामिति विशेषणोपादानेन तत्परतयावगतस्य प्रतिषेधस्य चयनक्रियायां कल्प्य-त्वेन दुर्बलत्वादिति भावः।

ननु दुर्बलेनापि प्रतिषेधेनागत्या पाक्षिकचयनविधिबाधो नातीव दोषावहे-त्याशङ्क्याह—**अथेति**। यदि प्रतिषेधोऽप्रमाणम्, तदापि न विरोध इत्यर्थः, प्रतिषेधाप्रामाण्यसंभवादगतिरसिद्धेति भावः।

**ननु** पूर्णाहुत्यादेरेकस्य कल्प्यस्याग्निहोत्रादिबहुक्लृप्तविधिविरोधाद्युत्क्रम-प्रामाण्यम्, इह तु उभयोः प्रत्यक्षत्वेनाविशेषात् कथमेकान्ततः प्रतिषेधस्यैवा-

प्रामाण्यमित्याशङ्क्याह—**कथं तदिति**। विध्यन्तर'मिष्टकाभिरग्निं चिनुत' इत्यादि 'हिरण्यं निधाये' त्यस्य गुणपरत्वादिष्टकाभिरित्यादिचयनोत्पत्तिवाक्यमनेनोपलक्षितं स्वयं व्याकुलतामेव दर्शयति—**न चेतव्यमिति**। पृथिव्याधारनिषेधायोगादिष्टकाभिरग्निमित्यादिना चयनप्राप्तिरङ्गीकार्या, पुनरनाधारत्वेन चयननिषेधे निषेधस्यैव व्याकुलत्वात् न प्रामाण्यसंभावनेति भावः ॥ ५ ॥

त० वा०] त्रीण्यपि पृथिव्यादिवचनान्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति। अन्तरिक्षे दिवि च तावदप्राप्तत्वात्प्रतिषेधाविषयत्वम्। अतश्च पर्युदसितव्याभावान्न पर्युदासः। अनन्तरिक्षे ह्यदिवि च पृथिव्यां नित्यं चयनं प्राप्तमिति तद्विधिरनर्थकः। अथापि नित्यानुवादस्तथाऽप्यक्रियार्थत्वमेव। पृथिवीचयनप्रतिषेधपर्युदासौ तु चयनविध्यबाधेनाशक्यौ। बाधे च विध्यानर्थक्यम्। विकल्पेऽपि पक्षे बाधः। कामसंयोगाच्चाग्नेरस्त्येव पाक्षिकत्वम्। दुर्बलश्च प्रतिषेधः। पृथिवीपरत्वे सति चयने कल्प्यत्वात्। एतदेवास्य स्वयमाकुलत्वम्। विध्यन्तरमेव 'हिरण्यं निधाय चेतव्यमिष्टकाभिरग्निं चिनुत एतच्चाऽऽकुलयेत्। प्ररोचनाबुद्धिस्तु नैवोत्पद्यते ॥ ५ ॥

न्या० सु०] अत्र भाष्यकृता न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यप्रतिषेधभागिनमर्थंप्रतिषेधन्तीति बहुवचनं प्रयुक्तम्। तदयुक्तम्। पृथिवीचयनस्य प्राप्तेः प्रतिषेधभागित्वादित्याशङ्क्याह—**त्रीण्यपीति विज्ञायत एवेति भाष्यं व्याचष्टे-अन्तरिक्ष इति**! अस्तु तर्हि पर्युदासः, अत आह–**अतश्चेति**। प्रतिधषेधग्रहणं पर्युदासस्याप्युपलक्षणार्थमिति भावः।

उभयत्र सिद्धान्त्यभिमतं नित्यानुवादत्वं निराकर्त्तुमाद्यं सूत्रं योजयति—**अथापीति**। पृथिवीचयनस्याप्रतिषेधभागित्वप्रदर्शनार्थं पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेत् चयननिषेधार्थमेव तदितिभाष्यं तदुपपादयति—**पृथिवीति**। अस्तु तद्बाधोऽत आह—**बाधे चेति**। विकल्पेन चयनविधेरप्यर्थवत्त्वं भविष्यत्यत आह—विकल्पेऽपीति। पाक्षिकबाधार्थमेवायं प्रतिषेधो भविष्यति नातिरात्रे षोडशिनं गृह्णातीति वदत आह—**कामसंयोगाच्चेति**। पशुकामश्चिन्वीत प्रजाकामश्चिन्वीतेत्यादिभिर्वाक्यैः काम्यत्वावगमाद्विनापि प्रतिषेधं पाक्षिकत्वसिद्धेः प्रतिषेधानर्थक्यमिति भावः। न च कामाभावे पाक्षिकत्वं प्रतिषेधवशाद्भविष्यतीति शक्यं वक्तुं काम्यस्य कामनाभावे प्राप्त्यभावेन प्रतिषेधायोगात् विशेषणोपादाने च तत्परतयावगतस्यास्य प्रतिषेधस्य क्रियायां कल्प्यत्वेन दौर्बल्यान्न पाक्षिकत्वापादने सामर्थ्यमस्तीत्याह—**दुर्बलश्चेति**।

ननु दुर्बलेनापि प्रतिषेधेनागत्या[1] पाक्षिकचयनविधिबाधो नातीव दोषमावहतीत्याशङ्क्य अथाप्रमाणं नैष विरोधो भवतीत्यनेन भाष्येण प्रतिषेधाप्रामाण्येनागतिपरिहारः

---

१. अगत्येति इष्टकाभिरग्निं चिन्वीतेतिवचनात्सामर्थ्यात्पृथिव्यामेव चयनं प्राप्तं तत्र न पृथिव्यामिति यथाश्रुते ऽर्थे ऽमुपपेतव्ये विधिरनर्थकः इत्यगतिः।

कृतस्तदतिस्पष्टत्वान्न वार्त्तिककृता व्याख्यातम् । ननु बहुतरक्लृप्ताग्निहोत्रादिविधिविरोधे-नैकस्य कल्प्यस्य पूर्णाहुत्यादिविधेरप्रामाण्यं युक्तम् इह तूभयोः प्रत्यक्षत्वेनाविशेषात्कथ-मेकान्ततः प्रतिषेधस्यैवाप्रामाण्यमित्याशङ्कानिराकरणार्थं भाष्यम्—**कथं तत्प्रमाणमित्यादि ।** तत्र स्वयमाकुलत्वमुपपादयति—**एतदेवेति ।** अप्राप्तस्य चयनस्य पृथिव्याधारत्वनिषेधा-योगात्प्राप्तिस्तावदङ्गीकार्या, पुनश्चानाधारचयनायोगात्तन्निषेधोऽपीत्येतदेवेत्यनेन परामृष्टम् । किं तद्विध्यन्तरमित्यपेक्षायामाह—**विध्यन्तरं चेति ।** अस्य गुणपरत्वाच्चयनोत्पत्तिवाक्यो-पलक्षणार्थत्वं दर्शयितुमिष्टकावाक्योपन्यासः, स्तुत्यर्थत्वं चानाशङ्कयमेदेत्याह—**प्ररोचना-बुद्धिस्त्विति** ॥ ५ ॥

भागी का अर्थ प्राप्य या प्रतिषेध के योग्य होता है, इसलिए अभागिप्रतिषेध का अर्थ अप्राप्त विषय का निषेध है, अर्थवाद वाक्य अप्राप्त का निषेध करता है, अतः अर्थवाद वाक्य अप्रमाण है ।

आशय यह है कि अर्थवाद के अप्रामाण्य के अन्य कारणों का निर्देश करते हुए जैमिनि ने कहा है 'अभागिप्रतिषेधात्' प्राप्त विषयों का ही निषेध होता है, क्योकि अप्राप्त विषयों का निषेध नहीं हो सकता है । "न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि" (तै० सं० ५-२-७) भूमि में अग्नि का चयन नहीं करना चाहिए, अन्तरिक्ष में एवं द्युलोक में अग्नि का चयन नहीं करना चाहिए, इस अर्थवाद वाक्य में अप्रसक्त अर्थात् स्वाभाविक प्रवृत्ति के अधीन अप्राप्त विषय का निषेध किया गया है, क्योंकि आकाश में या द्युलोक में अग्नि का चयन करना असम्भव होने से इन लोकों में अग्नि के चयन करने में कोई भी प्रवृत्त नहीं हो सकता है और जिस कार्य में स्वाभाविक प्रवृत्ति ही नहीं है उसके निषेध करने का कोई प्रयोजन नहीं है । इस प्रकार भूमि में अग्नि चयन का प्रतिषेध होने से अग्नि चयन विधि ही बाधित हो जायेगी, क्योंकि

यदि भूमि में अग्नि का चयन नहीं किया जाय तो कहाँ अग्नि का चयन किया जायगा ? फलतः इस अर्थवाद वाक्य के द्वारा अग्नि चयन की विधि ही बाधित हो जायगी । जिस अर्थवाद से विधि बाधित होगी वह अर्थवाद प्रमाण नहीं हो सकता है । इसलिए ये अर्थवाद अप्राप्त विषय के प्रतिषेधक हैं, अतः स्वार्थ में भी प्रमाण नहीं है ॥ ५ ॥

## अनित्यसंयोगात् ॥ १.२.६ ॥

**शा०] अनित्यसंयोगश्च वेदप्रामाण्ये सति । परं तु श्रुतिसामान्यमात्रमिति परिहृतः । इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्वलक उत्तिष्ठति, बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति । (तै० सं० ७।१।२०) ॥ ६ ॥**

**( इति पूर्वपक्षः )**

भा० वि०] स्वार्थपरत्वेऽर्थवादानां पौरुषेयत्वमपि स्यादित्याह—**अनित्येति**। 'बबरः प्रावाहणिरकामयते' त्याद्युदाहरणेऽनित्यसंयोगसूत्रं योजयति—**अनित्येति**। अनित्यसंयोगश्च स्वार्थपरत्वे प्रसज्येतेति शेषः। पूर्वपक्षे स्वार्थस्यैवाभावेनानित्यसंयोगाभावात् अन्यानर्थक्याभागिप्रतिषेधसूत्रयोरपि स्वार्थपरत्वेऽन्यानर्थक्याभागिप्रतिषेधप्रसङ्गवदिति योजना द्रष्टव्या। चशब्दादक्रियार्थत्वेनानर्थक्यमित्याद्यसूत्रं योजितम्।

ननु वेदाधिकरण एव 'परं तु श्रुतिमान्यमात्रमिति' सूत्रेण बबरादिशब्दानां नित्यसिद्धवाय्वाद्यर्थाभिधायित्वस्योक्तत्वात् स्वार्थपरत्वेऽपि, नानित्यसंयोगप्रसङ्ग इत्याशङ्क्याह—**वेदप्रामाण्ये सतीति**। तत्र हि समस्तवेदप्रामाण्याभ्युपगमेन नित्यसिद्धवाय्वाद्यर्थत्वं प्रतिपादितम्, यदा त्वर्थवादानां क्रियातच्छेषार्थत्वाभावेन प्रामाण्यमाक्षिप्तम्, तदा वायुर्वै क्षेपिष्ठेत्यादीनामिव नित्यार्थानामप्यप्रामाण्येन स्वार्थपरित्यागकारणाभावात् स्वार्थपरत्वे बबरादिवाक्यानामनित्यसंयोगप्रसङ्गस्योपोद्बलकस्योत्थानं युक्तमित्यर्थः। न चाध्ययनविधिबलात् सर्वस्य पुरुषार्थौपयिकत्वावगतेः कथमर्थवादानामानर्थक्यं शङ्क्यत इति आशङ्कनीयम्। अदृष्टार्थत्वेऽपि पुरुषार्थोपपत्तेः, अध्ययनविधेरेकान्ततोऽर्थपरत्वानाक्षेपकत्वादिति भावः॥ ६॥

( इति पूर्वपक्षः )

तं० वा०] सर्वोपाख्यानेष्वन्यपरत्वासंभवात्स्वरूपप्रतिपादनादनित्यसंयोगः। स च समस्तवेदप्रामाण्ये सति कथंचिदन्यथा नीयेत। यदा तु यथैव प्रमाणानां मध्ये शब्दः, तत्रापि च वेदः प्रमाणम्, तथैव वेदेऽपि विधिमात्रं युक्त्या कल्प्यते, तदेतरैकदेशवदनित्यार्थैकदेशप्रामाण्यं यथाश्रुतार्थग्रहणादापन्नं किं निवार्येत। तस्मादेवमादीनामनपेक्ष्यार्थमध्ययनमात्रादेव फलं कल्प्यम्। अथ वा यथैतान्युपेक्षाफलानि, तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम्। अथ कस्मान्मन्त्रवद्यथाप्रकरणं प्रयोगकाले न प्रयुज्यते, प्रयोगरूपसामर्थ्याभावात्। न हि मन्त्राणां पाठमात्रेण विनियोगः, किं तर्हि तत्सामर्थ्यात्। न चात्र तदस्ति। अथ वा यथा तेषां पूर्वपक्षे कार्यान्तराभावाद्रूपमात्रं ग्रहीष्यते, तथात्राप्यस्तु। यत्तु सूत्रकारेणानित्यत्वमुक्तम्, तत्प्रामाण्यापेक्षया नाप्रयोज्यतया॥ ६॥

न्या० सु०] नन्वतः परं स्वार्थेनैवानर्थक्यं प्रतिपादयतीति वार्त्तिककृद्वचनात्स्वार्थासत्यत्वरूपानर्थक्यप्रतिज्ञायामग्र्यं हेतुर्गम्यते तच्च विरुद्धम्। अनित्यो ह्यत्र प्रवाहणापत्यं बबरः स्वार्थः प्रतीयते तत्रासत्यत्वे सति अनित्यसंयोग एव न स्यात्। न[1] चानित्यसंयोगेनानित्य-

---

१. यदा स्वार्थासत्यत्वरूपानर्थक्यप्रतिज्ञा तदा बबरादीनामनित्यानामर्थानामभाव इत्यभिप्रायेणाह—**नचेति**।

संयोगाभावः साध्यो भवितुमर्हति—उच्यते[1]। अनित्यसंयोगप्रसङ्गोऽत्र हेतुर्विवक्षितः, ततश्च स्वार्थसत्यत्वेऽनित्यसंयोगप्रसङ्गात्तत्परिहारार्थं स्वार्थासत्यत्वं बबरः प्रावाहणिरित्यादीनामेष्टव्यमिति सूत्रार्थो भवति। अनित्यसंयोगान्मन्त्रानर्थक्यमित्यत्राप्यर्थप्रकाशनपक्षे यस्य यो ऽर्थः, स एव तेन प्रकाशयितव्यः क्वचिच्चानित्यैरकर्माङ्गभूतैः स्वार्थैरर्थवन्तो मन्त्रा लक्ष्यन्त इत्युपक्रमवार्त्तिकाद्यद्येतद्विवक्षितम्, तथा सत्यादिमदर्थाभिधानाद्वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्येतेति चोपसंहारवार्तिकादनित्यसंयोगः खल्वपि भवेन्मन्त्रेष्वभिधानार्थेष्विति भाष्याच्चायमेवार्थः प्रतीयते। अन्यानर्थक्याभागिप्रतिषेधयोरप्येवम्[2]। तत्रापि स्वार्थासत्यत्वे तयोरभावात्सूत्रव्याख्यानार्थमनित्यसंयोगश्चेति भाष्यं तत्सोपस्कारमेव द्रष्टव्यम्। अनित्यसंयोगः स्वार्थवत्त्वे प्रसज्येत तस्मादानर्थक्यमेव युक्तमिति तत्रानित्यसंयोगप्रसङ्गान्माभूत्स्वार्थस्य सत्यत्वम्, स्तुत्यर्थत्वं तु सिद्धान्त्यभिमतं निराकर्त्तुमशक्यमित्याङ्क्याह—**सर्वोपाख्यानेष्विति**। अयमाशयः अन्यपरत्वं ह्युच्यमानं कार्यपरत्वं वा स्यात्, स्तुतिपरत्वं वा तच्चोभयमपि प्रतीत्यनारूढत्वान्न युज्यते। तेन पारिशेष्यादर्थवत्त्वमङ्गीकुर्वता स्वार्थपरत्वमेव वाच्यम्, तत्र चानित्यसंयोगः प्रसज्येत इति।

ननु परं तु श्रुतिसामान्यमात्रमित्यत्र बबरादिशब्दानां नित्यसिद्धवाय्वाद्यर्थाभिधायित्वस्योक्तत्वात्स्वार्थपरत्वेऽपि नानित्यसंयोगप्रसङ्ग इत्याशङ्कानिराकरणार्थं वेदप्रामाण्ये सतीति भाष्यं तद्व्याचष्टे—**स चेति**। अयमाशयः—अनित्यार्थाभिधायित्वे कृत्रिमत्वेन वेदस्याप्रामाण्यापत्तेस्तत्परिहार्थं कथंचिन्नित्यसिद्धवाय्वाद्यर्थवचनत्वम् कल्पितम्। यदा तु कथंचित्प्रामाण्यं न सम्भवति तदा यथाश्रुतार्थपरित्यागकारणाभावान्न क्लेशेन बबरादिशब्दानां वाय्वादिवचनत्वकल्पनं युक्तमिति। नन्वेवमप्रामाण्ये सति यथाश्रुतार्थपरित्यागकारणाभावादनित्यार्थाभिधायित्वमनित्यार्थाभिधायित्वे बबरादिवाक्यानां कृतकत्वेनाप्रामाण्यमितीतरेतराश्रयमाशङ्क्येतरैकदेशवदित्युक्तम्—**तस्यार्थः**। यथेतरेषामनित्यसंयोगरहितानामापो वै शान्ता इत्यादीनामेकदेशानामक्रियार्थत्वादप्रामाण्यम्, तथैतेषामनित्यार्थानामप्यक्रियार्थत्वेनैवाप्रामाण्यसिद्धेर्न इतरेतराश्रयत्वमिति। नन्वध्ययनविधिबलात्सर्वस्य वेदस्य पुरुषार्थोपयिकत्वावगतेः कथमर्थवादानर्थक्यशङ्का। अत आह—**तस्मादिति**। अदृष्टार्थत्वेऽपि पुरुषार्थोपयिकत्वोपपत्तेर्नैकान्ततोऽर्थपरत्वमध्यापनविधिराक्षिपतीति भावः।

एवमादीनामित्यनेनैतद्दर्शयति प्रथमसूत्रव्युत्पादितमध्ययनविधेर्दृष्टार्थत्वमर्थवादेष्वेवासम्भवादाक्षिप्य तेन सर्वत्र विधेर्हि प्रयोजनाकाङ्क्षायां दृष्टे सम्भवत्यदृष्टं न कल्प्यमिति तत्रोक्तम्। न च सर्वत्रैकरूप्येण भाव्यमिति नियमो युक्तः। स्तोभादिष्वर्थपरत्वासम्भवात्। अथ तत्रापि नियतकालसामभागपूरणाद्यर्थत्वादर्थज्ञानार्थत्वाभावेऽपि दृष्टार्थत्व-

---

१. बबरादिवाक्यानि प्रतीयमानबाधितार्थकानि सत्यत्वेऽनित्यसंयोगप्रसङ्गात्।

२. साध्यं तदेव सत्यार्थत्वेऽन्यानर्थक्यप्रसङ्गात् यथार्थत्वे प्रसज्यमानाप्रतिषेधभाग्यर्थमनिषेधकत्वादिति।

मात्रेणैकरूप्यमुच्यते । ततो ऽत्रापि यत्सम्भवति तत्प्रयोजनमित्यनेन रूपेणैकरूप्यं मत्वा सन्तोष्टव्यम् ।

यद्वा अध्ययनसंस्कृतरैक्षरैर्यच्छक्यते पुरुषार्थरूपम्, तत् कुर्यादित्यध्ययनविधिना वेदाध्ययनस्य शक्यफलसाधनत्वावगमादर्थवादाक्षरैः कस्य चित्पुरुषार्थरूपस्य कर्त्तुमशक्यत्वान्निष्प्रयोजनत्वमेवाङ्गीकृतमित्याह—अथ वेति । प्रत्यक्षशब्देनापरोक्षाकारवाचिना[1] ग्रहणपर्यन्तमध्यापनमभिप्रेतं तस्योपेक्षाफलत्वमुपपादयितुं हेतुतयार्थवादजनितस्य[2] ज्ञानस्य हेयोपादेयार्थविषयत्वेन तद्वाक्यानामुपेक्षाफलत्वं दृष्टान्तमिषेणोक्तं द्रष्टव्यम् । अर्थपरत्वाभावेऽपि कर्मानुष्ठानकाले उच्चारणार्थत्वसम्भवादर्थवादाध्ययनस्यादृष्टार्थत्वम्, निष्प्रयोजनत्वं वा पूर्वपक्षिणापि नाङ्गीकार्य्यमित्याशङ्कते—अथेति । परिहरति—प्रयोगेति । अव्यापाररूपत्वेन मन्त्राणां व्यापारग्राहिणा करणेन साक्षाद्ग्रहणायोगादुच्चारणद्वारा तद्ग्रहणम्, तद्ग्रहणाच्चोच्चारणार्थतेत्यन्योन्याश्रययापत्तेर्न्न प्रकरणपाठमात्रेण विनियोगो युक्तः, सामर्थ्यात्त्वभिधानक्रियार्थत्वावगमे तद्द्वाराप्रकरणग्रहणोपपत्तेरनुच्चारितस्याभिधानाशक्तेः कर्म्मकालोच्चारणसिद्धिरिति भावः । मन्त्राधिकरणपूर्वपक्षन्यायेन चार्थवादानामर्थपरत्वाभावेऽपि कर्म्मकालोच्चारणमत्रत्यः पूर्वपक्षी मन्यत इत्यनभिमतमपि प्रौढ्यानुजानाति—अथ वेति । अस्मिन्पक्षे सूत्रविरोधमाशङ्क्याह—यत्त्विति ॥ ६ ॥

ववर, प्रावाहणि, इत्यादि अनित्य विषयों का संयोग अर्थात् प्रतिपादन होने से भी अर्थवाद अप्रमाण है । वेद में जन्म-मरणशील मनुष्यों का उल्लेख है । जैसेः—"ववरः प्रावाहणिरकामयत" (तै० सं० ६।१।१०।२) । "कुसुरुविन्द औद्दालकिरकामयत" । (तै० सं० ६।२।२।१) प्रवाहणका पुत्र ववर उद्दालकका पुत्र कुसुरुविन्द ने कामना की, इत्यादि स्थलों में पिता और पुत्र का उल्लेख मिलता है, अतः, अर्थवादवाक्यों का अप्रमाण्य है । इन सूत्रों के द्वारा पूर्वपक्ष किया गया है । अतः अर्थवाद के अप्रमाण्य सूचक पद पञ्चम्यन्त में प्रयुक्त हैं । अर्थात् इन कारणों से इनका अप्रामाण्य है । ॥ ६ ॥

## सिद्धान्तः

## विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥१.२.७॥ [सि०]

**शा०] इदं समाम्नायते—'वायव्यं श्वेतमालभेत भूतिकामः 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति इति (तै० सं० २।१।१) । वायुर्वै क्षेपिष्ठा देवतेत्यतो यद्यपि क्रिया नावगम्यते क्रियासंबद्धं वा**

---

१. ग्रहणपर्यन्ततायां प्रत्यक्षत्वं भवतीति भावः ।

२. तस्य ग्रहणपर्यन्तताध्ययनस्योपेक्षाफलत्वमुपपादयितुमर्थवादवाक्यानामुपेक्षाफलत्वं दृष्टान्तमिषेण हेतुतयोक्तमिति संबन्धः ।

३. अर्थवादवाक्यानामुपेक्षाफलत्वमुपपादयितुमाह—अथेति ।

किंचित् तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणम् । भूतिकाम इत्येवमन्तो विध्युद्देशः । तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः । कथमेकवाक्यभावः पदानां साकाङ्क्षत्वाद्विधेः स्तुतेश्चैकवाक्यत्वं भवति । भूतिकाम आलभेत । कस्मात् यतो वायुः क्षेपिष्ठेति । नायमभिसम्बन्धो विवक्षितो भूतिकामेनाऽऽलब्धव्यमिति कथं तर्हि, आलभेत, यतस्ततो भूतिरिति भिन्नाविमावर्थौ । उभयाभिधाने वाक्यं भिद्येत ॥

किमर्था स्तुतिरिति चेत् । कथं रोचेत ततोऽनुष्ठीयेतेति । ननु प्राक् स्तुतिवचनादनुष्ठानं भूतिकामान्तात्सिद्धम्, स्तुतिवचनमनर्थकम् । न हि । यदा स्तुतिपदासंनिधानम्, तदा पूर्वेणैव विधिः, यदा स्तुतिपदसंबन्धो, न तदा भूतिकामस्याऽऽलम्भो विधीयते । यथा पटो भवतीति पट उत्पद्यत इत्यर्थः । निराकाङ्क्षं च पदद्वयम् । यदा च तस्मिन्नेव रक्त इत्यपरं श्रूयते, तदा रागसंबन्धो भवतीत्यर्थः । भवति च रक्तं प्रत्याकाङ्क्षा । एवं यदा न स्तुतिपदानि विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन । नन्वेवं सति किं स्तुतिवचनेन यस्मिन्सत्यविधायकं मा भूत्तत् । तदभावेऽपि पूर्वविधिनैव प्रारोचयिष्यते इति । सत्यम्, विनाऽपि तेन सिध्येत्प्ररोचनम् । अस्ति तु तत्, तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽवगम्यते स्तुतिः प्रयोजनं तयोः । तस्मिन्नविद्यमाने विधिना प्ररोचनमिति । ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वाद्विधिरभिप्रेतः स्यान्न विवक्ष्येत स्तुतिपदसम्बन्धः । आह—स्तुतिपदानि ह्यनर्थकान्यभविष्यन्साकाङ्क्षाणि । भवन्त्वनर्थकानीति चेन् । न गम्यमानेऽर्थेऽविवक्षितार्थानि भवितुमर्हन्ति । योऽसौ विध्युद्देशः, स शक्नोति निरपेक्षोऽर्थं विधातुं, शक्नोति च स्तुतिपदानां वाक्यशेषी भवितुम् । प्रत्यक्षश्च वाक्यशेषभावः । अतोऽस्माद्विधेः स्तुतिमवगच्छामः ॥

ननु निरपेक्षादपि विधिमवगमिष्यामः । भवत्वेवम् । नैवं सति कश्चिद्विरोधः किंत्वशक्यः स्तुतिपदसंबन्धे सति विध्यर्थो विवक्षितुम् । वाक्यं हि सम्बन्धस्य विधायकम्, द्वौ चेत्संबन्धौ विदध्याद् भूतिकाम आलभेत, आलम्भेन चैष गुणो भविष्यतीति । भिद्येत तर्ह्येवं सति वाक्यम् । अथ यदुक्तं न क्रिया गम्यते, न तत्सम्बद्धं वा किंचिदिति । स्तुत्यर्थेन विधीनां स्युः । स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमाना अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः । एवमिमानि सर्वाण्येव पदानि कंचिदर्थं स्तुवन्ति विदधति ।

अतः प्रमाणमेवंजातीयकानि वायुर्वै क्षेपिष्ठा देवतेति ॥ ७ ॥

भा० वि०] यद्यप्यर्थवादाध्ययनस्यादृष्टार्थत्वेनोपेक्षाफलत्वेन वा तदध्ययनविधेः पुरुषार्थपर्यवसानं स्यात् । तथापि दृष्टे संभवत्यदृष्टकल्पनानुपपत्तेः, उपेक्षा-

फलस्य च शब्दप्रमाणस्यादर्शनादर्थप्रकाशनेन चानुष्ठानोपयोगितया विध्येकवाक्यत्वोपपत्तेः फलवदर्थावबोधपर्यन्ततामापादयन्नध्ययनविधिः अर्थवादादीनां सामान्येन धर्मप्रमित्युपयोगं दर्शयतीत्यभिप्रेत्य सिद्धान्तयति—**विधिना त्वेकवाक्यत्वादिति** ।

यद्यपि चात्र यान्युदाहृत्य विशेषविनियोगाभावेनानर्थक्यं पूर्वपक्षितम्, तेष्वेव सोऽरोदीदित्येवमादिषु सिद्धान्तोऽपि प्रदर्शयितुमुचितः । तथापि तेषां स्वार्थसत्यताप्रतिपादनेन तद्द्वारा स्तुत्युपयोगितया धर्मप्रमितिहेतुत्वप्रतिपादनात् स्वार्थसत्यानामेव स्तुत्युपयोगमात्रप्रतिपादनेन विधिशेषत्ववर्णनं लघीय इत्यभिप्रेत्योदाहरणान्तरमाह—**इदमिति** । यद्यपि चार्थवादमात्रमत्रोदाहरणम्, तथापि विध्यपेक्षितप्राशस्त्यप्रतिपादनेन विध्युपयोगं दर्शयितुं सविधिवाक्यमुदाहृतम् । यदुक्तम्—'आम्नायस्य क्रियार्थत्वादक्रियार्थानामानर्थक्यमिति', तत्र यत्क्रिया तत्सम्बन्ध्यनभिधायित्वं तदिष्टमेवेति सौत्रं तुशब्दं व्याकुर्वन्नाह—**वायुरिति** । न च तावन्मात्रेणानर्थक्यमिति वदन् विधिनैकवाक्यत्वादिति सूत्रावयवं व्याचष्टे—**तथापीति** । विधिः शब्दभावना, विधिमुद्दिशतीति वा विधिरुद्दिश्यतेऽनेनेति वा विध्युद्देशो विधिबोधकं वचनं तेनैकवाक्यत्वाद्वायुर्वै क्षेपिष्ठेत्यादीनां न धर्मप्रमित्यनुपयोगित्वलक्षणमप्रामाण्यमित्यर्थः । न चोद्देशपदाधिक्यात् सूत्रार्थविनाशप्रसङ्गः, एकवाक्यत्वस्य शब्दधर्मस्य साक्षाद्विध्यर्थेन सहासंभवात्, द्वारमात्रतयोद्देशग्रहणात् । यद्वा विधिशब्दस्य शब्दार्थयोः प्रयोगदर्शनात् शब्दपरतया व्याख्यानेऽपि न दोषः ।

अयमाशयः—स्वाध्यायाध्ययनविधिना तावत्समस्तस्य वेदराशेः पुरुषार्थपर्यवसायित्वमवगतम्, न चार्थवादाः श्रुत्यैव पुरुषार्थसाधनं कश्चिदर्थमवगमयन्ति, न च विध्येकवाक्यतामन्तरेण लक्षणा, तेन समभिव्याहारावगतविध्येकवाक्यत्वबलेन लक्षणया प्राशस्त्यज्ञानं कुर्वन्तोऽर्थवादाः फलभावनाभाव्यायां विधिभावनायामुपकरिष्यन्तो नानर्थका भविष्यन्तीत्याह—**प्रमाणमिति** ।

ननु सार्थवादस्यैव विधेः अंशत्रयविशिष्टविधिभावनाबोधकत्वेन विध्युद्देशत्वात् कथं तेनार्थवादानामेकवाक्यत्वमत आह—**भूतिकाम इति** । केवलविधिभावनाविषयः प्रत्ययोऽत्र विध्युद्देश इति भावः । न चैवं प्रत्यय इत्येव वाच्यम्, न भूतिकाम इत्येवमन्त्रे हीति वक्तव्यम् । अंशत्रयविशिष्टभावनाविषयशब्दभावनाप्रतिपत्त्युत्तरकालमेव स्तुत्याकाङ्क्षेति सूचनार्थत्वादित्ति द्रष्टव्यम् ।

नन्वर्थवादानां पुरुषार्थपर्यवसानाकाङ्क्षायामपि विधेः प्रवर्तनारूपत्वेन प्राशस्त्यानपेक्षत्वात् सायपि समभिव्याहारे कथमेकवाक्यभाव इति चोदयति—**कथमिति** । विधिविषयस्य धात्वर्थस्यायासरूपत्वेन पुरुषस्य तत्र रुच्यनुत्पत्तौ

विधेः प्रतिबद्धशक्तित्वेन प्रवर्तकत्वासम्भवात्, तदुत्पत्तेश्च प्राशस्त्यज्ञानाधीनत्वाद्युक्तमेकवाक्यत्वमिति परिहरति—**पदानामिति**। विधेः स्तुतेश्च साकाङ्क्षत्वाद्विधिस्तुतिपदानामेकवाक्यत्वमिति सम्बन्धः। विधेः स्तुत्याकाङ्क्षामभिनयति—**भूतीति**।

ननु विधिभावनायाः इतिकर्तव्यतापेक्षा कथमित्येवंरूपा स्यादर्थभावनाया इव तत्र कथं कस्मादित्याकाङ्क्षा दर्शिता, नैष दोषः इतिकर्तव्यताविषयैवाकाङ्क्षा यदा भावनासंबन्धितया निरुप्यते, तदा कथमित्येवंरूपा। यदा तु प्रवर्तितव्यं मयेति प्रतिपुरुषसंबन्धितया निरूप्यते, तदा कस्मादित्येवंरूपा तत्राकाङ्क्षायाः पुरुषधर्मत्वेन भावनायामुपचरितत्वान्मुख्यामेव पुरुषापेक्षामाश्रित्य—**कस्मादित्युक्तमिति**। **तत इति**। यस्मात् क्षैप्रगुणकवायुदेवतसाध्यं कर्मक्षिप्रफलदत्वात् प्रशस्तमित्यर्थः।

ननु यद्यपि विधेः प्ररोचनापेक्षया प्रवर्तकत्वम्, तथापि न स्तावकापेक्षा विधेरेव प्राशस्त्यज्ञापनद्वारा प्ररोचनायामपि व्यापारोपपत्तेरत आह—**नायमिति**। भूतिकाम आलभेत कस्मात्? यतो वायुर्वैक्षेपिष्ठा देवतेत्यनेन योऽयं विधिस्तुतिसंबन्धः सार्थवादस्य विध्युद्देशस्यार्थो दर्शितः। नायं भूतिकामेनालब्धव्यमित्यनेन विध्युद्देशमात्रेण विवक्षित इति संबन्धः—**कथं तर्हीति**। केन तर्ह्ययं विवक्षित इत्यर्थः, उत्तरमालभेतेति मध्यप्रतीकेन समस्तो विध्युद्देशोऽभिमतः—**तत इति**। पूर्ववाक्यप्रकृतवायुपरामर्शः तेन च क्षैप्रगुणयुक्तस्य वायोः क्षिप्रमेव फलप्रापकत्वप्रतिपादकत्वम्, स एवैनं भूतिं गमयतीत्येतदन्तं वाक्यमुपलक्षितम्। तेनायमर्थः सार्थवादेन विध्युद्देशेनायमभिसंबन्धो विवक्षितः—**न केवले नेति**।

ननु केवलस्यैव विध्युद्देशस्य कर्तव्यतारूपविधौ प्राशस्त्ये च व्यापारः किं न स्यादत आह—**भिन्नाविति**। यद्यपि प्रशस्तत्वात् कर्तव्योऽयमालम्भ इति विध्युद्देशेन प्रतिपादनेन वाक्यभेदोऽर्थैकत्वात्, तथापि केवलविशेष्यपरत्वसंभवेऽपि शिशिष्टपरत्वकल्पने गौरवापरपर्यायवाक्यभेदप्रसङ्गः तदवस्थ एवेत्यर्थः, यद्यपि विधिस्तुतिरूपार्थद्वयप्रतिपादनं विध्युद्देशमात्रेण न क्रियते, तथाप्यर्थवादानर्थक्यम्। तथाहि—प्रवृत्तिप्रतिबन्धकालस्यादिविरोधिरूपा प्ररोचनैव विधेरितिकर्तव्यता, न स्तुतिः, तयैव हि स्तुतिराकाङ्क्ष्यते। तत्र च विनैव प्ररोचनां विध्यवगतश्रेयस्साधनभावादेव प्रवृत्तिहेत्विच्छोत्पादनेन तद्विरोध्यालस्यादिनिराससिद्धेः स्तुत्यानर्थक्यादर्थवादानर्थक्यमिति चोदयति—**किमर्थेति**। परिहरति—**कथमिति**।

ननु रुचिरेव कर्मण्यनर्थिका तत्राह—**तत इति**। विध्यवगतश्रेयस्साधनत्वबलादालस्यनिवृत्तावपि बहुव्ययायासदर्शनाद् द्वेषोत्पत्तेः स्तुतिसाध्यप्ररोचना-

मन्तरेणानिरासात् साप्यनुष्ठाने हेतुरिति, तद्द्वारार्थवानेवार्थवाद इति भावः। **किमर्था स्तुतिरिति** चोद्याभिसन्धिं विवृणोति—**नन्विति**। भूतिकामान्तादिति फलसाधनतावगम्यं प्रवृत्तिहेतुं सूचयति। विनैव प्ररोचनां प्रवृत्तिसिद्धौ फलितमाह—**स्तुतीति**। फलसाधनतावगमस्य दुःखरूपतावगमप्रतिबद्धप्रवृत्तिकरणेच्छोत्पादकत्वासंभवात् प्रवृत्त्यङ्गप्ररोचनानिमित्ततया स्तुतिरास्थेयेति परिहरति—**नहीति**।

स्यादेतत् विधेः प्ररोचकस्तुत्यपेक्षायामपि नार्थवादान्वयः, विधिबलेनैव प्राशस्त्यस्याक्षेपात्। न च गौरवं दोषाय 'वसन्ताय कपिञ्जलान्यालभते' इत्यादौ तथा दर्शनात् इति। तत्राह—**यदेति**। स्तुतिपदानि अर्थवादाः। पूर्वेण= विध्युद्देशेनैव। विधिस्सप्रयोजनः पर्यवस्येदित्यर्थः। तत्र गत्यन्तराभावाद् गौरवमप्याश्रीयते इति भावः। यत्र तु सार्थवादो विध्युद्देशः नैत्रमित्याह—**यदा चेति**। चस्त्वर्थः आलम्भशब्दस्तद्विषयसप्ररोचनसमग्रः विधिपरः विधीयते प्रतिपाद्यते पूर्वेणवेत्यनुषङ्गः, तत्र ह्यर्थवादानामेव स्तुत्या प्ररोचकत्वोपपत्तौ, न विध्युद्देशस्यैव तदाक्षेपकत्वं गौरवावहमाश्रयणीयमिति भावः।

योग्यपदान्तरानुच्चारणे तन्निरपेक्षमेव वाक्यं स्वार्थे पर्यवसितमिति, न यदुच्चारणेऽपि तथैव तत्र पर्यवस्यतीत्यत्र दृष्टान्तमाह—**यथेति**। अवान्तरवाक्यस्य पदान्तरनिरपेक्षतया स्वार्थपर्यवसानप्रदर्शनाय वाक्यार्थकथनम् —**पट उत्पद्यत** इति। तत्फलनिरपेक्षत्वमुक्तम् **निराकाङ्क्षं चेति**। पदान्तरसन्निधाने तस्यैवावान्तरवाक्यस्यार्थान्तरं सम्भवतीत्याह—**यदा त्विति**। तत्फलमुक्तम्—**भवति चेति**। रिक्तं तत्पदं प्रतीत्यर्थौ दृष्टान्तनिविष्टमर्थौ दार्ष्टान्तिके योजयति—**यदा नेति**। तदा विधिशब्देनैव प्राशस्त्याक्षेपेण प्ररोचनापि क्रियत इत्यर्थः। स्तवने न प्ररोचनेत्यनुषङ्गः।

ननु यत्रावान्तरवाक्यस्य महावाक्यार्थे सामर्थ्यं नास्ति, तत्र तथास्तु इह तु महावाक्यार्थेऽवान्तरवाक्यस्य सामर्थ्याभ्युपगमात् किं महावाक्येनेनि शङ्कते—**नन्विति**।

ननु विध्युद्देशस्यैव सामर्थ्येऽपि श्रूयमाणत्वात् अर्थवादानां तदर्थत्वस्याभ्युपगमः तत्राह—**यस्मिन्निति**। यस्मिन् स्तुतिवचने सति अवान्तरवाक्यमविधायकं सप्ररोचनविधिपर्यवसितं न स्यात्, तत् स्तुतिवचनं माभूत् इत्यर्थः। स्तुतिपदपरित्यागे लाभान्तरमाह—**तदभाव इति**। ततश्चातिलाघवमिति भावः। अपौरुषेये वेदे लघुनोपायेन सिद्धेः, किं गुरुणेति परित्यागपरिचोदनानुपपन्नेति परिहरति—**सत्यमिति**। तेन स्तुतिवचनेन प्रयोजनं स्तुतिसाध्यप्ररोचना तत्स्तुतिवचनम्, परित्यागानुपपत्तौ फलितमाह—**तस्मिन्निति**। स्तुतिवचने

विद्यमान एव योऽर्थो वाक्यस्य स्तुतिकार्या प्ररोचना, सोऽर्थोऽवगम्यते। अवगतिशब्देन तत्कार्याङ्गीकारो लक्ष्यते। तेनाङ्गीक्रियते=अङ्गीकार्यं इत्यर्थः। इतरथार्थवादाम्नानवैयर्थ्यादिति भावः। कोऽसौ सत्येव स्तुतिवचने विद्यमानोऽर्थस्तत्राह—**स्तुतिरिति**। स्तुतिद्वारं प्ररोचनम्, तच्च तयोर्विधिस्तुतिपदयोर्द्वयोः, न त्वेकैकस्य। न च त्वन्मतेऽर्थवादस्यैव स्तुतिरर्थः इति कथं द्विवचनेन विध्युद्देशस्यापि सोऽभिधीयत इति अभिधातव्यं विधेरपि स्तुत्यसमर्पणेन स्तुतिहेतुतया तत्फलत्वात् स्वयमेव स्तावकस्यैवानङ्गीकारादित्यभिसन्धिः। किमिति तर्हि विधेरेव प्ररोचनायामपि सामर्थ्यं क्वचिदङ्गीकृतं तत्राह—**तस्मिन्निति**। अर्थवादाभावादगत्या गौरवमप्यङ्गीकृतमित्याशयः।

ननु यद्यप्यपौरुषेयत्वाद्वेदस्य नार्थवादाम्नाने पर्यनुयोगः, तथापि न तेभ्यः प्ररोचना, किन्तु विधेरेवानर्थक्यं तु तेषामिष्टमेवेति मन्वानश्चोदयति—**ननु सत्स्वपीति**। पूर्वस्य विध्युद्देशस्य वसन्ताय कपिञ्जलानित्यादिकेवलविधिसरूपत्वात्, तेनैव विधिस्सप्ररोचनोऽभिप्रेतः=प्रतिपादितः स्यादित्यर्थः। ततः किम्, अत आह—**न विवक्ष्येतेति**। स्तुतिपदानां विधिपदेन संबन्धो विद्यमानोऽपि नाभिप्रेयत इत्यर्थः। तर्हि साकाङ्क्षत्वात् स्तुतिपदान्यनर्थकानि स्युरिति यथाश्रुतमादाय परिहरति—**नेति**। साकाङ्क्षाणीति हेत्वर्थं विशेषणम्, परः स्वाभिप्रायं विवृणोति—**भवन्त्विति**। अध्ययनविधिदृष्टार्थत्वव्यासंभवादनादेयमेवेति परिहेरति—**न गम्यमानेति**। अविवक्षितेतिच्छेदः, विध्येकवाक्यतया स्तुतिलक्षणया प्ररोचनमर्थवादानामर्थः। नासावसतिबाधकेऽपहेय इत्यर्थः।

ननु निरपेक्षस्य विधेः क्वचित्पर्यवसानदर्शनं वाधकमत आह—**योऽसाविति**। विधातुम्=सप्ररोचनविधौ पर्यवसातुम्—वाक्यशेषं भवितुम्, स्तुत्यप्रतिपादनेन स्तावकवाक्यानां शेषीभवितुन्, अत उभयासम्भवान्न निरपेक्षविधिपर्यवसानदर्शनं वाधकमित्यभिप्रायः।

ननूभयथा संभवमात्रेण कथं प्रकृते वाक्यशेषभावस्तत्राह—**प्रत्यक्षश्चेति**। उक्तमेतद् भूतिकाम आलभेत कस्मादित्यादिनेति भावः। उपसंहरति—**अतइति**। विधेरिति षष्ठी, विधिसंवन्धितोऽस्माद्वाक्यशेषादेव स्तुतिमवगच्छामः, न विधेरेवेत्यर्थः।

स्यान्मतम्, यथार्थवादार्थो गम्यमानत्वान्नापहेयः तथाविधेरपि निरपेक्षस्यैव क्वचित्पर्यवसानदर्शनात् तदपि नापहेयम्, ततश्च सार्थवादेऽपि विधौ निरपेक्षस्यैव पर्यवसानं युक्तमिति चोदयति—**नन्विति**। विधिं सप्ररोचनमिति यावत् दूषयति—**भवन्त्विति**। यद्यपि यथादर्शनं केवलस्य विधेः पर्यवसानमवगम्यते, तथापि स्तुतिपदसंबन्धे सत्यवगम्यमानार्थवादार्थपरित्यागप्रसङ्गात् न केवलस्यैव पर्यवसानमित्यर्थः। विध्यर्थः सप्ररोचनः कुतोऽशक्य इत्याशङ्क्य गौरवं नाम

दोषान्तरं पूर्वोक्तं स्मारयति—**वाक्यं हीति**। वाक्यमिति संबन्धस्येति चैकत्वनिर्देशादेकं हि वाक्यमेकस्यैवार्थस्य प्रतिपादकमित्युक्तं भवति, संबन्धशब्दश्च संबन्धिवस्तुस्वरूपपरः, ततः किम् ? अत आह—**द्वाविति**। विदध्यात्=प्रतिपादयेत् विध्युद्देश इत्यर्थः। तावेव दर्शयति—**भूतीति**। आलभेतैष हीति विध्युत्थापितामेव प्ररोचनामभिनयति, न त्वर्थवादोत्थापिताम्, तथा सति प्ररोचनविशिष्टविधिविषयत्वाद्वाक्यस्य वाक्यभेदोपलक्षितगौरवापत्तिरित्यर्थः।

एवं तावत्कथमेकवाक्यभाव इत्यादिनाभिमतसाधनतावबोधकस्यापि विधेः प्ररोचनामन्तरेण प्रवर्तकत्वायोगात्, प्ररोचनायाश्च प्राशस्त्यज्ञानाधीनत्वात्, तस्य च विधितो संभवादर्थवादापेक्षत्वाद्विध्येकवाक्यत्वेनार्थवादा. स्तुतिं लक्षयन्तः प्ररोचनाद्वारेण प्रवृत्त्युपयोगादर्थवन्त इत्युक्तम्।

अधुनेममर्थं सूत्रावयवारूढं कर्तुं पूर्वपक्षोक्तमनुवदति—**अतथेति**। वाक्योपक्रमार्थोऽथ शब्दः, 'वायुर्वै क्षेपिष्ठे' त्यादिना क्रिया अर्थभावना, तत्संबद्धं वा भाव्यादिनानगम्यते इति यदुक्तम्, तद्यानीत्यादिनेत्यर्थः, तत्रेदमुत्तरमिति शेषः, उत्तरत्वेनोपात्तं सूत्रांशं व्याचष्टे-**स्तुतीति**। स्तुतिशब्दा अनुष्ठातॄणामुपकरिष्यन्तीत्यन्वयः, उपकारश्चानुष्ठातर्यतिशयः, स च सामर्थ्यम्, तच्च किंविषयमित्यत उक्तम्—**क्रियाया इति**। क्रियाविषयं क्रियार्थमुपकारं करिष्यन्तीति यावत्, तेन क्रियाया इति तादर्थ्ये षष्ठी, एतेन विधेयभावनातदंशाप्रतिपादकत्वेऽपि तदनुष्ठापकानां विधीनामनुष्ठातर्युपकारजनने **नाङ्गमर्थवादाः स्युरिति** सूत्रावयवो विवृतः। कथमुपकरिष्यन्तीत्यत्राह—**प्ररोचयमाना इति**। अनुष्ठातृभ्य इत्यर्थात्संबध्यते कथमेते रुचिं जनयन्तीत्यत उक्तम्—**स्तुवन्तः क्रियामिति**। तदनेन स्तुतिरेवार्थः स्तुत्यर्थः विधीनां प्ररोचयितुमर्थ्यमानत्वात्, तेनोपकारेणेति स्तुत्यर्थेनेति सूत्रांशो विवृतः। तस्यात्सिद्धमर्थवादानामनुष्ठेयार्थपर्यवसानमिति निगमयति—**एवमिति**। उक्तन्यायेन सर्वाण्यपि स्तुतिपदानि कंचिद्विधेयं तत्संबद्धं वा अर्थं स्तुवन्ति सन्ति विधौ पर्यवस्यन्तीत्यर्थः। अनेनैव न्यायेन निन्दार्थवादानामपि निवृत्तिप्रतिबन्धकरागविरोधिद्वेषोत्पादनेन निषेधवाक्यैकवाक्यतया निषेधपर्यवसानमुक्तं वेदितव्यम्। यतोऽर्थवादानामनुष्ठापकविध्यङ्गत्वेनानुष्ठेयार्थपर्यवसानं ततो यदुक्तम्, **तस्मादेवजातीयकान्यनित्यानि न नित्यचोदनाकार्यं कुर्वन्तीति** तन्निरस्तमित्याह—अत इति। फलोपकार्यङ्गतयाधर्मप्रमितिशेषत्वायुक्तं चोदनावत् प्रामाण्यमित्यर्थः॥ ७॥

त० वा०] पूर्वपक्षोदाहृतेष्वेव वाक्येषु सिद्धान्तेऽभिधातव्ये, किमर्थं वायव्यवाक्यमुपन्यस्यते। केचिदाहुः। समानन्यायत्वादिदमपि तत्र, तान्यपि चेहोदाहृतानि द्रष्टव्यानीति। यद्यप्येवम्, तथाऽप्यपूर्वोदाहरणमभिप्रायान्तरमाकाङ्क्षति। तदभिधीयते। पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमप्याशङ्क्यते। तत्र कः प्रथममेव

तत्प्रतिपादनक्लेशमङ्गीकुर्यादिति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारैकवाक्यभावेन धर्मप्रमाणशेषत्वमात्रप्रतिपत्तिसौकर्यार्थं वायव्यवाक्योपन्यासः। तत्र भाष्यकाराः प्रसिद्धेनैवैकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति। एतावत्त्वत्र प्रथमं वक्तव्यम्। किमर्थं रूपभङ्गे न बलादेकवाक्यता; पुरुषार्थत्वं वा वेदस्योच्यते इति। लौकिकवाक्ये तु दृष्टत्वादिति यद्युच्येत, तत्राभिधीयते। युक्तं लोके वाक्यार्थस्य प्रमाणान्तरगम्यत्वादन्यथाऽपि कल्पनम्। इह त्वत्यन्तातीन्द्रियत्वाद्यथाश्रुतादीषदप्यन्यथात्वे पौरुषेयत्वमापद्येत। लोकेऽपि च यानि प्रमाणान्तरानवगतार्थानि आप्तप्रत्ययमात्रेण श्रोतॄणां प्रमाणानि भवन्ति, तेषां नैवान्यथात्वकल्पनं लभ्यते।

तत्र केचिद्वदन्ति। "तुल्यं च सांप्रदायिकम्" इति यद्वक्ष्यति, तेन समस्तो वेदः पुरुषार्थं इति साध्यते। न ह्यात्मानुपकारिणं सन्तमेनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः। यद्यपि च केषांचिदज्ञानं भवेत्, तथाऽप्यस्मत्पूर्वातिक्रान्ताऽनेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका। तस्माद्यथा यथा पुरुषार्थता भवति, तथा तथा भङ्क्त्वाऽपि रूपं व्याख्यायत इति।

न त्वेतद्युक्तमिव। कुतः? पुरुषाधीनप्रामाण्यप्रसङ्गात्। यदि ह्यक्षरानुपात्तोऽप्यर्थोऽस्मदादिभिरेवं कल्प्यते, यस्माद्वयं प्रयत्नेन धारयामस्तस्मादस्य पुरुषार्थतेति। तथा सत्यात्मचेष्टितवशेन प्रामाण्यमभ्युपगतं स्यात्। अथ पुरुषान्तरधारणमुच्यते, एवमपि तद्वशेन, तैरप्येवमन्यवशेनेत्यनादित्वेऽपि सत्यन्धपरम्परान्यायेन सर्वेषां परप्रत्ययान्न क्वचित्प्रामाण्यावस्थानम्। सर्वत्र ह्येवमयं पुरुषो वेदेति प्रत्ययो, नैवमयमर्थ इति। तेन यद्यपि तेषु तेष्वध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्त इत्यभिप्रायोऽनुमीयते, तथाऽपि निर्मूलत्वात्तन्मात्रेणासिद्धिः। अतो यावद्वेद एव पुरुषार्थतया सकलमात्मानं न प्रतिपादयति तावदप्रमाणम्।

तदुच्यते। सकलस्य तावद्वेदस्य 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनभावना विधीयते। तत्र किं भावयेदित्यपेक्षायामध्ययनमित्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेनापुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेस्तदंशान्निराक्रियते। ततश्चाध्ययनेनेत्यविरोधात्संनिवेशश्च करणांशे निविशते। तेन किमित्यपेक्षिते 'यच्छक्यते' इत्युपबन्धादक्षरग्रहणमित्यापतति। तस्याप्यपुरुषार्थत्वात्तेन किमिति, पदावधारणमित्युपतिष्ठते, तेनापि पदार्थज्ञानम्, तेन वाक्यार्थज्ञानम्, तेन चानुष्ठानम्, अनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकाङ्क्षीभवति। एवं सर्वविधीनां प्राक् पुरुषार्थलाभादपर्यवसानम्। न च सहसैव विधिदर्शनात्स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यत्रानन्तरभाविनि व्यापारः लक्ष्यते, तदेव तस्य कार्यमित्यवधार्यते। तत्र यदि तावत्तदनुसारेणैव कियत्यप्यध्वनि फलमासाद्यते, ततो नान्तरा कल्पनमर्हति। पारम्पर्यप्रयोजने-

नापि श्रुतविध्युपपत्त्या, अन्यथानुपपत्तिलक्षणार्थापत्त्यनुत्पादात् । यत्र त्वनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थो नाऽपि पारम्पर्येण तमाप्नोति यथा होमस्याऽऽहवनीयप्राप्तिः, भस्मसाद्भावो वा । तत्र तदतिक्रमेण साक्षात्कर्मण एवादृष्टकल्पना । सर्वत्र चैतल्लक्षयितव्यम् ।

यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरम्परायां सत्यामान्तरालिकं किंचित्क्रतवे, पुरुषार्थाय वा चोद्यते, तत्र तदेव तत्साधनम् । पूर्वस्य तु विधेस्तदुपकारार्थतया पर्यवसानम् । यानि तूत्तरविधेः कार्याणि, प्राक्तानि साध्यसाधनभावेनाचोदितत्वान्नान्तरीयकत्वेन काष्ठादीनामिव ज्वालादीनि पूर्वविहितकर्मस्वव्यापारमात्रतया मन्तव्यानि ।

यत्र तु पारम्पर्यजन्यं न किंचिदन्तरा विधीयते, तत्र सर्वाणि स्वव्यापारीकृत्य विधेयस्यैव स्वयं फलसाधनता । तत्र यानि तावत्क्लृप्तकल्पयिष्यमाणपुरुषार्थसाधनविधिवाक्यानि, तानि तत्प्रतिपादनं यावत्स्वाध्यायाध्ययनविधिना नीयन्ते, परतस्तु फलवत्त्वं ज्ञातमेवेति न तद्यावत्प्राप्यन्ते । यानि तु तत्प्रकरणे पठ्यन्ते, तान्यपि तथैवाक्षरग्रहणादिक्रमेण स्वार्थविबोधनं यावद्गतानि न साक्षात् क्रत्वङ्गं भवन्ति । कुतः ? कथमित्यदृष्टोपायापेक्षेण क्रतुना दृष्टार्थत्वादक्षरादिष्वनवसजता तद्विहितं कर्ममात्रमेव हि प्रयोजनद्वारेणोपादीयते, नान्यत् । अतः प्रधानवाक्यतुल्यान्यङ्गानि भवन्ति । तद्वाक्यानि तु बाह्यतराण्यध्ययनादिवत् ।

एवं प्रोक्षणादिवाक्यानां व्रीह्यादिसंस्कारमात्रफलावसितानां तण्डुलपिष्टपुरोडाशद्व्यवदानादिभिर्व्यवहिततरः प्रधानसंबन्धः । एवमेवानारभ्याधीताराादुपकारकसामवायिकाङ्गवाक्यानि योजयितव्यानि । तत्र त्वेतावान्विशेषः । यदप्रकरणस्थत्वादक्षराण्यस्पृशत्प्रधानमर्थैरेव[1] संबध्यते । यानि त्वाधानादिवाक्यानि तान्यपि फलवत्क्रत्वङ्गाहवनीयादिसंस्कारप्रतिपादनावसायीनि दूरस्थेनैव फलेन निराकाङ्क्षीक्रियन्ते । एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम् । मन्त्रनामधेययोस्तु स्वाधिकारे योजना वक्ष्यते । तेन सर्वेषां भावनान्तर्गतिरुपपन्ना ।

यत्त्वर्थवादानां भावनांशत्रयानन्तःपातित्वादग्रहणमिति, तत्राभिधीयते । सत्यम्, अतिरिक्तं न गृह्यते । अस्तित्वन्तर्गतिः । कथम् ? इह हि लिङ्गादियुक्तेषु वाक्येषु द्वे भावने गम्येते शब्दात्मिका, चार्थात्मिका च । तत्रार्थात्मिकयाऽर्थवादा नापेक्ष्यन्ते । शब्दात्मिकया तु ग्रहीष्यन्ते । सा ह्येवं प्रवर्तते स्वाध्यायाध्ययनविधिनेतरे सर्वे विधायकाः स्वाध्यायपदोपात्तश्चाऽऽत्मा नियुज्यते भावयेदिति । तत्र लिङादीनां प्रयोजककर्तृत्वम्, पुरुषः प्रयोज्यस्तेन किमित्यपेक्षायां पुरुषप्रवर्तनमिति संबध्यते । अथ तु योग्यतयैव लिङादिविषया क्रियोच्यते

१. स्पृशन् ।

प्रवर्तयेदिति। ततः किमित्यपेक्षिते पुरुषमित्येव संबध्यते। यद्यपि चाचेतनत्वाल्लिङादिष्वेवंविधं प्रयोजकत्वं न संभवति, तथाऽपि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुत्पपत्तेस्तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता। यदि चैवं न कल्प्येत, नैवैषां विधायकत्वव्यपदेशो भवेत्। अथ केनेत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेनेति संबध्यते। कथमिति? प्राशस्त्यज्ञानानुगृहीतेनेति। कुत एतत्? बुद्धिपूर्वकारिणो हि पुरुषा यावत्प्रशस्तोऽयमिति नाबुध्यन्ते, तावन्न प्रवर्तन्ते। तत्र विधिशक्तिरवसीदति, तां प्राशस्त्यज्ञानमुत्तभ्नाति। तच्च पुरुसार्थात्मके फलांशे सर्वस्य स्वयमेवानुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते। साधनेतिकर्तव्यतयोस्त्वप्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतितादनायाऽऽकाङ्क्ष्यते। तत्पुनः केन क्रियेतेति साधनापेक्षायां यदि वा फलपदेन निवर्त्येत, प्रशस्तोऽयं भूतिफलत्वात्। अथ वा विधिनैव, सर्वदोषाशङ्काविनिर्मुक्तवेदविहितत्वादिति। अथ वा विशिष्टद्रव्यदेवतेतिकर्तव्यतायुक्तत्वादिति। तत्र फलपदादीनामर्थान्तरोपयोगात्पुनरन्यत्राप्युपयोगो न युज्यते। विध्युत्तरकाला चेयमाकाङ्क्षा, पूर्वं च फलपदादिनिवेशः। तस्मादपि न तैर्निवर्त्यते। लक्षणा चैतेभ्यः कल्प्यते। न च श्रौतार्थसंभवे सा युक्ता। युगपच्चोभयवृत्तिविरोधात्प्राशस्त्यपरत्वे फलादीनि न स्युः। न ह्यन्यशास्त्रे सत्युपायमात्रत्वेनोपात्तानामेकान्तेन पारमार्थिकत्वमिति वक्ष्यते। अत एव चार्थाद्गम्यमानमन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति। न हि यद्यत्प्रतीयते तत्तच्छास्त्रफलमवसीयते। यथा पूर्वो धावतीत्युक्ते यद्यप्यपरो गम्यते, तथाऽपि न कार्येण युज्यते। तद्वत्प्ररोचना गम्यमानाऽपि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेनावतिष्ठते। अन्यथानुपपत्त्या चेयं तेभ्यः कल्प्येत। सर्वप्रमाणप्रत्यस्तमये चान्यथानुपपत्तिर्भवति। प्रमाणाभावाश्च यः सर्वप्रकारं प्रयतमानस्य स प्रमाणम्। तद्यपि केनदिदुपदेशेन वा अतिदेशेन वा न लप्स्यामहे, ततो दर्विहोमन्यायेन विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः। अथ तु केनचिद् दूरस्थेनापि सेत्स्यति, ततस्तःनुसारस्तावत्कर्तव्य इत्येवं साकाङ्क्षो विधिरास्ते। तथा वायुर्वै क्षेपिष्ठा देवतेत्येवमाद्यपि स्वाध्यायाध्ययनविधिना पुरुषार्थतयोपनीतं यच्छक्यते, तत्कुर्यादित्युपबन्धाच्च सहसैव तेनासंबध्यमानमपुरुषार्थत्वेन च पूर्ववदक्षरादिष्वपर्यवस्यद् भूतान्वाख्यानवाक्यार्थं यावद्भूतम्। तत्रापि तु साकाङ्क्षमेवेति, यस्तेन लक्ष्यमाणः साधनानुरूपसाध्योत्पत्तिद्वारेण क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः, सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्पुरुषार्थे द्वारतां शक्नोति प्रतिपत्तुमिति परिगृह्यते। सोऽयं नष्टाश्वदग्धरथवत्संप्रयोगः। एवं च न प्ररोचनाऽन्यकृता कर्माङ्गम्। न चार्थवादपदैः प्रयोजनान्तरं साधनीयमित्याम्नानसामर्थ्यादुभयोर्नियमः। एतेन प्रतिषेधा-

पेक्षितद्वेषसिद्ध्यर्थं निन्दापदसंगतिर्व्याख्याता। तत्रापि हि न द्वेषादृते विद्वान्निवर्त्तते। द्वेषश्चाप्रशस्तप्रत्ययाधीनोत्पत्तिः। न चाप्रशस्तज्ञानं नकारादिभिः पदैः प्रशस्ताप्रशस्तानभिधानेन निषेधतत्फलेतिकर्तव्यतामात्रपर्यवसितैः शक्यमवलम्बितुमित्यनन्यप्रयोजननिन्दावाक्यगम्यमेव भवति। अतश्चैकवाक्यत्वसिद्धिः। नित्यं च विधिप्रतिषेधयोः क्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति। न निह स्तुतिनिन्दे नाम व्यवस्थिते, निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात्। यथा वक्ष्यति न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति। तथा त्रैयम्बकवाक्येषु "यदभिधारयेत्तद्रुद्रायाऽऽस्ये पशूनिदध्यात्" इति स्तुतमप्यभिधारणं नाऽऽश्रयिष्यते, निन्दितमपि चान्ते विधिदर्शनादभिधारणमेव प्रशस्तं भविष्यति। संदिग्धस्तुतिनिन्दानामपि च प्रक्रमादेव निर्णयो। यथा वक्ष्यति न वयं निन्दितानिन्दितान्वाऽसुरान्विद्मः। कदाचिद्धि यस्मादसुरानप्येषा वशीकृत्याऽऽनयति क्रिया। तस्मान्नूनं प्रशस्तेति स्तुतिः स्यात्। अथ वा विध्वंसकासरागमननिमित्तत्वादशोभनेति निन्दा। तत्रान्ते सामविधानात्तत्प्रशंसार्थमृचां निन्देति गम्यते। सर्वत्र च किंचित्पदं स्तौति, निन्दति च, इतराणि त्वेकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते। यत्रापि तादृशं पदं न स्यात्तत्रापि लक्षणा लक्षितलक्षणा वाऽन्यथानुपपत्तेराश्रयणीया। विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनेतरदनुमाय वाक्यं पूरयितव्यम्।

एवं भारतादिवाक्यानि व्याख्येयानि। तेषामपि हि श्रावयेच्चतुरो वर्णानित्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणादक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिरुपादानपरित्यागाङ्गभूता फलम्[1]। तत्रापि तु दानराजमोक्षधर्मादिषु केचित्साक्षाद्विधयः, केचित्पुनः परकृतिपुराकल्परूपेणार्थवादाः। सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेदिति विधेरानर्थक्यात्कथंचिद्गम्यमानस्तुतिनिन्दापरिग्रहः। तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः।

वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिस्तथैव स्ववाक्यानि प्रणीतानि। प्रतिपाद्यानां च विचित्रबुद्धित्वाद्युक्तमेवैतत्। इह केचिद्विधिमात्रेण प्रतिपद्यन्ते। अपरे सार्थवादेन, अपरोऽल्पेनार्थवादेन, अपरे महता। सर्वेषां च चित्तं ग्रहीतव्यमित्येवमारम्भः। तत्र तु, केचिद्विधिप्रतिषेधाः श्रुतिमूलाः, केचिदर्थसुखादिषु लोकमूलाः, तथाऽर्थवादाः केचिद्वैदिका एव, केचिल्लौकिका एव,

---

१. धर्मादीनां साध्यानां साधनप्रतिपत्तिरिति विग्रहः। धर्मादिचतुष्टयसाधनप्रतिपत्तिरुपादानाङ्गभूता। अधर्मादिचतुष्टयसाधनप्रतिपत्तिः परित्यागाङ्गभूतेत्यर्थः।

केचित्तु स्वयमेव काव्यन्यायेन रचिताः। सर्वे च स्तुत्यर्थेन प्रमाणम्। ये तु वाक्यशेषत्वं न प्रतिपद्यन्ते, तेऽपि केचित्स्वयमेव श्रूयमाणगन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति। ये तु युद्धवर्णकास्ते सर्वेषां शूराणां भीरूणां चोत्साहकराः पार्थिवानामुपयुज्यन्ते। यत्र तु न किंचिद् दृष्टमुपलभ्यते, तत्र विशिष्टदेवतादिस्तुतिद्वारमदृष्टं कल्पनीयमित्येषा दिक्।

विध्युत्खातिपूर्वपक्षः।

**विध्युद्देशेनैकवाक्यत्वादिति**। केचिदाहुः। किमर्था स्तुतिरिति चेत्कथं रोचेत ततोऽनुष्ठीयेतेत्येवं स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिप्रतिपादनं लिङादिभिश्चाभिधानमतस्तुल्यार्थत्वम्। न च तुल्यार्थानां समुच्चयः। तत्र ये तावदर्थवादरहिता लिङादयः तद्रहिताश्चार्थवादास्तेषां यथाविषयं व्यवस्थितं निवर्तकत्वम्, प्रवर्तकत्वमविरुद्धम्। यत्र तु द्वयसंनिपातः, तत्रान्यतरेण कृतार्थत्वादवश्यावहेयेऽन्यतरस्मिन्भूयसामनुग्रहो युक्तः। 'त्यजेदेकं कुलस्यार्थे' इतिवद्विधिप्रत्ययः परित्यज्यते। केवलप्रकृतिप्रयोगाभावात्तदनुग्रहार्थप्ररोचनालब्धविधित्वानुवादेन प्रवर्तते। यथा 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति क्त्वाप्रत्ययसिद्धप्रवृत्त्यनुवादकत्वं वक्ष्यते। तस्माद्वायव्यश्वेतालम्भ इत्येतावन्मात्रं विवक्षितम्। स एव च विध्युद्देशः फलादिसंबन्धोत्तरकालं स्तूयत इत्येतद् **भूतिकाम इत्येवमन्तो विध्युद्देश** इत्यनेन कथ्यते। अन्यथा पुनरुद्देशग्रहणमनर्थकमेव स्यात्। स्वोक्तेन तु विधिनैकवाक्यत्वं न संभवतीत्यतिक्रम्य तद्विषयः परिगृह्यते। तथा चाऽऽह—**नायमभिसंबन्ध इति**। विधिविधेयसम्बन्धनिषेधेन स्तुतिस्तुत्यसम्बन्धं विवक्षितं वदति **यतस्ततो भूतिरिति**। सैव च भूतिनिमित्तस्य योजना। **भिन्नाविमाविति** पूर्वोक्तौ संबन्धावभिधत्ते। **किमर्था स्तुतिरिति चेदिति**। प्रत्ययश्चेदुत्खातस्तेनाविधीयमानस्य किं स्तुत्येति। अथ वा यदनया साध्यते, तत्प्रत्ययेनैव सेत्स्यतीति मनसि कृत्वा वदति। आचार्यस्तूत्खातेऽपि प्रत्ययेऽर्थवादादेव तदर्थावाप्तिमुभयसंभवे चार्थवादानुग्रहं मत्वाऽऽह—**कथं रोचेतेति**। इतरः प्रश्नाभिप्रायं विवृणोति। प्रागेव सिद्धेः **स्तुतिवचनमनर्थकमिति**। **नहीति** ग्रन्थच्छेदः। सर्वत्रावान्तरवाक्यानि महावाक्येष्वप्रमाणं महासंख्यास्विवावान्तरसंख्या भवन्ति। तान्येव तु यदा केवलानि प्रयुज्यन्ते, तदा निरपेक्षत्वाद्भवन्ति प्रमाणम्। यथा पटो भवतीति। न च कदाचिदेतावन्मात्रेण समाप्तेर्नैराकाङ्क्ष्यदर्शनात्सर्वत्र नैराकाङ्क्ष्यम्। योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृशां भवत्येवापेक्षा। सा चानुपलब्ध्या निवर्तते। तथा च यत्रोपलप्स्यन्ते, तत्रैकवाक्यतां गमयिष्यन्ते। अन्यथा ह्यसौ तदुच्चारणेऽपि न स्यात्। तदिह महावाक्येन विनाऽवान्तरवाक्यं प्रमाणम्, तत्सद्भावे तु नेत्येतदाह—**यदा न स्तुतिपदानीति**। **नन्वेवं सतीति**। यत्र महावाक्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवन-

रागभवने, तत्रैवं युक्तम्, इह त्वनतिरिक्तार्थस्य सतः किमवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलम्। तदेतदाह—यस्मिन् सत्यविधायकमवान्तरवाक्यं भवति, मा भूत्तन्महावाक्यमिति। सत्यम्, विनाऽपि तेनेति। यो नाम वेदस्य कर्ता स्यात्स एवं पर्यनुयुज्येत लघुनोपायेन सिद्धे किं महावाक्यमाश्रयसीति। तदभावान्न पर्यनुयोगः। परिहारपथग्रामगमनवच्च श्रमातिरेकमात्रं स्यान्नार्थानवाप्तिः। दृष्टं चैवंजातीयकेषु गौरवाश्रयणम्। यथा तमेवार्थं खमित्येतावता सिध्यन्तमाकाशप्रभृतिभिरभिलपन्ति, न च जाड्यं लभन्ते। तथाऽत्र लिङादिभिरपि सिध्यन्तमर्थवादेभ्यो गृह्णत इति। शक्यते चेदमिह वक्तुं **यथैवानेकोपायप्रसङ्गे मन्त्रेण स्मृतं क्रियमाणमभ्युदयकारि भवति,** तथाऽन्येनापि विधिसिद्धावर्थवादप्रतिपादितविधिविहितमिति। **ननु सत्स्वपि स्तुतिपदेष्विति।** यत्र लघुमुपायमनुपादाय गुरूपाय आश्रीयते तत्र तथाऽपि भवेदत्र तु पूर्वमेव लघुतर आश्रितः समर्थतरश्च तस्माद्यथैव प्रयुक्ते खशब्दे नाऽऽकाशादयस्तदानीमेव प्रयुज्यन्ते, तथाऽत्र विधौ सति स्तुतिर्नाऽऽश्रयितव्येति। तत्रोत्तरसाकाङ्क्षत्वात्स्तुतिपदान्यनर्थकानि स्युरिति। भवन्त्विति चेत्। नोक्तेन न्यायेनार्थवत्त्वादविवक्षितार्थता युक्तेति। द्वयसंभवे हि प्रत्यक्षादेकवाक्यत्वादर्थवादानुग्रहो युक्त इति। **ननु सत्स्वपीत्यनेन** गतार्थत्वान्ननु निरपेक्षादित्यवक्तव्यम्। तदुच्यते तत्रार्थवादपरित्यागायोक्तमिदानीं तु भवतु नाम स्तुतिसंबन्धः समस्तस्य पूर्वस्यापि तु स्वरूपावगतो विधिसंबन्धो न बाधितव्यः। अथास्य क्वचिदपि शक्तिरपह्नियते, ततः प्रतिप्रसवहेत्वभावात्सर्वत्राशक्तत्वप्रसङ्ग इति। तदभिधीयते। भवतु पूर्वस्य विधिशक्तिर्न त्वियं क्वचिद्बाधितेत्यन्यत्रापि बाध्यते, कदाचिदाविर्भूतेति सर्वत्राऽऽविर्भवति। यत्र त्वर्थान्तरस्तुत्यादि नोपादीयते, तत्रोऽऽविर्भूता शक्तिः कार्यमारभते। यत्र त्वपवादभूतशक्त्यन्तराभिव्यक्तिः, तत्र वाक्यभेदप्रसङ्गात्पूर्वा तिरोधीयते। प्रश्नोत्तरत्वेनायं पूर्वोक्त एव वाक्यभेदः परामृश्यते। तस्मादैकार्थ्यात्प्ररोचनयैवात्र विधिरिति। **प्ररोचयमाना अनुष्ठातॄणामिति।** "रुच्यर्थानां प्रीयमाणः" इति संप्रदानत्वं कस्मान्न भवति। प्ररोचयतेः प्रकृत्यन्तरत्वादिति चेत्? न, तत्रापि रुचिसंबन्धानपह्नवात्। अथ सामान्यविवक्षया षष्ठ्युच्यते। साऽप्युपात्ते विशेषे दुर्लभा। तस्मादनुष्ठातॄणां क्रियाया इति संबन्धः केभ्यः प्ररोचयमाना इत्यपेक्षितेऽर्थात्तेभ्य एवेति गम्यते। अथ चानुष्ठातॄणामुपकरिष्यन्तीति संबन्धः। **क्रियाया** इति पञ्चमी क्रियातोऽपि हि त एव प्ररोचका इति। अथ वा क्रियार्थमिति षष्ठ्यर्थः कल्प्यः। **कञ्चिदर्थं स्तुवन्तीति** शत्रन्तम्। कञ्चिदिति विधेयं तत्संबन्धिनं वा कञ्चिद्वा विदधति क्रियां सत्संबन्धिनं वा तच्च स्तुतिद्वारेणेत्युपपन्नं प्रत्ययोद्धारेणार्थवादप्रामाण्यम्।

विध्युत्खाति-पक्षनिरासः।

इदं तु व्याख्यानं नानुमन्यन्ते। यदि हि प्रत्ययोत्खातिः स्यात्, ततः केन स्तुतिराकाङ्क्ष्येत। न तावच्छब्दभावनाकथंभावोऽस्ति। याऽपि कस्मादित्यपेक्षा कल्प्येत, साऽपि विधीतिकर्त्तव्यताविषयैव, तदनुग्रहार्थत्वात्। शब्दान्तरव्यपदेशमात्रं तु भिद्यते। साऽपि च नियुज्यमानस्यैव पुरुषस्य भवति, न क्रियामात्रश्रवणात्। न हि वायव्यश्वेतालम्भ इत्युक्ते कर्तव्यताऽकर्तव्यतोक्तः प्राक् प्रशस्तोऽप्रशस्त इति वाऽपेक्ष्यते। तदनपेक्षितं च श्रुतिमात्रेणैव वदन्तो नार्थवादाः प्रतिपादयन्ति न च धात्वर्थेन सह कस्यचित् संबन्धः, अपेक्षा वा विद्यते। सर्वस्य भावनागामित्वात्।

भावना तु प्रत्ययोद्धारेणापनीता किमपेक्षेत। तस्मात्तद्गतांशत्रयोच्छेदान्न भूतिः फलम्, न यागः करणम्, न वेतिकर्तव्यता काचित्स्यात्। उक्तेऽपि च प्राशस्त्ये कस्मादित्यनपेक्षितत्वात्प्रशस्तोऽयमित्येतावन्मात्रेऽवधृते प्रशस्तत्वादित्यनुच्यमाने कर्तव्यताबुद्धिर्नैव स्यात्। भवन्ती वा तन्निष्ठा भवेत्प्रशस्तोऽयं कर्तव्यः, पटो रक्तः कर्तव्य इतिवत्। अकल्पिते विधावानर्थक्यमेव स्यात्। प्रत्यक्षं च विधिमुत्सृज्य पारम्पर्यलक्षणयाऽर्थवादेभ्यः परिगृह्यत इत्यपूर्वा वाचोयुक्तिः। न चैतत्कल्पनावसरोऽस्त्यन्यतः सिद्धत्वात्। अनुक्तो हि सन्नर्थवादादेव विधिः कल्प्येत, यद्यन्यथा नोपपद्येत। प्रत्यक्षप्रत्ययोपपन्नत्वान्नान्यथानुपपत्तिस्तथाऽर्थवादोऽपि यद्युपाख्यानादिष्वेव प्ररोचनायां निष्प्रयोजनः स्यात्ततो दूरं नीयेत। यथोक्तेन तु न्यायेन प्ररोचनोपयोगान्नान्यत्र गच्छतीत्यवश्यकर्तव्या च प्ररोचना, यद्यन्यतः सिध्येत्ततोऽर्थवादान्नापेक्षेत साऽपि त्वनन्यगतिकत्वात्तमेवाऽऽश्रयति। सर्वत्र च वैदिकेऽर्थेऽर्थापत्त्या शब्दः कल्प्येत, ततोऽर्थसिद्धिः तेन प्ररोचनया विधिशब्दः कल्प्येत, नार्थः, तत्कल्पनावेलायां च यथैन्द्रवायवादिवाक्येषु सोमेन यजेतेत्यस्मिन्नुपतिष्ठमाने नान्ययजिकल्पना, तथैवाऽऽलभेतेत्यनेनान्यानुमानप्रतिबन्धः।

तुल्यार्थयोश्च बाधविकल्पौ भवतः प्रत्ययार्थवादयोः पुनरत्यन्तभिन्नानुग्राह्यानुग्राहकार्थविषयत्वेनार्थभेदात्समुच्चयः इत्येकवाक्यता। यदि च प्रत्ययोत्खातिः स्यात्ततः कर्तृसंख्योपग्रहविशेषावगतक्रियाफलस्वार्थपरार्थत्वाद्युच्छेदप्रसङ्गः।

स्यादेतत्। विधित्वमात्रमविवक्षयित्वा शेषविवक्षया कर्तृसंख्यादिलाभ इति। एतच्चाशक्यं यतस्तदर्थमप्युपात्तः प्रत्ययः सामर्थ्यादविधित्वं वदत्येव। प्रतीतस्य च द्वय्येवाविवक्षा, विध्यसंस्पर्शो वा ग्रहैकत्ववत् अनुवादकत्वं वेन्द्रियकामहोमवत्। न तावद्विधेरविधित्वं नाम किंचित। नाप्यनुवादस्तस्यामवस्थायामप्राप्तेः। न ह्येवं संभवति योऽयं वायव्यश्वेतालम्भः कर्तव्यः, स प्रशस्त इति। भवति त्वेवं कर्तव्यः, प्रशस्तत्वादिति।

यत्तूदवसानीयवदिति तत्रापि क्त्वावशेन विधिप्रतिषेधावनपेक्ष्य क्रियामात्राविधित्वमाश्रितमेवेत्यदृष्टान्तता। यदि च विध्यविवक्षा स्यात्ततः प्रत्यासत्तेर्धात्वर्थ एव साध्यांशे निपतेदिति निष्फलत्वं स्यात्। तस्मात्सूत्रात्रिनाशेनैव विधिनैकवाक्यत्वम्। तथा च भाष्यकारः। साविधिकमेव भूतिकाम इत्येवमन्तो विध्युद्देश इत्याह। अन्यथा धात्वर्थ इत्येवावक्ष्यत्। तत्रास्य क्रियामात्रतया विध्युद्देशत्वं शक्यते वक्तुम्। तस्मात्प्रत्यय एव विध्यभिधायित्वाद्विध्युद्देशः। विध्यर्थेन त्वेकवाक्यत्वासंभवात्सूत्रातिरेकेणोद्देशग्रहणम्। भूतिकाम इत्येवमन्त इति च फलादिसंगत्युत्तरकालं स्तुत्यवसरप्रदर्शनार्थम्।

नन्वेवं सति वर्तमानोपदेशेष्वनाकाङ्क्षणादर्थवादा न संबध्येरन्। एवमेवैतत्, तथाऽपि तु प्रमाणान्तरप्राप्त्यभावात्क्वचित्प्रयोगवचनेन क्वचित्पञ्चमलकारेण। अथवा श्रुतवर्तमानान्यथानुपपत्त्या कल्पिते विधित्वेऽर्थवादसंगतिः। यत्रापि केवलार्थवाददर्शनादेव विधित्वं तत्राप्यन्यथानुपपत्तिमात्रं शरणम्। संभवन्त्यां तु गतौ, नातिगौरवं युक्तमिति।

यस्त्वस्मिन्पक्षे वाक्यभेदः संबन्धद्वयाश्रयणादिति, स आलभेन प्रशस्तत्वादित्येकप्रसरोपपत्तेः परिहृतः। विधीयमानस्यैव हि स्तुत्याकाङ्क्षेत्यवैरूप्यादुपपन्नं तन्त्रत्वम्। यदि चैवंविधैः संबन्धभेदैर्वाक्यं भिद्येत ततः साध्यसाधनेतिकर्तव्यतासंबन्धैरपि भिद्येत। तस्मान्नायमभिसंबन्धो[1] विवक्षित इत्यादिभाष्यमेवं नेतव्यम्। न पूर्वत्रैव साङ्गविधिपर्यवसानं विवक्षितम्। विधित्वादिद्वारप्ररोचनाकल्पनायामतिगौरवनिमित्ताद्वाक्यभेदात्। किमर्था स्तुतिरिति। पूर्वेणैव प्ररोचनाऽपि सिद्धेत्यभिमानात्। कथं रोचेतेति—विध्यनुग्रहकथनम्। ननु प्रागिति—पूर्वाभिप्रायविवरणम्। **न हीति**। स्तुत्यभावे तस्य शक्तिद्वयमगत्याऽऽ**श्रीयते** न संभवन्त्यामपीत्येतत्, न, तदा भूतिकामस्य विधिः समाप्यत इत्याह—**यथा पट** इति। गतार्थम्। विधिशब्देन तदा प्ररोचनेति। विवृतं कार्यनानात्वं विधिस्तुत्योः।

---

१. नायमभिसंबन्धो विवक्षित इत्यादि, भिद्येतेत्यन्तभाष्यस्यायमर्थः—भूतिकाम आलभते कस्माद्यतो वायुः क्षेपिष्ठेत्यनेन यः सार्थवादकस्य विध्युद्देशस्य विधिस्तुतिसंबन्धरूपो विशिष्टोऽर्थो दर्शितः, नायं विध्युद्देशमात्रेण विवक्षितः किं तु सार्थवादकेनेति। तर्हीत्ययं भिद्येतेत्यनेनान्वेति। आलभेतेति मध्यप्रतीकेन विध्युद्देशोपलक्षणम्। यतस्ततो भूतिरित्यर्थवादस्योपलक्षणम्। तथा च विशेष्यविशेषणरूपभिन्नाविमावर्थौ विध्युद्देशार्थवादाभ्यां प्रतिपाद्यमानौ यद्येकेन विध्युद्देशेन प्रतिपिपादयिषितौ तर्हि गौरवलक्षणो वाक्यभेद इति।

**नन्वेवमिति**। अस्ति चेत्प्ररोचयितुमपि शक्तिः, कस्मादन्यदपेक्ष्यत इति। सत्यमिति। तस्माद्विद्यमाने तस्मिन्नाविद्यमाने योऽर्थः स गम्यते। कश्चासौ। स्तुतिः प्रयोजनं तयोः। न तस्यैव पूर्वस्यापीत्यर्थः। स्तुतिविषयोपकल्पनाच्च विधेरपि स्तुतिप्रयोजनव्यपदेशः। न हि निर्विषया स्तुतिरुपपद्यते। अर्थवादाभावे त्वगत्या केवलोऽपि गौरवमङ्गीकरिष्यति।

ननु **सत्स्वपीति**। पूर्ववदेव व्याख्येयम्। अतोऽस्माद्विधेरिति[1]। इदानीं षष्ठीवाक्यशेषसंबन्धादित एवास्य स्तुतिमवगच्छामो न स्वत इत्यर्थः। ननु निरपेक्षादपीति। यदि क्वचिदनितिकर्तव्यताकस्य विधेः प्रवर्तनशक्तिः कस्मादन्यदपेक्षते, तेन सत्स्वप्यनादरः स्यात्। आचार्यस्तु सोपहासमाह—यत्रासौ केवलः प्रयुज्यमानो निरपेक्षः। तत्र भवतु न कश्चिद्विरोधः। इह त न तत्संभवः साकाङ्क्षैः पदान्तरैराक्षिप्तत्वात्। वाक्यं ह्येकमेकस्यैव संबन्धस्य विधायकम्। तत्र यदि द्वौ विध्युद्देश एव कुर्यात्तथा सति भिद्येत। विध्युद्देशोत्थापितानामेवैष हि गुणो भवतीति प्ररोचनां दर्शयति। तस्माद्विधिनैकवाक्यत्वात्तदनुग्रहेणार्थवन्तोऽर्थवादा इति॥ ७॥

न्या० सु० ] पूर्वपक्षसिद्धान्तयोर्भिन्नविषयत्वापत्तेरपूर्वोदाहरणानुपपत्तिमाशङ्कते—**पूर्वपक्षेति**। नातिप्रयत्निनां परिहारमाह—**केचिदिति**। भाष्यकारस्यानिपुणत्वापत्तेरिमं परिहारं दूषयति—**यद्यपीति**। स्वमतेन परिहरति—**तदभिधीयत इति**। अत्र भाष्यकारेण वायुर्वेक्षेपिष्ठा देवतेति यद्यपि क्रिया नावगम्यते, क्रियासम्बद्धं वा, तथापि विध्युद्देशेनैकवाक्यत्वात्प्रमाणमित्युक्त्वा, कथमेकवाक्यभावः ? इति पृष्टे पदानां साकाङ्क्षात्वाद्विधेः स्तुतेश्चैकवाक्यत्वमित्यभिधानादेकवाक्यत्वं प्रामाण्यकारणम्[2], स्तुत्यर्थत्वं त्वेकवाक्यत्वकारणमुक्तमिति प्रतिभाति। तच्चायुक्तम्, विध्येकवाक्यत्वं विना लाक्षणिकस्तुत्यर्थत्वायागादितरेतराश्रयापत्तेरित्याशङ्क्य व्याचष्टे—**तत्रेति**। स्तुत्यर्थत्वोपपादनद्वारेणैकवाक्यत्वस्योपयोगरूपप्रामाण्यकारणत्वमभिप्रेतम्, न साक्षात्। विधिस्तुतिपदसाकाङ्क्षत्वं तु समभिव्याहारावगतैकवाक्यत्वनिर्वाहायोक्तमित्यदोषः। तदेतद्भाष्यमाक्षिपति—**एतावत्त्विति**। सामान्यतः पुरुषार्थानुबन्धित्वासिद्धौ तदधीनलाक्षणिकस्तुत्यादिद्वारविशेषनिरूपणाशक्तेस्तदेवादौ साध्यमिति प्रथमशब्देनोक्तम्। स्वारसिकैकवाक्यत्वावगमे[3] श्रौतार्थत्यागस्य

१. यतो वाक्यशेषोऽतो विधेः—विधिसंबन्धिनोऽस्माद्वाक्यशेषाद्विधेयस्य स्तुतिमवगच्छाम इत्यर्थः। नत्वनेन भाष्येण विधिरेव स्तुतिप्रतिपादक इत्युपसंह्लियेत। पूर्वग्रन्थविरोधापत्तेरिति।

२. धर्मप्रमाजनकत्वरूपप्रामाण्यकारणं तद्वाश्रितम्, ततो धर्मप्रमानुत्पत्तेः।

३. ननु समभिव्याहारलक्षणैकवाक्यताप्रकृते स्वारसिकी सम्भवतीति चेत् ? विभज्यमानसाकाङ्क्षत्वे सत्येकार्थप्रतिपादकत्वं स्वारसिकमेकवाक्यत्वं विवक्षितम्। प्रकृते त्वर्थवादानां निराकाङ्क्षत्वेन तदभावात्।

गङ्गायां घोष इत्यादौ दर्शनात्तद्व्युदासार्थं बलादित्युक्तम्। स्वरसतो प्रतीयमानाप्येकवाक्यता पुरुषार्थानुबन्धित्वलाभाय स्तुत्यर्थत्वावधारणात्तद्वशेन कल्प्यमाना नेतरेतराश्रयापादिकेत्याशङ्कां निराकर्त्तु पुरुषार्थत्वं वेत्युक्तम्। पुरुषार्थानुबन्धित्वस्याप्यप्रमाणकत्वादिति भावः।

बहुक्षीरादिवाक्येषु रूपभङ्गेनापि पुरुषार्थपर्य्यवसायित्वदर्शनाद्वेदेऽपि तथानुमानं[1] स्यादित्याशङ्कते—लौकिकवाक्येष्विति। आक्षेप्ता पुरुषार्थपर्य्यवसायित्वे साध्ये वाक्यत्वस्य हेतोरप्रयोजकत्वं दूषणमाह—तत्रेति। एतदेवोपपादयति—लोकेऽपीति। समाधानान्तरमाशङ्कते—तत्रेति। कथं तेन सूत्रेण पुरुषार्थपर्य्यवसायित्वसिद्धिरत आह—न हीति। आदरणान्यथानुपपत्तिः पुरुषार्थपर्यवसायित्वे प्रमाणम्, तेन सूत्रेण वक्ष्यत इति भावः। न च व्यामोहादादरोपपत्तिरित्याह—यद्यपीति एतदेवोपसंहरति-तस्मादिति। एतदप्याक्षेप्ता दूषयति—न त्वेतदिति।

नन्वाप्तवाक्यवत्पुरुषाधीनप्रामाण्याङ्गीकरणमपि न दोषाय स्यादत आह—यदि हीति। अयमाशयः—किमत्र स्वादरान्यथानुपपत्त्या प्रयोजनवत्त्वकल्पनं स्यात्, पुरुषान्तरादरान्यथानुपपत्त्या वा। तत्राद्ये पक्षे स्वादरात्प्रयोजनवत्त्वावगमः प्रयोजनवत्त्वावगमाच्च स्वादर इत्यन्योन्याश्रयः स्यादित्यनेनोक्तम्। द्वितीये तु मूलप्रमाणाभावेनान्धपरम्परेत्याह—अथेति। तदेव दर्शयति—सर्वत्र हीति। नन्वादरान्यथानुपपत्त्याध्येतृषु प्रयोजनवत्त्वज्ञाने कल्पिते तत्कारणीभूतं किंचिन्मूलप्रमाणं कल्पयिष्यामोऽत आह—तेनेति। कस्यचिन्मूलप्रमाणस्यासम्भवाद् भ्रान्तिमूलत्वं प्रसज्येतेति भावः।

कथमसम्भवोऽत आह—अतो यावदिति। एवमाक्षिप्याध्ययनविधिरेव सर्वस्य पुरुषार्थपर्यवसायित्वे प्रमाणमिति स्वमतेन समाधातुमुमक्रमते—तदुच्यत इति। विध्यादिसाधारण्यप्रदर्शनार्थं सकलग्रहणं। पूर्वं तावत्सर्वोपयोगः प्रतिपाद्यते। पश्चादर्थवादानां द्वारविशेष इति तावच्छब्देनोक्तम्। निष्प्रयोजनाक्षरमात्राध्ययनेऽपि बुद्धिपूर्वकारिणां पुंसां प्रवर्त्तयितुमशक्यत्वान्नैकस्याप्यक्षरस्य निष्प्रयोजनत्वमध्ययनविधिरनुमन्यते। न चैकदेशे दृष्टार्थस्यादृष्टार्थत्वमेकदेशान्तरे युक्तम्। एकत्र नियमविधिः, परत्राप्राप्तविधिरिति वैरूप्यस्यापरिहार्यत्वात् तस्मात्सकलस्यैव वेदस्य प्रयोजनवदर्थपर्यवसायित्वमध्ययनविधिबलादवसीयत इति भावः।

ननु क्वचिदयध्यनविधेः पुरुषार्थपर्यवसायित्वे सिद्धे सत्यवैरूप्याय सर्वत्र तथाङ्गीकरणं युक्तम्, तदेव तु निष्प्रमाणकं समानपदोपात्तस्याध्ययनस्यैवभाव्यत्वोपपत्तेरित्याशङ्क्य प्रथमसूत्रोक्तं दृष्टार्थत्वे दर्शयितुमाह—तत्रेति। कस्मिन्नंशे तर्हि तस्य निवेशः, अत आह—ततश्चेति। साध्यांशानिवेशकारणस्य विधिविरोधस्यात्राभावमविरोधादित्यनेन दर्शयति। नामार्थस्य करणांशे निराकर्त्तु सन्निधेरित्युक्तम्। तेनात्र भाव्याकाङ्क्षायां श्रुतभाव्या-

---

१. अर्थवादवाक्यं पुरुषार्थपर्यवासायि वाक्यत्वात् बहुक्षीरादिवाक्यवत्।

भावादश्रुतादृष्टकल्पने च तस्य स्वरूपम्, तज्जन्यत्वम्, तत्र चाध्ययनस्य शक्तिः कल्प्यतेत्यनन्तादृष्टकल्पनागौरवापत्तेः, दृष्टस्य जन्यत्वमात्रं कल्पनीयमित्याह—**तेनेति**। एवं तर्ह्यनन्तरदृष्टाक्षरग्रहणमात्रेण नैराकाङ्क्ष्यान्नाभिमतं वाक्यार्थज्ञानपर्यन्तत्वं सिद्ध्येदित्याशङ्क्य प्राक् पुरुषार्थसिद्धेर्नैराकाङ्क्ष्याभावं दर्शयति—**तस्यापीत्यादिना—निराकाङ्क्षी भवतीत्यन्तेन**।

आधानादिविधीनामपुरुषार्थरूपाहवनीयादिमात्रे नैराकाङ्क्ष्यदर्शनादिहापि तथा स्यादित्याशङ्क्याह—**एवमिति**। एवं तर्हि न साक्षात्पुरुषार्थपर्यवसाय्येव सर्वत्र फलमस्तु अत आह—**न चेति**। पारम्पर्यपुरुषार्थफलत्वेनापि विध्युपपत्तेर्न्न नियोगतः साक्षात्पुरुषार्थफलत्वे किंचित्प्रमाणमस्तीति भावः। एवमपि कथमत्र दृष्टफलत्वनिश्चयः? अत आह—**योग्यतया हीति**। लाघवमनेन निश्चयकारणमुक्तम्। एवं तर्हि होमादावप्याहवनीयप्राप्त्यादिदृष्टकार्यसम्भवाददृष्टकल्पना न स्यात्, वक्तव्यो वा विशेषः, अत आह—**तत्रेत्यादिना अदृष्टकल्पनेत्यन्तेन**। पारम्पर्य्येणापि तस्य पुरुषार्थानुबन्धाभावात्फलत्वं न सम्भवतीति भावः।

नन्वेवमपि पारम्पर्यपुरुषार्थानुबन्ध्यक्षरग्रहणमनन्तरदृष्टत्वात्फलं स्यात्, साक्षात्पुरुषार्थरूपं वा स्वर्गादि वाक्यार्थज्ञानस्य तूभयरूपरहितत्वात्फलत्वाङ्गीकरणमयुक्तमित्याशङ्क्य तत्प्रतिपत्त्युपयोगितया सामान्यन्यायं तावद्वक्तुमारभते—**सर्वत्र चेति**। विहितेऽवघातादावफलात्मकवैतुष्यादिदृष्टकार्यपरम्परायामान्तरालिकं यत्पुरोडाशादि क्रतवे, यागादि वा पुरुषार्थाय चोद्यते। तदेव तस्य क्रतोः पुरुषार्थस्य वा साधनम्। पूर्वस्य[1] त्ववधातादिविधेः पुरोडाशादियागाद्युपकारार्थत्वमात्रम्, न पुरुषार्थपर्य्यन्ततेत्यर्थः। पेषणादीनां तर्हि कथमन्वयः? अत आह—**यानि त्विति**। पेषणादिविधेर्यानि कार्याण्यनुष्ठेयानि पेषणादीनि, तानि पूर्वविहितस्यावघातादेः स्वव्यापारमात्रतया द्वारमात्रतयान्वीयन्ते, नान्तरीयकत्वात्, तैर्विनाऽवधातादिना पुरोडाशादेः कर्त्तुमशक्यत्वात्। किमिति पेषणादेरवघातादिसाध्यत्वम्, पुरोडाशसाधनत्वं वा नेष्यत इत्याशङ्क्योक्तम्—**प्राक् साध्यसाधनभावेनाचोदितत्वादिति**। यदि[2] ह्यवघातविधेः प्राक् पेषणादेः पुरोडाशसाधनत्वमवगतं स्यात्, तत्प्रयोजनवत्त्वेन योग्यत्वादवघातसाध्यत्वं युज्यते। पुरोडाशप्रकृतिभूतव्रीह्युद्देशेन विधानाच्चावघातस्यैव पूर्वं पुरोडाशसाधनतां प्रतीमः। यदि च पेषणादिविधेः प्राक् पेषणादेरवघातसाध्यत्वावगमः स्यात्। ततो द्वारमात्रत्वं न युज्येत न त्वेतदस्ति। पुरोडाशस्यैवोक्तन्यायेनावघातसाध्यत्वावगमादित्यर्थः।

[3]यद्वोत्तरविधिशब्देन पुरोडाशविधिमभिप्रेत्य तस्मात्प्राग्यानि कार्याणीति योज्यम्। नन्वेवं तर्ह्यदाहानुमितविधिबलेन भस्मसाद्भावस्यापि फलसाधनत्वावगमादश्रुतफलस्य

---

१. अनुध्यानपेक्षयेत्यर्थः। २. किमपेक्षया प्रागत आह।

३. यदा तूतरविधेरिति पञ्चमी तदोत्तरविधिः पुरोडाशविधिः प्रागिति च कार्यपदेन सम्बध्यत इत्याह—**यद्वेति**।

होमस्य तत्साधनत्वापपत्तेर्न दृष्टफलकल्पना स्यादित्याशङ्क्याह—**यत्र त्विति** । **अयमाशयः**[1] विध्यभावे ऽप्यदग्धस्य क्रत्वर्थस्य कदाचिदुपधाते सति क्रतुवैगुण्यापत्तेस्तत्परिहाराय दाहादरोपपत्तेर्नैकान्ततो विध्यनुमानम्, विध्यनुमाने ऽपि द्वारमात्रतयापि विध्युपपत्तेर्न फलसाधनत्वकल्पना युक्तेति ।

एवं सामान्यन्यायमुक्त्वा तदनुसारेण यथाध्ययनविधेर्वाक्यार्थज्ञानपर्यन्तत्वं भवति, तथा प्रपञ्चयन्नाह—**तत्रेति** । श्रुतफलेषु क्लृप्तः पुरुषार्थो, अश्रुतफलेषु कल्पयिष्यमाण इति सर्वाणि प्रधानवाक्यानि अनेन परामृष्टानि । **तत्प्रतिपादनं यावदित्यनेनाक्षरग्रहणादीनां** पेषणादिन्यायेनावान्तरव्यापारमात्रत्वादध्ययनफलत्वं निराकृतम् ।

फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता ।
निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते ॥

इत्यनेन न्यायेन वाक्यार्थज्ञानार्थं स्वाध्यायोद्देशेन विहितस्याध्ययनस्य पुरोडाशार्थावघातवद्वाक्यार्थज्ञानार्थत्वावधारणात्तदन्तरालवर्त्तिनामक्षरग्रहणादीनां पेषणादिन्यायेनावान्तरव्यापारत्वमात्रं युक्तमिति भावः ।

ननु पुरोडाशस्य विध्यन्तरेण क्रत्वर्थतया फलत्वज्ञानाद्युक्तमवघातसाध्यत्वम्, वाक्यार्थज्ञानस्य तु कथम् ? अत आह—**परतस्त्विति** । वाक्यार्थज्ञानस्य सामर्थ्येन, यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवतीति वाक्येन वा कर्म्मानुष्ठानार्थत्वावधारणात्कर्म्मणां च विध्यन्तरैः पुरुषार्थफलत्वावधारणात् न तत्पर्य्यन्तमध्ययनविधिरायास्यति इत्यर्थः ।

ननु च भवतु प्रधानवाक्यानां स्वार्थप्रतिपादनमात्रेण पर्य्यवसानमङ्गवाक्यानां त्वर्थद्वारेण, स्वरूपस्यापि मन्त्रवत्प्रधानैर्ग्रहणात्कर्म्मकालप्रयोज्यत्वावगतेर्नार्थप्रतिपादनमात्रेण पर्य्यवसानमित्याशङ्क्याह—**यानि त्विति** । अयमाशयः—न मन्त्राणामङ्गभूतार्थप्रतिपादनमात्रेण स्वरूपग्रहणं ज्ञातम्, किं तु विधिवशात् । न चाङ्गवाक्यानां विधिरस्ति, प्रकरणपाठेन च क्रत्वङ्गत्वं शङ्क्यमानमनारभ्याधीतानां तावन्न शक्यते शङ्कितुम्, प्रकरणाधीतानामपि प्रयाजादिवाक्यानां प्रमाणाभावान्न सम्भवतीति । एतदेव प्रश्नपूर्वकमुपपादयति—**कुत इति** । अदृष्टार्थत्वेन क्रतोरदृष्टोपकारापेक्षत्वान्न[2] दृष्टार्थाङ्गवाक्यग्राहकत्वमित्यर्थः[3] । प्रयोजनशब्देनोपकारमाह । न च साक्षात्क्रतुसम्बन्धायापि प्रयोज्यत्वकल्पनं[4]

---

१. नन्वादरानुमितविधिविहितत्वं भस्मसाद्भावस्य विद्यत एव कथमुच्यते न किंचिद्विधीयत—इत्यत आह—**अयमाशय इति** ।

२. वाक्यार्थप्रतिपादनं दृष्टोऽर्थः ।

३. नन्वङ्गानामफलत्वात् कथं प्रयोजनद्वारेणेत्युक्तमत आह—**प्रयोजनेति** ।

४. प्रयोगकाले पाठकल्पनमित्यर्थः ।

पारम्पर्येणापि पुरुषार्थानुबन्धलाभादित्यर्थान्तरत्यासेनाह—अत इति। अङ्गानां प्रधानवाक्यवदेकान्तरितपुरुषार्थान्वयित्वाद् बाह्यत्वम्। तद्वाक्यानां तु द्व्यन्तरितत्वाप्रधानाद् बाह्यतरत्वम्। एतच्च द्व्यन्तरितत्वं प्रकरणाधीतारादुपकारकाङ्गवाक्यविषयम्; सामवायिकाङ्गवाक्यानां त्वादिशब्दोपात्तोपनयनादिवद् बहुव्यवधानमित्याह—एवमिति[1]। स्वमते पुरोडाशस्यैव साक्षात्प्रधानभूतयागसाधनत्वात्; भाष्यकाराभिप्रायेण द्व्यवदानग्रहणं व्यवहिततरत्वप्रदर्शनार्थं कृतम्। आदिशब्दो व्रीह्यादीत्यादिशब्दोपात्ताज्यादिविषयः चतुर्गृहीताद्यभिप्रायो द्रष्टव्यः।

एतामेव सन्निधिव्यवधिव्यवस्थामनारभ्याधीताङ्गवाक्येष्वतिदिशति—एवमेवेति। कथं तर्ह्यनारभ्याधीतानां प्रकरणाधीतेभ्यो दौर्बल्यमत आह—तत्र त्विति। असम्बद्धवाक्यान्तरव्यवायेन तेषां प्राकरणिकाङ्गवाक्यवत्प्रधानवाक्यैकवाक्यत्वायोगादिति भावः।

अनङ्गवाक्यनां त्वतिदूरव्यवधानमित्याह—यानि त्विति।

ननूक्तेन द्वारेण पुरुषार्थानुबन्धिकर्म्मानुष्ठानोपयोगिवाक्यार्थज्ञानं सर्वविधिवाक्येषु सम्भवदपि सकलवेदाव्यापित्वान्नाध्ययनविधिप्रयोजनं भवितुमर्हतीत्याशङ्क्य सूत्रभाष्यकारानुक्तत्वादुपनिषद्वाक्यानां तावदुपयोगमाह—एतेनेति। उपनिषदामपि[2] आधानादिवाक्यन्यायेन दूरस्थेनैव क्रतुफलेन नैराकाङ्क्ष्यमित्यर्थः। कथमित्यपेक्षिते क्रत्वर्थकर्तृप्रतिपादनद्वारेणेत्युक्तम्। परलोकफलेषु कर्म्मसु विनाशिदेहादिव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मज्ञानं विना प्रवृत्त्यनुपपत्तेरहंप्रत्ययेन च देहे ऽपि दृष्टेन स्फुटतया तद्व्यतिरेकस्य ज्ञातुमशक्यत्वात् शास्त्रीयमात्मज्ञानं क्रतुविधिभिरपेक्षितं क्रत्वर्थंप्रतिपादनम् तस्य चानारभ्यविहितस्यापि सामर्थ्येन पूर्वोदाहृतेन वाक्येनोपनिषदाममन्त्रत्वेन स्वरूपप्रयोज्यत्वाभावादुपनिषज्जनितस्यात्मज्ञानस्य फलातिशयलक्षणवीर्य्यवत्तरत्वहेतुत्वाभिधानपरेण क्रत्वङ्गत्वावधारणात् तद्द्वारेण पुरुषार्थानुबन्धित्वम्। ज्ञानस्य चाव्यापाररूपकत्वेन स्वरूपेणाविधेयत्वे ऽप्युपासनापरनामधेयं ध्यानमेवात्मा ज्ञातव्य इत्यादिभिर्विधीयते। अप्रतिपन्नस्वरूपस्य च ध्यातुमशक्तेरात्मस्वरूपप्रतिपादनमविनाशी वा अरेऽयमात्मेत्यादिभिः क्रियमाणं विध्यपेक्षितत्वानार्थवादेष्विवानादरमर्हतीति तद्द्वारेणोपनिषदां पुरुषार्थपर्य्यवसानमिति भावः।

एतच्च संसारिरूपात्मप्रतिपादनाभिप्रायम्। असंसारिरूपसगुणनिर्गुणात्मज्ञानस्याभ्युदयनिःश्रेयसार्थतया साधुशब्दाधिकरणे वक्ष्यमाणत्वात्सिद्धार्थप्रतिपादनपराणामप्युपनिषदामुपासनाविधिशेषतया [3]चोदनाशब्देनोपादानसम्भवाच्चोदनासूत्रप्रतिज्ञातप्रामाण्य-

---

१. ननु द्व्यवदानस्याचार्यमते प्रतिपद्धित्वात् कथं यागसाधनत्वमुक्तमत आह—स्वमत इति।

२. यथाधानादिवाक्यानां क्रत्वङ्गभूताग्निसंस्कारप्रतिपादनद्वारेण पुरुषार्थत्वं तथेत्यर्थः।

३. चोदनेति ननु चोदनाशब्दस्य मन्त्रार्थवादनामधेयोपेतमहावाक्यत्वमुक्तम्। तत्र चोपनिषदामनन्तर्भावात्पुरुषार्थोपयिकत्वेन चेत्यग्निमभक्तिकयार्थवादेभ्यः पृथक्करणात् कथं चोदनाशब्देनोपादनम्; कथं वा तत्सूत्रप्रतिज्ञातप्रामाण्यसाधनमिति चेत्, सत्यम् किं तु कर्तुरितिकर्तव्यतात्वेन सर्वत्र भावनान्तर्गतेरुक्तदोषाभावादित्यर्थः।

साधनं सङ्गतम्। पुरुषार्थोपयिकत्वेन चात्मस्वरूपप्रतिपादने असंसारियत्मिज्ञाननैराकाङ्क्ष्यसम्भवात् पदैकवाक्यत्वाभावेनार्थवादवैलक्षण्यमिति सर्वमनवद्यम्।

मन्त्रनाम्नोः केन द्वारेण नैराकाङ्क्ष्यमत आह—मन्त्रेति। योज्यते सम्बध्यते भावनया सहानेनेति व्युत्पत्त्या योजनाशब्देन द्वारमुक्तम्। ननु साध्यसाधनेतिकर्तव्यतानभिधायित्वेनाक्रियार्थत्वान्मन्त्रादीनामानर्थक्यमाशङ्कितम्, तत्कथं क्रियार्थत्वमव्युत्पाद्यैवार्थवत्त्वं व्युत्पाद्यते, तत्राह—तेनेति। येन भावनासम्बन्ध्यर्थप्रतिपादनेनैवार्थवत्त्वं वक्ष्यते, तेन भावनान्तर्गतिः सिद्धैवेत्यर्थः। अर्थवादोपयोगद्वारानभिधाने ऽप्यध्ययनविधिबलेन सामान्यतः सर्वोपयोगस्य साधितत्वात्सर्वेषामित्युक्तम्। एतच्च सामान्यतः सर्वोपयोगस्यप्रतिपादनम्, [सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके इति] न्यायाद्विधिना त्वेकवाक्त्वादिति सूत्रावयवारूढं[1] द्रष्टव्यम्, तत्र तुशब्देनानर्थक्यनिराकरणार्थेनार्थवत्त्वं सामान्यतः सर्वेषां प्रतिज्ञातम्। श्रुतिवृत्त्या क्रियार्थत्वानवगमे ऽपि क्रियाविध्येकवाक्यत्ववशेन लक्षणया तदपेक्षितार्थप्रतिपादनाक्रियार्थत्वमुपपादयितुं विधिनैकवाक्यत्वादित्युक्तमिति योज्यम्। भाष्यमपि यद्यपीत्यादिप्रमाणमित्यन्तमेतत्सूत्रावयवव्याख्यानपरमेव योज्यम्। यद्यप्यर्थवादादिभ्यः श्रुत्या क्रिया, तत्सम्बद्धं वा नावगम्यते; तथापि तत्रैव प्रमाणं विध्युद्देशैकवाक्यत्ववशेन लक्षणया वृत्त्या तत्परत्वसम्भवादिति।

एवं सामान्यतः सर्वेषां क्रियार्थत्वमुपपाद्येदानीमर्थवादानां क्रियार्थत्वनिर्वाहाय द्वारविशेषं प्रतिपादयितुं यो ऽपि चेत्यादिनोक्तं पूर्वपक्षन्तावदनुभाषते—यस्त्विति। क्रियाप्रतिपादकत्वं हि क्रियार्थत्वम्, न चार्थवादैराख्यातवत्स्वरूपेणासौ प्रतिपाद्यते, नापि फलादिपदवत्तदंशः कश्चित्साध्यादिः तस्मात्तदर्थस्य भावनांशत्रयानन्तःपातान्न तत्प्रतिपादकत्वं विनार्थवादानां भावनया ग्रहणमित्यर्थः। एवमनुभाष्य निराकर्त्तुमाह—तत्रेति। यद्यप्यर्थवादानां विधिवदनुष्ठापकत्वेन न क्रियार्थत्वम्, क्रियाभिधायकत्वं वा, तथापि प्राशस्त्यज्ञापनेनैवानुष्ठापकत्वात्स्वरसतश्च प्राशस्त्याज्ञानादध्ययनविधिबलाल्लक्षणया तादर्थ्यमङ्गीकार्यम्। न च प्राशस्त्यज्ञानस्य कर्त्तव्यत्वासिद्धावध्ययनफलत्वं युक्तं रागतो विधितो वा कर्त्तव्यत्वेनानवगतस्य कस्यचित्फलत्वायोगात्। कर्त्तव्यत्वं च भावनान्तर्गत्या विना न सिध्यतीत्यर्थवादाध्ययनफलत्वोपपत्तये प्राशस्त्यज्ञानस्य कर्तव्यत्वसिद्ध्यर्थं भावनान्तर्गतिव्युत्पादयितुमारभते—सत्यमिति। ननु न तावदर्थभावनान्तर्गतिः शाब्दभावनाया पूर्वपक्षः प्रागस्त्यज्ञानस्य कैश्चिदिष्यते। न च ततोऽन्या शब्दभावना नाम काचिदुपपर्ति सहते, शब्दश्रवणानन्तरभाविन्यां हि प्रवृत्तौ हेतुः प्रवृत्त्युत्पादकत्वात् शब्दभावनाशब्देनाभिप्रेतः। न चासौ कश्चित्सम्भवति। तथा हि—

प्रवर्त्तको लिङादिर्वा तत्क्रिया वा विलक्षणा।
अभिधा वाऽथवा ज्ञादिः कार्यं वाऽऽथेष्टहेतुता ॥ १ ॥

---

१. सूत्रेति ततश्चावृत्त्या सामान्यविशेषसमाधानपरतया सूत्रं योजनीयमिति।

तत्र शब्दः स्वरूपेण वायुवच्चेत्प्रवर्त्तकः ।
प्रमाणत्वं विहन्येत नियमाच्च प्रवर्त्तयेत् ॥ २ ॥
न च स्वरूपसम्बन्धज्ञानापेक्षो भवेन्न च ।
प्रकृत्यान्वयमाकाङ्क्षेन्न च स्यात्फलकल्पकः ॥ ३ ॥
अथ प्रवृत्ति हेत्वर्थस्वव्यापाराभिधानतः ।
प्रवर्त्तकत्वाच्छब्दस्य सर्वदोषनिवारणम् ॥ ४ ॥
तत्र प्रवृत्तिसामर्थ्यापादनात्माऽस्य या क्रिया ।
कारीर्य्यादिषु दृष्टासावनुक्तैव प्रवर्त्तिका ॥ ५ ॥
तेनाभिधानवैयर्थ्यात्पूर्वदोषानिवारणम् ।
अलौकिकी प्रेरणा तु सम्बन्धानुभवाहृते ॥ ६ ॥
अभिधातुमशक्यत्वान्न प्रवर्त्तयितुं क्षमा ।
राजादिवच्च शब्दस्य फलादातृत्वतः स्वतः ॥ ७ ॥
तद्व्यापाराभिधानेऽपि न प्रवर्त्तेत कश्चन ।
पुरुषार्थोपयोगित्वं न लिङादेश्च गम्यते ॥ ८ ॥
येनास्यानुविधेयत्वात्फलकल्पकता भवेत् ।
तस्याप्यानुविधेयत्वे शब्दस्य न तदीयताम् ॥ ९ ॥
अज्ञात्वा व्यापृतेः कश्चित्प्रवर्त्तेताभिधावपि ।
न च शब्दमनुक्त्वैतद्व्यापारत्वं निरूप्यते ॥ १० ॥
स्वरूपवाचितातोऽस्मिन्पक्षेऽनिष्टा लिङां भवेत् ।
अस्तु तर्ह्यभिधानाख्यो व्यापारोऽस्य प्रवर्त्तक ॥ ११ ॥
तस्य ह्यर्थप्रतीत्याख्यकार्यक्लृप्तस्य केवलम् ।
कल्प्यं प्रवृत्तिहेतुत्वं लिङ्वाच्यस्येति लाघवम् ॥ १२ ॥
शब्दान्तरगतार्थेऽस्मिन्नभिधा स्यात्प्रवर्त्तिका ।
पक्षेऽर्थतो विशेषश्चेत्स एव स्यात्प्रवर्त्तकः ॥ १३ ॥
न चास्या अभिधेयत्वाद्विशेषः कार्यतो गते ।
न युक्तं ह्यभिधेयत्वं सर्वासां हि प्रसज्यते ॥ १४ ॥
अथ प्रवर्त्तनात्वेन कार्यादनवबोधतः ।
तद्रूपेणाभिधेयत्वं तच्चान्यासु न विद्यते ॥ १५ ॥
तन्नास्या ह्यभिधानात्प्राक् चेत्प्रवर्त्तकरूपता ।
स्याद्व्यर्थमभिधेयत्वं नास्ति चेत्स्यादसत्यता ॥ १६ ॥
आज्ञादिस्तु न वेदार्थः पुंधर्म्मत्वेन युज्यते ।
अथ मानान्तराऽगम्यनियोगापरनामकम् ॥ १७ ॥

कार्यं लिङादिवाच्यं सत्स्वतन्त्रं स्यात्प्रवर्त्तकम् ।
तदप्ययुक्तमज्ञातसम्बन्धत्वाल्लिङर्थता ॥ १८ ॥
मानान्तराप्रमेयत्वे कार्यस्य हि कथं भवेत् ।
अथ स्वस्थस्वतन्त्रस्य पुंसो लिङश्रवणे सति ॥ १९ ॥
प्रवृत्तेरात्मदृष्टान्तात्कार्यधीहेतुतां शिशुः ।
अनुमाय लिङस्तत्र वाचकत्वं प्रकल्पयेत् ॥ २० ॥

### प्राभाकरसम्मतविध्यर्थनिरूपणम्

कार्यं च वेदे षष्ठाद्यसिद्धान्तात्कामिनाऽन्वितम् ।
नियोज्येनात्मनः कार्यं तया ज्ञातमिति स्थितम् ॥ २१ ॥
नियोज्यश्च स्वसम्बन्धिकार्यबोद्धाऽभिधीयते ।
काम्यमानाभ्युपायं च बुध्यते कार्यमात्मनः ॥ २२ ॥
कामी न च क्रिया तत्र क्षणिकोपायतां व्रजेत् ।
क्रियातोऽन्यदतः कार्यं वेदे वाच्यमलौकिकम् ॥ २३ ॥
तत्रापूर्वस्य कार्यत्वं कृत्युद्देश्यत्वलक्षणम् ।
अयुक्तमपुमर्थत्वादव्यापारतया न च ॥ २४ ॥
अनुष्ठेयत्वरूपं न व्यापारत्वे स्वतन्त्रता ।
अव्यापारतया चास्मिन्नियोगो नावकल्पते ॥ २५ ॥
तेनात्मनि नियोक्तृत्वान्नियोग इति वाङ् मृषा ।
किं च नित्यनिषेधाधिकारेषु फलवर्ज्जनात् ॥ २६ ॥
क्रियातिरिक्तकार्यस्य कथं सिद्धिर्भवेत्तव ।
कृत्युद्देश्यत्वरूपं च कार्यत्वं चेत्प्रवर्त्तकम् ॥ २७ ॥
तद्रूपत्वात्फलस्यैव प्रसज्येत प्रयोक्तृता ।
तच्च कामपदोक्तत्वान्न लिङादिभिरुच्यते ॥ २८ ॥
लिङर्थस्य प्रयोक्तृत्वं ततश्चेष्टं न सिध्यति ।

### फलस्य प्रवर्त्तकत्वतिरासः

नन्विच्छाजननेनान्यत्सर्वैरिष्टं प्रवर्त्तकम् ॥ २९ ॥
साक्षात्प्रवृत्तिहेतुत्वादतः सैव लिङोच्यते ।
तद्द्वारेण लिङर्थत्वात्फलं तेन प्रवर्त्तकम् ॥ ३० ॥
नैतद्युक्तं फलेच्छायाः पुंव्यापारतया पुमान् ।
अस्मिन्पक्षे प्रयोक्ता स्यात् प्रवर्त्यत्वात्स नेष्यते ॥ ३१ ॥
फलस्य प्रीतिरूपत्वं लिङुक्तं चेत्प्रवर्त्तना ।
फल एव प्रवर्त्तेत नान्यत्रातिप्रसङ्गतः ॥ ३२ ॥

अथाव्यापाररूपत्वात्प्रवृत्त्यविषयत्वतः ।
फलस्य साधनेऽङ्गावतारन्यायात्प्रवर्त्तते ॥ ३३ ॥
ततः साधनबोधात्प्रागप्रवृत्तेः प्रवर्त्तना ।
वरं साधनतैवास्तु न क्लेशात्प्राप्तिरूपता ॥ ३४ ॥
तस्याथ कर्म्मधर्मत्वात्कर्मैव स्यात्प्रवर्त्तकम् ।
प्रवृत्तिविषयत्वाच्च न तद्युक्तं प्रवर्त्तकम् ॥ ३५ ॥
साध्यता फलधर्मोऽथ लिङुक्तः सन्प्रवर्त्तना ।
नासौ पूर्वमसिद्धत्वात्प्रवर्त्तयितुमर्हति ॥ ३६ ॥
अथानुष्ठेयतारूपं कार्यत्वं स्यात्प्रवर्त्तकम् ।
ततोऽर्थभावनैव स्यात्तद्रूपत्वात्प्रवर्त्तिका ।
सा चाख्यातान्तरे भावात्प्रवृत्तिव्यभिचारिणी ॥ ३७ ॥
कालसंबन्धतोऽर्थानुष्ठेयत्वप्रतिबन्धनात् ।
तत्राप्रवृत्तिरित्येतत्किं स्यादिति निरूप्यताम् ॥ ३८ ॥
कृत्यात्मभावना या हि न कृतिव्याप्यतां विना ।
जन्यत्वं प्रागसिद्धत्वात्फलस्येवाप्रवर्त्तकम् ॥ ३९ ॥
अथानिष्पन्नरूपत्वं तदभावेऽपि विद्यते ।
तस्मात्क्रियात्मकं कार्यमथ वा तत्फलात्मकम् ॥ ४० ॥
न ताभ्यामतिरिक्तं वा पूर्वमस्ति प्रवर्त्तकम् ।
अत एवेष्टहेतुत्वं न तदेकार्थसङ्गतम् ॥ ४१ ॥
प्रवर्त्तकं नापि शुद्धं चन्द्रादौ व्यभिचारतः ।
शुद्धस्य च लिङर्थत्वे कर्त्तव्यत्वात् प्रतीतितः ॥ ४२ ॥
भवेन्नाकरणे दोषो निष्कामेष्वपि कर्म्मसु ।
न च द्रव्यगुणादीनां क्वचित्स्यादिष्टहेतुता ॥ ४३ ॥
प्रत्ययेन प्रकृत्यर्थान्वयिस्वार्थाभिधानतः ।
कर्त्तव्यत्वविशिष्टस्य वाच्यत्वं तु न युज्यते ॥ ४४ ॥
कर्त्तव्यत्वाविनाभावात्तत्प्रतीत्युपपत्तितः ।
नन्विष्टहेतुतामात्रं लिङा तावन्निरूप्यते ॥ ४५ ॥
कस्येष्टमित्यपेक्षायामेकप्रत्ययवाच्यया ।
कर्त्तुर्भावनयाक्षिप्तस्येत्येवं गमयिष्यते ॥ ४६ ॥
क्रियायां चाप्रवृत्तस्य कर्त्तृत्वानुपपत्तितः ।
प्रवृत्तिविषयत्वाख्यं कर्त्तव्यत्वं प्रतीयते ॥ ४७ ॥
एवं तु वर्त्तमानापदेशेऽप्येतत्प्रतीतितः ।
कर्त्विष्टसाधनत्वस्य तद्बलेनैव कल्पनात् ॥ ४८ ॥

लिङाद्यवाच्यतापत्तेरप्रामाण्यं विधेर्भवेत् ।
प्रवृत्तिविषयत्वं च नेच्छा विषयतां विना ॥ ४९ ॥
युक्तमिच्छाप्रवृत्त्योर्हि परशुच्छिदयोरिव ।
भिन्नगोचरता न्याय्या न हेतुफलभावतः ॥ ५० ॥
अत एवेष्टहेतूनां स्वबुद्धया यो ऽयमिच्छति ।
प्रवर्त्तते स तत्रैव नानिष्टेऽपीष्टसाधने ॥ ५१ ॥
तेनेष्टसाधनत्वस्य सद्भावे ऽप्यप्रवृत्तितः ।
प्रवृत्तिव्यभिचारित्वान्न प्रवर्त्तकतोचिता ॥ ५२ ॥
इच्छात्वव्यभिचारित्वाद्भवेत्पुसां प्रवर्त्तिका ।
स्वरूपसत्तामात्रेण न तु ज्ञानमपेक्षते ॥ ५३ ॥
अथापि ज्ञायमानाऽसौ कारणं स्यात्तथापि तु ।
स्वप्रत्यक्षैकगम्यत्वान्नाभिधानमपेक्षते ॥ ५४ ॥
एतत्सर्वं पूर्व्वपक्षी मनस्याधाय पृच्छति ॥ ५५ ॥

**स्वमतेन विध्यर्थनिरूपणम्**

कथमिति । उत्तरमाह—इह हीति । अयमाशयः स्वतन्त्रपुरुषप्रवृत्तिर्द्विधा लोके दृश्यते । क्वचित्स्वेच्छयार्थेषु स्वार्थः प्रवर्त्तते, क्वचिदन्यप्रेरितः । आचार्यप्रेरितोऽहं गामानयामि न स्वेच्छयेत्यादिव्यवहारदर्शनात् । यद्यप्याचार्यादिरप्यनिच्छन्तं न शक्नोति प्रवर्त्तयितुम्, तथापि स्वारसिकेच्छारहितमपि शिष्यादिकं स्वप्रवर्त्तनाबलेनेच्छामुत्पाद्य प्रवर्त्तयतीति सर्वसाक्षिकम् । तस्माच्छब्दश्रवणानन्तरभाविन्यां प्रवृत्तावाचार्यादेः प्रवर्त्तनाज्ञापनेन[1] प्रवर्त्तकत्वमवसीयते ।

का पुनः प्रवर्त्तना ? प्रवृत्तिहेतुभूतः प्रवर्त्तयितुर्धर्मः [2]कश्चिदिति ब्रूमः । स्वातन्त्र्ये देवदत्त एव मां प्रवर्त्तयति न यज्ञदत्त इति व्यवस्थानुपपत्तेः प्रवर्त्तनाज्ञापनमात्रेण प्रवर्त्तकत्वे देवदत्तस्त्वां प्रवर्त्तयतीति प्रवर्त्तनाद्यज्ञदत्तस्यापि प्रवर्त्तकत्वप्रसङ्गः । सर्वत्र लोके पुरुषस्याचार्यादेः प्रवर्त्तयितुर्द्धर्म्मोऽहमेनं प्रवर्त्तयामीति प्रवर्त्तयितुर्म्मानसप्रत्यक्षवेद्यः प्रैषादिरूपो नापह्नोतुं शक्यते । वेदे तु पुरुषाभावेन लिङादेरेव प्रवर्त्तकत्वात्तद्धर्म्मो भविष्यति । कथमज्ञातपूर्वेण प्रवर्त्तयितुर्द्धर्म्मेणाव्युत्पन्नो बालः प्रथमं लिङादेः संबन्धं गृह्णातीति चेत् ? अलौकिकप्रवर्तनायां शक्तिग्रहोपायवर्णनां पश्य यदा बुभुक्षितस्य बालस्य रोदनेन स्तन्यदानप्रवर्त्तनां ज्ञात्वा स्तन्यदाने माता प्रवर्त्तते, तदासौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्त्तनायां कारणत्वं प्रकल्प्य गामानयेत्यादिवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यामपि प्रवर्त्तना-

---

१. स्वप्रवर्तनाज्ञापनेनेत्यर्थः ।
२. प्रवर्तयितुर्धर्मं इति २ पु० पा० ।

ज्ञानकारणकत्वमनुमाय तत्कारणजिज्ञासायां लिङादिशब्दश्रवणानन्तर्यात्तस्यैवान्वयव्यतिरेकाभ्यां प्रवर्त्तनाभिधानशक्तिं कल्पयद् केन वार्यते ।

तत्र च प्रैषादीनां विशेषाणां व्यभिचारित्वेनावाच्यत्वात्सर्वानुयायिनः प्रवर्त्तनासामान्यस्य वाच्यत्वेऽवगते, तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्म्माणां वेदेऽनुपपत्तेस्तद्विलक्षणं विशेषान्तरमभिधेयेन सामान्येन विधिप्रेरणानियोगाख्यं लक्ष्यते । अतो गृहीतसंबन्धतया लिङादिवाच्येन प्रवर्त्तनासामान्ये तद्विशेषस्य प्रेरणाख्यस्य लक्षणयाऽवगतिसम्भवात् संबन्धाग्रहणमदोषः । तस्य च प्रवर्त्तनासामान्यविशेषत्वेन हेतुना प्रैषादिदृष्टान्तेन प्रवर्त्तयितृधर्म्मत्वानुमानाद्वेदे च पुरुषाभावात् भावनादेश्च[1] प्रवृत्तिविषयत्वेन तदानीमसत्त्वात् प्रवर्त्तकत्वानुपपत्तेः । पारिशेष्याल्लिङादेरेव प्रवर्त्तकत्वावधारणात्तदीयत्वसिद्धेर्न लिङादिशब्दस्वरूपाभिधानापत्तिः । प्रवृत्तिविषयत्वस्य च श्रेयःसाधनत्वाक्षेपकत्वेन लिङादेः पुरुषार्थौपयिकत्वेनानुविधेयत्वात्प्रवर्त्तकत्वाव्याहृतिः ।

### तस्य श्रेयस्साधनत्वाक्षेपः

कथं श्रेयःसाधनत्वाक्षेपकत्वमिति चेत् ? पश्य, प्रवर्त्तना तावत् प्रयत्नरूपभावनाविषया सर्वत्रावधार्यते । गामानयेत्युक्ते गवानयने प्रयतमानस्य कुतश्चित्कारणाद् गवानयनासिद्धावपि मदाज्ञामयं कृतवानित्याज्ञप्तुर्व्यवहारदर्शनात् इतो ऽपसरेतिचोक्ते स्वयमप्रयतमानस्य बलात्केनचिदपसारितस्य जातेऽप्यपसरणे, नायं मदीयामाज्ञां कृतवानित्याज्ञप्तुर्व्यवहारदर्शनात् । चेतनप्रवर्त्तकत्वाच्च प्रवर्त्तनायास्तस्य च प्रयत्नमन्तरेणान्यत्राप्रवृत्तेः प्रयत्नविषयत्वसिद्धिः प्रयत्नश्चेच्छाकारणकत्वात् तां विना नोपपद्यते । सा च स्वरसतः पुरुषार्थ एव स्वर्गपुत्रपश्वादौ भवन्ती साधनमन्तरेण तदसिद्धेस्तत्सिद्धयर्थं तत्साधने[2] संक्रामेत् । तेन स्वयमपुरुषार्थस्य यागादेः पुरुषार्थसाधनत्वं विनेच्छाविषयत्वानुपपत्तेः प्रवृत्तिविषयत्वासम्भवेन तत्र लिङादेः प्रवर्त्तकत्वायोगात्तन्निर्वाहार्थं पुरुषार्थसाधनत्वाक्षेपकत्वसिद्धिः ।

न चैवं[3] पुरुषार्थसाधनत्वावगताविच्छात एव प्रवृत्तिसिद्धेः कारणकारणत्वेनान्वयव्यतिरेकयोरन्यथासिद्धत्वाल्लिङादीनामप्रवर्त्तकत्वं प्रसज्येतेति शङ्कनीयम् । न हि यत्सिद्धयर्थं यत्कल्प्यते, तेनैव तद्बाधोचिता, कल्पकाभावेनात्मोपमर्द्दप्रसङ्गात् । यथैव च श्रेयःसाधनत्वाकल्पने प्रवर्त्तकत्वानिर्वाहात् तन्निर्वाहाय श्रेयःसाधनत्वं कल्प्यते, तथैव[4]

---

१. वृत्तेरप्यौपाधिकवृत्तिविषयत्वस्वीकारादित्यर्थः । २. तदिति २ पु० ना० ।

३. इष्टसाधनताज्ञानस्येच्छाजनकत्वात् तद्द्वारैव वृत्तिरित्यर्थः ।

४. यथा श्रेयःसाधनव्यतिरेकेण विधिना पुरुषो यागे प्रवर्तयितुं न शक्यत इति प्रवर्तकतानिर्वाहाय तत्कल्प्यते तथा प्रवर्तकत्वनिर्वाहाय विहितरूपेण श्रेयःसाधनत्वं कल्पयिष्यते अन्यथास्वरूपे सति श्रेयःसाधने इच्छयैव प्रवृत्तेः प्रवर्त्यस्य फलाभावात् विधेः प्रवर्तकत्वं न स्यादित्यर्थः ।

स्वरूपेण यागादेः श्रेयःसाधनत्वे सति इच्छयैव प्रवृत्तिसिद्धेर्लिङादीनां प्रवर्त्तकत्वानिर्वाहाद्विहितस्वरूपेण श्रेयःसाधनत्वं कल्पयिष्यते। तथा च लोकेऽपि स्वाम्याज्ञामन्तरेण स्वेच्छया गवानयनादौ कृतेऽपि न तत्फलं वेतनं लभ्यते। तस्मात्प्रवर्त्तकान्तरासम्भवेऽपि प्रेरणाज्ञापनेन लिङादेर्वेदे प्रवर्त्तकत्वं सिद्धम्। सा च प्रेरणा प्रवृत्त्युत्पादकव्यापारत्वाद्भावनाशब्देन गीयते, भाव्योत्पादानुकूलस्य व्यापारस्य भावनात्वप्रसिद्धेः। व्यापारत्वं च तस्याः सिद्धरूपत्वे निर्व्यापारायाः प्रवृत्त्युत्पादकत्वासम्भवेन ज्ञानस्य च ज्ञेयव्यापारत्वायोगाद्व्यापारान्तरकल्पनापत्तेर्गौरवपरिहारार्थं कल्प्यते। प्रेषणाध्येषणादीनामपि पुरुषाशयविशेषाणामनेनैव न्यायेन व्यापारत्वाध्यवसानं द्रष्टव्यम्। व्यापारस्य च व्यापारवतोऽत्यन्तभेदाभावाच्छब्दात्मिकेत्युक्तम्। एतामेव शब्दात्मिकां शब्दस्यात्मनो व्यापारं भावार्थाधिकरणे तत्रार्थात्मिकायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः, सा द्वितीया। शब्दधर्मोऽभिधात्मिका भावना विधिरित्युच्यते (भा० पृ० ३४४) इत्यनेन स्वयमेव विवरिष्यति। लौकिकानां प्रवर्त्तनाविशेषाणां पुरुषधर्म्मत्वेन शब्दात्मकत्वायोगात् वेदविषयत्वं शब्दभावनाया दर्शयितुमिहेत्युक्तम्। प्रवर्त्तनाविशेषशब्दभावनाविषयभूतायाः प्रयत्नरूपभावनायास्तत्फलप्रवृत्तिविषयत्वसिद्ध्यर्थं श्रेयोहेतुत्वाक्षेपकत्वायाऽर्थशब्दाभिधेयार्थयितृचेतनधर्मार्थनापरम् पर्य्यायिच्छायोनित्वसूचनार्थमर्थात्मकत्वाभिधानमिति सर्वं मनोहरम्।

ननु सत्यपि भावनाद्वये कथाऽर्थवादानां ग्रहणम् अत आह—तत्रेति। अनेन च ग्रन्थेनार्थवादानामर्थभावनांशाप्रतिपादकत्वेऽपि तदनुष्ठापकशब्दभावनाङ्गत्वेनार्थभावनाख्यक्रियार्थत्वं दर्शितम्। कथं तया ग्रहणमत आह—सा हीति। सा शब्दभावना यस्मादेवं वक्ष्यमाणेन प्रकारेण प्रवर्त्तते अध्ययनविधिवशात्कार्यत्वेन प्रतीयते, तस्मात्तदङ्गभूतस्य प्राशस्त्यज्ञानस्य तद्द्वारेण कार्यत्वावगमात् साधनापेक्षायामर्थवादानां तत्साधनतयाऽध्ययनविधिनैव विनियोगाद्दर्शपूर्णमासभावनयैव प्रयाजाद्यङ्गभूतद्रव्यदेवतादेः शब्दभावनया ग्रहणं युक्तमित्यर्थः। शब्दभावनायास्तु कार्यत्वाप्रतीतौ तद्द्वारेण प्राशस्त्यज्ञानस्य कार्यत्वानवगमात्साधनानपेक्षत्वेन स्वरसतोऽसमर्थानामर्थवादानां लाक्षणिकप्राशस्त्यज्ञानार्थत्वायोगात् तादर्थ्येन तया सहग्रहणं न स्यादिति, तमेव प्रकारं दर्शयति—**स्वाध्यायाध्ययनविधिनेति**। अध्ययनविधिना हि अधीतैरक्षरैर्यथाशक्ति पुरुषस्योपकर्त्तव्यमिति शक्त्यनुसारेणाक्षराणि विनियुञ्जानेन लिङादीनि सामर्थ्यात्प्रवर्त्तने विनियुज्यन्ते। तत्र चैषां प्रवर्त्तयितृपुरुषाभावेन स्वातन्त्र्यात्कर्तृत्वमवसीयते। स्वतन्त्रकर्त्तुश्चानियुक्तस्य वैधविनियोगान्नियोज्यत्वं लिङादीनां कल्प्यते।

नन्वस्तु नाम विधायकान्तराणामध्ययनविधिनियोज्यत्वम्, तस्य चात्मनि नियोगायोगेनात्मना नियोज्यत्वासम्भवात् तद्विषयविधायकान्तराभावाच्च तद्व्यापाररूपायाः शब्दभावनायाः कार्यत्वाभावात्प्रेरणाज्ञानजननमात्रेण कृतार्थतया प्रवृत्त्या ग्राहकत्वाभावे

सति; तद्विषयभूतस्य वेदाध्ययनस्य पुरुषार्थानुबन्धित्वाक्षेपप्रमाणाभावाद्वेदस्यानर्थक्यं स्यादित्याशङ्कामपाकर्त्तुम्—**स्वाध्यायपदोपात्तश्चात्मेत्युक्तम्** । अयमभिप्रायः—न तावदचेतनानां लिङादीनां स्वसम्बन्धिप्रेरणाबोद्धृत्वलक्षणं नियोज्यत्वं मुख्यं युज्यते, प्रवृत्त्या ग्राहकत्वं तु तेषां पुरुषार्थानुबन्धित्वायाध्ययनविधिना शक्त्यालोचनेन पुरुषो ज्ञाप्यते स्वारसिकेच्छारहितस्य चादरापरपर्य्यायग्रहकारित्वं नियोज्यस्यैव दृष्टमित्यौपचारिकमिह नियोज्यत्वम् । अर्थवादान्वयाय शब्दभावनाया विधेयत्वसिद्धचर्थं विवक्षितं तच्चाध्ययनविधावपि समानम् । तस्य च स्वरूपेण नियोक्तृत्वं स्वाध्यायपदोपात्तत्वरूपेण विधायकान्तरसाधारण्येन नियोज्यत्वमित्यौपचारिकभेदाश्रयणात् न विरुद्धमिति । भावयेदिति च विधिः प्रेर्यान्वयात् प्राग्विषयान्वयपक्षे लिङादिप्रेर्यान्वयवशेन व्यापारविशेषानवगमात्सामान्यविवक्षयोक्तम् । अत्र भाव्याकाङ्क्षायां यच्छक्यते तदित्यवधारणात् शक्तिप्रदर्शनपूर्वकं पुरुषप्रवृत्तेर्भाव्यत्वं दर्शयति—**तत्रेति** । येन लिङादीनां प्रवर्त्तकत्वे शक्तिः, पुरुषस्य च प्रवर्त्यत्वे, तेन कारणेन भावनाया भाव्याकाङ्क्षायां पुरुषप्रवर्त्तनं भाव्यत्वेन संबन्ध्यत इत्यर्थः । प्रवृत्तेः प्रयोज्यव्यापाररूपत्वात्प्रयोज्यान्वयं विना भाव्यत्वासम्भवाच्चेतनं प्रवर्त्तकत्वेन श्रेयस्साधनत्वाक्षेपपर्यन्तत्वसूचनार्थं पुरुषविशेषणम् । प्रेर्यान्वयपूर्वकविषयान्वयपक्षे तु प्रवर्त्तनाख्ये व्यापारविशेषे एव लिङादेः शक्त्यवधारणात्तत्रैव नियोगकल्पनायां किमंशापेक्षां पुरुष एव पूरयिष्यतीत्याह—**अथ त्विति** । लिङादिविषया क्रिया प्रवर्त्तयेदित्येवं विशेषरूपेणोच्यते—विधेयतया प्रतिपाद्यत इत्येव योज्यम् ।

नन्वचेतनत्वाल्लिङादीनां नियोज्यावगमपूर्वकप्रयोजककर्तृत्वानुपपत्तेः कथं तद्वशेन पुरुषप्रवर्त्तनस्य भाव्यत्वाभिधानमित्याशङ्कयाह—**यद्यपि चेति** । अध्ययनविधिना लिङाद्यध्ययने नियुज्यमानस्य पुरुषस्य कतमं ममोपकारं करिष्यन्तीत्यपेक्षायां प्रवर्त्तनाज्ञापनद्वारेण पुरुषार्थसाधनबोधरूपमिति सामर्थ्यालोचनेनावगतौ सत्यां प्रवर्त्तनाज्ञापनमात्रपर्यवसाने पुरुषार्थसाधनत्वाक्षेपायोगादनुपकारकत्वोपपत्तेर्मातापित्रादिवदाग्रहेणेष्टसाधनेषु कर्म्मसु प्रवर्त्तयिष्यन्तीति प्रवृत्त्या ग्राहकत्वावगतिर्भवति । तेन लिङादिभिरवश्यं प्रवर्त्तनीय इति लिङादिविषयनियोगावगतिर्या पुरुषस्य भवति; तां लिङादिषु उपचर्य प्रयोजकत्वव्यवहारोऽयमित्यर्थः । न चैतत्स्वोत्प्रेक्षामात्रेणास्माभिर्लिङादीनां प्रयोजकत्वमुच्यते, किं तु कर्तृवाचिण्वुल्प्रयोगादन्यैरपि अभियुक्तैरङ्गीकृतमित्यवसीयत इत्याह—**यदि चेति** ।

करणाकाङ्क्षां शक्त्यालोचनेन प्रेरणाज्ञानस्यान्वयं दर्शयति—**अथेति** । विधेरलौकिकत्वेन लिङादिप्रतिपाद्यत्वासम्भवमाशङ्क्य प्रवर्त्तनासामान्येन पूर्वोक्तरीत्या सम्बन्धग्रहणसम्भवात्[1] लिङाद्यभिहितेन लक्षणया तत्प्रतिपादनसम्भवप्रदर्शनार्थं पूर्वसम्बन्धानुभवापेक्षेणेत्युक्तम् ।

---

१. विधिज्ञानं सम्बन्धज्ञानं तयोरित्यर्थः ।

इतिकर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानस्यान्वयं दर्शयति—**कथमिति**। ननु विधिज्ञानमात्रेण प्रवृत्तिसिद्धेरन्यानपेक्षत्वात्कथमित्यपेक्षाप्रदर्शनमयुक्तम्। अथापि भावनान्तरदृष्टान्तेनाऽत्रापि कथम्भावनाकाङ्क्षा स्यात्। तथापि विधिसम्बन्धज्ञानयोरेव कारणेतिकर्त्तव्यतात्वसम्भवात्प्राशस्त्यज्ञानस्याज्ञातशक्तिकस्येतिकर्त्तव्यतात्वाभिधानमयुक्तमित्यभिप्रायद्वयेन पृच्छति—**कुत एतदिति**। एतत्कथमित्यपेक्षणं प्राशस्त्यज्ञानस्य चानुग्राहकत्वं कुत इत्यर्थः। उत्तरम्—**बुद्धिपूर्वेति**। विध्यन्यथानुपपत्त्ये[1] ष्टसाधनत्वावगमात् प्रवृत्तिहेत्विच्छोत्पत्तावपि द्रव्यव्ययायासदर्शनेनापि अनिष्टसाधनत्वावगमात्प्रवृत्तिप्रतिबन्धकालस्यहेतुद्वेषसम्भवे प्रवृत्त्यभावप्रसङ्गात्तदपनायकापेक्षायां प्राशस्त्यज्ञानस्य लोके तदपनयशक्तत्वेन दर्शनाद्युज्यतेऽनुग्राहकत्वमित्यभिप्रायः। उत्तभ्नातीत्यनेन प्रतिवन्धकापनायकत्वं दर्शितम्।

ननु प्रवृत्तिकारणेच्छाविरोधिद्वेषनाशाय प्राशस्त्यज्ञानापेक्षणे फलांशेऽपि तदपेक्षोपपत्तेः स्वर्गस्वरूपप्रतिपादकानामपि वाक्यशेषाणां प्राशस्त्यपरत्वेन स्वरूपपरत्वाभावसङ्गात् न लौकिकसुखातिरिक्तस्वर्गसिद्धिः स्यादित्याशङ्क्याह—**तच्चेति**। अयमभिप्रायः—अङ्गप्रधानयोरेव[2] विषयत्वात्प्रेरणाविषय एव प्राशस्त्यज्ञानस्य कार्यत्वावगतेः फलांशे च स्वारसिकेच्छात एव प्रवृत्तिसिद्धेरानर्थक्यप्रसङ्गात्, प्रेरणानुपपत्तेः प्राशस्त्यज्ञानस्य कार्यत्वाभावात्, साधनानपेक्षत्वेनार्थवादाग्रहणात्स्वर्गसाधनतो विध्यपेक्षितस्वर्गस्वरूपप्रतिपादनार्थानां वाक्यशेषाणां प्राशस्त्यपरत्वाभावात्स्वरूपे प्रमाण्यं न विरोत्स्यत इति। क्व तर्हि प्राशस्त्यज्ञानस्य साधनापेक्षेत्यत आह—**साधनेति**। साधनेतिकर्त्तव्यताविषये प्राशस्त्यज्ञानस्य साधनभूतशास्त्राकाङ्क्षायामपि फलपदादिभिरेव[3] तत्सिद्धिसम्भवात्कथमर्थवादानां तादर्थ्येन शब्दभावनया ग्रहणमित्याशङ्क्य यथासम्भवं साधनान्तराणि निराकर्त्तुमुपन्यस्यति—**तत्पुनरिति**। तत्प्राशस्त्यप्रतिपादनं केन शास्त्रेण क्रियेतेत्यर्थः। निराकरोति—**तत्रेति**। दूषणगणोपन्यासार्थस्तत्र शब्दः।

ननु यद्यन्यार्थत्वे प्राशस्त्यार्थत्वं न युज्यते, प्राशस्त्यार्थत्वमेव केवलमस्त्वत आह—**विध्युत्तरेति**। पूर्वोपेक्षितार्थत्यागो न युक्त इत्यभिप्रायः[4]। कारणान्तरमाह—**लक्षणया चेति**। फलाभावापत्तेरपि प्राशस्त्यार्थत्वं न युक्तमित्याह—**युगपच्चेति**। ननूभयपरत्वायोगात् फलादिषु तात्पर्याभावेऽपि प्रतीयमानत्वात्फलादीनां सिद्धिः स्यादत आह—**न हीति**।

---

१. इच्छोत्पादनद्वारा प्रवर्तकत्वम्; इच्छा चेष्टसाधनत्वज्ञानं विना न संभवतीति अनुपपत्तिशब्दार्थः।

२. अङ्गप्रधानयोरेव विधिविषयत्वान्न फलांशस्य विषयत्वमित्यर्थः।

३. आदिग्रहणाद्देवतापरिग्रहः यस्मादेतत्फलकर्म तद्देवताकं तस्मात्प्रशस्तमित्यर्थः।

४. साध्यसाधनेतिकर्तव्यताविशिष्टायां भावनायां सिद्धायामेवोद्देश्यत्वन्ततश्च पूर्वमेव फलत्वेनानन्वय इत्यर्थः।

वक्ष्यत इत्यपापश्लोकश्रवणादीनां प्रशंसार्थत्वेनोपात्तानां फलत्वाभावः पर्णमय्यधिकरणे, जर्तिलयवाग्वा वा जुहुयादित्यादौ लिङो विधित्वाभावो जर्तिलयवाग्वादेश्चेतिकर्त्तव्यत्वाभावो दशमे वक्ष्यमाणः परामृष्टः। यत एवोक्तप्रकारेण प्राशस्त्यपरत्वे फलाद्यभावः प्रसज्यते, अत एवानन्यलभ्यफलादिपरत्वावधारणान्नार्थात्प्रतीयमानेऽपि प्राशस्त्ये फलपदादीनां तात्पर्यमित्याह—**अत एवेति**। एतदेव दृष्टान्तद्वारेणोपपादयितुमाह—**न हीति**। धावनक्रियैवानिष्पन्नरूपत्वात्कार्यशब्देनोक्ता न तेनान्वीयन्त इत्यर्थः। दार्ष्टान्तिके योजयति—**तद्वदिति**। इच्छाविरोधिद्वेषनाशवाचिना प्ररोचनाशब्देन तद्धेतुभूतगुणातिशयवत्त्वलक्षणं प्राशस्त्यं लक्षणया व्युत्पत्त्या वोक्तम्।

ननु यथा प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यादीनां प्राशस्त्यपराणामप्याकाङ्क्षितफलसमर्थकत्वमङ्गीकृतम्, तथा भूतिकामादिशब्दानां फलादिपराणामप्याकाङ्क्षितप्राशस्त्यसमर्थकत्वमपि कस्मान्न स्यादित्याशङ्क्याह—**अन्यथानुपपत्त्या चेति**। प्रकारान्तरेण फलप्रतीत्ययोगादगत्या तत्र तथाङ्गीकृतम्, न चेहागतिरस्तीत्याभिप्रायः। नन्वर्थवादानां स्वरसतः प्राशस्त्यप्रतिपादनशक्त्यभावात् इहापि सर्वप्रमाणप्रत्यस्त्यमयादगतिः समनेत्याशङ्क्याह—**प्रमाणाभावश्चेति**। स्वरसतोऽशक्तावपि लक्षणया तत्प्रतिपादनशक्तिसम्भवान्न प्रमाणाभावनिश्चय इति भावः।

नन्वेवं तर्हि 'वसन्ताय कपिञ्जलानालभते' इत्यादावपि अर्थवादाकाङ्क्षा प्रसज्येतेत्याशङ्क्याह—**तद्वदीति**। अतिदेशग्रहणं तस्योक्तो बन्धुस्तस्योक्तं ब्राह्मणमित्यादिवाचनिकातिदेशविषयं द्रष्टव्यम्। श्रुतविध्यन्यथानुपपत्त्यैव प्राशस्त्यकल्पनोपपत्तावसन्निहितार्थवादातिदेशकल्पने प्रमाणाभावात्[1] कल्पने वा वसन्तादिवाक्येष्वपि अग्नीषोमीयप्रकृतित्वेन तदीयार्थवादातिदेशसम्भवाद्विध्युद्देशस्य शक्तिद्वयकल्पनं निरवकाशमेव स्यात्—**दर्विहोमन्यायेनेति**। यथा दर्विहोमेषु भिन्ने जुहोतीत्यादिजुहोतिचोदनविहितेष्वविहितेतिकर्त्तव्यताकेष्वपि प्रकृतिविशेषानिर्द्धारणान्नियतविध्यन्तातिदेशानुपपत्ते रनियमसर्वातिदेशयोश्चाष्टमाद्ये निराकृतत्वात् अपूर्वत्वेनाष्टमान्ते वक्ष्यमाणेषु यावच्छ्रुतस्य द्रव्यदेवतादेरितिकर्तव्यताजातस्य सन्निपत्योपकारित्वेन नियमापूर्वद्वारा करणपूर्वोत्पत्तिमात्रे पर्यवायितया अन्यत्रावधारितस्याप्यगत्यारादुपकारकाङ्गसाध्यकरणानुग्रहसाधनत्वमपि कल्पितम्। तथा वसन्तादिवाक्येष्वपि विधायकस्यैव करणभूतविधेयज्ञानोत्पत्तिमात्रपर्यवसायितयान्यत्रावधारितस्याप्यगत्याङ्गभूतप्राशस्त्यज्ञानेऽपि व्यापारः कल्पयिष्यत इत्यर्थः। लक्षणया प्रेरणापरनामधेयस्य विधेः प्रतिपादनात्प्राशस्त्यस्य चान्यथानुपपत्त्याक्षेपाच्छक्तिशब्दो

---

१. ननु कथंचिच्चोदनलिङ्गानुमितवचनादेवार्थवादातिदेशकल्पना भविष्यत्यत आह **प्रमाणाभावादिति**। अयं भाव काल्पनिकातिदेशस्यार्थभावनेतिकर्तव्यतानिदेशकल्पकत्वात् अर्थवादानां च प्राशस्त्यप्रतिपादनेन शब्दभावनेतिकर्तव्यताङ्गत्वेन तदंशाप्रतिपादकत्वादिति प्रत्यक्षवचनस्य निर्विषयत्वं च स्यादित्यपि बोद्धव्यम्।

व्यापाराभिप्रायो व्याख्येयः । अर्थवादाभावेऽपि विधेरेव स्वानुग्राहकप्राशस्त्याक्षेपकत्वं युक्तं न तु फलेतिकर्त्तव्यतापदानाम्, कथंचिदित्येवकारेण सूचितम् ।

योजना त्वेवं यस्मात्सर्वप्रकारं प्रयतमानस्य यः प्रमाणाभावः, स प्रमाणं तस्माद्यदि केनचिदन्येन प्ररोचनां न लप्स्यामह इति ।

कथंचित्त्वन्यतः प्ररोचनालाभसम्भवेऽन्यत्रोपयुक्तस्य विधायकस्य तदाक्षेपकत्वायोगाद्वायव्यादिवाक्येषु प्राशस्त्यज्ञानस्य साधनापेक्षा युक्तेत्याह—अथ त्विति । केनचिल्लक्षणयापि प्रतिपादकेन दूरस्थेनातिदेशिकेनापि यदि प्ररोचना सेत्स्यतीत्यर्थः ।

नन्वेवं प्राशस्त्यप्रतिपादनस्य साधनभूतप्राशस्त्यशास्त्रापेक्षायामप्यर्थवादानां तत्र शक्त्यनवधारणात्कथं तादर्थ्येन शब्दभावनया ग्रहणमित्याशङ्क्याध्ययनविध्यालोचनेनैवेषां प्राशस्त्यपरत्वं दर्शयितुमाह—**तथेति** । यथा लभेतेतिविधिः स्वविषयप्राशस्त्यप्रतिपादकं प्रति साकाङ्क्षः, तथा वायुर्वै क्षेपिष्ठा देवतेत्याद्यपि प्रतिपाद्यमर्थं प्रति साकाङ्क्षमेवेति यस्तेन भूतान्वाख्यानरूपेण वाक्यार्थेन[1] लक्ष्यमाणः प्राशस्त्यरूपोऽर्थः सोऽर्थवादप्रतिपाद्यत्वेन स्वाध्यायाध्ययनविधिना परिगृह्यत इत्यन्वयः । प्राशस्तस्यार्थवाद प्रयोजनत्वे योग्यतां दर्शयितुमनन्तरप्रवृत्तेत्याद्युक्तम् । विधिसम्बन्धद्वारा चेत्प्राशस्त्यस्य पुरुषार्थानुबन्धित्वं तर्ह्यर्थवादानां विधिनैव साक्षात्प्रतिपादकलक्षणः संबन्धोऽस्तु किमन्तरा प्राशस्त्येनेत्याशङ्क्य यच्छक्यत इत्याद्युक्तम् ।

न तावल्लिङादिवत्तस्य विध्यभिधाने शक्तिरस्ति, न च प्राशस्त्यलक्षणा श्रुतिविध्यैकवाक्यत्वसंभवे वाक्यभेदापादकप्राशस्त्यं विना विध्यनिर्वाहात् प्राशस्त्यलक्षणावश्यंभावेन गौरवापादकमश्रुतविध्यन्तरकल्पनं युक्तमित्याशयः । शक्त्यभावाच्चेन्न साक्षाद्विधिना संबन्धः ततोऽक्षरग्रहण एव साक्षाच्छक्तेः पर्यवसानप्रसङ्गाद्वाक्यार्थपर्य्यन्तमगमनात् कथं तेन प्राशस्त्यलक्षणा स्यादित्याशङ्क्य **अपुरुषार्थत्वेन** वेत्याद्युक्तम् । अक्षराणामादिरादानं ग्रहणमक्षरादिशब्देनोक्तम् । तत्रैव तर्हि श्रौततात्पर्यावसानमस्त्वित्याशङ्क्योक्तम्—**तत्रापि त्विति** । साधनानुरूपेत्यादिना लक्षणाप्रकारो दर्शितः । अयं चोभयाकाङ्क्षालक्षणत्वात्प्राशस्त्यार्थवादयोः प्रतिपाद्यप्रतिपादकत्वसंबन्धः समञ्जस एवेत्याह—**सोऽयमिति** । एवं चास्मिन्सन्निकृष्टे संबन्धे संभवति विधायकार्थवादयोः प्राशस्त्यविध्याकांक्षित्वेऽपि प्राशस्त्यविध्योरर्थवादविधायकप्रतिपादितत्वेन प्रतिपादकानाकाङ्क्षत्वादन्यतराकाङ्क्षालक्षणत्वेन[2] च विप्रकृष्टः प्राशस्त्यविधायकयोर्विध्यर्थवादयोर्वा प्रतिपाद्यप्रति-

---

१. ननु केवलार्थवादानां वाक्यत्वाभावाद्वाक्यार्थेनेत्ययुक्तम् । सत्यं वाक्यार्थेनेत्यस्यायमर्थः अर्थवादस्थाने कैः पदार्थैर्लक्ष्यत इति ।

२. अन्यतरेति विधायकस्य प्राशस्त्याकाङ्क्षायामपि प्राशस्त्यस्य तदनाङ्क्षत्वात्तस्यार्थवादैरेव प्रतिपादितत्वात् । एवमर्थवादानां विध्याकाङ्क्षासत्त्वेऽपि न विधेस्तदाकाङ्क्षाविधायकेनैव विधिप्रतिपादनादित्यर्थः ।

पादकसंबन्धो न युक्त इत्याह—**एवं चेति**। विधायकोपयोगं प्रसङ्गाद्वक्तुं न **चार्थवादै-रित्याद्युक्तम्**। दृष्टान्ततया वा।

नन्वेवमप्यन्यतरेणोभयकार्यसिद्धेरुभयाम्नानानर्थक्यमत आह—**आम्नानेति। उभयो-रिति** अर्थवादैरेव प्ररोचितं विधायकैरेव विहितं सदनुष्ठितं फलं साधयतीति अध्ययन-विधिरेव कल्पयिष्यतीत्यभिप्रायः उभयोरिति अर्थवादप्ररोचनयोरित्यर्थः।

एतमेव न्यायं निन्दार्थवादेष्वतिदिशति—**एतेनेति**। तत्रापि निषेधान्यथानुपपत्त्याऽ-निष्टसाधनत्वबोधान्निवृत्तिकारणाप्रीतिसम्भवेऽपि [1]तादात्विकेष्टसाधनत्वावगमान्निवृत्तिप्रति-बन्धकोत्साहकारणेच्छाप्रसङ्गे निवृत्त्यभावापत्तेरप्रीतिविरुद्धेच्छानाशाख्यप्रद्वेषोत्पादनशक्त-त्वेन दोषातिशयत्वलक्षणाप्राशस्त्यज्ञानस्य लोकेऽपि दर्शनान्निवृत्तिफलाया नञ्लिङादि-युक्तशब्दभावनाया निवारणापरनामधेयनिषेधज्ञानात्मककरणानुग्राहकत्वं तावदवसीयते, तत्र च साधनापेक्षायां पूर्वोक्तेनैव प्रकारेण सोऽरोदीदित्येवमादीनामध्ययनविधिबलात्सा-धनत्वावगतेस्तादर्थ्येन शब्दभावनया ग्रहणमनुसन्धेयम्। अप्रशस्तप्रत्ययाधीनोत्पत्तिरस्येति विग्रहः प्रशस्तग्रहणं दृष्टान्तार्थम्।

तस्मादध्ययनविधिबलेनार्थवादानां पुरुषार्थानुबन्धित्वाय लाक्षणिकस्तुतिनिन्दापरत्वाव-धारणारूपभङ्गेनैकवाक्यतासिद्धेति पूर्वाक्षिप्तैकवाक्यतासमर्थनोपयोगित्वम्।

तदुच्यते इत्यारभ्याध्ययनविधिव्यापारचर्चात्मकस्य वार्तिकखण्डकस्य दर्शयति—**अतश्चेति**। समभिव्याहारवशात्पूर्वमेवावगतस्यैकवाक्यत्वस्य परस्परनिरपेक्षत्वेनानुपपत्ति-प्रतिभासे अध्ययनविधिसामर्थ्यावधारितस्तुतिनिन्दापरत्वेनार्थवादानां विधिनिषेधग्रहणा-न्निर्वाहः कियत इति—**सिद्धिग्रहणेनोक्तम्**।

नन्वध्ययनविध्यवधारितपुरुषार्थपर्यवसायित्वात्तेनैव स्तुतिनिन्दापरत्वावसायात्किमिति महता प्रयासेनैकवाक्यत्वं साध्यतेऽत आह—**नित्यं चेति**। विधिनिषेधापेक्षावशा-ल्लक्षणाया स्तुतिनिन्दापरत्वं स्वरसतोऽप्रतीयमानमपि कल्प्यते, तदभावे तु प्राशस्त्याप्राश-स्त्यलक्षणाकारणाभावात्सिद्धवत्कीर्त्तनान्यथानुपपत्त्या ताभ्यामेव तमग्नीषोमीयमेकादश-कपालं पूर्णमासे प्रायच्छदित्यादिवेद्विधिकल्पनेनैव पुरुषार्थपर्यवसानसिद्धेरित्याशयः। वाक्य-शेषग्रहणेन स्वातन्त्र्ये सति स्तुतिनिन्दानिर्णयहेतुत्वाभावं दर्शयति तत्र कारणमाह—**न हीति**। अव्यवस्थामुपपादयति—**निन्दारूपास्विति**। अविधेयनिन्दात्वेनाभासमानासु परमार्थता निन्दाविपर्ययविधेयस्तुतित्वदर्शनाद्विधेयनिन्दात्वेनाविधेयस्तुतित्वेन चाभासमा-नानां परमार्थतस्तद्विपर्ययकेवलविधेयस्तुतित्वदर्शनादित्यर्थः।

यथाक्रममुदाहरणद्वयमाह—**यथेति**। प्रातः प्रातरनृतं ते वदन्ति पुरोदयात् जुह्वति येऽग्निहोत्रमित्यनुदिते होमनिन्दात्वेनाभासमानापि तस्मादुदिते होतव्यमिति विध्येकवाक्यत्वात् स्तुतिरेवेति शाखान्तराधिकरणे भाष्यकारो वक्ष्यति दाशमिकाधिकरणार्थसंक्षेपः।

---

१. तदात्वे भवं तादात्विकं तात्कालिकमित्यर्थः।

दशमे च त्रैयम्बकान्पुरोडाशान्प्रकृत्य पठितमभिधार्यास्त्रैयम्बका नाभिघार्या इति मीमांसते यदभिघारयेद्रुद्रायास्ये पशून्निदध्याद्यन्नाभिघारयेन्न रुद्रायास्ये पशून्निदध्यान्न सूक्ष्ममभिघार्या एव न ह्यनभिघृतं हविरस्तीति वाक्यमुदाहृत्य चिन्तयिष्यते किमभिघार्यानभिघार्या इति विधिप्रतिषेधार्थता उत नेति । तत्र हिंस्ररुद्रास्ये पशुनिधानापादकत्वेनाभिघारणस्य निन्दितत्वादनभिघारणस्य च तदनापादकत्वेन स्तुतत्वान्निषेधावगतेर्न ह्यनभिघृतं हविरस्तीति च हविःसम्पादककत्वेनाभिघारणस्य स्तुतत्वाद्विध्यवगतयोर्विकल्पे प्राप्तेऽभिधास्येते मीमांसासमभिव्याहारेण विधिनिषेधशक्तिप्रतिबन्धादभिघारणाभिघारणनिन्दास्तुत्योश्चाभिघार्या एवेति विध्येकवाक्यत्ववशेनाभिघारणस्तुतिपर्यवसायित्वावधारणान्न वाक्यभेदापादकं विधिप्रतिषेधार्थत्वं युक्तमिति ।

तत्र कथमभिघारणस्तुतिरित्यपेक्षिते वक्ष्यते, इत्थमभिघारणं प्रशस्ततरं यत्त्रैयम्बकानां दर्विहोमत्वेनापूर्वत्वादतिदेशतोऽप्राप्ते मीमांस्यमाने दोषोऽप्येवंविधोऽनभिघारणस्य च गुणो न गण्यते हविःसम्पादकत्वेन गुणवत्तरत्वादिति ।

न केवलं स्वातन्त्र्येऽन्यथाप्रतिभानादव्यवस्था किं तु सन्देहादपीत्याह—**सन्दिग्धेति** । तत्राप्युदाहरणमाह—**यथेति** । नावमिकाधिकरणार्थसंग्रहः । यथोक्तं नवमे यदृचा स्तुवते तदसुरा अन्ववायन्येत्साम्ना स्तुवते तदसुरा नान्ववायन्य एवं विद्वान्साम्ना स्तुवीतेत्युदाहृत्य किमृचा स्तुवत इति च विधानार्थम्, उत साम्ना स्तुवीतेत्येतद्विहितसामस्तुत्यर्थमिति चिन्तयिष्यते । तत्र य एवंविद्वान्साम्ना स्तुवीतेत्यस्य कर्तृप्रवृत्त्यनुवादियच्छब्दयोगेन य एव विद्वान्पौर्णमासीं यजत इत्यादिवद्विधिशक्तिप्रतिबन्धादितरयोस्तु क्रियास्वरूपमात्रानुवादियच्छब्दयोगेन यदाग्नयोऽष्टकपाल इत्यादिवद्विधिशक्त्यप्रतिबन्धादुभयविधिवशाद्विकल्प इति पूर्वपक्षिते, कथमसुरागमननिमित्तत्वेन निन्दिताया ऋचो विधिः इत्याशङ्क्य भाष्यकारो वक्ष्यति । न वयं निन्दितानानन्दितान् वासुरान्विद्म इति ।

भाष्यकारोक्तं सन्देहमुपपादयति—**कदाचिदिति** । सिद्धान्ते विध्येकवाक्यतावशेनैव निर्णय इत्याह—**तत्रेति** । स्तुवीतेतिप्रत्यक्षस्य विधेर्यच्छब्दयोगेऽपि प्राप्त्यभावेन य एवं विद्वान्सोमेन यजेतेतिवद्विधिशक्त्यप्रतिबन्धादितरयोस्तु वर्त्तमानापदेशत्वेन विध्यशक्तेरेकवाक्यत्वसम्भवे वानेकादृष्टानुबन्धिवाक्यभेदापादकविधिद्वयकल्पनायोगात्सामविध्येकवाक्यत्ववशेन सामस्तुत्यर्थमृचां निन्देति सिद्धान्ते निर्णय इत्यर्थः ।

ननु वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिङ्गमयतीत्यादीनाम्, यो बर्हिषि रजतं दद्यात्पुरास्य संवत्सराद् गृहे रोदनं भवतीत्यादीनां च पदानां स्वरसतो भूतान्वाख्यानार्थमपि लाक्षणिकस्तुतिनिन्दार्थत्वसम्भवेन विधिनिषेधैकवाक्यतावसायात्तात्पर्यनिर्णयो भवतु परिशिष्टानां वायुर्वै क्षेपिष्ठा देवतेत्यादीनां सोऽरोदीत्येवमादीनां च लक्षणयापि स्तुतिनिन्दार्थत्वाऽप्रतीतेर्विधिनिषेधैकवाक्यत्वसम्भवात्कथं तद्वशेन स्तुतिनिन्दापरत्वनिर्णयः, अतः

आह—**सर्व्वत्र चेति**। तेषामपि स्तावकनिन्दकपदैकवाक्यत्वेन स्तुतिनिन्दार्थत्वसम्भवात्तद्द्वारेण विधिनिषेधैकवाक्यत्वोपपत्तेः स्तुतिनिन्दापरत्वनिर्णय इत्यर्थः।

यत्र तर्हि न किंचिदपि पदं स्तावकं निन्दकं वोपलभ्यते आपो वै शान्ता इत्यादिषु तत्र पारम्पर्येणापि विधिनिषेधैकवाक्यत्वासम्भवात्कथं स्तुतिनिन्दापरत्वनिर्णयः, अत आह—**यत्रापीति**। तत्रापि वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीत्यादिविधिसन्निधिवशेन लक्षणया तद्विधेयवेतसावकास्तुतिप्रतीतेर्लक्षितलक्षणया वा विकर्षणस्तुतिप्रतीतेर्विध्येकवाक्यत्वात्तात्पर्यनिर्णय इत्यर्थः।

यद्वैतद्फक्किकाद्वयमेकवाक्यत्वाभिधानोपयोगप्रतिपादनपरतयैव व्याख्येयं विधिनिषेधैकवाक्यत्वाभावे केषुचित्पदेषु कथंचित्स्तुतिनिन्दाप्रतीतावस्यानर्थक्येनोपपादनानपेक्षत्वात्परिशिष्टानां पृथग्वाक्यत्वेन स्वरूपमात्रेण पर्यवसानं स्यात् तादृग्पदाभावे च स्तुतिर्वा निन्दा वाशङ्क्यैव न केवलेनैव स्यादिति।

ननु विधिनिषेधयोः स्तुतिनिन्दापेक्षायां तदभावे वसन्तादिवाक्येषु साकाङ्क्षत्वादप्रामाण्यं स्यादत आह—**विधीति**। विधिप्रतिषेधयोर्मध्येऽन्यतरदर्शनेन स्तुतिनिन्दयोर्मध्येऽन्यतरदनुमायेत्यर्थः।

एवं वैदिकार्थवादोपयोगं व्युत्पाद्य स्मृत्यधिकरणवक्ष्यमाणप्रामाण्यविद्यास्थानान्तरगतेष्वर्थवादेषु तमेव न्यायमतिदिशति—**एवं चेति**। इतिहासपुराणयोरर्थवादवहुत्वाद्भारतादीत्युक्तम्, नन्वध्ययनविधिबोधितपुरुषार्थानुबन्धित्वबलेन वैदिकार्थवादानां श्रौतार्थातिक्रमेण लाक्षणिकस्तुतिनिन्दापरत्वमवधारितम् अत्र तु कथमित्यशङ्क्याऽत्राऽप्यध्ययनविधिस्थानीयं विधिं दर्शयति—**तेषामपि हीति**। एतया निषादस्थपतिं याजयेदित्यादिवत् प्रयोज्यव्यापारत्वमभिप्रेत्य श्रावणविध्युपन्यासः, धर्म्मादीनां साध्यानां साधनप्रतिपत्तिरिति विग्रहः, धर्मादिचतुष्टयसाधनप्रतिपत्तिरुपादानाङ्गभूता, अधर्म्मादिचतुष्टयसाधनप्रतिपत्तिः परित्यागाङ्गभूतेति योज्यम्।

भारतोपक्रमे च

धर्म्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिद्। इति

जनमेजयस्य भारतश्रवणप्रवृत्तिसिद्ध्यर्थं धर्म्मादिचतुर्विधपुरुषार्थतत्प्रतियोगि च शब्दसूचिताधर्म्मादिसाध्यसाधनप्रतिपादनपरत्वाभिधानात्सर्वत्र यथासम्भवं तत्परत्वमुन्नेयमिति भावः।

ननु विधिनिषेधशून्यानां बहुशो भारतादिषु दर्शनात्कथं पुरुषार्थपर्यवासानकल्पनमित्वाशङ्क्य यथासम्भवं विभज्योपयोगं दर्शयितुमाह—**तत्रापि त्विति**। शङ्कानिरासार्थस्तुशब्दः। दानराजमोक्षाणां धर्मा इति द्वन्द्वगर्भः षष्ठीसमासः। दानस्येतिकर्त्तव्यताभूतो धर्म्मो राज्ञोऽनुष्ठेयः, मोक्षस्य साधनमादिशब्देन तपो ब्राह्मणायुदयादिसंबन्धि-

धर्मोपादानम्[1]। अनेन च ग्रन्थेन तत्सन्निधिपठितानामुपाख्यानानां तत्तद्विधिशेषत्वेनोपयोगो दर्शितः। विध्यश्रवणेऽप्येकानेककर्तृकत्वचरित्रकथनात्मकपरकृतिपुराकल्परूपेण यस्मात्पूर्वैर्महात्मभिरेवं कृतं तस्मादन्यैरपि कर्त्तव्यमिति विध्यनुमानातच्छेषत्वेनार्थवादतयोपयोगो भविष्यतीत्याह—**केचित्पुनरिति**। किमित्येवं क्लेशाङ्गीकरणमत आह—**सर्वोपाख्यानेषु चेति**। अन्यपरत्वादेव स्वार्थसत्यत्वमनाशङ्क्यमित्याह—**तत्परत्वाच्चेति**। ननु वेदस्यापौरुषेयत्वेनापर्यनुयोज्यत्वाद्यथाम्नातस्य न्यायबलेन तात्पर्यकल्पनं युक्तम्, भारतादौ त्वसत्योपाख्यानप्रणेतॄणां मूढत्वं विप्रलम्भकत्वं वा प्रसज्येतेत्याशङ्क्याविवक्षितोपाख्यानविस्तरप्रणयने कारणमाह—**वेदप्रस्थानेति**। एवमपि प्रक्रियामात्रत्वादबुद्धिपूर्वकारिता स्यादत आह—**प्रतिपाद्यानां चेति**। विचित्रबुद्धित्वमेव दर्शयति—**इहेति**। नन्वेवमपि केषाञ्चित्प्रतिपत्तिसिद्धौ शास्त्रप्रणयनार्थवत्त्वोपपत्तेरलं महता प्रबन्धेन अत आह—**सर्वेषां चेति**। न चासत्योपाख्याप्रणेतृत्वेन व्यासादीनामप्रत्यायितत्वाशङ्का धर्म्मादिविषयाणां विधिप्रतिषेधानां केषांचिच्छ्रुतिमूलत्वदर्शनेनाऽर्थादिविषयाणां च प्रमाणान्तरमूलत्वेनाप्तत्वावधारणादित्याह—**तत्रेति**। आदिशब्देनानर्थदुःखोपादानं न चोपाख्यानेष्वपि तेषामसत्यवादित्वं बहूनां वेदलोकमूलत्वात्स्वोत्प्रेक्षितानामपि काव्यवत् लोकरञ्जनार्थत्वेन विप्रलिप्साभावादित्याह—**तथेति**।

ननु धर्म्मादिविषयाणां स्मृतीनां वेदैकशरणत्वात् प्रामाण्यं स्यात्, तद्गतानामवेदमूलानामर्थवादानां विध्येकवाक्यत्वाभावेन स्तुत्यर्थत्वायोगादप्रामाण्यं स्यादित्याशङ्क्याह—**सर्वं चेति**। अर्थवादशून्ययोर्विधिप्रतिषेधयोः श्रुतार्थापत्त्यार्थवादकल्पकत्वस्य विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनान्यतरदनुमाय वाक्यं पूरयितव्यमिति, अत्रोक्तत्वाद्वेदकल्पतार्थवादानां[2] व्यासादिभिर्लोकानुसारेण स्वोत्प्रेक्षया, वा प्रणीतत्वात्सम्भवत्येवैकवाक्यत्वमिति भावः।

ननु भवतु विधिप्रतिषेधसन्निधिपठितानां प्रत्यक्षमूलभूतवैदिकार्थवादाभावे[3]ऽप्युक्तेन न्यायेन काल्पनिकविधिप्रतिषेधैकवाक्यभूतार्थवादमूलत्वेन तदेकवाक्यत्वात्स्तुतिनिन्दार्थत्वम्। तत्सन्निधिरहितानां तु स्तुतिनिन्दार्थत्वायोगादानर्थक्यं स्यादत आह—**ये त्विति**। **स्वयंशब्देन** स्वातन्त्र्यमुक्तम्। प्रीतिं जनयन्तीति कामोपयोगितोक्ता। पार्थिवानामुपयुज्यन्त इत्यर्थोपयोगिताम्, अदृष्टशब्देन धर्मोपयोगिता; देवतादीत्यादिशब्देनार्षादिग्रहणम्। यत्र तर्हि न किं चिदपि श्रूयते किं तु स्वरूपमात्रं कीर्त्यते। यथा सृष्टिप्रलयादिवाक्येषु,

---

१. आनर्थक्यनेति विध्येकवाक्यत्वाभावेन स्तुतेन स्वीपपादकार्थवादपदान्तरानपेक्षत्वात् तद्व्यतिरिक्तानां पदानां पृथग्वाक्यत्वम्।

२. वेदे यत्रार्थवादो न श्रूयते तत्र कल्पिता ये ऽर्थवादास्तएव लोकानुसारेण स्वोत्प्रेक्षया वा तत्र प्रणीता इति भवत्येवैकवाक्यत्वमिति भावः।

३. प्रत्यक्षश्चासौ मूलभूतश्चासौ वैदिकार्थवादश्चेति विग्रहः।

कथं तेषामुपयोगोऽत] आह—**इत्येषा दिगिति**। युक्तोपयोगोपाख्यानमार्गेण सृष्टिप्रलयादिवाक्यानामपि यथासम्भवं धर्माद्युपयोगितोन्नेया। सा च स्मृत्यधिकरणे वक्ष्यते। अर्थवादोपयोगमात्रस्यैवात्र विवक्षितत्वादिति भावः।

एवं सिद्धान्तस्वरूपं व्युत्पाद्य भाष्यमिदानीं व्याख्यातुमुपन्यस्यति—**विध्युद्देशेनेति**। कैश्चिदेतत्सकलं भाष्यं सार्थवादवाक्येष्वर्थवादादेव प्रवृत्तिसिद्धेर्विधिप्रत्ययपरित्यागपरत्वेन व्याख्यातं तेषां व्याख्यानं दूषयितुमुपन्यस्यति—**केचिदाहुरिति**। **अयमर्थः**। अर्थवादानामप्यध्ययनविधिबलेनैव पुरुषार्थपर्यवसायित्वाद्यथासम्भवं स्तुतिनिन्दार्थत्वावसायात्तद्द्वारा कथं रोचतेति भाष्योक्तरीत्या प्रवर्त्तितव्यं निवर्त्तितव्यमित्येवंरूपप्रवृत्तिनिवृत्तिहेतुभूतार्थप्रतिपादकत्वाल्लिङादीनामपि तदभिदायकत्वात्तुल्यार्थतया समुच्चयायोगे केवलानां व्यवस्थयाऽर्थवत्त्वेऽप्युभयसम्भवेऽन्यतरेण सिद्धेरवश्यं त्याज्येऽन्यतरस्मिन्भूयोऽर्थवादपदानुसारेणैकस्य लिङादेस्त्यागो युक्तः। प्रकृत्यनुग्रहार्थं च कस्मिंश्चित्प्रत्यये प्रयोज्ये स्तुत्योत्पादितेच्छालब्धकर्त्तव्यानुवादिनी लिङ् प्रयुज्यते, इति दृष्टं लिङोऽन्यतः सिद्धकर्त्तव्यतानुवादिनीत्वमिति परमतेन दृष्टान्तितम्—**यथेति**। प्रत्ययश्चेत् त्यज्यते किं तर्हि विवक्षितमित्यपेक्षिते—**तस्मादित्युक्तम्**। एवं सोपपत्तिकं भाष्याभिप्रायमुक्त्वा, अक्षरयोजनमाह—**स एव चेति**। वायव्यश्वेतालम्भ एव भाष्ये विध्युद्देशशब्देनोक्त इत्यर्थः।

ननु भूतिकामान्तस्य विध्युद्देशत्वं वदता विधिप्रत्ययोऽपि गृहीतो लक्ष्यते। अन्यथा स्तुत्यन्वयात्प्राक् कर्त्तव्यत्वाप्रतीतेः फलानापेक्षत्वाद् भूतिकामान्तवचनानर्थक्यं स्यादत आह—**फलादीति**। अनुष्ठानयोग्यस्यानुष्ठानसिद्ध्यर्थं स्तुत्यपेक्षणात्फलाद्यन्वयं च विनानुष्ठानायोग्यत्वाद्विध्यविवक्षायामर्थवद्भूतिकामान्तवचनमिति भावः। कस्मादेवं व्याख्यायते अत आह—**अन्यथेति**। ननूद्देशग्रहणेऽप्यनुवाद्येन विधिनैवैकवाक्यत्वप्रतीतेः कथमालम्भोपादानमत आह—**सूत्रोक्तेन त्विति**। उद्देशग्रहणस्योक्तेन न्यायेन विवक्षितार्थत्वादविवक्षितस्य च पदान्तरान्वयायोगात्षष्ठीसमासस्य कर्म्मधारयस्य चानुपपत्तेर्विधेरुद्देशोऽविवक्षास्मिन्निति कण्ठेकालादिवद्व्यधिकरणबहुव्रीह्याश्रयणात्कर्म्मणि वोद्देशशब्दं व्युत्पाद्य सामानाधिकरण्योपपत्तेस्तद्विषयालम्भोपादानमित्यर्थः। स्फुटीकृतं चैतद्भाष्यकृतेत्याह—**तथा चाहेति**। कथमनेनैतद्व्याख्यानं स्फुटीकृतमत आह—**विधीति**। स्तुतिस्तुत्यसम्बन्धविवक्षा केनोक्तेत्यपेक्षिते पठति—**यत इति**। ये अनेन भाष्यावयवेन स एवैनं भूतिं गमयतीत्यादिस्तुत्यन्वयं दर्शयता स्तुतिस्तुत्यसम्बन्धं विवक्षितं वदन्तीति पूर्वेणान्वयः। प्रत्ययासहिष्णुतयालभेतेत्याद्यपदत्यागेन भाष्ये शेषपाठः कृतः। ननु विधित्यागे शब्दभावनायाः कथम्भावाभावेन स्तुत्यनाकाङ्क्षणात्कथं स्तुतिस्तुत्यसम्बन्धविवक्षा अत आह—**सैव चेति**। वायव्यश्वेतालम्भस्य भूतिसाधनत्वेऽभिहिते कस्माद्धेतोस्तस्य भूतिसाधनत्वमित्यपेक्षायां हेतुवन्निगदार्थवादवदन्वयो भविष्यतीति तेषामाशय इत्यर्थः।

अस्मिन्नर्थे फक्किकैवं योज्या। विधेयस्यालम्भस्य विधिसम्बन्धे सति याऽर्थवादयोजना पूर्वमुक्ता, योज्यते सम्बन्ध्यतेऽनेनेत्युभयाकाङ्क्षालक्षणोऽन्वयप्रकारो योजना-

शब्देनाभिप्रेतः । सा विधिविधेयसम्बन्धनिषेधेऽपि शुद्धस्यैवालम्भस्य भविष्यति—**निमित्तत्वेनोक्तत्वादिति** । आलम्भस्यार्थवादानाकाङ्क्षत्वेऽप्यर्थवादस्य पुरुषार्थानुबन्धित्वाय साकाङ्क्षत्वादन्यतराकाङ्क्षयापि सम्बन्धोऽपि भविष्यतीति चशब्देन सूचितम् ।

एवं वाऽनेन भाष्ये व्याख्यातमालभेतेतिमध्यप्रतीकेन समस्तविध्युद्देशनिर्देशात्तदर्थो भूतिसाधनत्वमालम्भस्योक्तम् । कस्मादित्यपेक्षिते पूर्वभाष्यनिर्दिष्टं वायुं तच्छब्देन परामृश्य यस्माद्वायुर्भूतिं साधयतीति स्तुत्यन्वयप्रदर्शनमिति । कस्माद् भूतिकामेनालब्धव्यमित्यभिसम्बन्धो न विवक्षित इत्याशङ्क्याविवक्षाकारणमुक्तम्—**भिन्नविमावर्थाविति** । तदेकस्यैव सम्बन्धस्यानिराकार्यतयोपन्यस्तत्वादयुक्तमित्याशङ्क्य व्याचष्टे—**भिन्नाविति** । भूयार्थवादानुग्रहायावश्यविवक्षणीये स्तुतिस्तुत्यसम्बन्धे सतीतरसम्बन्धविवक्षां वदतोभयविवक्षाङ्गीकारात् तत्र च वाक्यभेदापत्तिरित्यर्थः ।

किमर्था स्तुतिरिति प्रश्नभाष्यं स्तुतेरिच्छोत्पादनेन प्रवर्त्तकत्वस्य स्फुटत्वादयुक्तमाशङ्क्याभिप्रायद्वयमाह—**किमर्थेति** । कथं रोचेतेत्युत्तरभाष्यम् यथाक्रममभिप्रायद्वयनिरासार्थत्वेन व्याचष्टे—**आचार्यस्त्विति**

ननु प्रागित्याशङ्काभाष्यं द्वितीयप्रश्नाभिप्राये पुनरुक्तमाशङ्क्य विवरणपरत्वेन व्याचष्टे—**इतरेति** । न हि यदेत्यादिपरिहारभाष्यं तत्र नञ्द्वययोगेन सन्निधानमेवोक्तं स्यान्न च तदा विधिविधेयसम्बन्धाविवक्षाङ्गीक्रियते, विरोधश्चोत्तरभाष्येण स्यादित्याशङ्क्य न हीति छित्त्वाऽऽनर्थक्यनिरासार्थत्वेन व्याचष्टे—**न हीति** । कथं नानर्थक्यमित्यपेक्षिते केवलश्रवणावधारितसामर्थ्यस्यापि विध्युद्देशस्यार्थवादसन्निधौ विधायकत्वाभावादिति कारणम्—**यदेत्यादिनोक्तम्** । **यथेत्यादिना**—दृष्टान्तद्वारोपपादितम्, तत्प्रपञ्चयति—**सर्वत्रेति** । दृष्टान्त एव किं व्यवस्थाकारणमित्यपेक्षायामाह—**योग्येति** । आकाङ्क्षणीयाऽलाभनिमित्ता ह्याकाङ्क्षानिवृत्तिर्नान्यथेत्यर्थः । ननु यथाप्राकृतपदार्थलाभान्निवृत्ताकाङ्क्षाया अपि विकृतेः सन्निधिपठितपदार्थाकाङ्क्षावशादाकाङ्क्षोत्थापनम्, तथेहापि पदार्थान्तराकाङ्क्षावशादाकाङ्क्षोत्थापनेऽपि स्वतो निराकाङ्क्षत्वात् प्रकरणगतानां प्रयाजादिवाक्यानामिव[1] कस्मात्प्रामाण्यं न स्यादत आह—**इतरथेति** । इतरेण प्रकारेण योग्यपदान्तरानुच्चारणमनालोच्य स्वरूपमात्रालोचने सर्वत्राकाङ्क्षा भवत्येव श्रुतपदातिरेकेणापि दर्शनादित्यर्थः । स्वाभाविकीमाकाङ्क्षामुपपादयति—**तथा चेति** । एवं यदेत्यादिभाष्यं पूर्वेण पुनरुक्तमाशङ्क्योपसंहारार्थतया व्याचष्टे—**तदिहेति** ।

नन्वेवं सतीत्याशङ्काभाष्यं महावाक्येऽवान्तरवाक्याप्रामाण्यस्योक्तत्वादयुक्तमाशङ्क्य व्याचष्टे—**नन्वेवमिति** । सत्यं विनापीति परिहारभाष्याभिप्रायमाह—**सत्यमिति** । गवादिप्रचारार्थं ग्रामस्य समन्ताद्या भूःकर्षकैः परिह्रियते सा परिहारशब्देनोच्यते । [[1]धनुः शतं

---

१. प्रकरणगतानामपि प्रयाजादिवाक्यानां स्वतो निराकाङ्क्षत्वात् प्रभाजनकत्वं भावनया कथं भावेनापेक्षणात् विध्येकवाक्यत्वं तद्विधेः स्वार्थप्रतिपादकत्वं पदार्थान्तराकाङ्क्षावशादेकवाक्यत्वमित्यर्थः ।

परिहारो ग्रामस्य स्यात्समन्तत इति स्मृतेः]। तस्य पन्थाः परिहारपथः; तेन ग्रामगमनवदिति दृष्टान्तार्थः।

ननु सत्स्वपीत्याशङ्काभाष्यं वेदस्यापर्यनुयोज्यत्वेनोक्तत्वादयुक्तमाशङ्क्य व्याचष्टे—**नन्विति**। आहेति परिहारभाष्यं व्याचष्टे—**तत्र उत्तरमिति**। भवन्त्वितिशङ्काभाष्यं व्याचष्टे—**भवन्त्विति**। नेत्यादिपरिहारभाष्यं व्याचष्टे—**नोक्तेनेति**। प्रतीतिमात्रेणार्थस्य विवक्षितत्वमतिप्रसङ्गादयुक्तमाशङ्क्य योऽसावित्यादिनोपपादितं तद्व्याचष्टे—**द्वयसम्भवं हीति**। अर्थवादानुग्रहो युक्त इत्यनेनातोऽस्मादितिभाष्यमेव व्याख्यातम्, यतः प्रत्यक्षो वाक्यशेषभावः, अतः कारणादस्मात्सार्थवादकाद्विधेः सकाशाच्छ्रुतिमिव प्रवर्त्तकत्वेन विवक्षितामवगच्छामो न विधिम्, भूयोऽल्पविरोधे भूयोऽनुग्रहस्य न्याय्यत्वादिति।

ननु निरपेक्षादपीतीत्याशङ्काभाष्यमन्यत्रावधारितविधिशक्तेर्विध्युद्देशस्यात्रापि प्रत्यभिज्ञानात्स्तुतिसम्बन्धाविवक्षाप्रतिपादकत्वेनाभासमानं ननु सत्स्वपीत्यनेन पौनरुक्त्येनाक्षिपति—**नन्विति**। सत्यपि समस्तस्य स्तुतिस्तुत्यसम्बन्धरूपेऽर्थे पूर्वस्य विधिविधेयसम्बन्धरूपार्थापह्नवनिरासार्थतया समाधत्ते—**तदुच्यत इति**। अथास्येत्यनेन भाष्योपक्षिप्तं कारणमुक्तम्। भवत्वितिपरिहारभाष्यं व्याचष्टे—**तद्विधीयत इति**। अनेनैवं व्याख्यातं भवतु निरपेक्षादर्थत्रादरहिताद्वसन्तादिवाक्येषु विध्यवगतिः, न हि निरपेक्षे सत्यर्थद्वयासम्भवलक्षणो विरोधोऽस्ति, न चात्र शक्त्यभावाद्विध्यर्थत्वासम्भवः, येनास्यैव क्वचिच्छक्तिः क्वचिदशक्तिरिति विरोधः स्यात्। बाधाबाधौ तु बाधकसदसद्भावाभ्यां न विरुध्येते इति काक्वा सूचितम्। इह तु स्तुत्यर्थत्वस्योक्तन्यायेनावश्याङ्गीकार्यत्वाद्वाक्यभेदप्रसङ्गेनाशक्यो विध्यर्थ इति।

द्वौ चेदितिवाक्यभेदभाष्यं भिन्नाविमावर्थावित्यनेन पुनरुक्तमाशङ्क्य पूर्वव्युत्पादितस्यैव वाक्यभेदस्य स्तुतिसम्बन्धे सत्यशक्यो विध्यर्थ इत्युक्ते कुतोऽशक्य इत्यापन्नहेतुप्रश्नोत्तरत्वेन पुनरुपन्यास इति परिहरति—**प्रश्नोत्तरत्वेनेति**। ननु यदि स्तुत्यसम्बन्ध एवात्र विवक्षितो न विधिविधेयसम्बन्धः। ततोऽनुष्ठानाप्रतिपादकत्वेनाक्रियार्थत्वाद्धर्मप्रामाण्यानुपपत्तेर्विध्युद्देशैनैकवाक्यत्वात् प्रमाणमित्युपक्रमानुपपत्तिः स्यादत आह—**तस्मादिति**। यस्मादन्यथा वाक्यभेदः प्रसज्येत तस्मात्प्ररोचनयैवात्र विधिः तथा सत्यैकार्थ्यादित्यर्थः। अनेन चाथ यदुक्तमित्यनूदिताशङ्कानिरासार्थत्वेन भाष्यकारावतारितस्तुत्यर्थेन विधीनां स्युरिति सूत्रावयवमेवं व्याख्यातम्। स्तुतेरर्थः प्रयोजनं प्ररोचना तद्द्वारेण कर्मव्युत्पन्नविधिशब्दोक्तानां क्रियाणामुपकारिणोऽर्थवादा इति एतत्सूत्रावयवव्याख्यानार्थं स्तुतिशब्दा इति भाष्यम्।

तत्रानुष्ठातॄणामिति षष्ठीमाक्षिपति—**प्ररोचयमाना इति**। नन्विकस्तिपौ धातुनिर्द्देश इति धातुभूतरुचियोगे सम्प्रदानसंज्ञा विहिता, न च तत्प्रयोगे पूर्वप्रकृतेर्धातुत्वमस्ति। तथा सति धातुद्वयप्रसङ्गे न धातोरिति विवक्षितैकत्वधातूपरिविहितप्रत्ययानुपपत्तिप्रसङ्गादित्या-

शङ्कते—**प्ररोचयतेरिति**। परिहरति—**अयमाशयः**। सनाद्यन्ता धातव इत्यन्तग्रहणसामर्थ्यात्केवलस्य सनादेर्धातुत्वाभावेन धातुद्वयाप्रसक्तेर्न पूर्वप्रकृतेर्भूवादयो धातव इति विहिता धातुसञ्ज्ञा नापह्नवमर्हतीति संबन्ध्यविशेषाविवक्षया चतुर्थ्यप्रसङ्गमाशङ्कते—**अथेति**। परिहरति—**सापीति**। रुचिसंबन्धाविवक्षायां तद्व्यतिरेकषष्ठ्यनुपपत्तेः प्रातिपदिकार्थाव्यतिरेके प्रथमैव स्यात्। रुचिसंबन्धविवक्षायां तु तस्य चतुर्थी निमितत्त्वेन विशेषरूपत्वात्सामान्यविवक्षा कुतो न तस्येति भावः।

पदान्तरसंबन्धमङ्गीकृत्य षष्ठीमुपपादयति—**तस्मादिति**। एवं तु व्यवहितान्वयापत्तेरुपकरिष्यन्तीत्यनेनान्वयमाह—**अथ वेति**। अस्मिन्पक्षे क्रियाया इत्यस्य विच्छिन्नस्यार्थमाह—**क्रियाया इति**। क्रियाशब्देन तद्विषयत्वाद्विधिरभिप्रेतः।

**विध्युत्खातिपक्षनिरासः**

तदेतत् दूषयति—**इदं त्विति**। किं सर्वप्रत्ययार्थाविवक्षया प्रत्ययत्यागः, विधिमात्राविवक्षया वा। तत्राद्ये कल्पे तावत् दूषणान्याह—**यदि हीति**। ननु भूतिकाम आलभेत, कस्माद्यतो वायुः क्षेपिष्ठा देवतेति हेत्वाकाङ्क्षायामर्थवादान्वयस्य भाष्यकृतोक्तत्वाच्छब्दभावनाकथम्भावासम्भवेऽपि न कश्चिद्दोष इत्याशङ्क्याह—**यापीति**। वेदावगतस्यार्थस्य हेत्वनपेक्षत्वान्न तद्द्वारेणार्थवादान्वयः सम्भवतीति कल्पेतेति काक्वा द्योतितम्। यापि भाष्यकृता कस्मादित्यपेक्षा दर्शिता। सापि कस्मात्कारणान्मया प्रवर्त्तितव्यमिति प्रवृत्तिसिद्ध्यर्थं प्राशस्त्यरूपकारणविषयत्वाद्विध्यभावे न युक्तेत्यर्थः। नन्वितिकर्त्तव्यताविषयत्वे कथमित्येवाकाङ्क्षा किमिति न दर्शिता, अत आह—**शब्दान्तरेति**। विधायकस्याध्ययनविधिना पुरुषप्रवर्त्तने नियुज्यमानस्य कथं मया पुरुषः प्रवर्त्तयितव्य इत्यर्थवादान्वयासिद्ध्यर्थमचेतनस्यापि पुरुषगतचैतन्यारोपेणाकाङ्क्षोपचर्यते। भाष्यकृता तु पारमार्थिकी पुरुषस्याकाङ्क्षा तद्विषयैव दर्शिता, न त्वनयोर्भिन्नविषयतेत्यर्थः। अथापि हेतुविषया कस्मादित्यपेक्षा, तथापि यागादिस्वरूपस्य द्रव्यदेवतामात्रेण सिद्धेः फलसाधनत्वस्य च स्वसामर्थ्यमात्रेण सिद्धेः कर्त्तव्यत्वाभिधानं विना न युक्तेत्याह—**सापि चेति**।

ननु क्रियानपेक्षितमपि प्राशस्त्यमर्थवादोक्तं सत्कर्त्तव्यताङ्गमयिष्यतीत्यत आह—**तदनपेक्षितं चेति**। प्राशस्त्यस्य श्रौतत्वाभावान्न स्वरसतोऽर्थवादप्रतिपाद्यत्वं सम्भवतीत्यर्थः। प्रतिपादितस्यापि कथंचित्प्राशस्त्यस्य न तावद्धात्वर्थेन संबन्धः अनपेक्षत्वादित्याह—**न चेति**। न केवलं प्राशस्त्यस्यासंबन्धः, किं तु फलादेरपीति—**कस्यचिदिति**। काक्वोक्तम्। भावनया सह तर्हि संबन्धो भवत्वत आह—**भावना त्विति**। किमपेक्षेतेति—**न किंचिदित्यर्थः**। अनपेक्षायां वा सर्वाभावः स्यादित्याह—**तस्मादिति**।

अथापि कथंचित्प्राशस्त्यमभिधीयते संबन्ध्यते च, तथापि न कर्तव्यतामालम्भस्य गमयतीत्याह—**उक्तेऽपि चेति**। माभूत्तर्हि कर्त्तव्यबुद्धिः प्राशस्त्यप्रतिपादनमात्रेणार्थवादपर्यवसानं भविष्यतीत्यत आह—**अकल्पिते त्विति**। आनर्थक्यपरिहारार्थमेव तर्हि

कर्त्तव्यता कल्पयिष्यतेऽत आह—**प्रत्यक्षं चेति**। क्लृप्तस्य कल्पनाऽनुचितेति भावः। न केवलमनुचिता, किं त्वशक्यापीत्याह—**न चेति**। अशक्यत्वे कारणमाह—**अनुक्तो हि सन्निति**। एवं तावत्कर्त्तव्यतायाः क्लृप्तत्वान्नार्थवादकल्पकत्वमित्युक्तम्। अर्थवादानामपि तत्कल्पकत्वं न सम्भवति, प्ररोचनामात्रपर्यवसानादित्याह—**तथेति**।

ननु तर्हि नार्थवादैः प्ररोचनोच्यताम्, कर्त्तव्यताप्रतिपादनेनैव पुरुषार्थानुबन्धित्वसिद्धेरत आह—**अवश्यकर्त्तव्या चेति**। तया विना प्रवृत्त्यसिद्धेरिति भावः। ननु माभूदर्थवादानां कर्त्तव्यताप्रतिपादनपर्यन्तं व्यापारः, तत्प्रतिपादितप्राशस्त्यान्यथानुपपत्त्या सा कल्पयिष्यते अत आह—**सर्व्वत्र चेति**।

यच्च तुल्यार्थत्वं समुच्चयासम्भवकारणमुक्तम्, तदसिद्धमित्याह—**तुल्यार्थयोश्चेति**। न चात्राल्पभूयोविरोधिन्यायोऽस्ति, प्रत्ययत्यागे भूयसां तदर्थानां बाधापत्तेरित्याह—**यदि चेति**। परस्मैपदात्मनेपदरूपोपग्रहविशेषः। आदिशब्देन विधिभावनयोरुपादानम्। एतत्सर्वं दोषपरिहारार्थं कल्पान्तरं शङ्कते—**स्यादेतदिति**। एतदपि निराचष्टे—**एतच्चेति**। अशक्यत्वे कारणमाह—**यत इति**। उदितमप्यविवक्षितं भविष्यत्यत आह—**प्रतीतस्य चेति**। ग्रहैकत्वं ह्यप्राप्तत्वान्नानुवदितुं शक्यते, सम्मार्गभावनया गुणत्वेन प्रधानत्वेन वान्वयायोगान्न विधिना स्पृश्यते। इन्द्रियकामहोमस्त्वाश्रयमन्तरेण गुणस्य फलसाधनत्वायोगाद्विधिमन्तरेण च प्रकरणावगतस्यापि होमस्याश्रयत्वे प्रमाणाभावात्प्रकरणावगतं स्वरूपमनूद्य गुह्यफलसंबन्धविध्यन्यथानुपपत्तिप्रसूतेन विधिना आश्रयत्वेन विधीयत एवेति श्रौतेन विधिना वाक्यभेदप्रसङ्गेनापरिग्रहादविवक्षितत्वमिति।

ननु विध्यसंस्पर्शादेव विधिरविवक्षितो भविष्यत्यत आह—**न तावदिति**। विधिव्यतिरिक्तस्य विध्यसंस्पर्शित्वं विधिविवक्षाकारणं युक्तम्। विधेस्त्वविधिरहितत्वं विध्यसंस्पर्शाख्येनाविवक्षाकारणं सर्वविधिनामविवक्षाप्रसङ्गादित्यर्थः। अनुवादोऽपि विधेरयुक्त इत्याह—**नापीति**। कारणमाह—**तस्यामिति**। अयमाशयः—न तावद्य आलम्भः, स प्रशस्त इत्यालम्भमात्रोद्देशेन प्राशस्त्येऽभिहितेऽपि कर्त्तव्यबुद्धिः सम्भवति, येन प्ररोचनालब्धविधित्वानुवादो घटेत। एतच्चोक्तेऽपि च प्राशस्त्य इत्यादिनोपपादितम्। यदि तु योऽयं वायव्यश्वेतालम्भः कर्त्तव्यः, स प्रशस्त इतिकर्तव्यतारूपस्य विधेरनुवाद इष्यते। स तर्हि न सम्भवति। अनुवादावस्थायामप्राप्तत्वादिति। ननु त्वत्पक्षे वायव्यश्वेतालम्भः कर्त्तव्य इति विध्यर्थो भवेत्, तस्य चालम्भः प्रशस्त इत्यर्थवादार्थेन नान्वयः स्यादित्याशङ्क्याह **भवति त्वेवमिति**। दृष्टान्तोऽपि साध्यविकल इत्याह—**यस्त्विति**। दशमे हि सत्रादुदवसाय[1] पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्नित्युदाहृत्य किं तत्र सहितानां कर्तृत्व-

---

१. यथा गवामयने सत्रे अवभृथानन्तरं पृष्ठशमनीयमेकाहः क्रियते तत्र समानकर्तृकयोः पूर्वकाले इति विधानेन उत्तरक्रियाकर्तव्यतायाः क्त्वाप्रत्ययविधानात् तद्बलेनैवोत्तरक्रियाकर्तव्यताप्राप्तेति तत्र लिङोऽनुवादिनीत्वं तथेति भावः।

मेकैकशो वेति सन्दिह्य बहुवचनस्य श्रवणात् साहित्ये प्राप्ते, क्त्वाश्रुत्यैवोदवसानसमानकर्तृकत्वप्रतीतेरवगतसङ्ख्यत्वेन च बहुवचनस्यानपेक्षितसङ्ख्याविधायित्वायोगादपेक्षितधात्वर्थविशेषविधायिन्याख्याते यथाप्राप्तप्रचयशिष्टसङ्ख्यानुवादिबहुवचनप्रयोगोपपत्तेर्न प्राकृतैककर्तृकत्वबाधो युक्त इति सिद्धान्तो वक्ष्यते क्त्वाश्रुत्या ह्यनन्तरक्रियामात्रमाक्षेप्तुम् । न च नियोगतः कर्त्तव्यता । न मांसं भुक्त्वाऽधीयीतेति प्रतिषेधोऽपि भुक्त्वा व्रजतीति च वर्त्तमानापदेशेऽपि क्त्वाश्रुतिदर्शनादित्यर्थः । न च केवलं कारणाभावाद्विध्यविवक्षानुचिता किं त्वतिव्याप्तेरपीत्याह—**यदि चेति** ।

## स्वमतेन व्याख्यानम्

स्वमतेन व्याख्यातुमुपक्रमते—**तस्मादिति** । अत्रैव भाष्यानुमतिमाह—**तथा चेति** । विधिविषयाभिप्रायेषु भाष्यकारीयविध्युद्देशशब्दे फलपदस्य विधिविषयसमर्थकत्वाभावादुपन्यासो न युक्त इत्याह–**अन्यथेति** । विध्यभावे च धात्वर्थस्य तद्विषयत्वायोगात्तदभिप्रायो विध्युद्देशशब्दो न युक्त इत्याह—**न चास्येति** । कस्तर्हि विध्युद्देशशब्दस्यार्थोऽत आह—**तस्मादिति** । विधेरुद्देशकः प्रतिपादक इति कर्तृव्युत्पन्नं करणव्युत्पन्नं वोद्देशशब्दमङ्गीकृत्य षष्ठीसमासाश्रयणेन लिङादिरेव विध्युद्देशशब्देनोक्त इत्यर्थः किमर्थं तर्ह्युद्देशग्रहणमत आह—**विध्यर्थेन त्विति** । विधिशब्दस्य लिङादिशब्दे तदर्थे चोभयत्र प्रयोगदर्शनादिह शब्दपरतयापि व्याख्यानेन सूत्रनाश इति चोद्यमिति । नन्वस्मिन्पक्षे प्रत्ययो विध्युद्देश इत्येवं वक्तव्यं न भूतिकाम इत्येवमन्त इत्यत आह—**भूतिकाम इति** ।

ननु यदि फलादिसङ्गत्युत्तरकालं तद्विशिष्टायां भावनायां पुरुषं नियुञ्जाने विधावनुग्रहार्थं स्तुत्यर्थावसरः, तदभावे तर्ह्याकाङ्क्षाभावादर्थवादान्वयो न स्यादित्याशङ्कते—**नन्विति** । परिहरति—**एवमेवैतदिति** । का तर्ह्यर्थवादानां तत्र गतिरत आह—**तथेति** । यद्यपि विध्यभावेनार्थवादाः सम्बन्ध्यन्ते, तथापि नानर्थक्यापत्तिः; प्रयोगवचनेन पञ्चमलकारेण वा कल्पितविधित्वेऽर्थवादसङ्गतिसम्भवादिति वक्ष्यमाणानुषङ्गेण योज्यम् । आग्नेयोऽष्टाकपालो भवतीत्यादौ भवतिपरस्य पञ्चमलकारस्य प्रयोजकव्यापारविधानाशक्तेः प्रयोगवचनेन वानुत्पन्नस्य प्रयोगासम्भवादुत्पत्तिरप्याक्षिप्यते । उपांशुयाजमन्तरा यजतीत्यादौ पञ्चमलकारेण अव्यवस्था लिङर्थे लेडिति पञ्चमलकारस्य विधौ स्मरणेऽपि वर्त्तमानापदेशसन्दिग्धत्वात्पञ्चमलकारनिर्णयाक्षेपाद्विधित्वस्य कल्पितत्वमभिप्रेतम् । इदं तु प्रयोगवचनोत्पत्तिकल्पनं दुरुपपादम् । अनुत्पन्नस्य प्रयोगविधिविषयत्वायोगादुत्पत्तौ कल्पितायां प्रयोगविधिविषयत्वं प्रयोगविधिविषयत्वाच्चोत्पत्तिकल्पनमितीतरेतराश्रयापत्तेः । पञ्चमलकारचिन्हाभावे न तन्निर्णयः स्यादित्यपरितोषादन्यथाविधित्वकल्पनमाह—**अथ वेति** ।

ननूक्तेन प्रकारेण 'आग्नेयो ऽष्टाकपालो भवतीत्यादौ विधिं प्रकल्प्य, तच्छेषत्वेन अङ्गिरसो वा इत उत्तमाः स्वर्गलोकमायन्नित्यादेरर्थवादस्यान्वयो भवतु नाम, 'ताभ्या-

मेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदि'त्यादौ त्वर्थवादमात्रकल्पविधिदर्शनाद्विधेः प्राक्[1] स्तुत्यनवसरत्वप्रतिपादनमयुक्तमित्याशङ्कयाह—**यत्रापीति**। तत्रापि पूर्वचरितकीर्त्तनान्यथानुपपत्तिमात्रेण कर्त्तव्यतां कल्पयित्वा शेषपदानां स्तुत्यर्थत्वेनान्वयः। न तु प्रागेव कस्यचित्स्तुतिः प्रतीयत इत्यर्थः। सिद्धरूपार्थकीर्त्तनाभिप्रायोऽर्थवादशब्दः, न स्तुत्यभिप्राय इति भ्रमितव्यम्। नन्वेवमपि सिद्धरूपार्थकीर्त्तनमात्रेण कर्त्तव्यतायाः प्रतीतिसिद्धेः प्रत्ययानर्थक्यं तदवस्थमित्याशङ्कयाह—**सम्भवत्यां त्विति**।

ननु श्रौतार्थद्वयाश्रयणे वाक्यभेदापत्तेः प्रत्ययश्रवणेऽपि भूयोऽर्थवादपदानुग्रहाय स्तुत्यैव कर्त्तव्यताकल्पनमगत्याङ्गीकार्यमित्युक्तमत आह—**यस्त्विति**। प्राशस्त्यकर्त्तव्यतयोर्विशेषणविशेष्यभावात्प्राशस्त्यविशिष्टकर्त्तव्यतात्मरूपैकार्थप्रतिपादनादेकव्यापारोपपत्तेर्नार्थभेदनिबन्धनवाक्यभेदापत्तिरित्यर्थः। नन्वर्थभेदाभावेऽप्यप्राप्तस्य विधिसम्बन्धाद्प्राप्तस्य च विशेषणभूतप्राशस्त्यसम्बन्धाद्वैरूप्यलक्षणो वाक्यभेदः प्रसज्येत अत आह—**विधीयमानस्यैव हीति**। प्राशस्त्यं विना विध्यपर्यवसानादप्राप्तावस्थस्यैवालम्भस्य विधिनैव प्राशस्त्येनापि सम्बन्धादवैरूप्यमित्यर्थः।

नन्वेवमपि विशिष्टार्थप्रतिपादनाद् गौरवापत्तिरत आह—**यदि चेति**। **का तर्हि नायमभिसम्बन्धो विवक्षित** इत्यादेर्भाष्यस्य गतिः। अत आह—**तस्मादिति**। अनेन ग्रन्थेनैवमेतद्भाष्यं व्याख्यातम्। भूतिकाम आलभेत कस्माद्यतो वायुः क्षेपिष्ठेत्यनेन यः सार्थवादकस्य विध्युद्देशस्य विधिस्तुतिसम्बन्धरूपो विशिष्टोऽर्थो दर्शितः। नायं विध्युद्देशमात्रेण विवक्षितः, किं तु सार्थवादकेनेति। तत्रालभेतेतिमध्यप्रतीकेन विध्युद्देशोपलक्षणम्, ततो भूतिरिति पूर्वप्रकृतवायुपरामर्शितच्छब्दयोगिना भूतिपदेन। स एवैनं भूतिं गमयतीत्यन्तार्थवादोपलक्षणं विशेषणविशेष्यरूपार्थद्वयस्य विशेष्यप्रतिपादकविध्युद्देशमात्रेणाभिधाने गौरवलक्षणवाक्यभेदापत्तेरिति। विधित्वादीत्यादिशब्देन फलेतिकर्त्तव्यताग्रहणम्।

किमर्थेत्याशङ्काभाष्यं विधिविवक्षायां तदितिकर्त्तव्यताभूतस्तुत्याकाङ्क्षानिराकरणायोगादयुक्तमाशङ्क्य व्याचष्टे—**किमर्थेति**। अयमाशयः—प्रवृत्तिप्रतिबन्धकालस्यादिभङ्गरूपाप्ररोचनाविधेरितिकर्त्तव्यता; न स्तुतिः। स्वार्थं तु तथा स्तुतिराकाङ्क्षते, विध्यवगतश्रेयःसाधनत्वादेव तु प्रवृत्तिहेत्विच्छाजननेन तद्विरोध्यालस्यादिनिराकरणसिद्धेरर्थिका स्तुतिरिति भाष्यं चैवं व्याख्येयम्। यद्यपि विधिस्तुतिरूपार्थद्वयप्रतिपादनं विध्युद्देशमात्रेण न क्रियते, तथाप्यर्थवादानर्थक्यं विधित एव प्ररोचनासिद्धेः, तादर्थ्येन स्तुत्यनाकाङ्क्षणादिति। कथं रोचेतेत्युत्तरभाष्याभिप्रायमाह—**कथमिति**। श्रेयःसाधनत्वाधिगमेऽपि बहुव्ययायासदर्शनात्द्वेषोत्पत्तेः स्तुतिमन्तरेणानिराकरणात् दुर्वारा स्तुत्याकाङ्क्षितेति भावः।

---

१. भूतिकामान्तविध्युद्देशप्रदर्शनेनेत्यर्थः।

ननु प्रागित्याशङ्काभाष्यं किमर्था स्तुतिरित्यनेन पुनरुक्तमाभासमानम्। तदभिप्राय-विवरणार्थतया व्याचष्टे—**नन्विति**। न हीत्यादिपरिहारभाष्यम्। तस्यामयमर्थः—न तावत्प्राशस्त्यं विना प्ररोचना सम्भवतीत्युक्तं कथं रोचतेत्यनेन। यदि तु विध्युद्देशेनैव प्राशस्त्याक्षेपस्य वसन्तादिवाक्येषु दर्शनादिहापि तत एव प्राशस्त्याक्षेपसिद्धेः, स्तुतिपदा-नर्थक्यमुच्येत, तन्निराकरणार्थं यदेत्याद्युक्तम्। तद्व्याचष्टे—**न हीति**। न हीत्यादिनैतदा-हेत्यन्वयः। शक्तिद्वयनिराकरणासमर्थत्वमस्य ग्रन्थस्य दर्शयितुं विधीयते इत्येतत्समाप्ति-परत्वेन न तदेत्यादिना व्याख्यातम्। अनेन च तदा पूर्वेण विधिरित्यत्रापि समाप्यत इत्यध्याहारो दर्शित इत्यवगन्तव्यम्। प्ररोचनया च विधिसमाप्तेः प्ररोचनाशक्तिः समाप्त्युक्त्या दर्शिता भवतीति, न भाष्याऽवाचकत्वोपालम्भः।

दृष्टान्तभाष्यं पूर्ववदेव व्याख्येयमित्याह—**यथेति**। यच्चास्माभिः प्रत्ययार्थवादयोः पुनरत्यन्तभिन्नानुग्राह्यानुग्राहकार्थभेदात्समुच्चय इति प्रागुक्तम्, तदनेन दार्ष्टान्तिकयोजना-भाष्येण स्पष्टीकृतमित्याह—**विधिशब्देनेति**। नन्वेवं सतीत्याशङ्काभाष्यगतमविधायक-पदप्ररोचकत्वाभिप्रायं व्याख्यातुमाह—**नन्विति**। सत्यमित्यादिपरिहारभाष्यं प्रतीकेन गृहीत्वा तस्मिन्विद्यमान इत्यादिभाष्यशेषं तस्मादित्यध्याहारपूर्वकं साधारणत्वेन व्याचष्टे—**सत्यमिति**। अविद्यमाने हि स्तुतिवचने विध्युद्देशमात्रस्य प्राशस्त्यविशिष्टविधिरूपोऽर्थो भवेत्; इह तु स्तुतिवचनस्य विद्यमानत्वाद् योऽर्थो न्याय्यो भवति, सोऽङ्गीकार्य इत्यर्थः। स्तुतिः प्रयोजनमिति भाष्यावयवमवतारयितुम्—**कश्चासावित्युक्तम्**। अर्थवादमात्रस्य स्तुतिप्रयोजनत्वाद् द्विवचनानुपपत्तिमाशङ्क्य—**न तस्यैवेत्याद्युक्तम्**। अर्थवादाभावे त्वित्यनेन तस्मिन्नसतीति भाष्यावयवो व्याख्यातः।

ननु सत्स्वपीत्यादि प्रत्यक्षश्च वाक्यशेषभाव इत्यन्तं भाष्यं पूर्ववदेव व्याख्येयमित्याह—**नन्विति**। अत्राप्युपात्ते लघूपाये गुरूपायाश्रयणानुपपत्तिमाशङ्क्य आनर्थक्यपरिहारायो-पात्तेऽपि लघौ गुरोराश्रयणमित्येतावताऽर्थतुल्यत्वमिति। अतोऽस्मादित्युपसंहारभाष्यं विधेरिति पञ्चम्या विधेः स्तुत्यवगतिप्रतिपादनादभिप्रेतविरुद्धमाशङ्क्याह—**अतोऽस्मादिति**। किं सम्बन्धनिबन्धनेयं षष्ठीत्यपेक्षिते आह—**वाक्येति**। पूर्वप्रकृतैर्वाक्यशेषोऽस्मादिति सर्वनाम्ना परामृष्टो विधेरिति षष्ठ्या सम्बध्यत इत्यर्थः। एवं सत्येष भाष्यार्थो भवती-त्याह—**इत एवेति**। अस्य विधेः सम्बन्धिन इतो वाक्यशेषादेव स्तुतिमवगच्छामो न स्वतो विधिमात्रादित्यर्थः।

ननु निरपेक्षादपीत्याशङ्काभाष्याभिप्रायमाह—**नन्विति**। भवत्विति परिहारभाष्य-माशङ्कानुज्ञानादयुक्तमाभासमानं सोपहासत्वेन व्याचष्टे—**आचार्यस्त्विति**। एवमर्थ-विरोधशक्यत्वयोः परस्परव्याघातात्तत्परिहारार्थं व्यवस्था यत्रासावित्यादिना दर्शिता। सर्वेऽमी विधिशब्दाः सप्ररोचनविधिपरा व्याख्येयाः। अशक्यत्वोपपादनार्थं पूर्वोक्तगौरव-लक्षणवाक्यभेदस्मारकं वाक्यं हीत्यादिभाष्यं व्याचष्टे—**वाक्यं हीति**। **एकमेकस्यैवेति**।

वाक्यसंवन्धपदगतयोरेकवचनयोर्विवक्षितसङ्ख्यत्वं दर्शितं । तच्चात्र विध्युद्देशरूपमभिप्रेतमिति, विध्युद्देश एवेत्यनेन दर्शितम् । सम्बन्धशब्देन चात्र कर्म्मव्युत्पत्त्या विशेषणविशेष्यरूपौ सम्बन्धिनावभिप्रेतौ एष हि गुणो भवतीत्यर्थवादप्राशस्त्यप्रदर्शनम् । यतस्ततो भूतिरितिवदिति कस्यचिच्छङ्का स्यात्तद्व्युदासार्थं—**विध्युद्देशोत्थापितानामेकेत्याद्युक्तम् ।** नायमभिसंबन्धो विवक्षित इत्यादिना यत्प्रबन्धेन विध्युद्देशस्य प्राशस्त्याक्षेपकत्वं निराकृतम्, तस्य प्रकृतैकवाक्यतासिद्धिप्रयोजनतां दर्शयन्स्वाभिप्रेतं सूत्रार्थमुपसंहरति—**तस्मादिति ।**

अनेनैवं सूत्रं व्याख्यातं विधेयभावनांशाप्रतिपादकत्वेऽपि तदनुष्ठापकानां विधीनामङ्गमर्थवादा स्युः । केनोपकारेणेत्याक्षिप्ते; स्तुत्यर्थेनेत्युक्तम् । विधिनानुष्ठानसिद्धयर्थे स्तुतेरुपकारकत्वेऽभिहिते विधिमात्रेणानुष्ठानसिद्धेः किं स्तुत्येत्याशङ्कानिराकरणार्थमर्थवादानां धर्म्मप्रमोपयोगित्वसिद्धावतिक्लिष्टलाक्षणिकस्तुत्यर्थत्वाङ्गीकारकारणं विधिनैकवाक्यत्वादित्यनेनोक्तमिति ॥ ७ ॥

भा० प्र०–विधिना: स्तुति साकाङ्क्ष विधि के साथ 'तु' शब्द पूर्वपक्ष का व्यावर्तक है 'एकवाक्यत्वात्' प्रयोजन साकाङ्क्ष अर्थवादों की एकवाक्यता होने से "विधीनां" विधिविहित कर्म कलापों की प्रशंसा रूप प्रयोजन हेतु या प्रशंसा रूप प्रयोजन साकाङ्क्ष लाक्षणिक अर्थ के द्वारा "स्युः" अर्थवाद सार्थक या सफल होते हैं । विधिवाक्य प्रशंसा सापेक्ष हैं एवं अर्थवाद प्रयोजनसापेक्ष हैं, अतः अर्थवाद विधिवाक्य के साथ एकवाक्य अर्थात् मिलित होकर विधिविहित कर्मों की प्रशंसा रूप प्रयोजन के द्वारा प्रयोजनवान् अर्थात् सार्थक या सफल होने से प्रमाण हैं ।

आशय यह है कि—पूर्वपक्षी ने अर्थवादवाक्यों का अप्रामाण्य सिद्ध करने का प्रयास किया था, अतः सिद्धान्ती ने इसके उत्तर में कहा है कि अर्थवाद अप्रमाण नहीं है । कारण, स्वाध्यायविधि से ही अवगत है कि वेद के विधि, मन्त्र, नामधेय एवं अर्थवाद ये सभी अंश प्रमाण हैं, वेद का एक अक्षर भी निष्प्रयोजन नहीं है । विधि के प्रामाण्य का विश्लेषण पूर्व में ही किया है । अर्थवाद का प्रामाण्य प्रस्तुत प्रसङ्ग के द्वारा सिद्ध किया जा रहा है । क्योंकि, पूर्वपक्षी ने अर्थवाद वाक्यों का आनर्थक्य प्रदर्शित कर इनके अप्रामाण्य की सिद्धि करने की चेष्टा की है । प्रत्यक्ष या अनुमान से सिद्ध लौकिक फल के विषयों में ही पुरुष का स्वतः सिद्ध अनुराग के कारण स्वाभाविक प्रवृत्ति होती है; और उस फल के साधन अर्थात् जिस उपाय से फल की प्राप्ति हो सकती है; उसमें जीव प्रवृत्त होता है । किन्तु, स्वर्गादि अलौकिक फल प्रत्यक्षगम्य या अनुमान सिद्ध न होने से उसके उपायभूत यागादि क्रियाओं में भी स्वाभाविक प्रवृत्ति नहीं हो सकती है । अतः, "भूतिकामो यजेत', 'अभ्युदय चाहने वाला व्यक्ति याग करे' इस विधिवाक्य को सुनकर अभ्युदयरूप फल के साधन या उसके उपायभूत याग में पुरुष की प्रवृत्ति उत्पन्न होने पर भी वह बलवती प्रवृत्ति नहीं होती है । इसमें कष्ट ही होगा वह अनिष्ट है; अर्थात्

अनभिप्रेत यागानुष्ठानरूप दुःख में अवसान लाभ करेगा—यह सोंच कर निष्प्रभ हो जाता है। फलतः, प्रवृत्ति उत्पादन करने वाली विधि की शक्ति भी कुण्ठित हो जाती है। अतः, ऐसी स्थिति में कुछ ऐसे साधन की आवश्यकता होती है, जिससे पुरुष की प्रवृत्ति बलवती हो जाय, और फल की सुन्दरता का बोध होने से पुरुष की प्रवृत्ति तीव्र हो जाय–यही स्वाभाविक है। अतः, फल की प्रशंसा करने पर उन विषयों में पुरुष की आकाङ्क्षा अधिक होने लगती है। इसका परिणाम यह होता है कि फलप्राप्ति के उपायों को केवल क्लेशरूप फल को देने वाला मानकर उससे निवृत्त नहीं होता है, अतः अर्थवाद-वाक्य से फल की प्रशंसा या प्रशस्तता अर्थात् सौन्दर्य-बोधन करने पर पुरुष की प्रवृत्ति बलवती हो जाती है। पुरुष की प्रवृत्ति बलवती होने पर विधिशक्ति भी अव्याहत होती है। इसलिए अर्थवाद विधिशक्ति का उत्तम्भक या उत्तेजक होता है। "वायव्यं श्वेतमालभेत पशुकामः" (तै० सं० २।१।१।१) "अभ्युदय की कामना रखने वाला व्यक्ति वायुदेवता के उद्देश्य में श्वेत छाग का वध करे", इस विधिवाक्य को सुनकर प्रथमतः पुरुष की क्रिया में प्रवृत्ति अवश्य होती है, किन्तु, अनन्तर, अनिष्ट की उत्प्रेक्षाकर प्रवृत्ति से निवृत्त हो जाता है, अतः बाद की श्रुति में कहा है "वायुर्वै क्षेपिष्ठा देवता" वायु अतिक्षिप्र 'शीघ्रगामी' देवता है अर्थात् यतः वायु देवता क्षिप्रतम है, अतः, वायु जिस यज्ञ का देवता होता है, उस यज्ञ का फल भी अतिक्षिप्र अर्थात् शीघ्र ही होता है। इस अर्थवाद वाक्य को सुनने पर अनिष्ट की आशङ्का से स्तम्भित प्रवृत्ति पुनः तीव्र हो जाती है, इसलिए, विधिवाक्य वैधविषय में पुरुष की प्रवृत्ति को उत्पन्न कराने के लिए अर्थवाद की अपेक्षा करता है और अर्थवाद वाक्य स्वयं निरर्थक होने पर भी अर्थात् निष्प्रयोजन होने से विधिविहित प्रयोजनों के द्वारा अपनी प्रयोजनीयता का निर्वाहु करने के लिए विधि की अपेक्षा करते हैं। इस प्रकार विधिवाक्य और अर्थवाद 'नष्टाश्वदग्धरथन्याय:[1]" से परस्पर मिलकर एक प्रयोजन का निर्वाह करते हैं। इसी प्रकार निन्दात्मक अर्थवाद वाक्य भी निषेध्य विषय की प्रशस्तता का बोधन कर निषेध्य विषय से शीघ्र निवृत्ति करने के लिए साधन होता है, फलतः निषेध विधि की सहायता कर

---

१. मार्ग में दो व्यक्ति अपने-अपने रथ से कहीं की यात्रा कर रहे थे, भाग्यवश एक व्यक्ति के रथ से घोड़ा भाग गया है, वह रथ को आगे ले जाने में असमर्थ थे, दूसरे रथयात्री के पास घोड़ा था; किन्तु उसका रथ टूट गया था, वह भी आगे की यात्रा में असमर्थ था, एक का रथ घोड़े के बिना निष्कर्म था और दूसरे का अश्व रथ के विना निष्कर्म था, इस सन्दर्भ में दोनों ने विचार किया कि एक का घोड़ा और दूसरे का रथ परस्पर मिलाकर उपयोग में लिया जाय तो दोनों का प्रयोजन सिद्ध हो सकता है। इसी प्रकार अर्थवाद वाक्य और विधिवाक्य परस्पर मिलकर एक ही प्रयोजन के सिद्ध कराने में समर्थ होते हैं।

निषेध्य विषय से निवृत्त करा देता है, निषेधविधि और निन्दात्मक अर्थवाद का परस्पर सम्प्रयोग से दोनों की एक प्रयोजनता सिद्ध होती है। इसी प्रकार विधि और अर्थवाद की कल्पना करनी जाहिए, जहाँ अर्थवाद है, किन्तु विधि नहीं है, वहाँ विधि का विचार करना चाहिए।

इस प्रसङ्ग में आचार्य शङ्कर का मत इस प्रकार है:—पूर्वपक्ष में कहा गया है कि वेदवाक्य क्रिया के प्रतिपादक न हो तो वे अनर्थक अर्थात् निष्प्रयोजन हैं। यह कथन जैमिनि के १।२।१ सूत्र के आधार पर किया गया है और इस पूर्वपक्ष के अनुसार वेद के अर्थवाद वाक्यों का अर्थात् 'सोऽरोदीत्' इस निन्दावाक्य आदि का भी अप्रमाण्य सिद्ध होता है। इस पूर्वपक्ष का सिद्धान्तवाक्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः। (१।२७) यह सूत्र है, जिसका विश्लेषण प्रस्तुत कर चुका हूँ।

इसके सन्दर्भ में आचार्य ने कहा है कि मन्त्रों का जिस तरह विधिवाक्यों के साथ पदैवाक्यता न रहने पर भी उनके साथ विधिवाक्य की वाक्यैकवाक्यता रहने से उनका प्रामाण्य रहता है, विधि के साथ किसी प्रकार सम्बन्ध न रहने पर ही उनका प्रामाण्य नहीं हो सकता है। इसी प्रकार प्रकृत में उपनिषदों का भी विधि के साथ वाक्यैकवाक्यता होने से प्रामाण्य हो सकता है और वे उपनिषद् वाक्य क्रियाविधि के ही अङ्ग होकर रहते हैं। यह सत्य है कि क्रिया के साथ असम्बद्ध रह कर स्वतन्त्र रूप में ब्रह्मप्रतिपादक होने पर उनका प्रामाण्य नहीं रह सकता है पदैकवाक्यता और वाक्यैक वाक्यता निम्नलिखित है।

दर्शपूर्णमास प्रकरण में छः वाक्यों का निर्देश है, स्वर्गकामी व्यक्ति दर्शपूर्णमास याग करें, इसके बाद समिधो यजति आदि वाक्य हैं। प्रथम दृष्टि मे ये सभी वाक्य परस्पर निराकाङ्क्ष रहकर अपने-अपने अर्थ की अवगति कराते हैं, किसी वाक्य का किसी वाक्य के साथ सम्बन्ध नहीं रहता है। किन्तु, एक प्रकरण में पठित हैं, अतः, इनका निश्चय ही कोई सम्बन्ध है, यह प्रतीत होता है। इसीलिए इन वाक्यों में गुण-प्रधानभाव या अङ्गाङ्गिभाव की कल्पना करनी पड़ती है, अन्यथा एक प्रकरण में पाठ निरर्थक होगा। इस प्रकार मूलभूत दर्शपूर्णमासयाग-बोधक-वाक्य के साथ समिध् आदि अङ्गबोधक वाक्यों का सम्बन्ध होने पर भी सभी वाक्यों का अपने-अपने अर्थ में अव्याहत तात्पर्य है। यही इनमें वाक्यैकवाक्यता है। पदैकवाक्यता का स्वरूप सर्वथा भिन्न है। अर्थवाद वाक्यों से प्रथम प्रतीत अर्थ ही मूल विधि वाक्य के साथ अन्वित होने के समय परित्यक्त हो जाता है, एवं समग्र वाक्यों से लक्षित एक निन्दा या प्रशंसा रूप अर्थ विधि वाक्यार्थ में प्रविष्ट हो जाता है। अतः, इन दोनों एक वाक्यताओं में अतिशय भेद है। इस दृष्टान्त के अनुरूप वेद के मन्त्र भागों के साथ ब्राह्मणभागान्तर्गत विधि वाक्य की भी वाक्यैकवाक्यता होती है। मन्त्र भाग में देवता या यागसंक्रान्त वस्तु के परिचायक वाक्य का भी अपना स्वार्थरक्षणपूर्वक

ब्राह्मण भाग के विधिवाक्य के साथ अन्वय होता है। ब्राह्मण भाग के विधि में "ऐन्द्रं हविर्जुहोति" अर्थात् इन्द्र देवता के उद्देश्य से घृत दान करे और मन्त्र भाग में "बज्रहस्तपुरन्दरः इन्द्रो वृत्रम् अवधीत्" अर्थात् इन्द्र के हाथ में वज्र है और उस वज्र से वृत्र का वध किया। इस स्थल में विधिवाक्य के द्वारा अवगत अर्थ इन्द्र के विशेषण के रूप में अन्वित होकर वाक्यार्थ में प्रविष्ट हो जाता है। अतः मन्त्र भाग के साथ विधिवाक्य की वाक्यैकवाक्यता ही सम्भव है। इसी के आधार पर भाष्यकार ने उपनिषद् का सादृश्य प्रदर्शन करते हुए क्रियाविधिशेषत्व का वर्णन किया है।

पूर्वपक्षियों ने यह आशंका की है कि ब्राह्मण भाग के अर्थवाद और मंत्र भाग के मंत्र के समान वेदान्तवाक्यके क्रिया सम्बद्ध न होने पर वेदान्त का प्रामाण्य नहीं रहेगा। इस प्रसङ्ग में यह कहा जा सकता है कि वेदान्त वाक्य के क्रियापरक न होने पर भी ब्रह्मस्वरूपविधिपरक हो सकता है और ऐसा होने पर "विधिना त्वेकवाक्यत्वात्" इस जैमिनिसूत्र के सिद्धान्त की रक्षा भी हो सकती। अप्रवृत्त प्रवर्त्तक हो विधि होती है— ऐसी बात नहीं है, क्योंकि उत्पत्ति विधि किसी को प्रवृत्त नहीं करती है, केवल अज्ञात-विषय की ज्ञापक ही उत्पत्ति विधि होती है। जैसे "अग्निहोत्रं जुहुयात्" अर्थात् अग्निहोत्रहोम करे यह वाक्य अज्ञात अग्निहोत्र की कर्तव्यता का ही ज्ञापन करता है, क्योंकि इतिकर्तव्यता या स्वरूपादि का जब तक वर्णन नहीं होता है तब तक वह किसी को प्रवृत्त नहीं कर सकता है, अतः, उत्पत्ति विधि के द्वारा अप्रवृत्त-प्रवर्तकता के समान ही अज्ञात-ब्रह्मज्ञापक-वेदान्त में विधि क्यों नहीं होगी ? ऐसी स्थिति में वेदान्त का ब्रह्म विषय में प्रमाण होगा ही।

परिनिष्ठित अर्थात् सिद्ध वस्तु में विधि कैसे सम्भव है ? विधि का विषय क्रिया ही होती है, सिद्ध वस्तु नहीं। उत्पत्ति विधि साक्षात् प्रवर्त्तक भले ही न हो क्रिया-बोधक होने से विनियोग विधि के साथ मिलित होकर प्रयोग विधि के रूप में परिणत होती है। ब्रह्मस्वरूपज्ञापक वेदान्त-वाक्य वैसा नहीं है। अतः उत्पत्ति विधि के समान ब्रह्मस्वरूप-प्रतिपादक वेदान्त-वाक्य-प्रमाण नहीं हो सकता है। कोई भी अनागत अर्थात् उत्पाद्य भाव को ही विषय करता है। प्रकृत में भाव शब्द का अर्थ भावना होता है। जिस पुरुष-व्यापार के द्वारा किसी कार्य के करने में प्रवृत्ति उत्पन्न होती है—वही भावना है। णिच्प्रत्ययान्त √भू धातु से भाव अर्थ में घञ् प्रत्यय कर 'भाव' शब्द सिद्ध होता है। इसी भाव का अर्थ भावना है। केवल √भू धातु से घञ् प्रत्यय करने पर जो भाव शब्द की निष्पत्ति होती है उस भाव शब्द का अर्थ उत्पत्ति होता है। भावनाबोधक ही विधि होती है। भावना अनागत और उत्पाद्य दोनों होती है। उत्पाद्यत्व का हेतु ही अनागतत्व है। यह विधि चार प्रकार की है—अधिकार, विनियोग, प्रयोग और उत्पत्ति। अधिकार विधि पुरुष के साथ फल का सम्बन्ध अवगत कराती है। यदि अन्य पुरुष को फल की प्राप्ति होती है तो फल के जनक कार्य में कर्ता

की प्रवृत्ति नहीं हो सकती है। अतः, कर्ता के साथ फल का सम्बन्ध बताना आवश्यक है और यह अधिकारी विधि के द्वारा होता है।

विनियोग विधि क्रिया फल जनक होती है, इसी की अवगति कराती हुई प्रधानक्रिया के साथ अवान्तर क्रिया का अङ्गाङ्गिभाव या गुणप्रधानभाव को भी अवगत करती है।

प्रयोग विधि अनेक अवान्तर अङ्गक्रियाओं का पूर्वापर भाव प्रदर्शन करती है। क्योंकि अङ्गक्रियाओं का एक साथ अनुष्ठान सम्भव नहीं है, अतः, इनमें क्रम आवश्यक है। इस विधि से उसी क्रम का प्रदर्शन होता है। इसीलिए इस विधि को अनुष्ठापन भी कहा जाता है। उत्पत्ति कहने से कर्म के स्वरूप का ज्ञान होता है, अतः, इन कर्म के स्वरूपों का ज्ञान जिस विधि से होता है—वहीं उत्पत्ति विधि है। पूर्वोक्त विधियों में सिद्ध वस्तु प्रतिपादक ब्रह्मविषयक ज्ञान का अन्तर्भाव सम्भव नहीं है। यदि यह कहा जाय कि कर्मविधि के प्रकरण में ये वाक्य नहीं कहे गये हैं, अर्थात् कर्मकाण्ड प्रकरण के मध्य में वेदान्त वाक्य नहीं कहे गये हैं, इसलिए भिन्न प्रकरण में पठित वाक्य के साथ एकवाक्यता सम्भव ही नहीं है। पूर्वपक्षी ने इसके समाधान में कहा है कि उपनिषद् में कथित उपासना विधि उपलब्ध है; और उसी प्रकरण में ब्रह्मबोधक वाक्य भी पठित है, अतः, उपासना विधि का यह शेष है।

आचार्य शङ्कर ने अपने भाष्य में एवं उसकी व्याख्याओं में इसका विस्तृत विश्लेषण किया है। "तत्तु समन्वयात्", (बा० सू० १।१।४) का भाष्य द्रष्टव्य है। अन्य प्रमाणों से अज्ञात ब्रह्म का ही प्रतिपादन उपनिषद् के उपक्रम, उपसंहार आदि वाक्यों से उपलब्ध है। 'तत्केन कं पश्येत्' आदि श्रुति वाक्यों से कारक और फल का निराकरण होने से कर्ता का भी निराकरण हो जाता है। 'अहं ब्रह्मास्मि' यह याज्ञिक भावना करने पर यज्ञ की सिद्धि सम्भव ही नहीं है। परिनिष्ठित ब्रह्म प्रत्यक्षादि प्रमाणों का विषय नहीं है। अतः, लौकिक वाक्य घट, पट आदि सिद्ध वस्तु का प्रतिपादक होने से अनुवादक या सापेक्ष होने से अप्रमाण होने पर भी प्रकृत में यह दोष नहीं है। इसी प्रकार उपासना विधि शेष भी नहीं है, क्रिया कारक आदि द्वैतज्ञान का सर्वथा विलयन हो जाने से वह ब्रह्म किसी प्रकार भी उपास्य और उपासक नहीं हो सकता है। परिनिष्ठित वेद वाक्यों के अप्रामाण्य का प्रश्न भी नहीं है, क्योंकि, उपनिषद् से बोधित आत्मा और ब्रह्म का एकत्व विज्ञान भी सर्वदुःख निवृत्तिरूप मोक्ष का उत्पादक है, अतः ब्रह्म-प्रतिपादक वेदान्त के प्रामाण्य का प्रत्याख्यान उचित नहीं है। क्योंकि वेद का प्रामाण्य स्वतः सिद्ध है। वेद ही ब्रह्म विषय में प्रमाण है अर्थात् ब्रह्म ही वेदानुशास्त्र का प्रतिपाद्य है।

'तत्तु समन्वयात्' सूत्र में अनेक भाष्य हैं। आचार्य शंकर के मत का दिग्दर्शन मात्र किया है। उपासना परक सिद्धान्त में समन्वय की भिन्न प्रक्रिया है। इस विषय की वहीं से अवगति करे ॥ ७ ॥

## तुल्यं च साम्प्रदायिकम् ॥ १.२.८ ॥

**शा० भा०—अथोच्येत प्राक् स्तुतिपदेभ्यो निराकाङ्क्षाणि विधायकानि विधिस्वरूपत्वात्। स्तुतिपदानि तु प्रमादपाठ इति। तन्न। एवमर्थावगमात्। तुल्यं च साम्प्रदायिकम्। सम्प्रदायः प्रयोजनं येषां धर्माणाम्, सर्वे ते विधिपदानामर्थवादपदानां च तुल्याः। अध्यायानध्ययने, गुरुमुखात्प्रतिपत्तिः, शिष्योपाध्यायता च। सर्वस्मिन्नेवंजातीयकेऽविघ्नार्थे तुल्यमाद्रियन्ते। स्मरणं च दृढम्। अतो न प्रमादपाठ इति॥ ८॥**

भा० वि०—ननु तुल्यं चेति च शब्देन विधिनात्वेकवाक्यत्वादित्यनेन यः स्तुत्यर्थत्वमर्थवादानामुपयोग उक्तस्तत्रैव युक्त्यन्तरं समुच्चीयत इति प्रतीयते, तच्चायुक्तम्, तुल्यसाम्प्रदायिकत्वस्य भवितव्यं प्रयोजनेनेत्येतावन्मात्रसाधकतया स्तुत्यर्थत्वासाधकत्वादित्याशङ्क्य नानेन स्तुत्यर्थत्वे हेत्वन्तरं समुच्चीयते, किन्तु स्तुत्यर्थत्वान्नानुपयोग इत्यनुपयोगपरिहार उक्तस्तत्रैव हेत्वन्तरमिति दर्शयितुं तामेवानुपयोगपरिचोदनामनुवदति—**अथेति**। स्तुतिप्रतिपादकत्वेनाभिमतेभ्यः प्राग्विधायकानि विधिपदानीति शेषः, तत्र [1]हेतुर्विधिसरूपत्वादिति, अर्थवादमनपेक्ष्यैव विधिपर्यवसायिवसन्तादिवाक्यसारूप्यादित्यर्थः, किमर्थानि तर्हि तानीत्याह—**स्तुतीति**। प्रमादपतितानि अबुद्धिपूर्वाधीतानि अनर्थकानीत्यर्थः, अत्रेतिरध्याहार्यः, तत्र पूर्वोपपादितोपयोगप्रतीतं परिहारमन्तर्भाव्य, तेन परिहान्तरसमुच्चये च शब्दं व्याख्यातुं पूर्वसूत्रोक्तमनुपयोगपरिहारं स्मारयति—**तन्नेति**। तत्र हेतुः—**एवमिति**। पूर्वोक्तप्रकारेण स्तुत्यर्थतया अर्थवत्त्वावगमादित्यर्थः, न केवलमर्थवत्त्वावगमादनुपयोगासंभवः, साम्प्रदायिकतुल्यत्वाच्चेत्येत्सूत्रगतं च शब्दं योजयति—**तुल्यं चेति**। साम्प्रदायिकपदार्थं दर्शयन्वाक्यार्थमाह—**सम्प्रदाय इति**। सम्प्रदायो अध्ययनं प्रयोजनं येषां भावानामध्यायानध्यायनादीनामित्यर्थः सम्प्रदायाख्याध्ययनानुग्राहकत्वं च धर्माणाम्।

'तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना॥

इति स्मृत्या विनियोगादवगन्तव्यम्।

ननु योऽर्थवादानर्थक्यमभ्युपैति, तस्य साम्प्रदायिकतुल्यत्वमप्यसिद्धमिति शङ्कां साम्प्रदायिकान् धर्मान् विवृण्वन् परिहरति—**अध्यायेत्यादिना**। अध्यायानध्ययनपरिच्छेदपरिसमाप्त्यादावुत्थानादिः गुरुमुखात् प्रतिपत्तिः ग्रहणं तन्नियम इति यावत्। **शिष्योपाध्यायतो** अधीहि भो इत्याद्युपसदनक्रियायां कर्तृकर्मभावः,

---

१. स्वरूपत्वादिति० मु० भा० पु० पा०।

च शब्देन भैक्षाचरणगुरुशुश्रूषाधश्शय्यादयो गृह्यन्ते, ते सर्वे **सर्वस्मिन्** वायुर्वै क्षेपिष्ठेत्येवं जातीयके वायव्यं श्वेतमित्यादिविधिवाक्यैः **तुल्यमाद्रियन्ते** आदरणेनानुष्ठातृभिरनुष्ठीयन्त इत्यर्थः, भवत्वध्ययनानुग्राहकधर्माणामर्थवादेष्वप्यादरः तथापि कथमानर्थक्यपरिहारः तत्राह—**अविघ्नार्थमिति—**

'अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ।
ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत् ॥

इत्यादिस्मृतेः तावद्विघ्नहेतुध्यायनिरासेनाक्षरग्रहणं साधयतः सम्प्रदायस्यानध्यायादिनियमजातमनुग्राहकमवगम्यते, न च निष्प्रयोजनस्य विघ्नेन किंचित् कार्यं तत्र क्लेशपरिहाराय विघ्नस्यैव युक्ततरत्वात्, तेनैषां धर्माणां सम्प्रदायाविघ्नार्थमादरेणानुष्ठीयमानत्वात् सप्रयोजनार्थवादाध्ययनस्यावसीयत इति भावः ।

नन्वादरस्य स्मृतिमूलत्वाभिधानात्, तस्याश्च मूलरहितत्वात् कथं प्रयोजनवत्त्वाध्यवसायः, **स्मरणाच्चेति** स्मृत्यधिकरणे वक्ष्यमाणन्यायेन वेदमूलत्वादृढमिति वेदमूल एवायमादर इत्यर्थः । वेदमूलश्चादरः प्रयोजनवत्त्वाद्वेदावगतादृते न सम्भवतीति सामान्येन प्रयोजनावगमान्नानर्थक्यमर्थवादानामित्याह—**अत इति** । यस्मान्न प्रमादपाठः, तस्मात्प्रयोजनविशेषाकाङ्क्षायां स्तुत्यर्थेनार्थवत्त्वं भविष्यतीति हेत्वर्थेन इति शब्देनेति दर्शितम् ।

अथवा साम्प्रदायिकधर्मादरान्यथानुपपत्त्या प्रयोजनवत्त्वमुक्त्वा, इदानीं यदेवेदं वेदस्य स्मरणं धारणात्मकपालनापरपर्यायं साम्प्रदायिकम्, तेनाप्यध्येतृपुरुषवर्तिप्रयोजनवत्त्वाभिप्रायानुमानपूर्वकं प्रयोजनत्वप्रतिपादकवाक्यानुमानात् नानर्थक्यम् इत्यन्यथा सूत्रं व्याचष्टे—**स्मरणं चेत्यादिना** । इतिशब्देन पूर्ववद्विशेषपर्यवसानं दर्शितम् ॥ ८ ॥

त० वा०—चशब्दव्याख्यानार्थं परिचोदनोपन्यस्ता । आनर्थक्यमेवास्त्विति । तन्नैव । कुतः ? पूर्वोक्तेन न्यायेनार्थस्यावगम्यमानत्वात् ।

अथ वा तन्नेत्यवच्छिद्यैवमर्थावगमादित्युक्तप्रकारपरामर्शः । किं च तुल्यं चेति योजना । संप्रदायानुग्रहार्थं धर्मजातम् । तत्संबन्धस्मरणात् । स्वर्गाद्यसंयोगाच्च । न चास्य प्रयोजनवत्संनिहिताध्ययनपरित्यागेनार्थत्वे प्रमाणमस्ति । संप्रदायाङ्गत्वेऽपि चाविघ्नस्याऽऽकाङ्क्षिततत्वात् । तादर्थ्यंस्मरणाच्चाविघ्नार्थंत्वम् । न ह्यन्यत्कल्प्यमानं स्वाध्यायेतिकर्तव्यतानुगुणं भवति । यदि तावत्स्वर्गः कल्प्येत, ततः पुरुषार्थत्वमेवाऽऽपद्यते । अथ पुनः क्रतुफलसिद्धिरेवं पठिते वेदे भवतीति । एवमपि दूरस्थोपकारितैव । तस्मात्संप्रदायस्याक्षरग्रहणं साधयतो नियमजातमनुग्राहकम् ।

न च निष्प्रयोजनस्याविघ्नेन कार्यं वरं तादृशस्य विघ्नमेवोत्पन्नं येन क्लेशोऽपि तावन्न स्यात् । यतस्ते सप्रयोजनैर्विधिवाक्यैस्तुल्यमेवाऽऽद्रियन्ते । तेनावश्यं तद्वदेव प्रयोजनवन्त्यपीति । नियमस्मृतेश्च वेदमूलत्वाद्वेदकृत एवायमादरः । स च प्रयोजनवत्त्वादृते नोपपद्यत इति, प्रयोजनवत्त्वमपि सामान्येनानुमायाऽर्थाद्वा कल्पनैकदेशत्वाद् १.४.२४ सूत्र इति । सामर्थ्यतोऽर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते । स्मरणं च दृढमित्येतदेवाऽऽह ।

अथ वा यदेवेदं ग्रन्थस्मरणं परिपालनात्मकम्, तेनाध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम् । सम्भाव्यते च कुतश्चिद्वाक्यादियं प्रतिपत्तिरिति, नाप्रमाणम् । अन्यथा हि निष्पयोजनान्येतानीति केचित्परित्यज्यार्थवादान्विधिमात्रं प्रतिपद्येरन् । तत्र दृढस्मरणमेतेषु न स्यात् । अस्ति तु तत् । तस्मान्न प्रमादपाठः । ततश्चार्थवन्त इति ।

तुल्यं च सांप्रदायिकमित्यस्यापरा व्याख्या । सम्प्रदायः प्रयोजनं यस्य वाक्यस्य, येन प्रवर्तितः सम्प्रदायः, तस्मात्स्वाध्यायोऽध्येतव्य इत्येतत्स्वाध्यायत्वाविशेषाद्विध्यर्थवादयोस्तुल्यं यः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेरवस्थातुं न लभ्यत इति, शक्त्यनुसारेण स्थितमर्थवादानां स्तुत्यर्थत्वमिति ॥ ८ ॥

न्या० सु०–सामान्योपयोगप्रतिपादनं विनाऽर्थवादानां द्वारविशेषोपयोगप्रतिपादनाशक्तेः सामान्योपयोगप्रतिपादनार्थमेतत्सूत्रं पूर्वं कार्यमपि प्रथमसूत्रव्युत्पादिताध्ययनविधिदृष्टार्थत्वबलेन सामान्योपयोगस्य सिद्धस्य विशेषोपयोगमन्तरेणानिर्वाहात्, तत्सम्भवप्रदर्शनोत्तरकालं कृतम् । तत्र भाष्यकारीयपरिचोदनोपन्यासस्य प्रयोजनमाह—**चशब्देति** । तुल्यासाम्प्रदायिकत्वस्यादृष्टार्थत्वेऽप्युपपत्तेः पूर्वंप्रतिज्ञातस्तुत्यर्थत्वासाधकत्वाद्विध्येकवाक्यत्वलक्षणस्तुत्यर्थत्वसाधकहेतुसमुच्चयार्थं चशब्दायोगात्प्रमादपाठत्वशङ्कानिराकरणार्थार्थवत्त्वावगमलक्षणहेत्वन्तरसमुच्चयार्थत्वेन चशब्दो भाष्यकृता व्याख्यात इत्यर्थः । परिचोदनार्थं व्याचष्टे—**आनर्थक्यमेवेति** । निराकरणभाष्यं व्याचष्टे—**तत्रैवमिति** ।

एवं त्वर्थावगमप्रकारानुक्तेः साकाङ्क्षत्वप्रसङ्गादपरितोषेणाऽन्यथा छेदं करोति—**अथ वेति** । अनेन च विधिना त्वेकवाक्यत्वादित्येतदेव सूत्रं प्रमादपाठत्वशङ्कानिराकरणे अपि योजितम् । विध्येकवाक्यत्वेन स्तुत्यर्थतयाऽर्थवत्त्वावगमादप्रमादपाठत्वनिराकरण एव हेत्वन्तरसमुच्चयार्थं तुल्यं साम्प्रदायिकत्वं योजयति–**किं चेति** । साम्प्रदायिकशब्दव्याख्यानार्थमनध्यायादिधर्म्माणां वेदाध्ययनाख्यसम्प्रदायप्रयोजनत्वं भाष्यकृतोक्तमुपपादयति—**सम्प्रदायेति** ।

तादर्थ्यस्मरणादिति—

'तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥'

इत्यादिना धर्म्मजातस्य सम्प्रदायार्थत्वस्मरणादित्यर्थः पुरुषार्थत्वं तु निष्प्रमाणकमित्याह—**स्वर्गादिति**। नन्वध्ययनस्वरूपे, तत्कार्ये च ग्रहणे धर्म्मजातस्यानुपयोगात्तत्पूर्व्वकज्योतिष्टोमादिकर्म्माङ्गत्वं भविष्यत्यत आह—**न चास्येति**। एतच्च द्वादशाधिकरणसिद्धमुक्तं तत्र ह्यध्यायानध्ययनाय द्वादशाध्यायाधिकरणार्थं संग्रहादिधर्म्मजातस्याध्ययनप्रकरणपठितस्यापि तस्य स्वरूपे कार्ये चानुपयोगादध्ययनेनैव फलवत्कर्म्मविबोधं भावयेदित्यध्ययननियमस्यानारभ्य विहितस्याप्यध्ययनजनितज्ञानोपस्थापितज्ञेयकर्म्माङ्गतया सामर्थ्योपबृंहितेन सन्निधिनावधारणात्, तद्द्वारा कर्माङ्गत्वावगतेरमावास्यादौ कर्म्माङ्गभूतयाज्यानुवाक्यादिमन्त्रोच्चारणं न कार्यमिति। **मन्त्राणां कर्मसंयोगे स्वधर्म्मेण प्रयोगः स्यात्, धर्म्मस्य तन्निमित्तत्वादितिसूत्रेण** पूर्वपक्षयित्वा प्रकरणेनाध्ययनाङ्गतयाऽवधारितस्यान्यार्थत्वे प्रमाणाभावादविघ्नपरिसमाप्त्यर्थत्वेन तदुपयोगसम्भवात्कर्माङ्गत्वाभावेन कर्म्मकालेऽध्यायानध्ययनादिधर्म्मानादरेणामावास्यादावपि कर्म्माङ्गमन्त्रोच्चारणं कार्यमिति विद्यां प्रतिविधानाद्वा, **सर्वकालं** प्रयोगः स्यात् कर्म्मार्थत्वात्प्रयोगस्येति सूत्रेण सिद्धान्तयिष्यते। केनोपकारेणाध्ययनाङ्गत्वं कर्म्मजातस्येत्यपेक्षायामविघ्नार्थत्वं भाष्यकृतोक्तमुपपादयति—**सम्प्रदायाङ्गत्वेऽपि चेति**। विघ्ने सत्यध्ययनेनाक्षरग्रहणस्य कर्त्तुमशक्यत्वात्, तत्सिध्यर्थमविघ्नमेवापेक्षितम्—**तादर्थ्यस्मरणाच्चेति**।

'अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्ज्जयेत्॥'

इत्यादिना धर्म्मजातस्याविघ्नार्थत्वस्मरणादित्यर्थः। प्रकरणावगताध्ययनाङ्गत्वान्यथानुपपत्त्याप्यविघ्नोऽर्थतोऽवसीयत इत्याह—**न हीति**।

एतदेव प्रपञ्चयति—**यदि तावदिति**। नन्वध्ययनजनितज्ञानसाध्यकर्म्मानुष्ठानजन्यापूर्वार्थत्वेऽपि धर्म्मजातस्य व्रीहिसाध्ययागापूर्वत्वेऽपि प्रोक्षणस्य व्रीह्यर्थत्वाविघातवदध्ययनाङ्गत्वाविघातः स्यादत आह—**अथ पुनरिति**। व्रीहीणां यागापूर्वार्थत्वात्तदुत्पत्त्युपयोगिप्रोक्षणादिधर्म्मग्राहकत्वं युक्तम्। अध्ययनस्य क्रत्वनङ्गत्वान्न तत्साम्यमिति भावः। कः पुनरध्ययनस्याविघ्नेनोपकारो जन्यत इत्यपेक्षायामक्षरग्रहणाख्यकार्ययोग्यतालक्षणमुपकारं दर्शयितुमाह—**तस्मादिति**। तुल्यसाम्प्रदायिकत्वस्य प्रकृतानर्थक्यनिराकरणोपयोगितां दर्शयति—**न चेति**। न चाध्ययनादिधर्मनियमस्मृतेर्निर्मूलत्वेनाप्रामाण्यं शङ्क्यम्, स्मृत्यधिकरणे स्मृतीनां वेदमूलत्वस्य वक्ष्यमाणत्वादित्याह—**नियमस्मृतेश्चेति**। तुल्यसाम्प्रदायिकत्वसाधितसामान्योपयोगोपसंहारपूर्वकं तस्य पूर्वसूत्रोक्तस्तुत्यर्थत्वलक्षणविशेषोपयोगसिद्ध्युपयोगितामाह—**स चेति**। अत्रैवार्थे स्मरणं च दृढमित्यादिभाष्यं योजयति—**स्मरणं चेति**। इतिकरणः प्रभृत्यर्थः, तत्र स्मरणं च दृढमिति वेदशब्दत्वाभिधाने योजितम्; अतो न प्रमादपाठ इति सामान्योपयोगोपसंहारे इतिकरणः, तस्य विशेषोपयोगित्वे यस्मान्न प्रमादपाठः। अतः कारणात्प्रयोजनविशेषापेक्षयां सामर्थ्यात्स्तुत्यर्थतार्थवादानां सिध्यतीतिकरणो हेत्वर्थे व्याख्येय इत्यर्थः।

साम्प्रदायिकशब्दो वा धारणाध्ययनपरतयानेन भाष्येण व्याख्यायत इत्याह—अत वेति । यत्त्वस्मिन्व्याख्याने पुरुषाधीनप्रामाण्यप्रसङ्गादित्यादिना दूषणं पूर्वसूत्रव्याख्योपक्रमेऽभिहितम्, तत्परिहरति-सम्भाव्यते चेति । पूर्वोक्तमध्ययनविधिप्रमाणकं सर्वस्य यदस्य प्रयोजनवदर्थपर्यवसायित्वमेतत्सूत्रारूढं कर्त्तुमध्ययनविधिपरतया साम्प्रदायिकशब्दं स्वयं व्याचष्टे—तुल्यं चेति । उभयोरपि व्याख्ययोरेतत्सूत्रोक्तस्य सामान्योपयोगस्य पूर्वसूत्रोक्तविशेषोपयोगसिद्ध्यर्थत्वप्रतिपादनार्थमतो नेत्यादिभाष्यमिति दर्शयितुं ग्रन्थशेषः ॥ ८ ॥

भा० प्र०—यह सन्देह स्वाभाविक है कि विधिवाक्य न रहने पर अर्थवाद वाक्य सप्रयोजन नहीं हो सकते हैं, और प्राशस्त्यज्ञापक अर्थवाद वाक्यों की सहायता के विना भी विधिवाक्य प्रवृत्ति-जनक हो सकता है, क्योंकि, बाद में किसी कारण से पुरुष की प्रवृत्ति कुण्ठित होने पर भी विधिवाक्य के सुनने पर प्रथम प्रवृत्ति उत्पन्न होती है। ऐसी स्थिति में अर्थवादों को प्रमाद से पठित मानने पर भी कार्य चल सकता है, क्योंकि पूर्वोक्त रीति से अर्थवाद वाक्यों के प्रति अनेक आपत्तियाँ उत्थापित हो सकती हैं। इसी आशङ्का के उत्तर में कहा गया है—"तुल्यं तु साम्प्रदायिकम्" । साम्प्रदायिक अर्थात् अनध्याय आदि नियमों का पालन करते हुए गुरु शिष्य क्रम में वेद का अध्ययन आ रहा है, अर्थवाद भी इसी रूप में अध्ययन का विषय है और अर्थवाद वाक्यों का वेदत्व भी सभी ने दृढ़तापूर्वक स्वीकार किया है । अतः, अर्थवाद वाक्य को प्रामादिक पाठ नहीं कहा जा सकता है । अनवधानतावश वेदाध्ययन के मध्य में अर्थवाद वाक्यों ने स्थान प्राप्त कर लिया है—यह नहीं कहा जा सकता है । इसलिए अर्थवाद प्रमादवश पठित होने से अप्रमाण है—यह नहीं कहा जा सकता है ।

तुल्य=समान या एक रूप । च शब्द का अर्थ हेतु है । साम्प्रदायिक=गुरु शिष्य परम्परा से प्राप्त अध्ययन । अर्थात् अर्थवाद वाक्य भी गुरु शिष्य परम्परा क्रम में विद्यात्मक वेद के अध्ययन के समान है । अथवा अर्थवाद भी विधि के समान ही वेद के ही अन्तर्गत होने से उनका अप्रामाण्य नहीं कहा जा सकता है ॥ ८ ॥

**अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥१.२.९॥**

**शा० भा०—अपि च यैषाऽनुपपत्तिरुक्ता शास्त्रदृष्टविरोधादित्येवमाद्या सा, सोऽरोदीदित्येवमादिषु न प्राप्नोति । कुतः ? प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात् । शब्दार्थस्त्वप्रयोगभूतः । तस्मादुपपद्यते—स्तेनं मनोऽनृतवादिनी वागिति ॥ ९ ॥**

**भा० वि०—एवं सूत्रद्वयेन स्वसिद्धान्तकथनेनानर्थक्यसूत्रोक्तदोषं निरस्योत्तरसूत्रोक्तदोषान्तरपरिहारार्थमप्राप्ता चेत्यादिसूत्रम् । तत्र न केवलं स्तुत्यर्थत्वेनानर्थक्य-**

परिहार एव त्वदुक्तदोषान्तराप्राप्तिश्चेति च शब्दं व्याकुर्वन् प्रतिज्ञां व्याचष्टे—अपि चेति। यद्यपि पूर्वं स्तेयादिवाक्यमुदाहृत्य शास्त्रदृष्टविरोधो दर्शितः, तथापि सोऽरोदीदित्यादिष्वपि सो विशेषादनुसन्धेयः इति वक्तुमाह—**सोऽरोदीदिति**। प्रश्नपूर्वकं प्रयोगे हीत्यादीत्यादिहेतुं व्याचष्टे—**कुत इत्यादिना** प्रयोगः अनुष्ठानः, कर्त्तव्यतेति यावत्। तस्मिन् हि प्रयोगे स्तेयादीनां रोदनवपोत्खननदिङ्मोहस्तेयानृतवदनादीनाम् उच्यमानेकल्प्यमाने शास्त्रदृष्टविरोधः स्यात् न चासौ कल्प्यत इत्यर्थः।

ननु श्रुतस्यार्थस्य प्रयोजनवत्त्वाय विधिः कल्पनीय इत्याशङ्क्यापाकरणार्थं शब्दार्थस्त्वप्रयोगभूत इतीदं व्याचष्टे शब्दार्थ इति। सूत्रे तुशब्दश्शङ्काव्यावर्तकः, वाच्यार्थविषयोऽर्थशब्दः तेषु सोऽरोदीदित्यादिषु प्रयुज्यतेऽनेनेति व्युत्पत्त्या प्रयोजन-प्रयोगः, विवक्षितश्चार्थः प्रयोजनं भवतीति लक्षणया प्रयोगशब्देन विवक्षितत्वमुक्तम् प्रयोगमप्राप्तोऽप्रयोगभूतः अविवक्षित इत्यर्थः।

एतदुक्तं भवति विवक्षितार्थस्य हि प्रयोगवत्त्वसिद्धयेऽध्याहारादिनानुष्ठानकल्पना अयं तु न विवक्षितः, तेन कल्पकाभावान्नाध्याहारादिभिर्विधिकल्पनेति, यस्मान्न विधिकल्पना, तस्मान्न शास्त्रदृष्टविरोधादीत्युपसंहारभागं व्याचष्टे—तस्मादिति।

स्तेयादिवाक्यं रोदनादिवाक्यस्याप्युपलक्षणं गुणवादस्त्वित्यनेन त्रयोऽर्थाः सूचिताः। तत्र प्रथमं तावच्छब्दार्थस्त्वप्रयोगभूत इत्यन्तेन विवक्षयार्थभावनानुपयोग उक्ते कथं नाभोपयोगः इत्यपेक्षायां गुणस्य वाद इति षष्ठीसमासाश्रयणेन स्तुत्यर्थत्वं सिद्धान्तसूत्रोक्तं पूर्वसूत्रनैराकाङ्क्षयात्यनेन स्मारितम्, तत्रापि स्वार्थासत्यत्वे कथं स्तुतिरित्यपेक्षायां गुणाद्वाद इति पञ्चमीसमासाश्रयणेन स्वार्थसत्यत्वानादरोऽप्यनेनाभिधीयते, तथा भवतु स्तुत्यर्थत्वम्, तथापि कथं क्वचित् विधेयस्तुतिपरत्वम् अविधेयगतायाः स्तुतेः भिन्नविषयत्वादित्यपेक्षायां गौण्यावृत्त्याप्यनेनोच्यते ॥ ९ ॥

त० वा०—उक्तदोषपरिहारोऽतः परम्। शास्त्रदृष्टविरोधिका याऽत्रानुपपत्तिर्विधिकल्पनायामुक्ता तामस्मत्पक्षमप्राप्तां मन्यामहे।

अथवेदं स्तुतिव्याख्यानं तामनुपपत्तिमप्राप्तमिति व्याख्येयं येषां ह्रस्वः पाठः। प्रयोगे ह्यनुष्ठाने रोदनवपोत्खननदिङ्मोहस्तेयानृतवादादीनां कल्प्यमाने विरोधः स्यात्। अस्माकं तु पुनर्य एषां शब्दानां श्रोतोऽर्थः, स नैव विवक्षितः। न चाध्याहारादिभिर्विधिः, किं तर्हि ? स्तुतिमात्रं विवक्षितः। न च तद्विरुध्यते। तस्मादुपपद्येत।

**अथ वा शब्दार्थस्त्विति विधायकशब्दानुग्रहार्थः सन्नयमर्थवादो न स्वार्थानुष्ठानेन सम्बध्यते, प्रयोगमप्राप्तोऽप्रयोगभूतस्तस्मादुपपद्येत। त्रयोऽत्र पाठाः। अप्राप्तां चानुपपत्तिमित्यत्र मन्यामह इति वाक्यशेषः, अप्राप्तं चानुपपत्तिमित्यपरः, तत्रास्मद्व्याख्यानमित्यध्याहारः। अप्राप्ता चानुपपत्तिरित्यपरः तत्रास्मत्पक्षे विज्ञेयेति ॥ ९ ॥**

न्या० सू०—सूत्रद्वयेनैव सिद्धान्तसिद्धेरुत्तरसूत्रानर्थक्यमाशङ्क्य पूर्वपक्षनिराकरणपरतया सामान्यतो व्याचष्टे—**उक्तेति**। अप्राप्तामनुपपत्तिमिति द्वितीयान्तं पदद्वयं साकाङ्क्षत्वादध्याहारेण व्याचष्टे—**शास्त्रेति**।

ह्रस्वपाठे अन्यथाध्याहारमाह—**अथ वेति**। प्रयोगे हीति सूत्रावयवव्याख्याभाष्ये स्तेयादीनामित्यादिशब्देन पूर्वोपन्यस्तस्य रोदनादेरपि ग्रहणमिति व्याचष्टे—**प्रयोगे हीति**। सूत्रशेषं व्याचष्टे—**अस्माकं पुनरिति**। श्रौतार्थाभिप्रायोऽर्थशब्दः प्रयुज्यतेऽनेनेति व्युत्पत्त्या प्रयोजनवचनः प्रयोगशब्दः अविवक्षितश्चार्थः प्रयोजनं न भवतीत्यप्रयोगशब्देनाविवक्षितत्वमुक्तम्। नन्वनुष्ठानविवक्षायां विरोधापत्तेस्तत्परिहारार्थं तस्यैवाविवक्षा वाच्या। न श्रौतार्थाविवक्षात आह—**न चेति**। अतः शब्दार्थे चशब्दः, निपातानामनेकार्थत्वात्। विवक्षितत्वे हि श्रौतस्यार्थस्य प्रयोजनवत्त्वसिद्धयेऽध्याहाराद्विनानुष्ठानकल्पना स्यात्; यतस्त्वसौ न विवक्षितः अतः कल्पकाभावान्नाध्याहारादिभिर्विधिकल्पनेत्यर्थः। अनेन चानुष्ठानाविवक्षार्थे श्रौतार्थाविवक्षेत्युक्तम्। किं तर्हि विवक्षितमित्यपेक्षायामुत्तरसूत्रे वक्ष्यमाणं स्तुत्यर्थत्वमाकाङ्क्षानिवृत्तयेऽभिहितम्।

ननु स्तुतेरपि श्रौतार्थकल्प्यत्वादविवक्षितस्य चासत्यत्वेन कल्पकत्वायोगात्तद्विवक्षापत्तेरपरिहार्यो विरोधोऽत आह—**न चेति**। असत्येनापि स्तुत्येनापि स्तुत्युपपत्तेर्वक्ष्यमाणत्वान्नास्मत्पक्षे श्रौतार्थविवक्षापत्तिरिति भावः। स्तुत्यर्थत्वमेव वाशब्दार्थोऽसि त्वत्यनेनोच्यत इत्यन्यथा व्याचष्टे—**अथ वेति**। तदानुष्ठानवचन एव प्रयोगशब्दः प्राप्तशब्दार्थे च भूतशब्द इति, न स्वार्थानुष्ठानेनेत्यादिनोक्तम्। ननु भाष्यकारेणाप्राप्ता चाऽनुपपत्तिरिति प्रथमान्तमेव पदद्वयं पठितम्, कथं भवताऽन्यदेव पाठद्वयं व्याख्यातमत आह-**त्रयोऽत्रेति**। पाठत्रयविवेकार्थं पूर्वोक्तवाक्यशेषस्मरणायोत्तरो ग्रन्थः ॥ ९ ॥

भा० प्र०—अर्थवाद वाक्य प्रमादपठित अर्थात् वेद से बहिर्भूत नहीं है—इसका युक्तिपूर्वक विवेचन कर पूर्वपक्षियों के द्वारा उत्थापित विरोध का परिहार प्रदर्शित किया जा रहा है। पूर्वपक्षी ने "शास्त्रदृष्टविरोधाच्च" इस सूत्र से जिस दोष का आपादन किया है—वह ठीक नहीं है। कारण, अर्थवाद का स्वार्थ में तात्पर्य नहीं है। "सोऽरोदीत्" "प्रजापतिरात्मनो वपामुदखिदत्", "दिशो न प्राजानन्", "स्तेनं मनः, अनृतवादिनी वाक्", इत्यादि अर्थवाद वाक्य यदि स्वार्थबोधित क्रिया को कर्तव्य के रूप में सूचित

करते तब इन अर्थवादों से रोदन, अपनी वपा का छेदन, दिङ्मोह, स्तेय या मिथ्यावादन आदि कर्तव्य के रूप में बोधित होते। तभी पूर्वपक्षी के द्वारा कथित दोष सङ्गत होता और शास्त्रदृष्टविरोध का कथन सङ्गत होता। किन्तु रोदन आदि अर्थवाद के शब्दों का अर्थ मात्र होता है। इस प्रकार अर्थवाद के अर्थ अविवक्षित हैं, क्योंकि, अर्थवाद स्वार्थ में तात्पर्यरहित है। इसलिए, जिस रूप में अर्थवाद वाक्यों की सप्रयोजनता का निर्देश पूर्वक प्रामाण्य का स्थापन किया है—वह सर्वथा युक्तियुक्त ही है। अर्थवाद वाक्यों का तात्पर्य-निरूपण किया जा रहा है।

'अप्राप्ता'=प्राप्त नहीं, 'च' और, "अनुपत्ति" शास्त्रदृष्टविरोधरूप युक्तिहीनता, "प्रयोगे" क्रिया का विधायक होने पर, "शब्दार्थः" शब्द का स्वार्थ, 'तु' किन्तु, "अप्रयोगभूत" क्रिया का विधायक नहीं है, "तस्मात्" इसलिए, "उपपद्यते" युक्तियुक्त होता है। अर्थवाद वाक्यों का जिस रूप में अर्थ का निर्देश किया गया है, उससे मेरे पक्ष में किसी प्रकार युक्ति का विरोध सिद्ध नहीं हो रहा है। क्योंकि, अर्थवाद यदि अपने अर्थभूत क्रिया का प्रतिपादक होता, तब विरोध होता, किन्तु, अर्थवाद स्वार्थबोधित क्रिया का प्रतिपादक नहीं है, अतः, जिस रूप में उनकी सप्रयोजनता से प्रामाण्य का निर्देश किया गया है, वह उपपन्न होता है ॥ ९ ॥

## गुणवादस्तु ॥१.२.१०॥

**शा० भा०—यदुक्तं विधेयस्य प्ररोचनार्था स्तुतिरिति। तदिह कथमवकल्प्येत यत्रान्यद्विधेयमन्यच्च स्तूयते। यथा वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीति वेतसावके विधीयेते। आपश्च स्तूयन्ते—आपो वै शान्ता इति। तदुच्यते। गुणवादस्तु। गौण एष वादो भवति, यत्संबन्धिनि स्तोतव्ये संबन्ध्यन्तरं स्तूयते। अभिजनो ह्येष वेतसावकयोः। ततस्ते जाते। अभिजनसंस्तवेन चाभिजातः स्तुतो भवति। यथाऽश्मकाभिजनो देवदत्तोऽश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते। एवमत्रापि द्रष्टव्यम्।**

**अथ सोऽरोदीदिति कस्य विधेः शेषः। तस्माद् बर्हिषि रजतं न देयमित्यस्य। कुतः। साकाङ्क्षत्वात्पदानाम्। सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यत्र स इति प्रकृतापेक्षः। तत्प्रत्ययात्। तस्य यदश्रुवशीर्यतेति तस्येति पूर्वप्रकृतापेक्ष एव। उपपत्तिश्चोपरितनस्य, यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद् गृहे रोदनं भवतीति। अस्य हेतुत्वेनायं प्रतिनिर्दिश्यते—'तस्माद्बर्हिषि रजतं न देयमिति'। एवं सर्वाणि साकाङ्क्षाणि कथं विधेरुपकुर्वन्तीति? गुणवादेन। रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते। तत्प्रतिषेधस्य गुणो यदरोदनमिति। कथं पुनररुदत्यरोदीदिति भवति, कथं वाऽनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम्,**

पुराऽस्य संत्सरादसति रोदने कथं रोदनं भवतीति ? तदुच्यते । गुणवादस्तु । गौणा एते शब्दाः । रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनाद्यदरोदीदित्युच्यते । वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह । निन्दन्नेव च धनत्यागे दुःख-दर्शनात्पुराऽस्य संवत्सराद् गृहे रोदनं भवतीत्याह ।

तथा यः प्रजाकामः पशुकामो वा स्यात्स एतं प्राजापत्यं तूपरमालभेत इत्याकाङ्क्षितत्वादस्य विधेः शेषोऽयं स आत्मनो वपामुदक्खिददिति । कथं गुणवादः । इत्थं नाम, नाऽऽसन्पशवो यदात्मनो वपामुदक्खिददिति । एतच्च कर्मणः सामर्थ्यं यदग्नौ प्रहुतमात्रायां वपायामजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति । कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिद-दित्याह । उच्यते । असद् वृत्तान्तान्वाख्यानं स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात् । इहान्वाख्याने वर्तमाने द्वयं निष्पद्यते–यच्च वृत्तान्तज्ञानम्, यच्च कस्मिँश्चित्प्ररो-चना द्वेषो वा । तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं न निवर्तकं चेति प्रयोजना-भावादनर्थकमित्यविवक्षितम् । प्ररोचनया तु प्रवर्तते द्वेषान्निवर्तत इति तयो-र्विवक्षा । वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्तादोषो वेदस्य प्रसज्येत । कथं पुनरिदं निरालम्बनमन्वाख्यायत इति । उच्यते । नित्यः कश्चिदर्थः प्रजापतिः स्याद् वायुराकाश आदित्यो वा स आत्मनो वपामुदक्खिददिति–वृष्टिं, वायुं, रश्मिं वा । तामग्नौ प्रागृह्णात्, वैद्युते आर्बीसे लौकिके वा । ततोऽज इत्यन्नम्, बीजम्, विरुद् वा । तमालभ्य—तमुपयुज्य प्रजाः पशून्प्राप्नोतीति गौणाः शब्दाः ।

आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुरित्यस्य विधेः शेषो, देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्नित्याकाङ्क्षितत्वात् । सर्वव्यामोहानामा-दित्यश्चरुर्नाशयिता अपि दिङ्मोहस्येति स्तुतिः । कथमसति दिङ्मोहे दिङ्मोह-शब्द इति । उच्यते । अप्राकृतस्य बहोः कर्मसमूहस्योपस्थितत्वाद् गौणो मोह-शब्दोऽवधारणावकाशदानादिभिर्ज्ञापयतीति गौणता ॥ १० ॥

भा० वि०–तत्र भाष्यकारः–एषामर्थानां पूर्वसूत्रसङ्गतिं क्रमं चानाहत्यानन्त-रोक्तेऽर्थे सूत्रं व्याख्यातुं वृत्तानुवादपूर्वकं शङ्कामाह–यदुक्तमिति । सिद्धान्तसूत्र इति शेषः इहेत्युक्तं विषयं दर्शयति—यत्रेति । ननु कुत्रैवं भिन्नविषयत्वं विधिस्तुत्यो-रत आह—यथेति । सूत्रमुत्तरत्वेनावतारयति—तदुच्यत इति । गुणाद्वाद इति । पञ्चमीसमासं दर्शयन्व्याचष्टे—गौण इति । एष वाद इत्येतद्विवृणोति—यदिति सम्बन्धिनि वेतसावकारूपे विकारे स्तोतव्ये सम्बन्ध्यन्तरमब्रूया प्रकृतिः स्तूयते यदेषः स्तुतिवादी गौण औपचारिक इत्यर्थः, प्रकृतिविकारभावमुपपादयति—अभिजन इति । अभिजायतेऽस्मादिति व्युत्पत्त्योत्पत्तिस्थानम् अभिजनः एष

अनासक्तोऽर्थः तत्र हेतुस्ततः इति जायते दृश्यते यत इति शेषः । ततः किम् ? अत आह—अभिजनेति । एतदेव दृष्टान्तेनोपपादयति—यथेति । काश्मीरशब्दो जनपदविशेषवाची, एवमिति । वेतसशाखया वकाभिश्चाग्निं विकर्षति, आपो वै शान्ताः, शान्ताभिरेवास्य शुचं शमयति इति श्रूयते । तदा वेतसावकयोः विधेयत्वेन स्तुत्यङ्गत्वम् तदर्थैवापां स्तुतिरिति निश्चयाच्छान्ताभिरिति सहयोग-तृतीयाश्रयणेनाद्भिः सहचरितो वेतसावकारूपो विकारः प्रकृतिगुणेन शान्तत्वा-दस्य यजमानस्य शुचं दुःखं शमयतीति वेतसावकयोरेवानेन स्तुतिरित्यर्थः, एवमन्तिमेऽर्थे सूत्रं योजयित्वा आदिमध्यमयोरप्यर्थयोः सोऽरोदीदित्युदाहरणे सूत्रं योजयितुं पृच्छति—अथेति । यद्यविवक्षितस्वार्थाः सोरोदीदित्येवमादयो नार्थभावनाङ्गम्, ततो अर्थवादा वक्तव्याः, न च विध्येकवाक्यत्वं विनार्थवादत्व-मिति वाच्यो विधिशेषाभाव इत्यर्थः । यज्ञकर्मणि राजतदाननिषेधशेषत्वेन निन्दार्थवादत्वं समर्थयन्नाह—तस्मादिति । शेषशेषिभावे प्रमाणं पृच्छति—कुत इति । उत्तरमाह—साकाङ्क्षत्वादिति । अवान्तरपदवर्गाभिप्रायः पदशब्दः बहुवचनेन तेषां प्रत्येकं साकाङ्क्षत्वमुक्तम् अन्यथा हि पुरास्य संवत्सराद् गृहे रोदनं भवतीत्येतावतैव निषेधसिद्धेरितरानर्थक्यात् प्रत्येकं साकाङ्क्षत्वमुप-पादयति—सोऽरोदीदित्यादिना । देवासुरा संयत्ता आसन्, ते देवा विजयमुप-यन्तो नौवामं वसुन्यदधत, इदमुनो भविष्यति, यदि नो जेष्यन्तीति, तदग्निर्न्य-कामयत, तेनापाक्रामत्, तद्देवा विजित्यावरुरुत्समाना अन्वायं तदस्य सहसा दित्सन्तेत्यत्र प्रकृतो योऽग्निः, तदपेक्ष इत्यर्थः कुतः ? तत्प्रत्ययादिति । स इत्युक्ते तस्य प्रकृतस्य प्रत्ययात् प्रतीयमानत्वादित्यर्थः ।

यद्वा स इत्यस्य सर्वनामस्थपाठात् कथं प्रकृतापेक्षत्वमित्याशङ्क्याह—तत्प्रत्ययादिति । सर्वनामतच्छब्दादेशेन स इत्यनेन स्थानिनस्तच्छब्दस्य प्रत्ययादित्यर्थः । ततश्च देवासुरादिवाक्येन सहरोदनवाक्यस्यैकवाक्यत्वं सिद्ध-मिति भावः—तस्येति । तथोत्तरस्मिन् अपि वाक्ये तस्य प्रकृतस्य रुदतो रुद्र-स्याग्नेः यदश्रु पतितम् तद्रजतमभवदित्यत्र तस्येतिशब्दः प्रकृतापेक्षः, ततश्च तस्यापि पूर्वेणैकवाक्यतेति भावः, सर्वस्यास्य सन्दर्भस्य निन्दावाक्येनैकवाक्यत्व-माह—उपपत्तिश्चेति । उपरितनस्येयमुक्तेति शेषः । च शब्दो हेतौ यस्मादिय-मुपपत्तिः, तस्मादुपपादकस्योपपाद्येनैकवाक्यता युक्तेत्यर्थः कोऽसावुपरितनो ग्रन्थः यमाह—यो बर्हिषीति ।

ननु रजतस्याश्रुकार्यत्वेऽपि रोदनोत्पादकत्वे कारणाभावात् कथमियमुप-पत्तिरत आह—हेतुत्वेनेति । अयमिति रोदनप्रभवत्वरूपोऽर्थः । कारणानुरूप-त्वात् कार्याणाम्, रजतस्य च रोदनमुक्ताश्रुप्रभवत्वात् तद्दानाद्रोदनोत्पत्तिरिति

हेतुत्वेन निर्देशादुपपत्तिरेवेयमित्यर्थः। सोपपत्तिकस्य निन्दावाक्यस्य निषेधवाक्यैकवाक्यत्वम् दर्शयितुम् पुनर्निषेधवाक्यं पठति—**तस्मादिति**। तच्छब्दस्योपपत्तिकनिन्दापरामर्शकः सापेक्षत्वेनैकवाक्यत्वं निगमयति—**एवमिति**। ततश्च विध्येकवाक्यत्वादर्थवादत्वोपपत्तिरिति भावः। साकाङ्क्षत्वमङ्गीकृत्योपकाराभावेन विध्येकवाक्यत्वमाक्षिपति—**कथमिति**। यद्यपि निन्दानिषेधयोरेवेह साकाङ्क्षत्वेनोपकारकत्वेन चैकवाक्यत्वं व्युत्पाद्यते, तथापि सर्वोदाहरणानामेकवाक्यत्वसाधारणोऽयं ग्रन्थ इति सूचयितुमुपलक्षणार्थं विधिग्रहणम्।

आदिमेऽर्थे सूत्रं योजयन्नुत्तरमाह—**गृहेति**। हि शब्दः प्रसिद्धौ प्रसिद्धं हि बहुक्षीरादिवाक्यस्य गुणवादेन विधिशेषत्वम्, तद्वदत्रापि रोदनोत्पादकगुणवादेन निन्दाया निषेधशेषत्वमित्यर्थः। निन्दामेवोपपादयति—**रोदनेति**। दोषसङ्कीर्तनात्मकत्वान्निन्दायाः गुणशब्दानुपपत्तिमाशङ्क्याह—**तदिति**। निवृत्तिफले हि निषेधे निन्दार्थमुच्यमाना दोषा गुणा एव निवृत्त्युपयोगित्वादित्याशयः। निरालम्बननिन्दानुपपत्त्या निषेधशेषत्वमाक्षिपति—**कथं पुनरिति**। न खल्वग्निररोदीदित्यत्रेदमेव वाक्यं प्रमाणम्, अस्य निषेधशेषत्वाभ्युपगमात्, प्रमाणान्तराभावात् च रोदनमकुर्वति तस्मिन् कथम् रोदीति शब्दः रोदनकर्तृत्ववाची शब्द इत्यर्थः। तस्य यदश्रु तद्रजतमित्यस्यापि निरालम्बनत्वादाह—**कथं देति**। एवमुपपादकवाक्यस्य निरालम्बनत्वमुक्त्वोपपाद्यस्यापि तदाह—**पुरेति**।

मध्यमेऽर्थे सूत्र योजयन्नुत्तरमाह—**तदुच्यत इति**। गुणाद्वादो गुणवाद इति व्याचष्टे—**गौणा इति**। एष अरोदीदित्यादिः तत्रारोदीदित्यस्य तावदालम्बनमाह—**रुद्र इति**। रोदनं निमित्तं यस्येति विग्रहः, रुद्रशब्दस्तावदग्नौ प्रसिद्धः—

"त्वमग्ने रुद्रो असुरो महोदिवः, रुद्रो वा एष, यदग्निः।"

इति मन्त्रब्राह्मणयोः प्रयोगदर्शनात्, तत्र च रोदिते रोदनार्थत्वाद्रप्रत्ययस्य च कर्त्रर्थत्वात् रोदनकर्तृवाची रुद्रशब्दोऽगम्यते। तस्मात् सिंहगुण इव देवदत्तः सिंहशब्देन रुद्रशब्देनाग्निर्विषयीक्रियमाणोऽरोदीदित्युच्यत इत्यर्थः, अश्रुप्रभववचनस्यालम्बनमाह–**वर्णेति**। वर्णसारूप्याच्छुक्लत्वादिलक्षणादश्रुप्रभवमित्याह। प्रकृतिविकारयोरेव प्रायस्सारूप्यदर्शनात्, इह च सारूप्यादुत्प्रेक्षया प्रकृतिविकारभावमाहेत्यर्थः।

किमर्थं निन्दन्निन्दाहेतोः निन्दार्थमिति यावत्, पुरास्येत्यस्यापि सालम्बनमाह—**निन्दन्निति**। लोके हि धनत्यागनिमित्तमत्यन्तोदारस्यापि गृहजनः पीड्यते, तेन धनत्यागसामान्याद्रोदनोपन्यासो गौणः न मुख्यः। निन्दार्थत्वेन च मुख्यार्थाभावो न दोष इत्यर्थः।

वपोत्खननवाक्येऽपि द्वेधा सूत्रं योजयितुं विध्येकवाक्यत्वं तावदाह—**तथेति**। रोदनवाक्यस्य निषेधशेषत्वदृष्टान्तार्थस्तथाशब्दः 'स आत्मन' इत्यादि तूपरमालभेतेत्यस्य विधेश्शेषः तेनाकाङ्क्षितत्वादिति योजना।

ननु कथमस्य विध्यपेक्षितार्थविषयत्वम्, येन तदाकाङ्क्षितत्वं स्यादिति चोदयति—**कथमिति**। सूत्रेणोत्तरमाह—**इत्थं नामेति**। विशिष्टफलत्वादिदं कर्म स्वावयवोत्कर्तनेनापि कृतम्, तत्कर्तव्यं धनसामादिनेति किमु वक्तव्यमित्यर्थः। तामग्नौ प्रागृह्णादिति वाक्योक्तं गुणान्तरमाह—**एतच्चेति**। एतत् एतादृशं प्रहृतमात्रायां प्रक्षिप्तमात्रायां·······प्रभूतपश्वादिफलत्वमनेनोक्तमिति हृदयम्।

इदानीमस्मिन्नुदाहरणेऽन्यथा सूत्रं व्याख्यातुं निरालम्बनस्तुत्यनुपपत्तिं शङ्कते—**कथमिति**। पूर्ववत्प्रमाणाभावादनुत्खिन्नायामित्यर्थः, उपलक्षणञ्चैतत् उत्तरवाक्यानामपि निरालम्बनत्वेन क·······वकत्वाभावस्य यथा सोऽरोदीदित्यादीनां गौणोऽर्थ आलम्बनम्, नैव प्रजापतिवपाखननादिवाक्यानां लभ्यते, तेनार्थान्यत्वात् स्तुतिलक्षणया प्ररोचनानुपपत्तिरित्यभिसन्धिः।

किमिदमसत्तार्थेन स्तुत्यसंभवचोद्यम्? किं वा निरालम्बनान्वाख्यानानुपपत्तिचोद्यम्? तत्राद्यं परिहरति—**असदिति**। स्तुत्यर्थेनोपयुज्यत इति शेषः। कुत इत्यत आह—**प्रशंसेति**। यद्यर्थवादावगतस्यार्थस्य प्ररोचनहेतुत्वं ततोऽर्थाभावेन प्राशस्त्यलक्षणाभावात् सा न स्यात् शब्द एव त्ववान्तरव्यापारीकृतार्थप्रत्ययः प्ररोचयति, ततश्च विनाप्यर्थं तत्प्रत्ययेनैव प्राशस्त्यावगमात् प्ररोचनासिद्धिरित्यभिसंहितम्।

ननु प्राशस्त्यवदर्थवादस्यापि गम्यमानत्वात् कथमभावः तत्राह—**इह त्विति**। अर्थवादमात्रोक्तिः प्ररोचनेति वृत्तान्तज्ञानजनितप्राशस्त्याप्राशस्त्यज्ञानाभ्यां प्ररोचनाद्वेषावित्यर्थः। ततः किम्? अत आह—**तत्रेति**। अविवक्षितं वृत्तान्तरूपेऽर्थ इति शेषः, नैतद् वृत्तान्तपरमिति यावत्, प्रवृत्त्यादिप्रयोजनत्वात्, प्ररोचनादिपरत्वं तु न युक्तमित्याह—**वृत्तान्तेति**। अन्वाख्यापन इति अन्वाख्यानम्। वृत्तान्तरूपेऽन्वाख्याने विधीयमाने=तात्पर्येण प्रतिपाद्यमाने वेदस्यादिमत्तादोषः आदिमतोऽर्थस्य प्रतिपादनादित्यर्थः, अतश्चाविवक्षित्वैवार्थं तज्ज्ञानादेव प्राशस्त्यसिद्धेः प्ररोचनासिद्धिरिति समुदायार्थः।

नन्वस्त्यर्थज्ञानमात्रस्य स्तुत्युपयोगित्वम्, निरालम्बनं तु ज्ञानमन्वाख्यानं वा न संभवतीति द्वितीयं शङ्कते—**कथमिति**। इदमन्वाख्यानमन्वाख्यायते क्रियत इत्यर्थः। निरालम्बनत्वमात्रमेवमपि कथञ्चित् परिहर्तुं शक्यमित्युत्तरमाह—**नित्य इत्यादिना**। "प्रजापतिर्वा इदमेक आसीत्" इत्यादौ प्रजापतिशब्दः प्रजा पातीति व्युत्पत्त्या विकल्पेन वाय्वादिवचन इत्यर्थः, स आत्मन इत्यत्र

वपाशब्दस्यालम्बनमाह—स इत्यादिना। वायोः प्रजापतेर्वृष्टिर्वपामध्यवर्ती सारविषयत्वाद्वपाशब्दस्य वायुमध्यवर्तित्वात् तद्धेतुकत्वाच्च वृष्टेः तथाकाशस्य वायुर्वपा। अवकाशाभावे वायोरप्रवृत्तेस्तन्मध्यवर्तित्वाद्वायुरहितस्यापवरकाकाशस्यो' दुःखोत्पादकत्वेन तत्सारत्वाच्च। तथादित्यस्य रश्मिर्वपा रश्मेरादित्यावयवत्वेन तन्मध्यवर्तित्वाद्रश्म्यायत्तत्वेन प्रकाशस्य सारत्वाच्चेत्यर्थः। तामग्नावित्यस्यालम्बनमाह—तामग्नावित्यादिना। तत्रापि यथाक्रमं वैद्युतेऽग्नौ वृष्टेर्वपायाः प्रक्षेपकल्पना तस्याबिन्धनत्वप्रसिद्धेः, आर्बीसे शारीरे जाठरे अग्नौ वायोर्निक्षेपकल्पना आन्तरत्वसामान्यात्, लौकिके अग्नौ रश्मेर्वपाया निक्षेपकल्पना, आदित्यो वा अस्तं यदग्निमनुप्रविशतीति श्रुतेः स्वरूपेण चादित्यस्य स्वर्गस्थस्य भूमिष्ठाग्निप्रवेशासंभवात्, रश्मिद्वारा तत्प्रवेशोपपत्तेश्चेत्यर्थः। ततोऽजस्तूपर इत्यस्यालम्बनमाह—तत इति। अजत्वमन्नादीनां सामान्याकारेण द्रष्टव्यम्, तत्र व्रीह्यादिरूपस्यान्नस्य विद्युद्वृष्टिसंयोगाज्जन्यऊष्मणोदकेन च विना तज्जन्यादर्शनादूष्मणश्च तेजो गुणत्वात् विद्युतश्च तेजस्त्वादुपचारात्तज्जन्याभिधानम्, वायुजाठराग्निसंयोगाच्चरमधातुरूपस्य बीजस्य जन्यजाठराग्निपाचितस्यान्नरसस्य व्यानाख्येन वायुना विण्मूत्रादिभ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामात् बीजकारणत्वं जाठरादेः रश्मिलौकिकाग्निसम्बन्धाद्वीरुज्जन्म उष्मजन्यत्वेन व्रीह्यादिवत् भौमाग्निजन्यत्वात्, निदाघकालजन्यत्वेन च वीरुधां रश्मिजन्यत्वावगमादित्यर्थः।

निगमयति—इत्थेवमिति। शब्दाः प्रजापतिशब्दप्रभृतयः, तं स्वायै देवताया आलभेत, ततो वै स प्रजाः पशूनसृजतेत्यस्यालम्बनमाह—तमिति। आलभ्येत्यस्य व्याख्यानमुपयुज्येति प्राप्येत्यर्थः। असृजतेत्यस्यालम्बनमुक्तम्। प्राप्नुवन्तीति सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वादन्नस्य तद्धेतुत्वं बीजादेस्तु स्पष्टमेव प्रजादिकारणत्वं तेनालभेतेत्यादयोऽपि शब्दा गौणा एवेत्यर्थः।

दिङ्मोहोदाहरणेऽपि सूत्रं योजयितुं विधिशेषत्वं तावदाह—आदित्य इति। कर्मसु कौशलेन दीव्यन्तीति देवा=ऋत्विजः, देवयजनं=यज्ञभूमिः। भवतु विधिशेषत्वम्, तथापि कथं स्तुतिरित्याशङ्क्य गुणवादादित्याह—सर्वेति। प्रमाणान्तरानिवर्त्योऽपि हि दिङ्मोह आदित्यचरुणा निवर्त्यते. किमुतान्ये व्यामोहा इति व्यामोहनिवर्तकत्वेन स्तुतिरित्यर्थः, निरालम्बनस्य दिङ्मोहपदस्य कथं स्तावकत्वमित्याह—कथमिति। सूत्रेणोत्तरमाह—अप्राकृतस्येति। प्रकृतावनभ्यस्तस्यानेकस्य कर्मराशेर्बुद्धौ सन्निहितत्वात् कथमेनमविदितं करिष्याम इत्याकुलीभावसम्भवेन लौकिका इव कर्तव्यतामूढाः ऋत्विजोऽप्याकुलत्वसामान्यात् गौण्यावृत्त्या दिङ्मूढा इत्युच्यन्त इत्यर्थः।

नन्वेवं 'दिशो न प्राजानन्' इति दिङ्मोहाभिधानस्य सालम्बनत्वेऽपि पथ्यां स्वस्तिमयजन् प्राचीमेव दिशं प्राजानन्, अग्निना दक्षिणा, सोमेन प्रतीचीम्, सवित्रोदीचीम्, दित्योर्ध्वमिति दितेर्दिग्भेदज्ञापकत्वोक्तेः किमालम्बनमत आह— अवधारणेति। अवधारणार्थमवकाशदानमवधारणावकाशदानम्, आदिशब्देन तत्फलप्रणिधानविचारावुक्तौ, प्रायणीयायां हि दर्शपूर्णमासविकृतौ प्रायः प्राकृतान्यभ्यस्तान्येव कर्माण्येव क्रियन्ते, ततश्च तत्समय एव भविष्यत्स्वनभ्यस्तेषु कर्मस्ववधारणार्थं प्रणिधानादिसम्भवात् प्रायणीयायां चादित्यः प्रायणीय इत्यादित्यचरुविधानाददितिः ज्ञापयतीति गौण औपचारिक एषवाद इत्यर्थः ॥ १० ॥

त० वा०—यत्र तावद्विधिस्तुत्योरेकविषयता तत्रोपपद्यतां नाम सम्बन्धः, विषयनानात्वे तु कथमिति ? गुणादित्याह। यत्क्रियायाः संबन्धिनि स्तोतव्ये, तत्संबन्ध्यन्तरं स्तूयते।

अथ वा यद्विकारे प्रकृतिसंबन्धिनि विधानार्थं स्तोतव्ये, तत्संबन्ध्यन्तरं प्रकृतिः स्तूयते। तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्तरता। तस्माददोषः। एतस्यास्तु स्तुतेरर्थमुपरिष्टाद्वक्ष्यति शान्ताभिरद्भिः संबद्धो विकारः शान्तिहेतुर्भवन्यजमानस्य कष्टं शमयतीति।

गुणवादसूत्रेण शुद्धेनैव तावद्रोदनाद्युदाहरणत्रयपरिहारः। शेषसूत्राण्यप्येतदुक्तोपपादनार्थतया संभन्त्स्यन्ते। तत्रोदाहृतानां गौणतानिमित्तं किंचिदिहैव वक्ष्यते, परं तु तत्सिद्धिसूत्रे। सोऽरोदीदिति साकाङ्क्षत्वेनैकवाक्यता विधिस्तुत्योः प्रत्यवयवं कथ्यते। स इति प्रकृतापेक्षः। कुतः ? तत्प्रत्ययात्। तद्धि प्रकृतं प्रतीयते।

अथ वा तच्छब्दस्य प्रकृतग्राहित्वं प्रसिद्धम्। स इत्युक्ते तच्छब्दप्रत्ययात्स एवार्थः। एवं तस्य यदश्रु, तद्रजतमिति संबन्धः। सर्वा नेयमुपरितनस्य निन्दाग्रन्थस्योपपत्तिरिति तदनन्तरं तदभिधानमुपपद्यते। कोऽसौ ग्रन्थः ? तं दर्शयति। यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद् गृहे रोदनं भवेदिति। केन हेतुना तदेवं भवतीति ? तदुपपाद्यते, कारणानुरूपत्वात्कार्यस्य, रोदनप्रभवरजतदानाद्रोदनोत्पत्तिस्तस्मान्न देयमिति सकलमदानस्योपपत्तिरिति। निन्दया तच्छेषत्वमर्थवत्। गुणवादस्तु शब्दालम्बनं रुद्रशब्दोत्थापितविज्ञानवशेन रोदनसामान्यतोऽदृष्टकल्पना। अश्रुणश्च शौक्ल्याद्यदि नामैतत्कठिनं भवेत्ततो रजतसदृशं भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्दा। धनत्यागेनात्यन्तोदारस्यापि गृहजनः पीड्यत इति तत्सामान्याद्वा रोदनोपन्यासः। एवं येन केनचिदालम्बनेन निन्दाविज्ञानोत्पत्तिः प्रतिषेधोपकारिणीति, मुख्यार्थाभावेऽप्यदोषः।

एवं वपोत्खननादिवाक्ययोजना। स्वात्मवपोत्कर्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि क्रियन्ते, किमुत बाह्यधनत्यागेनेति स्तुतिः। यथा नेत्रमप्युद्धृत्यायं ददातीति लोकेऽपि त्यागिनं स्तुवन्तीति। वृत्तान्तपर्यवसायी च वेदस्तत्र प्रामाण्यमप्रतिपद्यमानः स्तुतौ सत्यत्वान्नान्यत्रान्वेषणमर्हतीति निष्प्रयोजनोपाख्यानसत्यतया नार्थेन। शब्दभावनाङ्गं वाऽर्थवादाः। सा च प्रवृत्तिविज्ञानमात्रेणैवोपयुज्यते, नार्थेन। अर्थात्मिकायां तु सर्वत्राविसंवादः सिद्ध एव।

अथोच्येत असदन्वाख्यानेन स्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते। कामं परमार्थे वक्तारो भवन्ति काऽत्र स्तुतिर्निन्दा वा, सत्यमेवैतदिति। असत्ये तु यस्मादन्यत्र दुष्टमप्यवधृतमिह गुणवन्तमिति ब्रवीत्यतो नूनं मे प्ररोचयति, तथा गुणवन्तं सन्तं निन्दति निवर्तयितुमिति। ततश्चैवं विदित्वा यो यस्यानतिक्रमणीयः, तदनुरोधेन स तथा प्रवर्तते। वेदश्च प्रमाणमिति स्थितम्। तेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्येऽर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः। इह ते वेदेनोत्पादिते। तस्मात्तदनुरुतं व्यवहर्तव्यमिति। लोकेऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेनाऽऽप्तां मन्यन्ते तस्यां कञ्चित्प्रवर्तयन्तस्तदभिप्रेतं सौभाग्यादिफलमसत्यमप्युपन्यस्य नियुञ्जते। तत्प्रवृत्तश्चेतरोऽपि क्रियाश्रयं फलं प्राप्नोति। यद्यपि च प्रतिपत्ता जानाति नैतदत्र पारमार्थिकं फलं मदभिप्रायानुसारेणैतैरुपन्यस्तं सर्वथा त्वपुरुषार्थे मां न प्रवर्तयन्ति, तदसत्यं नामैतत्किमप्यन्यदवाप्स्यामीति ज्ञात्वाऽनुतिष्ठति। एवं वेदेऽपि विधिना तावत्फलमवगमितमर्थवादात्स्वसत्येन नाम प्ररोचयन्तु न तद्गते सत्यासत्यत्वे किञ्चिद् दूषयतः, प्रवर्तनमात्रोपकारित्वात्। यत्तु परस्ताद्भविष्यति, तद्विधेरुपरिगतमिति निश्चित्य नैव विद्वांसो न प्रवर्तन्ते। तस्मादुपाख्यानासत्यत्वमतन्त्रम्। न हि शुक्तिकादृष्टसत्यरजतो यदि रजतान्तरं तद्देशे लभते ततोऽभिसंधीयते। शुक्तिकावत्तु किञ्चिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम्।

यथेह महाभूतानि प्रजाः पान्तीति प्रजापतित्वेनोच्यन्ते। वाय्वादीनां यथासंख्येन मध्यवर्तिनः सारावृष्ट्यादयो वपाः, तामग्नाविति तेनैव क्रमेण वैद्युते वृष्टिम्, अर्वीसे शरीरान्तर्वर्तिनि वायुमन्तश्चरत्वसामान्याद्रश्मि लौकिके तदाप्यायनात्तस्य। ततोऽज इति बीजादीनां सामान्येनानादित्वादजत्वप्रसिद्धेः तमालभ्य प्राप्य प्रजाः पशूनाप्नोति। सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वादित्यालम्बनम्।

एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता, किं तु स्तुतित्वमेव हीयते। अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः। मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टिप्रलयाविष्येते, तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन्काले पुण्यकर्मोद्भवाभ्युप-

गमेन पशूनामभावात्स्वमाहात्म्येनाऽऽत्मन एव पशुरूपमभिनिर्माय वपोत्खननादि कृतवान्, ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम् । एवं च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव । प्रतिसृष्टि चर्तुलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्ग इति ।

कर्मसु कौशलेन दीव्यन्तीति देवा ऋत्विजः, ते देवयजनाध्यवसानानन्तरं दर्शपूर्णमासयोरनभ्यस्तं सौमिकं कर्मराशिमालोक्य कथमविदित्तं करिष्याम इत्याकुलीभावसामान्याद्दिङ्मोहाभिधानम् । तथा च लोके कर्तव्यतासु दिशो मे परिभ्रमन्तीति वक्तारो भवन्ति । तत्र तदव्युदासेनऽदितियागः प्रशस्यते । कथं तु तद्व्युदसनम् । अवधारणावकाशदानात् । यावद्धि प्रायणीयायां प्राकृतानि समभ्यस्तानि कर्माणि क्रियन्ते, तावदितरेषु भविष्यत्सु प्रणिधानं भवति, अन्यथा सर्वस्मिन्नप्राकृते निरवकाशत्वादनवधारणं स्यात् । तेनाऽऽदित्येनैवैतज्ज्ञापितमिति मोहापनयेन स्तुतिः ॥ १० ॥

न्या० मू०--यदा शब्दार्थस्त्वप्रयोगभूत इत्यनेन श्रौतार्थाविवक्षोक्ता, तदा गुणस्य वाद इति षष्ठीसमासाश्रयणादन्येन स्तुत्यर्थत्वं सिद्धान्तसूत्रोक्तं पूर्वसूत्रनैराकाङ्क्ष्याय स्मार्यते, स्वार्थासत्यत्वे वा कथं स्तुतिरित्यपेक्षायां गुणाद्वाद इति पञ्चमीसमासाश्रयणेन स्वार्थसत्यत्वानादरोऽभिधीयते । यदा तु स्तुत्यर्थत्वमेव शब्दार्थस्त्वित्यनेनोक्तम्, तदा विधिस्तु-योभिन्नविषयत्वे कथं विधायकानुग्रहार्थत्वमर्थवादस्येत्याशङ्कानिराकरणार्थमेतत्सूत्रमिति भाष्यकारेण व्याख्यातम् । तत्र भिन्नविषयत्वे स्तुत्यर्थत्वासम्भवपरिचोदनादेकविषयत्वे स्तुतित्वं पूर्वपक्षिणोऽभिमतमिति कस्यचिच्छङ्का स्यात्, ततश्च 'सोऽरोदीदित्यादिसम्भवचोद्यानुपपत्तिरित्याशङ्क्य अभ्युपेत्यवादमात्रेणेतरत्राङ्गीकृत्य भिन्नविषयत्वे तावत्परिचोदनेति व्याचष्टे—**यत्र तावदिति** ।

गौण इति तद्धितं पञ्चमीसमासप्रदर्शनपरतया व्याचष्टे---**गुणादिति** । उपचारश्चात्र गुणशब्देनाभिप्रेतः, यत्सम्बन्धिनीति सम्बन्धिशब्दः क्रियापेक्षः, प्रकृत्यपेक्षो वेति द्वेधा व्याचष्टे—**यत्क्रियाया इति** । अभिजनसंस्तवेन चेत्यादिभाष्यार्थमाह—**यत्रेति** । अभिजायते अस्मादिति व्युत्पत्त्योत्पत्तिस्थानमभिजनशब्देनोच्यते । अश्मकशब्दो जनपदविशेषवाची । कीदृशी स्तुतिरित्यपेक्षामाह—**एतस्यास्त्विति** । 'वेतसशाखयाऽवकाभिश्चाग्नि विकर्षति, आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयतीति श्रूयते । तत्र वेतसावकयोर्विधेयत्वेन स्तुत्यर्हत्वात्तदर्थे वाऽपां स्तुतिप्रतीतेः शान्ताभिरिति सहयोगे तृतीयाश्रयणेनाद्भिः सहचरितः सम्बन्धो वेतसावकीरूपो विकारः प्रकृतिगुणयोगेन शान्तत्वादस्येति सर्वनामोपात्तस्य यजमानस्य कष्टापरपर्यायां शुचं शमयतीति वेतसावकयोरनेन प्रकारेण स्तुतिरित्यर्थः ।

रोदनाद्युदाहरणत्रये केवलमेव गुणवादसूत्रं स्तुत्यसम्भवपरिहरार्थतया भाष्यकृता व्याख्यातम् । तस्य गुणवादप्रकारशेषानिरूपणेनासामर्थ्यमाशङ्क्याह—**गुणवादेति** ।

रोदननिमित्तस्य शब्दस्य दर्शनादित्यादिनोक्तस्तत्सिद्धिकरत्वादिः प्रकारविशेषो यावत्तत्सिद्धिसूत्रे वक्ष्यमाणतया नालोच्यते, तावच्छुद्धेनैवेति तावच्छब्दस्यार्थः। स्तेनाद्युदाहरणेष्वपि तर्हि सूत्रान्तरानर्थक्यं स्यादत आह—**शेषेति**।

ननु तत्सिद्धिसूत्रेण गुणवादप्रकारविशेषनिरूपणे स्तेनाद्युदाहरणेष्वपि शुद्धस्य गुणवादसूत्रस्य स्तुत्यसम्भवपरिहारसामर्थ्यादनिरूपणे वा रोदनाद्युदाहरणेष्वप्यसामर्थ्यात्किं कृतेयं व्यवस्थेति आह—**तत्रेति**। यद्यपि तत्सिद्ध्यादीनां षण्णामेव गौणवृत्तिप्रकारत्वात्सर्वप्रकारविशेषनिरूपणं तत्र करिष्यते, तथाप्यस्मिन्नुदाहरणेऽयं प्रकार इति स्तुत्युदाहरणनिष्ठतया सूत्रेणानिरूपणात्किंचित्सारूप्याद्युदाहृतानां स्तेनं मन इत्यादीनां सम्बन्धितयेहैवोच्यते स्वप्राधान्येन तु तत्र सर्वं गौणतानिमित्तं वक्ष्यत इति, प्राधान्यवाचिना परशब्देनोक्तं गौणवृत्तिलक्षणकथनमात्रपरत्वात्तत्सिद्धिः सूत्रस्येति भावः।

रोदनार्थवादे च गुणवादसूत्रयोजनार्थं विध्येकवाक्यत्वं विनार्थवादान्वयायोगात्पूर्वं विध्येकवाक्यत्वमेव साकाङ्क्षत्वे भाष्ये सोऽरोदीदित्यादिना प्रश्नपूर्वकं भाष्यकृतोपपादितं तद्व्याचष्टे—**सोऽरोदीदिति**। यद्यपि निन्दानिषेधयोरत्रैकवाक्यत्वम्, तथापि सर्वोदाहरणगतानामाकाङ्क्षाहेतुकविध्येकवाक्यत्वप्रतिपादकभाष्याणां साधारणोऽयं व्याख्याग्रन्थ इति सूचयितुमुपलक्षणार्थं विधिस्तुत्योरित्युक्तम्। प्रत्ययवयवमित्यनेन पदानामिति बहुवचनार्थो दर्शितः। अन्यथा हि पुरास्य संवत्सराद् गेहे रोदनं भवतीत्यनेनैव निन्दासिद्धेः शेषपदानामानर्थक्यं स्यात्। अवान्तरपदवर्गाभिप्रायश्चात्र पदशब्दः। एतदर्थवादोपक्रमस्य 'देवासुराः संयत्ता आसन्ते देवा विजयमुपयन्तोऽग्नौ वामं वसुसन्यदधतेदमुनो भविष्यति यदि नो जेष्यन्तीति, तदग्निर्न्यकामयत तेनापाक्रामत्ते देवा विजित्यावरुरुत्समाना अन्वायन् तदस्य सहसादित्सन्तेत्यस्याप्येकवाक्यत्वसिद्ध्यर्थमरोदीदित्यादि' भाष्यं व्याचष्टे—**स इतीति**। स इत्युक्ते तस्य प्रकृतस्य प्रत्ययादित्यर्थः।

यद्वा स इत्यस्य सर्वनामस्वपाठात्कथं प्रकृतापेक्षत्वमित्याशङ्क्य सर्वनामतच्छब्दादेशेन स इत्यनेन स्थानिनस्तच्छब्दस्य प्रत्ययादित्यन्यथा व्याचष्टे—**अथ वेति**। तद्रजतमित्यस्य भाष्यकारेणानुपन्यासात्स्वयं तत्सम्बन्धं दर्शयति—**एवमिति**। उपपत्तिश्चेति भाष्यं व्याचष्टे—**सर्वा चेति**। उपरितनस्येत्युक्तेऽप्युपरितनग्रन्थोपन्यासस्य प्रयोजनमाह—**कोऽसाविति**। हेतुत्वेनेतिभाष्यं व्याख्यातुमाशङ्कते—**केनेति**। रजतदानस्य रोदनोत्पादकत्वे को हेतुरित्यर्थः। उत्तरत्वेन भाष्यं व्याचष्टे—**तदुपपाद्यत इति**। भाष्येऽयमिति पूर्वोक्तरोदनप्रभवत्वरूपार्थपरामर्शः। पूर्वोपन्यस्तस्य निषेधस्य पुनरुपन्यासे प्रयोजनमाह—**तस्मादिति**।

कथं विधेरुपकुर्वन्तीति पृष्ट्वा गुणवादेनेत्यादिनोक्तत्वेन गुणवादसूत्रं भाष्यकृता योजितं तद्व्याचष्टे—**निन्दयेति**। दोषसङ्कीर्तनात्मकत्वान्निन्दाया गुणशब्दानुपपत्तिमाशङ्क्य तत्प्रतिषेधस्येत्यादिभाष्यकृतोक्तं कथं पुनरित्यादिना निरालम्बनस्तुत्यनुपपत्तिमाशङ्क्या-

लम्बनाभिधानपरतया पुनरेतदेव सूत्रं योजितम्। तद्व्याचष्टे—**गुणवादश्चेति**। अरोदीदित्यस्यालम्बनप्रतिपादनार्थं रुद्र इत्यादिभाष्यं व्याचष्टे—**रुद्रशब्देति**। रोदिते रोदनार्थत्वाद्रक्प्रत्ययस्य च कर्त्रर्थत्वाद्रोदनकर्तृवाची रुद्रशब्दो व्याकरणादवगम्यते। तस्य च त्वमग्ने रुद्रो असुरो महो दिव इत्यादावग्नौ प्रयोगदर्शनाद्रुद्रो वा एष यदग्निरिति चार्थवाददर्शनाद्रुद्रमग्निं द्विजाः प्राहुरिति—चारण्यकपर्वणि 'कुमारसम्भवोपाख्यानदर्शनात्। प्रस्तरे यजमानकार्यकर्तृत्ववत्तत्कार्यकारित्वेन रोदनकर्तृत्वकल्पनेत्यर्थः। तैत्तिरीयकशाखागतार्थवाददर्शनादग्नौ रुद्रशब्दोऽस्माभिर्व्याख्यातः।

अन्येषां तु कपर्दिनीमं रुद्रशब्दं व्याचक्षाणानामभिप्रायं न विद्मः। अश्रुप्रभवत्वाभिधानालम्बनप्रतिपादनार्थं वर्णसारूप्यादितिभाष्यं व्याचष्टे—**अश्रुणश्चेति**। यदि नामेत्यनेन द्रवत्वमात्रेण वैलक्षण्यमित्युक्तम्। अनेन चान्यत्र प्रकृतिविकारयोः सादृश्यदर्शनादिहापि सादृश्येन प्रकृतिविकारभावोत्प्रेक्षा दर्शिता। रोदनं भवतीत्यस्यालम्बनाभिधानार्थं निन्दन्नेवेति भाष्यं व्याचष्टे—**धनत्यागेनेति**। नन्वेवमपि मुख्यस्यार्थस्यासत्यत्वात्तल्लक्षिता निन्दाप्यसत्या स्यादत आह—**एवमिति**। नाविनाभावेनोपाख्यानादेर्मुख्यस्यार्थस्य स्तुतिनिन्दालक्षकत्वम्, किन्तु विधिनिषेधापेक्षितस्तुतिनिन्दारूपार्थप्रतिपादनोपायमात्रत्वेनोपाख्यानाद्यर्थवादैः प्रतिपाद्यते। न चोपायमात्रत्वेन कल्पितस्यासत्त्वं तद्द्वारार्थप्रतिपत्तेरसत्यत्वं प्रतिपादयति। क्विबादेरसत्यत्वेऽपि तद्द्वारस्य शब्दान्वाख्यानस्य सत्यत्वदर्शनादिति भावः।

वपोत्खननार्थवादस्य विध्येकवाक्यत्वप्रतिपादनार्थं तथेत्यादिभाष्यं व्याचष्टे—**एवमिति**। कथं गुणवाद इत्यनेन कीदृशी स्तुतिरिति पृष्ट्वेत्थं नामेत्यादिना स्तुतिस्वरूपं भाष्यकृता दर्शितं तद्व्याचष्टे—**आत्मेति**। ईदृश्यपि स्तुतिर्भवतीति दर्शयितुं दृष्टान्तमाह—**यथेति**। कथं पुनरित्यनेनासद्वृत्तान्तान्वाख्यानानुपपत्तिमाशङ्क्योच्यत इत्यादिना किमसताऽर्थेन स्तुत्यसम्भवाभिप्रायेयमाशङ्का, निरालम्बनान्वाख्यानासम्भवाभिप्राया वेति विकल्प्य, आद्ये कल्पे तावदपारमार्थिकस्याप्युपायत्वं क्विबादिवत्सम्भवतीत्युक्तम्। तदुपपादयति—**वृत्तान्तेति**। अनेन चोपाख्यानानामसत्यत्वेऽपि तत्रार्थवादानामतात्पर्यात्तात्पर्यगोचरीभूते च प्राशस्त्याप्राशस्त्यरूपेऽर्थे सत्यत्वान्न तावदप्रामाण्यापत्तिरित्युक्तम्। कथं पुनरसत्यस्य पारमार्थिकस्तुतिनिन्दोपायत्वमित्याशङ्क्याह—**शब्दभावनाङ्ग वेति**। अयमाशयः धूमादेर्ज्ञानापेक्षत्वेऽपि अर्थरूपेण कारणत्वात्तस्य चार्थाभावेऽपि तद्विषयत्वरूपेण सत्यत्वाद्रज्जुसर्पज्ञानस्येव भयकारणत्वं युक्तमेवोपायत्वमिति। अर्थसत्तानपेक्षत्वप्रदर्शनायैव सा चेत्याद्युक्तम्—**प्रवर्तेऽहमिति**। विज्ञानोत्पादे यः शब्दस्य व्यापारः, स एव शब्दभावनाशब्देनोच्यते। एवंविधविज्ञानोत्पादकत्वमेव शब्दस्य प्रवर्तकत्वम्, न तु वाद्यादिवदौदासीन्यप्रच्यावकत्वम्।

तथोक्तम्—प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः॥ इति।

तदेवात्र प्रवृत्तिविज्ञानशब्देनोक्तम्। तन्मात्रेण शब्दभावनोपयुज्यते प्रवर्त्तेऽहमिति विज्ञानं यावता प्रवर्त्यस्योत्पाद्यते, तावन्मात्रेण पर्यवस्यति नातिरिक्तममेक्षत इत्यर्थः। तच्चार्थसत्तानपेक्षात्प्राशस्त्यज्ञानमात्रात्सिद्धयतीति दर्शयितुं नार्थेनेत्युक्तम्। केचित्तु प्रकृतोपयोगानुसारेणैवं व्याचक्षते। तत्प्रवृत्त्यङ्गभूतप्राशस्त्यविज्ञानमात्रेण सोपयुज्यते। प्रवृत्त्युत्पादे समर्था भवतीति।

नन्वेवं सत्युपाख्यानवत्स्वर्गयागादिसाध्यसाधनभावसङ्कीर्त्तनस्यापि प्रवर्त्तनोपायमात्रत्वापत्तेरसत्यता स्यादत आह—**अर्थात्मिकायां त्विति**। उपाख्यानानामपुरुषार्थोपयिकत्वेन वेदस्य तत्राव्यापारात्प्रमाणान्तरानुपलब्धेश्चासत्यत्वं ज्ञातम्। साध्यसाधनभावे तु वेदस्य व्यापाराभावे निष्फलत्वापत्तेरतुल्यत्वम्। वेदप्रतीतस्यापि तु प्रत्यक्षविरोधे असत्यता स्यात् न त्वसावस्तीत्यविसंवादग्रहणेनोक्तम्। शब्दभावनायामपीतिकर्त्तव्यताभूतप्राशस्त्यज्ञानोपायमात्रे कस्मिंश्चिद्विसंवादः, न तु पुरुषप्रवृत्तिविधिज्ञानप्राशस्त्यज्ञानरूपे साध्यसाधनेतिकर्त्तव्यतांशे। अर्थभावनायां त्वितिकर्त्तव्यतोपायेऽपि द्रव्यदेवतादौ न विसंवाद इति **सर्वत्रेत्यनेनोक्तम्**।

एतदेव प्रश्नपूर्वकं विवृण्वन्नाह—**अथेति**। उत्तरमाह—**सुतरामिति**। स्वर्थसत्यत्वेन तात्पर्यशङ्कायां स्तुतिपरत्वानिश्चयादिति भावः। एतदेवोपपादयति—**काममिति**। इति ब्रवीतीतिकरणोऽर्थवादगताभिधानप्रकारनिर्द्देशार्थः। अनेन वपोत्खननादिना प्रकारेण **गुणवन्तमथं** ब्रवीतीत्यर्थः। नन्वर्थसत्तानपेक्षप्राशस्त्यज्ञानमात्रात् प्रवृत्तावनाप्तोक्तेनापि प्रवृत्तिः स्यात्। अत आह—**ततश्चेति**। नन्विष्टानिष्टप्राप्तिपरिहारहेतुत्वाद्राजादेरनतिक्रमणीयत्वं स्यात् वेदस्य, तत्कथम्? अत आह—**वेदश्चेति**। इष्टानिष्टसाधनबोधकत्वाद्वेदोऽप्यनतिक्रमणीय इति भावः। ततः किमिति चेदत आह—**तेनेति**। येन कारणेन वेदः प्रमाणम्, तेन कारणेन तदनुरूपं व्यवहर्त्तव्यमित्यर्थः। प्राशस्त्याप्राशस्त्यज्ञानयोरसत्योपायकत्वेनासत्यत्वादनादरमाशङ्क्योपायासत्यत्वेऽपि वेदकृतत्वेनानयोः सत्यत्वं दर्शयितुम्—**प्रवृत्तीत्याद्युक्तम्**। ये इह विधेयनिषेधार्थविषये प्राशस्त्याप्राशस्त्यज्ञाने भवतः, ते वेदेनोत्पादिते यस्मात्; तस्मात्तदनुरूपमिति यस्माच्छब्दाध्याहारेण योज्यम्। ज्ञानोत्पत्तौ विप्रतिपत्तिनिराकर्त्तुम्—**स्वसंवेद्यत्वमुक्तम्**। वेदादरणीयत्वाय प्रवृत्तिनिवृत्त्यनुग्राहकत्वाभिधानम्। अनुग्राहकत्वोपपादनाय पुंग्रहणम्, न चैतदलौकिकमित्याह—**लोकेऽपीति**। प्रवर्त्याभिप्रेतसौभाग्याद्यपेक्षया वपाभक्षणादिक्रियाफलस्य मेधादेः फलान्तरत्वाभिधानम्। तदित्यव्ययं **पञ्चम्यर्थो** नियोगं परामृशति, तस्मान्नियोगात्प्रवृत्तः क्रियाश्रयं तन्निमित्तं मेधादिफलं प्राप्नोतीत्यर्थः। ननु सौभाग्यादेरपारमार्थिकत्वं यो न जानाति, स एव प्रवर्तताम्। यस्तु प्ररोच्यमानः स्वाभिप्रेतफलासत्यत्वं जानाति, स कथं तदुद्देशेन प्रवर्त्तेत इति। तदाह—**यद्यपि चेति**। तदसत्यत्वेऽपि आप्ताभिप्रेतफलानुमानेन प्रवर्त्तेत इत्यर्थः। तत्प्रकृते योजयति—**एवमिति**। ननु यदि प्ररोचनावगतफलानुसारेण न प्रवृत्तिः, किमुद्दिश्य तर्हि प्रवृत्ति-

रिति तत्राह—यत्त्विति । परस्तादनुष्ठानोत्तरकालं यत्फलं भविष्यति, तत् विधेरुपगतमिति[1] विध्याश्रयं तत्प्रमाणकमित्यर्थः । उपसंहरति—तस्मादिति । प्रामाणान्तरेष्वपेक्षितार्थलाभेनोपायासत्यत्वं व्यवहारं दर्शयतीत्याह—न हीति । शुक्तिकायामदृष्टं सत्यं पारमार्थिकं रजतं येन स तथोक्तः, विफलारम्भताभिसन्धानम् । अथालम्बनसद्भावात्तत्र व्यवहारसिद्धिः, तदत्रापि समानमित्याह—शुक्तिकावत्त्विति । कथं पुनरनुखिन्नायामित्यस्यैव चोद्यस्येह निरालम्बनान्वाख्यानासम्भवाभिप्रायकत्वं कथं पुनर्निरालम्बनमन्वाख्यायत इत्यनेनाशङ्क्य नित्यः कश्चिदित्यादिना भाष्येण त्रिविधालम्बनाभिधानेन निराकृतम् । तद्वयाचष्टे—यथेहेति । यथेत्यनेनासद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेनेत्यादेः परिहारस्य सर्वसदन्वाख्यानविषयत्वं सूचितम् । अत एव पूर्वफक्किकायां सर्वत्रेत्युक्तम् ।

## व्याख्यात्रयस्य निरूपणम्

वृष्टयादीनां वपात्वं मध्यवर्त्तिसारत्वलक्षणगुणयोगेनोपपादयति—वाय्वादीनामिति । वृष्टयुत्पत्त्यवसानयोर्वाय्वायत्तत्वात्तन्मध्यवर्तित्वं सनेम्यभ्वं मरुतो जुनन्तीत्यादौ च वृष्टिहेतुत्वेन वायुस्तुतौ । तत्सारत्वं वृष्टेः । अवकाशाभावे वायोरवृत्तेस्तन्मध्यवर्तित्वं । वायुरहितस्य चापवरकाद्याकाशस्योष्मदुःखोत्पादकत्वात् । तत्सारत्वं रश्मेरादित्यावयवत्वात् । तन्मध्यवृत्तित्वं रश्म्यायत्तत्वाच्च प्रकाशकत्वस्य तत्सारत्वम् । तामग्नावित्यादिभाष्यं व्याचष्टे—तामग्नाविति । वैद्युतस्याबिन्धनत्वप्रसिद्धेस्तत्र वृष्टेर्निक्षेपकल्पना । ऋवीसशब्दस्य शरीरवाचित्वात्तदन्तर्वर्त्त्यग्निरार्वीसोऽभिधीयते तस्मिन्वायोर्निक्षेपकल्पनायामालम्बनमन्तश्चरत्वसामान्यम्, आदित्यो वाऽस्तं यदग्निमनुप्रविशतीत्यादि दर्शनात् । स्वरूपेण स्वर्गस्थस्यादित्यस्य भूमिष्ठाग्निप्रवेशायोगाद्रश्मिप्रवेशकल्पना । बीजादिष्वजशब्दप्रयोगे निमित्तमाह—ततोऽज इति । व्रीह्यदेरन्नस्योष्मणा विनाप्ररोहादर्शनात्तस्य च तेजोगुणत्वादाग्नेय्यो ह्योषधय इति च लिङ्गादग्न्युदकसंयोगजत्वावगतेस्तत्सामान्यात् वृष्टिवैद्युतसंयोगस्य कारणत्वाभिधानम् । जाठराग्निपाचितस्यान्नरसस्य व्यानाख्येन वायुविशेषेणाबीजभूतेभ्यो विण्मूत्रादिभ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामाद्वायोर्बीजकारणत्वाभिधानम् । वीरुधादेर्व्रीह्यादिवदेव भौमाग्निजन्यत्वान्निदाघकाले च प्ररोहदर्शनेनादित्यरश्मिजन्यत्वावगमाद्रश्म्यग्निसंयोगजन्यत्वं लभेः प्राप्तौ स्मरणात् । तदर्थतयोपयुज्येति पदं व्याचष्टे—तमालभ्येति । अन्नादिसेवनस्य प्रजापशूत्पत्तिकारणत्वाभिधानालम्बनमाह—सर्वप्रजानामिति ।

## तन्निरासः

एतच्च व्याख्यानत्रयं वैकल्पिकं युगपद्दर्शितम् । तद् दूषयति—एतस्मिंस्त्विति । प्रक्रमो रीतिर्व्याख्यानप्रकार इति यावत् । एवशब्देन स्तुतिसिद्धयर्थं सालम्बनत्वानुरोधेन प्रधानभूतस्तुतिबाधोऽङ्गगुणविरोधन्यायादयुक्त इति सूचितम् ।

---

१. रुपरोति २ पु० पा० ।

## स्वमतेन व्याख्यानम्

स्वमतेन व्याख्यातुं प्रतिजानीते—अत इति। सृष्ट्यादिविषयमेतदुपाख्यानं व्याख्यातुं तदनङ्गीकारादनुपपत्तिमाशङ्क्याह—मन्त्रेति। वस्तुवृत्त्या सृष्टिप्रलयाभावेऽपि मन्त्रादिव्याख्यालम्बनत्वेनापायमात्रतया तदङ्गीकरणमिति भावः। व्याख्यानमाह - तत्रेति। आत्मनः पशुरूपनिर्माणशक्तिद्योतनार्थं योगिग्रहणं पुण्यकर्म्मणामेव मन्वादीनां सृष्ट्यादावुद्भवः पुराणादिष्वभ्युपगम्यते। यद्वा पुण्यस्यैव कर्म्मणः फलदानायोद्भवः।

'अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।
चतुष्पात्सकलो धर्म्मः सत्यं चैव कृते युगे ॥'

इति स्मरणात्। ततोऽजस्तूपर उदगादित्यत्र तत इति पञ्चम्यानन्तर्यप्रदर्शनार्थेति व्याचष्टे—तत इति। वपापुरोडाशाङ्गप्रचारात्मकत्वात्पशुयागस्य वपाप्रचारमात्रेणासमाप्तिः। आनन्तर्याभिधानस्य स्तुत्युपयोगमाह—ईदृशमिति। वपोत्खननाभिधानस्योपयोगमाह—एवं चेति। सालम्बनत्वाभिप्रायः सत्यशब्दः। प्रसङ्गाद्वृत्तान्ताख्यानेऽपीत्याद्यधस्तनभाष्यं दूषयति—प्रतिसृष्टि चेति।

दिङ्मोहोदाहरणे देवशब्दालम्बनमाह—कर्म्मस्विति। के त इत्यपेक्षायामृत्विजस्तइत्युक्तम्। दिङ्मोहशब्दालम्बनाभिधानार्थमप्राकृतस्येति भाष्यं व्याचष्टे—देवयजनेति। देवयजनं यज्ञभूमिः। दृष्टश्च लोके व्याकुलीभावे दिग्भ्रमव्यपदेश इत्याह—तथा चेति। अदितेर्ज्ञापकत्वाभिधानस्यालम्बनप्रतिपादनार्थमवधारणेति भाष्यं व्याचष्टे—तत्रेति। कथमदितियागेनावधारणस्यावकाशो दीयते। अत आह—यावद्धीति। दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेतिदर्शपूर्णमासानन्तरं सोमयागस्तस्य चापूर्वत्वाद्दर्शपूर्णमासयोरनभ्यस्तस्याङ्गजातस्योपस्थापनाद्व्यामोहमात्रं प्रायणीयेष्ट्यापनीयते। सा हि सोमस्याङ्गं दर्शपूर्णमासयोश्च विकार इति पूर्वाभ्यस्तदर्शपूर्णमासिकेकर्तव्यतानुष्ठानेन करिष्यमाणेषु कर्मस्ववधानं भवतीति भावः। पथ्यां स्वस्तिमयजन्प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणाम्, सोमेन प्रतीचीं, सवित्रोदीचीम्, अदित्योर्ध्वामिति मोहापनयेन स्तुतिः ॥ १० ॥

भा० प्र०–यदि पूर्वपक्षी यह कहें कि जिस स्थल में अन्य की विधेयता एवं अन्य का प्राशस्त्य कहा जाता है, वहाँ व्यधिकरणता दोष प्राप्त होने से अर्थवाद वाक्य विधेय विषय की प्ररोचना नहीं कर सकता है। ऐसी स्थिति में विधि के साथ एकवाक्यता न होने से अर्थवाद वाक्य का प्रामाण्य भी नहीं हो सकता है—इसी आशङ्का के उत्तर में सूत्रकार ने "गुणवादस्तु" यह सूत्र कहा है। इस सूत्र में प्रयुक्त "तु" शब्द के द्वारा पूर्वपक्षी की आशङ्का का निवारण किया गया है। इन स्थलों में गुण के समान ही विवक्षा रहती है। जैसे "वेतसशाखया अवकाभिश्च अग्निं विकर्षति" इस वाक्य में वेतस शाखा विधेय है। किन्तु, इसके परवर्ती "आपो वै शान्ताः" इस अर्थवाद वाक्य में जल को शान्त कहकर प्रशंसा की गई है। जैसे कोई व्यक्ति काञ्ची देश में पूर्वजों की

परम्परा क्रम से निवास कर रहा है, यह जानकर उसके सम्बन्ध में कुछ कहने के उद्देश्य से यदि काञ्ची देश की प्रशंसा करता है, तब उस देश की प्रशंसा से उस व्यक्ति के द्वारा उसकी ही प्रशंसा अवगत होती है, वैसे ही इस स्थल में भी जल का शान्तत्व कथन जल में उत्पन्न वेतस शाखा की ही प्रशंसा की गई है। वेतस एवं अवका शान्त स्वभाव जल से उत्पन्न होने से स्वयं शान्त स्वभाव है, इसीलिए वह यजमान के भी अनिष्ट की शान्ति करने में समर्थ है—यही प्रकृत में अर्थवाद का तात्पर्य है।

इसी प्रकार "बर्हिषि रजतं न देयम्" (तै० सं० १।५।१।२) इस वाक्य में बर्हि नामक यज्ञ में रजत के दान का निषेध किया गया है, इसी के बाद "सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। तस्य यदश्रु शीर्यन्ते" इत्यादि अर्थवाद में कहा गया है कि उसने (रुद्र ने) रोदन किया, यही रुद्र का रुद्रत्व है, अर्थात् इसीलिए वह रुद्र है, रोदन काल में जो अश्रुपात हुआ; वही रजत है। इसका आशय यह है कि जो व्यक्ति बर्हिः याग में रजत दक्षिणा के रूप में देता है उसके घर पर वर्ष के भीतर ही ऐसा अनिष्ट होता है, जिससे निश्चित रूप में उसको रोदन करना पड़ता है। इस प्रकार इसके द्वारा रजत के दान की निन्दा कर रजत को दक्षिणा के रूप में न देने की प्रशंसा की गई है।

"यः प्रजायाकामः यः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत", (तै० सं० २।१।१।४,५) यह विधिवाक्य कहा गया है "प्रजाकामी एवं पशुकामी व्यक्ति प्रजापति देवता के उद्देश्य से तूपर अर्थात् शृङ्गहीन छाग के द्वारा यज्ञ करे"। इसी के बाद श्रुति में कहा गया है—"प्रजापतिरात्मनो वपामुदखिदत्"। इससे पूर्व में पशु नहीं था, अतः प्रजापति ने पशु के स्थानपर हृदय के मेदा को काटकर अग्नि में आहुति की और इस कर्म का ऐसा सामर्थ्य है कि अग्नि में पशु की वपा की जगह पर अपने वपा की आहुति देने के साथ ही साथ तूपर अज एवं अन्य पशु भी उत्पन्न हुए। यह घटना सत्य हो या असत्य इससे कुछ होना नहीं है। क्योंकि, अत्यन्त काल्पनिक वस्तु के द्वारा भी प्रशंसा या निन्दा करना आज भी लोक व्यवहार में प्रसिद्ध है। प्रकृत में इसके द्वारा यही कहा गया है कि कर्म शीघ्र फल देता है, अथवा इसका यह तात्पर्य है कि विशिष्ट प्रयोजन की सिद्धि के लिए जब अपनी वपा का छेदनकर भी कर्म का अनुष्ठान किया गया तब धन आदि बाह्य पदार्थों के व्यय से तो वह कर्तव्य ही है। लोकव्यवहार में भी ऐसा कहा जाता है कि जीवन विसर्जन कर भी मानमर्यादा की रक्षा करूँगा तब रुपये पैसे की क्या बात है, प्रकृत में भी यही समझना चाहिए।

इसी प्रकार "आदित्यः प्रायणीयश्चरुः" (तै० सं० ६।१।५।१) इत्यादि में आदित्य देवता के उद्देश्य से जो प्रायणीय आदि नामक यज्ञ के चरु का विधान किया गया है, उसी के साथ "देवा वै देवयजनकाले दिशो न प्रजानन्" यह श्रुति कही गई है। देवताओं को भी देवयज्ञ करते समय दिङ्मोह हुआ था, किन्तु, अदिति देवता के सामर्थ्य से उन देवताओं का मोह दूर हो गया, अतः, सोमयाग अनेक कर्मकलापों का सङ्कुल है। इसलिए

यजमान की इसमें भ्रान्ति या भूल होना स्वाभाविक है। किन्तु, अदिति देवता सम्बन्धी प्रायणीय एवं उदयनीय याग के चरु करने पर अदिति देवता के प्रभाव से यजमान का भ्रम दूर होगा। इस प्रकार इन स्थलों में गुणवाद ही विवक्षित है। जिस स्थल में कोई गुण विशेषगत सादृश्य का उल्लेख कर अर्थविशेष का आरोप किया जाता है, उसको वहाँ गुणवाद कहा जाता है। प्रथम अध्याय के चतुर्थ पाद के तत्सिद्धिजातिसारूप्य-प्रशंसा भूमलिङ्गसमवाया इति गुणाश्रयाः (१।४।२३) इस सूत्र के विश्लेषण में गुणवाद का व्याख्यान किया जायेगा ॥ १० ॥

## रूपात् प्रायात् ॥ १.२.११ ॥

**शा० भा०—हिरण्यं हस्ते भवति, अथ गृह्णातीति साकाङ्क्षत्वादस्य विधेः शेषः—स्तेनं मनः, अनृतवादिनी वागिति। निन्दावचनं हिरण्यस्तुत्यर्थेन यथा-किमृषिणा, देवदत्त एव भोजयितव्यः। कथं पुनरस्तेनं मनो निन्दितुमपि स्तेन-शब्देनोच्यते, वाचं चाननृतवादिनीमप्यनृतवादिनीति ब्रूयात्। गुणवादस्तु रूपात्। यथा स्तेनाः प्रच्छन्नरूपा। एवं च मन इति गौणः शब्दः। प्रायाच्चा-नृतवादिनी वागिति ॥ ११ ॥**

भा० वि०—यद्यप्यप्राप्ता चेत्यादिना सूत्रद्वयेनार्थभावनाङ्गत्वनिरासेनार्थ-वादानां गुणवादेन शब्दभावनाङ्गत्वमुक्तम्, तथाप्युदाहृतेष्वेव केषुचिद्वाक्येषु गौणतानिमित्तगुणविशेषदर्शनायोत्तरसूत्रसन्दर्भः, तत्र तूर्वोक्तदृष्टविरोधोदाहरणे तावदाह—**रूपात्प्रायादिति**। तत्र स्तेयानृतार्थवादस्याकाङ्क्षत्वेन हिरण्यहस्त-धारणपूर्वकत्वविशेषत्वं तावदाह—**हिरण्यमिति**।

ननु स्तेयाद्यर्थवादेन वाङ्मनसयोः निन्दा क्रियते, कथं विधिशेषत्वं तत्राह—**निन्देति**। सर्वक्रियाङ्गत्वेनात्यन्तान्तरङ्गभूतयोरपि अनयोः स्तेयादि धर्मत्त्वेन दूर एव हिरण्याद्दूनत्वमिति निन्दावचनं स्तुत्यर्थत्वेन न निषेधार्थतया सन्निहितविध्याकाङ्क्षितस्तुतिपरत्वेन तदेकवाक्यत्वे संभवति निषेधकल्पनानुपपत्तेः। यथा अनाहुतिर्वैजर्तिलाश्च गवीधुकाश्चेत्यस्य सन्निहित-पयोहोमस्तुत्यर्थत्वेन तदेकवाक्यत्वसंभवे न निषेधकल्पना तद्वदित्यर्थः, निन्दत्वेन प्रतीयमानमपि न तत्परं, किं तु स्तुत्या विधिपरं दृष्टमित्युदाहरति—**यथेति**।

ननु निन्दितमपि कथमस्तेनं मनः स्तेनशब्दो ब्रूयात्, ऋतवादिनीं च कथं वाचमनृतवादिनीति ब्रूयात्, निरालम्बत्वायत्तेरिति चोदयति—**कथं पुनरिति**।

पूर्वसूत्रेणोत्तरमाह—**गुणेति**। कोऽसौ गुण इत्याशङ्क्य यथाक्रममुदाहरण-द्वयेऽपि रूपात्प्रायादिति च योजयति—**यथेति वागिति**। गौणइत्यनुषङ्गः स्तेन-धर्मस्याप्रत्यक्षस्य मनसि भावात् गौणः स्तेनशब्दः, प्रायिकत्वेन च वाचोऽनृत-वादिनीत्वोक्तिरित्यर्थः ॥ ११ ॥

त० वा०—इह सर्वं क्रियमाणं मनसा संकल्प्य वाचा चाभिधाय क्रियते तदत्यन्तान्तरङ्गभूतयोरप्यनयोर्दूरेण हिरण्यादूनत्वं स्तेयानृतवादयोगादिति। या निन्दा तन्मात्रपर्यवसायिनी, सा निषेधफला भवति। विधिपरा तु स्तुत्यर्था जायते। तदुपपादनस्य दृष्टार्थत्वात्। यथा वक्ष्यति 'न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्याद्' जै० १०।८।४ इति ॥ ११ ॥

न्या० सू०—अत्र भाष्यकारेण स्तेनानृतवादाद्यर्थवादस्य हिरण्यहस्तधारणपूर्वकग्रहणविधिशेषत्वमुक्त्वा निन्दाया विधिशेषत्वानुपपत्तिमाशङ्क्य निन्दावचनमित्याद्युक्तम्। तदुपपादयति—इहेति। ननु निन्दया निषेध एव कल्प्यतां किमित्यसावन्यस्तुतिपर्यन्तं नीयतेऽत आह— या निन्देति। निषेधैकवाक्यत्वं विना निन्दात्वानवधारणान्न तद्बलेन निषेधकल्पनं युक्तम्। न चैवमानर्थक्यापत्तिः निन्दामात्रपर्यवसानाभावादिति भावः। कथमस्या विधिशेषतेत्याशङ्क्याह—तदुपपादनस्येति। वक्ष्यते च दशमे विधिसन्निधौ श्रुताया निन्दाया निषेधाकल्पनेन विधेयस्तुत्यर्थत्वमित्याह—यथेति। जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयावाग्वा वा जुहुयान्न ग्राम्यान्पशून् हिनस्ति, नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहुयादिति विधेः अनाहुतिरिति च निन्दया निषेधानुमानाद्विधिनिषेधाविति प्राप्ते सिद्धान्तयिष्यते। न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्चेति (१०-८)। शिष्टा तु प्रतिषेधः स्यात् इति पूर्वाधिकरणसूत्रानुषङ्गेणेदं योज्यम्। न चेदन्यं विधिं प्रकल्पयेद्यत्र प्रत्यक्षो विधिः सन्निहितो न स्यात्, ततः षोडशिग्रहणवाक्यवदेकेन शिष्टा परेण प्रतिषेधः स्यात्। इह तु पयसाऽग्निहोत्रं जुहुयादिति विध्यन्तरस्य प्रक्लृप्तत्वात्तच्छेषभूतोऽयमर्थवादः स्यात्, अन्यथा निषेधैकवाक्यत्वं विना निन्दात्वानवधारणेनानाहुतित्वकीर्त्तनस्य निषेधकल्पकत्वासम्भवादानर्थक्यापत्तेः। कथञ्चित्कल्पितस्यापि वा निषेधस्य षोडशिग्रहणनिषेधवद्विकल्पार्थत्वात् तस्य चात्र पयःप्रभृतिद्रव्यान्तरविधानादेव सिद्धेरानर्थक्यापरिहारात् यवागूस्तुतिनिन्दयोः कथं पयःस्तुत्यर्थत्वमित्याशङ्क्य परसामर्थ्याच्चेत्युक्तम्। ग्राम्यारण्यपशुहिंसानापादकत्वेन प्रशस्तानामपि जर्त्तिलगवीधुकानां पयःप्रयोगापेक्षया दुष्टत्वात्पयः प्रशस्ततरमिति परेण पयोविधिनान्वये सामर्थ्यादित्यर्थः, एवं चैकवाक्यत्वे सम्भवत्यनेकादृष्टानुबन्धिवाक्यभेदापादकविधित्वाङ्गीकरणायोगात् जुहुयादिति लिङोऽपि स्तुत्यर्थत्वसिद्धिः ॥ ११ ॥

भा० प्र०—पूर्वपक्षी ने शास्त्रदृष्ट प्रदर्शन के लिए 'स्तेनं मनः अनृतवादिनी वाक्" इस अर्थवाद का उल्लेख किया है यह अर्थवाद "हिरण्यं हस्ते भवति अथ गृह्णाति" (तै० सं० ४।८।२।३) इस विधिवाक्य से उपदिष्ट हाथ के द्वारा हिरण्य धारण की कर्तव्यता की प्रशस्तता का ज्ञापन है। चोर जिस प्रकार प्रच्छन्न रूप से रहता है—उसका स्वरूप गृहीत नहीं होता है, मन भी वैसा ही है एवं वाणी भी प्रायः अनृतवादिनी है, किन्तु, हाथ का न तो वैसा प्रच्छन्न रूप है और और न अनृतयुक्त है। इस-

लिए हाथ में हिरण्य का धारण कर्तव्य है। मन की स्तेन स्वरूपता एवं अनृतभाषण में प्रायिकता रूप सादृश्य के अनुसार गौणभाव से मन को स्तेन एवं वाणी को अनृतवादिनी कहा है, किन्तु, मन का स्तेनत्व या वाक्य की अनृतवादिता विवक्षित नहीं है। जैसे ऋषि से क्या काम है, यदु ही इसका विधान करेगा इस प्रकार के वाक्य में ऋषि की अपटुता प्रकटित नहीं होती है किन्तु यदु का ही सामर्थ्याधिक्य विवक्षित होता है— इस स्थल में भी इसी प्रकार है। "रूपात्" = समान रूप होने से "प्रायात्" प्रायिकता रूप से। गुणवाद के अनुसार मन को स्तेन एवं वाणी को अनृतवादिनी कहा है।

ऋग्वेदभाष्यभूमिका में भी कहा है—ऋषि की क्या आवश्यकता है, देवदत्त की ही पूजा करे। इसमें देवदत्त की पूजा को स्तुति के लिए ही ऋषि के प्रति औदासीन्य का प्रदर्शन है, ऋषि के पूज्यत्व का निषेध नहीं है॥ ११॥

## दूरभूयस्त्वात् ॥ १.२.१२ ॥

**शा० भा०—दृष्टविरोध उदाहरणं तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः। तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूम इति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति; सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति मिश्रलिङ्गमन्त्रयोर्विधानस्याऽऽकाङ्क्षितत्वाच्छेषः। उभयोर्देवतयोः संविधाने होम इति स्तुतेरुपपत्तिः। दूरभूयस्त्वाद् धूमस्याग्नेश्चादर्शने गौणः शब्दः॥ १२॥**

भा० वि०–उक्तगुणवादनिमित्तस्योदाहरणान्तरेऽव्याप्तिमाशङ्क्य परिहरति–**दूरेति**। उदाहरणान्तरमेवाह—**दृष्टेति**। अस्मिन्नुदाहरणे निमित्तान्तरं वक्तुं विधिशेषत्वं तावद्धूमार्थवादस्य दर्शयति—**अग्निरिति**। प्रातर्जुहोतीति प्रक्रमे सत्यपीति शेषः, अस्य मिश्रालिङ्गमन्त्रविधेश्शेषमिदमुदाहरणमिति सम्बन्धः।

इदमिहाकूतम्, यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय प्रजापतये च प्रातर्जुहोतीत्यग्निसूर्ययोः केवलयोर्देवतात्वेन विहितत्वादेव केवलदैवत्यमन्त्रयोः लिङ्गतोऽपि प्राप्तिसंभवात् मिश्रलिङ्गमन्त्रविधिपर्युदस्तप्रतिप्रसवनमात्रार्थत्वेन च केवलदैवत्यमन्त्रविधानस्य स्तुत्यनपेक्षत्वान्मिश्रलिङ्गमन्त्रविधानस्याग्निर्ज्योतिर्ज्योतिस्सूर्यः स्वाहेति सायं होतव्यम्, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातरित्यस्यापूर्वत्वेन स्तुत्याकाङ्क्षत्वादस्य विधेश्शेषः। शेषत्वं च तस्माद्धूम एवेत्यादेर्दिवाग्निरादित्यं गच्छतीत्यादिमिश्रताप्रतिपादनस्योपपत्तित्वेनेति विधिशेषत्वमुक्त्वा गुणवादेन स्तुतित्वमाह—**उभयोरिति**। द्वयोरपि सन्ध्ययोर्मिश्रदेवतासन्निधानाद्यथार्थाभ्यामेव मन्त्राभ्यां होम इति स्तुतेरपि सम्भव इत्यर्थः।

ननु तथापि धूम एवेत्याद्यवधारणा निरालम्बनेत्याशङ्क्य सूत्रं योजयति—**दूरेति**। धूमस्य दूरभूयस्त्वादग्नेरदर्शने गौणः शब्दः अग्नेर्दूरभूयस्त्वाद्धूमस्यादर्शने

गौणशब्द इत्यन्वयः। दृश्यमानधूमगते विषयतया दृशिसंबन्धे दृशिनालक्षिते दूरभूयस्त्वे धूमे विधीयेते, अर्चिषी च निषिध्येते एवं च यथा दिवा दूरत्वबाहुल्ये धूमे दृश्येते नैवमर्चिषि, रात्रौ यथार्चिषि नैवं धूम इत्यर्थः ॥ १२ ॥

त० वा०—तस्माद्धूम एवेति दिवाऽग्निरादित्यं गच्छतीत्यस्योपपत्तित्वेन। तदिदं किमर्थमुच्यते। मिश्रलिङ्गाग्निहोत्रमन्त्रविधिस्तुत्यर्थम्। कथं पुनरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा; सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्यनयोर्मिश्रलिङ्गत्वम्। यदा विविक्तावेवाग्निसूर्यौ देवतात्वेनोपलभ्येते।

केचिदाहुः। अग्निर्ज्योतिरित्यत्र ज्योतिःशब्दः सूर्यवाची सूर्यो ज्योतिरित्ति पुनरग्निवाची तेनोभौ मिश्रलिङ्गाविति। तदयुक्तम्। ज्योतिःश्रुतेस्तेजःसामान्यवाचित्वेनोभयत्र सामानाधिकरण्येनोपपत्तेः। अन्यतरपर्यायश्च सन्नितरत्र न प्रयुज्येत। न हि यो यत्पर्यायः, स तेनैव सह प्रयुज्यते। सूर्यवाची सन्प्रातर्मन्त्रे न प्राप्नोति। अग्निवाची सायंमन्त्रे। तस्मादुदाहरणं भ्रान्तिलिखितमितीमावुदाहर्तव्यावग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति। तद्विधेश्च स्तुतिः प्रथमविहितकेवलदेवत्यमन्त्रपर्युदासेन मिश्रलिङ्गविधानोपपत्तिरियमुच्यते। यदनयोर्मिश्रत्वं दिवाऽग्नेरनुप्रवेशान्नक्तं चाऽऽदित्यस्येति केवलेज्या न युक्तेति।

अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणम्। इतरौ तु स्तुतिभागिनी मिश्रलिङ्गाभिधानादेव ज्ञास्येते इति नोच्चारिताविति भाष्यं नेयम्। अत वोभयोः केवलमिश्रलिङ्गयोर्मध्ये पठितोऽयमर्थवादः। तत्र उभयदेवत्ययोरन्या प्रशंसा, इतरयोः पुनरियम्, यस्माद्दिवाऽग्निरादित्यं गच्छति, तस्मात्सूर्य एव तदा ज्योतिः। एवं नक्तमग्निरतस्तौ व्यवस्थितावेव यष्टव्याविति स्तुतिः। कथं तु धूम एवेत्यवधारणा। दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते, रात्रावर्चिरिति केनचिदंशेन स्तुत्यालम्बनम् ॥ १२ ॥

न्या० सू०—धूमार्थवादस्य भाष्यकृता मिश्रलिङ्गमन्त्रविधिशेषत्वमुक्तम्। तदुपपादयति—तस्मादिति। उदाहृतयोर्मिश्रलिङ्गत्वं दूषयति—कथं पुनरिति।

परमतेन समाधत्ते—केचिदाहुरिति। तद् दूषयति—तदयुक्तमिति। न केवलं प्रमाणाभावात् ज्योतिः शब्दस्याग्निसूत्रशब्दपर्यायत्वाभावः, किं तु बाधकसद्भावादपीत्याह—अन्यतरेति। भाष्यानादरेण स्वयं मिश्रलिङ्गमन्त्रविधिशेषत्वमाह—तस्मादिति। अत्रैवार्थे भाष्यं योजयति—अस्मिन्नपि त्विति। अनेन च प्रातरितीतिकरणः काकुत्वेनैवं व्याख्यातः सत्यप्यस्मिन्प्रक्रमे यदग्नये च प्रातर्जुहोतीत्यग्निसूर्ययोः केवलयोर्देवतात्वेन विहितत्वात्केवलदेवत्यमन्त्रयोर्लिङ्गतोऽपि प्राप्तिसम्भवे मिश्रलिङ्गमन्त्रविधिपर्युदस्तप्रतिप्रसवमात्रार्थ-

त्वेन केवलदेवत्यमन्त्रविधानस्य स्तुत्यनाकाङ्क्षत्वान्नास्य तच्छेषतेति, तत्पर्युदासेन मिश्रालिङ्गयोरपूर्वस्य विधानस्याकाङ्क्षितत्वात्तच्छेष इति ।

एवं भाष्यकारमतेन ब्राह्मणेनाप्यग्निसूर्यविधिमङ्गीकृत्य केवललिङ्गमन्त्रविधेस्तदर्थशास्त्रतादोषपरिहाराय प्रतिप्रसवमात्रार्थत्वात् स्तुत्यनाकाङ्क्षतोक्ता । इदानीमाधाराग्निहोत्राधिकरणे वाक्यभेदभयाद् ब्राह्मणे चाग्निसूर्यविधेर्निराकरिष्यमाणत्वाल्लिङ्गतः प्राप्त्यभावात् तदर्थशास्त्रत्वाभावेनापूर्वविधित्वात् स्तुत्याकाङ्क्षोपपत्तेरस्यैवायं शेष आह—अथ वेति । यद्यप्यनयोर्विध्योर्मध्ये पठितः, तथापि मिश्रलिङ्गविधेर्यदग्नये सायं जुहुयादासूर्याय वृश्चेत् यत्सूर्याय प्रातर्जुहुयादासूर्याय वृश्चेत्, देवताभ्यः समदन्दध्यादग्निर्ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति सायं होतव्यं सूर्य्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातस्तयोरुभाभ्यां प्रातर्न देवताभ्यः समदन्दधातीति देवताद्रोहापादकत्वेन केवलदेवत्यनिन्दापूर्वकस्य देवताद्रोहानापादकत्वलक्षणप्रशंसान्तरसद्भावेन निराकाङ्क्षत्वात्केवलदेवत्यविध्योरेवायं प्रशंसेत्यर्थः । भाष्यं चैवमस्मिन्नर्थे योज्यम् । मिश्रलिङ्गयोरित्यनादरे षष्ठी सप्तमी वेयं सतोरपि सन्निधौ मिश्रलिङ्गयोर्मन्त्रयोर्विहितयोः प्रशंसान्तरसद्भावेन तयोः स्तुत्यनाकाङ्क्षत्वादुदाहृतकेवललिङ्गमन्त्रविधानस्यैवेयमाकाङ्क्षितत्वाच्छेष इति । अस्मिन्पक्षे स्तुतिस्वरूपं दर्शयति—यस्माद्दिवेति । व्यवस्थितशब्देनोभयोरित्यादिभाष्यं नक्तमग्नेर्दिवा च सूर्यस्य सन्निधाने व्यवस्थया होम इत्येवं व्याख्यातम् । जुहोतिचोदितस्याप्युद्देशांशे भागरूपे देवतान्वयमभिप्रेत्य यष्टव्यावित्युक्तम् । पूर्वव्याख्याने तूभयशब्दो मिश्रवचनः ।

दूरभूयस्त्वादित्यदर्शनाभिधानालम्बनप्रतिपादनार्थं भाष्यं प्रश्नपूर्वं व्याचष्टे—कथं त्विति । दूरस्थस्य भूयस्त्वेन यद्दर्शनं नाम, दर्शनगतोऽतिशयो दृशिना लक्षितः स नञा निषिध्यते पशुशब्दलक्षितमिव प्राशस्त्यमपशुशब्देन अपशवो वा अन्ये गो अश्वेभ्य इत्यनेन नञेति भावः—केनचिदिति । दूरभूयस्त्वांशेनादर्शनं स्तुतेरालम्बनमित्यर्थः ॥ १२ ॥

भा० प्र०—दृष्टविरोध के उदाहरणस्वरूप "तस्माद्" धूम एवाग्निर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः" इस अर्थवाद का उदाहरण दिया है। यह अर्थवाद "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोत सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः" । (ऐ० ब्रा० ५।५।६) सायंकाल अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' यह कह कर अग्निहोत्र होम करे एवं प्रातःकाल "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा" यह कहकर अग्निहोत्र होम करे—यह विधिद्वय का शेष या अङ्ग है। इसका कारण यह है कि दिन में अग्नि की अर्चिः अर्थात् अग्निशिखा दिखाई नहीं देती है, केवल धूम ही दिखाई देता है, इसीलिए दिन में अग्नि के अदृश्य होने से सूर्य का मन्त्र ही प्रशस्त है, और दिन में अधिक दूर में स्थित अग्नि दृष्टिगोचर नहीं होती है, केवल धूम ही दृश्य होता है एवं रात में धूम दृश्य नहीं रहता है, किन्तु अग्नि की शिखा दिखाई देती है—यह अनुभव सिद्ध है। इसी प्रकार अधिक दूरी के कारण दिन में अग्नि का अदर्शन एवं धूम का दर्शन और

अग्नि के दर्शन को लक्ष्य कर गुणवाद के अनुसार यह कहा गया है। अतः यह अर्थवाद उक्त दोनों विधियों के प्राशस्त्य का बोधक होने से स्वरूप में तात्पर्य नहीं है।

"दूरभूयस्त्वात्" अधिक दूरी होने से, अर्थात् दूरी का भूयस्त्व आधिक्य होने से दिन में अग्नि की शिखा दृश्य नहीं होती है एवं रात में धूम दृश्य नहीं होता है। अतः इस प्रकार गौण कथन है ॥ १२ ॥

## स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १.२.१३ ॥

**शा० भा०—दृष्टविरोध एवोदाहरणं 'न चैतद्विद्म' इति। तत् प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयादित्याकाङ्क्षितत्वादस्य विधेः शेषः। अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः। दुर्ज्ञानत्वादज्ञानवचनं गौणम्। स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन। अप्रमत्ता रक्षत तन्तुमेनमित्यादिना दुर्ज्ञानम् ॥ १३ ॥**

भा० वि०—अस्याप्युदाहरणान्तरेऽव्याप्तिमाशङ्क्य निमित्तान्तरोपन्यासेन परिहरति—स्त्र्यपराधादिति। प्रव्रियमाणे यजमानो ब्रूयात् देवाः पितर इत्यादीति पूरणीयम्। प्रवरानुमन्त्रणविधिशेषत्वेऽपि कथं स्तुतिरित्याशङ्क्य गुणवादादित्याह—अब्राह्मणोऽपीति। तत्र च प्रसिद्धब्राह्मण्यानां ब्राह्मणत्वलाभो निष्प्रयोजन इति ब्राह्मण्याप्रसिद्धिप्रतिपादनेन स्तुत्युपपादकमेतद्वाक्यमित्यर्थः। तथापि ज्ञायमाने कथमज्ञानवचनमित्याङ्क्य गुणवादादित्याह—दुर्ज्ञानत्वादिति। विदिना तद्गतं सौकर्यं लक्षयित्वा नञा निषिध्यत इत्यर्थः। दुर्ज्ञानत्वे कारणं सूत्रव्याख्यानेनाह—स्त्र्यपराधेनेति। दुर्ज्ञानमिति सम्बन्धः। स्त्रीणां स्वभर्तृव्यतिक्रमलक्षणापराधसम्भवेनेत्यर्थः ॥ १३ ॥

त० वा०—प्रवरे प्रव्रियमाणे यजमानो वदेद्देवाः पितर इत्यादि। तत्प्रशंसार्थमुक्तमब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति। तत्र प्रसिद्धब्राह्मणत्वानामेव ब्राह्मण्यलाभो निष्प्रयोजन इति तदुपपत्त्यर्थमुक्तं न चैतद्विद्म इति। ज्ञायमाने त्वज्ञानवचनं दुर्ज्ञानत्वात्। यत्सुखेनाज्ञानम्, तदज्ञानमेव। तच्च स्त्र्यपराधनिमित्तम्। सत्यपि च स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात्ततस्तयोः प्रसिद्धजातित्वान्नैव दुर्ज्ञानता भवेत्। तयोरप्येवमेवं तत्पूर्वजयोरित्यनादिन्यायेन जातिरवधार्यैतैव। यतस्तु माता भस्त्रा पितुः पुत्र इति 'स्मर्तॄणां दर्शनं जनयितुश्च नानाजातित्वोपपत्तिः, तेन वर्णसंकरः। वेदेऽपि चा प्रमत्ता रक्षत तन्तुमेनमिति जातिविच्छेददर्शनं स्त्र्यपराधकर्तृपुत्रनिमित्तमेवोपपद्यते। अन्यथा ह्यपरिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत्। तेनास्ति प्रशंसावकाश इति। निरूढब्राह्मण्यप्रवरसंकीर्तनात्तत्प्रभवोऽयमिति ज्ञानाद् ब्राह्मणः कृतो भवतीति स्तुतिः ॥ १३ ॥

न्या० सू०—'न चैतद्विद्म' इत्यस्य प्रवरं प्रवियमाणे ब्रूयादित्येतद्विधिशेषत्वं भाष्यकृतोक्तम् । तत्र विध्यंशपूरणपूर्वकं स्तुत्युपयोगित्वमुपपादयति—**प्रवर इति** । अज्ञानवचनालम्बनाभिधानार्थं दुर्ज्ञानत्वादिति भाष्यं व्याचष्टे—**ज्ञायमाने त्विति** । दुर्ज्ञाने कथमज्ञानशब्दप्रवृत्तिरित्यपेक्षायामाह—**यत्सुखेनेति** । पूर्ववदत्रापि ज्ञानगतसौकर्यलक्षणो गुणो विदितो विदितलक्षितो नञा निषिध्यत इत्यर्थः । स्त्रचपरावेनेति दुज्ञानित्वोपपादनार्थत्वेन व्याचष्टे—**तच्चेति** ।

ननु स्त्रचपरावेऽपि बीजाद्योनिर्बलीयसीत्यनेन न्यायेन मातृब्राह्मण्यमात्रेण क्षेत्रिब्राह्मण्येन वा पुत्रे ब्राह्मण्यसिद्धेः कथं दुर्ज्ञानतेत्याशङ्कानिराकरणार्थंतया कर्त्तुश्च पुत्रदर्शनेनेति भाष्यं व्याचष्टे—**सत्यपि चेति** । किं तत्कर्त्तुः पुत्रदर्शनमित्यपेक्षयां येन जातः स एव स माता भस्त्रा पितुः पुत्रो इत्याद्युदाहृतम् । जनकब्राह्मण्यनिमित्तेऽपि पुत्रब्राह्मण्ये कथं दुर्ज्ञानत्वमत आह—**जनयितुश्चेति** । साक्षात्कर्तृपुत्रदर्शनं स्वयमुदाहृत्य भाष्यकारीयमुदाहरणं द्योतकत्वेन योजयेति—**वेदेऽपि चेति** । उपपादितं स्तुत्युपयोगमुपसंहरति—**तेनेति** । दुर्ज्ञानत्वेनाब्राह्मण्यशङ्कासम्भवादब्राह्मणस्यापि प्रवरानुमन्त्रणाद् ब्राह्मण्यं भवतीत्येवंरूपा प्रशंसा युक्तेत्यर्थः ।

ननु ब्राह्मण्यस्य मातापितृसंबन्धनिमित्तत्वात्प्रवरानुमन्त्रणजन्यत्वाभिधानं किमालम्बनमत आह—**निरूढेति** । निरूढं=प्रसिद्धं ब्राह्मण्यं येषां प्रवराणां प्रवियमाणानां सङ्कीर्त्यमानानां तेषां सङ्कीर्त्तनादित्यर्थः ॥ १३ ॥

मा० प्र०—"नचैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा" इस अर्थवाद में भी दृष्टविरोध प्रदर्शित किया है, किन्तु यह भी ठीक नहीं है, क्योंकि "प्रव्रियमाणे ब्रूयात् देवाः पितरः" (मै० सं० १।४।११) प्रवर के कथन के समय देवाः पितरः इत्यादि कहना चाहिए यह इस विधि का शेष या अङ्ग होता है। आशय यह है कि यजमान यदि देवाः पितरः पितरो देवा योऽस्मि सन् यजे योऽस्मि सन् करोमि" इस मन्त्र में प्रवर अनुमन्त्रित करे, ऐसी स्थिति में अब्राह्मण भी ब्राह्मण हो जाता है। इस प्रकार इसके द्वारा प्रवरअनुमन्त्रण की प्रशंसा की गई है। किन्तु ब्राह्मणत्वादि की अज्ञेयता विवक्षित नहीं है, कारण ब्राह्मण, क्षत्रिय आदि प्रत्यक्ष सिद्ध है, ब्राह्मणत्वादि जाति जन्म के अनुसार है, गुण के अनुसार नहीं है, यह प्रत्यक्ष सिद्ध है। शास्त्रकारों के अनुसार गोत्व आदि जाति के समान ब्राह्मणत्वादि जाति भी प्रत्यक्षगम्य एवं जन्मगत है। यदि ब्राह्मणत्वादि जाति को जन्मगत नहीं माना जाय तब दृष्टविरोध, शास्त्रविरोध, अन्योऽन्याश्रय, अव्यवस्था एवं एक साथ वृत्तिद्वय-विरोध आदि अनेक दोषों की सम्भावना है। ब्राह्मणत्वादि जाति जन्मगत है, यह प्रत्यक्षगम्य होने से उसका अपलाप करने पर दृष्टविरोध होगा। "अष्टवर्षं ब्राह्मणमुपनयीत" आठ वर्ष के ब्राह्मणपुत्र को ब्राह्मण कह कर उल्लेख किया गया है। यदि जन्मगत जाति न मानी जाय तो इसकी असङ्गति होगी

कारण, आठ वर्ष के बालकों में साधारणतया ब्राह्मणोचित किसी भी गुण की अभिव्यक्ति नहीं होती है। क्षत्रिय एवं वैश्य के प्रसङ्ग में भी इसी प्रकार उपनयन की अवस्था का निर्णय किया गया है। यदि जाति को जन्मगत नहीं माना जाय तो इन शास्त्रवचनों के साथ विरोध होगा। ब्राह्मणत्वादि जाति का आचार से जन्म मानने पर अन्योऽन्याश्रय दोष होगा, क्योंकि, जहाँ चारों वर्णों के आचारके विषय में उपदेश दिया गया है, वहाँ ब्राह्मणत्वादि जाति का परिचय देना शास्त्र का उद्देश्य नहीं था, किन्तु, आचार के विधान में ही शास्त्र का तात्पर्य है। अतः, जो व्यक्ति ऐसे आचार से सम्पन्न है, वह ब्राह्मण है, इसमें शास्त्र का तात्पर्य नहीं है। क्योंकि धर्म के प्रतिपादन करने में ही शास्त्र का उद्देश्य है। ऐसी स्थिति में वैसा आचार करने पर ब्राह्मण होगा, और ब्राह्मणत्व पूर्व से सिद्ध रहने पर ही वे आचार अनुष्ठेय होंगे, इस प्रकार ब्राह्मणत्व एवं आचार दोनों की उत्पत्ति परस्पर सापेक्ष होने से अन्योऽन्याश्रय दोष है, क्योंकि, ब्राह्मणत्व आदि पूर्व से सिद्ध न रहे तो उसको उद्देश्य कर किसी आचार का विधान सम्भव ही नहीं है। जाति को जन्मगत न कहकर आचार जन्य मानने पर अव्यवस्था भी होगी, क्योंकि, एक ही व्यक्ति कभी सदाचार करता है एवं कभी दुराचार या कदाचार करता है, अतः, सदाचार के समय वह ब्राह्मण और दूसरे ही क्षण कदाचार करने के समय शूद्र होगा। इस प्रकार एकही व्यक्ति में ब्राह्मणत्वादि कभी भी व्यवस्थित नहीं रहेगा, पुनः पुनः जाति का परिवर्तन होगा। ऐसी स्थिति में वह ब्राह्मण है या ब्राह्मणेतर इसका प्रमाण देना संसार में दुर्लभ हो जायगा। फलतः, शास्त्रीय विधि के अनुष्ठान का लोप हो जायेगा। इस प्रकार युगपत् वृत्तिद्वयका विरोध भी होगा, कारण, एकही व्यक्ति एकही प्रयत्न से ऐसा कर्म कर सकता है कि जिसके फल स्वरूप किसी का अनिष्ट और किसी का इष्ट होगा। इससे युगपत् परपीड़ा और परानुग्रह करने से उनमें शूद्रत्व एवं ब्रह्मणत्व दो विरुद्ध जातियों का एक साथ समावेश होगा। इत्यादि।

पूर्वप्रसङ्ग में जाति की दुर्ज्ञानिता को लक्ष्य कर "नचैतद् विद्मः" इत्यादि वाक्य में उस विषय का अज्ञान कहा गया है। जाति दुर्ज्ञेय है, कारण, गोत्वादि जाति के प्रत्यक्ष में जैसे अनेक इतिकर्तव्यता या सहकारी रहते है, वैसे ही ब्राह्मणत्वादि जाति के प्रत्यक्ष में भी उत्पादन कर्ता की जाति का स्मरण करना इतिकर्तव्यता या सहकारी है। उत्पादक कौन है, इसको जननी को छोड़कर कोई भी नहीं कह सकता हैं। स्त्रियों में दुश्चरित्रा भी रहती हैं। इसलिए, पति ही सभी पुत्रों का जनक है, यह भी नहीं कहा जा सकता है। क्योंकि, जारज रमणी जार से पुत्र की उत्पत्ति कर सकती है। पिता एवं माता की समान जातीयता ही जाति की विशुद्धि का कारण है, अन्यथा माता अन्य जाति का और पिता दूसरा जाति का होने पर पुत्र की जाति अश्वतर के समान शङ्कर हो जायेगी। इस प्रकार वर्णशङ्करता जिससे न हो इसी लिए श्रुति कह रही है कि "अप्रमत्ता रक्षत तन्तुमेनम्" हे रमणियो ? तुम सब असावधान न होकर अर्थात् यत्न-

पूर्वक इस जाति रूप तन्तु की रक्षा करो। क्योंकि, जाति का आश्रय स्वरूप व्यक्ति का असाङ्कर्य्य या शुद्ध वर्णता तुम्हारे ही अधीन है। इस प्रकार श्रुतियाँ स्त्रियों को व्यभिचारिता रूप अपराध को जाति की उच्छेद का कारण कह रही है। अन्यथा जाति-तन्तु पितृपरम्परा क्रम में सनातन होने से निश्चित ही है। अतः, किसी किसी स्त्री की ऐसी दुश्चरित्रता का कारण एवं उत्पादक क्या है, यह जननी को ही प्रत्यक्षगम्य होने से विशुद्ध जन्मा व्यक्ति को की उत्पत्ति के सम्बन्ध में संशय होना स्वाभाविक है। उत्पादक का संशय होने पर जाति-प्रत्यक्ष में भी संशय होगा, क्योंकि, उत्पादक के जाति का स्मरण भी जाति प्रत्यक्ष का सहकारी कारण है। इस प्रकार जाति प्रत्यक्षगम्य होने पर भी जाति के विषय में संशय होना अस्वाभाविक नहीं है। इसी संशय को लक्ष्य कर इस स्थल में मैं ब्राह्मण या अब्राह्मण, यह नहीं जानता हूँ, इस प्रकार कहा गया है, किन्तु, यह प्रवरानुमन्त्रण विधि का शेष या अङ्ग होने से इसके द्वारा प्रवरानुमन्त्रण की इस प्रकार प्रशंसा की गई है कि प्रवरानुमन्त्रण का ऐसा ही सामर्थ्य है कि ब्राह्मण या अब्राह्मण यह अनिश्चित रहने पर भी इसके द्वारा वरणीय व्यक्ति ब्राह्मण के रूप में अवधारित होगा। अतः, इसमें प्रत्यक्ष विरोध दोष नहीं है।

स्त्र्यपराधात्, स्त्रियों के अपराध से अर्थात् दोष से, 'कर्तुः' कर्ता = उत्पादक कर्ता जार का 'च'—भी "पुत्रदर्शनम्" पुत्र होता है, ऐसा देखा जाता है। दुष्ट स्त्रियों के दोष से उत्पादन कर्ता अर्थात् उपपति से भी पुत्र की उत्पत्ति होती है, अतः, "नचैतद्विद्म" इत्यादि कथन में दृष्टविरोध नहीं है।

भाष्यभूमिका में भी इस सूत्र के विश्लेषण में कोई नवीनता नहीं है। पति और उपपति दोनों के पुत्र देखे जाते है, अतः, अपना जन्म कैसा है—यह दुर्विज्ञेय है। इसी अभिप्राय से यह प्रयोग है, अतः, दृष्टविरोध नहीं है। अपने ब्राह्मण्य के सन्देह के लिए यह प्रयोग नहीं है ॥१३॥

## आकालिकेप्सा ॥ १.२.१४ ॥

**शा० भा०—शास्त्रदृष्टविरोधे उदाहरणं को हि तद्वेदेति, दिक्ष्वतीकाशान्करोतीति साकाङ्क्षत्वादस्य विधेः शेषः। प्रत्यक्षफलत्वेन स्तुतिः। अनवक्लृप्तिवचनं विप्रकृष्टकालफलत्वाद् गौणम् ॥ १४ ॥**

भा० वि०—ननु सत्यपि स्त्र्यपराधे मातुः क्षेत्रिणो वा पुत्रः स्यात्, तयोश्च निश्चितत्वात् ब्राह्मण्यस्य कथं दुर्ज्ञानं पुत्रस्य ब्राह्मण्यमत आह—**कर्तुश्चेति**। कर्तुर्निषेक्तुरेव पुत्रो, न मातुः क्षेत्रिणो वेत्यस्यार्थस्य "अप्रमत्ता रक्षत तन्तुमेतम्" इत्यनेन वैदिकेन प्रजातन्तुरक्षणे प्रमादपरिहारविधानरूपेण लिङ्गेन "माता भस्त्रा पितुः पुत्रो येन जातः स एव सः" इति स्मृत्या च प्रदर्शनात् भर्तृव्यतिक्रमशङ्कायां

दुर्ज्ञानमेव पुत्रस्य ब्राह्मण्यमित्यर्थः, दुर्ज्ञानत्वस्याप्युदाहरणान्तरेऽव्याप्तिपरिहार्थः "आकालिकेप्सा" इति सूत्रम् तद्व्याख्यातुं को हि तद्वेदेत्यादिर्विधिशेषत्वं तावदाह—**शास्त्रेत्यादिना**। प्रवर्ग्यसमये शालाया दिक्ष्वतीकाशान् छिद्राणि करोति इत्यस्य विधेश्शेष इत्यर्थः। सम्प्रति गुणवादेन स्तुतित्वमाह—**प्रत्यक्षेति**। अतीकाशकरणं हि धूमापगमहेतुत्वाद् दृष्टफलकम्, तेन प्रशस्तमिति स्तूयत इत्यर्थः। तथापि कथं ज्ञायमानवचनेऽज्ञानवचनमित्याशङ्क्य सूत्रं योजयति—**अनवक्लृप्तीति**। अतीकाशकरणफलं प्रत्यक्षम्, कर्मजन्यं तु विप्रकृष्टकालत्वात् परोक्षम्, तेन विदिना लक्षितमपरोक्षत्वं को हीत्याक्षिप्य इत्यर्थः, तेन पूर्वसूत्रार्थानिमित्तात्पञ्चमीमाकृष्यैवं सूत्रं योजितम् तदानीमेवोत्पद्यमानमाकालिकं प्रत्यक्षदृष्टफलम्, तत्रेप्सा=आप्तुमिच्छा, साऽज्ञानवचने निमित्तमिति ॥ १४ ॥

त० वा०—यत्तदानीमेवोत्पद्यते, तदाकालिकम्। तच्च सर्वलोकस्याभिमतम्, न यच्चिरभावि। तस्मात्प्रावर्ग्यकाले दिक्ष्वतीकाशकरणं प्राग्वंशस्य प्रशस्यते। तद्धि सद्यःफलं धूमक्लेशाननुभवात्। इतरत्तु कर्मजन्यं सत्कदाचिद्भविष्यति। कस्तद्वेद, शास्त्रमात्रगम्यं हि तत्। इदं तु सर्वप्रत्यक्षम्। तदपेक्षया च ज्ञायमानेऽप्यज्ञायमानवचनमितरप्रशंसार्थम्। पाठान्तरमाकालिके, डाद्यन्तवचन इति। अकालिकमिति वा पाठः। काल इति लोके विप्रकर्ष उच्यते। तत्र भवं कालाट्ठञिति ठञि कालिकं न कालिकमकालिकम् ॥ १४ ॥

न्या० सु०—सूत्रं व्याचष्टे—**यत्तदानीमेवेति**। ईप्सापदव्याख्यानार्थं तच्चेत्युक्तम्। न यच्चिरभावीत्यनेनाकालिकस्यैवाप्तुमिच्छेति साधारणत्वं दर्शितम्। अनेन चानवक्लृप्तिवचनमनभिमतत्वेनामुष्मिकं निन्दितुमित्युक्तं भवति। आमुष्मिकनिन्दाया विधेः स्तुतिपर्यवसानप्रतिपादनार्थं प्रत्यक्षफलत्वेन स्तुतिरिति भाष्यं व्याचष्टे—**तस्मादिति**। चिरभाव्यनभिमतत्वादित्यर्थः। अतीकाशाः-छिद्राणि प्राग्वंशः-पत्नीशाला। स्तुतिस्वरूपमाह—**तद्धीति**। अनवक्लृप्तिवचनालम्बनाभिधानार्थमनवक्लृप्तिवचनमिति भाष्यं व्याचष्टे—**तदपेक्षया चेति**। अत्रापि यदमुष्मिन् लोक इत्यामुष्मिकफलपरामर्शिना यच्छब्देन तद्गतमभिमतत्वं लक्षयित्वा, तस्यानवक्लृप्तिः को वेदेत्यनेनोच्यते। भाष्ये च गौणग्रहणेन रूपात्प्रायादिति पञ्चम्युपात्तगुणवादनिमित्तत्वमनुकृष्याकालिकेप्सा गुणवादनिमित्तमित्येवं सूत्रं योजितम्। कामिनः काम्यमानफलाभिमतेरपि प्रत्यक्षत्वादनवक्लृप्तिवचनानुपपत्तिमाशङ्क्य तदपेक्षयेत्युक्तम्। यथा प्रत्यक्षफलं सर्वाभिमतम्, नैतत्तथेत्यर्थः। समानकालाद्यन्तावस्येत्यर्थविवक्षायामन्वाख्यानादाकालिकपदात्तदानीमुत्पत्त्याख्यार्थालाभमाशङ्क्य विशिष्टेऽर्थे त्वाख्यातमपीदं पदमेककालक्षणया प्रत्यासत्त्योत्पत्त्याख्यैककाल्यवाचीति दर्शयितुमाह—**पाठे त्विति**। आद्यन्तवचन इतीतिकरणेनोपक्रमोक्ताकालिकपदार्थपरामर्शाद्दीर्घपाठे तदानीमेवोत्पाद्यमानमनेन सूत्रेणाकालिकमनेन यातमित्यर्थः। पाठान्तरमिति क्व-

चिद्वार्त्तिकपाठः । तत्र भाष्योपन्यस्तस्यापि दीर्घपाठस्य स्वानभिमतत्वसूचनार्थं पाठान्तरोक्तिः । पूर्वविवक्षितार्थलाभोपपादनाय ह्रस्वपाठव्युत्पत्ति दर्शयितुमाह—अकालिकमिति चेति । ठस्येकादेशात्कालिकपदसिद्धिः ॥ १४ ॥

भा० प्र०—शास्त्रीय दृष्टविरोध के दृष्टान्त में "को हि तद् वेद" (तै० सं० ६।१।१।१) इस वेद वाक्य का उल्लेख किया है। यह वाक्य "दिक्ष्वतीकाशान् करोति" (तै० सं० ६।१।१।१) का अवशिष्ट अंश है। (दिशाओं में अवकाश या द्वार रखना चाहिये) यह विधि प्राचीन वंश नामक यज्ञशाला में अवकाश या द्वार रखने के लिए दिशा के नियम के लिए कहा गया है। श्रौतसूत्रकार महर्षि कात्यायन ने अग्निष्टोम याग के स्थान निरूपण के प्रसङ्ग में अन्य श्रुतियाँ की प्रत्यालोचनापूर्वक प्रत्येक "प्रतिदिक् द्वारम्" (का० सू० ७।३।१७) से पूर्वपक्ष कर "उदग्वर्जं वा" (७।३।१८) के द्वारा सिद्धान्त प्रदर्शित किया है। उत्तर दिशा को छोड़ कर अन्य दिशाओं में द्वार रहेगा। यज्ञशाला यज्ञाग्नि से उत्पन्न धूम से व्याप्त हो जाता है, यदि धुओं के निकलने का मार्ग नहीं रहेगा तो ऋत्विजों को बहुत कष्ट होगा, अतः, "को नु तद् वेद" इत्यादि अर्थवाद में सुदूर काल में होने वाले पारलौकिक सुख का निर्देश न कर उपस्थित धूम से उत्पन्न दुःख से छुटकारा पाने के लिए अवकाश या धुआँ के निकलने के मार्ग का रखना उचित है—व्यक्त किया है। द्वार का निर्माण स्वतन्त्र रूप में अपनी इच्छा के अनुसार करना ठीक नहीं है, अपितु विधि-विहित रूप में ही द्वार निर्माण करना चाहिए। अतः, यह अर्थवाद आकालिकेप्सा = इस समय सुख प्राप्ति की इच्छा से उत्पन्न है। प्रकृत में दुःख परिहार को ही औपचारिक रूप में सुखलाभ कहा गया है। काल = चिरकाल या दूरवर्ती काल का बोधक है। कारण, इसी अर्थ में काल शब्द का प्रयोग देखा गया है। जैसे बहुत दिनों के बाद होने वाले फल को लक्ष्य कर व्यवहार में लोग कहते हैं कि समय पर इसका फल होगा। अतः, अकाल का अर्थ पूर्ववर्ती काल नहीं अपितु वर्तमान या तत्काल होता है। अकाल अर्थात् तत्काल में उत्पन्न आकालिक होता है (अकाले भवः आकालिकः) वर्तमान काल में उत्पन्न सुख की लिप्सा ही आकालिकेप्सा है। इस प्रकार आकालिकेप्सा शब्द का अर्थ तात्कालिक सुख प्राप्ति की अभिलाषा होता है। अर्थात् आकालिक = तात्कालिक = उसी समय, ईप्सा सुखलाभ या दुःखपरिहार की अभिलाषा या इच्छा है। को हि तद् वेद" परलोक में कुछ है या नहीं, इसको कौन जानना है, फलतः, तात्कालिक सुख प्राप्ति और दुःख के परिहार की इच्छा में प्रवृति भी स्वाभाविक है ॥ १४ ॥

## विद्याप्रशंसा ॥ १.२.१५ ॥

**शा० भा०—तथा फलाभावादित्यत्रोदाहृतं 'शोभतेऽस्य मुखमिति'। गर्गत्रिरात्रविधेराकाङ्क्षितत्वाच्छेषः। वेदानुमन्त्रणस्य च आऽस्य प्रजायां वाजी**

**जायत इति शेषः। मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद् गौणः शब्दः। शोभत इव शिष्यैरुद्वीक्ष्यमाणम्। कुले संतताध्ययनश्रवणान्मेधावी जायते, स प्रतिग्रहादन्नं प्राप्नोतीति ॥ १५ ॥**

भा० वि०—फलाभावसूत्रोक्तमनुपलब्धिविरोधं निराकर्तुमाह—**विद्येति**। सूत्रं व्याख्यातुं विधिशेषत्वमाह=**तथेत्यादिना**। आस्यप्रजायां वाजी जायत इति वेदानुमन्त्रणस्य शेष इत्यन्वयः। अध्ययनविधिनैवार्थज्ञानफलत्वं दर्शयता ज्ञानस्य स्वयमपुरुषार्थत्वात् कैमर्थ्याकाङ्क्षायामनुष्ठानयोग्यपुरुषकरणादनुष्ठानार्थत्वं सूचयता पारार्थ्यं तस्य दर्शितम्, पारार्थ्ये च सिद्धे फलश्रुतेरर्थवादत्वाद्विद्या-प्रशंसयानुष्ठानशेषता सिध्यतीति भावः। स्तुत्यर्थतयापि कथमसतोर्मुखशोभा-वाजिमत्त्वयोरुक्तिस्तत्राह—**मुखेति**। गुणाद्वचनं यस्य तत् गुणवचनं=गौणमित्यर्थः, एतेन गौणस्यैवाविद्यार्थस्य प्रशंसार्थत्वेनाभिधानान्नानुपलब्धिविरोध इति सूत्रार्थो दर्शितः। गौणत्वमेवोपपादयति—**गौण इति**। गुणमाह—**शिष्यैरिति** भृशं शोभने हि वस्तुनि पुनः पुनरुद्वीक्षणं भवति, विद्वद्वचनस्य च। शिष्यैरुद्वीक्ष्यमाणत्वात् तत्र शोभत इति व्यपदेशः इत्यर्थः।

सम्प्रति वाजिमत्त्वाभिधानस्य गौणत्वं गुणकथनपूर्वकमाह—**कुलेति**। कुलेऽस्य विदुषो गृहे यत्सन्ततमध्ययनं तस्य श्रवणादस्य वंशे मेधावी पुत्रो जायत इत्यर्थः।

यद्वा अस्य कुले वंशे मेधावी जायत इति सम्बन्धः। ततः किमत आह—**स इति**। अवाप्नोतीति सम्भावितत्वगुणाद्वाजिमत्त्वं गौणमिति शेषः।

पूर्णाहुत्यादिवाक्येष्वपि अनुपलब्धिविरोधं परिहरति—**सर्वत्वमिति**। आकाङ्क्षितत्वाच्छेष इति। अतः परं सर्वान् लोकान् पशुबन्धयाज्यभिजयति इति पशुना यजेतेत्यस्य विधेरशेष इति पठितव्यम्। वेदेत्यस्य विधेरिति सम्बन्धः, पूर्वसूत्रात् प्रशंसापदमादाय सर्वत्वमिति सूत्रांशं व्याकुर्वन्ननुपलब्धिविरोधं परि-हरति—**फलेति**। पूर्णाहुतेरग्निसंस्कारार्थत्वात्, पशुबन्धस्य चारादुपकर्मकत्वात्, अश्वमेधज्ञानस्य च पुरुषसंस्कार्थत्वात्, संस्कारकर्मणां च फलश्रुतेरर्थवादत्वात्, सर्वकामत्वादिरूपं फलं प्रशंसैवेति नानुपलब्धिविरोध इत्यर्थः ॥ १५ ॥

**त० वा०—अध्ययनविधिशेषत्वादफलविधिः सन्यथाविज्ञातमुखशोभावाजि-मत्त्वानुवादो विज्ञायते। न चैक एव प्रकारो मुखशोभायाः, संस्थानं रमणीयता लावण्यं चेति। स्त्रीविषयं ह्येतत्। विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते तेनाऽऽत्मना मुख्ययैव वृत्त्या शोभते। पुत्रश्च वाजवान्ब्रह्मवर्चसद्वारेण। अथापि गौणता, तथाऽपि स्तुतिपरत्वाददोषः ॥ १५ ॥**

न्या० सु०—अनेन सूत्रेण यासौ गर्गत्रिरात्र=वेदानुमन्त्रणविद्या मुखशोभा=वाजिजन्म-हेतुत्वेनोक्ता, सा गर्गत्रिरात्रवेदानुमन्त्रणयोः प्रशंसेत्युच्यत इति गर्गत्रिरात्रविधेरित्यादिना भाष्येणोक्तम्। तत्र विद्यायाः केनचित्पारार्थ्यानवगमात्तद्विषयफलश्रुतेः कथं प्रशंसार्थतेत्याशङ्कानिराकरणपूर्वकं फलाभावसूत्रोक्तमनुपलब्धिविरोधं निराकरोति—अध्ययनेनेति। अध्ययनविधिना ज्ञानस्याध्ययनफलत्वं वदता निष्प्रयोजनस्य फलत्वायोगात् कैमर्थ्यापेक्षायां सामर्थ्यात्कर्म्मानुष्ठानयोग्यपुरुषकरणार्थत्वेन तच्छेषावगमादित्यर्थः।

स्वयं मुख्यया वृत्त्या मुखशोभा-वाजिमत्त्वानुवादमुपपाद्य, अधुना भाष्योक्तं गौणत्वमनुसरति—अथापीति। स्तुतिपरत्वादित्यनेन सूत्रोक्तस्य प्रशंसार्थत्वस्यानुपलब्धिविरोधपरिहारार्थत्वं दर्शितम्। घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनमित्याह। प्रसहस्रं पशूनामाप्नोति, प्रजायां वाजी जायते य एवं वेदेत्यत्र यज्ञपतिप्रथनवत् मन्त्राभिधानस्यार्थवादालम्बनत्वसम्भवेऽपि मन्त्राभिधानेऽप्यालम्बनाकाङ्क्षानिवृत्त्यर्थं कुले सन्तताध्ययनश्रवणादित्युक्तम्॥ १५॥

भा० प्र०—पूर्वपक्षी दृष्टविरोध प्रदर्शन प्रसङ्ग में "शोभतेऽस्य मुखं य एवं वेद" (ता० म० ब्रा० १।२।२५) इस अर्थवाद वाक्य को फलहीन सिद्ध किया है। इसकी असङ्गति प्रदर्शित करते हुए जैमिनि ने "विद्याप्रशंसा" इस सूत्र को लिखा है। पूर्वोक्त अर्थवाद की फलहीनता का प्रदर्शन सङ्गत नहीं है। क्योंकि, यह गर्गत्रिरात्र विधि का शेष वाक्य है; इसके द्वारा उसी विधि की प्रशंसा की गई है। संसार में ऐसा देखा जाता है कान के अलङ्कारों से मुख शोभायमान होता है। शिष्यगण विद्वान् व्यक्ति का मुख उत्साह सम्पन्न होने से कर्णालङ्कार के विना केवल साधु पदों के उच्चारण से ही शोभायमान देखते हैं। जिस विषय का ज्ञान ही शोभा का साधन होगा; उस विषय का अनुष्ठान और भी शोभा का हेतु होगा। इस तरह विधि विहित कर्मों की ही प्रशंसा इस अर्थवाद से की गई है।

इसी प्रकार "आस्य (आ अस्य) प्रजायां वाजी जायेत; य एवं वेद" यह अर्थवाद वाक्य भी वेदनानुमन्त्रण विधि का शेष है। जिस घर पर सदा अध्ययन आदि चलता रहता है, उस घर में जिस पुत्र का जन्म होता है, वह भी बाल्यावस्था से शास्त्रालाप सुनकर स्वभावतः मेधावी एवं विद्वान् हो जाता है, और विद्वान् होने पर सभी व्यक्ति उसको सत्पात्र गुणी समझकर दान देता है। अधिक दान मिलने पर वह प्रचुर अन्न प्राप्त कर लेता है। इस प्रकार गुण को लक्ष्य करके ही कहा गया है—"वाजी जायते"।

विद्याप्रशंसा = विद्या की प्रशंसा। इसका मुख शोभायमान होता है इत्यादि वाक्य में जो कहा गया है, वह विद्या की प्रशंसा है॥ १५॥

## सर्वत्वमाधिकारिकम् ॥ १.२.१६॥

शा० भा०—अन्यानर्थक्यवाक्य उदाहरणं 'पूर्णाहुत्या सर्वान्कामानवाप्नोतीति' पूर्णाहुतिं जुहोतीत्याकाङ्क्षितत्वादस्य विधेः शेषः। य उ चैनमेवं वेदेति, तरति मृत्युमित्यस्याऽऽकाङ्क्षितत्वाच्छेषः। फलवचनं स्तुतिः, सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम्। असर्वेषु सर्ववचनमधिकृतापेक्षम् ॥ १६ ॥

भा०वि०—सम्प्रति सर्वकामावाप्तिवचसस्सालम्बनत्वं दर्शयन् सर्वत्वपदावृत्त्या सूत्रवाक्यं योजयति—सर्वकामेति। सर्वे कामाः फलं यस्य कर्मणः, तन्निमित्ते संस्कृताग्नौ विषये सर्वकामावाप्तिवचनं निमित्ते नैमित्तिकत्वोपचारात् गौणमित्ययमर्थः। सर्वत्वं=सर्वकामत्वम्, आधिकारिकं फलसम्बन्ध्येव तन्निमित्तेऽग्नावुपचरितमिति वदता सूत्रकारेणोक्त इत्यर्थः।

पशुबन्धवाक्येऽप्येकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यो ज्योतिष्टोम इति अधिकृतस्य ज्योतिष्टोमस्य सर्वकामसाधनत्वात् तदङ्गभूतस्य पशुबन्धस्य तद्द्वारा सर्वलोकसाधनत्वम् स्तुत्यर्थमुपचारादुक्तमिति सूत्रं योज्यम्।

मृत्युत्तरणोदाहरणे तु पूर्वसूत्रगतविद्यापदानुषङ्गेन विद्याप्याधिकारिकीति विपरिणामं कृत्वा अश्वमेधफलमपि मृत्युत्तरणादि तदुपकारिण्यां विद्यायामश्वमेधस्तुत्यर्थमुपचारेणोक्तमिति योज्यमित्याशयः।

नन्वग्न्यादिद्वारेणापि न सर्वकामनिमित्तत्वमित्याशङ्क्यान्यथा सूत्रं योजयति—असर्वेष्विति। यथा लोके सर्वमन्नं भुक्त इत्यादौ सर्वशब्दः प्रकृतापेक्षः, तथात्रापि प्रकृताग्निसाध्यफलग्राही भविष्यतीत्यर्थः ॥ १६ ॥

त० वा०—संस्कारकर्मत्वान्न फलविधिः। स्तुतेस्त्वालम्बनं निमित्ते नैमित्तिकवदुपचारात्। सर्वकामनिमित्तानां कर्मणां सामान्यसाधनभूतानग्नीनवाप्नोतीत्यर्थः। सूत्रं चैवं योज्यते—सर्वकामनिमित्तैः कर्मभिराहिताग्नित्वादिदानीमधिकृत इति वक्तव्ये सत्याधिकारिकं सर्वत्वं स्तोतुमवाप्तावुपचरितम्।

ननु चाऽऽकाशगमनसुरकन्यालाभादयोऽत्यन्तासन्तः सर्वशब्देन वैदिकेषु कर्मसु निमित्तद्वारेणापि न शक्यन्तेऽनुवदितुमतः पुनः सूत्रमुच्यते। यथैवौदनादिषु सर्वशब्दोऽधिकृतापेक्षत्वान्न त्रैलोक्यं गृह्णाति, तथाऽत्राग्निकर्माधिकृतफलग्राही भविष्यतीत्यदोषः ॥ १६ ॥

न्या० सु०—फलवचनं स्तुतिरिति भाष्येण पूर्णाहुति-पशुबन्धयोः सर्वकामलोकफलत्ववचनम्, अश्वमेधविद्यायाश्च मृत्युतरणादिफलत्ववचनं प्रशंसार्थत्वान्नानुपलब्धिविरुद्धमिति

पूर्वसूत्रानुषङ्गेण सर्वत्वमिति सूत्रावयवो व्याख्यातः। तत्सिद्ध्यर्थं पूर्वोक्तमप्यर्थवादविषयत्वं स्मारयति—संस्कारेति। पूर्णाहुतिविद्ययोः संस्कारत्वात्पशुबन्धस्य चारादुपकारककर्म्मत्वादित्यर्थः। सर्वकामफलस्येति भाष्येण सर्वत्वमित्यवयवावृत्त्या सर्वकामावाप्तिवचनालम्बनाभिधानार्थत्वेनैतत्सूत्रं व्याख्यातम्। तद्व्याचष्टे—स्तुतिस्त्विति। उक्तेऽर्थे सूत्रं योजयति—सूत्रं चेति।

असर्वेष्वितिभाष्येण सर्वत्वानुपपत्तिपरिहारार्थत्वेन पुनरेतत्सूत्रं व्याख्यातम्। तदाशङ्कापूर्वं विवृणोति—ननु चेति। एकस्मै वा अन्ये यज्ञक्रतवः कामायाद्रियन्ते, सर्वेभ्यो ज्योतिष्टोम इत्यधिकृतस्य ज्योतिष्टोमस्य सर्वकामसाधनत्वात्तदङ्गभूतस्य पशुबन्धस्य तद्द्वारा सर्वलोकसाधनत्वं स्तुत्यर्थमुपचारादुक्तमित्येवं सूत्रं योज्यम्। विद्योदाहरणे तु पूर्वसूत्रागतविद्याशब्दानुषङ्गेण विद्याप्याधिकारिकीति विपरिणामेनाधिकृताश्वमेधफलं मृत्युतरणादि तदुपकारिण्यां विद्यायामश्वमेधस्तुत्यर्थमुपचारेणोक्तमिति योज्यम्॥ १६॥

भा० प्र०—'अन्यानर्थक्यात्' इस सूत्र के व्याख्यान में "पूर्णाहुत्या सर्वान् कामानाप्नोति" इस अर्थवाद वाक्य का उल्लेख कर विध्यन्तर का आनर्थक्य समर्थित किया गया गया है, किन्तु वह भी ठीक नहीं है। क्योंकि, 'सभी ब्राह्मणों को भोजन कराया जाय' यह कहने पर निमन्त्रित या घर पर आये हुए सभी ब्राह्मणों की अवगति होती है। वैसे ही पूर्णाहुत्या सर्वान् कामाप्नोति' यह "पूर्णाहुतिं जुहुयात्" इस विधि का शेष है। अतः; इस प्रकरण में उल्लिखित सभी कामनाओं का सर्वत्व विवक्षित है। पूर्णाहुति के अभाव में आधानरूप कर्म अङ्ग-विकल होगा; उस अङ्गविकलता का पूर्णाहुति समाधान होता है; यह एक काम है। उसका समाधान होने पर आहवनीय आदि अग्नियाँ अग्निहोत्र आदि कर्मों में योग्य होती हैं—यह दूसरा काम है। उन कर्मों से वे कर्म फल प्राप्त होते है—यह अन्य काम है। इस तरह सभी कामनाओं की प्राप्ति अन्य आहुतियों से भी कही गई है? इसके उत्तर में कहा गया है कि इसमें हानि क्या है? इससे पूर्णाहुति की स्तुति से कोई हानि नहीं है। इस स्थल में अन्य अधिकार में भी कामना का प्रसङ्ग हो सकता है। और इस प्रकार विद्यान्तर का भी आनर्थक्य नहीं हो सकता है। अन्य स्थल में जहाँ "सभी कामनाएँ सिद्ध होती है" इस प्रकार के वचन कहे गये है, वहाँ भी इसी प्रकार समझना चाहिए॥१६॥

**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्॥ १.२.१७॥**

**शा० भा०—अन्वारुह्य वचनमिदम्। यद्यपि विधिः, तथाऽप्यर्थवत्ता परिमाणतः सारतो वा फलविशेषात्॥ १७॥**

भा० वि०—एवमर्थवादत्वेनानुपलब्धिविरोधं परिहरतान्यानर्थक्यदोषो निराकृतः अधुना फलविधित्वमभ्युपगम्यापि निराकरोति—**फलस्येति**। सूत्रतात्पर्यमाह—**अन्वारुह्येति**। अभ्युपगम्यवादं विवृणोति=**यद्यपीति**। यद्यपि पूर्णाहुत्यादिवाक्ये फलविधिः क्रियते, तथापि नाग्निहोत्रादीनामानर्थक्यम्, किन्त्वर्थवत्तैव। तत्र हेतुः—**परिमाणत इति**। फलविशेषः स्यादिति सम्बन्धः। यत इति शेषः, लौकिकचन्दनकर्पूरकस्तूरिकाग्न्यादिजनितसुखेष्वपि विशेषानुमानात् कर्मपरिमाणतारतम्यानुसारेण फलतारतम्यसम्भवात् पूर्णाहुत्या स्तोकस्तोकफलावाप्तावपि न महतां कर्मणामानर्थक्यमित्यर्थः। तदनेनैवं सूत्रं योजितं फलस्य कर्मभ्यो निष्पत्तेः श्रुतत्वात्तेषां कर्मणां परिमाणं फलविशेषः; फले विशेषः परिमाणविशेषः स्यात्—**लोकवदिति**।

ननु दक्षिणादौ परिमाणसाम्येऽपि सारासारद्रव्यकृतफलवैषम्येण भवितव्यम् अन्यथा सारद्रव्यदाने प्रवृत्त्यनुपपत्तेरित्याशङ्क्य परिमाणग्रहणस्योपलक्षणार्थत्वं मत्वाह—**सारतो वेति**॥ १७॥

त० वा०—तच्चैतत्समानस्वर्गादिफलेष्वग्निहोत्रादिषूपयोक्ष्यत इत्युपन्यस्तम्, साधनानुरूपत्वात्साध्यानाम्। सर्वे हि कामाः पूर्णाहुत्याऽवाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते। तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान्भविष्यतीति स्थिते चोद्यते—युक्तं लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात्साधनानुरूपं जन्म। पूर्णाहुत्यादिषु त्वत्यन्तशास्त्राधीनत्वादविशेषश्रुते फले किंमूला विशेषकल्पना। न ह्यग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चिद्विशेषः श्रूयते। न चानुमानमीदृशे विषये समर्थम्। तदभिधीयते। विधिसामर्थ्यादेवेदं सिद्धम्। कथम्? यदि ह्यल्पान्महतश्च कर्मणः समं फलं जायेत, ततोऽर्के चेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित्प्रवर्तेत। तत्र विधिशक्तिबाधः स्यात्। अविहतशक्तिस्तु सन् 'अर्थाद्वा कल्पनैकदेशत्वादित् (जै० १।४।२०) इति विधिरेव फलाधिक्यमङ्गीकरोति। अतो यथा विश्वजिदादौ फलसद्भावः प्रमाणवान् एवमिह तद्विशेष इति।

किञ्च कर्मणामल्पमहतां फलानां च स्वगोचरः।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते॥ २॥

यथैव क्रमाम्नातानामङ्गाङ्गिनां प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति विनियोगव्यवस्था, तथैव कर्मगोचरेऽल्पस्य कर्मणः परिमाणसामान्येन फलगोचरेऽल्पमेवोपतिष्ठते। मध्यमस्य मध्यमम्, महतो महदिति स्थानमेव विनियोजकम्।

स्मरणमप्येवमेव। चातुर्मास्यसोमेषु च फलार्थवादो यदाऽग्निहोत्रं जुहोत्यथ दश गृहमेधिन आप्नोत्येकया रात्रियेत्यारभ्य न्यूनाग्निहोत्रदशसंवत्सरप्रयो-

**गादिभिरेकदर्शपूर्णमासादिप्रयोगावाप्तिवचनं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ॥ १७ ॥**

न्या० सु०—अन्वारुह्य वचनस्य प्रयोजनमाह—**तच्चैतदिति**। दक्षिणापरिमाणसाम्येऽपि फलाधिक्यमन्तरेणासारद्रव्यदानेनापि क्रतुसिद्धौ सारद्रव्यदाने प्रवृत्त्ययोगात्सूत्रातिरेकेण भाष्ये सारग्रहणम्। विशेषमुपपादयति—**साधनेति**। अत्राशङ्कते—**इति स्थित इति**। परिहरति—**तदभिधीयते इति**। स्थानादपीयं व्यवस्था सिद्धचतीत्याह—**किं चेति**। श्लोकं व्याचष्टे—**यथै वेति**। कर्मगोचर इत्यादिना समुदायाभिप्रायः स्वगोचरशब्दः। निर्धारणे च सप्तमी व्यवस्थावचनश्च विभागशब्द इति व्याख्यातः।

ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः।
आभूतसंप्लवान्तं च फलमिष्टं तयोर्द्विज ॥

इत्यादिस्मरणादपि व्यवस्थाऽवसीयत इत्याह—**स्मरणादपीति**। यदग्निहोत्रं जुहोति अथ दशगृहमेधिन आप्नोत्येकया रात्र्या यदा दश संवत्सरानग्निहोत्रं जुहोत्यथ दर्शपूर्णमासयाजिनामाप्नोति यदा दश, संवत्सरान् दर्शपूर्णमासाभ्यां यजतेऽथाग्निष्टोमयाजिनामाप्नोतीत्याद्यन्यार्थदर्शनादपि व्यवस्थासिद्धिरित्याह—**चातुर्मास्यसोमेषु चेति**। चातुर्मास्यवत्सोमेऽपीत्यर्थः ॥ १७ ॥

भा० प्र०—कर्म के परिमाण के अनुसार फल की अल्पता और आधिक्य होता है। निरूढ़ पशुबन्ध नामक यज्ञ से स्वर्ग की प्राप्ति होती है एवं ज्योतिष्टोम दर्शपूर्णमास आदि कर्मों से भी स्वर्ग की प्राप्ति होती है इसी प्रकार अश्वमेध विषयक ज्ञान ब्रह्महत्या आदि पापों से छुटकारा मिलता है एवं अश्वमेध यज्ञ के अनुष्ठान से भी ब्रह्महत्या आदि पापों की निवृत्ति होती है, किन्तु ये सभी एक प्रकार के नहीं हैं। अल्प परिश्रम साध्य कर्म से किस स्वर्ग को प्राप्ति होती है, वह भिन्न प्रकार एवं उसका स्थायित्व भिन्न जातीय होता है, एवं अधिक परिश्रम से साध्य कर्म से जिस स्वर्ग की प्राप्ति होती है वह उससे भिन्न एवं उसका स्थायित्व भी भिन्न है। इसलिए तैत्तिरीयसंहिता "उच्चावचकर्म्मणामेकविधफलासम्भवात् स्वर्गो बहुविधः", स्वल्प और महत् कर्म से एक प्रकार का स्वर्गरूपी फल नहीं हो सकता है; अतः, स्वर्ग अनेक प्रकार का है, जो व्यक्ति जिस प्रकार का कर्म करता है, उस कर्म के परिणाम के अनुसार स्वर्ग का भोग भिन्न प्रकार का होता है। जैसे एक कपड़ा पाँच रुपये का खरीदा जा सकता है और एक रुपया का भी कपड़ा खरीदा जा सकता है, किन्तु कपड़ा होने पर भी उनमें बहुत भेद है। इसी तरह कर्म की स्वल्पता और महत्त्व के अनुसार स्वर्ग भोग अल्पकाल स्थायी एवं अधिक काल स्थायी होता है। नरक के भोग का भी यही नियम है। इसी प्रकार कायिक बाचिक एवं मानसिक भेद से ब्रह्महत्या अनेक प्रकार की है। मन में ब्रह्महत्या की

कल्पना करने वाले व्यक्ति को जो पाप होता है वह अश्वमेध विषयक ज्ञान से निवृत्त होता है एवं ब्रह्महत्या का अनुष्ठान करने वाले व्यक्ति के पाप का यज्ञ के अनुष्ठान से ही मुक्ति होती है। समान फल का निर्देश रहने पर भी प्रकार में भेद रहता है। यह केवल युक्ति के आधार पर नहीं है, वरन् चातुर्मास्य सोम प्रकरण में जो अर्थवाद कहा गया है, उससे भी यही अर्थ सिद्ध होता है। "यदग्निहोत्रं जुहोत्यथ दश गृहमेधिनं आप्नोत्येकया रात्रिया" इत्यादि क्रम में गृहमेधो अग्निहोत्रं दर्शपूर्णमास आदि एक-एक याग के समान है, अतः स्वल्पायास अथवा बहु आयास साध्य अनेक कर्मों का एक प्रकार के फल का श्रवण रहने पर भी असामञ्जस्य का अवकाश नहीं है।

फलस्य = फल का, कर्मनिष्पत्तेः = कर्म के द्वारा निष्पत्ति होने से, तेषां = कर्मफलों का, परिणामतः=परिमाण के अनुसार, फल विशेषः=फल का अल्पता या आधिक्य, स्यात्=होता है। लोकवत्=लौकिक दृष्टान्त के अनुसार लोक व्यवहार में। जैसे भूमि का स्वल्पकर्षण एवं अधिक कर्षणरूप परिमाण के अनुसार कृषि आदि फल की अल्पता एवं अधिकता रहती है, वैदिक धर्म का भी परिमाण के अनुसार फल का तारतम्य होता है, क्योंकि कर्म के द्वारा ही फल की निष्पत्ति होती है ॥ १७ ॥

## अन्त्ययोर्यथोक्तम् ॥ १.२.१८ ॥

**शा० भा०—अभागिप्रतिषेधादित्यादावुदाहृतं—न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति, हिरण्यं निधाय चेतव्यमित्याकाङ्क्षितत्वादस्य विधेः शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था। असति प्रसङ्गे प्रतिषेधो नित्यानुवादः। यच्चानित्यदर्शनं 'बबरः प्रावाहणिरकामयत' इति। तत्परिहृतम्। अर्थवादाक्षेपेण पुनरुत्थितमिदानीमर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यत इति ॥ १८ ॥**

भा० वि०—एवं पूर्णाहुतिवाक्यस्य स्वार्थासत्यत्वाद्विनान्यानर्थक्यप्रसङ्गं परिहृत्य, अधुना न पृथिव्यामित्यादौ नाभागिप्रतिषेधप्रसङ्गः नापि बबरः प्रावाहणिरित्यादावनित्यसंयोगप्रसङ्ग इत्याह- **अन्त्ययोरिति**। अभागिप्रतिषेधनिरासार्थं सूत्रं योजयति—**अभागीति**। निन्दायाः कथं विधिशेषत्वमित्याशङ्क्य यथोक्तमितिपदं व्याकुर्वन् स्तेयानृतवादार्थवादन्यायमतिदिशति—**पृथिव्यादीति**।

ननु शुद्धपृथिवीचयननिषेधस्य हिरण्यनिधानस्तुत्यर्थत्वेऽपि नान्तरिक्ष इत्यादेः कथं तच्छेषत्वं तत्राह—**असतीति**। असत्यामपि प्राप्तौ प्रतिषेधो नित्यानुवादो दृष्टान्तार्थः; यथान्तरिक्षे, दिवि वा चयनमनुमतम्। एवं शुद्धायामपि पृथिव्यामित्यर्थः।

अनित्यसंयोगपरिहार्थमपि यथोक्तमिति सूत्रावयवं व्याचष्टे—**यच्चेति**। अनित्यदर्शनमनित्येन संयोगदर्शनं तत्परिहृतम्। परं श्रुतिसामान्यमात्रमित्यनेनेति शेषः। प्रकर्षेण वाहयतीति प्रावाहणिशब्दस्य नित्ये वायौ व्युत्पत्तेः ववरशब्दस्य च शब्दानुकृतित्वात् प्रवाहणाख्यपुरुषसिद्धा प्रावाहणेरन्यस्यासम्भवान्नित्यस्य संयोग इत्युक्तमित्यर्थः।

स्यान्मतम् नित्यार्थाभ्युपगमोऽनर्थकः, नित्यार्थानामित्यापो वै शान्ता इत्यादीनामानर्थक्यादित्युक्तमिति तत्राह—**अर्थवादेति**। आपो वै शान्ता इत्यादीनां स्तुत्यर्थेन प्रामाण्यस्य प्रतिपादितत्वात्, तेनैव प्रामाण्यस्य प्रतिपादनेन परिहृतमित्यर्थः।

नन्वर्थवादभावाभावयोः विधेरेव प्रवर्तकत्वात् किमर्थवादप्रामाण्याभ्युपगमेनेत्याशङ्क्याभ्युपगम्याप्यार्थवादिकफलकल्पनादेरर्थवादप्रामाण्याधीनत्वात् प्रयोजनवदेवार्थवादप्रामाण्यमिति मत्वाधिकरणार्थमुपसंहरति—**इतीति** ॥ १८ ॥

त० वा०—यथैव वाङमनसयोर्निन्दा हिरण्यस्तुत्यर्था तथा शुद्धपृथिवीनिषेधः प्रक्लृप्तावर्थवादः स्याद् इत्येवं हिरण्यनिधानस्तुत्यर्थः, न प्रतिषेधमात्रफलः। नान्तरिक्षे न दिवीत्यौचित्येन शुद्धपृथिवीनिषेधसमर्थनायैव यथाऽन्तरिक्षे दिवि वा चयनं न प्रसिद्धम्, तथा हिरण्यरहितायां पृथिव्यामिति स्तवनम्। अनित्यसंयोगो गतार्थः परं तु श्रुतिसामान्यमिति। प्रयोजनं रात्रिसत्रे पूर्वपक्षे स्वर्गः फलं स्यादिति सिद्धान्ते त्वर्थवादस्थमेव फलम् ॥ १८ ॥

न्या० सु०—अभागिप्रतिषेधपरिहारे स्तेयानृतवादार्थवादन्यायातिदेशार्थत्वेन यथोक्तपदव्याख्यानार्थं पृथिव्यादीनामिति भाष्यम्। तत्र हिरण्यं निधायेत्यनेन पृथिव्याधारस्यैव हिरण्यस्य विधेः पृथिवीनिन्दानुपपत्तिमाशङ्क्य व्याचष्टे—**यथैवेति**। एवमपि शुद्धपृथिवीनिन्दामात्रेण हिरण्यस्तुतिसिद्धेरितरनिन्दानर्थक्यादादिशब्दानुपपत्तिमाशङ्क्याह—**नान्तरिक्ष इति**। एतदेव विवृणोति—**यथेति**। अनित्यसंयोगपरिहारार्थत्वेन यथोक्तपदव्याख्यानार्थं **यच्चेति** भाष्यं व्याचष्टे—**अनित्यसंयोग इति**। प्रकर्षेण वहतीति कर्त्तरि प्रावाहणिशब्दव्युत्पत्तिसम्भवात् बबरशब्दस्य च शब्दानुकृतित्वेन नित्यवायुपरत्वोपपत्तेर्नाप्रसिद्धप्रवाहणाख्यपुरुषकल्पनेन तदपत्यपरता नित्यानित्यसंयोगविरोधापादिका कल्पनीयेति भावः।

**प्रयोजनकथनम्**

ननु विध्युद्देशप्रामाण्यमात्रेणांशत्रयोपेतभावनानुष्ठानसिद्धेरनर्थवादप्रामाण्यचिन्ता निष्प्रयोजनेत्याशङ्क्याह—**प्रयोजनमिति**। **एतच्चोपलक्षणार्थम्**। 'अक्ताः शर्करा' इत्यत्र सन्दिग्धनिर्णयस्याश्वप्रतिग्रहेष्ट्यां व्यवधारणकल्पनस्य, वमनेष्ट्यां च वैदिकसोमवमननिमित्तकत्वस्य, अष्टावुपभृति गृह्णातीत्यत्र चतुष्ट्वद्वयकल्पनस्य, जोतिष्टोमशब्दस्य सोमयागपरत्वस्य धाय्यानां च समिध्यमानवती समिद्धवत्यन्तरालनिवेशस्य, सोमं विद्या प्रजानां

चावश्यकत्वस्य, द्वयोः प्रणयन्तीत्यस्य च मध्यमपर्वद्वयविषयत्वस्यार्थवादप्रामाण्याधीनत्वात् ॥ १८ ॥

इति सर्वानवद्यायां न्यायसुधायामर्थवादाधिकरणम् ।

भा० प्र०—अप्रसक्त का प्रतिषेध होने मे "नान्तरिक्षे अग्निश्चेतव्यः" इत्यादि अर्थवाद वाक्य अप्रामाणिक हैं, इस प्रकार की आपत्ति के परिहार के लिए "विधिना त्वेकवाक्यत्वात्" इत्यादि सूत्रों को कहा गया है। "नान्तरिक्षे अग्निश्चेतव्यः" इत्यादि अर्थवाद "हिरण्यं निधाय चेतव्यम्" (तै० सं० ५।२।६।१) अर्थात् स्वर्ण रखकर उसके ऊपर अग्नि का चयन करना चाहिए, यह विधि का शेष या अङ्ग है। अन्तरिक्ष में चयन निषेध नित्यानुवाद अर्थात् नित्यसिद्ध विषय का कथन मात्र है। क्योंकि, अन्तरिक्ष में या द्युलोक में अग्नि के चयन की सम्भावना नहीं है, "बबरः प्रावहणिः" इत्यादि वाक्यों का दृष्टान्त देकर जो अप्रामाण्य की आशङ्का की गई है, वह भी सङ्गत नहीं है, क्योंकि, जननमरणशील किसी व्यक्ति के विषय में यह नहीं कहा गया है। "स्वयं तु श्रुति सामान्यमात्रम्" (मी० द० १।१।३१) इस सूत्र में कहा गया है। इसलिए अर्थवाद वाक्यों के प्रामाण्य स्वीकार करने में किसी प्रकार की बाधा नहीं है।

अन्त्ययोः=अन्य दो आपत्तियों के परिहार में, "यथा उक्तम्"=जो कहा गया है। अवशिष्ट दो आपत्तियों के परिहार में जैसा समाधान कहा गया है, यही इसमें भी समझना चाहिए ॥ १८ ॥

द्वितीयमौदुम्बराधिकरणम्

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १.२.१९ ॥

शा० भा०—इह ये विधिवन्निगदा अर्थवादास्ते उदाहरणम्। 'औदुम्बरो यूपः, भवत्यूर्ग्वा उदुम्बर, ऊर्क् पशव, ऊर्ज्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुद्ध्यै [तै० सं० २-१-१ ६] इति। किमस्य विधिः कार्यम्, उतास्यापि स्तुतिरिति ॥

किं तावत्प्राप्तम्। विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्। विधिवन्निगदेष्वेवंजातीयकेषु फलविधिः स्यात्। फलं ह्यवगम्यते। तथा ह्यपूर्वमर्थं विधास्यति। इतरथा स्तुतिवादमात्रमनर्थकं स्यात्। स्तुतश्चास्तुतश्च तावानेव सोऽर्थः। अपि च ऊर्जोऽवरुद्ध्या इति प्रयोजनं श्रूयते। न च प्रशस्तोऽयमर्थ इति कश्चिच्छब्दोऽस्ति। लक्षणया तु स्तुतिर्गम्येत। श्रुतिश्च लक्षणाया ज्यायसीति ॥ १९ ॥

भा० वि०—सामान्येनार्थवादानामानर्थक्यनिरासेन स्तुतिलक्षणया विध्येकवाक्यत्वेन प्रामाण्ये साधिते. तेष्वेव केषुचित् विधित्वेनैवार्थवत्त्व-

संभवे किमिति स्तुत्यर्थत्वेनार्थवत्त्वमाश्रीयत इत्याशङ्क्यार्थवादत्वमेवानेन स्थिरीक्रियत इति सङ्गतिं मत्वा विषयं विविच्य दर्शयति—**इहेत्यादिना**। ये विधिवन्निगद्यन्ते अर्थवादाश्च ते तथा चिन्ताप्रयोजनं तु फलविधिसरूपाणां स्तुत्यर्थत्वेनार्थवादत्वसिद्धिरत्रापूर्वत्वैकवाक्यत्वाभ्यां संशयमाह—**किमिति**। **अस्येति** जातावेकवचनम्।

अथवास्योदाहरणस्य विधिरज्ञातज्ञापनम्–**अस्यापीति**। वायुर्वै क्षेपिष्ठेत्यादिवदित्यर्थः, कतरदत्र युक्तिमदिति जिज्ञासमानं प्रति पूर्वपक्षसूत्रमादत्ते—**किमित्यादिना**। विधिः स्यादिति सामान्यनिर्देशेन फलविधिसरूपाणां सर्वेषामप्युदाहरणत्वमभिमतमिति सूचयन् व्याचष्टे—**विधिवदिति**। अवधारणार्थेन वाशब्देन सूचितं हेतुमाह–**फलं हीति**। यथा हि गम्यमानत्वात् स्तुतेस्तत्परत्वमर्थवादानाम्, तथा फलस्यापि गम्यमानत्वात् तादर्थ्यमेवैतेषामित्यर्थः।

ननु फलस्य गम्यमानत्वं स्तुत्यर्थतयापि स्यात् इत्याशङ्क्याह—**पूर्वत्वादिति**। व्याचष्टे **तथेति**। तथा सति पूर्वं प्रामाणान्तरमस्य न विद्यते इत्यपूर्वमनन्यलभ्यमर्थं विधास्यति=प्रतिपादयिष्यति। स्तुतेर्विध्युद्देशादप्याक्षेपात् फलस्य चानन्यलभ्यत्वात् तद्विधित्व एव प्रमाणान्तरापूर्वार्थत्वमित्यर्थः स्तुतिश्च सिद्धार्थकथनरूपत्वाद्वादमात्रम्, नाज्ञातज्ञापकं तच्चानर्थकमित्यर्थः, आनर्थक्ये हि शब्दसूचितं हेतुं व्याचष्टे—**स्तुतिश्चेति**। न हि पर्णमयीत्यादौ स्तुतत्वेन स्तुतित्वमभ्युपगच्छताऽपूर्वार्थत्वमपि नेष्यत इत्याशङ्क्य प ......... कश्चिदतिशयोऽस्तु तत्त्वेन वा निष्कर्षो दृश्यते, तेन प्रवृत्तावपि न विशेष इति भावः। अपूर्वत्वादिति सूत्रावयवं प्रकारान्तरेण व्याकुर्वन् हेत्वन्तरमाह—**अपि चेति**। एवं कामपदाभावेऽपि तादर्थ्यचतुर्थ्या स्फुटं फलावगमादित्यर्थः।

ननु वायुर्वा इत्यादौ प्रशस्तोऽयमिति पदाभावेऽपि स्तुतिस्तद्वत् किं न स्यादत आह—**लक्षणयेति**। इह च श्रुत्यर्थसंभवान्न लक्षणा युक्तेत्याह—**श्रुतिश्चेति**। अनेन लक्ष्यमाणस्तुतेर्वाच्यार्थपूर्वकत्वाद्वाच्यार्थस्य फलस्यानन्यपूर्वत्वादपूर्वशब्देन पूर्वमर्थान्तरमस्य न विद्यते इति श्रौतार्थलाभोऽभिसंहित इति सूत्रं व्याख्यातम्॥ १९॥

त० वा०—एवमानर्थक्योपाख्यानादिप्रतियोगिष्वर्थवादेषु व्याख्यातेष्विदानीं विधिप्रतियोगिनो विचार्यन्ते। कुतः संशयः? पूर्वत्र हि स्वार्थानुपयोगित्वेन दूरलक्षितस्तुतिग्रहणमङ्गीकृतम्। तत्संभवे तु स्तुतिरप्यनर्थकतुल्याऽऽपद्यते। विध्यंशश्च न कथंचनान्यस्मात्सिध्यति। प्ररोचना पुनः कथंचिद्विध्युद्देशादप्युपपद्यत इत्युक्तं पुरस्तात्। अपि च प्रधानं विधिः, अङ्गं स्तुतिः, तत्र प्रधानविशेषणसंभविनस्तद्गामित्वमेव युक्तम्। समाप्ते च विध्युद्देशे, अर्थवादः प्रवर्तते,

तत्पक्रमावस्थायामेव तु भावनांशाः संनिपतन्ति। विशेषेण तु फलं प्राथम्य-प्राधान्याभ्यामित्यादि मन्वानोऽपूर्वत्वादिति वदति। तदपेक्षया च स्तुतिमात्रमनर्थकं मन्यते।

ननु चैवं जातीयकः फलविधिरुतार्थवाद इति विचारश्चतुर्थेऽपि 'द्रव्यसंस्कार-कर्मसु' (जै० ४।३।१) इति भविष्यति। अतो नेह प्रस्तोतव्यः।

तत्र केचिदाहुः अनेन गतार्थत्वात्तत्रैवैष पर्यनुयोगो युज्यते, न त्विदं पुनरुक्त-मिति। सत्यमेवम्, यदि तु तत्कालप्रतीक्षणात्किंचित्परिहारान्तरं लभ्यते अतस्त-त्रान्विच्छेम। अथ पुनरिहैव शक्यते वक्तुम्, तथा संतीदानीमप्युच्यमाने मन्दो दोष इति।

अत्रापरे वदन्ति तेन फलविधित्वनिराकरणमात्रपरमेव प्रष्टव्यम्। तदयुक्तम्। यतस्तेन फलविधित्वात्प्रच्यावितानामानर्थक्यप्रसक्तौ पूर्वाधिकरणेनैव स्तुत्यर्थता साधिता। तथा च दर्शितं शोभतेऽस्य मुखमित्यादिषु।

केचित्पुनराहुः युक्तं 'वायुर्वै क्षेपिष्ठेत्यादीनाम्' स्तुतित्वम्। ऊर्जोऽवरुद्ध्या इति पुनर्यथा फलविधित्वात्प्रच्याव्यते, तथैव विसंवादेन स्तुतित्वादपीति कामं विधिर्भवतु, येन कालान्तरभावित्वेन कथञ्चिद्विसंवादो निवर्तत इत्यारम्भः। तदप्ययुक्तम्। अपि च वेदे व्यक्तमसंवाद इति ह्यभ्युच्चयहेतुरपुनरुक्तः स्यात्। अधिकरणशरीरं तु तदेव। विसंवादोऽपि च गुणवादस्त्वित्यनेन न कश्चिद-परिहृतः। पुनरपि च तावन्मात्रमेवोत्तरं भविष्यति। तस्माद्विधिर्वा स्यादित्य-विशेषोपादानाच्चतुर्थे च फलश्रुतिग्रहणादिहाशेषद्रव्यगुणक्रियादिविधिसरूपाः तत्र फलविधिसरूपा एवोदाहरणमित्यपरे।

तथा च विधिश्चानर्थकः क्वचित्प्रकरणे च संभवन्निति चाप्सुयोनिर्वा अश्वोऽप्सुजो वेतशो यो विदग्ध इति चोदाह्रियते। अन्यथा फलविधिमात्रो-पन्यासे तदसंबद्धमेव स्यात्। इहापि तस्य तावद्विशेषविषयत्वादिदमगतार्थं भवेत्। अनेन तु सामान्यतः सर्वविषयावरोधिना तत्पुनरुक्तमेवेति व्यवस्थया केचिदुदाहरन्ति अत्र द्रव्यादिविधीनेव तत्र फलविधीनेव, भाष्यकारोदाहरणम-तन्त्रीकृत्योदाहरणान्तरं दातव्यमिति।

### अस्मिन् विषये वार्तिकमतम्

अत्र वदामः। किमधिकरणद्वयमवश्यारब्धव्यम्, येनैवमुदाहरणव्यवस्थाऽऽ-श्रीयते। न ह्युदाहरणभेदादधिकरणं भिद्यते। मा भूद्यथाव्यवस्थितेऽपि खादिरौ-दुम्बरत्वभेदादपौनरुक्त्यम्। न्यायविषयत्वेन त्वधिकरणानां तद्भेद एवापौनरुक्त्ये हेतुः। द्रव्यादिविधयोऽपि न सर्वे विचारिताः। केचित्तत्सिद्धिसूत्रे' केचिन्निवीता-

द्यधिकरणेषु, परकृतिपुराकल्पद्वारेणान्ये षष्ठे, यद्दचा स्तुवत इत्यादयोऽर्थैकत्वादि-कल्प इति नवमे, जर्तिलगवीधुकविधिसरूपा दशमे, अतश्च न पुनरुक्तता महान् दोष इत्येव वक्तव्यम् ।

अथ वैकस्यैव न्यायस्य क्वचित्कश्चिदंशः शोध्यत इति पुनरारम्भः । स्पष्टं वा विषयनानात्वमेवं वर्णनीयम् । सर्वविधिसरूपाणां केवलं विधित्वनिराकरणे-नार्थवादत्वमिह सिद्धम् । यस्तु चतुर्थे पुनरारम्भः सोऽर्थवादकल्पिते विधौ फलाकाङ्क्षावेलायामन्यार्थोपात्तमपि क्रतुप्रयागवचनात्तदेव सन्निहिततरं क्लृप्त-संबन्धस्य च विशेषमात्रं सुकरम् । इतरथा संबन्धस्तद्विशेषश्चोपकारककत्वं कल्पनीयमिति रात्रिसत्रप्रतिष्ठादिवत्फलविधित्वमपीति पूर्वपक्षाभिप्रायः । कथ-ञ्चित्प्रयोजनान्तरे लभ्यमाने नैकस्यानेकार्थता युक्ता । तस्मादर्थवादत्वमेवेति सिद्धान्तः । एतेन निवीताद्यधिकरणानि व्याख्यातानि ।

अथ वौदुम्बराधिकरणपूर्वपक्षं कृत्वा चिन्तास्ता प्रत्येतव्याः । विधित्वाभ्युप-गमेन हि कस्य शेषः क्रतोः पुरुषस्य वेत्यादि विचार्येह सिद्धेनार्थवादत्वेनोप-संहारः । तथा परकृतिपुराकल्पयोः किं तद्गोत्राणामुत सर्वपुंसामिति चिन्ति-तम् । एवमूहबाधमसङ्गेन नवमदशमगता चिन्ता । तत्सिद्धिसूत्रे तु गुणवाद-निमित्तमात्रकथनम् ।

अथ वा फलविधावेव यत्र भेदेन स्तुतिफलपदानि भवन्ति, तदिहोदाहरणम् । यथाऽत्रैवोर्गुदुम्बर ऊर्क् पशव इत्येतैरेव स्तुतिः, ऊर्जोऽवरुद्ध्या इत्यनेन फलमिति । यत्र पुनस्तावन्मात्रेणैव फलं वा स्तुतिर्वा वक्तव्येति भवति ते चतुर्थ इति ।

अथ वा तत्र परार्थत्वादिति हेतुव्यपदेशात् प्रसिद्धेन च हेतुना व्यवहाराद्ये विज्ञातपारार्थ्यास्त उदाहरणम् । यथा 'यस्य पर्णमयी जुहूरि'ति । अत्र ह्यवश्यं जुह्वनुवादेन पर्णमयीत्वं विधातव्यम्, स्वातन्त्र्येण फलसंबन्धाशक्तेः । सर्वत्र हि गुणः फलाय चोद्यमानः कञ्चिदाश्रयमपेक्षते । न च प्रकरणमन्तरेणाऽऽश्रयप्राप्तिः । तदिह यदि पर्णमयीत्वेन फलं भावयेदिति वचनं व्यज्येत, किमाश्रितेनेत्यपेक्षायां किं संबध्यताम् ? जुहूरिति चेन्न । वाक्यभेदप्रसङ्गात् । साऽपि च प्राक्क्रिया-लाभान्नैव निराकङ्क्षीभवति । न च क्रियासंबन्धे प्रमाणमस्ति । तस्मादनिर्व-हणादेतद्वचनव्यक्तिपरित्यागेनेतराश्रयणम् । तत्र च जुह्वा जुहोतीत्यस्याः प्रकरणे निर्ज्ञातप्रयोजनात्वादविहितजातिविशेषायास्तदाकाङ्क्षायां सत्यां यावदेव पर्णत्व-जातिरुपनीता तावदविज्ञातप्रयोजनावस्थत्वादङ्गतां प्रतिपद्यते । ततश्च निरा-काङ्क्षीभूतायास्तस्मिन्नेव वाक्ये फलकल्पनानिमित्तं नास्तीति युक्तमर्थवादत्वम् ।

इह पुनर्वैकृतपशुप्रकरणे श्रूयमाणमौदुम्बरत्वमुदाह्रियते। न च तस्य प्रसिद्धं पारार्थ्यम्, येन चतुर्थाधिकरणविषयता भवेत्। कथम् ? अत्र हि न तावदप्राप्ते यूपे जातिविधानं शक्यम्। तत्प्राप्तिश्चेदवश्यं क्लृप्तोपकारप्रकृतत्वादिनैव निराकाङ्क्षेण भवितव्यम्। तत्कुतो जात्यन्तरस्य तादर्थ्येन विधिः, अतः फले विधानम्। याऽपि चाऽऽश्रयापेक्षा, साऽपि प्राकृतकर्मसंबन्धिचोदकप्राप्तयूपग्रहणान्निवर्तत इत्यविघातः। तेन प्रागेव पारार्थ्यात्फलसंबन्धप्रसक्तिरवश्यं न्यायान्तरेण निराकर्तव्येत्येतदधिकरणारम्भः।

इदमपरं मतम्। औदुम्बरवाक्यं जुह्वादिवाक्यं चोभयमुभयत्रोदाहरणम्। कथम् ? भावनांशान्तरविचारादपौनरुक्त्यम्। साध्यसाधनसंबन्धस्तावद् द्वयोरपि योग्यत्वेनोपात्तयोरवकल्पते, नान्यथा। तत्र चतुर्थे साधनांशयोग्यविचारमनादृत्याभ्युपेत्य वा केवलसाध्यांशविचारः। किमीदृशेन कामशब्दोपबन्धरहितेन वर्तमानफलसंबन्धाभिधायिना फलत्वं शक्यते गमयितुम्, न वेति विचारः। इह पुनः साध्यांशमनादृत्याभ्युपेत्य वा केवलसाधनांशविचारः। किमीदृशेन विधिविभक्तिरहितेन द्रव्यगुणक्रियाः कंचित्प्रति साधनत्वेन प्रतिपाद्यन्ते नेति। यच्च यदात्मना प्रतिपादितं भवति, तत्प्रतियोगिविशेषापेक्षं सत्पदान्तराद्युपात्तेन तेन संबध्यते। तत्र साध्यमित्यवधृते परिशेषादवशिष्टं साधनं गम्यते। एवं साधनावधारणेऽपीति द्वावप्यंशौ स्वरूपेण निरूपयितव्यौ। तदिह साधनांशे विचार्यमाणे यो नाम फलांशस्य संस्पर्शः, स चतुर्थे सिद्धः प्रसङ्गाद्धेतुत्वेनेति मन्तव्यः। तथा यस्तत्र साधनांशपरामर्शः, स इह सिद्धस्तत्र प्रसङ्गादित्यपुनरुक्तम्।

नन्वेवं सति विध्युद्देशचिन्तेयमित्यर्थवादाधिकरणेन न संबध्यते। नैष दोषः। तद्वशेनैवार्थपरिच्छेदात्। यदि ह्यसौ विधीयमानतया पूर्वेणावगतः, ततो नार्थवादत्वमथ स्तुत्यर्थतया ततोऽर्थवादत्वमिति। तत्र पूर्वपक्षाभिप्रायः। सर्वथा साध्यसंनिधाने यदुच्चरितम्, तदाकाङ्क्षावशेन ताद्रूप्येणानुपात्तमपि साधनं भवति। यथैव यागेनेत्यनुदितं संबध्यते, तथैवौदुम्बरेणेति। तत्र विधिः किं कुर्यात्पुरुषं प्रवर्तयेत्। स च फलार्थितयैव प्रवृत्त इति किं विधिना।

अथ वा प्रयोगवचनविहितस्य फलसंबन्धमात्रमनेन क्रियते। पञ्चमो वा लकारो विधास्यति। अर्थवादैकदेशो वेत्युक्तमेव। तस्मादूर्जोऽवरुद्ध्या इति तादर्थ्यचतुर्थ्यैवैवं कामशब्दादपि स्फुटतरं फलमुपात्तमिति तस्मिन्नौदुम्बरताविधिः। न तु फलस्य विधानमिति ग्रहीतव्यम् भावार्थाधिकरणे फलविधिनिषेधात्। ऊर्गुदुम्बर इत्यतः स्तुतिरित्यविरोधः। तस्मान्मुख्यविधिसंभवे लक्षणया न स्तुतिः प्रतिपत्तव्येति ॥ १९ ॥

न्या० सू०—विषयविवेकार्थमिहेतिभाष्यं व्याख्यातुमाह—**एवमिति** । आनर्थक्यम्, उपाख्यानम् । आदिशब्दोपात्तं चादृष्टार्थत्वं प्रतियोगि = विरोधि येषां तेष्वित्यर्थः । एतच्च पूर्वेणाध्यायषट्केन प्रत्यक्षविदितधर्मकेषु दर्शपूर्णमासादिषु व्याख्यातेषु इदानीमविहितेतिकर्त्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यत इतिसप्तमाध्यायभाष्यवत्सर्वेष्वर्थवादेष्वानर्थक्यादिप्रतियोगित्वेन व्याख्यातेषु यथासम्भवं केषुचिद्विधिप्रतियोगितेदानीं विचार्यत इति विशेषणपरं व्याख्येयम् ।

पूर्णाहुत्याद्यर्थवादानां विधिवन्निगदार्थवादानामपि व्याख्यातत्वात्किमस्येति सन्देहभाष्यं पूर्वपक्षासम्भवेनाक्षिपति—**कुत इति** । सन्देहसमर्थं चतुर्द्धा पूर्वपक्षं सम्भावयति—**पूर्वत्र हीति** । श्रौतत्वमनेन विधित्वाङ्गीकरणे कारणमुक्तम् । अनन्यलभ्यत्वाच्च विधिरित्याह—**विध्यंशश्चेति** । इत्युक्तमिति । विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्याम इत्यत्रेत्यर्थः । प्रधानत्वादपि विधिरित्याह—**अपि चेति** । विशेषणशब्देनाङ्गमुक्तम् । प्रधाने, विशेषणे च यत्सम्भवति, तस्येत्यर्थः । प्राथम्यादपीत्याह—**समासे चेति** । फलरूपश्चात्र भावनांशो विधेयोऽभिप्रेतः, तस्य च सर्वादौ निवेशः प्रथमाकाङ्क्षणादितरयोस्तु तादर्थ्येन तस्यैव प्राधान्यादित्याह—**विशेषेण त्विति** । आसामुपपत्तीनां सूत्रकाराभिमतत्वं दर्शयितुमाह—**इत्यादीति** । श्रौतस्यार्थान्तरपूर्वत्वाभावादनन्यलभ्यस्य चानन्यकारणकत्वात्प्रधानस्य विधेयान्तरापेक्षाभावादपूर्वशब्दे न लक्षणा । प्राथम्यं तु न विद्यतेऽस्मात्पूर्वमिति बहुव्रीहिणा बोध्यते । आदिशब्देन त्वर्थान्तरपूर्वत्वाभाव एवोच्यते ।

ननु स्तुतेरपि पूर्वाधिकरणे अर्थवत्त्वोपपादनादानर्थक्याभिधानमयुक्तमत आह—**तदपेक्षयेति** । पौनरुक्त्यमाशङ्कते—**ननु चेति** ।

एकस्यार्थस्याद्विरुक्त्यानर्थक्येऽप्यस्य प्राथम्यादपुनरुक्ततेत्येकेषां समाधानमाह—**तत्रेति** । अस्याधिकरणस्य पौनरुक्त्याभावेऽप्यानर्थक्यापरिहारेऽप्याकुलीभावेन श्रोतॄणामर्थानवधारणापत्तेर्विलम्बोऽनुचित इत्येतत्समाधानं दूषयति—**सत्यमेवमिति** । श्रोतृचित्तसमाधानायापौनरुक्त्ये परिहार्ये प्राप्ते चतुरः प्रकारानुपन्यस्य दूषयति—**तत्र** । इत्यादिना पूर्वाधिकरणेनैवेत्यनेन फलविधिसरूपाणामपि पूर्वाधिकरणविषयत्वं दर्शितम्—**तथा च** । इत्यनेनैतदेवं पूर्वाधिकरणोदाहृतफलविधिसरूपार्थवादनिदर्शनेन स्फारितं पूर्वोक्तस्याप्यर्थवादत्वस्य विसम्वादेनेहासम्भवादानर्थक्यपरिहाराय पर्णमय्यधिकरणनिराकृतस्य फलविधित्वस्य प्रतिप्रसवशङ्कां निराकर्त्तुमेतदधिकरणमिति प्रकारान्तरमुपन्यस्य निराचष्टे—**केचिदिति** । शरीरस्येन्द्रियाधिष्ठानत्वेन प्राधान्यादुपचारात्प्राधान्येनाधिकरणप्रतिपाद्यं शरीरशब्देनोक्तम् । तत्र पर्णमय्यधिकरणशरीरादभिन्नमित्यर्थः । अभ्युच्चयहेतुत्वे कारणम्—**विसम्वादोऽपि च** । इत्यनेनोक्तम् । सर्वविधिसरूपविषयत्वादस्य फलविधिसरूपमात्रविषयेण पर्णमय्यधिकरणेनापौनरुक्त्यमिति । प्रकारान्तरमाशङ्कते—**तस्मादिति** । निरस्य-

तीहापीति । फलविधिस्वरूपांशेनास्यापि तेन गतार्थत्वमपरिहार्यमिति तावच्छब्देन सूचितम् : एतद्दोषपरिहारार्थं फलविधिसरूपव्यतिरिक्तानामेवात्रोदाहरणत्वमिति प्रकारान्तरमाङ्कते—इति व्यवस्थयेति ।

हेताविति करणत्वं निरस्यति—अत्र वदाम इति । ननूदाहरणभेदस्याधिकरणभेदाक्षेपकत्वादारभ्यमेवाधिकरणद्वयमित्यत आह—न हीति । किं तर्ह्यधिकरणभेदाक्षेपकमत आह—न्यायेति । न चास्य फलविधिसरूपव्यतिरिक्तसर्वविधिसरूपविषयतास्तीत्याह—द्रव्यादिविधयोऽपीति । कुत्र विचारिता इत्यपेक्षायामाह—केचिदिति । एवं पौनरुक्त्येनाधिकरणारम्भे दूषिते पौनरुक्त्यं परिहर्तुमशक्नुवतां मतेनारम्भं तावत्समाधत्ते—अतश्चेति । यथैव चतुर्थे 'सह शाखया प्रस्तरं प्रहरतीति' शाखाप्रहरणस्य प्रतिपत्त्यर्थकर्मत्वसन्देहे तृतीयया अर्थकर्मत्वे प्राप्ते, सहयोगनिमित्तत्वात्तृतीयायां द्वितीयावगतप्राधान्यप्रस्तरसाहचर्याच्छाखाया अपि प्राधान्यावगतेः प्रतिपत्तित्वे सिद्धान्तिते द्वितीयायाः प्राधान्यव्यभिचारशङ्कापरिहारार्थयोरर्थेऽपीति चेन्न, तस्यानधिकारात् । फलस्याधिकृतत्वादितिसूत्रयोः सत्त्वधिकरणगताभ्यां सूत्राभ्यां द्रव्योपदेश इति चेन्न । तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वादिति' सूत्राभ्यां पौनरुक्त्यमाङ्क्य नातीव पुनरुक्तता महान् दोषः । बहुकृत्वोऽपि पथ्यं वदितव्यमिति परिहारं भाष्यकारो वक्ष्यति । तथैवात्रापि वक्तव्यमित्यर्थः ।

### वार्तिकमतेन पौनरुक्त्यपरिहारः

स्वयमिदानीं चतुरः पौनरुक्त्यपरिहारप्रकारानाह—अथ वेति । एकस्यैव साध्यसाधनसम्बन्धाभावप्रतिपादनन्यायस्यात्र साधनांशः, तत्र साध्यांशः साध्यत इत्यर्थः । द्वितीयं प्रकारमाह—स्पष्टं चेति । सर्वविधिसरूपाणामिति । फलविधिसरूपाणां पर्णौदुम्बराद्यर्थवादानाम्, 'यजमानः प्रस्तर' इत्यादीनां च द्रव्यविधिसरूपाणाम्, विदग्धादीनां च गुणविधिसरूपाणाम्, माषपाकादिविषयाणां च क्रियाविधिसरूपाणाम् 'आग्नेयो वै ब्राह्मण' इत्यादीनां देवताविधिरूपाणां केवलार्थवादनिरपेक्षविधिनिराकरणेनेत्यर्थः ।

फलादिसम्बन्धोत्तरकालमर्थवादान्वयात्पर्णौदुम्बरतादावार्थवादिकफलकल्पनमशक्यं पूर्वपक्षयितुमित्याशङ्क्यार्थवादकल्पिते विधावित्युक्तं क्लृपू सामर्थ्ये इति धातोर्घञन्तात्कृपो रो ल (पा० सू० ८।२।१८) इति लादेशे कृते तत्करोति तदाचष्ट इति समर्थं करोतीत्यस्मिन्नर्थे णिचमुत्पाद्य निष्ठायां कल्पित इति रूपम् । तेनार्थवादेनाङ्गभूतेन विधौ प्रवृत्त्युत्पादनसमर्थे कृते विधिसामर्थ्येनार्थवादान्वयात्प्रागेवाक्षिप्तस्य फलस्यानिर्द्धारितविशेषस्य विशेषाकाङ्क्षावेलायामित्यर्थः । यथाध्ययनभावनायां फलाश्रवणेऽपि विधिसामर्थ्यात्किञ्चित्समीहितं फलं भावयेदित्यनिर्द्धारितविशेषफलान्वयेऽवधारिते वेदाध्ययनरूपकरणान्वयोत्तरकालं योग्यतयार्थज्ञानरूपफलविशेषनिर्द्धारणमविरुद्धम् । तथात्रापीति भावः । अन्यार्थेति । विहितपर्णौदुम्बरतास्तुत्यर्थमित्यर्थः । फलविधित्वमपीत्यपिशब्देनौदुम्बराधिकरणसिद्धार्थवादत्वाङ्गी-

करणेन तदाक्षिप्तफलविधिप्रतिपादनाद्विध्यर्थवादसमुच्चयेन पर्णमय्यधिकरणपूर्वपक्ष इत्युक्तम्—**अर्थवादत्वमेवेति**। केवलार्थवादत्वेन सिद्धान्तो दर्शितः।

निवीताद्यर्थवादानामपि सिद्धवत्कीर्त्तनान्यथानुपपत्त्या विध्याक्षेपकत्वात्समुच्चयेन पूर्वपक्षं कृत्वा, विक्षेपे प्रकरणादुत्कर्षापत्तेः। तस्य च केवलार्थवादत्वेन प्रकरणानिवेशसम्भवोपपत्तेः। केवलार्थवादत्वेन सिद्धान्तो निवीताद्यधिकरणेषु करिष्यतइत्याह—**एतेनेति**। कृत्वा चिन्तात्वेन वा तेषां पुनरारम्भ इत्याह—**अथ वेति**। परकृतिपुराकल्पाधिकरणमपि कृत्वा चिन्तेत्याह—**तथेति**। इति ह स्माह वट्कुर्वाष्णिर्माषान्मे पचत न ह वा एतेषांऽहविर्गृह्णन्तीत्येककर्त्तृकमुपाख्यानं परकृत्याख्यम्। उल्मुकैर्हंस्मपूर्वे समाजग्मुस्तानसुरा रक्षांऽसि निर्ज्जघ्नुरिति चानेककर्त्तृकम्मुपाख्यानं पुराकल्पाख्यमुदाहृत्य किमिमौ माषपाकोल्मुकसंयोगविधी उतारण्याशनगृहपत्यग्निर्वापस्तुत्यर्थौ निन्दार्थवादाविति सन्दिह्यार्थवत्त्वाद्विधी इति पूर्वपक्षमङ्गीकृत्य परकृत्युदाहरणे किं सर्वेषामेव दर्शपूर्णमासयाजिनाम्मौपवसथ्याहे माषभोजनं विधीयते वृष्णिगोत्राणामेव वेति चिन्तयिष्यते। तत्र वार्ष्णिशब्देन वृष्णिगोत्रविशेषसम्बन्धितया भोजनार्थं माषपाककीर्त्तनात्तदन्यथानुपपत्त्या विधिः कल्प्यमानो न सर्वविषयः कल्पयितुं शक्यतइति। पश्चावत्तवद्व्यवस्थेति प्राप्ते, विशिष्टपुरुषाचरितत्वेन माषस्तुत्यर्थतया वार्ष्णिसम्बन्धकीर्त्तनोपपत्तेर्विशेषविधित्सायां वार्ष्णिवट्टव्यतिरिक्तानां वृष्णिगोत्राणामपि विधानापत्तेः सर्वेषामेव दर्शपूर्णमासयाजिनामारण्यभोजनादिना सह वैकल्पिकं माषभोजनं विधीयतइति पक्षान्तरमुक्त्वा 'तस्मादारण्यमेवाश्नीयादिति विध्यन्तरैकवाक्यत्वेनारण्यान्नस्य प्रशस्ततरत्वद्योतनार्थं जर्त्तिलयवाग्वादिवन्निन्द्यानामपि माषाणां स्तुतिरिति सिद्धान्तयिष्यते।

पुराकल्पोदाहरणेऽपि गृहपतेरेवाग्निषु निर्मन्थ्य निर्वपेरन्निति विध्यन्तरैकवाक्यत्वेन निर्म्मन्थिताग्निसंसर्गस्तुत्यर्थमुल्मुकसंसर्गे निन्दोपपत्तेर्न निन्दाकल्पनिषेधबलेन प्रापकविधिकल्पनं पूर्वमहर्ष्याचरितत्वेन वा पृथग्विधिकल्पनं युक्तमिति सिद्धान्तः करिष्यते। यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति न्यायात्। पूर्वाचरितोपन्यासेन विधिकल्पनमित्येवंविधपूर्वपक्षसाम्यमात्रेणानयोरुदाहरणयोः साहचर्यम्, न तु पुराकल्पोदाहरणे कृत्वा चिन्ता काचिदस्ति। तस्मात्परकृतिपुराकल्पयोर्मध्ये एकस्मिन्परकृत्युदाहरणे कृत्वा चिन्तेति निर्द्धारणे सप्तमी व्याख्येया। अर्थैकत्वजर्तिलाधिरणयोः कथं निवेशोऽत आह—**एवमिति**। सापि कृत्वा चिन्तेत्यर्थः। चिन्तान्तरस्य तत्राभावात्, कृत्वा चिन्तानुपपत्तिमाशङ्क्याह—**बाधप्रसङ्गेनेत्युक्तम्**।

यद्यपि तत्र चिन्तान्तरं न कृतम्; तथापि सामोहोपोद्घातप्रसक्तानुप्रसक्त्या यद्द्वचा स्तुवत इति विधिरर्थवादो वेति चिन्तायाः करिष्यमाणत्वात्तदुपयोगितया विधिपक्षे किमतिदेशप्राप्तस्तृतिसाधनसामाधारतृचबाधेनैकर्गाधारत्वं विधीयते उताप्रगीतर्गेकत्वम्। तत्र पूर्वपक्षे योन्युत्पन्नस्य साम्न उत्तरयोरगानादूहाप्राप्तेरितरस्मिन् पक्षे साम्नस्तृचाश्रितत्वाबाधादूहोपपत्तेरिति चिन्तान्तरं कल्प्यम्।

र्जत्तिलचिन्ताथ बाधप्रसङ्गेन करिष्यमाणत्वादथो खल्वाहुरनाहुतिर्वै र्जत्तिलाश्च गवीधुकाश्चेति अस्य निषेधार्थत्वेऽपि किं र्जत्तिलगवीधुकानामनुकल्पत्वद्योतनार्थोऽयं निषेधे विकल्पार्थो वेतिचिन्तान्तरम् । अनुकल्पकत्वपक्षे बाधानापादकत्वाद्विकल्पपक्षो तदापादकत्वात्कल्प्यमिति भावः । कृत्वा चिन्तात्वाभावेऽपि चौदुम्बराधिकरणव्युत्पादितमप्यर्थवादत्वमुदाहरणविशेषेष्वाक्षिप्य समाधानाय सा चिन्तेत्येवं ग्रन्थो व्याख्येयः । अस्मिन् व्याख्याने षाष्ठस्यापि पुराकल्पोदाहरणविषयस्य विचारस्यानेनैव न्यायेन कृत्वा चिन्तात्वाभावेऽपि पौनरुक्त्यं परिहृतं भवति । एवंशब्दश्च यथाधिकारप्रसङ्गेन षष्ठगता चिन्ता एवमेषापीत्येवन्नेया । तत्सिद्धिसूत्रस्याप्यपौनरुक्त्यमाह—**तत्सिद्धिसूत्रे त्विति** । मीमांसाप्रक्रियामात्रेण विध्यर्थवादचिन्तेति भावः । सर्वविधिसरूपाणामौदुम्बराधिकरणेनैवार्थवादत्वसिद्धौ पुराकल्पाद्युदाहरणेषु कृत्वा चिन्तानुपन्यासादाक्षेपहेतुत्वाभावाच्च पौनरुक्त्यापरिहारेण परिहारतोषात्प्रकारान्तरमाह—**अथ वेति** ।

पृथक् फलपदसद्भावेऽपि फलविधौ निराकृते तदभावे फलविध्याशङ्काया दूरनिरस्तत्वेनाऽत्रापि अपरितोषाच्चतुर्थं प्रकारमाह—**अथ वेति** । परार्थविज्ञाने कारणमाह—**अत्र हीति** । स्वातन्त्र्येणेति जुहूसम्बन्धनैरपेक्ष्येणेत्यर्थः । एतदेवोपपादयितुं सामान्यन्यायान्तावदाह—**सर्वत्र हीति** । प्रकृते योजयति—**तदिहेति** । किं सम्बध्यतामित्यनारभ्याधीतत्वेन पर्णमयीत्वस्य प्रकृताश्रयालाभादिति भावः । वाक्येनाश्रयदानमाशङ्क्य निरस्यति—**जुहूरिति** । अभ्युपगम्यापि जुहूसम्बन्धं नैराकाङ्क्ष्यन्नास्तीत्याह—**सापि चेति** । अतः फले पर्णमयीत्वविध्ययोगाज्जुह्वर्थत्वेन सिद्धो विधिरित्युपसंहरति—**तस्मादिति** ।

पर्णमयीत्वेन जुहूं भावयेदिति वचनव्यक्तिरितरशब्देनोक्ता । जुह्वनुवादेन पर्णमयीत्वस्य विधौ सिद्धे यथापारार्थ्यंनिर्ज्ञातं भवति तथा दर्शयति । **तत्र चेति** । एवं निर्ज्ञातपारार्थ्यस्यापि पर्णमयीत्वस्यापापश्लोकश्रवणात्मकफलश्रुतेः फलार्थतापि दध्यादिवदस्त्विति पर्णमय्यधिकरणे पूर्वपक्षं कृत्वा सकृच्छ्रुताया पर्णत्वजातेर्जुह्वङ्गत्वेन निराकाङ्क्षीकृताया द्व्यर्थत्वायोगात्फलश्रुतिरर्थवादमात्रमिति सिद्धान्तः करिष्यत इत्याह—**ततश्चेति** ।

औदुम्बरत्वस्य तु सोमा पौष्णं त्रैतमालभेत पशुकाम इति विकृतपशुप्रकरणे श्रुतस्यातिदेशप्राप्तनिर्ज्ञातजातिविशेषयूपार्थत्वेन विध्ययोगात्पारार्थ्यानवगतेः पर्णमय्यधिकरणविषयत्वन्नास्तीत्याह—**इह पुनरिति** । एतदेव प्रश्नपूर्वकमुपपादयति—**कथमिति** । नन्वाश्रयालाभात्कथमस्य फलविधिराशङ्क्यतेऽत आह—**यापि चेति** । प्रकृतावग्नीषोमीये पशुनियोजनाख्यकर्मसम्बन्धितया विहितस्य यूपस्यात्र चोदकप्राप्तस्यौदुम्बरजात्याश्रयत्वेन ग्रहणादित्यर्थः । कर्मसम्बन्धाभिधानत्वमाश्रययोग्यताप्रदर्शनार्थम् । अतः सिद्धं पर्णमय्यधिकरणेनापौनरुक्त्यमौदुम्बराधिकरणस्येत्याह—**तेनेति** ।

कः पुनरेतेषां चतुर्णां पौनरुक्त्यपरिहारप्रकाराणां मध्ये अभिमत इत्यपेक्षिते प्रथमोपन्यस्तस्यैकस्यैव न्यायस्य क्वचित्कश्चिदंशः शोध्यत इत्यस्यैवाभिमतत्वमाह—इदमिति। न विद्यते परमुत्कृष्टमस्मादित्यर्थः। उदुम्बरत्वजातेरपि प्रकृताश्रयत्वालाभाच्चोदकप्राप्तस्य निर्ज्ञातसाधनत्वेन नैराकाङ्क्षस्यातदर्थविहितसाधनान्तराग्राहकत्वाद् गुणफलसम्बन्धायोगे-नौदुम्बरत्वेन यूपं भावयेदितिवचनव्यक्त्याश्रयणात्पारार्थ्यविगतेः पर्णमयीन्यायविषयत्वाच्चतुर्थोऽपि प्रकारो न युक्त इति भावः। किं तदित्यपेक्षिते विवेचयितुमारभते—औदुम्बरवाक्यमिति। उदाहरणाभेदे कथमपौनरुक्त्यमित्यपेक्षिते प्रश्नपूर्वकं परिहरति—कथमिति। ननु साध्यसाधनांशयोरन्योन्याविनाभावादेकसिद्ध्यैवेतरसिद्धेरंशद्वयविचारोऽनर्थकः, अत आह—साध्येति। अस्यार्थस्य सार्वत्रिकत्वसूचनार्थस्तावच्छब्दः सर्वत्रैव तावदेवमित्यर्थः। कः पुनरंशः क्व विचार्यत इत्यपेक्षायामाह—तत्रेति।

ननु यदि द्वयोर्योग्यपदोपादानं विना साध्यसाधनसम्बन्धो न युज्यत तर्ह्येकनिराकरणेनैवेतरनिराकरणसिद्धेरंशद्वयनिराकरणमनर्थकमत आह—यच्चेति। अनिराकृतांऽशो प्रतिषिद्धमनुमतं भवतीत्यनेन न्यायेनाङ्गीकृतः स्यादिति भवतिशब्देनोक्तम्। तेनायमर्थः यत्साध्यं साधनं वा यदात्मना साध्यत्वेन साधनत्वेन वा निराकरणाभावात्प्रतिपादितं भवति तत्पदान्तरेणादिशब्दोपात्तेन सामर्थ्येन वोपात्तेन प्रतियोगिविशेषण साधनेन साध्येन वा सम्बध्यत इति। एतदेव विभज्य कथयति—तत्रेति।

औदुम्बराधिकरणे हि ऊर्गवरोधापापश्लोकश्रवणाद्यनिराकृतत्वात्साध्यमित्यवधृते तत्सन्निधौ श्रुतमौदुम्बरपर्णतादिश्रुतशब्दाङ्गयोग्यत्वेऽपि अर्थापत्त्या योग्यशब्दान्तरकल्पनया साधनं गम्यते, एवं पर्णमय्यधिकरणे निराकरणाभावादुदुम्बरपर्णतादिसाधनावधारणेऽपि तत्साध्यं गम्यत इति शेषः। एतदेवोपसंहरति—इति द्वावपीति। साधनस्य विधिविषयत्वं स्वरूपम्; साध्यस्य च ? कमिपदोपात्तत्वमिति द्वयोरपि साध्यसाधनांशयोः स्वरूपन्निरूपयितव्यमित्यर्थः।

नन्वस्याधिकरणस्य साधनांशमात्रनिराकरणार्थत्वे विधौ वाक्यभेदः स्यादिति साध्यांशनिराकरणं पर्णमय्यधिकरणस्य च साध्यांशमात्रनिराकरणार्थत्वे सत्युत्पत्तेश्चातत्प्रधानत्वादिति साधनांशनिराकरणमयुक्तं स्यादत आह—तदिहेति। भिन्नांशविषयत्वेन पौनरुक्त्ये परिहृते प्रकरणसङ्गतिमाक्षिपति—नन्विति। हेत्वधिकरणेऽर्थवादविचारादसमाप्तमर्थवादाधिकरणम्, न चास्य विचारस्य विध्यभावे श्रेयः साधनत्वबोधः सम्भवति, उत नेत्येवं रूपत्वात्तेन[1] सङ्गतिर्युक्तेत्यर्थः। अर्थवादाधिकरणेनेत्यधिकरणशब्देनाधिकारः प्रस्तावः प्रकरणमुक्तं विधिशेषत्वेनार्थवादानां धर्मप्रमोपयोगे प्रतिपादिते विध्यभावेऽपि श्रेयः साधनत्वबोधसम्भवाद्विधेरेव धर्मोपयोगित्वाभावात्कथं तद्द्वारेणार्थवादाना-

---

१. अर्थवादाधिकरणेन सङ्गतिर्न च युक्तेत्यन्वयः।

यामुपयोगितेत्यर्थवादाधिकरणसिद्धान्ताक्षेपेणैतदधिकरणपूर्वपक्षोत्थानाद्विध्युद्देशचिन्तात्वेऽपि तत्सङ्गत्युपपत्तिः ।

यद्वार्थवादानां धर्म्मप्रयोगे प्रतिपादिते कोऽर्थवादः, को वा नेति कोष्ठशोधनिकार्थत्वेनाधिकरणद्वयस्यार्थवादाधिकरणशेषत्वाभ्युपगमाद्विध्युद्देशचिन्तात्वेऽपि तदसम्भवाशङ्क्येयम् । अधिकरणद्वयेन सर्वार्थवादाव्याप्तेः कथं कोष्ठशोधनिकेति चेत् ? उच्यते आद्ये विध्येकवाक्यत्वेन स्तुत्यर्थत्वेऽभिहिते, सिद्धैकान्तिकविध्येकवाक्यत्वानामपि येषां साध्यसाधनांशाभिधानाद्विध्युद्देशान्तर्गतिराभाति, तेषां तन्निराकरणेन स्तुत्यर्थतेह स्थाप्यते । हेत्वधिकरणेऽपि अन्वयवाक्यकल्पनेन दर्व्यादिसाधनांशाभिधानाद्विध्युद्देशान्तर्गत्या शङ्कैव निराक्रियते । पृथग्विधित्वाशङ्कानिराकरणमधिकरणान्तरेषु भविष्यति । तस्मादधिकरणान्तरनिराकृतपृथग्विधित्वाशङ्कानां सम्भवद्विध्येकवाक्यत्वानामसम्भवाद्विध्युद्देशान्तर्गतानां सर्वेषामर्थवादत्वमिहैव स्थापितं भवति । प्रकृतार्थवादत्वसिद्ध्यर्थत्वाद्विध्युद्देशचिन्ताप्यत्र नासङ्गतेति परिहरति—नैष इति । विध्युद्देशचिन्तावशेन प्रकृतार्थवादत्वरूपार्थपरिच्छेदादित्यर्थः ।

एतदेव विवृणोति—यदि हीति । साधनांशे विचार्यमाण इत्यत्र प्रकृतः साधनांशोऽसाविति सर्वनाम्ना परामृश्यते । एतदधिकरणपूर्वपक्षे च विध्युपयोगानभ्युपगमात्[1], अज्ञातज्ञापनाभिप्रायं विधीयमानतयेति व्याख्येयम् । तेन यद्यसौ साधनांशोऽज्ञातज्ञाप्यतयाऽपूर्वेण साधनांशप्रतिपादकेनौदुम्बरो यूपो भवतीत्यनेन वाक्यभावनावगतः, ततोऽपेक्षावशेनोर्ज्जो अवरुध्या इत्यस्य फलसमर्पकत्वान्नार्थवादत्वमित्यर्थः ।

पूर्वपक्षमाह—तत्रेति । ननूर्ज्जोऽवरुध्या इति तादर्थ्यचतुर्थ्या साध्यावगमेऽप्यपापश्लोकश्रवणादेः साध्यत्वावगमाभावादूर्ज्जोऽवरुध्या इत्यस्यापि च तैत्तिरीयादिशाखास्वश्रवणात्कथं साध्यसन्निधान इत्युक्तम् । उच्यते औदुम्बरत्वादेः प्राप्त्यभावाद्विध्येकवाक्यत्वं च विनार्थवादत्वायोगादर्थवादाच्च विधिकल्पनेऽन्योन्याश्रयत्वापत्तेरवश्यविधेयत्वाद्विधेश्च भावनैकगोचरत्वाद्यूपादेश्चौदुम्बरत्वादिभवनस्य पुंव्यापाराधीनत्वात्पुंव्यापाराधीनकर्त्तव्यत्वप्रतिपादकपदकल्पनेन भवतिशब्दस्यैव वाऽन्तर्नीतप्रयोजकव्यापारवचनस्य पञ्चमलकारकल्पनेन भावनाविधिप्रतीतेः । भावनायाश्च भाव्यनिष्ठत्वाद्योग्यत्वेनोर्गवरोधापापश्लोकश्रवणादेः साध्यत्वावगतेः साध्यसन्निधानाभिधानं विध्यभावाभिधानं[2] चौदुम्बरत्वाद्युत्पत्तिविधानार्थं कल्पितस्य प्रत्ययस्यान्यत्र व्यापारासम्भवेन साधनत्वबोधकारणत्वाभावाभिप्रायम् ।

ननु तृतीयां विनाऽपि योगस्य विधिसामर्थ्यात्साधनत्वं युक्तम् । इह तु तदश्रवणात्, उत्पत्तिसिद्ध्यर्थञ्च कल्पितस्य विधेरत्राव्यापारात्कथं साधनत्वावगतिरत आह—तत्रेति ।

---

१. उत्पत्तिविध्युपपयोगानभ्युपपगमादित्यर्थः ।

२. ताद्रूप्येणानुपात्तमित्यत्रार्थाद्विध्यभावाभिधानम् ।

समभिव्याहारमात्रेण साध्यसाधनसंबन्धावगतिसम्भवान्न विधिना कश्चिदुपयोग इति भावः। समभिव्याहारमात्रात्साधनत्वावगमेऽपि पुरुषप्रवृत्तिसिद्ध्यर्थं विध्यपेक्षा भविष्यतीत्याशङ्कते—**पुरुषमिति**। साधनत्वावगतौ सत्यामिच्छयैव प्रवृत्तिसिद्धेस्तदर्थमपि न विध्यपेक्षेति परिहरति—**स चेति**।

यद्वा यूपानुवादेन विधीयमानस्यौदुम्बरत्वस्य यूपद्वारेण क्रत्वर्थत्वावगमात्तत्प्रयोगवचनेनैवानुष्ठानसिद्धेर्न तदर्थमिह विध्यपेक्षेत्याह—**अथ वेति**। क्रत्वर्थस्यापि समभिव्याहारावगतं फलार्थत्वमपि दध्यादिवदविरुद्धमिति भावः। उत्पत्तिविधिरेवाऽगत्या अनुष्ठापको भविष्यतीत्याह—**पञ्चमी वेति**। अर्थवादाद्वा प्रवृत्तिसिद्धेर्न तदर्थं विध्यपेक्षेत्याह—**अर्थवादेति**। ऊर्ज्जोऽवरुद्ध्या इत्यस्य पूर्वपक्षे विध्युद्देशान्तर्गतत्वाभ्युपगमात्सिद्धान्ताभिप्रायेणैकदेशग्रहणम्। विधिनिरपेक्षस्यार्थवादस्य प्रवर्त्तकत्वानुपपत्तिमाशङ्क्य प्रत्ययोत्खातिवादिमतेनैतदुक्तमिति दर्शयितुमुक्तमेवेत्युक्तम्।

सूत्रं व्याख्याय विधिवन्निगदेष्वित्यादिभाष्यं तात्पर्यतो व्याचष्टे—**तस्मादिति**। यस्माद्विध्यभावेऽपि समभिव्याहारमात्रेण साध्यसाधनसम्बन्धबोधः सम्भवति, तस्मात्तस्मिन् फले औदुम्बरतायाः साधनतया विधिरज्ञातज्ञापनमित्यर्थः। प्रायेणैवङ्कामशब्देन फलसमर्पणात्, अपि चेत्यादिभाष्योक्तं चतुर्थ्या फलसमर्पणमयुक्तमाशङ्क्योर्ज्जोऽरुध्या इत्याद्युक्तम्। फलविधिरित्यत्र विधिशब्दस्य शौण्डादिष्वपाठात्सप्तमीसमासानुपपत्तेः, षष्ठीसमास एवायं स्यादित्याशङ्क्याह—**नन्विति**। विवक्षितार्थलाभायाऽन्यथापि कल्पनं युक्तमिति भावः।

भावार्थाधिकरणे फलविध्यनिषेधात् भावस्य भावनाख्यस्यार्थः प्रयोजनं फलं विधेयं, न वेति यत्र चिन्त्यते। लिप्सासूत्रस्याद्यवर्णके तद्भावार्थाधिकरणमिहोक्तम्। नन्वस्य फलपरत्वे स्तुत्यभावाद्विधिरवसीदेदत आह—**ऊर्गुदुम्बर इति**। पूर्वाधिकरणे लाक्षणिकस्तुत्युपयोगाभिधानादिहानर्थक्याभिधानमयुक्तमाशङ्क्याह—**तस्मादिति**। साध्यसाधनभावप्रतिपादनस्य प्रवृत्तिविशेषकरत्वेनार्थवत्तरत्वात्तदपेक्षया स्तुत्यानर्थक्यमिति भावः। यस्मादुक्तप्रकारेणौदुम्बरतायाः फले विधिः सम्भवति, तस्मादित्यर्थः। अनेन च वादमात्रं ह्यनर्थकमित्यस्य स्तुतिवादस्य निष्प्रयोजनत्वाभिधानप्रतिपादनपरत्वप्रतिपादनार्थमितरथेति भाष्यम्, मुख्यार्थरहितत्वप्रतिपादनार्थं च न चेति भाष्यं तन्त्रेण व्याख्यातम्॥ १९॥

भा० प्र०—पूर्व के अधिकरण से अर्थ वाक्यों का प्रामाण्य प्रतिष्ठापित किया गया है। प्रकृत में जो अर्थवाद विधि के समान प्रतीत होते हैं, किन्तु विधि नहीं है उन उदाहरणों को प्रस्तुत कर विषय को स्पष्ट किया जा रहा है। इस सूत्र में पूर्वपक्षी के मत का प्रदर्शन है। 'उदुम्बरो यूपो भवति, उर्ग् वा उदुम्बर उर्क् पशव उर्ज्जैवास्मा उर्ज्जं पशूनाप्नोति उर्ज्जोऽवरुद्ध्यै' (तै० सं० २।१।१) उदुम्बर से निर्मित उदुम्बर होना चाहिए, उर्क् अर्थात् अन्न या अन्न का अमृतस्वरूप सूक्ष्म रस ही उदुम्बर होता है, पशु अन्न है

और उदुम्बर स्वरूप उर्क् है अर्थात् अन्न के द्वारा अध्वर्यु यजमान के लिए पशुरूप अन्न प्राप्त करता है—यज्ञ के फल के रूप में लाभ करता है। अतः उदुम्बर निर्मित यूप अन्न की अवरुद्धि अर्थात् अवरोध या संस्थान या सम्पादन का कारण होता है। यह वेदवाक्य के अर्थ में संशय होता है कि इससे किसी का विधान है या किसी की प्रशंसा की जाती है। अर्थात् यह विधि है या अर्थवाद। पूर्वपक्षी इसके उत्तर में कहता है—यह विधि है, यह अर्थवाद नहीं हो सकता है। "अपूर्वत्वात्" प्रकृत में उदुम्बरस्वरूप गुण एवं अन्नसम्पादनरूप फल अपूर्व अर्थात् अप्राप्त अर्थात् प्रमाणान्तर से अज्ञात है। "धनलाभाय राजसेवा" इत्यादि स्थल में तादर्थ्य में चतुर्थी होती है, यहाँ भी "उर्ज्जोऽवरुद्ध्यै" में तादर्थ्य में चतुर्थी है। राजसेवा जिस प्रकार धन लाभ का साधन है, वैसे ही यूप का उदुम्बरस्वरूप गुण भी उर्ज्ज की अवरुद्धि के अर्थात् अन्न सम्पादनरूप फल का हेतु है। यद्यपि यहाँ विधिविभक्ति नहीं है, तथापि विधिजन्य प्रवृत्ति होती है, कारण, ऐसे स्थलों में यह फल है, यह इसका साधन है—इस प्रकार का ज्ञान होने से ही प्रवृत्ति होती है। यदि इसको विधि न कहा जाय तो वाक्य अनर्थक हो जायेगा, क्योंकि, अर्थवाद स्वार्थ का प्रतिपादक न होने से वाक्य अनर्थक होगा, कारण, अर्थवाद स्वार्थ का प्रतिपादक होने पर अन्य की प्रशंसा कर चरितार्थ होता है। किन्तु यहाँ किसी प्रकार की प्रशंसा नहीं है। (पूर्वपक्ष)

'विधिः' = विधि, 'वा' अवश्य, 'स्यात्' होगी, अपूर्वत्वात् अपूर्व अर्थात् अप्राप्त होने से 'वादमात्रं' केवल अर्थवाद, 'हि' = क्योंकि "अनर्थकम्"=अनर्थक अर्थात् निष्प्रयोजन है। क्योंकि विधि सम्पर्क शून्य केवल अर्थवाद अनर्थक होता है, इसलिए उर्ग् या उदुम्बरः इत्यादि स्थल में विधि ही मानना होगा ॥ १९ ॥

## लोकवदिति चेत् ॥ १.२.२० ॥

**शा० भा०—इति चेत्पश्यसि—स्तुतिरनर्थिका, न च शब्देनावगम्यत इति। लौकिकानि वाक्यानि भवन्तो विदाङ्कुर्वन्तु। यद्यथेयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा, स्त्र्यपत्या, अनष्टप्रजा चेति। क्रेतव्येत्यप्युक्ते गुणाभिधानात्प्रवर्तन्तेतरां क्रेतारः। बहुक्षीरेति च गुणाभिधानमवगम्यते। तद्वद् वेदेऽपि भविष्यति ॥ २० ॥**

भा० वि०—यदुक्तं वादमात्रमनर्थकमिति तत्र चोदयति—**लोकवदिति**। स्तुतेरर्थवत्त्वं प्रतिजानान इति चेदिति व्याचष्टे—**इति चेदिति**। इति शब्दार्थमाह—**दृश्यत इत्यादिना**। ऊर्जोऽवरुध्या इत्यादिना शब्देन या स्तुतिर्गम्यते, सानर्थिकेति,···न···दृश्यते युज्यते अर्थवत्येव युक्तेत्यर्थः, कुत इत्याशङ्क्य लोकवदिति भागं व्याचष्टे—**लौकिकानीति**। **विदाङ्कुर्वन्तु—विचारयन्तु**। कानि

तानीत्यपेक्षायां विधेयस्तावकतया सार्थकं लौकिकं वाक्यमुदाहरति – **तद्यथेति**। लौकिकस्यापि स्तुतिपदस्यानर्थक्यात् साध्यविकलो दृष्टान्तमाह—**क्रेतव्येति**। क्रेतव्येत्युक्ते प्रवर्तमानाः क्रेतारो गुणाभिधानात् प्रवर्तन्तेतरां प्रवृत्त्यतिशयवन्तो दृश्यन्त इत्यर्थः, गुणाभिधानं चेह स्फुटमित्याह—**बहुक्षीरेति**। अतः प्रवृत्त्यतिशयाय वेदेऽपि स्तुतिरर्थवतीत्याह—**तद्वदिति** ॥ २० ॥

त० वा०—लोके तावद् बुद्धिपूर्वकारिणः पुरुषा मात्रामपि न निष्प्रयोजनां प्रयुञ्जते। तत्र च क्रेतव्येति विहिते बहुक्षीरादिभिर्गुणैः स्तुतिः प्रवृत्तिविशेषनिमित्तत्वेनाऽऽश्रीयते। न च क्षीरादयः फलविधयः प्रत्यक्षविषयत्वादतः स्तुतिः। एवं वेदेऽपि। श्रुत्यसंभवाच्च लक्षणापरिग्रह इत्यदोषः ॥ २० ॥

न्या० सु०—लौकिकस्यापि स्तुतिमात्रस्यानर्थक्यात्साध्यविकलत्वमाशङ्क्याह—**लोके तावदिति**। क्रेतव्येति भाष्यं व्याचष्टे—**तत्र चेति**। अस्यापि फलपरत्वाददृष्टान्तत्वमाशङ्क्याह—**न चेति**। तद्वदिति भाष्यं व्याचष्टे—**एवमिति**। लक्षणादोषं परिहरति—**श्रुतीति** ॥२०॥

भा० प्र०—स्तुति को अनर्थक कहना ठीक नहीं है। लौकिक वाक्यों के विचार से ही उसकी सार्थकता के अनुसार इसकी भी सार्थकता सिद्ध होती है। गाय बेचने वाला गाय के सम्बन्ध में कहता है कि—यह गाय खरीदो, इसको अधिक दूध होता है, बछियावाली भी है और प्रतिवर्ष प्रसव करती है, तो सरलता से खरीदने में प्रवृत्ति होती है। वैसे ही 'उदम्बरो यूपो भवति' यहाँ औदुम्बरत्वरूप गुण विहित होता है, ऊर्क् और अदुम्बर वाक्य उसी के स्तावक है।

लोकवत्=लौकिक उक्ति के समान। इति चेत्=यदि कहा जाय। अर्थात् अर्थवाद की सार्थकता प्रदान की जाय तो किसी तरह अनर्थकत्व नहीं रह सकता है ॥ २० ॥

## न पूर्वत्वात् ॥ १.२.२१ ॥

**शा० भा०—नैतदेवम्। लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः। तेषां विज्ञानमेव न प्रयोजनम्। अतः प्रशंसा गम्यते। अविदितवादे न श्रद्दधीरन्पूर्ववचनादिव। विदितत्वादेव च प्ररोचयन्ते। वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते, नतरामर्थवादेन। जाताशङ्को हि विधिशब्दे स तदानीम्। अथ विधिशब्देन प्ररोचितः, किमर्थवादशब्देन, अपि च वेदे व्यक्तमसंवादः, ऊर्जोऽवरुद्धया इत्यप्रसिद्धं वचनम्, ऊर्वा उदुम्बर इति हेतुत्वं चाप्रसिद्धम्। यस्मादूर्गुदुम्बरः तस्मात्तन्मयो यूपः कर्तव्य इत्यूर्गुदुम्बर इत्यनृतवचनादन्यदस्यानृतमिति परिकल्प्येत ॥ २१ ॥**

भा० वि०—न पूर्वत्वादित्यत्र नञर्थं दर्शयन् दृष्टान्तवैषम्यं प्रतिजानीते—**नैतदिति**। वैषम्यं दर्शयन् पूर्वत्वादिति व्याचष्टे—**लोक इति**। मानान्तरावगतार्थत्वेन बहुक्षीरादिवाक्यानामप्रमापकत्वात् प्रशंसार्थता युक्तेत्यर्थः, वेदे त्वविदितवादत्वादूर्जोवरुध्या इत्यादेर्न प्रशंसार्थतेत्याह—**अविदितेति**। पूर्ववचनादिव—वैदिकविध्युद्देशादिवेत्यर्थः। न च वसन्तादिवाक्ये विध्युद्देशादेव स्तुतेरङ्गीकारात् कथमश्रद्धेति वाच्यम्। तत्रापि कल्पितेनैव स्तुतिपदेन प्ररोचनाङ्गीकारादिति भावः। विदितत्वाद्बहुक्षीरादयः प्ररोचयन्त इत्येतदुपपादयति—**विदितत्वादेवेति**। नोक्तिमात्रेण, तथा सति विसंवादेऽपि प्ररोचनाप्रसङ्गादिति भावः।

ननु वेदेऽपि विधितः प्रवृत्त्यवगमात् तत्समभिव्याहृतानामर्थवादानां तादर्थ्येन विधिसंभवादेव प्ररोचनार्थत्वं संभवतीत्यत आह—**वैदिकेष्विति**। न तरामर्थवादेन प्ररोचयिष्यत इत्यत्र हेतुमाह—**जाताशङ्को हीति**। यो हि साक्षात्प्रवर्तकं विधिमुल्लङ्घ्यार्थवादं प्रवृत्त्यङ्गतया प्रार्थयते। स कथं विधावविस्रब्धोऽर्थवादे प्रत्ययं कुर्यादिति भावः। यदि विधेरेव प्रवर्तकत्वसिद्धये प्ररोचकत्वमपीष्यते तत्राह—**अथेति**। एवमविदितपूर्वत्वादूर्गवरोधादीनां न प्रशंसार्थत्वमिति सूत्रं व्याख्यायान्यथाविदितपूर्वादपि न तदर्थतेति व्याचष्टे—**अपि चेति**। संवादविरुद्धोऽसंवादः विसंवाद इति यावत्। विसंवादमुपपादयति—**ऊर्जोवरुध्या इति**। अप्रसिद्धत्वं योग्यानुपलब्धिविषयत्वम्, वर्तमानेनोर्गवरोधेन हि स्तुतिः, तस्य चानुपलब्धेः अनुपलब्धिविरोध इति भावः। स्तुतिवाक्ये विसंवादमुक्त्वा हेतुवाक्येऽपि तमाह—**ऊर्ग् वा उदुम्बर इतीति**। न ह्यूर्क्छब्दाभिधेयमन्नत्वमभक्ष्ये वृक्षे पक्षधर्मत्वेन प्रसिद्धम्, नापि यत्रान्नत्वम् तत्र यूपत्वमिति अन्वयप्रसिद्धिः, तेन हेतुत्वाप्रसिद्धिरित्यर्थः, हेत्वसिद्ध्या साध्यासिद्धिमाह—**यस्मादिति**। ऊर्गुदुम्बर इत्यनृतवचनाद्यदन्यत् साध्यं यस्मादूर्गुदुम्बरस्तस्मात्तन्मय उदुम्बरमयो यूपः कर्तव्य इति। तदप्यनृतं परिकल्प्येतेति योजना॥ २१॥

त० वा०—नायं दृष्टान्तः। स्तुतेः प्रमाणान्तरावगत्यपेक्षत्वाल्लोके तत्संभवादुपपत्तिः। वेदे त्वविदितवादत्वान्न श्रद्दधीरन्। अथ वा लोक एव यद्यविदितं कश्चिद्वदेत्तदा तंव श्रद्दधीरन्। **पूर्ववचनादिवेति**। विध्युद्देशादिव। अथ वा वैधर्म्योपमा। यथाऽधिगतपूर्ववचने श्रद्दधते नैवमविदितवादे। न चोक्तिमात्रेणैते बहुक्षीरादयः प्ररोचयन्ते। किं तर्हि। विदितत्वादेव। वेदे त्वर्थवादासत्यत्वेन विधौ जाताशङ्को न प्रवर्तेत।

अथ वा यो विधिमुत्क्रम्यार्थवादं प्रार्थयते नूनमस्य विधावविश्रम्भः। तत्र चेदनाश्वासोऽर्थवादे कुतः प्रत्यय इति। अपि च व्यक्तमसंवादो वर्तमाने। नोर्जोऽ-

वरोधनेनेयं स्तुतिर्न च तदस्ति। तत्राविद्यमानबहुक्षीरसंकीर्तनवदेतत्स्यात् स्वरूपतस्तावदुदुम्बरेऽन्नत्वं पक्षधर्मेणाप्रसिद्धम्। अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः! न हि यद्यदन्नम्, स स यूप इति लोके वेदे वा प्रसिद्धमित्यसंबद्धम्। तस्मादसंवादाद्वरं विधिरेव, किं स्तुत्या संवादापेक्षिण्येति ॥ २१ ॥

न्या० सु०—नैतदेवमिति भाष्यं व्याचष्टे—नायमिति। लोके इति भाष्यं व्याचष्टे—स्तुतेरिति। अविदित इति भाष्यं द्वेधा व्याचष्टे—वेदे त्विति। पूर्ववचनादिवेति। भाष्यं पूर्ववदेव द्वेधा व्याचष्टे—पूर्वेति। विदितत्वादेवेति भाष्यं व्याचष्टे—न चेति। वैदिकेष्विति भाष्यं जाताशङ्कत्वं द्विधोपपादयन् व्याचष्टे—वेदे त्विति। न लौकिकी स्तुतिर्विरुद्धा, प्रमाणान्तरेणास्याविदितपूर्वत्वादिति, वैदिक्याः स्तुतेः दार्ष्टान्तिकत्वनिराकरणपरतया सूत्रव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे—अपि चेति। अधर्मशब्दवद्विरुद्धवचनेनासंवादशब्देन विसंवादोऽभिप्रेतः। विसंवादोपपादनार्थमूर्ज्जोऽवरुद्धचा इति भाष्यं व्याचष्टे—वर्त्तमानेनेति। स्तुतौ स्वार्थसत्यत्वानादरत्वस्योक्तत्वादिसंवादेऽपि स्तुतिनिर्वाहमाशङ्कय विदितत्वादित्येतद्भाष्योक्तलौकिकस्तुतिविषयस्वार्थसत्यत्वादरन्यायेनात्रापि पूर्वपक्षे स्थित्वा तदादरमाह—तत्रेति।

ऊर्गुदुम्बर इति भाष्यं व्याचष्टे—स्वरूपत इति। ऊर्क्शब्दाभिधेयमन्त्रत्वं भवत्पक्षे पक्षधर्मत्वेनाप्रसिद्धम्। तस्य चाप्रसिद्धचा यूपप्रकृतित्वेनौदुम्बरो यूपो भवतीत्यप्रसिद्धम्। अन्वयाप्रसिद्धिमेवोपपादयति—न हीति। पक्षधर्मत्वसूचितहेतुत्वान्यथानुपपत्तिकल्पितं यद्यदन्नं स स यूप इत्यन्वयवाक्यमङ्गीकृत्यैतदुक्तम्। हेतुत्वाप्रसिद्धचा साध्याप्रसिद्धिप्रतिपादनार्थं तस्मादिति भाष्यम्। ऊर्गुदुम्बर इत्यनृतवचनादन्यदप्यस्य तत्साध्यं यस्मादूर्गुदुम्बरः, तस्मात्तन्मयो यूपः कर्त्तव्य इति, तदप्यमृतमिति सुयोजत्वान्न व्याख्यातं विसंवादाभिधानस्य प्रकृतोपयोगमाह—तस्मादिति ॥२१॥

भा० प्र०—लौकिक वचन प्रत्यक्ष आदि प्रमाणों से गम्य रहने पर ही उसमें विश्वास किया जाता है। विक्रय योग्य गौ आदि के प्रशंसा-सूचक-वाक्य वक्ता एवं क्रेता को पूर्व से ही विदित रहता है। जाने हुए का ज्ञान निरर्थक है। इसीलिए उसकी प्रशंसा की जाती है। किन्तु वेदवाक्य का वचन अन्य प्रमाण से प्रमाणयुक्त नहीं है अर्थात् गम्य नहीं है और प्रमाणान्तर विरुद्ध होने पर भी प्रमाण नहीं होगा। इस स्थल में उदुम्बर का अन्न-सम्पादकत्व प्रमाणान्तरगम्य नहीं है। इसी प्रकार उर्ग् वा (वै) उदुम्बरः। इस स्थल में 'वै' शब्द के द्वारा उदुम्बर की अन्न के प्रति हेतुता भी जो कही गई है, वह प्रमाणान्तर से गम्य नहीं है। अतः, उसका अव्याहत प्रामाण्य मानने के लिए उसको विधि ही मानना होगा, क्योंकि, विधि ही स्वार्थ में प्रमाण है अर्थवाद स्वार्थ में तात्पर्यरहित रहता है, इसीलिए, स्वार्थ में प्रमाणविहीन होने से अर्थवाद नहीं हो सकता है।

'न'=नहीं। इस प्रकार की आशङ्का या उक्ति सङ्गत नहीं है। 'पूर्वत्वात्' क्योंकि लौकिक उक्ति पूर्व अर्थात् प्रत्यक्ष आदि अन्य प्रमाणों से अवगत या अवगत होने की योग्यता से सम्पन्न है ॥ २१ ॥

## उक्तं तु वाक्यशेषत्वम् ॥ १.२.२२ ॥

शा० भा०—उक्तमस्माभिर्वाक्यशेषत्वं—विधिना त्वेकवाक्यत्वादिति। ननूक्तं—फलवचनमिह गम्यते, न स्तुतिरिति। यदिह फलवचनम्, तदौदुम्बरस्य यूपस्य। न चाविहित औदुम्बरो यूपोऽस्ति। तत्र फलवचनमेवानर्थकम्। स्तुतिवचनः शब्दो नास्तीति चेत्? इह फलवचनेन फलवत्ता प्रतीयते, फलवांश्च प्रशस्त इति। तत्र फलवत्तायामानर्थक्यमिति, यो द्वितीयोऽर्थः प्रशंसा नाम, स गम्यते। लक्षणेति चेत्। लक्षणायामप्यर्थवत्ता भवत्येव। लक्षणाऽपि हि लौकिकी। ननूक्तमसंवादो वेदे, न ह्यूर्गुदुम्बर इति। गुणवादेन प्ररोचनार्थतां ब्रूमहे। गौणत्वातसंवादः। किं सादृश्यम्। यथाऽन्नं प्रीतेः साधनमेवमिदमपि प्रीतिसाधनशक्तियुक्तं प्रशंसावाचिना प्रीतिसाधनशब्देनोच्यते। शक्यते हि तत्पक्वफलसम्बन्धादूर्गिति वक्तुम्॥ २२ ॥

भा० वि०—यदुक्तं ह्यनर्थकमिति तत्राह—उक्तं तु वाक्यशेषत्वम्। तु शब्दः पक्षव्यावर्तकः, विधिना त्वेकवाक्यत्वादिति सूत्रेणार्थवादानां स्तुतिद्वारकप्ररोचनया विधिवाक्यशेषत्वस्यास्माभिरुक्तत्वात्, नानर्थक्यमिति सूत्रं योजयति—उक्तमस्माभिरिति। एवं स्तुतिद्वारा विध्यङ्गत्वप्रतिपादनेन अपूर्वत्वहेतोराद्यं व्याख्यानं दूषयित्वेदानीं स्तुतिद्वारविध्यङ्गत्वं युक्तं फलस्य श्रूयमाणत्वादिति व्याख्यान्तरमनुवदति—ननूक्तमिति। गम्यमानमपि फलवचनमानर्थक्यभयादन्यविषयं वक्तव्यमिति दूषयति—यदिहेति। ततः किमत आह—न चेति। पशुयागाङ्गतया विहितयूपशेषत्वादौदुम्बरस्य यूपस्य नासावविहितोऽस्तीत्यर्थः।

ननु तर्हि विहितस्यौदुम्बरस्य यूपस्योर्गविरोधः फलं भविष्यतीत्यत्राह—तत्रेति। प्रकरणादेव यागोपकारप्रयोजनलाभात् फलान्तरोक्तिरनर्थिकैवेत्यर्थः।

यदि वा न चेत्यादेरयमर्थः—औदुम्बरो यूपो भवतीति वर्तमानापदेशत्वादर्थवादेन विधिर्नेतव्यः, अनर्थवादत्वे त्वविहितत्वान्नास्त्येव यूपः तथा सति फलवचनमेवानर्थकमिति।

ननु स्तुतिरत्यश्रूयमाणत्वादनादेयेति शङ्कते—स्तुतीति। वाचकशब्दाभावेऽपि स्तुत्यवगतिं दर्शयन् फलवचनसिद्धमर्थं कथयति—इहेति। फलवत्ता औदुम्बरयूपस्य प्रशस्ता इति प्रतीयत इत्यनुषङ्गः।

ननु फलवत्ताप्राशस्त्ययोरवगमे किमिति । प्राशस्त्यपरत्वाग्रहस्तत्राह—तत्रेति । द्वितीयोऽर्थः फलवत्तया लक्ष्यमाणः अवगम्यते=तात्पर्येण प्रतिपाद्यते नाभिनिवेशमात्रात् प्राशस्त्यपरत्वाभ्युपगमः; किन्त्वानर्थक्यभयादिति भावः ।

नन्वेवमपि लक्षणया स्तुतिर्गम्यते श्रुतिश्च लक्षणया गरीयसीत्युक्तमनुवदति—लक्षणयेति । लक्षणयाप्यर्थवत्त्वसम्भवेन श्रुतिलोभादानर्थक्यमाश्रयणीयमिति दूषयति—लक्षणायामिति । दृष्टा च मुख्यार्थासंभवे गङ्गायां घोष इत्यादौ लक्षणेत्याह—लक्षणापीति । एवमूर्जोऽवरुध्या इत्यादेः प्रधानफलानुवादेनौदुम्बरीयूपस्तुत्यर्थत्वेनाविदितपूर्वत्वं दूषयित्वा, न पूर्वत्वादिति सूत्रात् द्वितीयवर्णकोक्तं वदति—ननूक्तमिति । ऊर्जोवरुध्या इति तावदङ्गे प्रधानगामिफलोपचार श्रुत्यर्थत्वेनाभिमतः तेनानुपलब्धिविरोधः पूर्णाहुतिन्यायेन परिहृत एवेत्याह—नन्विति । यदुक्तमूर्गु्दुम्बर इति हेतुत्वं चाप्रसिद्धमिति, तदपि न, गौणतया तत्सिद्धेरित्याह—ऊर्गिति । गुणः । सादृश्यम् ।

नन्वग्निमाणवकवदन्नयूपयोर्न सादृश्यमिति चोदयति—किमिति । प्रीतिसाधनत्वं सादृश्यमित्याह—यथेति । इदमपि=उदुम्बरवरत्वपि, प्रीतिसाधनत्वमप्युदुम्बरवृक्षस्याभक्ष्यत्वान्नास्तीत्याशङ्क्याह—तदिति । प्रीतिसाधनोदुम्बरफलोत्पादनशक्तियुक्तत्वादुपचारात् प्रशंसावाचिना प्रीतिसाधनवाचिनान्नशब्देनोच्यते प्रशंसितुमित्यर्थः सोऽयं—विवृतश्शक्यते हीति ॥ २२ ॥

त० वा०—ऊर्गुदुम्बर इत्यादि तावदूर्जोऽवरुद्ध्या इत्यस्योपपत्तितयैकवाक्यभूतं न विच्छिन्नं स्तावकम् । न ह्यन्नमुदुम्बर इत्युक्ते पुरुषं प्रति प्रशस्तता गम्यते । ऊर्जोऽवरुद्ध्या इति तु प्ररोचयति । तदुपपत्तिरितरेति संगच्छते । तस्मात्कृत्स्नेन फलम्, प्ररोचना वा । तत्र यद्यपि तावल्लिङादिः स्यात् तथाऽपि सुतरामर्थवादतया गृह्णीयात् । किमुत वर्तमानापदेशो यो विधिसिद्ध्यर्थमेव । प्रकरणाच्च यागोपकारे प्रयोजने लभ्यमाने किमित्यवाचकात्फलं कल्पयिष्यामः । प्रकरणं वाक्येन बाध्यत इति चेत् । अविरोधात् । यदि ह्येकांशग्राहित्वेन वाक्यप्रकरणे संनिपतेताम्, तथा सति बाधः स्यात् । इह तु प्रकरणमौदुम्बरताविधिं गृह्णाति, सोऽप्यूर्गुदुम्बर इत्यादिलभ्यां प्ररोचनाम् । तत्र तद्विशिष्टौदुम्बरत्वग्राहिणः प्रकरणस्य को विरोधः । तस्मात्फलविधिसामर्थ्याभावात्प्रकरणाबाधेन निवेशसम्भवो नातिक्रमितव्यः । प्ररोचनाऽपि च वाक्यशेषादुपपद्यमाना नार्थापत्त्या विध्युद्देशादेव कल्पिता भविष्यति । अन्यत्र विधिरपि हि तावत्तां कल्पयेत् । इह तु स स्वयमेव दुःस्थितः किं प्ररोचनया करिष्यतीति । न च स्तुत्युपयुक्तस्य पुनः फलेऽपि प्रतिष्ठादाविव व्यापारो युज्यते । रात्रिसत्राणां ह्यनन्यपरत्वाद् गुर्व्यपि कल्पनाऽऽश्रीयते । अत्र तु प्रकरणादस्ति प्रयोजनसिद्धिरित्युक्तम् । जाति-

विशेषस्य च योग्यतयैव काष्ठाङ्गत्वं प्रसिद्धम्, न फलार्थता। यूपशब्दोऽपि च कर्माविष्टकाष्ठवचन इत्युपनीतमात्रमेव गृह्णाति। अतश्च प्रसिद्धे पारार्थ्येऽर्थवादता।

यत्तु यूपे निराकाङ्क्षो जातिं प्रतीति शरवद्बाधो भविष्यति। न चाबाधप्रकारोऽस्ति, काम्यपक्षेऽपि तदभ्युपगमात्। एतावांस्तु विशेषः। तव पुरुषार्थत्वाद्भिन्नविषयेण सता कथञ्चित्प्रसङ्गलभ्यसमानाश्रयत्वेन, मम तूभयोः क्रत्वर्थत्वात्समानविषयेणेति। न चात्र जातौ फलाय विधीयमानायां दध्न इव होम आश्रयो मनसि विपरिवर्तते। यो हि पशुयागः प्रकृतः स तावदयोग्यः। पशुनियोजनं च यूपद्वारेण योग्यं तदपि सह यूपेनाप्रकृतम्। न चानर्थक्यात्तदङ्गेषु इति प्रधानादवतीर्य तदङ्गमाश्रीयते। यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोतीत्येवं कल्प्यते, न त्विह तथा। अत्र हि प्राधान्यांशभाजा गुणेनाऽऽश्रयः प्रार्थ्यते। तत्र प्रधानं सन्निहितं तद्यदि न योग्यं ततो वचनव्यक्त्यन्तरमाश्रीयताम्, न चावतरणं सम्भवति। न चानेनैव वाक्येनाऽऽश्रयो दीयते वाक्यभेदप्रसङ्गात्। द्वौ हि सम्बन्धौ तदा स्यातां गुणफलसम्बन्धस्तदाश्रयसम्बन्धश्चेति। युगपच्चौदुम्बरताफलयूपौ प्रत्युपादीयमानोद्दिश्यमाना विरूपा स्यात्। अथोभयोद्देशेन विधीयते, तथाऽपि फलाननुरक्ता यूपेन सम्बध्येत युपाननुरक्ता च फलेन। यत्तु विनैव विधायकात्स्वेच्छयैव प्रवर्तिष्यामह इति स्वच्छन्देन सह नास्ति विधिवादः। पुरुषार्थफलत्वं तु न प्राग्विधेः सिध्यति सन्निहिततरौदुम्बरत्वादिसाध्यांशावरोधात्। यत्तु प्रयोगवचनो विधास्यतीति न पुरुषार्थेषु तस्य शक्तिः। असंयुक्तं प्रकरणादिति(जै. सू. ३.३.४) वक्ष्यति। यदि तु तेन विधीयते, सिद्धं कर्मार्थत्वम्। पञ्चमलकाररूपं तु वर्तमानापदेशेन सन्दिग्धम्। तस्माद्वर्तमानफलाभिधायित्वाच्चतुर्थे चैवं कामशब्दरहितस्य फलविधित्वनिराकरणात्प्रधानफलमेवेदं प्ररोचनायै संकीर्त्यत इति युक्तम्। सर्वत्र च स्तुतिपरत्वात्तदुपायेषु सत्यासत्यान्वेषणं व्यर्थम्। ज्ञानमात्रौपयिकत्वात्। गुणवादेन च संवादात्। साधनत्वेऽपि च प्रीतिसाधनत्वेन, तृप्तिहेतुत्वेन वा संवादः॥ २२॥

न्या० सु०—अत्र भाष्यकृता वाक्यशेषत्वे विध्येकवाक्यत्वं हेतुमनुवदता शेषशब्दः स्तुतिद्वाराङ्गत्वाभिप्रायो व्याख्यातः। तत्रोर्ज्जं पशूनाप्नोतीत्येतदन्तेन स्तुतिसिद्धेरुर्ज्जोऽवरुद्ध्या इत्यस्य फलपरत्वमविरुद्धमित्याशङ्क्याह—ऊर्गुदुम्बर इति। उभयसम्भवे, तर्हि फलपरतैव कस्मान्नेष्यते अत आह—तत्रेति। यद्यप्यौदुम्बरो यूपो भवेदिति लिङ्गादि स्यात्, तथाप्यूर्गुदुम्बर इत्यादि कृत्स्नवाक्यशेषमर्थवादतयैव गृह्णीयान्न फलपरतयेति सावधारणं द्रष्टव्यम्। लिङादेर्विधायकत्वेनार्थवादापेक्षत्वात्सुतरामित्युक्तम्। फलाकाङ्क्षानिवृत्तिस्तु प्रकरणात् क्रत्वर्थत्वावगतेः सेत्स्यतीति वक्ष्यमाणोऽभिप्रायः। भवतीति तु वर्त्तमानापदेशो न फलपरतया वाक्यशेषं ग्रहीतुं शक्त इत्याह—किमुतेति। विपूर्वस्य

दधातेः करोत्यर्थवाचित्वादुत्पादनं विधिशब्देनाभिप्रेतम् । तेनायमर्थः–न तावद्यावच्छ्रुतस्य भवतीति वर्त्तमानापदेशस्य फलाकाङ्क्षा, तदन्यथानुपपत्त्या कल्पिते भावनाविधौ सत्यामपि फलाकाङ्क्षायामौदुम्बरत्वस्वरूपोत्पादनार्थं कल्पितस्य लिङादेः तन्मात्रोपक्षमान्न साधनत्वबोधे व्यापारोऽस्तीति ।

नन्वौदुम्बरत्वकर्त्तव्यतार्थं कल्पितस्य विधेः फलपर्यन्तत्वानभ्युपगमे फलाभावादवसादः स्यात् । अत आह—**प्रकरणञ्चेति** । वैकृतस्याप्यौदुम्बरत्वस्य प्राकृतयूपाख्याङ्गसम्बन्धित्वेनोत्पत्तेः पृषदाज्यादिवत्प्रकरणग्रहणाविरोधः, विधिरहितस्य समभिव्याहारमात्रस्य फलप्रतिपादकत्वमाशङ्क्य वाचकादित्युक्तम् । अवाचकमितिपाठे नास्तिवाचकं यस्योर्गवरोधादिनः फलस्य तदिति बहुव्रीहिः । समभिव्याहारात्मना वाक्येन फलार्थत्वावगमात् प्रकरणबाधमाशङ्कते—**प्रकरणमिति** । समभिव्याहारावगतस्य फलार्थत्वस्य वक्ष्यमाणनिराकरणाभिप्रायेण परिहरति—**नेति** । अबाधमेवोपसंहरति—**तस्मादिति** । कृत्स्नस्य च वाक्यशेषस्य फलपरत्वे विध्युद्देशस्यैव शक्तिद्वयकल्पनापत्तेर्गौरवं स्यादित्यर्थान्तरन्यासेनाह—**प्ररोचनापि चेति** । न च तत्कल्पनं विना विधिपर्यवसानमित्याह—**अन्यत्रेति** । अत्र तु प्ररोचनाकल्पनमप्यतिक्लेशेन निर्वोढ्व्यम्, विधेरपि कल्प्यत्वादित्याह–**इह त्विति** ।

विध्युद्देशातिगौरवपरिहारार्थं तर्हि प्ररोचनापि वाक्यशेषादेव भविष्यतीत्याशङ्क्य, तन्निराकरणार्थं पर्णमय्यधिकरणन्यायमुपन्यस्यति—**न चेति** । अस्ति प्रयोजनसिद्धिरित्यनेन पारार्थ्यं दर्शितम्, काष्ठविशेषपरिच्छेदकत्वेन चोदुम्बरजातेर्लिङ्गादपि पारार्थ्यमवसीयत इत्याह—**जातिविशेषस्येति** । ऐकान्तिककाष्ठाङ्गतयाऽक्रियारूपत्वेन फलार्थत्वयोग्यता निराकृता सत्यपि काष्ठाङ्गत्वे यूपाङ्गत्वं कथं सिद्ध्यतीत्यपेक्षायाम्, यूपशब्दोऽपि चेत्याद्युक्तम् । पारार्थ्यसाधनस्योपयोगमाह—**अतश्चेति** ।

यत्तु पौनरुक्त्यपरिहारावसरे पारार्थ्याभावार्थं प्राकृतखादिरादित्वालाभान्नैराकाङ्क्ष्यमुक्तम्, तदनुभाष्य दूषयति—**यत्त्विति** । यथा श्येनेत्यस्य शरमयं बर्हिरिति प्रत्यक्षोपदिष्टैः शरैरतिदेशप्राप्तानां कुशानां बाधस्तद्वदत्रापीत्यर्थः । बाधप्रसङ्ग एव तर्हि दोषः, अत आह—**न चेति** । वरं क्रत्वर्थत्वे समानविषयत्वाद् बाधो युक्ततर इत्याह—**एतावांस्त्विति** । प्रकृताश्रयालाभादप्यत्र गुणफलसम्बन्धो न युक्त इत्याह—**न चात्रेति** । तमेवोपपादयति—**यो हीति** । पशुविशेषणयागस्य सौमापौष्णं त्रैतमालभतेति त्रिवर्णपशुद्रव्यकत्वेनौदुम्बरवृक्षद्रव्यसाध्यत्वायोग्यतोपपादनार्थम् । न चाप्रकृतस्यापि नियोजनस्यातिदेशप्राप्तस्याश्रयत्वं शङ्कनीयम् । प्रकृतौ हि प्रत्यक्षोपदिष्टस्य होमप्रणयनादेः पश्वाशाधनापेक्षायां पयश्चमसादिवत्फलार्थस्यापि दधिगोदोहनादेराश्रयभूतसाध्यापेक्षादर्शनादुभयाकाङ्क्षावशात्साधनत्वमवसीयते । न चैतावताऽङ्गत्वप्रसङ्गः, तादर्थ्येन विधानाभावात् । अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिणा गोदोहनादिना सिद्धौ चमसादेरनङ्गत्वेन तदभावे वैगुण्याभावादनादरः । विकृतौ त्वखण्डकरणोपकारमुखेन क्लृप्तोपकारप्राकृत-

खादिरत्वादिविशिष्टस्यैव नियोजनस्यातिदेशात्साधनानाकाङ्क्षस्य परार्थं विहितसाधनान्तरग्राहकत्वन्न युक्तम् । अन्यतराकाङ्क्षाहेतुकस्य सम्बन्धस्येतराकाङ्क्षोत्थापनपूर्वकत्वाद्विधिमन्तरेणाकाङ्क्षोत्थापनायोगात् ।

ननु प्रकृतः पशुयागः साक्षादयोग्योऽप्यङ्गभूतयूपद्वारेणाश्रयो भविष्यत्यत आह—न चेति । एवं कल्प्यत इति प्रधानादवतीर्य तदङ्गाश्रयत्वेन कल्प्यत इत्यर्थः । वचनव्यक्त्यन्तरमित्यौदुम्बरत्वेनोर्गवरोधं भावयेदितिवचनव्यक्त्यपेक्षयौदुम्बरत्वेन यूपं भावयेदित्यभिप्रेतम् । न चावतरणमिति अचोदकाश्च संस्काराः (जै० सू० २-२-१८) इति वत्तुशब्दार्थे चशब्दः । न त्ववतरणं सम्भवतीत्यर्थः ।

यद्वा तेनाभ्युपगम्यावतरणं होमसाधनत्वेन साक्षादङ्गभूतायां जुह्वां सम्भवाद्यूपे न सम्भवतीत्युच्यते । अस्मिन्व्याख्याने सम्मतं यूपे यदवतरणम्, तन्न सम्भवति—न सिध्यतीति सम्मतवचनः सम्भवशब्दः । अनेकार्थत्वान्निपातनोपसर्गाणां सम्यगर्थस्य वा संशब्दस्य लक्षणयात्र सम्मतवचनत्वमेष्टव्यम् । यूपानवतरणे च यूपशब्दानर्थक्यप्रसङ्गो दोषः ।

ननु प्रकृताश्रयालाभेऽपि वाक्येनाश्रयलाभो भविष्यत्यत आह—न चानेनैवेति । न केवलमनेकार्थविधिलक्षणो वाक्यभेदः, किं तु वैरूप्यलक्षणोऽपीत्याह—युगपच्चेति । यूपस्याश्रयभूतस्यौदुम्बरतोपकारित्वेन गुणभूततयोपादेयत्वात्तं प्रत्युदुम्बरताया उद्देश्यत्वादिति भावः । नन्वाश्रयस्यापि साध्यत्वेन प्रधानतयोद्देश्यत्वादवैरूप्यं स्यादत आह—अथेति । एवं सत्युद्देश्ययोः फलयूपयोर्गुणभूतौदुम्बरतावशीकाराभावेनान्योन्यनियमायोगादश्रयालाभस्तदवस्थ एवेति भावः । प्रत्युद्देश्यं वाक्यसमाप्तेर्वाक्यभेदोऽपि चशब्देन सूचितः । एवं पर्णमयीन्यायेन स्तुत्युपयुक्तस्य परावृत्य फलपरत्वायोगादूर्गुदुम्बर इत्यादेः फलपरत्वे प्ररोचनार्थत्वाभावाद्विष्युद्देशातिगौरवमपरिहार्यमिति प्रकृतोपयोगः ।

ननु समभिव्याहारादेव फलसाधनत्वावगतौ सत्यां विधिमन्तरेणेच्छयैव प्रवृत्तेर्न प्ररोचनया कार्यमत आह—यस्त्विति । साधनत्वप्रतिपत्तौ विधिव्यापारानभ्युपगमे भावनाया भाव्यापेक्षायामप्यौदुम्बरो भवतीत्यौदुम्बरत्वस्यैव भवनकर्तृत्वेन सन्निधावुपात्तस्य साध्यांशे निवेशापत्तेरुर्ज्जोऽवरुध्या इति चतुर्थी व्यवधावुपात्तस्याप्यूर्गवरोधस्य तदवरुद्धायां भावनायां निवेशायोगद्यूपविशेषणत्वापत्तेरपुरुषार्थोपयिकत्वान्नौदुम्बरत्वभावनायां बुद्धिपूर्वकारी कश्चित्प्रवर्त्ततेत्यर्थः ।

नन्वौदुम्बरो यूपो भवतीत्युत्पत्तिविधेः फलसाधनत्वबोधे व्यापाराभावादप्रर्त्तकत्वेऽपि प्रयोगवचनात्प्रवृत्तिः सेत्स्यतीत्युक्तम्, अत आह—यस्त्विति । संयोगपृथक्त्वभावात्पुरुषार्थत्वे सति क्रत्वर्थत्वायोगादिति भावः । पञ्चमलकारत्वस्य चाडागमादिचिह्नाभावेनानिश्चयात्कल्प्यस्योत्पत्तिविधेर्विनियोगवत्प्रयोगेऽपि व्यापारो न युक्त इत्याह— पञ्चमेति । फलसङ्कीर्त्तनस्यालम्बनं दर्शयन् सिद्धान्तमुपसंहरति—तस्मादिति । एतदधिकरणव्युत्पाद्यं विधि-

रहितस्य श्रेयःसाधनत्वबोधासामर्थ्यं तस्माच्छब्देन परामृष्टं फलाभावसूत्रोक्तानुपलब्धिविरोधो वर्त्तमानफलाभिधायित्वादित्यनेन। चतुर्थे चेति प्रस्तुतसाधनांशनिराकरणहेतुत्वेन साध्यांशनिराकरणं वक्ष्यमाणमुक्तं सर्वेभ्यो दर्शपूर्णमासावित्यादौ चतुर्थ्या फलसमर्पकत्वाभ्युपगमात्समाभिव्याहारमात्रस्य फलसपर्कत्वनिराकरणपरमेवं कामशब्दरहितस्येति व्याख्येयम्। प्रधानफलमेवेदमित्यनेन फलकीर्त्तनालम्बनं दर्शितम्।

सोमा पौष्णं त्रैतमालभेत पशुकाम इति पशूनामदनीयत्वेनोर्क् शब्दवाच्यन्न रूपाणां प्रधानफलत्वादङ्गे पूर्णाहुतिवदुपचारः। न पूर्वत्वादिति सूत्रं द्वितीयवर्णकोक्तस्य विसम्वादस्यानुभाषणं पूर्वं निराकरणार्थम्। ननूक्तमित्यादिभाष्यं व्याचष्टे—सर्वत्र चेति। गुणवादेनेति गुणशब्देन फलसङ्कीर्त्तने सम्वादाभिधाने तावदङ्गे प्रधानगामिनि तत्फलोपचारोऽभिमतः। पूर्णाहुतिन्यायेनोक्तप्रायत्वान्नेह भाष्यकृतोक्तः। पक्षधर्म्मतान्वयकीर्त्तनसम्वादाभिधाने त्वग्निमाणवकवत्सादृश्यं गुणशब्देनाभिप्रेतम्। तत्र किं सादृश्यमित्यादिप्रश्नपूर्वकं सादृश्यप्रतिपादनार्थं भाष्यं व्याचष्टे—साधनत्वेऽपि चेति। साधनशब्देन हेतुत्वमुक्तम्। अन्नगतेन प्रीतिसाधनत्वेन तद्विशेषतृप्तिसाधनत्वेन वा गुणेनोदुम्बरेऽन्नशब्दाभिधेयत्वसम्भवात्साधनेऽपि सम्वाद इत्यर्थः। प्रीतिसाधनत्वमप्यौदुम्बरवृक्षस्याभक्ष्यत्वान्नास्तीत्याशङ्क्य प्रीतिसाधनौदुम्बरफलोत्पादनशक्तियुक्तं वृक्षं प्रशंसितुमुपचारात्प्रशंसावाचिना प्रीतिसाधनशब्देनोच्यते इत्युक्तम्। अनेन च नात्र यद्यदन्नम्, स स यूप इत्यन्वयवाक्यं कल्प्यते किं तु यद्यदन्नम्, तत्तत्प्रशस्तमित्येवम्, तच्च प्रसिद्धमेवेति सूचितम्॥ २२॥

भा० प्र०—विधि के साथ एकवाक्यता सम्पन्न होकर ही विधेय विषय की प्रशंसा के द्वारा अर्थवाद सार्थक होता है—यह पूर्व में ही कहा गया है। इस स्थल में भी यही स्थिति है। 'उर्क् उदम्बरः' यह अंश अर्थवाद है। अवशिष्ट अंश इस अर्थवाद की ही उपपत्ति अर्थात् युक्ति है। 'उर्क् उदुम्बरः' यह उक्ति भी गुणवाद होने से सभी वाक्य लक्षणा के बल से उदुम्बरत्वविधि की स्थापक है। पूर्वपक्षी का यह कथन कि अन्न सम्पादन उदुम्बरत्व रूप गुण का फल है—यह कथन ठीक नहीं है, क्योंकि, क्रिया के विना केवल गुण फलवान् नहीं हो सकता है। प्रकृत में कोई ऐसी विधि भी नहीं है, अन्न जिसका फल होगा। 'उदुम्बरो यूपो भवति' इसको विधि नहीं कहा सकता है, क्योंकि, इसमें लिङ् आदि विधि विभक्ति नहीं है। विधि की कल्पना करने पर अर्थवाद के द्वारा ही विधि की कल्पना होने से इस वाक्य को अर्थवाद मानना ही होगा। इस स्थल में प्रकरणवश उदुम्बरता विधि है और उसमें अर्थवाद अन्वित होता है।

उक्तं=कथित होता है। 'तु'=किन्तु। पूर्वपक्ष के निराश के लिए "विधिशेषत्वम्"= विधिशेषत्व। अर्थवाद विधिवाक्य का शेष या अङ्ग है एवं विधिवाक्यों की स्तुति के द्वारा ही वे सार्थक होते हैं, यह कहा गया है॥ २२॥

**विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥१. २. २३॥**

**शा० भा०—अप्सुयोनिर्वा अश्वो अप्सुजो वेतसः (तै. सं. ५।३।१२) इति अप्सुयोनिरश्वः कर्तव्य इति विधेरशक्यत्वादानर्थक्यम्। तत्रावश्यं स्तुतिः कल्पयितव्या, शमयित्रीभिरद्भिरश्वस्यावकानां च सम्बन्धो यजमानस्य कष्टं शमयतीति। तत्सामान्यादितरेषु तथात्वम्। तथेतियावत् तावत्तथात्वमिति। किं तत्सामान्यम्। विध्यसम्भवः, स्तुतिसम्भवश्च ॥ २३ ॥**

भा० वि०—सम्भद्विध्येकवाक्यत्वानामपि पृथग्विविधित्वाभ्युपगमे तुल्यन्यायतयान्यत्रापि प्राप्तिमभिप्रेत्याह—**विधिश्चेति**। क्वचिदित्युक्तं विषयं दर्शयन् विधिश्चेति व्याचष्टे—**अप्स्वित्यादिना**। अश्वस्य प्रयत्ननिष्पाद्यत्वात् तद्विधेरशक्यत्वं वेतसादेस्तु स्वभावसिद्धत्वादिति मन्तव्यम्। तथा किमित्याशङ्क्य तस्मादित्यादि व्याचष्टे—**तत्रेति**। आनर्थक्यमेवास्त्वित्याशङ्क्य तन्निरासायावश्यमित्युक्तम्। स्तुतिमभिनयति—**शमयित्रीभिरिति**। अवकानां चेति चशब्दो वेतसविषयः, तेनैवमन्वयः अश्वस्य वेतसानां च शमयित्रीभिरद्भिः सम्बन्धो यजमानस्य कष्टं शमयत्यवकानां वेतसानां च ताभिस्सम्बन्धो यजमानकष्टं शमयतीति स्तुतिः कल्पयितव्येति। यद्यप्यवकानां नोदाहरणे श्रवणमस्ति, तथाप्यब्योनित्वाविशेषाद्वेतसपदेनैव उपलक्षिताः। न च स्व एवेनं योनौ प्रतिष्ठापयतीत्यनेनाप्सु जाते वेतसेऽश्वस्य चयने कृते प्रकृतिविकारयोरभेदोपचारेण वेतसप्रकृतिभूतास्वप्सु चयनात् स्वेयोनौ प्रतिष्ठापनं कृतं भवतीति स्तुतिप्रतीयते। शमयित्रीत्वस्य चापामश्रवणात् कथं तद्द्वारा स्तुतिरिति वाच्यम्, स्वयोनिप्रतिष्ठापनमात्रोक्त्या प्ररोचनानुपपत्तेः 'वेतसशाखया वलकाभिश्चाग्निं विकर्षति' आपो वै शान्ताश्शान्तभिरेवास्य शुचं शमयति' इति वाक्यान्तरगतार्थवादभणितशमयित्रीत्वस्य यजमानकष्टशमनसाधनत्वोपपादनार्थत्वेनोपादानात्। न च वेतसवाक्येन सहचारादुपलक्षितानामप्यवकानामविधेयत्वान्न स्तुत्यपेक्षेति वेदितव्यम् अत्रार्थवादान्तरेणापां शमयितृत्वे गदिते तत्राग्निविकर्षणसाधनत्वेन विहितयोः वेतसावकयोः स्तुत्यभावशङ्कानिरासायावकानाम् अद्भिस्सम्बन्धेन स्तुतिप्रदर्शनोपपत्तेरिति द्रष्टव्यम्।

तत्सामान्यादित्यादिसूत्रावयवमादाय व्याचष्टे—**तथेति**। यावत्सु फलविधिसरूपेषु अर्थवादेषु तथेति अप्सु योन्याद्यर्थवादसमानाकारता तावत्सु तथात्वं स्तुतित्वमित्यर्थः प्रश्नपूर्वकं तत्सामान्यादिति व्याकुर्वन् तथेत्युक्तं प्रपञ्चयति—**किमित्यादिना** ॥ २३ ॥

**त० वा०—**यदि चैवंजातीयका विधयो भवेयुः, ततः पूर्वोदाहृताः सर्व एव द्रव्यगुणक्रिया विधयो भवेयुः। वायुः क्षेपिष्ठा देवता कर्तव्याः, अप्सुयोनिरश्वः कर्तव्यः, अप्सुजो वेतसोऽवकाश्च कर्तव्यः, आपः शान्ताः ऊर्गुदुम्बर इत्यादि। तत्र यद्यपि के चित्क्रियादिविधयः शक्यन्ते कर्तुम्। एते त्वशक्याः स्वभावसिद्धेः प्रयत्नेनापि चानिष्पत्तेः वायुवेतसावकादिषु स्वभावसिद्धिः। अश्वादुम्बरादीनामशक्यता। कीदृशी स्तुतिस्तां दर्शयति—**शमयित्रीभिरद्भिरित्यादि**।

तत्रासंगतरेग्रन्थ इति व्याख्यातारः समर्थयन्ते। यस्मादिहावकातत्सम्बन्धयोः शमयितृत्वस्य च नैवोपन्यासः कृतो वेतस उपन्यस्तः सोऽपि स्तुतिवेलायां न प्रदर्शित इति। तत्र त्वियं गमनिका। वेतसोदाहरणेनैव तुल्यत्वादवकादीन्यप्युदाहृतानि। न चायमश्वावकयोः परस्परेण सम्बन्धः कथ्यते। केन तर्हि? अद्भिः। तावता तु न स्तुतिः काचिदुन्मीलितेत्यर्थवादान्तरापेक्षाप्रवृत्तां तां दर्शयति—आपो वै शान्ता (तै० सं० ५.२.४) इति। अनेन हि विधित्वात्प्रच्युतेनापां प्राशस्त्यमुच्यते। तत्र कस्यचित्प्रसिद्धाप्सम्बन्धस्य तन्मात्रसंकीर्तनादेव स्तुतिर्भवति। अन्येषां तु सम्बन्धिसम्बन्धात्सम्बन्धः कीर्त्यते। प्रसिद्धशान्तत्वसम्बन्धाभिरद्भिः सम्बन्धादश्वादिरपि शान्तात्मकस्तत्सम्बद्धेन च कर्मणा यजमानस्य कष्टं शाम्यतीत्येवंविधप्राशस्त्यज्ञापनार्थम्। एवं क्षिप्रदैवतेन शीघ्रं फलप्राप्तिरन्नमयेन च यूपेनान्नप्राप्तिरिति स्तुतित्वे सिद्धे तत्समानन्यायानामप्येवमात्मकत्वम् ॥ २३ ॥

**न्या० सु०—**अत्र भाष्यकृतऽप्सु योनिर्वा अश्व इत्यादीनामानर्थक्यापत्तेर्विधित्वं न सम्भवतीत्युक्तम्। तदयुक्तम्। फलविधिसरूपाणामेव पूर्वपक्षिणा विधित्वस्योक्तत्वादित्याशङ्क्याह—**यदि चेति**। विध्यन्तरैकवाक्यभूतानामपि विधिपरत्वाङ्गीकारे तुल्यन्यायात्सर्वत्राप्यापाद्य दूषणमुच्यत इत्यर्थः। सर्वग्रहणं वायुक्षेपिष्ठादीनामपि तर्हि कस्मान्न विधित्वमापद्यत इत्याशङ्कानिवृत्त्यर्थं क्वचिद्ग्रहणम्। तर्हि सूत्रे किम्? अत आह—**तत्रेति**। **केचिदिति**। निवीतं मनुष्याणामित्यादय इत्यर्थः। शमयित्रीभिरित्यादिभाष्यं स्तुतिरूपप्रदर्शनार्थत्वेन व्याचष्टे—**कीदृशीति**। आक्षिपति—**तत्रेति**। अग्रन्थः प्रतिभातीति मत्वा समर्थयन्त इत्यर्थः। अग्रन्थत्वमेव वा समर्थयन्त इति।

स्वयं समर्थयते—**तत्र त्वियमिति**। पूर्वव्याख्यायां समर्थनं दर्शयतीत्यवतारणीयम्। तत्रावकाशमयित्रीत्वानुपन्यासं तावत्प्रत्याचष्टे—**वेतसेति**। अश्वावकयोः सम्बन्धस्य तु भाष्यकारेणाकथितत्वादनुपन्यासो न दोषायेत्याह—**न चायमिति**। इह च वैतसे कटे अश्वं चिनोति, अप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः स वैनं योनौ प्रतिष्ठापयतीत्यत्रावकानामद्भिः सम्बन्धाश्रवणेऽपि, वेतसशाखयावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचं शमयतीत्यत्र वेतसवत्तासामप्यद्भिः सम्बधस्य स्तुतिसिद्ध्यर्थं वाच्यत्वादप्सुजो वेतस इति अप्सुजत्वाभिधानमवकानामप्सुजार्थसाहचर्यादुपलक्षणमित्यभिप्रेत्यावकाग्रहणम्।

ननु वेतसग्रहणेनोपलक्षितत्वादवकानामग्निविकर्षणसाधनत्वेन विहितानां स्तुत्यर्थं भवतु नाम भाष्येऽद्भिः सम्बन्धकथनम्, शमयित्रीत्वविशेषणत्वमपां किमर्थम् अत आह— तावता त्विति । यद्यपि स एवैनं योनौ प्रतिष्ठापयति इत्यप्सुजे वेतसेऽश्वचयने कृते प्रकृतिविकारयोरभेदोपचारेण वेतसप्रकृतिभूतास्वप्सु चयनात्स्वयोनौ प्रतिष्ठापनं कृतं भवतीति स्तुतिः प्रतीयते, तथापि स्वयोनिप्रतिष्ठापनमात्रेण प्ररोचनाऽनुपपत्तेर्वेतसशाखयावकाभिश्चाग्निं विकर्षति, आपो वै शान्ताः, शान्ताभिरेवास्य शुचं शमयतीति वाक्यान्तरगतार्थवादाभिहितमपां शमयित्रीत्वं यजमानकष्टशमनसाधनत्वोपपादनार्थं भाष्यकृतोक्तम् । अवकानां त्वप्सुजो वेतस इत्यनेन सहचरणलक्षणयाद्भिः सम्बन्धानभिधानेऽपि अत्राविधानादनपेक्षितस्तुत्यप्रतीतेर्वाक्यान्तरगतार्थवादेनापां शमयित्रीत्वेऽभिहितेऽप्यग्निविकर्षणसाधनत्वेन विहितयोर्वेतसावकयोः स्तुत्यप्रतीतेस्तत्प्रशंसोपपादनार्थमद्भिः सम्बन्धो भाष्यकृता कथितः । अर्थवादान्तरापेक्षाप्रवृत्तानामित्यश्वविषयेऽर्थवादान्तरस्यापेक्षया प्रवृत्तानामिति षष्ठीसमासगर्भस्तृतीयासामासः । अवकाविषये त्वर्थवादान्तरेणेति तृतीयासमासगर्भः ।

अर्थवादान्तरमुदाहरति—आप इति । कथमस्यार्थवादान्तरस्याप्सुयोनिर्वा अश्व इत्यनेनापेक्षा, कथञ्चानेनार्थवादान्तरेणाप्सुजो वेतस इत्यस्यापेक्षा इत्याशङ्क्याह—अनेन हीति । अश्ववेतसाभिजनभूतानामपां शमयित्रीत्वेन प्राशस्त्याभिधानेन तदभिजातयोरश्ववेतसयोः प्राशस्त्यावगमात् तदर्थमपेक्षेत्यश्वविषये अर्थः । अवकाविषये त्वविधेयानामपां शमयित्रीत्वेन प्राशस्त्यमुच्यते, न विधेययोर्वेतसावकयोरिति तत्प्राशस्त्यावगमायाऽप्सुजत्वाभिधानापेक्षेति व्याख्येयम् । कीदृशीं स्तुतिं दर्शयतीत्यपेक्षायामाह—तत्रेति । कस्यचित्प्रसिद्धाप्सम्बन्धस्य वेतसावकस्याप्सुजो वेतस इत्यप्सम्बन्धमात्रकीर्त्तनादेवापो वै शान्ता इत्यर्थवादप्रतिपाद्या स्तुतिः सिद्ध्यति । अन्येषां त्वप्रसिद्धाप्सम्बन्धानामश्वादीनां वस्तुतोऽसन्नप्यप्सम्बन्धः प्राशस्त्यज्ञानार्थं कीर्त्यते । कीदृशं प्राशस्त्यमित्यपेक्षिते प्रसिद्धेत्याद्युक्तम् । प्रसिद्धः शान्तत्वेन सह सम्बन्धो यासामपां तास्तथोक्ता इति व्याख्येयम् ।

भाष्यमेवं योज्यम् । अश्वस्यावकानां चेति चकारेण वेतसग्रहणम् । तत्राश्वविषये अश्वस्य वेतसस्य च शमयित्रीभिरद्भिश्शान्ताभिरेवास्य शुचं शमयतीति सहयोगतृतीयान्तपदनिर्दिष्टाभिः सह सम्बन्धोऽस्य शब्दनिर्दिष्टस्य यजमानस्य शुक्शब्दवाच्यं कष्टं शमयतीत्यर्थः । अवकाविषयत्वेऽवकानां वेतसस्य चाद्भिः सम्बन्ध इत्यर्थः ।

स्वयमुदाहृतेष्वर्थवादान्तरेषु स्तुतिस्वरूपमाह—एवमिति । तत्सामान्यादिति सूत्रावयवव्याख्यानार्थं तथोतभाष्यं व्याचष्टे—इति स्तुतित्वे इति । अनेन यावत्स्वर्थवादेषु अप्सु योन्याद्यर्थवादसमानप्रकारत्वम्, तावत्सु स्तुतित्वमिति व्याख्यातम् ॥ २३ ॥

भा० प्र०—पूर्वपक्षी के कथन का अभिप्राय यह है कि स्वतन्त्र रूप में अर्थवाद प्रमाण नहीं हो सकते हैं, उनके प्रमाण्य की स्थापना के लिए ही वाक्यार्थ में लक्षणा मानकर विधिवाक्य के साथ एक वाक्यता माननी पड़ती है । किन्तु, अर्थवाद को विधि के अर्थ

का प्रकाशक मानने पर इस प्रकार की क्लिष्ट अर्थ की कल्पना करने की आवश्यकता नहीं है, इसके समाधान में सिद्धान्ती का कथन है कि सर्वत्र अर्थवाद को विध्यर्थक मानने पर प्रदर्शित सिद्धान्त की स्थापना हो सकती है। किन्तु, अर्थवाद वाक्य को विधिरूप में परिणत नहीं किया जाता है। अनेक स्थलों में विधिरूप में अर्थवाद को परिणत करने पर विभिन्न दोषों की आपत्ति होती है। किन्तु, अर्थवाद को विधिवाक्य के स्तावक के रूप में अन्वित करने पर किसी प्रकार के दोष की आपत्ति नहीं होती है और एक ही तरह के नियम को मानने से काम चल जाता है। इसलिए, विधि के स्तावक रूप में ही अन्वय स्वीकार अर्थवाद का प्रामाण्य प्रदर्शन उचित है। अर्थवाद को विधिरूप में परिणत करने पर "अप्सु योनिर्वा अश्वः अप्सु योनिर्वेतसः" (तै० सं० ५।३।१२) इस स्थल मे अश्व को जल से उत्पन्न एवं वेतस को जल से उत्पन्न नहीं कहा जा सकता है, अतः, ये अर्थवाद विधि नहीं हो सकते हैं। "वायुर्वै क्षेपिष्ठा देवता" इस अर्थवाद को विधि के रूप में परिणत नहीं किया जा सकता है, क्योंकि, शीघ्रगामित्व वायु का स्वभाव है। इसी प्रकार "स्तेनं मनः अनृतवादिनी वाक्"। इस अर्थवाद को विधि मानने पर स्तेय एवं अनृत भाषण कर्तव्य है यह विरुद्ध अर्थ सिद्ध होगा। इसी तरह 'ऊर्ग् वा उदुम्बरः' इत्यादि अर्थवाद को विधिरूप में परिणत करने पर उपस्थित दोषों का इस अधिकरण के सूत्रों की व्याख्या में प्रदर्शित किया है। विधि के स्तावक रूप में अर्थवादों का अन्वय मानने पर लक्षणा छोड़कर दूसरा उपाय भी नहीं है और एक रूपता नहीं हो सकती है। अतः, जिस स्थल में अर्थवाद की ज्ञाप्य फल या स्तुति अनर्थक है; उस स्थल में अर्थवाद को विधिरूप में परिणत नहीं किया जा सकता है। "प्रति तिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यादि अर्थवाद ही इसका उदाहरण है। जै० सू० ४।३।१७–१९ में इसजा विश्लेषण प्रस्तुत किया है।

'विधिः' = विधि, 'च' = और, 'अनर्थकः' अनर्थक (है), 'क्वचित्" = किसी स्थल में, 'तस्मात्' = इस कारण से। 'स्तुतिः—प्रशंसा के रूप में अर्थवाद, 'प्रतीयते' = प्रतीत होता है, "तत्सामान्यात्" = उसके समान "इतरेषु" = अन्य स्थलों में भी, तथात्वम्' = वैसा, प्रशंसात्मक अर्थवाद होगा। क्योंकि, किसी किसी स्थल में अर्थवाद को विधि मानने पर वह विफल होगा, इसलिए अर्थवाद को स्तुतिपरक मानना उचित है। अतः, उसी के समान अन्य स्थलों में भी अर्थवाद को विधि मानना उचित नहीं है, वरन् स्तुति के रूप में ही अर्थवाद को मानना उचित है ॥ २३ ॥

**प्रकरणे सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ १.२.२४ ॥**

**शा० भा०—**इतश्च पश्यामः स्तुतिरिति। कुतः? इदं समामनन्ति यो विदग्धः स नैर्ऋतो, योऽशृतः, स रौद्रो, यः शृतः, स दैवतः, तस्मादविदहता

**श्रपयितव्यः, स दैवतत्वायेति (तै०सं०२।६।३) इति। यदि स्तुतिर्दर्शपूर्णमासयोरेव शृतः स्ताविष्यते। तथा सम्भवन्नपकर्षो न कल्प्येत। अपकृष्यते इत्यपकर्षः। विधिपक्षे तु यत्र नैर्ऋतः, तत्र विदग्धता नीयेत। तथा सति प्रकरणं बाधितं भवेत्। दर्शपूर्णमासकर्म प्रति नैर्ऋताभावाद् विदग्धविधानमनर्थकं स्यात्। तस्मात्स्तुतिरेव ॥ २४ ॥**

भा० वि०—फलविधिसरूपाणामर्थवादत्वे हेत्वन्तरं दर्शयितुं **प्रकरणे चेति** सूत्रम्। तत्र चशब्दार्थमाह—**इतश्चेति**। न केवलमप्सु योन्याद्यर्थवादसामान्यादितरेषां स्तुतित्वं वाक्यान्तरसामान्यादपीत्यर्थः। किं तद्वाक्यान्तरमिति मन्वानः पृच्छति—**कुत इति**। वाक्यमुदाहरति—**इदमिति**। कथमस्य वाक्यस्य स्तुतित्वं येन तत्सामान्यादितरेषु तथात्वं स्यादित्याशङ्क्य प्रकरणे च सम्भवन्निति व्याचष्टे—यदीति। शृतः पुरोडाशादिः स्ताविष्यते, स्तुतो भविष्यति प्रकरणनिवेशाय स्तुतित्वाश्रयणं युक्तमिति भावः।

ननु माभून्निवेशः पूषानुमन्त्रणमन्त्रवदुत्कृष्यतामत आह—**तथेति**। प्रकरणविनिवेशितया सम्भवनित्यर्थः, नन्वयमपकृष्यमाणः कल्प्यतेऽर्थवादः नापकर्षस्तत्राह—**अपकृष्यत इति**।

ननु विधित्वेऽप्यनपकृष्यमाणोऽस्त्वित्याशङ्क्य, तत्र किं यथाश्रुतैव वचनव्यक्तिः यो विशेषेण दग्धः स निर्ऋतिदेवनाकः कार्य इति, किं वा यो नैर्ऋतस्स विशेषेण दह्य इति व्यत्ययेन। तत्राद्ये कल्पेऽनेन दर्शपूर्णमासप्रकरणगतेन विध्युद्देशेन देवतान्तरविधानात् उत्पत्तिवाक्यशिष्टाग्न्यादिदेवतापकर्षणं स्यात्, तच्च सम्भवत्प्रसजदपकर्षणं सति गत्यन्तरे न कल्पनीयमिति सूत्रयोजनया दूषणं वक्तव्यमिति मत्वा द्वितीये दोषमाह—**विधीति**। नयने दोषमाह—**तथेति**।

ननु किमिति नीयते येन प्रकरणाम्नानविरोध इत्याशङ्क्य विध्यानर्थक्यमित्यादि सूत्रावयवं व्याचष्टे—दर्शेति। सूत्रे तमिति प्रकरणिनोऽर्थस्थस्य परामर्शः दर्शपूर्णमासयोर्निर्ऋतिदेवताभावान्नैर्ऋतानुवादेन विदग्धताविधानमनर्थकमित्यर्थः, तेन प्रकरणे निवेशाय विदग्धवाक्यस्य स्तुतित्वे फलविधिसरूपाणामपि तथैव स्तुतित्वमिति मत्वोपसंहरति—तस्मादिति ॥ २४ ॥

त० वा०—विधिपक्षे चायमपरो दोषो यदि तावद्यथावस्थितवाक्यग्रहणं ततः प्रकरणगतविदग्धोद्देशेन देवतान्तरविधानादुत्पत्तिवाक्यशिष्टदेवतापकर्षणं स्यात्, इयं वा तामप्यपकर्षतीत्यपकर्षः। तत्र नैमित्तिकत्वादभ्युदितेष्टिवद्बाधोऽपि कल्प्येत, यदन्यथा न सम्भवेत्, सति तु सम्भवे न युक्तमेतत्। अथैतद्दोषभीतैरर्थलभ्यवचनव्यक्त्यन्तरं व्यवहितकल्पनयाऽऽश्रीयेत यो नैर्ऋतः स विदग्धः कर्तव्य इति। ततः प्रकरणे नैर्ऋताभावाद्यत्रासौ विहितस्तत्र विदग्धता नीयेत। तत्र प्रकरणं बाध्येत। न चाबाधसंभवे तद्युक्तम् अतोऽर्थवादत्वादनपकर्ष इति ॥ २४ ॥

न्या० सु०—सूत्रतात्पर्यमाह—**विधिपक्षे चेति**। स्वयं यथाश्रुतवचनव्यक्तिपक्षे सूत्रं योजयति—**यदीति**। अपकर्षणं स्यादित्यर्थकथनमात्रम्। **व्युत्पत्तिस्तु यथाभाष्यं कर्मण्येव**।

यद्वेयमन्यां देवतामुत्पत्तिशिष्टामपकर्षतीति कर्तृव्युत्पन्नोऽपकर्षशब्द इत्याह—**इयं वेति**। ननु विदाहादेर्निमित्तकत्वेन निर्ऋत्यादेर्देवतान्तरस्य नित्याग्न्यादिदेवताबाधकत्वं युक्तमेवेत्याशङ्कानिराकरणार्थत्वेन प्रकरणे च सम्भवन्निति सूत्रावयवं व्याचष्टे—**तत्रेति**।

**अभ्युदितेष्टिवदिति**। यदाऽमावास्याभ्रान्त्या चतुर्दश्यामन्वाधानं क्रियते, तदामावास्यायामुषसि तन्त्रप्रक्रमविधानात्प्रक्रान्ते तन्त्रे चन्द्रोदये सति 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः, तानग्नये दात्रे पुरोडाशमष्टाकपालन्निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दध्नँश्चरुं, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रृते चरुमिति। तण्डुलग्रहणोपलक्षितानां सर्वेषामोषधि-दधिपयसां प्राकृतानां हविषां प्राकृताभ्यो देवताभ्यो विभजेदित्यनेनापनये विहिते, तस्मिन्नेव प्रक्रान्तेऽसमाप्ते कर्मणि मध्यमादिवाक्यैर्दात्रादिदेवतान्तरविधिरिति षष्ठे वक्ष्यते। साभ्युदयेष्टिः। अभ्युदितश्चन्द्रमा यस्यामिष्टौ साभ्युदितेष्टिरिति व्युत्पाद्याऽमावास्येष्टिरेवोच्यते। यद्यपि विभजेदित्यपनयनविधिना तत्र प्रकृतिगताग्न्यादिदेवताबाधो न देवतान्तरविधिना, तथापि नित्यदेवतादिबाधेन नैमित्तिकदेवतान्तरविधिसाम्यात् दृष्टान्तता।

भाष्यकृता तु यत्र नैर्ऋतः, तत्र विदग्धता नीयेतेति वदता यत्तदोर्व्यत्ययः कृतस्तत्स्वाभिप्रायं व्याचष्टे—**अथेति**। विध्यानर्थक्यं हीति सूत्रावयवव्याख्यानार्थं दर्शपूर्णमासकर्मेतिभाष्यं स्पष्टत्वान्न व्याख्यातम्। सूत्रं चैवं पूर्वसूत्राद्विधिः क्वचिदितिपदद्वयमनुकृष्य यथाभाष्यं योज्यम्। विधिः सन् क्वचिद्विदग्धादावप्रकर्षः कल्प्येत। न चैतद्युक्तम्। कस्मान्न युक्तमित्यपेक्षिते, प्रकरणे च सम्भवन्निति हेतुगर्भं विशेषणम्। विध्यानर्थक्यं हि तं कर्मशेषं प्रतीत्यपकर्षकारणमुक्तम्। यथावार्त्तिकं तु कर्तृव्युत्पत्तिपक्षे क्वचिन्नैर्ऋतादावपकर्षः कल्प्येत विध्यानर्थक्यं हि तमाग्नेयादिपुरोडाशं प्रतीत्येतावान्विशेषः। कर्म्मव्युत्पत्तौ त्वग्न्यादिरुत्पत्तिशिष्टेऽपकृष्टः कल्प्येत निर्ऋत्यादिविध्यानर्थक्यं हि तमनपकृष्टः स्वदेवताकं पुरोडाशं प्रतीति ॥ २४ ॥

भा० प्र०—इस सूत्र के द्वारा अर्थवाद विधि नहीं हो सकता है—इस विषय में अन्य कारणों का भी निर्देश किया गया है। दर्शपूर्णमास प्रकरण में "यो विदग्धः स नैर्ऋतो योऽश्रृतः स रौद्रो यः श्रृतः स दैवतः। तस्माद् विदहता श्रपरितव्यं सदैवतत्वाय" (तै० सं० २।६।३) जो विशेष रूप से दग्ध (पक्व) वह निर्ऋतिका=राक्षस का योग्य है, जो अशृत=अपक्व वह रौद्र=रुद्र देवता का, जो शृत अर्थात् पक्व=अच्छी तरह पकाया गया है वह दैवत=प्रकरण से प्राप्त देवता का है। अतएव विशेष रूप से दग्ध न कर पाक करना उचित है इस प्रकार का एक वाक्य है। इस वाक्य को अर्थवाद मानने पर ही इस का दर्शपूर्णमास प्रकरण में पठित होना सार्थक होगा। क्योंकि इसके द्वारा

अच्छी तरह पुरोडाश के पाक करने की प्रशंसा कथित होती है। फलतः, प्रकरण का सम्बन्ध अक्षुण्ण रहता है। किन्तु इसको विधि मानने पर दर्शपूर्णमास प्रकरण में इसका कोई भी सम्बन्ध नहीं रहेगा, क्योंकि, विधि "नैर्ऋतो विग्दधः कर्तव्यः" यही इसका याग स्वरूप मानना पड़ेगा, किन्तु दर्शपूर्णमास प्रकरण में निर्ऋत याग का उपदेश नहीं है। प्रकरण के सम्बन्ध की रक्षा की ओर दृष्टि रखने पर इसको अन्यथा करना सम्भव नहीं है, अर्थवाद को विधि मानने में यह भी दोष है।

'प्रकरणे'=दर्शपूर्णमास आदि प्रकरण में, 'सम्भवम्' = अन्वय सम्भव होने पर, 'अपकर्षः'=प्रकरण से विच्युति, 'न कल्प्येत'=कल्पना करना उचित नहीं है; "धिानर्थक्य"=विधि की व्यर्थता 'हि'=क्योंकि, "तं प्रति"=प्रकरण सम्बन्ध के पक्ष में, जो प्रकरण में अन्वित हो सकता है उसका अपकर्ष अर्थात् प्रकरण से विच्युति करना उचित नहीं है। प्रकरण का सम्बन्ध अक्षुण्ण रखने पर विधि मानना व्यर्थ है ॥ २४ ॥

## विधौ च वाक्यभेदः स्यात् ॥ १.२.२५ ॥

**शा० भा०—औदुम्बरो यूपो भवतीति विधावेतस्मिन्नाश्रीयमाणे ऊर्जोऽवरुद्ध्या इत्येतस्मिश्च वाक्यं भिद्येत। इत्थमौदुम्बरो यूपः प्रशस्तः, स चोर्जोऽवरुद्ध्या इति। तस्माद् विधिवन्निगदानामपि स्तुतिरेव कार्यमर्थवादानामिति ॥ २५ ॥**

भा० वि०—एवं फलविधित्वनिराकरणेन स्तुतित्वमुक्त्वा विधित्वे दोषान्तरमाह—**विधौ वेति सूत्रं व्याचष्टे—औदुम्बर इति**। एतस्मिंश्च विधावाश्रीयमाण इत्यनुषङ्गः वाक्यभेदमभिनयति—**इत्थमिति**। औदुम्बरो यूपो भवतीत्यस्यैव तावद्वर्तमानापदेशत्वसन्देहान्न विनार्थवादं पञ्चमलकारत्वेन विधित्वावसाय इति प्रथमं तावदर्थवादतया सम्बन्धनीयमूर्जोऽवरुध्या इत्यन्तेन, पुनश्च तस्यैवोर्जोवरुध्यै यूपः कार्य इति विध्यन्तर्भावे वाक्यभेदः स्यादित्यर्थः; अधिकरणार्थमुपसंहरति—**तस्मादिति**। वायुर्वेत्यादिसमुच्चयार्थोऽपि शब्दः ॥ २५ ॥

त० वा०—स्तुतित्वेन विधिविभक्तिमुपजनय्य पुनस्तेनैव फलकल्पनायां वाक्यभेदः तस्मादर्थवाद एवेति ॥ २५ ॥

(इति विधिवन्निगदाधिकरणम् ॥ २ ॥)

न्या० सु०—औदुम्बर इत्यादिभाष्यादौदुम्बरो यूपो भवतीत्यस्यापि प्राशस्त्यपरत्वं प्रतिभाति। तच्चायुक्तम्। विध्येकवाक्यत्वं विनार्थवादत्वायोगात्। सोमापौष्णविध्येकवाक्यत्वाभ्युपगमे त्वौदुम्बरो यूपः प्रशस्त इतिभाष्यानुपपत्तिप्रसङ्गादित्याशङ्क्याह—

**स्तुतित्वेनेति** । न स्तुत्यर्थत्वेनेदमुपन्यस्तम्, किन्तु स्तुत्यन्वयवशेनास्मिन्वर्त्तमानापदेश-सन्दिग्धे पञ्चमलकारत्वनिश्चयात् विधावाश्रीयमाण इति स्तुतिनिश्चयेन विधित्वप्रतिपादनार्थमिति भावः—**उपजनय्येति** । निश्चाय्येत्यर्थः ॥ २५ ॥

**इति न्यायसुधायां द्वितीयमौदुम्बराधिकरणम् ।**

भा० प्र०—'युक्तं तुवाक्यशेषत्वम्' इस सूत्र में कहा गया है कि वाक्य को विधि मानने के लिए प्रथमतः इसको स्तुति अर्थात् अर्थवाद के रूप में इसको मानना होगा। 'वै' आदि वाक्य को स्तुति के द्वारा विधि मानने पर वाक्यभेद का प्रसङ्ग होगा। वेद में वाक्यभेद का परिहार ही समीचीन है। प्रकृत में 'ऊर्ग् वै' इत्यादि वाक्य को स्तुति के द्वारा अन्न रूप फल की विधि मानना उचित नहीं है, क्योंकि अन्न रूप फल की विधि के लिए उदुम्बरत्व की प्रशंसा की गई है और उदुम्बरत्व का फल भी विज्ञापित होता है—इस रूप में दो अर्थ मानने से वाक्यभेद होगा। इसलिए यह विधि नहीं है, किन्तु अर्थवाद है।

'विधौ'='ऊर्क् वै' इत्यादि वाक्य को विधि मानने पर, 'च'=और, 'वाक्यभेदः'= वाक्यभेद नामक दोष, "स्यात्"=होगा, यदि विचार कर वाक्य को विधि मानने पर वाक्यभेद दोष होगा।

इस प्रसङ्ग में 'वाक्यभेद' दोष की अवगति करना आवश्यक है। अपौरुषेय वेद वाक्य में वाक्यभेद एक दोष है। एक बार पठित वाक्य की आवृत्ति कर अनेक अर्थ ग्रहण करना वाक्यभेद है। यह सत्य है कि पौरुषेय वाक्य में वाक्यभेद दोषावह नहीं है। क्योंकि, अभिप्राय के अनुसार ही एक वाक्य के अनेक अर्थ की कल्पना की जा सकती है। आकार इङ्गित और प्रमाणान्तर की सहायता से मनुष्य के अभिप्राय की अवगति होती है। इन स्थलों में वक्ता के अभिप्राय के अनुसार एक वाक्य के अनेक अर्थ की कल्पना दोषावह नहीं है। इसीलिए, श्लेषालङ्कार का प्रामाण्य रक्षित होता है। किन्तु, वेद अपौरुषेय है, उसका कोई स्वतन्त्र वक्ता नहीं है और स्वतन्त्र वक्ता न होने से वेद में वक्ता के अभिप्राय के होने की सम्भावना ही नहीं है। वक्ता का अभिप्राय ही तात्पर्य है, अतः, इस तात्पर्य लक्षण के अव्याप्ति-दोषदुष्ट होने से मीमांसक मत में तत्प्रतीत गयोऽयत्व ही तात्पर्य है यह माना है। अनेक अर्थ मानने पर एक अर्थ को पौरुषेय मानना होगा और पौरुषेय वाक्य वेदवाक्य न होने से उसका अप्रामाण्य भी अनिवार्य है। 'ग्रहं समार्ष्टि' इस वाक्य में ग्रह=यज्ञीयपात्र विशेष का सम्मार्जन विहित है, किन्तु उसका एकत्व और अनेकत्व अविवक्षित है। क्योंकि ग्रह का मार्जन एवं ग्रह का एकत्व एक प्रयत्न से एक वाक्य के द्वारा विहित नहीं हो सकता है, क्योंकि ग्रह के एकत्व की विवक्षा करने पर "ग्रहं सम्मार्ष्टिः तं च एकम्" इस प्रकार दो वाक्य होगा और द्वितीय वाक्य पौरुषेय अर्थात् पुरुषकृत आवृत्ति के द्वारा कथित होने से प्रमाण नहीं है। इसलिए

भामती की टीका कल्पतरु में कहा है कि—"अपौरुषेयी श्रुतिः पौरुषेयीमावृत्तिं न सहते" अर्थात् अपौरुषेय वेद पुरुषकृत आवृत्ति का सहन नहीं करता है। अर्थात् आत्मीय रूप में उसका सहन नहीं हो सकता है। इसीलिए वेद वाक्य अर्थ "यावद्वचन" जितने पद हैं, उन कतिपय पदों से जो अर्थ होता है; वही ग्राह्य है और अध्याहार आदि के द्वारा अन्य अर्थ करना सर्वथा असङ्गत है। क्योंकि वह अध्याहृत अर्थ पौरुषेय होगा। किन्तु जहाँ कोई उपाय नहीं है, वहाँ वेद में भी अगत्या वाक्यभेद मानना ही पड़ता है, इसलिए उपायान्तर के सम्भव होने पर वाक्यभेद अवश्य ही परिहार्य है ॥ २५ ॥

## [ ३ ] हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ १.२.२६ ॥

**शा० भा०—अथ ये हेतुवन्निगदाः 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियत (तै०ब्रा० १।६।५) इत्येवमादयः, तेषु सन्देहः—किं स्तुतिस्तेषां कार्यमुत हेतुरिति। किं प्राप्तम्? हेतुः स्यादन्नकरणं होमस्य।**

**नन्वप्रसिद्धे कार्यकारणभावे न हेत्वपदेशः। सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे। शूर्पेण होमे कर्तव्येऽन्नकरणं हेतुरित्युपदिश्यते। किं प्रयोजनम्? अन्यदपि दर्विपिठरादि अन्नकरणं यत्, तेनापि नाम कथं होमः क्रियेतेति। कुतः? तस्याप्यन्नक्रियायामर्थवत्ता। शक्यते च तेनाप्यन्नं कर्तुम्। एतद्धि क्रियत इत्युच्यते। न हि वर्तमानकालः कश्चिदस्ति, यस्यायं प्रतिनिर्देशः। हेतौ च श्रुतिः, स्तुतौ लक्षणा। यदि च दर्विपिठरादि न साक्षादन्नं करोतीति, नान्नकरणमित्युच्यते। व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात्। शूर्पमपि हि न साक्षादन्नं करोतीति, तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ॥ २६ ॥**

भा० वि० अधिकरणस्य विषयमाह —**अथेति**। श्रेयस्साधनत्वप्रतिपादकविधिविभक्त्यभावेन विधित्वाभावेऽपि हिशब्दादिभिः हेतुत्वं भविष्यतीति पूर्वाधिकरणसिद्धान्तहेतुप्रत्युदाहरणेनात्र पूर्वपक्षोत्थानादस्य तत्सङ्गतिरिति प्रकृतापेक्षित्ववाचिनाथशब्देन सूचितं ये हेतुवन्निगद्यन्ते, ननु 'चतुर्गृहीतान्याज्यानि भवन्ति, नह्यत्रानुयाजा इज्यन्ते' इतिवत् परमार्थहेतवः, ते हेतुवन्निगदास्तेनेति तृतीयया शूर्पकरणमुच्यते करणमात्रं वेत्यपि निगमात् संशयमाह—**तेष्विति**। विमर्शपूर्वकं हेतुरिति पूर्वपक्षप्रतिज्ञां व्याचष्टे —**किमित्यादिना**। होमस्य=होमसम्बन्धस्येत्यर्थः। अत्र च पूर्वाधिकरण-पूर्वपक्षसूत्रात् अपूर्वत्वादिति हेत्वाकर्षार्थंस्सौत्रो वा शब्दः, स च भाष्यकृता स्यादित्यनेनैव व्याख्यातः। यद्यपि शूर्पेण जुहोतीति वर्तमानापदेशस्यार्थवादविधुरस्य विधायकत्वात् अर्थवादतयोपयुक्तस्य तेन हीत्यादेः पूर्वाधिकरणन्यायेन वाक्यभेदेन पुनर्हेतुविधित्वासंभवादविहिते शूर्पहोमसम्बन्धे निर्विषयस्य हेतुविधानस्यासम्भवः तथापि होमकर्तव्यताया

वाक्यान्तरसिद्धत्वाच्छूर्पहोमसम्बन्धस्य च शूर्पेणेत्यस्मादवगतेः अनुष्ठानस्य च प्रयोगविधिना सिद्धेर्विध्यभावान्नार्थवादत्वम्, नाप्यानर्थक्यम्, तेन ह्यन्नमिति शूर्पहोमसम्बन्धे अन्नकरणत्वरूपहेत्वपदेशान्यथानुपपत्त्या यद्यदन्नकरणं तेन तेन होतव्यमिति विधिवाक्यानुमापकत्वात् अरयेति भावः ॥ २६ ॥

त० वा०—इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिः न च परमार्थहेतवः, त उदाहरणम् । तत्र यदि तावद्धेतुत्वं विधीयते, ततः पूर्वेणैव गतम् । यदिह हेतुत्वं तच्छूर्पहोमसम्बन्धं प्रति, न चाविहितोऽसावस्तीति, कस्य हेतुरुच्यते ? अथ भूतानुवादमात्रम्, तत्तु वायुक्षेपिष्ठत्ववद्गतमित्यनारब्धव्यमेतत् । उच्यते । न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रम्, किं तर्हि, हेतोः प्रसिद्धिपूर्वकत्वात्सिद्धवदुपदिष्टस्य यावत्यसिद्धयाशङ्का, तत्रार्थापत्तिलभ्याद्वचनात्सिद्धिः । याऽपि चार्थवादाकाङ्क्षा कस्मादिति ? साऽप्यनेनैव हेतुना निवर्त्यत इति मन्यते । अथाप्यर्थवादत्वम्, तथाऽपि तदन्तर्निर्णीतहेतुत्वमेवेति, सर्वान्नकरणविषयं विज्ञायते । ततश्च हेतुरप्यस्त्विति पूर्वः पक्षः । सम्बन्धस्य च विधेयत्वात्तद्गतमेव हेतुत्वं होमस्येति वदति—**नन्वप्रसिद्धे कार्यकारणभाव इति** । केचिदाहुः । कार्यकारणयोरेवानुमानम् । तथा च दध्नेन्द्रियकामस्येत्यत्रापि वक्ष्यति । तत्त्वयुक्तम् । अकार्यकारणभूतानामपि कृत्तिकादीनामचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते ।

ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम् । सत्यम् । अन्यस्मिन्नेव तु सम्बन्धे सति पाश्चात्प्रसिद्धयन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति । यद्वा शक्त्यभिप्रायम् । ययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन साऽवधृता तत्रैव हेतुता ।

अथ वा उदाहृतविषयहेतुलक्षणमेतत् । अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः, तत्रान्नकरणता होमे हेतुत्वेनोच्यमाना सम्बन्धान्तराभावात्कारणत्वेन स्यात् । तच्चाप्रसिद्धं तस्मान्न हेत्वपदेशः सत्यम् । लोके हेतुव्यवहारकालात्प्रथमं प्रमाणान्तरेण सम्बन्धप्रसिद्धिरपेक्ष्यते । वेदे तु हिशब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या सम्बन्धाभिधायि दृष्टान्तवचनं कल्प्येत-यद्यदन्नकरणम्, तेन तेन जुहोतीति, तेन चोपपन्नं हेतुत्वम् । **किं प्रयोजनमिति** । यदि च हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण । अपरस्त्वाह—व्याप्तौ सिद्धायां सर्वान्नसाधनसाधनको होमः सिद्धो भवति । **कुत इति** । स एव सिद्धान्ताभिप्रायः ।

**अथ वा कुतो** दर्विपिठरादेः साधकतमत्वम् । इतरस्त्वाह—अन्नक्रियायां तावत्तस्यार्थवत्ताऽस्ति, तावन्मात्रं वाश्रयिष्यते । **शक्यते च तेनापीति** । उपपत्ति-

शब्दस्यार्थः । पूर्वेण तु समानार्थता गम्यते । तेन विवक्षा । शक्त्यभिप्रायमेतत् । यदेव हि तदुपयोगिमात्रम्, तदेव शक्यते कथञ्चित्साधकतमत्वेन विवक्षितुम् ।

अथवाऽर्थवत्त्वं करणविभक्तिनिर्देशालम्बनमुपपत्त्या पुनर्वर्तमानान्नक्रियस्य हेतुत्वाभिधानात्तादृशस्य होमं प्रत्यनुपपत्त्याशङ्क्योपपत्ति वदति—शक्यते च तेनेति । तत्र चोदयति । एतद्धि क्रियत इत्युच्यते । तत्कथं शक्यत इत्यभिधीयते । वर्तमानक्रियस्यासम्भवादित्युत्तरम् । यद्वा स्वयमेवाऽऽशङ्क्य परिहरति—यदि च न दर्विपिठरादीति । उभयोः परामर्शः । साधकतमत्व-वर्तमानत्वे चेत्तत्र न विद्येते, शूर्पेऽपि तथैवेति स्तुतिर्न स्यात् । तेन यथा तव स्तुत्यर्थः, कथञ्चिद्विद्यते तथा मम हेत्वर्थ इत्यविशेषः । हेतौ च श्रुतिरित्यादि असम्बद्धवाक्यसम्बन्धिदोषादन्ते द्रष्टव्यम् । स्तुतौ लक्षणेति । अन्नकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते । शूर्पेणेति चास्मिन्पक्षे नित्यानुवादोऽन्नकरणसामान्येनैव प्राप्तस्य ।

इत्थं वा सूत्रगमनिका । तत्रार्थवादात्प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धं सम्बन्धोऽपि, काल्पनिकवाक्याश्रयणात् । तस्माद्धेतुः ॥ २६ ॥

### अथ तृतीयं हेतुवन्निगदाधिकरणम् ।

न्या० सु०—अधिकरणविषयप्रदर्शनार्थमथेति भाष्यं व्याचष्टे—इहेति । पूर्वप्रकृतापेक्षित्ववाच्यथशब्दप्रतिपादितपूर्वाधिकरणसङ्गतिसूचनार्थं हिशब्दादिभिरित्युक्तम् । पूर्वत्र श्रेयःसाधनत्वप्रतिपादकविधिशब्दाभावेनौदुम्बरो यूपो भवतीत्यादीनां विधित्वे निराकृते, तेन ह्यन्नं क्रियत इति हेतुत्वप्रतिपादकहिशब्दसद्भावेन हेतुत्वं भविष्यतीति पूर्वाधिकरणसिद्धान्तहेतुप्रत्युदाहरणरूपेणात्र पूर्वपक्षोत्थानात्सङ्गतिः । न च परमार्थहेतव इत्यनेन हेतुवदिति वतेर्व्यावर्त्यं दर्शितम् । 'चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानुयाजान् यक्ष्यन्भवती'त्यादयः—परमार्थहेतवः । आतिथ्येष्टावनुयाजाभावेऽपि अष्टावुपभृति गृह्णातीति प्रकृतौ विहितस्योपभृत्यष्टगृहीतस्य चोदकप्राप्तस्य निवृत्त्यर्थं चतुर्गृहीतत्वे विधीयमानेऽनुयाजाभावस्य हेतुत्वाभिधानात् यत्र यत्रानुयाजाभावः, तत्र तत्राष्टगृहीताभाव इति ज्ञायते । प्रकृतौ चाष्टग्रहणस्य चतुष्टद्वयलक्षणार्थत्वद्योतनात्प्रयाजार्थं जुह्वां समानयने नियोगतोऽर्द्धमेव समानेतव्यमिति ज्ञायते ।

हेतुः स्यादिति पूर्वपक्षभाष्यं हेतुविध्यभिप्रायम्, अनुवादाभिप्रायं वेति विकल्प्य विधिपक्षे तावदौदुम्बराधिकरणनिरस्तत्वादयुक्तमित्याक्षिपति—तत्रेति । यथा तत्र यदिह फलवचनम्, तदौदुम्बरस्य यूपस्येत्यादिना प्रत्यक्षस्य विधेरभावात्कल्प्यस्य च कार्यविशेषसम्बन्धित्वेनैव कल्पयितुं शक्यतया, कार्यान्तरं प्रत्यभावात्फलपरत्वे स्वरूपविधानाशक्तिप्रसक्तेः फलवचनानर्थक्यमुक्तम्, तथेहापि प्रत्यक्षविध्यभावात्कल्प्यस्य च हेतुपरत्वेऽन्नकरण-

मात्रस्य होमसाधनत्वविध्यनुमानेन शूर्पस्यापि प्राप्तिसम्भवाच्छूर्पहोमसम्बन्धविधानानुपपत्तेस्तत्र हेतुविध्यानर्थक्यम्। अन्नकरणमात्रस्य तु होमसम्बन्धं प्रति हेतुविधानमितरेतराश्रयापत्तेरनाशङ्क्यमेवेति शूर्पहोमसम्बन्धं प्रतीति काक्वा द्योतितम्। अनुवादपक्षे त्वानर्थक्येन पूर्वपक्षः प्रसज्येत। तत्त्वर्थवादाधिकरणे निरस्तमित्याह—अथेति। ततश्च पूर्वपक्षासम्भावनयाऽधिकरणारम्भो न युक्त इत्याह—इतीति।

समाधत्ते—उच्यत इति। अस्यार्थः—नानेन शूर्पस्य होमसाधनत्वमुद्दिश्य तत्रान्नकरणत्वस्य हेतुत्वविधिराशङ्क्यते। यः पूर्वन्यायेन निरस्येत। यच्चात्रान्नकरणहेतुकन्दर्व्यादिहोमसाधनत्वं विधेयमाशङ्क्यते, तन्न याच्छ्रुतेन विधीयते, येन गौरवापत्त्या निरस्येतेत्यनेनैवेत्येवकारेण सूचितम्। एतच्च केवलहेतुत्वेन पूर्वपक्षमङ्गीकृत्योच्यते।

यदा तु शूर्पेण जुहोतीति विधिमङ्गीकृत्य तेन ह्यन्नं क्रियत इत्यस्य तच्छेषत्वेनार्थवादत्वमभ्युपगम्य तदालम्बनसिद्धयर्थं हेतुविधिरपि दर्व्यादिप्राप्तिफलको भविष्यतीति, हेत्वर्थवादसमुच्चयेन पूर्वपक्षः क्रियते; तदा पूर्वन्यायनिरस्तत्वाशङ्कैव नास्तीति तावच्छब्देन सूचितम्। न चेत्यानर्थक्यपरिहारायोक्तम्। किं तर्ह्यस्य प्रयोजनमिति पृष्टे, सिद्धवदुपदिष्टस्य हेतुत्वस्य यावत्यन्वयांशे प्रसिद्धयाशङ्का, तन्नांशे अर्थापत्तिलभ्याद्वचनात्सिद्धिरित्युक्तम्। हेतोरन्वयकल्पकत्वोपपादनाय प्रसिद्धिपूर्वकत्वादत्युक्तम्। न चात्र सिद्धवच्छब्दप्रयोगमात्रेण हेत्वनुवादाशङ्का। अप्राप्तानुवादायोगादुपदिष्टस्येति यस्य ते हेतुविधिरित्येतद्भाष्यव्याख्यायां च तव हेतुविधिर्वादित्वादित्यभ्युपेत्य वादे च यद्यपि हेतुविधानमिति स्पष्टम्। विधेयत्वाभिधानात् साधुशब्दाधिकरणे च व्याकरणस्यासन्देहप्रयोजनत्वनिराकरणावसरे तथा हेतुविधिर्हेत्वर्थवादो वेति हेत्वधिकरणविचार्यं स्वयमेव दर्शयिष्यति। अज्ञातज्ञाप्यत्वरूपस्य चात्र विधेयत्वस्यानुष्ठाप्यरूपविधेयत्वाभावप्रतिपादनार्थेन सिद्धवच्छब्देनाभिप्रेतत्वान्नाव्यापारत्वे हेतुत्वस्याविधेयत्वं वाच्यम्। गौरवं तु कल्पकपदसहितैः श्रुतैः पदैर्हेतुविधिपूर्वकं तदन्यथानुपपत्त्याऽन्वयकल्पनाभिधानात्परिहृतम्।

ननु सर्वस्य विधिपरत्वेऽर्थवादाभावाद्विधिरवसीदेदत आह—यापि चेति। कस्मादेतत्कर्त्तव्यमित्याशङ्कायामर्थवादाः सम्बन्ध्यन्ते। सा चात्र हेतुनैव पूरितेति भावः। यद्यपि कथं भावापेक्षयाऽर्थवादाः संबन्ध्यन्ते, तथापि कर्त्तव्यमित्युक्ते कस्मादिति या पुरुषस्यापेक्षा जायते, सेह हेतुपूरणार्थत्वाय दर्शिता। यद्यपि चेयं प्राशस्त्यविषयापेक्षा, तथापि सादृश्यादुभयविषयत्वभ्रमः पूर्वपक्षिण इति मन्यत इत्यनेन सूचितम्।

यद्वा हेत्वर्थवादसमुच्चयेनायं पूर्वपक्षो न केवलहेतुत्वेनेत्याह—अथापीति। तदर्थवादत्वमन्तर्निर्णीतं हेतुत्वमस्मिन्नित्यर्थः। भवतु तर्हि तेन ह्यन्नमित्यर्थवादः। तदुन्मीलितः शूर्पेण जुहोतीति विधिः, तथापि तेनेत्यर्थवादानुसाराद्दर्व्यादीनामपि शूर्पतुल्यता, न तु व्यावृत्तिः। अत एव शूर्पशब्देन लक्षणयान्नकरणेन जुहोतीति विधीयते। अस्मिन्नर्थवादे सालम्बनत्वाय हेतुत्वेनाप्युपयोग इति, हेतुरपीत्यपिशब्देन समुच्चयो दर्शितः। होमस्या-

विधेयत्वेन हेत्वनाकाङ्क्षत्वात्तं प्रति हेतुविधानमयुक्तमाशङ्क्य, होमशब्दस्य सम्बन्धलक्षणार्थत्वमाह—**सम्बन्धस्य चेति**।

नन्विति भाष्यस्य परेषां व्याख्यानं दूषयितुमुपन्यस्यति—**नन्विति**। अन्यत्राप्येवमेवोक्त्या भाष्यकृत्सम्मतिं प्रकटयति—**तथा चेति**। यद्धि यस्य कारणभूतं दृष्टम्, सिद्धे तच्चेत्साध्येऽपि[1] कारणभूतमवगतं भवेत्, तत्तस्य साधनमिति भाष्ये वक्ष्यते दूषयति—**तत्त्विति**।

स्वयं त्रेधा व्याचष्टे—**अत इति**। क्रियासामान्यवाचिना करोतिना ज्ञानाख्यक्रियाविशेषो लक्ष्यत इति भावः। शङ्कते—**नन्विति**। अङ्गभूतनियमरूपसम्बन्धोपलक्षणत्वेनायमुपन्यस्तः, नाङ्गत्वेनेति परिहरति—**सत्यमिति**। अनुमाने व्यवह्रियते—**अनेनेति**। नियमोऽनुमानव्यवहारशब्देनोक्तः।

एवं तु लक्षितलक्षणाप्रसङ्गाद् गम्यगमकलक्षणार्थाभ्यां कार्यकारणशब्दाभ्यां परेण भावप्रत्ययेन कृत्तद्धितसमासेषु भावप्रत्ययेन सम्बन्धाभिधानमितिस्मरणात्, गम्यगमकसम्बन्धाभिधानाद् गम्यगमकयोश्च नियमलक्षणस्य सम्बन्धस्य शक्तिरूपत्वात्तत्प्रतिपादनार्थंतदुक्तमिति पूर्वापरितोषाद्व्याख्यानान्तरमाह—**यद्वेति**। ननु शक्तिनिरपेक्षस्य हेतोर्व्याप्तिमात्रेण गमकत्वात्तत्प्रतिपादनं व्यर्थमत आह—**ययोरेव हीति**। ययोरेव सा शक्तिरवधृता, तत्रैव तयोरेव मध्ये एकस्येतरत्प्रति हेतुता। तत्रेति निर्द्धारणे सप्तमीद्विवचनं गमकस्य चाधारत्वम्, गम्यस्य च विषयत्वम्, गम्यविषयागमकाधारेत्यर्थः। कीदृशी शक्तिरित्यपेक्षिते गम्यगमकसामर्थ्यात्मिनेत्युक्तम्। तृतीयेत्थंभूतलक्षणे गम्यगमकसामर्थ्यरूपेत्यर्थः। तस्याः प्रतिपत्त्युत्तरकालत्वेनानङ्गत्वमाशङ्क्य[2]—**व्याप्तिग्रहणकाल** इत्युक्तम्। कार्यावसेयत्वाच्छक्तेः कथं ततः प्रागवधारणमित्याशङ्क्य, कार्यकारणभावित्वेनेत्युक्तम्। अयमाशयः—नियमलक्षणः सम्बन्धोऽनुमानाङ्गम्। न चासावविनाभावमात्रेण भवति सत्यप्यविनाभावे हिंसात्वाधर्म्मसाधनत्वयोर्नियम्यनियामकत्वाभावात् किं त्वाक्षेप्याक्षेपकभावेन यद्यस्मिन्सत्यनेनावश्यं भवितव्यमिति यदाक्षेपकशक्तत्वेनावसीयते, तदेव तेन नियन्तुं शक्यते स्वरूपप्रयुक्तं हि साहित्यं नियमः, प्रयोजकत्वं चाक्षेपकत्वम्। एतच्च विस्तरेणाचार्यैरनुमानवादेऽभिहितम्।

'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्म्मः प्रयोजकः।
अस्मिन्सत्यमुना भाव्यमिति शक्त्या निरूप्यते॥
तस्माद्य एव यस्यार्थो नियतो ऽदृष्टशक्तितः।
स एव गमकस्तस्य न प्रसङ्गान्वितो ऽपि यः॥
साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः।

श्लो० अनु० परि० सं० १४,२३,११०; इतिच।

---

१. यद्धि वह्न्यादिः यस्य धूमादेः सिद्धे महानसे साध्येऽपि पक्षेऽपीत्यर्थः।
२. प्रतीत्युत्तरेति २ पु० पा०।

सा चाक्षेपशक्तिर्व्याप्तिग्रहणकाल एवावधार्यते—तथा हि । धूमस्याग्निसाहित्यं नित्यं दृश्यते, तस्य धूमस्वरूपप्रयुक्तत्वाभावे नित्यत्वायोगादर्थापत्त्या धूमस्वरूपस्य प्रयोजकत्वम्, कल्प्यते । तत्र धूमत्वश्यामत्वोर्द्धगत्याद्यनेकसम्पाते धूमत्वमेवप्रयोजकम्, नान्यदिति व्यवस्था शक्त्या विनानुपपद्यमाना शक्ति कल्पयति । अतोऽनुमानाङ्गभूतनियमलक्षणसंबन्धसिद्धयर्थेयं शक्तिः न गम्यगमकभावसिद्ध्यर्था, येन तदुत्तरकालावसेया स्यात् । सत्यां तु शक्तौ, नियमवच्च तेन गम्यगमकभवो भविष्यतीति भाविनीं गम्यगमकतामालोच्य गम्यगमकशक्तिरित्युच्यते । तदेव कार्यकारणभावित्वेनेति भविष्यत्कालवाचिगम्यादिपठितभाविशब्दप्रयोगेण दर्शितम् । कार्यकारणशब्दौ गम्यगमकारी व्याख्यातौ ।

यस्मिन्सामर्थ्ये सति नियायकमग्न्यादि गम्यं भविष्यति, नियम्यं च धूमादि गमकं तत्कार्यकारणभाविसामर्थ्यम्, तस्य भावः कार्यकारणभावित्वं तेनेतीयमपि तृतीयेत्थंभूतलक्षणार्थैव । अनेन च भाष्यगतो भावशब्दो भवतेर्णिजन्तादेरजित्यच्प्रत्ययमुत्पाद्य भावनार्थो व्याख्यातः । भावनं चोत्पादनम्, तच्च शक्त्यधीनमिति, कार्यकारणभावशब्देन गम्यगमकभावापादिका शक्तिरुक्ता भवति ।

एवमपि कार्यकारणशब्दयोर्लक्षणावृत्त्यपरिहाराद्भावशब्दस्य शक्तावप्रयुक्तत्वादपरितोषात्स्वमतेनान्यथा व्याचष्टे—अथ वेति । काणादा ह्यस्येदं कार्यं कारणं संयोगि समवायि एकार्थसमवायिविरोधि चेति लैङ्गिकमित्यनुमानाङ्गभूताविनाभावोपाधित्वेन कार्यकारणभावादिच्छन्ति । लोकेऽपि त्वेवमेव दृश्यते । इह चान्नकरणत्वेन दर्व्यादेर्होमसाधनत्वं विधीयमानमन्नकरणत्वकारणकमेव भवति । भाष्यगतहोमशब्दवच्चात्रत्योऽपि संबन्धलक्षणार्थः । आक्षेपभाष्यमुपसंहरति–तस्मादिति । हेतुव्यपदेशशब्देनैतदुक्तम्, हेतुर्हि प्रमाणान्तरप्रसिद्धः स व्यपदेश्यः सिद्धवत्कीर्त्तनीयो भवति, न चायं तथेति, न हेतुत्वं युक्तमिति ।

सत्यमिति समाधानभाष्यं व्याचष्टे—सत्यमिति । अनेन च विधायिष्यते कार्यकारणभावो दृष्टान्तवचनेन कल्प्येतेति व्याख्यातम् । दृष्टान्तशब्देन दृष्टश्चासावन्तश्चेति समीपवचनान्तशब्दाङ्गीकारेण सह दृष्टिरूपाख्या व्याप्तिरुक्ता । कल्पिताया अपि व्याप्तेरशाब्द्याः शाब्देन हेतुनाऽनन्वयमाशङ्क्यान्वयसिद्ध्यर्थं वचने कल्पनमुक्तम् ।

सप्तमेऽपि वचनं पुनर्द्विविधं प्रत्यक्षमानुमानिकं चेति वदता भाष्यकारेण श्रुतार्थापत्तेः शब्दकल्पकत्वमेव प्रकटितम् । शब्दकल्पकत्वानङ्गीकारे चाग्नये जुष्टन्निर्वपामीत्यादेर्मन्त्रस्य विकृतावसन्निहिताग्न्यादिपदनिवृत्त्या साकाङ्क्षस्यापि सूर्यादिनार्थेन नैराकाङ्क्ष्यसिद्धेर्न सूर्यादिपदप्रक्षेपेणोहः सिद्ध्येत् सूत्रकृताप्यर्थाद्वा कल्पनैकदेशत्वादिति स्रुवेणावद्यतीत्यादिश्रुतवाक्यैकदेशादश्रुत इव द्रव्यमित्यादिपदकल्पनैवोक्ता ।

चतुर्थेऽप्यश्रुतफलेष्वेकाहकाण्डपठितेषु विश्वजिदादिषु 'चोदनायां फलाश्रुतेः कर्म्ममात्रं विधीयते न ह्यशब्दं विधीयत इति फलप्रतिपादकशब्दाभावान्निष्फलत्वं पूर्वपक्षयित्वा 'अपि वाम्नानसामर्थ्याच्चोदनार्थेन गम्येत अर्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते अर्थतो ह्यसम-

र्थानाम्मानन्तर्येऽपि असम्बन्धः तस्माच्छ्रुत्येकदेशः स' इति श्रुतवाक्यैकदेशभूतस्वर्गकामादिपदकल्पनमेव वक्ष्यते। अर्थस्य शब्दैकदेशभूतस्वर्गकामादिपदकल्पनमेव वक्ष्यते। अर्थस्य शब्दैकदेशत्वायोगाच्छ्रुतार्थापत्तिमाहुर्ये शब्दस्याकल्पिकाम्, अतः सूत्र-भाष्य-न्यायतन्त्रविरोधात्ते निराकृताः।

कीदृशं दृष्टान्तवचनमित्यपेक्षिते दर्शयति—**यद्यदिति**। शूर्पेण होम इति भाष्यं हेतुः स्यादित्यनेन पुनरुक्तमाशङ्क्य उपसंहारार्थत्वेन व्याचष्टे—**तेन चेति**। शूर्पेण होमे कर्त्तव्ये इति द्वितीयपूर्वपक्षाभिप्रायेणोक्तम्। प्रथमपूर्वपक्षे तु समस्तस्य वाक्यस्य केवलहेतुपरत्वात्तदर्थानुपपत्तिकल्पितसर्वान्नकरणसाधनत्वविधिप्राप्तत्वेन शूर्पस्य तच्छ्रुतेरवयुत्यानुवादत्वादुपलक्षणार्थं शूर्पग्रहणम्। शूर्पेणान्येन वा होमः कर्त्तव्य इत्यर्थः। किं प्रयोजनमिति प्रश्नभाष्यं व्याप्तिवचनकल्पनेन प्रयोजनस्योक्तत्वादयुक्तमाशङ्क्य व्याचष्टे—**किं प्रयोजनमिति**। द्वितीये पूर्वपक्षे चैतदुक्तं तदा हि शूर्पेण जुहोतीति विधेस्तेन ह्यन्नं क्रियत इत्यर्थवादनिराकाङ्क्षत्वे सत्यपि, शूर्पासम्भवेऽनुकल्पभूतदर्व्यादिप्राप्त्यर्थं तेन ह्यन्नं क्रियत इत्यस्यापि परावृत्त्य हेतुपरतेष्यते। तत्र शूर्पश्रुतेरुपलक्षणार्थत्वात्तेन ह्यन्नं क्रियत इत्यविशेषेणान्नकरणत्वमात्रस्य हेतुत्वप्रतिपादनान्न हेतुपरत्वे व्यवस्था लक्ष्यत इति, श्रुतविधित्यागेनाश्रुतविधिकल्पनस्य किं प्रयोजनमिति प्रश्नाभिप्रायो व्याख्येयः।

द्विविधमपि प्रश्नाभिप्रायन्निराकर्त्तुमन्यदपीत्युत्तरभाष्यं व्याचष्टे—**अपरस्त्वाहेति**। शास्त्रस्य महाविषयत्वम्, पुरुषस्य चानुष्ठानसौकर्यमश्रुतविधिकल्पनस्य अनेन प्रयोजनमुक्तम्। अन्नकरणत्वाविशेषात्सर्वेषां होमसाधनत्वेऽभिहिते, कुत इति प्रश्नभाष्यन्निरभिप्रायमाशङ्क्याह—**कुत इति तेनेति**। शूर्पपरामर्शितत्प्रातिपदिकात्परया तृतीयया शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वाभिधानात् कुतो दर्व्यादिप्राप्तिरिति यः सिद्धान्ताभिप्रायः यदि च हेतुरित्यत्र सूत्रे वक्ष्यते, स एवात्र प्रश्ने ज्ञेय इत्यर्थः।

अभिप्रायान्तरमाह—**अथ वेति**। अभिप्रायद्वयनिराकरणार्थत्वेन सौत्रार्थवत्त्वपदव्याख्यानार्थं तस्यापीति भाष्यं व्याचष्टे—**इतरस्त्वाहेति**। तृतीयोपात्तस्य करणत्वस्य हिशब्दोपात्तहेतुत्वविधावुद्देश्यत्वात्प्रातिपदिकान्वयलाभेन शूर्पगतत्वेन विशेष्टुमशक्यत्वात् अन्नकरणमात्रस्य हेतुत्वाद्दर्व्यादिप्राप्तिसिद्धिरित्याद्यभिप्रायार्थः। करणत्वं चार्थवत्त्वशब्देनाभिप्रेतं द्वितीये रूपयोगित्वं दर्व्यादेः पाकाद्यपेक्षया विप्रकर्षेऽपि यदन्नक्रियायामुपयोगित्वं तदेवात्यन्तविप्रकृष्टलाङ्गलाद्यपेक्षया साधकतमत्वेन विवक्ष्यत इत्यर्थः। 'शक्यते चेति' भाष्यं सौत्रोपपत्तिशब्दव्याख्यानार्थतया व्याचष्टे—**शक्यते चेति**। पौनरुक्तयमाशङ्कते—**पूर्वेण त्विति**। परिहरति—**तेनेति**। **कर्त्तुमिति**। करोतिना अन्नक्रियाविषयाविवक्षा लक्ष्यते, तेनान्नं कियत इति विवक्षितुं शक्यत इत्यर्थः। वेदे वक्त्रभावाद्विवक्षानुपपत्तेर्व्याचिख्यासात्र विवक्षाशब्देनाभिप्रेता। एतदेव व्याचष्टे—**यदेव हीति**। एवं चार्थवत्त्वपदोक्तोपयोगित्वे सत्यपि साधकतमत्वाभावात्करणत्वानुपपत्त्याशङ्कानिराकरणार्थत्वेनोपपत्तिपदस्य

पौनरुक्त्यं परिहृतम्। अर्थवत्त्वशब्देन करणत्वनिर्देशालम्बनत्वमुक्तम्। उपपत्तिशब्देन तु क्रियत इति वर्त्तमानान्नक्रियत्वनिर्देशालम्बनत्वमुक्तम्। उपपत्तिशब्देन तु क्रियत इति वर्त्तमानान्नक्रियत्वनिर्देशालम्बनमिति स्पष्टमेवापौनरुक्त्यमित्याह—**अथ वेति**। होमं प्रति साधनत्वानुपपत्तिमाशङ्क्य, सौत्रेणोपपत्तिशब्देनोपपत्तिं भाष्यकृद्वदति—**शक्यते चेति**। ग्रन्थेनेत्यर्थः। तत्र शक्य इत्यनेन करोतेः शक्तिलक्षणार्थत्वमुक्तम्। लटो वा भूतभविष्यत्कालक्षणार्थत्वं चशब्देन सूचितम्। 'एतद्धीति' भाष्यं साध्याहारं व्याचष्टे—**तत्रेति**। कथं चाकारि करिष्यते वेत्यभिधीयत इति। अत्राप्यध्याहार्य्यं न हीत्युत्तरभाष्यं व्याचष्टे—**वर्त्तमानेति**। वर्त्तमानान्नक्रियस्य होमसाधनत्वासम्भवात्करोतिना वा शक्तिर्लक्ष्यते, लटो वा भूतभविष्यत्कालत्वमित्यर्थः। भाष्यमपि यस्मान्न वर्त्तमानान्नक्रियाकालः कश्चिद्धोमसाधनमस्ति। तस्माल्लक्षणाश्रयणमिति योज्यम्। एतदेवोत्तरभाष्यमेकग्रन्थत्वेन व्याचष्टे—**यद्वेति**। लक्षणापत्तेरुभयपक्षसाम्येनादोषत्वप्रतिपादनार्थस्य व्यर्थे स्तुतिरन्याय्येति चेदिति वक्ष्यमाणसूत्रस्य सर्वपूर्वपक्षोपपत्तिसङ्कल्पनाय व्याख्यानार्थम्। यदि चेति भाष्यं व्याचष्टे—**यदि चेति**। क्रियावर्त्तमानत्वयोरेकपदोपादानादन्योन्यनिरपेक्षयोश्चानुपपत्त्यभावादैक्यमङ्गीकृत्योभयोरित्युक्तं वर्त्तमानत्वशब्देन च क्रियावर्त्तमानत्वमभिप्रेतम्। चोद्यसामान्यमात्रेण दोषत्वानपायात्सूत्रभाष्यापेक्षितपरिहारसाम्यमपि दर्शयति—**तेनेति**।

हेताविति भाष्यं कथन्तर्ह्यपेक्षितमत आह—**हेताविति**। भाष्यकृताऽर्थवत्त्वपदस्यैव श्रौतार्थवादपरतया व्याख्यातत्वात् सूत्रान्तरव्याख्यानार्थं यदि चेत्यस्मात्प्राक् पठितमित्यदोषः। तदिदानीं व्याचष्टे—**स्तुताविति**। न ह्यन्नकरणत्वाविशेषाद्दर्व्यादिवच्छूर्प्पस्य प्राप्तेः शूर्प्पेण जुहोतीत्यनर्थकं स्यादत आह—**शूर्प्पेणेति**। भाष्यकृद्व्याख्याने हेतुत्वप्रतिज्ञायां हेत्वनभिधानादर्थवत्त्वोपपत्तिहेत्वोश्च साध्यानभिधानात्सूत्रस्य न्यूनत्वापत्तेः।

स्वयं व्याख्यानान्तरमाह—**इत्थं वेति**। विधिर्वा स्यादपूर्वादितिपूर्वाधिकरणपूर्वपक्षहेतोरत्राप्यनुषङ्गेण पूर्वपक्षप्रतिज्ञायां हेत्वपेक्षापूरणात् स्याच्छब्देन चान्वयवाक्यकल्पतया हेतुत्वायोगशङ्कापरिहारं मत्वान्वयवाक्यस्य दर्व्यादिप्राप्तिफलत्वोपपादनार्थत्वेनार्थवत्त्वोपपत्त्योः साध्यकाङ्क्षापूरणात्सूत्रस्यान्यूनत्वं भाष्यकृतोऽभिप्रेतम् ॥२६॥

भा० प्र०—पूर्व अधिकरण में विधि की तरह कथित वाक्यों का अर्थवादत्व स्थिर किया गया है। प्रकृत में हेतु के समान कथित वाक्यों का अर्थवादत्व स्थापन करने के लिए इस सूत्र से पूर्व पक्षी की अवतारणा की जा रही है। इस सूत्र में "वा" शब्द पूर्व पक्ष का सूचक है। "शूर्पेण जुहोति तेन अन्नं क्रियते" (जै० ब्रा० १।६।५) शूर्प के द्वारा होम करें, क्योंकि उसी के द्वारा अन्न सम्पादित होता है, इस तरह के वाक्यों में हेतु का निर्देश किया गया है, उसको हेतुविधि कहा जाता है। क्योंकि, इन वाक्यों में 'हि' शब्द पठित है। हि शब्द हेतु का बोधक है। इस प्रकार इसको हेतु विधि मानने पर श्रौत अर्थ ही गृहीत होता है, अन्यथा, अर्थवाद मानने पर वाक्य में लक्षणा माननी पड़ेगी,

मुख्य अर्थ सम्भव रहने पर लक्षणा मानना उचित नहीं है। यदि यह कहा जाय कि इन वाक्यों में हेतुविधि मानने का क्या फल है ? इसके समाधान में यही करना उचित है कि दर्वी स्थाली आदि द्रव्यों से अन्न का सम्पादन होता है, उनमें किसी एक के करने से ही कार्य चलेगा, शूर्प से ही होम करना चाहिए—यह कोई नियम नहीं है। शूर्प ही अन्न का करण है—यह भी बात नहीं है, वरन् दर्वी स्थाली आदि भी अन्न का करण है। शूर्प से तो केवल तण्डुल के छिलके को हटाया जाता है, किन्तु, दर्वी, स्थाली आदि से अन्न का पाक होता है। इसलिए शूर्प की अपेक्षा दर्वी स्थाली आदि ही अन्न का साधकतम होने से प्रकृत में करण है। अतः शूर्प, दर्वी, स्थाली, आदि में विकल्प ग्रहण ही उचित है—यही पूर्वपक्ष का आशय है।

'हेतुः'=हेतु विधि, 'वा' पूर्व पक्ष का सूचक, 'स्यात्'=होगा, अर्थवत्त्वोपपत्तिभ्याम्'= अर्थवत्त्व अर्थात् प्रयोजन साधकत्व एवं उपपत्ति अर्थात् युक्ति होने से, "तेन अन्नं क्रियते" यह वाक्य हेतु विधि है, हेतु से ही दर्वी आदि का होमसाधनत्व रूप सार्थक होता है, इसीलिए उक्त वाक्य में 'हि' शब्द के द्वारा उपपत्ति अर्थात् युक्ति भी उल्लिखित है। (पूर्व पक्ष) ॥ २६ ॥

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ १.२.२७ ॥

**शा० भा०—न त्वेतदस्ति शब्दपूर्वकोऽयमर्थोऽन्नकरणं हेतुरिति। शब्दश्चान्नकरणं शूर्पहोमे हेतुरित्याह, न च दर्विपिठरहोमे। तेन शब्दपूर्वं शूर्पम्, न च दर्विपिठरादेश्चोदना ॥ २७ ॥**

भा० वि०—ननु गृहीतव्याप्तिकस्य लोके हेतुत्वेन व्यपदेशादन्नकरणत्वस्य च होमसम्बन्धेन सहागृहीतव्याप्तिकत्वात् कथं हेतुत्वमिति—**स्यादिति**। सूत्रावयवं निरस्याशङ्कामाह—**नन्विति**। अत्र क्रियासामान्यवाचिना करोतिना ज्ञानाख्यः क्रियाविशेषो लक्ष्यते, तेन कार्यं गम्यम्, कारणं च गमकम्, गम्यगमकशब्दयोश्च कृदन्तत्वात् तत्परेण भावप्रत्ययेन सम्बन्धाभिधायिना भवितव्यम्, **कृत्तद्धित-समासेषु सम्बन्धाभिधानं त्वतल्भ्यामिति स्मरणात्**। सम्बन्धस्य च कारकाणां क्रियोत्पादनशक्तिरूपत्वात् तस्याश्च व्याप्यव्यापकव्यवहारहेतुत्वेन व्याप्तिरूपत्वात् कार्यकारणभावशब्देन व्याप्तिर्गीयते, तेन व्याप्तिरूपे तस्मिन् असिद्धे कथं हेतुव्यपदेश इत्यर्थः, लोके हेतुव्यवहारात् पूर्वमेव प्रमाणान्तरेण व्याप्तिसिद्धेः अपेक्षात् एव, वेदे तु सिद्धवद्धेत्वपदेशान्यथानुपपत्तिकल्पितेन यद्यदन्नकरणं तेन तेन होतव्यमिति वचनेन कार्यकारणभावाख्यः संबन्धो विधायिष्यते—प्रतिपादयिष्यत इति सूत्रावयवेन परिहरति—**सत्यमित्यादिना**। हेतुः स्यादित्यनेनोक्तमुपसंहरति—**शूर्पेणेति**। अत्र च समस्तस्य वाक्यस्य केवलहेतुपरत्वात् तदन्यथा-

नुपपत्तिकल्पितसर्वान्नकरणसाधनत्वविधिप्राप्तत्वेन शूर्पस्य तच्छ्रुतेरेवानुवादत्वात् उपलक्षणार्थं शूर्पग्रहणम्, तेन शूर्पेणान्येन वा होमे कर्तव्य इत्यर्थः।

ननु शूर्पेण जुहोतीति श्रुतं विधिं परित्यज्य शूर्पश्रुतेः उपलक्षणार्थत्वं चाश्रित्य तेन ह्यन्नमिति हेतुनिर्देशान्यथानुपपत्त्या अश्रुतविधिकल्पने किं प्रयोजनमिति पृच्छति--**किमिति**। उत्तरं - **अन्यदपीति**। शास्त्रस्य महाविषयत्वं तेन च यस्य कस्यचिदन्नकरणस्य सर्वदा लाभात् पुरुषस्यानुष्ठानसौकर्यं प्रयोजनमिति भावः।

ननु शूर्पश्रुतेरुपलक्षणार्थत्वेऽपि तेनेति साधकतमार्थया तृतीयया कथं दर्व्यादीनां करणत्वप्राप्तिस्तेषामसाधकतमत्वादिति चोदयति--**कुत इति**। अर्थवत्त्वपदव्याख्यानेन परिहरति—**तस्यापीति**। दर्व्यादेरप्यन्नक्रियायामुपयोगमात्रमस्त्येवेत्यर्थः। तथापि तेनेति तृतीयोक्तसाधकतमत्वासिद्धिरित्याशङ्क्योपपत्तिपदं व्याचष्टे—**शक्यते चेति**। नात्र तेनेति साधकतमत्वमभिप्रेतम्, किन्तु लाङ्गलाद्यपेक्षया दर्व्यादीनामन्तरङ्गसाधनत्वं तावन्मात्रेण तृतीयोपपत्तिरिति भावः।

यद्वा पूर्वभाष्य एवार्थवत्त्वपदेनापेक्षितं करणत्वं तृतीयालम्बनमभिधाय क्रियत इति वर्तमानान्नक्रियतयापदिष्टस्य कथं होमसंबन्धे हेतुत्वमुच्यते, एकस्य युगपत् क्रियाद्वयायोगादित्याशङ्क्योपपत्तिपदं व्याचष्टे—**शक्यते चेति**। अत्र क्रियत इति करोतिना तच्छक्तिमुपलक्ष्य तस्यावर्तमानत्वमभिधीयते।

अथवा लटा भूतभविष्यद्वाचिनोः लुङ्लिटोरर्थः क्रियायामेव लक्ष्यते, उभयथापि तेनान्नं क्रियते=कर्तुं शक्यत इति श्रुत्यर्थोपपत्तिशब्देनोक्तमित्यर्थः।

ननु करोत्यादेर्मुख्यार्थपरित्यागेन लाक्षणिकार्थत्वं कस्मादाश्रीयते तत्राह—**एतद्धीति**। कर्तुं शक्यत्वं तत्र हेतुर्नहीति यस्मान्न वर्तमानक्रियाकालः कश्चिद्दर्व्यादिहोमसाधनमस्ति यस्यार्थस्यायं क्रियत इति प्रतिनिर्देशो व्यपदेशः। तस्माल्लक्षणाश्रयणमिति योजना। यदा तु वर्तमानः काल इति पाठः तदा न हि वर्तमानः कालोऽन्नक्रियाया अस्मिन् प्रयोगे सम्भवति, होमसाधनत्वानुपपत्तेः यस्य क्रियत इति प्रतिनिर्देश इति योज्यम्, एवमर्थवत्त्वोपपत्तिभ्यां इति व्याख्यायार्थवत्त्वमन्यथा व्याचष्टे—**हेतौ चेति**। शब्दः=हि शब्दः स्तुताविति सर्वजनाभिमतेनान्नकरणत्वेन प्रशस्त्यं लक्ष्यत इत्यर्थः।

ननु त्वत्पक्षेऽपि साधकतमार्थतृतीययापेक्षितसाधनत्वस्य कृञादिशक्तिवर्तमानत्वस्य लटा वा भूतभविष्यत्वयोर्लक्षणयापद्येतेत्याशङ्क्य सिद्धान्तेऽपि शूर्पविषये सा तुल्येति वक्तुं व्यर्थे स्तुतिरिति सूत्रं तस्यार्थं सकलपूर्वपक्षसङ्कलनायात्रैवाह—**यदि चेति**। व्यर्थे तस्मिन्निति दर्व्यादिस्साधकतमत्वाद्यभावेनार्थशून्ये

तस्मिन् हेतौ शूर्पेऽपि तदभावेन स्तुतिरनर्थिका स्यादित्यर्थः, एतदेव विवृणोति—शूर्पमपीति। तेन साधकतमत्वादिना विनेत्यर्थः।

तत्र तुशब्दार्थमाह—एतदिति। हेतुपरत्वम्, शब्दपूर्वत्वादिति व्याचष्टे—शब्देति। अन्नकरणत्वस्य होमे हेतुताया मानान्तरागोचरत्वादिति भावः। ततः किमित्यत आह—शब्दश्चेति। शूर्पहोमे=शूर्पेण होमे कर्तव्ये इत्यर्थः। शूर्पेणेति तृतीयाश्रुत्या शूर्पस्य होमकरणत्वावगमात् आनुमानिकदर्व्याद्यप्राप्तेः होमस्य च शूर्पेण निराकाङ्क्षत्वाच्छूर्पहोम एव हेतुत्वमित्यर्थः, तथाप्यन्नकरणत्वस्य शूर्पहोमसंबन्धे हेतुत्वमेवेत्याशङ्क्य शूर्पेण जुहोतीति विधिसिद्धत्वेन हेत्वनपेक्षत्वात् स्तुतित्वमेवेति स्तुतिरिति। सूत्रावयवो योज्यः। निगमनतया सूत्रशेषं योजयति—तेनेति। यस्माच्छब्दपूर्वकं शूर्पस्य करणत्वम्, यस्माच्च हेत्वपदेशस्य स्तुतित्वेनोपपत्तिः तस्माच्छूर्पश्रुतिविरोधाद्धेत्वपदेशानुपपत्त्यभावाच्च न दर्वीपिठरादेः होमसाधनत्वचोदना तदनुमानमित्यर्थः। न च शूर्पश्रुतिः अवयुत्यानुवादत्वादन्न होमकारणत्वपरेति वाच्यम्, विध्युद्देशपातिन्यास्तस्यास्तदपेक्षितहोमकरणसमर्पकत्वे संभवत्यनुवादत्वकल्पनानुपपत्तेरिति द्रष्टव्यम् ॥२७॥

त० वा०—शूर्पेणेति तावत्करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमानिकैर्दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान्प्रतिपद्यते। होमश्च तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते। अनुत्थितायामेव दर्विपिठारादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति। तेन ब्रवीति अचोदना च तस्येति। हेत्वपदेशश्च स्तुत्यैवोपपद्यमानः सन्नाश्रुतदृष्टान्तकल्पनायै प्रभवति। शूर्पश्रुतिश्च विध्युद्देशपातिन्यनन्यप्रयोजना विस्पष्टा च सती परित्यक्तुं न युज्यते। तस्माद्यद्वाऽन्नकरणत्वादित्येष कर्तव्य इत्यनेनापेक्षितत्वाल्लक्षणयैतत्प्रतिपादयति प्रशस्तत्वादिति।

अथ वाऽन्नकरणत्वादिति श्रुतिवृत्तमेव। तत्र यथाश्रुतं विध्युद्देशे हेतुतामप्रतिपद्यमानं तदनन्तराकाङ्क्षितार्थोपप्लुतहेत्वपेक्षप्राशस्त्यहेतुरवधार्यते, अन्नकरणत्वात्प्रशस्त इति। कल्पनाद्वयेऽपि च लोकप्रसिद्धदृष्टान्तलाभान्नाश्रुततद्वाक्यानुमानप्रसङ्गो भविष्यति। सिद्धं हि प्रशस्तानां कर्तव्यत्वमन्नकरणानां च प्रशस्तत्वमिति।

अचोदना च तस्येति व्याख्यान्तरम्। तव हि यद्यन्नकरणम्, तच्चोद्यते। न च दर्विपिठरादीनां करणता, साधकतमस्य पाकादेः करणत्वात्। एवं चोत्तरसूत्रमापतति ॥२७॥

न्या० सु०—अत्र भाष्यकृताऽन्नकरणताया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वाच्छब्देन च शूर्प्पेण होमकर्त्तव्येऽन्नकरणत्वस्य हेतुत्वाभिधानात्तस्य च

शूर्प्पेण जुहोतीति विधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगतेः शूर्प्पस्यैव शब्दविहितत्वात्तदवरुद्धे होमे दर्व्यादेरचोदनेत्येवं सूत्रं व्याख्यातम् । तद्विवृणोति—**शूर्प्पेणेति** । विरोधसिद्ध्यर्थं द्वारैक्यप्रदर्शनाय¹ करणग्रहणं समर्थः पदविधिरिति पदमात्रविधौ सामर्थ्यापेक्षास्मरणाच्छूर्प्पस्य दर्व्यादिसापेक्षत्वे शूर्प्पप्रातिपदिकस्य विभक्त्यनन्वयप्रसङ्गान्निरपेक्षत्वं विभक्तिग्रहणेनोक्तम् । समुच्चयनिरासार्थं चैतद् द्वयम् । श्रुतिग्रहणं बलीयस्त्वाद् बाधविकल्पनिराकरणायोक्तम् । न केवलं विभक्त्यन्वयान्यथानुपपत्त्या शूर्प्पस्य दर्व्याद्यनपेक्षत्वं स्यात् किन्त्वसामर्थ्यादपीत्याह-- **होमश्चेति** । ननु हेत्वपदेशान्यथानुपपत्त्यान्वयविधायिश्रुत्यनुमानावश्यंभावाद् बलाबलविशेषेऽपि मुख्यानुकल्पव्यवस्थया विरोधपरिहारो भविष्यतीत्यत आह - **अनुत्थितायामिति** । अत्रैव अचोदना च तस्यैति सूत्रावयवं योजयति—**तेनेति** । हेत्वपदेशान्यथाऽनुपपत्तिनिराकरणार्थतया स्तुतिग्रहणं व्याचष्टे— **हेत्वपदेशश्चेति** । आद्यं पूर्वपक्षं निरस्यति—**शूर्पश्रुतिश्चेति** । किमालम्बनस्तर्हि हेतुनिर्देशः, अत आह—**तस्मादिति** । वक्ष्यमाणपक्षापेक्षया यद्वाशब्दः; तेन विध्युद्देशेनानन्तरमाकाङ्क्षितमर्थेन विधिसामर्थ्येनोपप्लुतं हेत्वपेक्षं यत्प्राशस्त्यम्, तस्य हेतुरिति विग्रहः । न केवलं हेतुपरत्वासम्भवात् प्राशस्त्यपरत्वम्, किन्त्वश्रुतान्वयवाक्यकल्पनानापादकत्वादपीत्याह— **कल्पनेति** । एतदेव सूत्रमन्नस्वरूपस्य होमसाधनतया कल्प्येन शब्देन चोद्यमानतयेष्टत्वाद्दर्व्यादिरकरणत्वादचोदनेत्यन्त्यप्रतीकेनावतार्याऽन्यथा व्याचष्टे—**अचोदना चेति** । भाष्यमप्यस्यां व्याख्यायामेवं योज्यं शब्दश्चान्नकरणहेतुरित्याह—**तच्च शूर्प्पहोमेति** । शूर्प्पेण जुहोतीत्येतद्वाक्यविधेयाङ्गीक्रियमाणेऽस्य स्तुत्यर्थत्वात्प्रामाणान्तरानुसारेण गौणत्वाद्युज्यते दर्व्यादिहोमेऽनुकल्पेन वाक्येन विधेयेऽङ्गीक्रियमाणे, तस्य करणत्वाभावान्न युज्यतइति । व्याख्यानान्तरस्य प्रयोजनमाह—**एवं चेति** ॥ २७ ॥

भा० प्र०—पूर्व पक्षियों के पूर्वोक्त सन्देहों के समाधान में आचार्यों का कहना है कि शूर्प को अन्न की साधनता का बोधक वाक्य अर्थवाद है। दर्वी, स्थाली आदि को अन्न का साधन न कहकर श्रुति में शूर्प को ही अन्न का साधक कहा गया है। 'शूर्पेण' इस तृतीयान्त पद के प्रयोग से शूर्प में अन्न की साधनता श्रुति के द्वारा ही कही गई है। दर्वी, थाली, आदि में अन्न की साधनता अनुमान सिद्ध है। अलौकिक अर्थ में वेद ही प्रमाण है, वेद 'शूर्पेण' इस करण में तृतीया का प्रयोग कर इसमें साधनता सुस्पष्ट है, अतः, थाली आदि के साथ शूर्प की साधनता के विकल्प का प्रसङ्ग ही नहीं है। क्योंकि, समान बल रहने पर ही दो द्रव्यों में विकल्प होता है। किन्तु, शूर्प की अन्न साधनता स्वतःप्रमाण श्रुति द्वारा बोधित होने से दर्वी, थाली प्रभृति में अनुमेय अन्न साधनता श्रुति की अपेक्षा दुर्बल है। अतः, शूर्प के साथ थाली आदि का विकल्प नहीं हो सकता है। श्रुति उपदिष्ट

१. द्वारैक्ये सति विरोधः, विरोधे सति करणयोः समुच्चयासम्भवः।

होम की करणाकाङ्क्षा श्रुतिबोधित शूर्प के द्वारा ही चरितार्थ होने से थाली प्रभृति की होमसाधनता की प्राप्ति का अवसर ही नहीं है।

'श्रुतिः'=अर्थवाद, 'तु'=पूर्व पक्ष का व्यावर्तक, ''शब्दपूर्वकत्वात्'' =क्योंकि शूर्प अन्न का कारण है, वह श्रुति बोधित है, 'अचोदना'=अविधि या विधि नहीं है। 'च'= और, ,तस्य'=दर्वी, थाली आदि का। श्रुति के द्वारा शूर्प को ही अन्न साधनता कहा है, दर्वी स्थाली आदि की अन्न साधनता की विधि या वेदवचन नहीं है। अतः, यह स्तुति या अर्थवाद वाक्य है ॥ २७ ॥

## व्यर्थे स्तुतिरन्याय्येति चेत् ॥ १.२.२८ ॥

**शा० भा०—इति पुनर्यदुक्तम्, तत्परिहर्तव्यम् ॥ २८ ॥**

भा० वि०–ननु शूर्पविषयेऽपि साधकतमत्वक्रियावर्तमानत्वाद्यर्थाभावात् कथं स्तुतिरिति 'व्यर्थे स्तुतिरिति' सूत्रार्थस्य पूर्वमुक्तत्वादनुभाषणार्थमेतत्सूत्रमिति व्याचष्टे—इति पुनरिति। तस्य परिहारयोग्यतामाह—तदिति ॥ २८ ॥

त० वा० – यत्पुनः शूर्पेऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तम्। किं तत्राभिधीयते ॥ २८ ॥

न्या० सु०—एतत्सूत्रार्थस्य पूर्वमुक्तत्वादनुभाष्यतार्थतयैतत्सूत्रमिति पुनर्यदुक्तमिति वदता भाष्यकृता व्याख्यातम्, तद्व्याचष्टे—यत्पुनरिति ॥ २८ ॥

भा० प्र०—शूर्प के द्वारा अन्न का सम्पादन नहीं होता, किन्तु, दर्वी, स्थाली आदि के द्वारा ही अन्न का निष्पादन होता है, इसलिए, शूर्प की प्रशंसा करना सङ्गत नहीं है, इसलिए इस स्थल में हेतु विधि ही आश्रयणीय है, अर्थात् दर्वी स्थाली आदि के द्वारा भी होम किया जा सकता है—यही श्रुति का आशय है और ऐसी स्थिति में यह भी सङ्गत नहीं होगा।

''व्यर्थे=जो प्रयोजन का निर्वाहक नहीं है उसके सम्बन्ध में, ''स्तुतिः'' =प्रशंसा, 'अन्यस्या' =अनुचित, ''इति चेत्'' यदि यह कहा जाय ॥ २८ ॥

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ १.२.२९ ॥

**शा० भा०—अस्मत्पक्षेऽर्थोऽस्ति। वाक्यशेषो हि स विधेस्तदा भवति। संवादश्च स्तुतिवचनत्वेन। यथा वयं शूर्पेणान्नं क्रियमाणं जानीमः, तथा शूर्पेणान्नं क्रियत इत्येव गम्यते। तदा चावर्तमानं स्तोतुं वर्तमानमित्युपदिशति। त्वत्पक्ष एष दोषो यस्य ते हेतुविधिः। विधौ हि न परः शब्दार्थः प्रतीयते। न च वर्तमानमुपदिशन्वेदः शक्यमर्थं विदध्यात्।**

**अस्मत्पक्षे तु एष परशब्दः परत्र वर्तते। यथा लोके बलवान्देवदत्तो यज्ञदत्तादीन्प्रसहत इति। प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलाः, तानपेक्ष्य भवति। एवं तेन ह्यन्नं क्रियत इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य, निकृष्टान्यन्यान्यन्नकरणान्यपेक्ष्य भविष्यति ॥ २९ ॥**

भा० वि०—सूत्रेण परिहरति—**अर्थस्त्विति**। तुशब्दश्शङ्काव्यावर्तकः, अर्थशब्दं व्याचष्टे—**अस्मत्पक्ष इति**। अर्थोऽन्नकरणत्वादिरूपः कुत इत्याशङ्क्य विधिशेषत्वादिति व्याचष्टे—**वाक्येति**। तेन व्रीह्यादिस्सर्वनाम्ना परामृष्टः सत्यपि विधिशेषत्वे कथंमर्थसत्तेत्याशङ्क्येत्यत आह—**संबद्धश्चेति**। विधिशेषतया स्तुतिवचनत्वे चानुवादत्वेन भवितव्यम् अनुवादश्च मानान्तरसिद्धस्यैवेत्यर्थः, तथापि किमित्याशङ्क्य यथालोक इति व्याचष्टे—**तेनेति**। शूर्पेण क्रियत इति श्रुत्या सङ्कीर्त्यत इति अवगम्यत इत्यर्थः, एवमुपयोगित्वमात्रं करणविभक्त्यर्थमभिधाय वर्तमानान्नक्रियात्वाभिधानमुपपादयति—**तथा[1] चेति**। तथा अवर्तमानमप्यन्नक्रियायोगित्वं शूर्पं स्तोतुं वर्तमानं व्यपदिशति श्रुतिरित्यर्थः, अर्थस्तु विधिशेषत्वादित्यस्य व्यतिरेकं दर्शयन् परपक्षे दोषमाह—**त्वत्पक्ष एष इति**। मुख्यत्वाद्यग्रह इति। तत्रापि कथं तदग्रहो दोषस्तत्राह—**यस्येति**। विधिः अज्ञातज्ञापनं हेतुविधिवादत्वात् तवेत्यर्थः, विधित्वेऽपि कुतो दोषापत्तिरित्यत आह—**विधौ हीति**। न परस्य=अन्यस्य शब्दस्यार्थः प्रयोजनं तया प्रतीयत इत्यर्थः, लक्षणायां हि परशब्दार्थः प्रयोजनं भवति, विधिपक्षे त्वपूर्वविषयत्वान्न लक्षणा युक्तेत्याशयः, भवतु तर्हि मुख्यार्थत्वमत आह—**न हीति**। वर्तमानान्नक्रियं साधकतमं चोपदिशन् वेद इत्यर्थः एकक्रियाविशिष्टस्य शूर्पादेस्तदैव क्रियान्तरायोगात् साधकतमेन च पाकादिना होतुमशक्यत्वादिति भावः।

ननु त्वत्पक्षेऽपि मुख्यार्थाभ्युपगमे विरोधः, लक्षणाभ्युपगमे तु स एव दोषः, इत्याशङ्क्य लाक्षणिक एवार्थः स्वीकर्तव्यः, विधिशेषत्वेनानुवादतया प्रमाणान्तरानुसारितया लक्षणाया अप्यदोषत्वादित्यभिप्रेत्य सूत्रयोजनं मत्वाह—**अस्मत्पक्ष इति**। तत्रापि यथालोक इति व्याचष्टे—**यथालोक इति**। बलवच्छब्दः प्रकृष्टबले वर्तमानोऽपि इति सम्बन्धः, यद्यपि भूम्नो अतिशायनस्य च मतुबर्थत्वाद्विशेषाभिधानाच्च सर्वेभ्यः प्रकृष्टबलत्वं शब्दशक्त्या प्रतीयते, तथापि सिंहादीनामधिकबलानपेक्ष्याधिकबले देवदत्ते स्तुत्यर्थलक्षणया प्रयुक्त इत्यर्थः। दार्ष्टान्तिकमाह—**एवमिति**। शूर्पस्यापि लाङ्गलाद्यपेक्षया प्रकृष्टस्यैवात्यन्तप्रकृष्टत्वेन स्तुतिस्तेनेत्यादिना क्रियत इत्यर्थः ॥ २९ ॥

---

१. तदा चेति मु० पु० पाठः।

त० वा०—अस्मत्पक्षेऽर्थोऽस्ति स्तुत्यालम्बनमन्नकरणत्वं नाम, वाक्यशेषो हि भवन्पारतन्त्र्याद् गौणत्वादपि प्रतिपद्यते। तदा च विधेयान्तरवशादवश्यमनुवादेन भवितव्यमनुवादश्च यथाविज्ञातस्य भवति। अतः शब्देनैवाभ्यमनुज्ञातं यादृशं वयमन्नकरणत्वं शूर्पे पश्यामः, तादृशमिदं संकीर्त्यंत इति। अनेन वर्तमानापदेशो व्याख्यातः। तत्रापि हि कृतं वा करिष्यमाणं वा स्तोतुं क्रियत इत्युच्यते। कथं स्तुतिः ? सर्वलोकस्य भूतभविष्यदनादरेण वर्तमानोपकारानुरागाद्वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिरिति क्रियत एवाऽनेनान्नमित्युच्यते।

अथ वाऽन्नक्रियाशक्तेर्वर्तमानतान्नक्रियायामेवोपचर्य स्तौति। तत्रापि जनानां शक्त्यतिक्रमेणाभिव्यक्तिप्रियत्वात्क्रियत इत्युक्ते स्तुतिर्भवति। न शक्त्यभिधानात्। तत्र तु विधिवादित्वान्मुख्यान्नकरणत्व-वर्तमानत्वयोरग्रहणे दोषः किं कारणम् ? विधानं ह्यत्यन्तानवगतार्थविषयम्। तत्र यथाश्रुतादन्यथाग्रहणं निष्प्रमाणकम्। एतदेवाऽऽह—विधौ हि न परशब्दार्थः प्रतीयत। परशब्दार्थो हि लक्षणासु प्रयोजनम्। तदिह भूतभविष्यत्क्रियावाचिनः, शक्तिवर्तमानतावाचिनो वा स्वार्थे वर्तमानान्नक्रियावाची शब्दः कल्पनीयः। तन्निमित्तमात्रे शब्दार्थे साधकतमत्ववाचिनी तृतीया। नचैवंभूतत्वं कुतश्चित्सिद्धमित्यप्रमाणकम्। अथ मुख्यार्थपरिग्रहः। तत्रोच्यते। न च वर्तमानं साधकतमं वोपदिशन्वेदः शक्यमर्थं विदध्यात्। न हि वर्तमानान्नक्रियेण शूर्पादिना साधकतमेन वा पाकेन होतुं शक्यते। तस्मादुभयथाऽपि विप्रतिषिद्धम्।

अस्मत्पक्षे त्वनुवादत्वात्परशब्दार्थग्रहणम्। तथा लोके बलवान्देवदत्त इति भूम्न्यतिशायने वा मतुप्प्रवृत्तिः। न च विशेष उपात्तोऽमुष्मात्प्रकृष्टबल इति। तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दो न च तथा संभवति सिंहादीनां बलवत्तरत्वादिति देवदत्तान्न्यूनतरबलानपेक्ष्यैवमभिधीयते। तथाऽत्र विप्रकृष्टतरान्नसाधनलाङ्गलाद्यपेक्षया शूर्पं साधकतममित्युच्यते।

नन्वेवमापेक्षिकप्रवृत्तेर्मुख्यत्वमेव स्यात्, तथा च देवदत्ते बलवच्छब्दप्रवृत्ति नैव गौणीं मन्यते। सत्यमेवम्, यदा तावन्न्यूनमात्रापेक्षयैव प्रयुज्यते, यदा त्वविशेषप्रवृत्तेस्तदधिकबलेष्वपि बलवद्बुद्धिर्जाता तदा स एव शब्दः कुतश्चिदपि न्यूनबले वर्तमानो गौणः संपद्यते। तथा यदि विध्युद्देशोपात्ते शूर्पेऽन्नकरणत्वमनूद्यते। ततस्तन्न्यूनमात्रापेक्षया वा मुख्यत्वं न्यूनानुपादानाद्वा सामान्यतः प्रवृत्तस्य सर्वप्रकृष्टगामित्वबुद्धौ सत्यां गौणता। भवतस्त्वपूर्वविधानादत्यन्तसाधकतमत्व-वर्तमानत्वयोः क्रियां प्रत्युपादानान्न्यूनापेक्षागौणत्वयोर्निमित्तं नास्तीत्यतिक्लेशः स्यादित्यसमानम्॥ २९॥

न्या० सु०—अर्थशब्दव्याख्यानार्थमस्मत्पक्ष इति भाष्यं व्याचष्टे—**अस्मत्पक्ष इति**। विधिशेषत्वादितिसूत्रावयवव्याख्यानार्थं वाक्येति भाष्यं व्याचष्टे—**वाक्येति**। सत्यपि विधिशेषत्वे कथमर्थवत्तेत्याशङ्कानिराकरणार्थं सम्वादश्चेति भाष्यं व्याचष्टे—**तथा चेति**। वर्त्तमानान्नक्रियत्वाभिधानोपपादनार्थं तदा चेति भाष्यं व्याचष्टे—**अनेनेति**। करोतेरेति शक्तिलक्षणार्थत्वमनेन भाष्येण वर्त्तमानमितीतिकरणेन अक्रियं वा स्तोतुं सत् क्रियमित्युपदिशन्तीत्यपि सूचनार्द्दर्शितं भवतीति व्याख्यातुमाह—**अथ वेति**। अनेन चैवं भाष्यं व्याख्यातम्, कृतं करिष्यमाणं वा स्तोतुं क्रियतइति वर्त्तमानशक्तिकं वा स्तोतुं क्रियत इत्युपदिशतीति। 'अर्थस्तु विधिशेषत्वादित्यस्य' व्यतिरेकप्रदर्शनार्थं त्वत्पक्ष इति भाष्यं व्याचष्टे—**तव त्विति**। वर्त्तमानशब्देन क्रियामप्युपलक्ष्येति दोषापादनार्थं विधौ हीति भाष्यं प्रश्नपूर्वकं व्याचष्टे—**किं कारणमिति**। परशब्दार्थः प्रतीयतइत्यनेन वाच्यतया प्रतीतिरुक्तेति, कथंचिद् भ्रान्तिः स्यात् तच्च जहत्स्वार्थतापत्तेरयुक्तमिति प्रयोजनपदप्रक्षेपेणोक्तार्थे योजयति—**एतदिति**। प्रयोजनपदप्रक्षेपे कारणमाह—**परेति**। न तु वाच्ये इति शेषः। कस्य शब्दस्यार्थे कः शब्दोऽत्र कल्प्यत इत्यपेक्षायामाह—**तदिहेति**। भूतवाचिनोऽकारीति लूङः, भविष्यद्वाचिनो वा करिष्यतइति लृटश्चार्थे वर्त्तमानवाची शब्दः क्रियते इति लट् प्रत्ययः कल्पनीयः। शक्तिवर्त्तमानतावाचिनो वा शक्यत इति शक्नोति स्वार्थे क्रियावाची शब्दः क्रियत इति करोति धातुः कल्पनीय इत्यर्थः।

न चेति भाष्यं शङ्कापूर्वकं व्याचष्टे—**अथेति**। सक्रियमित्यत्यत्र द्रष्टव्यम्। अशक्यार्थत्वमेव दर्शयति—**न हीति**। तत्र तु विधिवादित्वादित्यारभ्य द्वितीयपूर्वपक्षदूषणमुक्तम्। तदुपसंहरति—**तस्मादिति**। **उभयथेति**। लाक्षणिकत्वे, मुख्यत्वे च विधिवादिनः क्रियत इति विप्रतिषिद्धमित्यर्थः। दृष्टान्तव्याख्यानार्थमस्मत्पक्ष इति भाष्यं व्याचष्टे—**अस्मत्पक्षे त्विति**। सत्यप्यन्यस्मिन्प्रकृष्टबले देवदत्तस्यापि बलसद्भावात्कथं गौणतेत्याशङ्क्य भूम्न्यतिशायने वेत्युक्तम्—**स्मरन्ति हि**।

'संयोगेऽस्तिविवक्षायां नित्ययोगेऽतिशायने।
भूमिनिन्दाप्रशंसासु भवन्ति मतुबादयः॥ इति

इह च यज्ञदत्तादीन्प्रसहत इति वाक्यशेषाद् भूम्न्यतिशायने चेति ज्ञायते, दृष्टान्तदार्ष्टान्तिकयोरापेक्षिकातिशयसद्भावान्मुख्यत्वं शङ्कते—**नन्वेवमिति**। नानेन भाष्येण निकृष्टमात्रापेक्षया प्रयोगे गौणत्वमुक्तम्, किं तु सर्वापेक्षयोगे निकृष्टमात्रापेक्षया प्रयोगविषयस्य मुख्यस्यातिशयस्योपचारार्थमुपन्यास इति परिहरति—**सत्यमिति**। मुख्यत्वं चात्र सम्भवमात्रेणोच्यते, न प्रकृतोपयोगितया, परशब्दार्थग्रहणमित्युपक्रमात्। वर्त्तमानक्रियत्वस्य गौणत्वे देवदत्तः पचति, योऽधुना भुङ्क्त इति दृष्टान्तो दातव्यः। विधिपक्षेऽपि तर्ह्यापेक्षिकं मुख्यमेव साधकतमं भविष्यतीत्याशङ्क्याह—**भवतस्त्विति**। वर्त्तमानक्रियत्वगौणत्वयोर्दृष्टान्तत्वेनात्रोपादानम्। यथा वर्त्तमानक्रियत्वोपादानवत्सर्वापेक्षसाधकतमत्वस्य

क्रियां प्रत्युपादानात्, तस्य च यथा वर्त्तमानक्रियत्वस्य गौणत्वे निमित्तं नास्ति, तथा साधकतमस्य न्यूनापेक्षायां निमित्तं नास्तीत्यर्थः ॥ २९ ॥

भा० प्र०—पूर्वपक्षी ने शङ्का की है कि शूर्प में अन्नसाधनता न रहने पर उसकी स्तुति अनुचित है। इसके समाधान में सिद्धान्ती का कहना है कि शूर्प के द्वारा होम की कर्तव्यता श्रुति में उक्त होने पर "तेन हि अन्नं क्रियते" इस प्रकार उपदिष्ट होता है। हल आदि वस्तुओं में अन्न की साधनता नहीं है, सभी द्रव्यों से अन्न की निष्पत्ति नहीं हो सकती है, अतः इन द्रव्यों की अपेक्षा शूर्प की अन्न के प्रति साधनता होने से विहित शूर्प की स्तुति की जाती है। शूर्प से अतिरिक्त किसी वस्तु में अन्न की साधनता है या नहीं—यह विचार निष्प्रयोजन है। राम बलवान है—यह कहने पर श्याम, कृष्ण आदि की अपेक्षा ही उसकी बलवत्ता प्रतीत होती है, व्याघ्र, सिंह आदि की अपेक्षा उसकी बलवत्ता सिद्ध नहीं होती है।

'अर्थः' = सफल, 'तु'=किन्तु, "विधिशेषत्वात्" = विधि का शेष या अङ्ग होने से, "यथा लोके" = जैसे संसार में लौकिक दृष्टान्त में। लौकिक दृष्टान्त में देवदत्त आदि को बलवान् कहने पर उसके सजातीय कम बल रखने वाले यज्ञदत्त आदि की अपेक्षा ही उसकी बलवत्ता की प्रतीति होती है। प्रकृत में भी जो द्रव्य अन्न में साधन नहीं है उनकी तुलना में शूर्प को अन्न का साधन कहा गया है। अतः शूर्प की स्तुति विधि का शेष या अङ्ग है, यह कथन असङ्गत है ॥ २९ ॥

## यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ १.२.३० ॥

शा० भा०—यद्यपि च भवेदन्नकरणं हेतुर्दर्वीपिठरप्रकाराणाम्, तथाऽपि शूर्प एवावतिष्ठेत। शब्दादन्नकरणं हेतुरिति विज्ञायते। शब्दश्च शूर्पस्याऽऽह, न दर्विपिठरादीनाम्। तद्धि निर्दिश्यते, यस्माच्छूर्पेणान्नं क्रियते, तस्माच्छूर्पेण जुहोतीति। यथा यस्माद्बलवदुपध्मातोऽग्निस्तेन मे गृहं दग्धमिति, नानग्निरपि बलवदुपध्मातो दहतीति गम्यते। अथ मतम्, येन येनान्नं क्रियते प्रणाड्या शूर्पादन्येनापि, तेन तेनापि होमः क्रियत इति। अव्यवस्था विधीनां स्यान्न केनचित्। प्रणाड्याऽन्नं क्रियते। तत्र यावदुक्तं स्याज्जुहोतीति, तावदेवान्नकरणेन जुहोतीति। अस्मत्पक्षे पुनः शूर्पं स्तूयते। तेन ह्यन्नं क्रियत इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि, प्ररोचनायैव। तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्यमिति ॥ ३० ॥

इति तृतीयं हेतुवन्निगदाधिकरणम्

भा० वि०—अभ्युपगम्यापि हेतुपरत्वं न दर्व्यादौ प्रसङ्ग इत्याह—**यदि च हेतुरिति**। यदि चेत्यादिसूत्रभागं व्याचष्टे—**यद्यपि चेति**। दर्वीपिठरप्रकाराणां दर्वीपिठरजातीयानामन्नकरणत्वं हेतुः यद्यपि भवेत्, तथापि स हेतुः शूर्प एव व्यवतिष्ठेतेत्यन्वयः, दर्वीपिठरप्रकाराणामित्यनेनात्यन्तसाधकतमत्वाभावेऽपि दर्व्यादिसाधारणं साधकतमत्वरूपं करणत्वं शूर्पस्य दर्शितम्।

ननु कथं शूर्पगतमेवान्नकरणत्वं हेतुः स्यादित्याशङ्क्यानिर्देशादिति सूत्रमात्रं व्याचष्टे—**शब्दादिति**। नत्वकरणत्वसत्तामात्रेणेत्यर्थः, हेतोः शब्दनिर्दिष्टत्वे सत्यपि कथं व्यवस्थेत्यत आह—**शब्दश्चेति**। शूर्पगतस्यान्नकरणत्वस्यैव हेतुत्वमाहेत्यर्थः, कथमिदमवगम्यते ? तत्राह—**तद्धीति**। शूर्पं हि होमसम्बन्धितया निर्दिश्यते=प्रतिज्ञायत इत्यर्थः। अन्यस्मिंश्च प्रतिज्ञातेऽन्यगतस्य हेतुत्वायोगात् शूर्पगतमेवान्नकरणत्वं हेतुरिति भावः तत्र सिद्धं वाक्यार्थमाह—**यस्मादिति**। शूर्पेण जुहोतीति इति तेन वाक्यार्थस्सिद्धो भवतीति शेषः।

ननु यस्माद्धूमवान् पर्वतः तस्मादग्निमानित्यादौ यथा न पर्वतगतत्वं विशेषणमादाय हेतुत्वम्, तद्वदिह किं न स्यादित्याशङ्क्य नेदं सामान्यतो दृष्टं किंतु विशेषतो दृष्टमत उदाहरति—**यथेति**। नह्यत्र बलवदुपाध्मातत्वमात्रं गृहदाहकत्वे हेतुः शङ्खादेरपि प्रसङ्गात् तेनाग्निगतत्वेन विशेषितं तद्वदत्रापि इति भावः, "सामान्यादिति चेत्" इति सूत्रावयवं व्याचष्टे—**अन्येनापीति**। अन्येन दर्व्यादिनेत्यर्थः, तेनेति तृतीया सर्वनामार्थस्य शूर्पस्य बाधादन्नकरणत्वमात्रं हेतुः स्यादिति शङ्कार्थः। सूत्रशेषेणोत्तरमाह—**अव्यवस्थेति**। तथा सतीतिशेषः, अतिप्रसङ्गं विवृणोति—**न केनचिदिति**। सर्वेणापि यथाकथञ्चित् क्रियत इत्यर्थः, तत्र च विधिवैयर्थ्यमित्याह—**तत्रेति**। जुहोतीत्युक्तेऽपि येन केनचिद्धोतव्यमिति तावत् प्रतीयते अन्नकरणेनेत्युक्तेऽपि सर्वस्यान्नकरणत्वात् सर्वेण च होतुमशक्यत्वाद्येन केनचिदित्येव प्रतीयते, ततो विधिरनर्थकः स्यादिति प्रत्ययस्यैव बाधः, तस्माद्धेतुत्वाभ्युपगमेऽपि शूर्पगतमेवान्नकरणत्वं हेतुरिति भावः, एवमभ्युपगम्यापि हेतुत्वं व्यवस्थामुक्त्वाभ्युपगमं त्यजन् स्वपक्षे हेत्वनभिधानाद्धि शब्दानुपपत्तिमाशङ्क्य परिहरति—**अस्मत्पक्ष इति**। प्रसिद्धान्नकरणत्वाभिधानेन स्तुत्यर्थो हिशब्द इत्यर्थः।

ननु कथमस्य स्तुतिपरत्वम् ? वृत्तान्तपरत्वप्रतीतेरत आह—**वृत्तान्तेति**। वृत्तान्तस्य मानान्तरसिद्धतया तज्ज्ञानेऽनुपयोगात् स्तुतिपरत्वमेव वाक्यस्यावगम्यते इत्यर्थः, तस्माद्विधिवन्निगदानामिवैषामपि स्तुतिपरत्वमेवेत्यधिकरणार्थमुपसंहरति—**तस्मादिति**। शूर्पस्यापि मुख्यकरणत्वाभावात् विधौ च लक्षणायोगात् हेतुत्वानुपपत्तेरिति। इतिरधिकरणसमाप्तिं द्योतयति ॥ ३० ॥

त० वा०—अभ्युपेत्यवादोऽयम् । यद्यपि हेतुविधानम्, तथाऽपि न दर्विपिठरादेः प्रसङ्गः । कुतः ? शूर्पं हि विधायाऽन्नकरणं हेतुरुच्यते । सोऽपि च न लोके प्रसिद्धः । शब्दमेव दृष्टान्तवाचिनमनुमाय साधयितव्यः । तदनुमाने च श्रुतहेतुत्वान्यथानुपपत्तिः प्रमाणम्, सा च यावत्येव हेतुत्वमुपपन्नम्, ततोऽधिककल्पनायै न प्रभवति । शूर्पे च होमसम्बन्धित्वेन प्रतिज्ञातेऽन्यधर्मस्याहेतुत्वादवश्यं तद्गतमेवान्नकरणत्वं वक्तव्यम् । सन्निधेश्च तदत्रच्छिन्नमेव तद्गम्यते । लोकेऽपि च यं धर्मिणं प्रतिज्ञाय, यो हेतुरुपदिश्यते, स प्रथमं तावत्तद्गतविशेषात्मनैव प्रतीयते । तदात्मकस्य तु साध्यांशानुगमाभावात्सामान्यमात्रं विवक्षितमिति, दृष्टान्तप्रयोगवेलायामेवावधार्यते । वेदहेतूनां पुनर्न सामान्यात्मना साध्यसम्बन्धोऽवगतः, न विशेषात्मना । सोऽधुनैवार्थापत्त्या कल्पनीयः । तत्र विशेषस्योपादानात्सामान्याप्रसिद्धेश्च तत्परित्यागनिमित्तस्यासम्भवादुपात्तविशेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि तु दर्विपिठरादिगतान्नकरणत्वहोमसम्बन्धाविनाभावो न कल्प्यते । न किंचिच्छ्रुतम्, दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्यं यच्छूर्पमन्नकरणम्, तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम् । लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते, नाग्निमात्रम् । यथा च गमनं गोशब्दव्युत्पत्तिनिमित्तत्वेनोपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते, न गन्तृमात्रविषयमिति, गोशब्दव्यवस्था । तथा शूर्पगतान्नकरणहेत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः ।

तत्रैतावानर्थः स्यात्—यद्यन्नकरणसमर्थं शूर्पम्, तेन तेन होतव्यम्, न दर्विपिठरादिग्रहणम् । यथा बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते, स एवानुपध्मातो न दहेन्न तु शङ्खादयो बलवदुपध्माता दहन्ति । तस्माद्व्यवस्था । यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण महासामान्यं विवक्ष्यते ततो यद्यद्गृहीतम्, तस्य तस्य काचिदन्ननिमित्तता विद्यत इत्यव्यवस्थितत्वाद्धोमाक्षिप्तद्रव्यमात्रानुवादः सन्ननर्थकोऽन्नकरणशब्दः । तस्मादन्नहेतुत्वेन स्तुतित्वमेव वरमिति ॥ ३० ॥

इति हेतुवन्निगदाधिकरणम् ॥ ३ ॥

न्या० सु०—यद्यपि च भवेदित्यनुज्ञादर्शनाद्विधिपक्षोऽपि सम्मत इति कस्यचिद् भ्रान्तिः स्यात्, तन्निवृत्त्यर्थमाह—अभ्युपेत्येति । अस्य च प्रयोजनं 'चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानुयाजानिति बहुवचनात्सर्वानुयाजाभावस्य हेतुत्वावगतेरवभृथे बर्हिरनुयाजमात्राभावेऽतिप्रसङ्गनिवृत्तिः तद्भाष्यं व्याचष्टे—यद्यपीति । अत्यन्तसाधकतमत्वाभावेऽप्यापेक्षिकसाधकतमत्वप्रदर्शनाय भाष्ये दर्विपिठरप्रकाराणामित्युक्तम् । निर्देशादित्ये-

तत्सूत्रावयवव्याख्यानार्थं शब्दादित्यादिभाष्यं व्यवस्थाहेतुप्रश्नपूर्वकं व्याचष्टे—कुत इति। सत्यपि हेतोः शब्दोक्तत्वे कथं व्यवस्थेत्याशङ्क्य शब्दश्चेति भाष्येण शूर्प्पगतस्यैवान्नकरणत्वस्य हेतुत्वाभिधानादिति परिहृतम्। तदुपपादयितुमाह—सोऽपि चेति। शूर्प्पगतस्यैवान्नकरणत्वस्य हेतुत्वं शब्देनोक्तम्।

इत्येतदेव कथमवगम्यत इत्याशङ्क्य तद्धि निर्दिश्यत इत्यादिभाष्यकृतोक्तं तस्याभिप्रायमाह—शूर्पे चेति। अनेन च निर्दिश्यत इति प्रतिज्ञाभिप्रायं व्याख्यातम्। प्रकृतशूर्प्पनिर्देशकसर्वनामपरया तृतीयया तद्गतस्यैवान्नकरणत्वस्याभिधानात्तस्यैव हिशब्देन हेतुत्वमुच्यते इत्येवं च तद्भाष्यं व्याख्येयमिति दर्शयितुमाह—सन्निधेश्चेति। एकपदोपादानलक्षणा श्रुतिः सन्निधिशब्देनाभिप्रेता।

ननु लोके व्याप्त्यविरोधेन सामान्यरूपस्यैव धूमादेर्हेतुत्वावगमात्तद्दृष्टान्तेनात्रापि तथात्वापत्तेः साध्यधर्म्मिणा विशेषणमयुक्तमित्याशङ्क्याह—लोकेऽपि चेति। वेदे तु हेत्वन्यथानुपपत्तिकल्प्यस्य दृष्टान्तवाक्यस्य सामान्यव्याप्तिविषयत्वायोगान्न तदनुरोधेन हेतोः सामान्यरूपतापत्तिरित्याह—वेदेति। कीदृशं तर्हि अत्र दृष्टान्तवाक्यं कल्प्यते इत्यत आह—तस्मादिति। शूर्प्पत्वैकार्थसमवायिनोऽन्नकरणत्वस्यैव हेतुत्वविधायकविधिवचनद्वाराऽन्नकरणत्वावान्तरसामान्योपलक्षणार्थं शूर्प्पग्रहणम्। विशेषदृष्टसंज्ञकं चैतदनुमानम्। लोकेऽपि प्रसिद्धमित्याह—तदेतदिति। शब्देऽपि ज्ञाने गमेर्डोरिति गोशब्दव्युत्पत्तिनिमित्तत्वेनोपात्तस्य गमनस्य प्रतिपादेन सास्नादिमता विशेषणदर्शनात्तद्दृष्टान्तेनेहापि व्यवस्थासिद्धिरित्याह—यथा चेति।

नन्वेवं तर्हि शूर्प्पेण जुहोतीत्येतावतैव सिद्धेर्हेत्वभिधानानर्थक्यं स्यादत आह—तत्रेति। यथेति। दृष्टान्तभाष्यं व्याचष्टे—यथेति। उपसंहरति—तस्मादिति। प्रत्ययश्रुतिबलेन पदश्रुतिबाधात्सामान्यमात्रस्य हेतुत्वाभिधानाय सामान्यादिति चेदिति सूत्रावयवव्याख्यानार्थमथेनि भाष्यं व्याचष्टे—यदि पुनरिति। आनर्थक्यापत्तेः प्रत्ययश्रुतिबाधायाव्यवस्था विधीनां स्यादिति सूत्रावयवव्याख्यानार्थमव्यवस्थेति भाष्यं व्याचष्टे—तत इति। हेत्वनभिधानेऽपि हिशब्दानर्थक्यापत्तिशङ्कानिराकरणार्थमस्मत्पक्षे पुनरिति भाष्यं स्पष्टत्वान्न व्याख्यातम्। तस्मादित्युपसंहारभाष्यम्मसमर्थशूर्प्पव्यावृत्त्यर्थं हेत्वभिधानोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे—तस्मादिति। अभ्युपेत्यवादमात्रमेतत्। वस्तुगत्या शूर्प्पस्यापि मुख्यान्नकरणत्वाभावाद्विधौ च लक्षणायोगाद्धेतुत्वानुपपत्तिरिति भावः॥ ३०॥

इति न्यायसुधायां तृतीयं हेतुवन्निगदाधिकरणम्।

भा० प्र०—इस सूत्र के द्वारा सिद्धान्ती ने "तुष्यतु दुर्ज्जनः" इसी न्याय का अवलम्बन कर शूर्प वाक्य को हेतु-विधित्व मानकर ही कहा है कि इसको हेतुविधि मानने पर भी शूर्प से अतिरिक्त किसी वस्तु में होम-साधनता विवक्षित नहीं होती

है, क्योंकि, पाकशाला में अग्नि प्रज्वलित है, इसलिए मेरा गृह तप्त हो गया है, यह कहने पर अग्नि की ही दाहकता सिद्ध होती है। उसी तरह प्रकृत में भी हेतु के द्वारा शूर्प की ही होम के प्रति साधनता कही गई है। 'शूर्पेण' इस पद में तृतीया विभक्ति से बोधित करणत्वसामान्य के द्वारा दर्वी, स्थाली आदि की उपस्थिति करने पर अन्य किसी वस्तु की होम साधन की कल्पना का प्रसङ्ग ही नहीं उठता है। क्योंकि किञ्चिन्निरूपिता हेतुता प्रायः सभी वस्तुओं में है। अनुमान के द्वारा दर्वी आदि की उपस्थिति करने पर भी "शूर्पेण' इस पद के द्वारा प्रत्यक्ष तृतीया श्रुति से बोधित शूर्प अपेक्षाकृत दुर्बल होने से उसके साथ शूर्प का विकल्प नहीं हो सकता है। अतः "तेन हि अन्नं क्रियते" इत्यादि हेतु के समान प्रतीयमान वाक्य हेतुविधि नहीं है वरन् अर्थवाद मात्र ही है।

'यदि' = यदि, 'च' = और, "हेतुः" = हेतुविधि के रूप में "निर्देशात्" = तथापि शूर्प का विशेषरूप में उल्लेख होने से, 'अवतिष्ठते' = शूर्प की ही हेतुता अवस्थित है। सामान्यात् इति चेत्=यदि कहा जाय, 'इति चेत्' = कहा जाय, [तृतीया विभक्ति होने से करणत्वसामान्य हेतु दर्वी स्थाली आदि ही ग्रहणीय होगा] 'अव्यवस्था' = अनियम, "विधीनां" विधियों की, 'स्यात्' = होगी। और यदि यह हेतुविधि ही रहती है, तथापि पूर्व की ही हेतुता व्यवस्थित है, क्योंकि उसी का निर्देश अर्थात् विशेष रूप से उल्लेख है। यदि 'शूर्पेण' इस तृतीया विभक्ति के द्वारा करण सामान्य विवक्षित होने से दर्वी, स्थाली आदि का भी हेतुत्व ग्रहण के योग्य है, यह मानने पर विधि की व्यवस्था नहीं होगी ॥ ३० ॥

अथ चतुर्थं मन्त्राधिकरणम्

## (४) तदर्थशास्त्रात् ।

**शा० भा०—अथेदानीं किं विवक्षितवचना मन्त्राः, उताविवक्षितवचनाः। किम्, अर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेणेति। यद्युच्चारण-मात्रेण, तदा न नियोगता बर्हिर्देवसदनं दामि (मै० सं० १।१।२) इत्येष बर्हिर्लवने विनियुज्येत। अभिधानेन चेत्, प्रकरणेन निर्ज्ञाताङ्गभावो नान्यत्रोपकर्तुं शक्नो तीत्यन्तरेणापि वचनम्, बर्हिर्लवन एव विनियुज्येतेति। तदेवमवगच्छामः। उच्चारणमात्रेणैवोपकुर्वन्तीति। कुतः ? तदर्थशास्त्रात्।**

**यदभिधानसमर्थो मन्त्रः तत्रैवैनं शास्त्रं निबध्नाति। उरुप्रथा उरु प्रथस्वेति (वा० सं० १।२२, तै० सं० १।१।८।१) पुरोडाशं प्रथयतीति (तै० ब्रा० ३।२।४) वचनमिदमनर्थकं यद्यर्थाभिधानेनोपकुर्वन्ति। अथोच्चारणमात्रेण, ततो वक्तव्यो**

विनियोगः, उक्तश्च । अतो नार्थाभिधानेन । यथा साक्षः पुरुषः परेण चेन्नीयते, नूनमक्षिभ्यां न पश्यतीति गम्यते ।

नन्वर्थवादार्थं भविष्यतीति चेत्, न हि । येन विधीयते तस्य वाक्यशेषोऽर्थवाद इत्युक्तम् । न च निरपेक्षेण विहितेऽर्थवादेन किंचिदपि प्रयोजनं क्रियते । अतो नार्थवादार्थं वचनम् ।

तथाऽभ्यादानसमर्था मन्त्रा उदाहरणम् । लिङ्गादेवाऽऽदाने प्राप्ता वचनेन विधीयन्ते । तां चतुर्भिरादत्ते (तै० सं० ५।१।१) इति । चतुःसंख्यार्थमिति चेन्न । समुच्चयशब्दाभावात् ।

तथा, इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते (श० ब्रा० १३।१।२।२१) इत्युदाहरणम् । रशनादाने (तै०सं० ५।१।२) प्राप्तस्य रशनादान एव शास्त्रं विनियोजकम् । तद्विवक्षितार्थत्वे न घटेतेति । ननु गर्दभरशनां परिसंख्यास्यति ।

न शक्नोति परिसंख्यातुम् । परिसंचक्षाणो हि स्वार्थं जह्यात्, परार्थं च कल्पेत, प्राप्तं च बाधेत । तस्मान्न विवक्षितवचना मन्त्राः । अतो न प्रमाणं बर्हिर्देवसदनं दामीत्यस्य रूपं बर्हिर्लवने विनियोगस्य ।

वाक्यनियमात् ।

नियतपदक्रमा हि मन्त्रा भवन्ति । अग्निर्मूर्धा दिवः (तै० सं० १।१।५।१) इति, न विपर्ययेण । यद्यर्थप्रत्यायनार्था विपर्ययेणाप्यर्थः प्रतीयत इति नियमोऽनर्थकः स्यात् । अथोच्चारणविशेषार्था विपर्ययेऽप्युच्चारणमिति नियम आश्रीयते । तेनान्यतरस्मिन् पक्षे नियमोऽर्थवान् स नूनं पक्ष इति । नन्वर्थवत्स्वपि नियमो दृश्यते । यथा--इन्द्राग्नी इति । युक्तं तत्र तत् । विपर्ययेऽर्थप्रत्ययाभावात् ।

बुद्धशास्त्रात् ।

बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति । अग्नीदग्नीन् विहर इति । स बुद्धे किं बोधयेत् । अथ तूच्चारणविशेषार्थाः, बुद्धेऽप्युच्चारणविशेषोऽवकल्प्येतेति । ननु पुनर्वचनात्संस्कारविशेषो भविष्यति । एवमस्मत्पक्षमेवाऽऽश्रितोऽसि । वचनमुच्चारणम् । तद्धि शक्यते कर्तुं नार्थप्रत्यायनम् । तत्प्रतीतेऽशक्यम् । यथा सोपानत्के पादे द्वितीयामुपानहमशक्यत्वान्नोपादत्ते ॥

अविद्यमानवचनात् ।

यज्ञे साधनभूतः प्रकाशयितव्यः । न च तादृशोऽस्ति यादृशमभिदधति । यथा चत्वारि शृङ्गाः (तै० आ० १०।१०।१७) इति । न हि चतुः शृङ्गं

त्रिपादं द्विशिरस्कं सप्तहस्तं किंचिद् यज्ञसाधनमस्ति। तदत्राभिधानार्थः किमभिदध्यात्। उच्चारणार्थे त्ववकल्प्यते। तथा मा मा हिंसीरित्यसत्यामपि हिंसायां किमभिदध्यात्॥

अचेतनेऽर्थंबन्धनात्।

अचेतनेऽर्थे खल्वर्थं निबध्नन्ति, ओषधे त्रायस्वनैमिति। अभिधानेनोपकुर्वन्त एवंजातीयका ओषधिं पशुत्राणाय प्रतिपादयेयुः। न चासावचेतना शक्या प्रतिपादयितुम्। उच्चारणार्थे तु नैष दोषो भवति। तस्मादुच्चारणार्थाः। शृणोत ग्रावाणः (तै० सं १।३।१३) इति चोदाहरणम्॥

अर्थविप्रतिषेधात्।

अर्थविप्रतिषेधोऽपि भवति। अदितिर्द्यौरदितिरन्तरिक्षमिति (तै०आ० १।१३) सैव द्यौस्तदेवान्तरिक्षमिति को जातुचिदवधारयेत्। अनवधारयंश्च किमभिधानेनोपकुर्यात्। उच्चारणमात्रे तु नैष विरोधो भवति। तस्मादुच्चारणार्था मन्त्राः। एको रुद्रो न द्वितीयोऽवतस्थे, असंख्याताः सहस्राणि, ये रुद्रा अधि भूम्यामिति (वा० सं० १६।५४) चोदाहरणम्।

स्वाध्यायवदवचनात्।

स्वाध्यायकाले पूर्णिकाऽवहन्ति करोति। माणवकोऽवहन्तिमन्त्रमधीते। नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति अक्षरानुपूर्व्या अवधारण एव यतते। येन च नाम प्रयोजनम्, तदभ्यसितव्यम्। अत उच्चारणाभ्यासादुच्चारणेन प्रयोजनमित्यवगच्छामः॥

अविज्ञेयात्।

अपि च केषाञ्चिन्मन्त्राणामशक्य एवार्थो वेदितुम्। यथा अम्यक् सात इन्द्र ऋष्टिरस्मे (ऋ० सं० २।८) इति। सृण्येव जर्भरी तुर्फरीतू (ऋ० सं० ८।६।२) इति। इन्द्रः सोमस्य काणुका इति च। एते किं प्रत्याययेयुः। उच्चारणार्थे तु न दोषः। तस्मादुच्चारणार्था मन्त्रा इति॥

अनित्यसंयोगान्मन्त्रानर्थक्यम्॥ १.२.३१॥

शा० भा०—अनित्यसंयोगः खल्वपि भवेन्मन्त्रेष्वभिधानार्थेषु। यथा किं ते कृण्वन्ति कीकटेषु गावः (ऋ० सं० ३।३।२१) इति। कीकटा नाम जनपदा। नैचाशाखं नाम नगरम्। प्रमगन्दो राजेति। यद्यभिधानार्थाः, प्राक् प्रमगन्दान्नायं मन्त्रोऽभूतपूर्व इति गम्यते। तदेतैस्तदर्थशास्त्रादिभिः कारणैर्मन्त्राणामविवक्षितवचनता॥ ३१॥

इति पूर्वपक्षः।

भा० वि०—सङ्गतिं वदन् विषयसंशयौ दर्शयति—**अथेत्यादिना**। इति शब्दादूर्ध्वं विचार्यत इत्यध्याहारः अत्र धर्मप्रमाणभूतविध्येकवाक्यतथार्थवाद-प्रामाण्येऽभिहिते सति, विवक्षितार्थत्वेन मन्त्राणां तदन्तर्भावादप्रामाण्यमित्यर्थ-वादहेतुप्रत्युदाहरणेन पूर्वपक्षवादिना प्रत्यवस्थानादस्यार्थवादविचारसङ्गतिरथ-शब्देनोक्ता कोऽर्थवादः ? को वा न ? इति कोष्ठशोधनिकात्मकस्याधिकरणद्वय-स्यार्थवादाधिरणशेषत्वादव्यवधायकत्वमिदानीमित्यनेन दर्शितम्, प्रकरणान्त-रत्वाच्चास्य समनन्तरसङ्गत्यभावो न दोषाय। विवक्षितमनन्यपरं वचनमर्था-भिधानं येषां ते, तथा अत्र चार्थवत्तामपि वाक्यानामुभयथा प्रयोगदर्शनात् संशयः निवक्षितवचनत्वमपि मन्त्राणां न विधित्वेन स्तुतित्वेन वा, किन्तु विहितार्थ-प्रकाशतया अनुष्ठानाङ्गत्वेनेति दर्शयन् संशयं विवृणोति—**किमर्थेति**। विना-नुष्ठेयार्थस्मृत्येति मात्रचोऽर्थः, पूर्वोत्तरपक्षप्रयोजनमाह—**यद्युच्चारणेति**। पूर्वपक्षे सामान्यविनियोगस्य प्रकरणसिद्धत्वेऽपि, यस्य बर्हिर्देवसदनं दामीत्यादेर्विशेष-विनियोगश्रुत्यभावः तस्य नियोगतो बर्हिर्लवणादौ प्रयोगे प्रमाणमिति कर्म-विशेषानादरेण यत्र क्वचन प्रयोगप्रसङ्गः, सिद्धान्ते तु सिद्धे सामान्यविनियोगे सामर्थ्यादेव विशेषविनियोगसिद्धेः, आन्तरेणापि वचनं कर्मविशेषादरः फलमित्यर्थः, तत्र एवं विचारे सतीत्यर्थः, एतदिति मन्त्रोपकारकत्वम्, एवमित्युक्तमुपकारकत्व-प्रकारमाह—**उच्चारणेति**। यद्यपि कर्मकालप्रयोज्यानामपि मन्त्राणामर्थाभिधाना-र्थता प्रतीयते तथापि ध्यानादिनापि अनुतिष्ठासितार्थस्मृतिसिद्धेरभिधानार्थत्वेऽपि अदृष्टकल्पनासाम्यादुच्चारणाभिधानार्थत्वसन्देहे उच्चारणंविनार्थ प्रत्ययासिद्धेः प्राथम्यावश्यकत्वाभ्यामुच्चारणार्थतैव न्याय्येति भावः। एवं न्यायबलेन मन्त्र-मात्रस्यादृष्टार्थतामुक्त्वा, तद्विशेषेषु लिङ्गबलेनापि तद्वक्तुं पृच्छति—**कुत इति**। सूत्रेणोत्तरमाह—**तदर्थेति**। यस्मिन्नर्थे मन्त्रस्याभिधानसामर्थ्यम्, तस्मिन्नेव विनि-योजकशास्त्रदर्शनात् न सामर्थ्यं विनियोजकमिति व्याचष्टे—**यदीति**। यद्यपि परिहारसूत्रक्रमानुरोधेनास्मिन् सूत्रे अभ्यादानशास्त्रमारभ्योदाहर्तव्यम्, तथापि कथञ्चिदुदाहृतैरपि प्रकृतमन्त्रानर्थक्यसिद्धेः व्यत्यासेनोपन्यास इत्यवगन्तव्यम्।

ननु सामर्थ्यस्यापि दर्शनात् कथं शास्त्रस्यैव विनियोजकत्वमत आह—**वचनमिति**। इदमिति वचनस्य प्रत्यक्षत्वाभिधानेनार्थाभिधानेनोपकारस्य प्रत्ति-पन्नत्वेनानादेयत्वं सूचयति, उच्चारणोपकारत्वपक्षे तु विनियोजकान्तराभावात् शास्त्रमर्थवदित्याह—**अथेति**। न च विनियोगे विगानमिति वदन्निदमित्युक्तं विवृणोति—**उक्तश्चेति**। नार्थाभिधानेनोपकुर्वन्तीत्यनुषङ्गः, मन्त्ररूपालोचनाया-मपि परेण विनियोगं दृष्ट्वा तदभावं प्रत्येष्यत इत्यत्र दृष्टान्तमाह—**तद्यथेति**। साक्षत्वं च प्रतिभासतो न वस्तुतः। लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यर्थत्वेना-

प्यर्थवत्त्वान्नानर्थकमिति चोदयति—**नन्विति**। परिहरति—**नहीति**। तत्र हेतुर्यथेति येनेति विधिना एकवाक्यत्वमर्थवत्त्वे कारणमुक्तमर्थवादाधिकरण इत्यर्थः, ततः किमत आह—**नचेति**। मन्त्रलिङ्गेन प्रकरणेन वा कल्पितस्य विनियोगविधेः स्वात्मसमीपे अर्थवादमपश्यतः स्वयमेव प्ररोचनाशक्त्याविर्भावेन निवृत्तापेक्षत्वात् न दूरस्थया स्तुत्या प्रयोजनमित्यर्थः, फलितमाह—**अथ इति**।

इह तु शास्त्रस्यार्थवादत्वाभावेऽपि गुणविधित्वमस्त्विति शङ्कां, निराकर्तुमस्यैव सूत्रस्योदाहरणान्तरमाह—**तथेति**। अभ्यादानसमर्थाः=अभ्यादानाभिधानसमर्था इत्यर्थः। तत्र सूत्रं योजयति—**लिङ्गादिति**। "देवस्य त्वा सवितुः-प्रसवेऽश्विनोर्बाहुभ्याम्, पूष्णो हस्ताभ्याम्, गायत्रेणच्छन्दसा ददेङ्गिरस्वात् अभ्रिरसि नारिरसि पृथिव्यास्सदस्थादग्निं पुरीष्यं अङ्गिरस्वदा भर त्रैष्टुभेन त्वाच्छन्दसामुददेऽङ्गिरस्वत् बभ्रिरसि नारिरसि त्वया वयं सदस्थ आग्निं शकेम खनितुं पुरीष्यं जागतेन त्वाच्छन्दसा ददेऽङ्गिरस्वत्" इत्येतेषां चतुर्णामपि मन्त्राणामादद इत्यभिधानसामर्थ्यादादाने प्राप्तत्वेऽपि चतुर्भिरित्यादिवचनेनादान एव ते विधीयन्ते तच्चानर्थकमित्यर्थः। चतुःसङ्ख्यालक्षणगुणविधानार्थं पुनर्वचनमर्थवदिति चोदयति—**चतुस्सङ्ख्येति**। सङ्ख्याया अवच्छेदकत्वदर्शनान्मन्त्राश्रयायाश्च सङ्ख्याया क्रियावच्छेदकत्वासम्भवात् मन्त्रावच्छेदकत्वस्य च विधानमन्तरेणापि सिद्धेरनर्थकं तदभिधानमिति, परिहरति—**अन्तरेणेति**। लिङ्गाद्विकल्पप्राप्तौ समुच्चयार्थं वचनमिति, शङ्कते—**समुच्चयेति**। च शब्दादेः तद्वाचकस्याभावान्मैवमित्याह—**नेति**। चशब्दाद्यभावमन्त्रसङ्ख्ययोः परस्परनियमादरुणैकहायनीवत् क्रियाङ्गत्वेन समुच्चयः स्यादित्यपि न वाच्यं लिङ्गप्राप्ततया मन्त्राणामविधेयत्वेन सङ्ख्याविशिष्टमन्त्रविधेरसम्भवात् अरुणैकहायनी, न चैवं पूर्वपक्षेऽपि विकल्पप्रसङ्गे मन्त्रेष्विति वाच्यम्, चतुर्भ्योऽदृष्टनिष्पत्तेर्वचनगम्यत्वेन समुच्चयस्यैव युक्तत्वादिति भावः, अत्र तर्हि विधित्वाभावेऽपि भवेत् परिसङ्ख्यानादर्थवत्त्वमिति शङ्कां निरसितुमुदाहरति—**तथेति**। कथमिदमस्योदाहरणमित्याशङ्क्य सूत्रं योजयति—**रशनेति**। विवक्षितार्थत्वे हि रूपादेव रशनादाने प्राप्तस्य मन्त्रस्य तत्रैव विनियोजकं शास्त्रं स्यात्, यच्च घटत इति योजना। अस्तु तर्हि परिसंख्याविधित्वमित्याह—**नन्विति**। गर्दभरशनां वर्जनीयतया बोधयति शास्त्रमित्यर्थः, ततश्च नापूर्वविधित्वमित्याशयः।

सिद्धान्त्याह—**न शक्नोतीति**। तत्र हेतुः परिसञ्चक्षाणो हीति–विधिरित्यर्थः। अयमाशयः इह कदाचिदश्वाभिधानीमादत्त इति वचनव्यक्तिमाश्रित्यादाने गर्दभरशनायाः परिसङ्ख्या स्यात्, कदाचिदित्यश्वाभिधानीमितिवचनव्यक्त्या मन्त्रे स्यात्, उभयथापि दोषत्रयापत्तिः, तथा हि विधिपरत्वेन प्रतीयमानस्य तथात्वानभ्युपगमरूपस्वार्थहानिरेकः, परस्य गर्दभरशनां नेत्यस्य वाक्यस्यार्थ एवार्थो

यस्य स परार्थं रशनादानमन्तरेण बन्धुमशक्यतयार्थात्प्राप्तस्य गर्दभरशनादानस्य मन्त्रलिङ्गावगतस्य मन्त्रगर्दभाभिधानीसम्बन्धस्य च बाधः प्रसज्येतेत्यन्य इति दोषत्रयापत्तेः न परिसङ्ख्या युक्तेति ।

ननु परिसङ्ख्यानङ्गीकारे वाक्यस्य का गतिरित्याशङ्क्यादृष्टार्थत्वे मन्त्राणां विनियोगापेक्षत्वादपूर्वविधित्वमेवेत्यभिसन्धाय सूत्रार्थं निगमयति—**तस्मान्नेति** । अविवक्षितार्थत्वेऽपि किमित्याशङ्क्य पूर्वोक्तं पूर्वपक्षप्रयोजनं स्मारयन्नाह—**अत इति** । विनियोजकशास्त्रवैयर्थ्यप्रसङ्गान्न मन्त्रसामर्थ्यं मन्त्रविनियोगे प्रमाणमित्यर्थः ।

न चैवं विनियोजकशास्त्रहीनानां बर्हिर्देवेत्यादीनां कर्मविशेषनियतः प्रयोगो न स्यादिति वेदितव्यम् प्रयोगपरिग्रहेण प्रधानसम्बन्धिनामेव सतामङ्गाविशेषासम्बन्धिनामपि पाठक्रमानतिक्रमेण यत्र क्वचिदपि प्रयोगसम्भवेऽनिष्टापादनत्वादित्यभिहितम् ।

मन्त्राणामविवक्षितवचनत्वे लिङ्गान्तरमाह—**वाक्यनियमादिति** । सिद्धान्तासम्भवहेतुपरतया सूत्रं व्याचष्टे—**न विपर्ययेणेति** । नानियतपदक्रमादित्यर्थः, ततः किमत आह—**यदीति** । अग्निर्मूर्धेति योऽर्थः प्रतीयते नमूर्धाग्निरित्यनेनापि प्रतीयत एवेत्यनर्थको नियम इत्यर्थः, सम्प्रति पूर्वपक्षसाधकहेतुपरतया सूत्रं व्याचष्टे—**अथेति** । नियतपदक्रम एवोच्चारणविशेषोऽदृष्टाय भवतीति तदर्थश्चेदयं नियम इत्यर्थः, तदा विपर्यये क्रमान्यत्ववदुच्चारणस्यान्यत्वात्तदुच्चारणजस्यादृष्टतद्भावे प्रमाणभावान्नियमोऽर्थवानित्याह—**विपर्यय इति** ।

नन्वस्मत्पक्षेऽपि नियतपदक्रमैरेव वाक्यैरर्थप्रत्यायनाददृष्टं कल्प्यते तेनार्थवानेव नियम इत्याशङ्क्य तर्ह्यर्थप्रत्यायनस्य उच्चारणाधीनत्वात् प्राथम्यावश्यकत्वाभ्यां उच्चारणार्थं एवायं नियमो युक्त इत्याह—**अन्यतरस्मिन्निति** । उच्चारणाभिधानपक्षयोरनयोर्मध्ये यस्मिन्पक्षे क्रमनियमः प्रयोजनातिशयवान् स एवोपादेयः पक्ष इत्यर्थः ।

नन्वर्थवतामपि वाक्यानां क्वचित्क्रमनियम आश्रीयते तस्मान्न तेनार्थविवक्षा साधयितुं शक्येति चोदयति—**नन्विति** । वैषम्येणोत्तरमाह—**युक्तमिति** । तत्र नियमाश्रयणमित्यर्थः, तत्र हेतुर्विपर्यय इति, नचाग्नीन्द्राविति प्रयोगेऽप्यर्थप्रत्ययदर्शनादसिद्धो हेतुरिति शङ्कनीयम् यथेन्द्राग्नी इत्यनेनोपलक्षितोदाहरणान्तरविषयत्वादस्य, तथा हि—इन्द्राग्नो निष्कौशाम्बिरित्यादीन्युदाहरणानि अत्राभिसंहितानि, अर्थप्रत्ययाभावादित्यत्रापि शब्दासाधुत्वमर्थप्रत्ययाभावरूपं चानर्थक्यमित्यादयो दोषा विवक्षिताः, तत्रेन्द्राग्नी इत्यस्य विपर्यये शब्दासाधुत्वमजाद्यजन्तमिति इन्द्रशब्दस्य पूर्वनिपातस्मरणात् निष्कौशाम्बिरित्येतद्विपरीतस्य कौशाम्बिनिरित्यस्य निरादयः क्रान्ताद्यर्थे पञ्चम्येति प्रथमानिर्दिष्टत्वेन निरशब्दस्योप-

सर्जनतया पूर्वनिपातस्मरणात् आनर्थक्यमित्यादयो दोषा यथायोगं योजनीयाः, तेनैतद्दोषभयादस्तु तत्र क्रमनियमः मन्त्राणां तु क्रमनियमाभावेऽपि अर्थवत्त्वादिसम्भवादनर्थकः त्वत्पक्षे क्रमनियम इति भावः ।

मन्त्राणामविवक्षितार्थहेत्वन्तरमाह—**बुद्धेति** । सूत्रं व्याचष्टे—**बुद्धे खल्वपीति** । पाठादिति । विचारपर्यन्तादित्यर्थः, एवेत्यध्वर्युप्रैषं व्यावर्तयति, विदुषा एवार्त्विज्याधिकारादग्नीध्राप्यात्मीयाः पदार्थाः प्रागेवानुष्ठानादवगन्तव्या इति भावः, भवतु बुद्धेऽर्थे प्रैषात्मकशास्त्रप्रवृत्तिः, तथापि किमित्याशङ्क्य पिष्टपेषणन्यायेनाबुद्धबोधकत्वासम्भवात् आनर्थक्यप्रसङ्ग इत्यत आह—**बुद्ध इति** । यदि त्वदृष्टफलकोच्चारणार्थो मन्त्रस्तदा न कश्चिद्दोष इत्याह—**अथेति** । बुद्धेऽस्तिपुनर्वचनप्रयोजनमिति शङ्कते—**नन्विति** । पूर्वपदार्थानुष्ठानसमाप्तावुत्तरपदार्थस्मरणस्य स्मर्यमाणब्राह्मणसामर्थ्यादेव सिद्धे स्मृतिहेतुसंस्कारविशेषानपेक्षत्वेन मन्त्रोच्चारणवैयर्थ्यात् पुनर्वचनाज्जायमानसंस्कारोऽपूर्वरूप आश्रयणीय यथा च पूर्वपक्षापत्तिरिति, परिहरति—**एवमिति** ।

नन्वदृष्टरूपोऽपि संस्कारोऽर्थप्रत्यायनात् भविष्यति, ततश्च मन्त्रस्य दृष्टार्थत्वात् पूर्वपक्षानापत्तिरत आह—**वचनमिति** । प्रत्यायनम् अबुद्धबोधनमित्यर्थः निष्पादितक्रिये कर्मणि विशेषानाधायकत्वेन साधनानुपादाने दृष्टान्तमाह—**यथेति** ।

मन्त्रानर्थक्ये हेत्वन्तरमाह—**अविद्यमानेति** ।

ननु जगतो विचित्रत्वेनैवंविधस्यापि सम्भवात् कथमविद्यमानवचनतेत्याशङ्क्य व्याचष्टे—**यज्ञ इति** । अस्ति यज्ञसाधनभूत इत्यनुषङ्गः कर्म तत्सम्बन्धि वा मन्त्रैः प्रकाशयितव्यम्, न चायं मन्त्रप्रतिपाद्योऽर्थस्तथेत्यर्थः, कथमतथात्वमित्याशङ्क्य मन्त्रोदाहरणपूर्वकमाह—**यथेति** । "त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" इति मन्त्रशेषः, ननु यद्यपि सोऽर्थः कर्मसाधनभूतो नास्ति तथापि किं तत्राह तत्रेति । अदृष्टार्थत्वे तु नानर्थक्यमित्याह—**उच्चारणार्थ इति** । मा मा हिंसीः, मा मा संताप्सम् इत्यत्र चाचेतनेऽप्राप्तयोरपि हिंसासन्तापयोः निषेधानर्थक्याददृष्टार्थतैव युक्तेति, केचिदिति बहुवचननिर्वाहायोदाहरति—**तथेति** ।

इतश्चाविवक्षितार्था मन्त्रा इत्याह—**अचेतन इति** । सूत्रं व्याचष्टे—**अचेतने खल्विति** । कोऽसावर्थः कथं वा तमचेतने बध्नाति मन्त्रोऽत आह—**अभिधानेति** । ओषधिं प्रतिपादयेयुरित्यनेन सम्बोधनं प्रेषणं चार्थशब्देनाभिसंहितमोषधिविषयत्वं चार्थस्य बन्धनशब्दार्थ इति दर्शितं बन्धकत्वमुपपादयितुमभिधानेनोपकुर्वन्त इत्युक्तम् ।

ननु प्रतिपादयन्तु मन्त्राः को दोषस्तत्राह—**न चेति**। अचेतने तस्मिन् आभिमुख्यस्य प्रैषकार्यस्य प्रवृत्तेश्च असम्भवादानर्थक्यमेव स्यादित्याशयः। अस्मन्मते तु नानर्थक्यदोष इत्याह—**उच्चारणार्थेति**। तस्माददृष्टार्था इत्याह—**तस्मादिति**। शृणोत ग्रावाणः इत्यत्राप्यर्थविवक्षायां ग्रावाण इति सम्बोधनासम्भवात् शृणोतेति प्रातरनुवाकश्रवणे प्रेरणानुपपत्तेश्चादृष्टार्थतैव समञ्जसेत्याह—**शृणोतेति**।

मन्त्रानर्थक्ये हेत्वन्तरमाह—**अर्थेति**। सूत्रं व्याचष्टे—**अर्थविप्रतिषेध इति**। कथमर्थयोर्द्युलोकान्तरिक्षलोकयोर्विरोधस्तत्राह—**यैवेति**। "अदितिर्द्यौरदितिरन्तरिक्षमिति एकस्यानेकात्मत्वविरोध इह विप्रतिषेधोऽभीष्ट इति भावः, नन्वेकस्यानेकात्मकतां न वारयति मन्त्रः, अतः कथं विरुद्धार्थत्वमत आह—**अनवधारयन्निति**। स्वार्थमनवधारयन् किमर्थाभिधानेनोपकुर्यान्नैवेत्यर्थः, अदृष्टार्थत्वे तु न विरोध इत्याह—**उच्चारणेति**। निगमयति—**तस्मादिति**। तथैक एव रुद्रः असङ्ख्याताः सहस्राणीति मन्त्रयोरेकानेकत्वं रुद्रस्य बोधयतोरविवक्षितार्थतैव समीचीनेत्याह—**एक इति**।

इतश्च मन्त्रार्थाविवक्षेत्याह—**स्वाध्यायेति**। यथा स्वाध्यायशब्दवाच्यान्यक्षराणि स्वाध्यायकालेऽभ्यस्यन्ते, नैवं वचनरूपमर्थाभिधामभ्यस्यत इत्येवं सूत्रं व्याख्यातुमभिधेयासन्निधिनिमित्तोऽभिधानाभ्यासानादर इति शङ्कां निराकर्तुमाह—**स्वाध्यायेति**। पूर्णिकादासी हन्ति करोति, अवहन्ति एवमभिधेयेऽभिधायके च मन्त्रे सन्निहितेऽपि नाभिधानविषयोऽभ्यासो दृश्यते किंत्वक्षरविषय एवेत्याह—**नासाविति**।

ननु माभूदर्थाभिधानविषयोऽभ्यासः तथापि कथमविवक्षितेति ? तत्राह—**येन चेति**। नाम प्रसिद्धौ तन्नामाभ्यसितव्यमिति सम्बन्धः, तथा किं तत्राह—**अत इति**। यद्यर्थाभिधानमपि प्रयोजनवत् तर्हि तदप्यभ्यसितव्यं न चैतदस्तीत्याशयः।

युक्त्यन्तरमाह—अविज्ञेयादिति। सूत्रं व्याचष्टे—**अपि चेति**। तत्र केषांचिद्वाक्यानामर्थः पदार्थज्ञानेनाविज्ञेयः केषाञ्चित्स्वरूपेण। तत्राद्यमुदाहरति—**यथेति**। सामान्यतो वाक्यस्येन्द्रस्तुतिपरत्वावगमेऽप्यगम्यादिपदार्थाज्ञानात् काणुकेतिपदार्थाज्ञानाच्च विशिष्टवाक्यार्थासिद्धिः इति भावः, स्वरूपेणाविज्ञेयमुदाहरति—सृण्येवेति, अस्मत्पक्षे त्वर्थाभावादेव नाविज्ञेयत्वदोष इत्याह—**उच्चारणेति**। तस्यापि फलितमाह—**तस्मादिति**।

अर्थवत्त्वे मन्त्राणामनिष्टप्रसङ्गोऽपीत्याह—**अनित्येति**। अनित्यसंयोगस्य सिद्धवदुपादानेऽनित्येनार्थेन संयोगः मन्त्राणामविवक्षितार्थता न भवेत्, अतः

प्रसङ्गपरतया व्याचष्टे—**अनित्यसंयोग इति**। मन्त्रेष्वर्थाभिधानार्थेषु सत्स्वर्थानामनित्यत्वसम्भवेन तत्संयोगोऽप्यनित्य एव प्रसज्येत, अतश्च मन्त्राणामनित्यता स्यादिति भावः।

अथ केष्वर्थानित्यत्वसम्भावना ? अत आह—**यथेति**। नाशिरं दुहे न तपन्ति घर्मं आनोभरप्रमगन्दस्य वेदो नौ च शाखं मघवन् रन्धमानः इति मन्त्रशेषः, कथमस्य नित्यार्थतेत्याशङ्क्य तद्गतान् पदार्थान् अनित्यान् दर्शयति—**कीकटा नामेति**। तेनायमत्र मन्त्रार्थः—विश्वामित्रेण कर्मार्थं धनं प्रार्थयमानेनेत्थमिन्द्रोऽभिहितः, हे मघवन् याः कीकटेषु गावस्ताः तव किं कुर्वन्ति न तावदाशिर सोमसंस्कारार्थं पयो दुहते न च तपन्ति घर्मं तप्ते घृते पयोनिक्षेपेण निष्यन्दीकृते यच्छिष्टघृतं तद् घर्मशब्देनोच्यते, तदपि पयोदानेन न साधयन्ति, अतस्तत्प्रमगन्दस्य कीकटाधिपते राज्ञो धनं नैचाशाख्यं नगरं नोऽस्माकमाभराहर अस्मदर्थमपहरेत्यर्थः, अपहृत्य च नोऽस्माकं रन्धय साधयेति तेन कीकटादिपदार्थानामनित्यत्वेन वाक्यार्थस्याप्यनित्यत्वादनित्यसंयोगस्तावत्सिद्ध इति भावः, एवमनित्यसंयोगमुपपाद्य तत्फलं मन्त्राणामनित्यत्वेनाप्रामाण्यमापादयति—**यदिति**। पूर्वपक्षमुपसंहरति—**तदिति**। तस्मादित्यर्थः, अनियतवचनता सत्त्वासत्त्वाभ्यां अनियतोऽर्थः तद्वचनता अविवक्षितार्थता आनर्थक्यमिति यावत्, अनेन चार्थवादाधिकरणपूर्वपक्षसूत्रगतया आनर्थक्यप्रतिज्ञयात्राकृष्टया मन्त्राशेषतया च शास्त्रार्थवत्त्वादिहेतूनां अन्वयो दर्शितः।

यद्वा "तदर्थशास्त्राद्वाक्यनियमात् बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात् स्वाध्यायवदवचनात् अविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यं" इत्यैकसूत्र्यं मन्त्रानर्थक्य [मिति] पदपाठं चाश्रित्य शास्त्रार्थवत्त्वादीनां मन्त्रानर्थक्यप्रतिज्ञया सम्बन्धो दर्शित इति मन्तव्यम्, तस्माद्यथोक्तैः कारणैः अर्थविवक्षासम्भवादुच्चारणमात्रेणादृष्टार्थता मन्त्राणामिति भावः ॥३१॥

**त० वा०**—इहाऽऽनर्थक्यश्रवणात्केचिदेवं सन्देहमुपन्यस्यन्ति **किमर्थवन्तो मन्त्रा उतानर्थका इति**। तत्त्वयुक्तम्—

स्पष्टे शब्दात्प्रतीतेऽर्थे नानर्थक्यं हि शङ्क्यते।
अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ॥ ३ ॥

सर्वत्र हि कार्यदर्शनाच्छब्दानां शक्तयः कल्प्यन्ते। तच्चार्थप्रत्यायनं मन्त्रेष्वप्युच्चार्यमाणेषूपलभ्यते। न चाविशिष्टस्तु वाक्यार्थ इत्येवमादिप्रतिज्ञामात्रसाध्योत्तराः पूर्वपक्षा भवन्ति। तस्मादयुक्तोऽयमुपन्यास इति मत्वाऽऽह—**किं विवक्षितवचना मन्त्रा उताविवक्षितवचना इति**।

नन्वनेनैव हेतुनेदमपि न विचारणीयम् । नैष दोषः । अर्थवतामपि वाक्यानां द्वैविध्यदर्शनात् । उच्चारणार्थप्रत्यायने ह्यविनाभूते, तत्रान्यतरविवक्षया प्रयुज्यमानेऽपि, किंचिन्नान्तरीयकं भवति । यद्यर्थप्रत्यायनं विवक्ष्यते, तदोच्चारणमर्थात्, अथोच्चारणविवक्षा, ततोऽर्थप्रत्यायनमनुषङ्गात् । यथा जपेषु विषविद्यासु चेत्यस्ति विचारावसरः ।

कथं पुनरस्य प्रमाणलक्षणेन सम्बन्धः । पूर्वमेवोक्तमेतत् यथाऽम्नायस्य क्रियार्थत्वादित्ययमेवात्र पूर्वपक्ष इति । तदुत्तरेणैव च निराकाङ्क्षत्वान्न पुनरभिहितम् । एवं हि मन्यते यत्र सोऽरोदीदित्येवमादेः कथञ्चित्सम्बन्धापादनम्, तत्र मन्त्रेषु कः सन्देहस्तस्मादुपयोगविशेष एव चिन्तनीय इति । तत्र विधिस्तुतित्वे तावत्त्रयमेव निराकरिष्यति, अविधिसरूपत्वात् । प्रदेशान्तरविहितस्तुत्यसम्भवाच्च । परिशेषात्स्वरूपप्रयोगे सत्यर्थोच्चारणयोः किं विवक्षितमिति विचार्यते । सामसु तु वाचकत्वाभावादात्मप्रयोगमात्राक्षराभिव्यक्तिपरत्वगतसन्देहः । कथं पुनः पूर्वपक्षवादिनः श्रुत्यसंयुक्तानां केषाञ्चिन्मन्त्राणां प्रयोगसिद्धिः ।

केचिदाहुः । अप्रयोगार्थमेवासावविवक्षितार्थत्वे यतते । न ह्यनाश्रितार्थान् मन्त्रान् कश्चिदपि प्रयुङ्क्ते । अतो यच्च किमुच्चारणमात्रेणोपकुर्वन्तीति, सिद्धवत्प्रयोगाभिधानम्, नैतदङ्गसैव द्रष्टव्यम् । अयं हि तत्र दुष्टोऽभिप्रायः । यदि नामोच्चारणमात्रोपकारं वक्ष्यति । तत्र शक्ष्याम्यस्याप्रयोगं वक्तुमिति । यदपि प्रयोजनकथने बर्हिर्देवसदनं दामीत्ययं बर्हिर्लवनात्प्रच्याव्यते, तदनेन प्रकारेण प्रयोगप्रच्यावनमेव द्रष्टव्यम् । अथ वा याज्ञिकदर्शनेनाविगानात्प्रयोगसिद्धिमविचार्येतरो विचारः । किमर्थं तु याज्ञिकप्रसिद्धिरुपेक्षिता, यतः सैव तावद्युक्तायुक्तत्वेन न विचार्यते । तत्रायमभिप्रायः । सर्वथा तावद् दृढमेषां स्मृतिन्यायेन प्रयोगित्वमवस्थितं तन्न शक्यं बाधितुम्, तस्यैव त्विदं मूलं निरूप्यते । तद्यदि पूर्वपक्षो भविष्यति, ततोऽन्यप्रमाणाभावाद्विनियोजकश्रुत्यनुमानेन मूलं कल्पयिष्यामः । सिद्धान्ते तु लिङ्गप्रकरणयोरेव मूलत्वाध्यवसानम् ।

अथवैवं पूर्वपक्षेऽपि प्रयोगः । स्वाध्यायाध्ययनविधिनैव मन्त्राः पुरुषार्थाय नीयन्ते । तथा हि—दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वमुपकारकत्वेन स्वीक्रियते, प्रयाजादिवाक्यानि, मन्त्रस्वरूपमपि च । तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते । मन्त्राः पुनः कर्मानौपयिकार्थाभिधायित्वात्तेनांशेनानपेक्षिताः । स्तुतिविधि-स्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां स्वरूपमेवाङ्गीक्रियते । स्वाध्यायाध्ययनचोदनाऽपि प्रत्यासन्नतरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वान्न विप्रकृष्टमर्थाभिधानं यावद्गच्छति, प्रयाजादिवाक्येष्वपि तावद्रूपग्रहणमेव प्रसक्तमासीत्तत्त्वभिप्रेतार्थदानेन युक्तम्, न त्विह तथा किञ्चित् । शब्दे च

कार्यस्यासम्भवात्, अर्थे कार्यं विज्ञायते। मन्त्राणां तु शब्द एव सम्भवति। अवश्यं ह्यर्थप्रधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः। तद्व्यापारोत्तरकालत्वादर्थाभिधानस्य। तस्माद्रूपमेवाङ्गम्। तथा च तदर्थशास्त्रादीन्युच्यन्ते।

परिहारसूत्रक्रमानुरोधेन विपर्यस्तान्युदाहरणान्यभ्र्यादानात्प्रभृति दातव्यानि। भाष्यकारस्तु यथातथोदाहृतैरपि कार्यसिद्धिं मत्वैवमुपन्यस्तवानुरुप्रथा उरुप्रथस्वेत्यादि। यथा, साक्ष इति। नीलीरोगाद्युपहतेन्द्रियस्य चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते, तथा मन्त्ररूपमालोचयतामर्थप्रकाशनशक्तिर्नास्तीति गम्यते। ततश्चार्थातिन्त्रत्वम्। अन्यथा स्वयमेव विनियुज्येत।

नन्वर्थवादार्थमिति। लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यभिप्रायम्। न हीतिच्छेदः। विधिनैकवाक्यतयाऽर्थवादाः स्तुत्यर्थाः कल्पिताः। प्रदेशान्तरस्थस्य तु प्रत्यक्षस्याऽऽनुमानिकस्य वा विधेरात्मनः समीपेऽर्थवादमपश्यतः स्वयं प्ररोचनाशक्त्याविर्भाविन व्यावृत्तापेक्षत्वान्न दूरस्थया स्तुत्या कार्यम्। तथाऽभ्यादाने रूपादेव प्राप्तत्वान्मन्त्राणां 'तां चतुर्भिरादत्ते' इत्यनर्थकं वचनम्। चतुःसंख्यामपि ब्रुवदेतन्मन्त्रगतामेव ब्रूयान्न क्रियागताम्। न ह्यन्यगुणोऽन्यगामी भवति। न च निष्क्रियत्वात्कर्माङ्गत्वेनोपदेष्टुं शक्यते। तेनैवं वाक्यं भवेद्य एते चत्वारः, तैरभ्यादानं कुर्यात्ते च प्रागेव वचनाच्चत्वार इत्यानर्थक्यम्। क्रियानङ्गत्वादेव च संख्यायाः। समुच्चयशब्दाभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमानो न शक्यो वारयितुम्। अस्मत्पक्षे पुनर्वचनगम्यत्वाददृष्टस्य न चतुर्भ्यः प्रागस्तित्वे प्रमाणमिति युक्तः समुच्चयः।

उभयोरपि तावद्रशनयोरश्वगर्दभबन्धनार्थमादानमर्थप्राप्तत्वान्न विधीयते। यदि मन्त्रोऽपि रूपात्प्राप्तः, अनर्थकं वचनम्। परिसंख्येति परेवर्जनार्थत्वात्तद्विषया बुद्धिरभिधीयते। साऽपि गर्दभरशनाया आदाने वा स्यान्मन्त्रे वा। उभयथा च त्रिदोषी। विधिपरः सन्न गृह्यत इति स्वार्थं जह्यात्। परस्य च वाक्यस्य गर्दभरशनां नेत्यस्यार्थे कल्पेत। प्राप्तं च रूपादर्थाद्वा मन्त्रमादानं वा बाधेत। अदृष्टार्थत्वे त्वन्धन्यायेन, तत्रैव नीयते, तत्रैव वर्तिष्यते। यदि चाश्वाभिधानीमिति सम्बन्धः स्यात्ततः परिसंवक्षीतापि, न त्वसावस्ति। कारकाणां क्रियापरिहारेणान्योऽन्यसम्बन्धाभावात्। तेन वाक्यमपि क्रिययैव सम्बध्नीयात्। एका च सा। प्रकरणादपूर्वसंयोगश्चाविशिष्टः तस्मान्न परिसंख्या।

प्रयोजनं कथयति। अतो न प्रमाणं बर्हिरित्यादि। तदा हि महाप्रयोगवचनेन सर्वे मन्त्राः केवलप्रधानार्थास्तत्प्रयोगाबहिर्भावावृत्तयो नाङ्गैः सम्बध्येरन्। पाठक्रमानुरोधात्तु तदाऽपि नैव व्युत्क्रमेण प्रयोगः। कर्माण्यनादृत्य सकृदेवानुवाकमध्यायं वा पठित्वाऽनुष्ठीयते।

अग्निर्मूर्धेति योऽर्थः प्रतीयते, स मूर्धाग्निरित्यनेनापीत्यनर्थको नियमः। यस्य त्वदृष्टार्थता, तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात्क्रमान्यत्वं न युक्तमिति नियमार्थवत्ता। अथ नियतप्रत्यायनाददृष्टं कल्प्येत, तदुच्चारणादेवोपपद्यते, तदधीनत्वान्नियतप्रतीतेः। यस्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु नियमो दृश्यते। यथेन्द्राग्नी नीलोत्पलं राजपुरुषश्चित्रगुर्निष्कौशाम्बिरिति। युक्तं यत्र विपर्ययेऽपशब्दार्थान्यत्वानर्थक्यप्रसङ्गात्। अजाद्यदन्तविशेषणत्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते। तेनाग्नीन्द्रावित्यसाधुत्वं पुरुषराज इत्यर्थान्यत्वं कौशाम्बिनिरित्यनर्थकत्वम्। यस्त्वग्नीन्द्राविति क्वचित्प्रयोगः, स च्छान्दसोऽग्नेर्वाऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम्। तुल्यकक्षार्थप्रतीताविन्द्राग्नीपदमेव व्यवस्थितम्। नन्विहापि क्रमान्यत्वादमन्त्रत्वं स्यात्। तदेवार्थपरत्वे सति तदविनाशे तु किं निमित्तमिति न विद्मः। तेन मन्त्रप्रसिद्धौ वाक्यनियमादित्यपि सूत्रम्। अथ वाऽस्वप्रकरणाधीतवाक्यनियमात्। न ह्यर्थाभिधानेऽन्यदीयस्याऽऽत्मीयस्य च विशेषः।

अथ वा मन्त्रपौरुषेयवाक्ययोस्तुल्येऽर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमोऽदृष्टार्थः।

अथ वाऽनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात्। न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता।

न ह्यविद्वान्विहितोऽस्तीति (जै०सू० ३।८।८) इत्यवश्यं तावदग्नीध्राऽऽत्मीयाः पदार्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः। तत्र प्रैषः पिष्टपेषणन्यायेनार्थं ज्ञापयितुमशक्नुवन्नदृष्टार्थो भवति। अथ स्मारको मन्त्र इत्युच्यते। तदपि नास्ति। ब्राह्मणज्ञानाभ्यासपाटवनिमित्तसंस्कारादेव तत्सिद्धेः। संस्काराभिव्यक्तिहेतुरपि पूर्वपदार्थसमाप्तिर्ब्राह्मणमेव वा भविष्यति, नार्थो मन्त्रैः। तत्र यदुच्यते संस्कारविशेषो भविष्यतीति, नासावदृष्टादन्यः सम्भवत्यतः पूर्वपक्षापत्तिः। यदि हि प्रतीतोऽप्यर्थो नैव दृष्टं साधयति, ततो यत्तद् दूरमपि गत्वाऽवश्यं कल्पनीयम्, तदुच्चारणादेव वरमिति।

न चतुःशृङ्गादि किञ्चित्कर्म, तत्सम्बन्धि वा प्रकृतौ, विकृतौ वा विद्यते। यद्यपि च गुणवादेन किञ्चित्स्यात्, तथाऽपि तदनुष्ठानाभावान्न तत्स्मृत्या कार्यम्। न च ज्ञायते क्व प्रदेशे प्रयुज्यतामिति। तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सिद्धः पूर्वः पक्षः। मा मा हिंसीर्मा मा सन्ताप्तमित्यादीनि वेदिहविर्धानादिविषयत्वादचेतनेऽर्थबन्धनादित्यत्राप्युदाहरणम्। इह त्वप्रसक्तायां हिंसायां प्रतिषेधानर्थक्यम्।

ओषधे त्रायस्व, शृणोत ग्रावाण इति च सम्बोधनं कार्यनियोगाभिमुख्यकरणार्थम् । न चाचेतनस्याऽऽभिमुख्यं सम्भवति । न च पशुत्राणे, प्रातरनुवाकश्रवणे वा प्रैषणे प्रवृत्तिरुपपद्यत इत्यानर्थक्यमर्थविवक्षायाम् ।

द्युत्वमन्तरिक्षत्वं चादितेः, एकानेकत्वं च रुद्रस्य विप्रतिषिद्धम् । न चैवं विप्रतिषिद्धोऽर्थः कर्मौपयिकः । कथं वाऽदितिर्देवताऽन्तरिक्षं द्यौर्वा भवेत् । न च स्तुत्यर्थतयाऽपि हेतुद्वयं परिहर्तुं शक्यम् । ब्राह्मणे हि विधिशेषभूताः स्तुतयोऽर्थवन्त्यो भवन्ति । मन्त्रस्तुतिस्त्वप्रयोजनत्वान्नाऽऽदर्तव्या ।

स्वाध्यायाध्ययनस्य कर्मार्थत्वाद्यत्कर्मण्युपयोक्ष्यते, तदभ्यसितव्यम् । तच्चैवं विद्वान्सः सन्तो वृद्धाः शिष्यानक्षरावधारण एव प्रवर्तयन्ति, सन्निहितेऽप्यर्थे न तद्वचनाभ्यासे । तेनावश्यं तेषामुच्चारणमेवाङ्गत्वेनाभिप्रेतमिति ।

केचित्पदार्था ज्ञानेनाविज्ञेयाः । केषाञ्चित्तु वाक्यार्थ एव न ज्ञायते । न च मन्त्रार्थः सत्तामात्रेणोपकरोति, क्रियावेलायामस्मर्यमाणमिति यदेकान्तेन शक्यं कर्तुमुच्चारणम्, तदेव कार्यमित्यवधार्यते ।

अर्थप्रकाशनपक्षे यस्य योऽर्थः, स एव तेन प्रकाशयितव्यः । केचिच्च नित्यैरकर्माङ्गभूतैश्चार्थैरर्थवन्तो मन्त्रा लक्ष्यन्ते । यथा किं ते कृण्वन्ति कीकटेषु गाव इति । अयं हि दृढेनाध्येतॄणां स्मरणेन विश्वामित्रस्याऽऽर्षं गम्यते । तेन किल कर्मार्थं धनं प्रार्थयमानेनेन्द्रोऽभिहितः । त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावस्तास्तव किं कुर्वन्ति ? ते हि नास्तिकाः किं क्रतुनेति वदन्तो न किञ्चित् कर्मानुतिष्ठन्ति । अतश्च ता नाऽऽशिरं सोमसंस्कारार्थं दुहृत, न घर्मं तपन्ति । न घर्मतपने पयोदानेन साधनीभवन्ति । तस्मात्प्रमगन्दस्य कीकटाधिपतेर्यद्वेदो धनम्, तदस्माकं नैचाशाखं नगरमाभर । हृग्रहोर्भश्छन्दसीति भकारः ।

अथ वाऽस्मान्प्रति तद्बिभृहि—धारय पोषय चेत्येतन्नो मघवन्राधया साधयास्माकमिति । छान्दसं दीर्घत्वम् । यद्येतद्विवक्षितम्, तथा सत्यादिमदर्थाभिधानाद्वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्यते । न चान्यो मन्त्रार्थः शक्यते वक्तुम्, प्रतीतेः । अतोऽर्थसदसद्भावावनादृत्याक्षरोच्चारणं फलवदाश्रयणीयमिति ।।३१।।

अथ चतुर्थं मन्त्राधिकरणम्

ग्रन्थान्तरे त्वदर्श्येकं सूत्रं तत्सिद्धिसूत्रवत् ।
व्याख्यायै खण्डशोऽपाठि भाष्यकारादिभिस्त्विदम् ।।

न्या० सू०—किमर्थवन्तो मन्त्रा, उतानर्थका इति वृत्त्यन्तरकारोपन्यस्तसन्देहत्यागेन भाष्यकारीयस्य सन्देहान्तरोपन्यासस्य कारणं परोपन्यस्तसन्देहस्य दुष्टत्वं वक्तुमुपन्यासं तावत् करोति—इहेति । मन्त्रानर्थक्यमित्यानर्थक्यश्रवणं भ्रान्तिकारणमुक्तं दूषयति—तस्विति । समुद्रो वा महासत्व इति वदिवार्थे वाशब्दः ।

श्लोकं व्याचष्टे—**सर्वत्र हीति**। उत्तरानानुगुण्यादप्यानर्थक्येन पूर्वपक्षो न युक्त इत्याह—**न चेति**। अवशिष्टस्तु वाक्यार्थ इति सिद्धान्तसूत्रेणाप्यर्थवत्त्वं सिद्धवद्वक्ष्यते। तच्चार्थाभिधानानादरे पूर्वपक्षीकृते, तन्निराकरणे च उभयपक्षसम्प्रतिपन्नं हेतुत्वेन वक्तुं युज्यते। आनर्थक्ये तु पूर्वपक्षीकृते अर्थवत्त्वमुत्तरं परं प्रति साध्यं स्यात्, न च प्रतिज्ञामात्रेण साधयितुं शक्यमित्यर्थः। प्रतिज्ञामात्रेण साध्यमुत्तरमेषामिति विग्रहः। अतः पूर्वपक्षासम्भवेन परोपन्यस्तसन्देहस्यायुक्तत्वात्तत्परित्यागेनान्यथोपन्यासो भाष्यकारस्येत्याह—**तस्मादिति**। वचनम्=अर्थाभिधानम्। तत्किं कर्मकाले मन्त्रविधिना परिगृहीतन्न वेत्यर्थः। एतदेवोत्तरभाष्येण विवृतम्। सतोऽर्थस्याविवक्षाकारणमपश्यन्निहापि विचारे पूर्वपक्षासम्भवमाशङ्कते—**नन्विति**। सतोऽप्यर्थस्योच्चारणैदमर्थ्याभावेनाविवक्षाया दर्शनात्पूर्वपक्षसम्भावनामाह—**नैष इति**। ननूच्चारणस्यार्थपरत्वाभावेऽर्थोऽनभिधेय एव स्यादित्याशङ्क्य नान्तरीयकत्वेनार्थाभिधानमुपपादयति—**उच्चारणेति**। उच्चारणनान्तरीयकत्वं यदेकस्मादपूर्वं तदेतरत्तदर्थमित्यनेन न्यायेन दृष्टान्ततयोक्तम्। भाष्यकारीयसन्देहसमर्थनमुपसंहरति—**इत्यस्तीति**।

भाष्यकृताऽस्य विचारस्य प्रयोजनद्वारेण प्रमाणलक्षणसङ्गतिन्दर्शयितुं यद्युच्चारणमात्रेत्यादिना विचारप्रयोजनमुक्तम्। तदाक्षिपति—**कः पुनरिति**। विचारस्वरूपवत्प्रयोजनस्यापि शेषलक्षणासङ्गतत्वान्नास्य विचारस्य प्रमाणलक्षणसङ्गतिरित्यर्थः। समाधत्ते—**पूर्वमेवेति**। आम्नायसूत्रोक्तमक्रियार्थत्वेनाप्रामाण्यमेव मन्त्रेष्वपि यथापूर्वपक्षः, तथापूर्वमेवार्थवादाधिकरणोपक्रम एव यानि त्वतिरिक्तान्यर्थवादमन्त्रनामधेयानुपात्तानि सोऽरोदीदिषेत्वोर्जेत्त्वोद्भिदेत्येवमादीनीत्यादिनोक्तमित्यर्थः। अनेनोच्चारणमात्रेणोपकारकत्वे बर्हिर्लवने 'बर्हिर्देवसदनं दामी' तिमन्त्रस्याप्रामाण्यम्; अभिधानेनोपकारकत्वे सामर्थ्यालोचनेन प्रामाण्यमिति, प्रामाण्याप्रामाण्यप्रयोजनत्वेन लक्षणसङ्गतिर्भाष्यकृता दर्शिता। धर्मप्रमाणभूतविध्येकवाक्यत्वेनार्थवादप्रामाण्येऽभिहिते, तदभावान्मन्त्राणामप्रामाण्यमित्यर्थवादप्रामाण्यहेतुप्रत्युदाहरणरूपेण पूर्वपक्षवादिनः प्रत्यवस्थानादर्थवादविचारसङ्गतिः अथेदानीमिति वदता भाष्यकृतोक्ता कोऽर्थवादः को वा नेति कोष्ठशाधनेनाधिकरणद्वयस्यार्थवादाधिकरणशेषत्वादव्यवधायकत्वमिदानी शब्देनोक्तं प्रकरणान्तरत्वेनानन्तराधिकरणसङ्गत्यभावो न दोषः।

ननु यद्यक्रियार्थत्वेनाप्रामाण्यमत्र पूर्वपक्षः, ततो नोच्चारणं पूर्वपक्षेऽङ्गीकार्यम्। अर्थानभिधानेऽपि कर्म्मकालोच्चारणस्यापि प्रयाजादिवदारादुपकारकत्वेन क्रियार्थत्वोपपत्तेरित्याशङ्क्याह—**तदुत्तरेणैवेति**। तस्याक्रियार्थत्वेनाप्रामाण्यस्य यदुत्तरम्, तुल्यसाम्प्रदायिकत्वम्, चकारादध्ययनविधिदृष्टार्थत्वं च तेनैव मन्त्रेष्वक्रियार्थत्वशङ्कानिवृत्तेर्न पुनरक्रियार्थत्वमभिहितमित्यर्थः।

नैराकाङ्क्ष्यमुपपादयति-**एवं हीति**। क्रिया तत्संबन्ध्यनभिधायिनां तत्कालाप्रयोज्यानामपि चार्थवादानां यत्र क्रियासम्बन्धापादनम्, तत्र मन्त्रेषु क्रियाकालप्रयोज्येषु तत्सम्बन्धे

कः सन्देह इत्यर्थः । अतोऽक्रियार्थत्वस्यात्र शङ्कितुमशक्यत्वात्किमुच्चारणमात्रेण क्रियार्थत्वम्, अभिधानेन वेति तद्विशेषविचारो भाष्यकारीयो युक्त इत्याह— **तस्मादिति** । नन्वेवमपि लिङादिवद्विधायकत्वेन अर्थवादवद्वा स्तावकत्वेन क्रियार्थत्वसम्भवात्किमित्युच्चारणेनाक्रियार्थत्वाङ्गीकरणमित्याशङ्क्याह— **तत्रेति** । स्वयमेव भाष्यकारः अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्याद् (जै० सू० २।१।३१) इत्यत्र निराकरिष्यतीत्यर्थः ।

ननु मन्त्रत्वाविशेषात्साम्नामपीहोदाहरणत्वप्रतीतेस्तेषां चावाचकत्वादर्थपरत्वानुपपत्तेरव्यापकः सिद्धान्तः स्यादत आह —**सामसु त्विति** । अर्थपरत्वाक्षराभिव्यक्तिपरत्वे साम्नामपि तद्द्वारार्थपरत्वसम्भवात् किं तेषामात्मप्रयोगमात्रपरत्वम्, उताक्षरव्यक्तिपरत्वमित्येतद्विषयः सन्देहो भाष्यकृतोक्त इत्यर्थः । नन्वेवमपि श्रुत्यसंयुक्तानां 'बर्हिर्देवसदनं दामी'त्यादीनामर्थपरत्वाभावे लैङ्गिकविनियोगासम्भवेन कर्मकालोच्चारणे प्रमाणाभावादव्यापकः पूर्वपक्षः स्यादिति शङ्कते – **कथं पुनरिति** । परमतेन परिहरति—**केचिदिति** । का तर्हि सन्देहविवरणभाष्यस्य गतिः ? अत आह—**अत इति** । अतो नैवैतदञ्जसेत्यन्वयः । प्रयोजनभाष्यमपि गमयति—**यद्यपीति** ।

एवं त्वानर्थक्यापत्तेस्तस्य च सामान्योपयोगाभिधानेन प्रागेव निराकृतत्वाद्भाष्यानार्जवापत्तेश्चापरितोषान्मतान्तरमाह—**अथ वेति** । दर्शनम्=सम्प्रदायः । समाचारः=प्रसिद्धिरित्यनर्थान्तरम्, ननु प्रसिद्धेः स्मृतिरूपत्वेन निर्मूलायाः प्रामाण्यायोगात्सदसन्मूलत्वेन तामविचार्य सिद्धवद्विशेषविचारो न युक्त इति शङ्कते—**किमर्थमिति** । स्मृत्यधिकरणवक्ष्यमाणप्रामाण्यायाः सदाचाररूपायाः याज्ञिकप्रसिद्धेरसन्मूलत्वाशङ्का न युक्तेति परिहरति—**तत्रेति** । स्मृतिन्यायेन शिष्टत्रैवर्णिकदृढपरिग्रहेणैषां मन्त्राणां प्रयोगित्वं दृढमवस्थितम् । तस्य चानेन विचारेण मूलविशेषनिरूपणमित्यर्थः ।

याज्ञिकप्रसिद्धिबलेन कर्म्मकाले मन्त्रोच्चारणाभ्युपगमे पूर्वपक्षेऽपि बर्हिर्लवनादावेव बर्हिर्देवेत्यादीनामुच्चारणापत्तेर्न नियोगतो बर्हिर्देवसदनं दामीत्येष बर्हिषां लवने विनियुज्यतेति भाष्यमयुक्तं स्यादित्यपरितोषात्स्वमतेनार्थपरत्वाभावेऽपि कर्मकाले मन्त्रोच्चारणमुपपादयन्पूर्वपक्षमारभते—**अथ वेति** । नन्वदृष्टार्थत्वेनाप्यध्यनविधिविहितस्याध्ययनस्य पुरुषार्थानुबन्धित्वोपपत्तेः कथं कर्म्मकाले मन्त्रोच्चारणाध्यवसानम् अत आह **तथा हीति** । प्राकृताङ्गनिराकाङ्क्षाया विकृतेरुभयाकाङ्क्षालक्षणप्रकरणायोगात्तद्विषयं क्रमग्रहणं सर्वाङ्गसाधारणस्य न्यायस्य दर्शयितुं यावच्छब्दः अङ्गत्वप्रतिपत्त्युत्तरकालीनः फलेनोपकारत्वेन स्वीकारोऽभिहितः ।

ननु श्रुत्ययुक्तानां मन्त्राणां क्रमप्रकरणपठितानां विध्यभावेन कैमर्थ्यानपेक्षणादध्ययनविधौ च कर्मासन्निधानाद्विश्वजिन्न्यायेन स्वर्गार्थत्वावसायात् गोदोहनादिवत्क्रमप्रकरणसंस्पर्शेऽप्यङ्गत्वेन स्वीकारो न युक्त इत्याशङ्क्याह—**मन्त्रेति** । स्वीक्रियत इत्यनुषङ्गः ।

विध्यर्थवादाध्ययनवदस्याप्यवैरूप्याय दृष्टार्थत्वाध्यवसानात्कर्म्मकालोच्चारणमात्रार्थत्वेऽपि तदनपायात् साकाङ्क्षत्वेन क्रमिप्रकरणिभ्यां स्वीकारो युक्त इति भावः ।

ननु मन्त्रस्वरूपवत्प्रयाजादिवाक्यस्य स्वरूपस्यापि क्रमप्रकरणसंस्पर्शात्कर्मकालोच्चारणापत्ति त आह—तत्रेति । कर्माङ्गभूतार्थाभिधानेन नैराकाङ्क्ष्यान्न तत्स्वरूपस्य क्रमप्रकरणसंस्पर्शेऽप्यङ्गत्वेन स्वीकार इति भावः । मान्त्राणां तु प्रयाजादिवाक्यवत्कर्माङ्गभूतार्थानभिधायकत्वात्प्रधानवाक्यवच्च कर्म्मविधायकत्वस्य तच्छेषवद्वा स्तावकत्वस्य च द्वितीये निराकरिष्यमाणत्वात् अनुतिष्ठासितार्थस्मृतेश्च ध्यानादिना सिद्धेः साकाङ्क्षत्वेन क्रमप्रकरणाभ्यां स्वरूपस्यैवाङ्गत्वावसायाद् ग्रहणमित्याह—मन्त्राः पुनरिति । एवं तावन्मन्त्रस्वरूपस्य क्रमप्रकरणाभ्यामङ्गत्वावसायात्, तस्य च निर्व्यापारस्याङ्गत्वायोगादवश्यकल्पोच्चारणव्यापाराङ्गीकरणात्कर्मकालोच्चारणसिद्धिस्तावन्मन्त्रे पर्यवसानं चोक्तम् । इदानीमध्ययनविधिनापि क्रमप्रकरणपाठार्थवत्त्वाय कर्माङ्गत्वमाक्षिपतोच्चारणं विना तदयोगात्कर्म्मकालोच्चारणमात्रं कल्प्यते । तावन्मात्रत्वेन ग्रहणसंस्कार्यत्वोपपत्तेनार्थाभिधानपर्यन्तत्वं कल्पयितुं शक्यमित्याह स्वाध्यायेति ।

प्रयाजादिवाक्यानां तु कर्म्माङ्गभूतपदार्थविधानार्थत्वात्, तस्य च शास्त्रार्थावधारणकालीनत्वेन कर्मकालोच्चारणानपेक्षत्वाददृष्टार्थोच्चारणकल्पनं न युक्तमित्याह—प्रयाजादीति । रूपग्रहणमेव प्रसक्तमित्यापातप्रतिभानमात्रेणोक्तं मन्त्राणां तु कर्म्मकालोच्चारणनिरपेक्षार्थानभिधायकत्वादवश्यम्भाविकर्म्मकालोच्चारणमित्याह—न त्विहेति । ननु कर्मकालप्रयोज्यानां मन्त्राणामर्थाभिधानार्थता प्रतीयमाना नापह्नोतुं शक्येत्याशङ्क्याह—शब्दे चेति । ध्यानादिनाप्यनुतिष्ठासितार्थस्मृतिसिद्धेरभिधानार्थत्वे कल्पनापत्त्यविशेषादुच्चारणाभिधानयोः किं विवक्षितमिति सन्देहप्राथम्यावश्यकत्वाभ्यामुच्चारणविवक्षैव न्याय्येति भावः । पूर्वपक्षमुपसंहरति—तस्मादिति ।

ननु भाष्यकृता तदेतदवगच्छाम उच्चारणमात्रेणोपकुर्वन्तीति पूर्वपक्षं प्रतिज्ञाय कुत इति प्रश्नपूर्वकं तदर्थशास्त्रादीनि कारणानि उक्तानि । कस्मात्तत्परित्यागेन प्राथम्यावश्यकत्वादिकारणान्तरं भवतोक्तम्, अत आह—तथा चेति । पूर्वोक्तन्यायेनाविवक्षितार्थत्वे सिद्धे तदर्थशास्त्रादीनि सूत्रभाष्यकाराभ्यां करणत्वेनोच्यन्ते लिङ्गमात्रत्वात्तेषां तस्य च न्यायप्राप्तार्थद्योतकत्वादिति भावः । परिहारसूत्रक्रमानुसारात्पश्चादुदाहार्य्यस्यादावुदाहरणमयुक्तमाशङ्क्याह—परिहारेति । 'यथा साक्ष' इति भाष्ये साक्षत्वमवास्तवमेव प्रतीतिमात्रेणोक्तमिति व्याचष्टे—तथेति । नन्वर्थवादार्थमिति भाष्यं विधिशेषत्वं विनार्थवादत्वायोगादयुक्तमाशङ्क्य व्याचष्टे—नन्विति । न हि येनेतिभाष्यमभिमतविपरीतार्थत्वादयुक्तमाशङ्क्य छित्वा व्याचष्टे—न हीति । न चेति भाष्यं व्याचष्टे—प्रदेशान्तरस्थस्य त्विति । तथेत्युदाहरणभाष्यं व्याचष्टे—तथेति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण च्छन्दसाददेऽङ्गिरस्वदभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन च्छन्दसाददेऽङ्गिरस्वदभ्रिरसि नारिरसि त्वया वयं

सधस्थेऽग्निं शकेम खनितुं पुरीष्यम्, जागतेन त्वा च्छन्दसाऽऽददे, अङ्गिरस्वत् हस्त आधाय सविता बिभ्रदभ्रिंहिरण्ययीं तपाज्योतिरजसमिदमग्निं स्वान्वीन आमर आनुष्टुभेन त्वा च्छन्दसाऽददेऽङ्गिरस्वदित्येषां चतुर्णामपि मन्त्राणामादद इत्यभिधानसामर्थ्यादिवादाने प्राप्तत्वादित्यर्थः ।

भाष्यकृता चतुःसंख्यालक्षणगुणविधानार्थं पुनः श्रवणमाशङ्क्य, अन्तरेणापि वचनं तेषु चतुःसंख्ये युक्तम् । तदादानाङ्गतया चतुःसंख्याविधानाभ्युपगमात्ताद्रूप्येण चाप्राप्तेरयुक्तमाशङ्क्य व्याचष्टे— चतुःसंख्यापीति । अयमाशयः-संख्या विधीयमाना योग्यत्वात्परिच्छेदकतया विधीयते, मन्त्रपरिच्छेदिका चेहासौ प्रतीयते । न क्रिया परिच्छेदिकेति कारणमाह—न हीति । आश्रितवचनो गुणशब्दः । परिच्छेदार्थश्च गमिः । नान्याश्रितोऽन्यपरिच्छेदको भवतीत्यर्थः । क्रियाङ्गत्वमपि न सम्भवतीत्याह—न चेति । मन्त्राविधानान्नात्रारुणैकहायनीन्यायः सम्भवतीति भावः । अतः क्रियाङ्गत्वासम्भवात् सम्भवतश्च मन्त्रपरिच्छेदकत्वस्य पाठादेव प्राप्तेर्वचनानर्थक्यमित्युपसंहरति—तेनेति । भाष्यकृता लिङ्गाद्विकल्पप्राप्तौ, समुच्चयार्थं वचनमित्याशङ्क्य समुच्चयशब्दस्याभावादित्युक्तं च तत्समुच्चयवाचिशब्दाद्यभावेऽप्यरुणैकहायनीवन्मन्त्रसंख्ययोः परस्परनियमात्समुच्चयसिद्धेरयुक्तमाशङ्क्य व्याचष्टे—क्रियेति ।

ननु विकल्पे मन्त्राणां प्रत्येकमेकत्वाच्चतुःशब्दानुपपत्तिः स्यादित्याशङ्क्य पूर्वपक्षे विकल्पाप्रसक्तेर्नैष दोष इत्याह— अस्मत्पक्षे पुनरिति । अश्वाभिधान्युदाहरणे भाष्यकृता रशनादाने प्राप्तत्वान्मन्त्रस्य विधानानर्थक्यमुक्तम् । तदादानविधानेनार्थवत्त्वोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे—उभयोरिति । नन्विति भाष्येण परिसंख्यार्थत्वमाशङ्कितम् । तदुभयप्राप्तावेकविधेः परिसंख्याशब्दवाच्यत्वाद् गर्दभरशनायाश्चात्राविधेयत्वादयुक्तमाशङ्क्य व्याचष्टे—परिसंख्येति ।

प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥ इति ।

संख्याशब्दवाच्याया बुद्धेरपि प्रवर्त्तनफलाया विधित्वाभ्युपगमात्परेश्च वर्जनार्थत्वाद् गर्दभरशनां वर्जनीयतया बोधयतीत्युक्तं भवतीति भावः । 'न शक्नोति' इति परिहारभाष्यं व्याख्यातुमाह—सापीति । 'अश्वाभिधानीमादत्ते' इति वचनव्यक्तौ आदाने गर्दभरशनायाः परिसंख्या इत्यश्वाभिधानीमितिवचनव्यक्तौ मन्त्रे रूपान्मन्त्रमर्थादादानमित्यर्थः ।

ननु परिसंख्यानङ्गीकरणे वाक्यस्य का गतिरित्याशङ्क्य, अप्राप्तविधित्वात्पूर्वपक्षे न दोषः इत्याह—अदृष्टार्थत्वे त्विति । ननु परिसङ्ख्यया अपि वस्तुतो प्राप्तविधित्वान्न दोष इत्याशङ्क्याह—यदि चेति । अश्वाभिधानीत्येकः शब्द इतीति चापरः तयोः सम्बन्ध इति द्वन्द्वगर्भः षष्ठीसमासः । मन्त्राश्वाभिधानीसम्बन्धे सति दोषपरिहारः स्यात्-न त्वसौ युक्त इति भावः । अतो प्राप्तविधित्वेऽप्यादानवच्च मन्त्रविध्यापत्तेस्तस्य चोद्दे-

श्यत्वेनाश्वाभिधान्या विशेष्टुमशक्यत्वाल्लिङ्गप्राप्त्यवैलक्षण्यादपरिहार्य्यमानर्थक्यमित्याशङ्क्याह—तेनेति । आदानव्यक्तिभेदेऽप्यश्वाभिधान्या विशेषणायोगादेकेत्युक्तम् ।

ऐक्यरूप्येऽपि प्रकरणसंयोगभेदे पिण्डपितृयज्ञबर्हिर्वन्न धर्मान्वयः स्यात्; प्रकरणसंयोगाविशेषेऽपि वा भिन्नापूर्वसंयोगे सति आज्यौषधसान्नाय्यवन्न धर्म्मसाङ्कर्य्यं स्यात् । न त्वेतदुभयमप्यस्ति । प्रकृताग्न्यपूर्वसंयोगाविशेषादिति प्रकरणेत्युक्तम् । अतो न प्रमाणमिति भाष्यं यद्युच्चारणमात्रेणेत्यनेन पुनरुक्तमाशङ्क्य तस्योपक्रमगतत्वेन सङ्गत्यर्थत्वावधारणादस्य चोपसंहारगतत्वेन प्रयोजनकथनार्थत्वात्परिहरति—प्रयोजनमिति । इह च प्रमाणशब्दप्रयोगान्मन्त्रप्रमेयार्थान्तरसिद्धिरपि पूर्वपक्षे सूचिता ।

तथा हि— प्रयाजादिस्मृतिलिङ्गत्वं मन्त्राणां वक्ष्यतेऽत्र यत् ।
देवताकल्पनं यच्च मान्त्रं तस्माद्यजिश्च यः ॥
मन्त्रवर्णाश्च यद्धोतुः पूर्वपानं वदिष्यते ।
मे देहीत्यात्मवादित्वान्मन्त्राणां याजमानता ॥
करणानामार्त्विजत्वेऽप्यङ्गसाध्यफलस्य यत् ।
स्वामिगत्वं क्रियार्थस्य कर्तृगत्वं च वक्ष्यते ॥
मन्त्रक्रमानुरोधाच्च ब्राह्मणक्रमबाधनम् ।
छागस्य नियमो यश्च पशावूहश्च मन्त्रगः ॥
तदर्थपरतायां स्यात्सर्वं नैवान्यथा भवेत् ।
सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ॥
कर्मकालेऽनुसन्धेयो मन्त्रार्थोऽर्थपरत्वतः ।
इषेत्वादिषु चोच्चार्यं च्छिनदमीत्यादिपूर्तये ॥
असावित्यादिशब्दस्य स्थाने यद्वादि नाम च ।
सिद्धान्ते मन्त्रलोपश्च प्रकाश्याभाव इष्यते ॥
यथाम्नानं प्रयोगस्तु केवलोऽर्थाविवक्षणे ।
यदि त्वर्थपरत्वेऽपि नैतावत् स्यात्प्रयोजनम् ॥
ततो धर्मप्रमाणत्वं मन्त्राणान्नैव सिद्ध्यति ।
लवनादिस्वरूपस्य प्रकाश्यत्वे हि धर्मता ॥
समीहिताङ्गताभावान्न कथञ्चित्प्रतीयते ।
अपूर्वसाधनत्वेन यद्यप्येतत्प्रकाश्यते ॥
विधिप्राप्तानुवादत्वान्न तथापि प्रमाणता ।
अपूर्वसाधनत्वाच्च लवनादौ समीहिते ॥
आत्मनोऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते ।
अश्नुतद्रव्ययागादिकल्पनाच्च प्रमाणता ॥
स्फुटैवार्थपरत्वे स्यादिति सर्वमसूसुचन् ॥

नन्वर्थपरत्वाभावे विनियोजकप्रमाणाभावेनानङ्गत्वादप्रयोग एव स्यात्। सद्भावे वा तद्वशात् तद्व्यवस्थापत्तेर्विनियोगाङ्गीकरणाद् बर्हिर्लवनसम्बन्धापह्नवो न युक्त इत्याशङ्क्याह—तदा हीति। लैङ्गिकविनियोगाभावेनाङ्गसम्बन्धाभावेऽपि प्राकरणिकप्रधानविनियोगात्तत्प्रयोगाबहिर्भावर्तित्वमात्रावसीय इति भावः। कीदृशं तर्हि पूर्वपक्षे मन्त्रोच्चारणानुष्ठानं स्यादित्यपेक्षयामाह—पाठेति। श्रुत्यसंयुक्तमन्त्राभिप्रायं चैतत्। इषेत्वादीनां छेदनादिषु विनियोगेनाङ्गकर्मानादरायोगात्सर्वशब्दोऽप्येवमेव व्याख्येयः। सकृच्छब्देन लवनाद्यावृत्तावप्यनावृत्तिरुक्ता पठित्वेति च 'मुखं व्यादाय स्वपिति' इतिवत्पूर्वकालत्वानादरेण समानकर्तृकत्वमात्राभिप्रायेणोक्तम्। सिद्धान्तासम्भवे हेतुत्वेन वाक्यनियमं व्याख्यातुं नियतेत्यादिभाष्यं व्याचष्टे—अग्निरिति। पूर्वपक्षसाधनत्वेनैतमेव हेतुं व्याख्यातुमथेति भाष्यं व्याचष्टे—यस्य त्विति।

नन्वर्थपरत्वेऽपि नियमादृष्टसिद्ध्यर्थं पदक्रमनियमोऽर्थवान्भविष्यत्यत आह—अर्थेति। प्रत्यायनक्रमनियमस्योच्चारणक्रमनियमाधीनत्वात्प्राथम्यावश्यकत्वाभ्यां तस्मादेवादृष्टं युक्तमिति भावः। नन्वित्यादिभाष्येणार्थपरेष्वपि क्रमनियमदर्शनान्न तेनार्थाविवक्षा साधयितुं शक्यत इत्याशङ्क्य, विपर्ययेऽर्थप्रत्ययाभावात् क्रमादर इत्युक्तम्। तदिन्द्राग्निपदे विपर्ययेऽप्यर्थप्रत्ययदर्शनादयुक्तमाशङ्क्योपलक्षणपरत्वेन व्याचष्टे—यस्त्विति। तुल्यन्यायत्वाद्भाष्यानुपन्यस्तप्रकृतिप्रत्ययोपन्यासः। अथशब्दप्रसङ्गं विवृणोति—अजादीति। इन्द्रशब्दस्याजाद्यदन्तत्वनिमित्तः पूर्वनिपातः अजाद्यन्तमिति स्मर्यते नीलशब्दस्य विशेषणत्वाद्विशेषणं विशेष्येण बहुलमिति पूर्वनिपातः, राजशब्दस्य च षष्ठ्यन्तत्वात्षष्ठीति प्रथमानिर्दिष्टं समास उपसर्जनमित्युपसर्जनं पूर्वमिति पूर्वनिपातः। चित्रशब्दस्य विशेषणत्वात्सप्तमीविशेषणे बहुव्रीहाविति पूर्वनिपातः। निःशब्दस्य निरादयः क्रान्ताद्यर्थे पञ्चम्येति प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपातः। आदिशब्द उदाहरणान्तरस्यापि घिसंज्ञानिमित्तपूर्वनिपातप्रदर्शनार्थः अतो भवति विपर्यये प्रत्येकं पदसाधुत्वेऽपि समासस्याशब्दत्वमित्याह—तनेति। इतिकरणः प्रभृत्यर्थः। राजशब्दादेरप्युपसर्ज्जनत्वादिनिमित्तपूर्वनिपातस्मरणात्। नीलोत्पलराजपुरुषचित्रगुशब्दानां क्रमविपर्यये विशेषणविशेष्यभावान्यथात्वापत्तेरर्थान्यत्वमपि स्यादित्याह—पुरुषेति। इतिकरणः—प्रकारवचनः निष्कौशाम्बिशब्दस्य क्रमविपर्यये निष्क्रान्तः कौशाम्ब्या इत्यस्यार्थस्याप्रतीतेरर्थान्तरे च समासास्मरणादसाधुत्वमानर्थक्यं च स्यादित्याह—कौशाम्बिनिरिति। कथं तर्हि क्वचिदग्नीन्द्राविति प्रयोगः अत आह—यस्त्विति।

ननु प्रकृतिप्रत्ययादिष्वपशब्दत्वापत्तेर्विपर्ययानाश्रयणादत्राप्यमन्त्रत्वापत्तेस्तदनाश्रयणं भविष्यतीत्याशङ्कते—नन्विति। अर्थपरत्वाभावेऽवयवार्थसम्भवात्समुदायप्रसिद्ध्या विशिष्टक्रमकपदसमूहात्मकवाक्यविशेषस्य मन्त्रत्वावधारणाद्विपर्यये युक्तममन्त्रत्वम्। सति त्वर्थपरत्वे ज्ञानार्थान्मन्यतेर्मनोतेर्वा गुपूधूपविच्छिपणिपनिभ्य आयः इत्यादिसूत्रेषु गुपूविपतिवचियमिमनितनिसन्दिच्छदिभ्यस्त्रन्नित्यौणादिके त्रन् प्रत्यये कृते मन्त्रशब्दव्युत्पत्तेर्विपर्ययेऽप्यर्थज्ञापकत्वानपायान्मन्त्रत्वन्न नश्यतीति

परिहरति —**तदेवेति**। एतमेव परिहारं सूत्रारूढं करोति—**तेनेति**। येन कारणेनार्थपरत्वे विपर्ययेऽपि मन्त्रत्वं न हीयते, तेन मन्त्रत्वप्रसिद्धौ प्रयोजनभूतायां विशिष्टपदक्रमसमूहात्मकं वाक्यनियमादित्यपि सूत्रं योज्यमित्यर्थः। सूत्रैकदेशे 'तस्मादावर्त्तते सूत्रमिति' वत्सूत्रशब्दप्रयोगो ग्रामैकदेशे ग्राम आयात इति प्रयोगदर्शनात्। यद्वाध्याहारानौचित्यमाशङ्क्य सूत्रत्वाददोष इति हेतुत्वेनोक्तम्।

प्रसङ्गादपरं व्याख्यानत्रयमाह—**अथ वेति**। वृद्धशास्त्रव्याख्यानार्थं वृद्धे खल्वपीत्यादिभाष्यं अविरुद्धदृग्विषयप्रैषेऽर्थवत्त्वसम्भवादयुक्तमाशङ्क्याह—**न हीति**। ज्ञाते च वाचनं न ह्यविद्वान्विहितो (जै० सू० ३ ८.८) इति तृतीयाधिकरणवक्ष्यमाणन्यायेनाऽविदुषो याजमानवदार्त्विज्येऽप्यनधिकारादित्यर्थः। नन्वित्याशङ्काभाष्यं व्याचष्टे-**अथेति एवमिति**। परिहारभाष्यं स्मृतिहेतुसंस्कारोद्बोधकाभिधानार्थत्वेन दृष्टार्थत्वस्योक्तत्वात्पूर्वपक्षानापत्तेरयुक्तमाशङ्क्याऽनभिमतमपि वचनशब्दस्योच्चारणार्थत्वे संस्कारशब्दस्यापूर्वार्थत्वमापाद्यैतदुक्तमिति व्याचष्टे – **तदपीति**।

नन्वपूर्वात्मकोऽपि संस्कारोऽर्थाभिधानाद्भविष्यतीति मन्त्रस्य दृष्टार्थत्वानपायात् कथ पूर्वापक्षापत्तिः अत आह—**यदि हीति**।

अविद्यमानवचनव्याख्यानार्थं यज्ञ इत्यादिभाष्यं व्याचष्टे—**चतुःशृङ्गादीति**। ननु गौण्यावृत्त्या चतुश्शृङ्गादिरूपस्य यागादेर्विद्यमानत्वात्कथमविद्यमानवचनत्वमत आह—**यद्यपि चेति**। तस्य गौणरूपस्यानुष्ठानाभावात्तत्प्रतिपादनमदृष्टार्थं स्यादित्यर्थः। यज्ञप्रकाशने च तस्य विततत्वेन प्रदेशविशेषानवधारणात्पाठक्रमानुरोधेनोच्चारणापत्तेः पूर्वपक्षसिद्धिः स्यादित्याह—**न चेति**। मा मा हिंसी रित्यस्याचेतनवेदिविषयत्वादचेतनार्थबन्धनोदाहरणत्वं युक्तम्, न त्वविद्यमानवचनोदाहरणत्वमहिंसनस्य विद्यमानत्वादीत्याशङ्क्याह—**मामेति**। प्रसक्त्यभावात्तदपेक्षस्य प्रतिषेधस्याविद्यमानतेत्यर्थः। अचेतनार्थबन्धनव्याख्यानार्थमचेतने खल्वपीत्यादिभाष्यमर्थशब्देन संबोधनम, प्रेषणं वाभिप्रेतमिति प्रतिपादयेयुरिति वदन्नाहेति व्याचष्टे—**ओषधे इति**।

अर्थविप्रतिषेधव्याख्यानार्थमर्थे यादिभाष्यं व्याचष्टे—**द्युत्वमिति**। अदितेर्द्देवतात्वात्तद्विपरीतमेकैकमपि रूपं विप्रतिषिद्धमितिस्वयमन्यथा व्याचष्टे—**कथं वेति**। ननु स्तुत्यर्थमविद्यमानस्यापि गुणस्योपचारेणाभिधानोपपत्तेरेकस्यानेकरूपत्वं देवतायाश्च देवतान्तररूपत्वमिति हेतुद्वयं परिहरिष्यत्यत आह—**न चेति**।

स्वाध्यायशब्दवाच्यानि मन्त्राक्षराणि यथाध्ययनकालेऽभ्यस्यन्ते, नैवमर्थाभिधानमिति स्वाध्यायवदवचनव्याख्यानार्थं स्वाध्यायकाल इत्यादिभाष्यमनभ्यासमात्रेणाविवक्षावगमस्याशक्यत्वादयुक्तमाशङ्क्य व्याचष्टे—**स्वाध्यायेति**। अभिधेयार्थासन्निधिनिमित्ताभिधानानादरशङ्कानिराकरणार्थं पूर्णिकाऽवहन्ति करोतीति भाष्यकृतोक्तम्।

अपि चेत्यादिभाष्यमर्थविशेषानभिधायित्वेन मन्त्राणामविज्ञेयत्वप्रतिपादनार्थमम्यवसात इत्यादिष्विन्द्रंस्तुतिरूपवाक्यार्थज्ञानादयुक्तमाशङ्क्याह—केचिदिति। सामान्यतो वाक्यार्थज्ञानेऽप्यम्यगादिपदार्थाज्ञानात्सकलस्य मन्त्रस्यार्थवत्त्वं न सिद्धयतीति भावः। सृण्येवेत्यादीनां तु वाक्यार्थोऽपि न ज्ञायत इत्याह—केषाञ्चित्त्विति। ननु श्रोतुरप्रतिपत्तावपि मन्त्रस्याभिधायकत्वञ्च विरुद्धयते। अन्धस्येव रूपाप्रतिपत्तावपि प्रदीपस्य प्रकाशकत्वादत आह—न चेति। यदेकान्तेन कर्तुं शक्यमुच्चारणम्, तदेव मन्त्राणां कार्यमित्यर्थः क्वचित्तु यदेकान्तेन कार्यमुच्चारणम् तदेव शक्यमिति पाठः। तत्र यदेकान्तेन पक्षद्वयेऽप्यनुष्ठेयमुच्चारणं तदेव मन्त्राणां कार्यमवधार्यते शक्यमिति कृत्वेति योज्यम्।

अनित्यसंयोगव्याख्यानार्थमनित्यसंयोगः खल्वपीत्यादिभाष्यम्। कुसीदवृत्त्यादिनित्यार्थसम्भवादयुक्तमाशङ्क्याह – अर्थेति। यस्य मन्त्रस्य योऽर्थः स्वरसतः प्रतीयते, स एव तेन कर्मकाले प्रकाशनीयः, नोत्प्रेक्षामात्रकल्पित इत्यर्थः। अतो भवत्यर्थपरत्वे केषुचिन्मन्त्रेष्वनित्यसंयोग इत्याह – केचिच्चेति। अनित्यस्यार्थस्याकर्माङ्गत्वेन प्रकाशनानर्हत्वात्तत्संयोगस्यार्थाविवक्षाहेतुत्वोपपादनाय कर्माङ्गभूतैरित्युक्तम्।

अनित्यसंयोगोदाहरणं व्याख्यातुमाह—यथेति। ना शिरं दुह्ले तथन्ति धर्मओ नो मर प्रमगन्दस्य वेदो नैवाशाखं मच्चवत् रन्धयान इति मन्त्रशेषः। ऋषिप्रत्ययाधीनत्वादर्थतत्व निर्णयस्यार्षकथनम्। अपहारसामर्थ्यद्योतनार्थं त्रैलोक्यैश्वर्यवचनम्। किं क्रतुनेति वदन्त इति कीकटशब्दनिर्वचनम्! तप्ते घृते पयोनिक्षेपेण निस्यन्दिते यच्छिष्टं तद्धर्मशब्देनोच्यते। भृञ् भरण इति भौवादिकस्य भृञो धात्वन्तरेणार्थकथनं व्याख्यानार्थम्। डुभृञ् धारणपोषणय रिति जौहोत्यादिकस्य भृञो रूपं बिभृहीति दर्शितम्। यदीत्यनित्यसंयोगोपसंहारभाष्यं व्याचष्टे यद्येतदिति। न त्वनित्यसंयोगपरिहारायार्थान्तरमस्य मन्त्रस्य वक्ष्यामः अत आह—न चेति। अर्थाविवक्षयाप्यनित्यसंयोगपरिहारसम्भवान्नाप्रतीयमानार्थकथनं युक्तमित्याशयः। मन्त्रानर्थक्यप्रतिज्ञाव्याख्यानार्थं तदेतैरिति भाष्यं व्याचष्टे – अत इति ॥ ३१ ॥

भा० प्र०—'तदर्थशास्त्रात्' = मन्त्र का जो अर्थ या प्रयोजन रहता है, उस अर्थ को विषयस्वरूप में मानने वाला वेदवाक्य है। मन्त्र के द्वारा जिस अनुष्ठेय विषयक अर्थ की स्मारकता रूप प्रयोजन सिद्ध किया जायगा, उस विषय को कहने वाला वेदवाक्य सिद्ध है, अतः मन्त्र का अर्थ विवक्षित नहीं है।

अर्थवाद अधिकरण में विधि को छोड़कर अन्य वेदभागों का प्रामाण्य भी साधारणरूप में प्रतिपादित किया गया है। ऐसी स्थिति में अर्थवाद का क्या प्रयोजन है, इसी की विशेष आलोचना की गई है। मन्त्र भाग का क्या प्रयोजन है, यही प्रकृत में विचारणीय है। "तदर्थशास्त्रात्" से आरम्भ कर "अनित्यसंयोगान्मन्त्रानर्थक्यम्" यहाँ तक के सभी वाक्य एक ही सूत्र के अंश हैं। प्रत्येक अंश "मन्त्रानर्थक्यम्" इस पद के साथ सम्बद्ध

है । सूत्र अधिक विस्तृत हो जाता, अतः, व्याख्या की सुविधा के लिए भगवान् शवरस्वामी ने एक-एक अंश लेकर व्याख्या की है । "तदर्थशास्त्रात्" सम्पूर्ण सूत्र के इस अंश का "मन्त्रानर्थक्यम्" इस अंश के साथ ही अन्वय है । इसमें "मन्त्र की निष्प्रयोजनता" यह अंश साध्य है । "तदर्थशास्त्रात्" इत्यादि पञ्चम्यन्तपद हेतु है ।

पूर्वपक्षियों का कथन है कि मन्त्र के उच्चारण से अदृष्ट होता है । अर्थात् कर्मविशेष में यथाकथित रूप में मन्त्र का उच्चारण करने पर अदृष्ट या अपूर्व का उत्पादन होता है । इसी से कर्म में फल की प्राप्ति होती है । मन्त्र के पदों का अर्थ यज्ञ आदि कर्मों के किसी प्रयोजन का निर्वाह नहीं करता है । कारण, मन्त्र का अर्थ ब्राह्मणवाक्य से ही विज्ञापित हो जाता है, और जिसका अर्थ किसी अन्य प्रकार से विज्ञापित हो जाता है, वह अर्थ किसी अन्य प्रयोजन का साधक नहीं होता है, अर्थात् उससे किसी अन्य प्रयोजन की सिद्धि नहीं हो सकती है, अतः, मन्त्र का अर्थ विवक्षित नहीं है । मन्त्र के अर्थ का कोई प्रयोजन नहीं हैं, वरन्, मन्त्र का उच्चारण अदृष्ट का जनक है ।

जैसे अभ्रि अर्थात् काठ के कुदाल के ग्रहण के समय "गायत्रेण त्वाच्छन्दसाददे त्रैष्टुभेन त्वाच्छन्दसाददे जागतेन त्वाच्छन्दसाददे पाङ्क्तेन त्वाच्छन्दसाददे" इस मन्त्र का पाठ किया जाता है । इसके अर्थ के द्वारा वस्तुविशेष का आदान अर्थात् ग्रहण अवगत होता है । ब्राह्मणग्रन्थ में कहा गया है "तां चतुर्भिरभ्रिमादत्ते" (तै० सं० ५।१।१) चार मन्त्रों से इस अभ्रि का ग्रहण करें । इसी प्रकार "इमामगृभ्णन् रसनामृतस्य इत्यश्वाभिधानीमादत्ते" (वा० सं० २२।१) इस स्थल में "इमामगृभ्णन् रशनामृतस्य" यह अंश मन्त्र है एवम् "इत्यश्वाभिधानीमादत्ते" यह अवशिष्ट अंश ब्राह्मण या विधायक है । यहाँ भी पूर्व के समान ब्राह्मणवाक्य के द्वारा ही मन्त्र से कथित रशना का ग्रहण कथित हो गया तो मन्त्र के द्वारा किसी अधिक अर्थ का बोध नहीं हो रहा है । इसी प्रकार "उरु प्रथस्व" (वा० सं० १।१२) यह एक मन्त्र है । हे पुरोडाश ! जिससे तुम विपुल रूप में हो सकते हो उसी रूप में अपना प्रसार करो । पुनः ब्राह्मणग्रन्थ में कहा गया है "उरु प्रथस्वेति पुरोडाशं प्रथयति" (तै० ब्रा० ३।२।८।४) उरु प्रथस्व यह कह कर पुरोडाश को फैलाये । इन स्थलों में मन्त्र के अर्थ को ब्राह्मणवाक्य ही कह रहा है, अत, मन्त्र का अर्थ विवक्षित नहीं हो सकता है ।

मन्त्र के अर्थ की विवक्षा मानकर ब्राह्मणवाक्य का अन्यथा व्याख्यान किया जा सकता है, किन्तु, यह भी ठीक नहीं है, वेद मन्त्र एवं ब्राह्मणात्मक होने पर भी ब्राह्मण विधिप्रधान है । विधि ही साक्षात् रूप में धर्म में प्रमाण है । विधि का अपने अर्थ में प्रामाण्य पूर्व सूत्र में ही सिद्ध किया गया है । यदि विधिवाक्य का अज्ञातज्ञापकत्वरूप प्रयोजन नहीं माना जाय तभी ब्राह्मण का अप्रामाण्य होगा, फलस्वरूप सम्पूर्ण वेद का ही अप्रामाण्य मानना होगा । इसलिए मन्त्र के अनुरोध से ब्राह्मण वाक्य का अर्थ

अन्यथा नहीं हो सकता है। मन्त्र का अर्थ ब्राह्मण वाक्य में ही कथित होने से मन्त्र अर्थवाद के समान स्वार्थ में अप्रमाण है। मन्त्रों का केवल उच्चारण के द्वारा ही प्रयोजन सिद्ध होता है, अतः, मन्त्र अदृष्ट या अपूर्व का ही जनक है।

मन्त्र को उच्चारणार्थक मानने पर अदृष्टरूप प्रयोजन की कल्पना होगी और अर्थ की विवक्षा मानने पर दृष्ट प्रयोजन भी सिद्ध होगा, अतः, ब्राह्मण को अनुवादक मान कर भी मन्त्र अर्थ का अभिधायक होगा, अर्थात् मन्त्र का अर्थ विवक्षित रहेगा, इसलिए अन्य दोष के लिए द्वितीय सूत्र की अवतारणा की गई है।

वाक्यनियमात्=मन्त्रवाक्यों का पदविन्यास नियमबद्ध है, अतः मन्त्रार्थ विवक्षित नहीं है। मन्त्र स्वार्थ का प्रतिपादक नहीं है, क्योंकि, मन्त्रवाक्य का पदविन्यास नियमबद्ध है।

आशय यह है कि मन्त्र का अर्थ विवक्षित नहीं है, इसमें दूसरा कारण यह भी है कि मन्त्र के पदों का जो क्रम है, उसका परिवर्तन नहीं किया जा सकता है। जैसे 'अग्निर्मूर्द्धा दिवः ककुद्' इस मन्त्र के पदों का क्रमभङ्ग कर 'अग्निर्दिवोमूर्द्धा' इस प्रकार पढ़ा जाय तो मन्त्र का पाठ विफल होगा; यह सभी को मानना पड़ेगा। अपने अर्थ का प्रकाश करना ही यदि मन्त्र का प्रयोजन होता तब यहाँ प्रयोग क्रम का बन्धन नहीं रहता, क्योंकि, मन्त्र के पदों का क्रमभङ्ग करने पर भी अर्थ की प्रतीति में किसी प्रकार की अनुपपत्ति नहीं होती।

पाठक्रम नियम को अदृष्टरूप प्रयोजन की सिद्धि के लिए मानने पर भी मन्त्रपाठ अर्थबोध के लिए ही है, इस आशङ्का से अन्यदोष की अवतारणा की गई है—

बुद्धशास्त्रात् = ज्ञात विषय का ही अनुशासन होने से मन्त्रों का अर्थ विवक्षित नहीं है। मन्त्र स्वार्थ में विवक्षाशून्य है।

आशय यह है कि पैर में जूता पहनने के बाद जूता पहनता है– यह कथन जैसे निष्प्रयोजन है, वैसे ही जो विषय पूर्व से अवगत है; उसी का पुनः मन्त्र से कथन निष्प्रयोजन है। याज्ञिकों को मन्त्रपाठ के पूर्व से ही अपने-अपने कर्तव्य की जानकारी रहती है, कारण, जो व्यक्ति जिसका जानकार नहीं रहता है वह व्यक्ति उस कर्म को नहीं कर सकता है। "अग्नीदग्नीन् विहर" (तै० सं० ६।३।१।२) हे अग्नीध्र अर्थात् ऋत्विग्विशेष अग्नि लेकर विहरण करें इत्यादि मन्त्र याज्ञिकों के कर्तव्य के बोधक हैं, इनके द्वारा अपने अर्थ का प्रतिपादन जूता पहनने के बाद जूता पहनने के समान निष्प्रयोजन है। इसलिए, मन्त्रों का अर्थ विवक्षित नहीं है।

अवगत अर्थ का प्रमादवश विस्मरण के परिहार के लिए मन्त्र का अर्थ स्मारक हो सकता है, अतः अन्य दोष की आशङ्का से अन्य सूत्र की अवतारणा की है—

अविद्यमानवचनात् = जिसका अस्तित्व नहीं है, उन वस्तुओं के विषय में कहा गया है, अतः, मन्त्र का अर्थ विवक्षित नहीं है।

आशय यह है कि मन्त्र का अर्थ विवक्षित होने पर यज्ञ के साधन या उपकरण का ही मन्त्र के द्वारा कहना उचित था। किन्तु, चत्वारि शृङ्गा त्रयो अस्य पादा। द्वे शीर्षे सप्तहस्तासो अस्य (ऋ० ४।५८।३) चार सींग, तीन पैर, दो मस्तक एवं सात हाँथ इत्यादि मन्त्र का अर्थ असम्भव है। क्योंकि, इस तरह की यज्ञसाधन वस्तु नहीं है। इसलिए सम्भव होने पर भी इससे यज्ञ में किसी प्रकार का उपकार नहीं हो सकता है। अतः, मन्त्र का अर्थ विवक्षित नहीं है। ये मन्त्र उच्चारण से ही क्रिया के सम्पादक हैं और इसी से अदृष्ट या अपूर्व होता है।

पूर्वोक्त मन्त्र के अनुरूप कोई देवता हो सकता है, इस आशङ्का से अन्य दोष की अवतारणा के लिए अचेतनेऽर्थबन्धनात् (जै० १।२।०५) सूत्र दिया है।

अचेतनेऽर्थबन्धनात् = चेतनाहीन द्रव्य में सम्बोधन आदिरूप अर्थ का सम्बन्ध होने से मन्त्र का अर्थ अविवक्षित है। अर्थबन्धनात्=सम्बोधनादि रूप अर्थ का बन्ध = सम्बन्ध रहने से। आशय यह है कि "ओषधे त्रायस्वैनं, स्वधिते मैनं हिंसीः" (तै० सं० १।२।११) "शृणोति ग्रावाणः" (तै० सं० १।३!१३) हे औषधि ? तुम इसकी रक्षा करो, हे स्वधिति ? (कुठार या अस्त्रविशेष) तुम इसकी हिंसा मत करना। हे ग्रावण ? अर्थात् प्रस्तरखण्ड ? तुम सुनो इत्यादि मन्त्रों का अर्थ बाधित है। कारण, इन स्थलों में चैतन्य-शून्य औषधि, कुठार, प्रस्तर आदि को सम्बोधन किया है। सम्बोधन का अर्थ अभिमुखी-करण—वक्ता के प्रति मनोयोग आकर्षण है। किन्तु, चेतना-विहीन जडवस्तु का अभि-मुखी करण नहीं हो सकता है। इसलिए, मन्त्रों का अर्थ अविवक्षित है।

जडवस्तु के अभिमानी देवता का व्यवहार व्याससूत्र में निर्दिष्ट किया गया है। अभिमानिव्यपदेशस्तु (वे० सू० २।१।५) अतः, औषधि आदि के अभिमानी चेतन देवता की विवक्षा की जा सकती है, इस आशङ्का से अन्य दोष के लिए सूत्र की अवतारणा कर रहे है—

विप्रतिषेधात्=मन्त्र के पदों के अर्थों का परस्पर विरोध होने से मन्त्रों का अर्थ निष्प्रयोजन है।

आशय यह है कि अदितिर्द्यौरदितिरन्तरिक्षम् ( ऋ० १।८९।१० ) अदिति ही द्यौ है, अदिति ही अन्तरिक्ष है, इत्यादि मन्त्रों के पदों में परस्पर विरोध है। कारण एकबार अदिति को द्यौ कहा गया है और पुनः उसी अदिति को अन्तरिक्ष कहा गया है। इसी एको रुद्रो न द्वितीयोऽवतस्थे। असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् ( वा० सं० १९।५४ ) रुद्र एक है, द्वितीय नहीं। जगत् में संख्याविहीन हजार-हजार रुद्र हैं, इत्यादि मन्त्रों के अर्थ में विशेष रूप से विरोध लक्षित होता है, कारण, एक बार एक रुद्र कहा गया और पुनः हजार-हजार रुद्र कहे गये हैं। इस प्रकार मन्त्र के पदों के अर्थ में विरोध होने से मन्त्र का अर्थ विवक्षित नहीं है।

यदि यह कहा जाय कि त्वमेव माता च पिता त्वमेव इत्यादि के समान अन्तरिक्ष आदि रूप में अदिति की स्तुति की गई है। इसी प्रकार एक रुद्र की भी योग सामर्थ्य से अनेकरूपता हो सकती है, अतः, अर्थ में विरोध नहीं है, अतः अन्य दोष के लिए दूसरे सूत्र की अवतारणा की गई है।

स्वाध्यायवदवचनात्=वेद के अध्ययन के लिए जिस प्रकार "स्वाध्यायोऽध्येतव्यः" यह विधि है, प्रयोग के समय में मन्त्र के अर्थ जानने के लिए वैसी कोई विधि नहीं है। इसलिए, मन्त्र का अर्थ विवक्षित नहीं है, या किसी समय पूर्णिका नाम की कोई स्त्री धान छांट रही थी। उसी के समीप में माणवक अध्ययन के समय अवघात मन्त्र का अभ्यास कर रहा था। अर्थ के प्रकाशन की विवक्षा वहाँ नहीं है। प्रत्येक मुसल के प्रहार के साथ मन्त्र को नहीं पढ़ा जा रहा था, अतः, अक्षर-ग्रहण के लिए ही उस मन्त्र का और अन्य मन्त्रों का अभ्यास करता है। अध्ययन के समय पढ़ा गया भी अवधान जैसे पूर्णिका नाम की स्त्री के प्रति अपने अर्थ का प्रकाशन नहीं करता है, वैसे ही कर्म के समय में भी वह अपने अर्थ को नहीं कहता है।

स्वाध्यायवत्=स्वाध्याय के समान। अवचनात्=वचन न होने से। यदि यह कहा जाय कि माणवक को वहाँ अर्थ की विवक्षा नहीं है पूर्णिका भी अर्थ को जानने में असमर्थ है। कर्म में अध्वर्यु को अर्थ विवक्षा रहती है और बोध भी हो सकता है—इस आशङ्का से अन्य सूत्र की अवतारणा की गई है—

अविज्ञेयात्=कतिपय ऐसे मन्त्र हैं, जिनका अर्थ अविज्ञेय है, अतः, वे उच्चारणरूप प्रयोजन के लिए हैं, वैसे ही अन्य मन्त्र भी हैं।

आशय यह है कि मन्त्रों का अर्थ कर्म के अनुष्ठान में निष्प्रयोजन है, क्योंकि, "अम्यक् सा त इन्द्र ऋष्टिरस्मे, त्रीण्येव जर्फरी तुर्फरीतु", इत्यादि मन्त्रों का कोई अर्थ नहीं होता है। मन्त्रों का अर्थ विवक्षित होने पर इन मन्त्रों का भी अर्थ होता, किन्तु, इनका कोई अर्थ नहीं है। अतः, उक्त मन्त्र केवल पाठ के द्वारा ही यज्ञ का उपकारक है, अन्य मन्त्रों की भी वैसी ही स्थिति है।

यदि यह कहा जाय कि ऐसे मन्त्रों के अर्थ के ज्ञान के लिए ही निगम, निरुक्त, व्याकरण प्रवृत्त हुए हैं—इस आशङ्का से अन्य सूत्र की अवतारणा की गई है।

अविज्ञेयात्=कतिपय मन्त्रों का अर्थ अविज्ञेय है। अतः केवल उच्चारणार्थक होने से अन्य मन्त्र भी वैसे ही हैं।

अनित्यसंयोगान्मन्त्रानर्थक्यम्=जननमरणशील अर्थ के वाचक शब्दों का प्रयोग होने से मन्त्र का अर्थ निष्प्रयोजन है।

आशय यह है कि "किं ते कृण्वन्ति कीकटेषु गावः (ऋ० ३।५३।१४) इत्यादि मन्त्रों में कीकट नामक नगर, नैचाशाख नामक नगर एवं प्रमगन्द नामक राजा के

विषय में उल्लेख है। यदि मन्त्र का अर्थ विवक्षित माना जाय तो इन पूर्वोक्त वस्तुओं की उत्पत्ति के बाद ही इन मन्त्रों की रचना माननी पड़ेगी। ऐसा मानने पर अनित्य वस्तुओं का प्रतिपादक होने से मन्त्र अनित्य हो जायगे और मन्त्र को भागविशेष में अनित्य मानने पर सम्पूर्ण वेद को ही अनित्य मानना पड़ेगा। इसलिए, यह अवश्य ही मानना होगा कि कर्मानुष्ठानरूप अर्थ के प्रकाशन में मन्त्र की सार्थकता नहीं है, फलतः मन्त्र की अनर्थकता या प्रयोजनशून्यता सिद्ध होती है। अदृष्ट या अपूर्व का उत्पादन करना ही मन्त्र का प्रयोजन है, अतः, मन्त्र का अर्थ विवक्षित नहीं है।

अनित्यसंयोगात् = जननमरणशील अर्थ के साथ संयोग अर्थात् वाचकता सम्बन्ध होने से, मन्त्रानर्थक्यम् = मन्त्रों का स्वार्थ निष्प्रयोजन है। यह पूर्व पक्ष है॥ ३१॥

## अविशिष्टस्तु वाक्यार्थः ॥१.२.३२॥

**शा० भा०–अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः। स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति। नैवम्। लोके तैरर्थैरवबुद्धैः संव्यवहारः। इह देवताभिरप्रत्यक्षाभिर्यज्ञाङ्गैश्चाचेतनैः संलापे न कश्चिद्यज्ञस्योपकारः। यद्यदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति। यद्धि कर्तव्यम्, तत्प्रयोजनवत्, उच्चारणं च न कचञ्चित् न कर्तव्यम्, यद्यपूर्वाय, यद्यर्थाय। यद्यर्थो न प्रत्याय्यते, न किञ्चिदनर्थकम्। यदि न प्रयुज्यते, समाम्नानानर्थक्यम्। तस्मादुच्चारणादपूर्वम्। तथा च तदर्थशास्त्राद्युक्तम्। तदुच्यते। अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम्। यदुक्तं न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्तीति यज्ञे। यज्ञाङ्गप्रकाशनमेव प्रयोजनम्। कथम्? न ह्यप्रकाशिते यज्ञे यज्ञाङ्गे च यागः शक्योऽभिनिर्वर्तयितुम्। तस्मात्तन्निर्वृत्त्यर्थमर्थप्रकाशनं महानुपकारः कर्मणः तच्च करोतीत्यवगम्यते। तस्मादस्त्यस्य प्रयोजनम्। तच्च दृष्टं न शक्यमपवदितुं नार्थाभिधानं प्रयोजनमिति।**

**नन्वर्थाभिधानेनोपकुर्वत्सु, तां चतुर्भिरादत्त इत्येवमाद्यनर्थकं कामं भवतु, न जातुचिदपजानीमहे दृष्टमर्थाभिधानस्योपकारकत्वम्॥ ३२॥**

भा०वि०–सिद्धान्तमाह–**अविशिष्टस्त्विति**। तुशब्दः पक्षव्यावर्तकः, यस्माल्लोके वेदे च वाक्यादर्थप्रत्ययोऽविशिष्टः तस्माद्यथा लोके प्रतीयमानोऽर्थो विवक्षितस्तथा वेदेऽपि विवक्षित एवं सोऽर्थो भवितुमर्हतीति सूत्रं व्याचष्टे—**अविशिष्टस्त्विति**। लोके प्रयुज्यमानानां पदानां वेदे च पदानां प्रयुज्यमानानामिति सम्बन्धः, इदमिह हृद्गतम्—यद्युच्चारणमात्रेणादृष्टार्थता भवेत्, ततोऽविवक्षितार्थता कल्प्येत, न त्वेवं सम्भवति। तथा हि मन्त्रोच्चारणस्य तावत् कर्माङ्गत्वं प्रयाजादिवत् साक्षाद्वा मन्त्रादिद्वारेण वा प्रोक्षणादिवदभ्युवगम्यते साक्षादप्यङ्गत्वं प्रकरणेन

वा स्याद् अध्ययनविधिसामर्थ्येन वा ? न तावत् प्रकरणेन कर्मप्रकरणे मन्त्रोच्चारणस्याप्यविधानात् नाप्यध्ययनविधिसामर्थ्येन यथास्थितवेदाध्ययनविधानात् कर्मप्रकरणपठितानामपि तत्रैवाध्ययनं विदधता तन्नियमार्थत्वाय कर्माङ्गत्वमाक्षिप्यते, मन्त्राङ्गत्वनिर्वाहाय कल्पनीयस्योच्चारणस्याक्षरग्रहणनिराकाङ्क्षस्य साक्षात्कर्माङ्गत्वयोगात् । नापि मन्त्रद्वारेणोच्चारणस्य कर्माङ्गत्वं मन्त्राणामक्रियारूपत्वेन प्रकरणाग्राह्यत्वात् अक्षरग्रहणाधीनपदपदार्थज्ञानयोरपि वाक्यार्थप्रत्ययनिराकाङ्क्षयोर्न प्रकरणग्राह्यत्वसम्भवः वाक्यार्थप्रत्ययोऽपि शास्त्रार्थावधारणवेलायामुत्पद्यमानोऽनुष्ठास्यमानार्थस्मृतिहेतुत्वान्न साक्षात्कर्माङ्गत्वमश्नुवीत, तेनानुष्ठानौपयिकार्थप्रत्ययनिराकाङ्क्षाद्वाक्यादेवद्वादृष्टकल्पनानुपपत्तेः अर्थप्रत्ययपर्यन्तादेव मन्त्रोच्चारणाददृष्टं नियमरूपं कल्पनीयमिति मन्त्रोच्चारणस्याक्षरग्रहणादिपरम्परयानुष्ठास्यमानार्थस्मृतिहेतुत्वेन दृष्टार्थत्वोपपत्तेः न केवलाददृष्टार्थत्वकल्पना युक्तेति हृदयम् । यथा लौकिकैरर्थैः शब्दावगतैः व्यवहारः नैवं वैदिकैः, अतः समवेतार्थत्वाभावाददृष्टार्थतैव मन्त्राणामिति वैषम्यं शङ्कते—**नैवमिति । यज्ञाङ्गैरचेतनैरिति ।** ओषधिग्रावप्रभृतिभिरित्यर्थः, अप्रत्यक्षाभिरचेतनैरिति च विशेषणव्यवहारयोग्यत्वसिद्धये यद्यप्ययोग्यैस्संलापो न दृष्टमुपकारं करोति, तथाप्यदृष्टार्थो भविष्यत्यत आह—**यदिति ।** अर्थविवक्षासम्भवेनाभिधानस्यादृष्टार्थत्वकल्पनायामुच्चारणादेव तत्कल्पनं वरमित्यभिप्रायः, कस्मादेवम् ? इत्यत आह—**यद्धीति ।** यदवश्यकर्तव्यमुच्चारणं तद्धि प्रयोजनवद्युक्तं यस्मादित्यर्थः । उच्चारणस्यावश्यकत्वं प्रतिपादयति—**न कथञ्चिदिति ।** कर्तव्यमुच्चारणमित्यनुषङ्गः, अदृष्टायार्थाभिधानाय वा कर्तव्यमित्यर्थः ।

ननूच्चारणवदर्थाभिधानमपि कर्तव्यमेवेत्याशङ्क्य यथाकर्मकाला प्रयोज्यत्वे मन्त्राणां समाम्नानार्थक्यं न तथार्थप्रत्यायनशून्यत्वे अदृष्टफलोच्चारणार्थतयाप्यध्ययनोपपत्तेरित्याह—**यदर्थ इति ।** उच्चारणस्यैवावश्यकत्वे सिद्धे फलितमाह—**तस्मादिति ।** उच्चारणस्यैवापूर्वार्थत्वं तदर्थशास्त्रादित्यादिभिरप्युक्तमित्याह—**तच्चेति ।** शङ्कितं वैषम्यं परिहरति **तदित्यादिना ।** असमवेतार्थत्वेनादृष्टार्थत्वमुक्तं स्मारयति—**नन्विति ।** देवस्य त्वेत्यादाविव समवेतशेषतयोपयोगादभिधानार्थत्वमेव चतुरस्रमिति परिहरति—**यज्ञ इति ।**

ननु तत्प्रकाशनमपि कथं प्रयोजनमिति पृच्छति—**कथमिति ।** अनुष्ठानोपयोगादित्युत्तरमाह—**नहीति ।** यज्ञग्रहणं दृष्टान्तार्थं तेन यागनिर्वृत्त्यर्थस्य प्रकाशनस्य समञ्जसं कर्मोपकारकत्वमित्याह—**तस्मादिति ।** स्पष्टं च यज्ञाङ्गप्रकाशनं मन्त्रः करोतीति गम्यत इत्याह—**तच्चेति ।** तेन बर्हिर्देवसदनं दामीत्यादेस्सिद्धं प्रयोजकत्वमित्याह—**तस्मादिति ।** न चैतस्मिन् दृष्टे सम्भवत्यदृष्टकल्पना साध्वीत्याह—**तच्चेति ।** निगमयति—तेनेति ।

ननु अस्तु श्रुत्यविनियुक्तानां बर्हिर्देवेत्यादिमन्त्राणामर्थाभिधानार्थता श्रुतिविनियोज्यानां त्वर्थपरत्वे लिङ्गादेव विनियोगसिद्धेः विनियोजकशास्त्रानर्थक्यं स्यादिति शङ्कते—**नन्विति**। निगूढाभिप्रायः परिहरति—**काममिति**। दृष्टोपकाराविरोधेन विनियोजकशास्त्रस्य विषयान्तरं कल्पनीयमिति निगूढोऽभिप्रायः ॥३२॥

त० वा०—मन्त्रोच्चारणं तावदक्षरग्रहणेन निराकाङ्क्षीकृतं न साक्षात्क्रत्वङ्गत्वं प्रतिपद्यते। अक्षराणां च द्रव्यवदनितिकर्तव्यतात्मकत्वात्प्रकरणेनाग्रहणम्। एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यादग्रहणम्। वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्तमानः क्रियात्मकत्वात्प्रयोगवचनाकाङ्क्षितः कर्मसमवेतानुष्ठानस्य मानार्थस्मृतिफलत्वेनेतिकर्तव्यता भवति। तत्रादृष्टकल्पनानिमित्ताभावः। समाम्नानान्यथानुपपत्त्या हि तत्कल्प्येत, नोपपन्नेऽर्थवत्त्वे। यद्यपि च तत्कल्पनावसरो भवेत्, तथाऽपि कामं वाक्यार्थप्रत्ययादेव न त्वौपयिकार्थप्रतीतिनिराकाङ्क्षाद्वाक्यात्। अवश्यं च दृष्टादृष्टयोर्विनियुज्यमानस्य प्रमाणमुपन्यसितव्यम्। इह च प्रकरणाददृष्टार्थता लिङ्गाच्च दृष्टार्थता। न च प्रकरणमशक्येऽर्थे विनियोक्तुमर्हतीत्येकान्तेनैतदापतति—यच्छक्नुयात्तन्मन्त्रेण कुर्यादिति। न चासावदृष्टं शक्नोतीति लौकिकं वैदिकं वा प्रमाणं विद्यते। तस्मादुभयोर्लिङ्गप्रकरणयोर्दृष्टार्थप्रयोगेणैकवाक्यता। एवं च सति याज्ञिकप्रयोगप्रसिद्धेर्न मूलान्तरकल्पनाक्लेशो भविष्यति। अतः स्वाभाविकमेवार्थप्राधान्यमवस्थितम्। नैवमिति। न दृष्टोऽर्थो निर्वृत्त इत्येतावतैव तादर्थ्यमवसीयते। पुरुषार्थानुपयोगेन स्वाध्यायाध्ययनविधेरानर्थक्यात्। न च बुद्धशास्त्राविद्यमानवचनार्थबन्धनान्मन्त्रार्थोपयोगः। तत्र यदि दूरेऽप्यदृष्टकल्पनातो न मुच्यामहे ततोऽतिक्रमणाभावादुच्चारणादेव कल्पनीयम्। उभयवादिसिद्धत्वादुच्चारणकर्तव्यतायास्तत्प्रभवत्वाच्चादृष्टकल्पनस्य।

तत्रोच्यते **यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनमिति**। यद्यपि लोकवत्तैर्न संव्यवहारः तथाऽपि तत्स्वरूपप्रकाशनमात्रमेवानुष्ठातॄणामुपकरिष्यति। अतश्च यावन्मात्रमेवानौपयिकं सम्बोधनादि, कामं तन्न विवक्ष्येत, न तु तद्वशेन सर्वमेव त्यक्तव्यं न ह्यैकरूप्यं नाम केनचिन्नियतम्। तस्माद्यथादर्शनाभ्युपगमाद्बर्हिर्देवसदनं दामीत्येवमादीनां तावदविहतमर्थप्राधान्यम्। तां चतुर्भिरादत्त इत्यत्रादि वदामः ॥३२॥

न्या० सु०—सिद्धान्तसूत्रव्याख्यानार्थमविशिष्टस्त्विति भाष्यं प्रतीतिमात्रेण विवक्षानुपपत्तेरयुक्तम शङ्कयोपपादयति—**मन्त्रेति**। अयमाशयः—मन्त्रोच्चारणस्य कर्माङ्गत्वं प्रयाजादिवत्साक्षाद्वाभ्युपगम्यते प्रोक्षणादिवद्वा। मन्त्रद्वारेण साक्षादप्यङ्गत्वं प्रकरणेन वा,

स्यादध्ययनविधिसामर्थ्येन वा । न तावत्प्रकरणेन कर्मप्रकरणे मन्त्रोच्चारणस्याविधानात् स्वाध्यायाध्ययनविधिना यथाम्नानवेदाध्ययनविधानात्कर्मप्रकरणपठितानां तत्रैवाध्ययनं विदधता कर्मप्रकरणाध्ययननियमार्थवत्त्वाय तदङ्गत्वमाक्षिपन्नोच्चारणं विनाङ्गत्वायोगात्कर्मकालोच्चारणविधिकल्पने कृते कैमर्थ्यापेक्षायामुच्चारणस्य कर्माङ्गत्वमाक्षिप्यत इति चेत् ? न ।। मन्त्राङ्गत्वनिर्वाहाय कल्पितस्योच्चारणस्य मन्त्राक्षराभिव्यक्तिमात्रेण निराकाङ्क्षस्य साक्षात्कर्म्माङ्गत्वायोगात् । नापि मन्त्रद्वारेणोच्चारणस्य कर्म्माङ्गत्वम्, मन्त्राक्षराणामक्रियारूपत्वेन प्रकरणाग्राह्यत्वात् ।

यथोक्तम् ।

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ।। इति (तं० वा० २८४)

अध्ययनविध्याक्षिप्तस्याप्यङ्गत्वस्य स्वव्यापारं विनानुपपत्तेरुच्चारणस्य पुंव्यापारत्वेनाभिधानमन्तरेणानिर्वाहात् । अत एव श्रुतिविनियुक्तानामपीषे त्वादीनामभिधानं विनाङ्गत्वानुपपत्तिः । न च पदार्थाभिधानव्यापारमात्रेणाङ्गत्वम्, कर्मानुष्ठानानौपयिकत्वेन तस्य वाक्यार्थमात्रप्रतिपादनमात्रे पर्यवसानात् । अतः प्रकरणावधारिताङ्गभावानां मन्त्राणां कर्मानुष्ठानौपयिकवाक्यार्थप्रतिपादनव्यापारेणाङ्गत्वावसायात्, कर्मकाले मन्त्रोच्चारणार्थस्यार्थाभिधानपर्यवसानसिद्धिरिति कर्मसमवेतानुष्ठास्य मानार्थस्मृतिफलत्वेनेति करणामन्त्राभिप्रायम् । क्रियमाणानुवादिनामनुष्ठीयमानार्थस्मृतिफलत्वात् । अनुमन्त्रणादीनां च कृताकृतप्रत्यवेक्षणायानुष्ठितार्थस्मृतिफलत्वात्, प्रोत्साहनार्थानां चागन्मस्वः, संज्योतिषाऽभूमेत्यादीनां यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवतीति वाक्यावधारितकर्माङ्गभूतश्रद्धाजननार्थमनुष्ठेयकर्मस्मृतिफलत्वात्, स्तोत्रशस्त्रमन्त्राणां चारादुपकारकत्वं स्तुत्यर्थत्वेन कर्मसमवेतार्थप्रकाशनानियमात् । एवं च कर्मौपयिकार्थाभिधानार्थत्वेन प्रकरणपाठार्थवत्त्वोपपत्तेर्नादृष्टकल्पना युक्तेत्याह—अतश्चेति ।

ननु प्रकारान्तरेणाप्यनुष्ठेयार्थस्मृतिसिद्धेर्मन्त्रनियमस्यादृष्टार्थत्वं त्वत्पक्षेऽपि कल्प्यम् । अत आह—यद्यपि चेति । लिङ्गाच्च दृष्टार्थतावगतेर्न दुर्बलप्रमाणवशेनादृष्टार्थत्वं कल्पयितुं शक्यमित्याह—अवश्यं चेति ।

ननु प्रकरणबाधे सामान्यसंबन्धाभावात्तत्सापेक्षत्वेन लिङ्गस्याविनियोजकत्वं स्यादत आह—न चेति । नात्र प्रकरणावगम्यक्रतुसंबन्धाख्यसामान्यसम्बन्धो बाध्यते, विरोधाभावाद् । द्वारविशेषसम्बन्धे तु विरोधः । तत्र च प्रकरणस्य शक्तिरूपलिङ्गसापेक्षत्वात्तद्बाध्यत्वं युक्तमेवेत्याशयः । दृष्टार्थत्वेनाविरोधान्न कस्यचिद् बाध इत्याह—तस्मादिति । अभिधानार्थत्वाभावे च निर्व्यापाराणां मन्त्राणां प्रकरणग्रहणायोगादुच्चारणं व्यापारद्वारेण प्रकरणग्रहणे तस्यानुष्ठानौपयिकत्वेनाभिधानवत्कर्मविधिनानाक्षेपादविधानाच्चोच्चारणद्वारेण प्रकरणग्रहणम्, प्रकरणग्रहणाच्चोच्चारणमितीतरेतराश्रयापत्तेरुच्चारणविधिकल्पनं

विना कर्मकालोच्चारणकर्त्तव्यतायां प्रमाणाभावाद्याज्ञिकाचारदर्शनेनोच्चारणविधिकल्पने क्लेशः स्यादित्यर्थान्तरन्यासेनाह—एवं चेति । उपसंहरति—अत इति । नैवमित्याशङ्काभाष्यं व्याचष्टे नैवमित्यभिधानार्थत्वेऽप्यसमवेतार्थप्रकाशनस्यादृष्टार्थत्वापरिहारात्तत्पर्यन्तत्वकल्पनं न युक्तमित्याशयः । तदुच्यत इति परिहारभाष्यं व्याचष्टे—तत्रेति । ततश्च वचनान्नैषामितरार्थं प्रयुज्येतेत्यसमवेतस्यापि समवेतविशेषणत्वेनाभिधानस्यानवमे वक्ष्यमाणत्वाद्विशिष्टरूपप्रकाशनस्यादृष्टार्थत्वापरिहारात्, तात्पर्यपूर्वकमनुष्ठितमभ्युदयकारि भवतीति नियमादृष्टकल्पनेन चाभिधानार्थवत्त्वोपपत्तेः काममित्युक्तम् । तस्मादस्तीत्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ।

नन्वस्तु श्रुत्यविनियुक्तानामुक्तेन न्यायेनार्थप्राधान्ये; श्रुतिविनियुक्तानां त्वर्थप्राधान्ये अभ्यादानादिमन्त्राणां लिङ्गादेव विनियोगसिद्धेस्तदर्थशास्त्रानर्थक्यं स्यादत आह—**तां चतुर्भिरिति** । इतिकरणोऽत्र मन्त्रविनियोजकश्रुतिमात्रपरिग्रहार्थः । चतुर्भिरितितृतीयया मन्त्राणां करणत्वेऽभिहिते, स्वव्यापारं विना तदयोगात् उच्चारणस्यात्तद्व्यापारत्वात्कर्मोत्पत्त्यनुपयोगित्वाच्च स्वव्यापारकर्मोत्पत्त्युपयोग्यभिधानव्यापारेण करणत्वाध्यवसायाच्चतुर्भिरभ्यादानयमभिदध्यादिति वाक्यार्थावगमे इति करणविनियुक्तानामर्थक्रियारूपत्वेन कथम्भावाग्राह्यत्वात् द्रव्यदेवतावत्क्रियोत्पत्त्युपयोगित्वावगतेः कारकत्वावसायात्करणव्यतिरिक्तकारकत्वानुपपत्तेः, करणत्वनिश्चये सति पूर्ववदभिधानार्थत्वसिद्धेः स्तोत्रशस्त्रमन्त्राणां च स्तौतिशंसतिभ्यामेवाभिधानार्थत्वावसायात्तां चतुर्भिरादत्त इत्यादिश्रुतिविनियोज्येष्वभ्यादानादिमन्त्रेषु तदर्थशास्त्रानर्थक्यप्रसङ्गायोगेनाप्यर्थप्राधान्यमविहतमित्यर्थः । अनेन च नन्वित्याशङ्काभाष्यस्य काममित्युत्तरभाष्यं स्याख्यातमथेत्याशङ्कानिराकरणार्थत्वेन ॥ ३२ ॥

भा० प्र०—लौकिक और वैदिक वाक्यों के भेद का कारण न रहने पर दोनों एक ही प्रकार के हैं । लौकिक वाक्यों से जिस प्रकार अर्थ की अभिव्यक्ति होती है वैदिकवाक्यों से भी उसी तरह वाक्यार्थ का प्रकाशन होता है । पूर्वपक्ष के द्वारा यह स्थिर हुआ है कि मन्त्रों का अर्थ विवक्षित नहीं है, क्योंकि मन्त्रों के स्वार्थ की विवक्षा मानने पर प्रदर्शित दोषों की सम्भावना है, अतः मन्त्रों को अदृष्टार्थक मानना ही युक्तिसङ्गत है ।

जिस स्थल में दृष्ट प्रयोजन परिलक्षित नहीं होता है; वहाँ अदृष्ट की कल्पना करनी पड़ती है । किन्तु, साधारण रूप में मन्त्रों से अनुष्ठेय कर्मों का स्मरण होने से वही मन्त्रोच्चारण का प्रयोजन है ।

यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना ।
अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत् ॥

अतः यज्ञ का विषय एवं यज्ञाङ्गों का प्रकाश कर ही मन्त्रोच्चारण सार्थक होता है। इसलिए मन्त्रों के स्वार्थ में आनर्थक्य की प्रसक्ति नहीं है। फलतः, अदृष्ट=अपूर्व ही मन्त्रों का प्रयोजन नहीं है।

"अवशिष्टः"=विलक्षण नहीं, 'तु'=किन्तु, तु शब्द पूर्वपक्ष के निराकरण का सूचक है। "वाक्यार्थः" = वाक्य का अर्थ। [वैदिकवाक्यों का अर्थ लौकिक प्रयोग से विलक्षण नहीं है।] लौकिक और वैदिक दोनों स्थलों में वाक्यार्थ एक ही तरह अर्थ का प्रकाशक है ॥ ३२ ॥

**अथ किं भवच्छास्त्रमनर्थकमेव ? न हि—**

**गुणार्थेन पुनः श्रुतिः ॥१.२.३३॥**

**शा० भा०—यदुक्तम्, 'तां चतुर्भिरादत्त' इति समुच्चयशब्दाभावान्न समुच्चयार्थमिति। चतुःसंख्याविशिष्टमादानं कर्तव्यमिति वाक्यादवगम्यते। तदेकेन मन्त्रेण गृह्णन् यथाश्रुतं गृह्णीयादिति ॥ ३३ ॥**

भा० वि०—परस्त्वगृहीताभिसन्धिराह—अथेति। तद्विनियोजकशास्त्रमनर्थकं किम्, नैवानर्थक्यं युक्तमध्ययनविधिपरिग्रहविशेषादिति भावः।

सिद्धान्ती स्वाभिप्रायं विवरीतुं सूत्रमवतारयति—न हीति। सूत्रं व्याख्यातुं नन्वर्थाभिधानेनेत्यादिनोक्तां शङ्कामनुवदति—यदुक्तमिति। देवस्य त्वेत्यादीनामादानकरणत्वस्य लिङ्गादेवावगतेः तेषां चतुष्ट्वस्य चान्तरेण वचनमवगमात् समुच्चयः परिशिष्येत तस्य च चशब्दाद्यभावेनासम्भवात् वचनानर्थक्यमित्यर्थः, तदयुक्तमिति परिहारप्रतिज्ञां हृदि निधाय गुणार्थेनेत्यादिव्याचक्षाणो हेतुमाह—चतुःसङ्ख्येति। इह हि चतुःसङ्ख्याविशिष्टमन्त्रकरणकमादानं कर्तव्यमिति वाक्यादवगम्यते, तत्र यद्यप्यादानमर्थप्राप्तं मन्त्राश्च प्राप्ताः सामर्थ्येन, तथाप्यनन्यलभ्यः शब्दार्थ इति न्यायेन चतुःसङ्ख्याकमन्त्रकरणत्वमात्रमनेन प्रतिपाद्यमिति गम्यते, तस्माच्च शब्दाद्यभावेऽपि चतुःसङ्ख्यालक्षणगुणविधानेन समुच्चयार्थत्वात् पुनः श्रवणस्य नानर्थक्यमिति हृदयम्।

ननु लिङ्गबलादेकैकस्य मन्त्रस्यादानकरणत्वावगतेः कथं समुच्चयसिद्धिरित्याशङ्क्य श्रुतिविरोधे लिङ्गस्याभासत्वान्नैवमित्याह—एकेनेति ॥ ३३ ॥

त० वा०—यद्यपि मन्त्राः प्राप्ताः सामर्थ्येन, तथाऽपि चतुःसंख्यामादाने विधास्यति। तत्रारुणैकहायनीन्यायेन परस्परनियमे सति मन्त्रगतचतुःसंख्याविशिष्टमादानं चोदितं समुच्चयादृते कर्तुं न शक्यत इत्यर्थात्समुच्चयफलम्।

अथ वा यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्ते, तावदनेन प्रत्यक्षवचनेन चतुःसंख्याविशिष्टास्ते विहितास्तेनाप्राप्तविधिरेव वचनम् । तत्र तु विनाऽप्येतेन मन्त्रेष्वर्थात्प्राप्तवत्सु तत्परत्वे मन्दं फलमित्यनन्यलभ्यचतुःसंख्यार्थं तस्योपदेशः ॥३३॥

न्या० सु०—सूत्रमवतारयितुं न हीति भाष्यं व्याचष्टे—'बदाम' इति । नन्विति प्रोक्तामाशङ्कामनुभाष्य चतुःसंख्याविशिष्टमिति भाष्येण परिहृतम्, तदादानस्यापोष्टकामृच्चयनार्थमर्थात्प्राप्ते गुणार्थेनेति च सूत्रविरोधादयुक्तमित्याशङ्क्य व्याचष्टे—यद्यपीति । अर्थप्राप्ते चादाने संख्याविधौ भवत्यादानसंख्याविशिष्टतेत्यर्थः । विशिष्टादानविध्यभावादरुणैकहायनीन्यायानुपपत्तेः अर्थप्राप्तस्य चादानस्यानुवाद्यत्वेनैकविधावितरेण विशेष्टुमशक्यत्वाल्लिङ्गतश्चैकैकस्यैव मन्त्रस्य प्राप्तेः । संख्यानाकाङ्क्षत्वात्समुच्चयासिद्धेरपरितोषात् फलतो गुणार्थत्वप्रतिपादनपरत्वेनान्यथा व्याचष्टे—अथ वेति ॥ ३३ ॥

भा० प्र०—"तां चतुर्भिरभ्रिमादत्ते" (श० ब्रा० ६।३।१।१९) इत्यादि ब्राह्मण वाक्यों के मन्त्रों से प्रकाशित विषय का ही उल्लेख किया गया है, चतुःसंख्या रूप गुण विधान करना ही इसका उद्देश्य है । अभिप्राय यह है कि अभ्रिग्रहण विषयक चार मन्त्र हैं, उनमें किसी एक का उच्चारण करके ही अभ्रि का ग्रहण किया जा सकता है, किन्तु, उक्त ब्राह्मण ग्रन्थ से यह कहा गया है कि अभ्रिग्रहण काल में इन चार मन्त्रों का पाठ करना चाहिए, इसलिए, इन स्थलों में पुनः उल्लेख न होने पर मन्त्र का स्वार्थ के प्रकाश में कोई वाधा नहीं है ।

"गुणार्थेन"=गुण विधान रूप प्रयोजन के लिए, "पुनः श्रुतिः"=पुनः ब्राह्मण वाक्य पढ़ा गया है ।

इस प्रसङ्ग में पूर्वपक्षी का यह आशय है कि "अभ्रिरसि नार्य्यसि" (वा० सं० ११।१०) यहाँ से आरम्भ कर "त्रैष्टुभेन त्वा च्छन्दसा ददे" यह मन्त्र कहा गया है, इसी मन्त्र से अभ्रि के आदान की प्रतीति सिद्ध है, पुनः ब्राह्मण में 'तां चतुर्भिरभ्रिमादत्ते इति विधीयते' (श० ब्रा० ६।३।१।१९) यह विधान व्यर्थ है । इसके उत्तर में कहा है कि मन्त्र से प्रतीत अर्थ का ही ब्राह्मण में पुनः श्रवण चार संख्या के विधान के रूप में उपयुक्त है । चार संख्या लक्षण गुण के लिए विधान न होने पर मन्त्रों में किसी एक मन्त्र से अभ्रि का आदान हो जाता है ॥ ३३ ॥

## परिसंख्या ॥ १.२.३४ ॥

**शा० भा०—परिसंचक्षाणे च, इमामगृभ्णन्नित्यश्वाभिधानीमादत्त इति त्रयो दोषाः प्रादुःष्युरिति । नैवं सम्बन्ध इत्यादत्त इति । कथं तर्हि, इत्याश्वाभिधानीमिति । लिङ्गाद्रशनामात्रे शब्दात्तु विशेषेऽश्वाभिधान्यामिति सति च वाक्ये**

**लिङ्गं विनियोजकम्। तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति। कतरत्तत् ? अनेन मन्त्रेणाऽऽदानं कुर्यादिति यस्मिन्सति रशनामात्रे लिङ्गात्प्राप्नोति। अश्वाभिधान्यां तु प्रत्यक्षमेव वचनम्। अस्मिन्सति, तदानुमानिकं नास्ति। तेन गर्दभरशनायां न प्राप्तिरेवेति ॥ ३४ ॥**

भा० वि—उदाहरणान्तरे परोक्तमानर्थक्यं परिहरति—**परिसङ्ख्येति**। परिसङ्ख्या पुनः श्रवणफलमित्यर्थः, तत्र परोक्तान्दोषाननुवदति—परिसञ्चक्षाणे चेति। इमामगृभ्णन् रशनामृतस्येत्येतस्मिन् वाक्ये परिसङ्ख्यां कुर्वति सति स्वार्थहान्यादयः त्रयो दोषाः प्राप्नुयुरिति यदुक्तमित्यर्थः, तदयुक्तमित्यध्याहार्यम्, तत्र स्वार्थहानिं तावत् परिहरति—**नैवमिति**। यद्येषा श्रुतिर्मन्त्रं रशनादानमात्रे विनियोजयेत्, ततो लिङ्गादेवावाप्तेः विध्यानर्थक्येन तत्परत्वरूपस्वार्थहानिः स्यान्न त्वेवमश्वाभिधानीविशिष्टरशनादाने मन्त्राविनियोजकत्वाद्वाक्यस्य, न चैवमप्राप्तविधित्वान्न परिसङ्ख्येयमिति वक्तव्यम्, फलेनैवमभिधानात्। तथा हि परिसङ्ख्याशब्दादेवकाराद्विना न श्रुत्या परिसङ्ख्यात्वम्, वर्जनधीफलत्वात्तु परिसङ्ख्योच्यते, तच्च प्रकृतेऽप्यस्तीति परिसङ्ख्यात्वोपपत्तिः, अतो न स्वार्थहानिरित्यभिसन्धिः। इदानीं प्राप्तमेव बाधेत परार्थश्च कल्प्येतेति दोषद्वयं परिहरति—**लिङ्गादित्यादिना**। रशनादाने=रशनामात्राभिधाने इतीति, तेनादावेव विशेषश्रुतिपरिच्छिन्ने सति नैराकाङ्क्ष्यादेव मूलश्रुतिकल्पनासम्भवेन लिङ्गस्य विनियोजकत्वाभावात् न गर्दभरशनादाने मन्त्राप्राप्तिरित्यर्थः, अस्तु तर्हि विना श्रुतिकल्पनं लिङ्गं विनियोजकमित्यत आह—**सति चेत्यादिना**। वाक्यमिह श्रुतिः, ततः किमित्यत आह—**तच्चेति**। सामान्यविनियोजकं वाक्यं श्रुतिरस्य लिङ्गस्य कल्पनीयतया सामान्यप्रकरणाम्नानानुमितापि श्रुतिः प्रत्यक्षश्रुतिनैराकाङ्क्ष्येणानुमानासम्भवादेव नास्तीत्यर्थः, सामान्यविनियोजकश्रुत्याभावं विवरीतुं प्रश्नपूर्वकं श्रुतिस्वरूपं तावदाह—**कतरदित्यादिना**। ईदृशमेव तदित्यत्र लिङ्गमाह—**यस्मिन्निति**। प्राप्नोति मन्त्रः तद्वाक्यमेतदेवेति शेषः, किमत इत्याशङ्क्य प्रत्यक्षश्रुतिविरोधेन तदभावं प्रकृते दर्शयति—**अश्वाभिधान्यां त्विति**। एकवाक्यत्वं मन्त्रस्याश्वाभिधान्यामङ्गत्वमानुमानिकं तद्वाक्यं नास्ति, अनुमानमेव नोदेतीत्यर्थः, अतः प्राप्त्यभावान्न प्राप्तबाधोऽपि इति निगमयति—**तेनेति**। प्राप्त्यभावादेव गर्दभरशना नेति प्रतिषेधान्यपरार्थत्वकल्पनापीत्याशयः ॥ ३४ ॥

त० वा०—**यावद्धि मन्त्राम्नानमनवगतप्रयोजनम्, प्रकरणी चाकृतार्थः, तावद्यत्तत्सिद्धयर्थं कल्प्यते तत्सर्वं वैदिकं भवति। नैराकाङ्क्ष्योत्तरकालं तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात्। न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते।**

तदेतदाह। **सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्तीति**। यदैव हि प्रकरणादनेन यजेत, रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनापहारो मन्त्रस्य। यद्यपि **नैवं सम्बन्ध इत्यादस्त इति, कथं तर्हीत्यश्वाभिधानीमिति**। तत्कारकसम्बन्धसम्भवात्क्रिययैव सह सामान्याभिप्रायेण द्रष्टव्यम्। तस्मान्नाऽऽदानमात्रे विधीयते किं तर्ह्यश्वाभिधानीविशिष्टे।

अथ वा फलतः पश्चात्तनकारकसम्बन्ध उपन्यस्यते। सर्वथा दर्शशास्त्रता नास्ति। यदि हि यदेव मन्त्रवचनात्प्राप्नुयात्तदेव प्रत्यक्षवचनेनोच्यते, ततो वयमुपालभ्येमहि। नन्वेवमप्राप्तविधिरेवायं संजात इति, न वक्तव्यं परिसंख्येति। फलेनैवमभिधानाददोषः। सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्या नियमो वोच्यते, विधिरेव त्वेवंजातीयकस्य फलेनैवं व्यपदेशः।

कस्तर्हि विधिनियमपरिसंख्यानां भेदः। उच्यते।

**अपूर्व-नियम-परिसंख्याविधीनां निरूपणम्**

**विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।**
**तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते॥**

विधिरेव हि केनचिद्विशेषेणैवं भिद्यते। तत्र योऽत्यन्तमप्राप्तोः, न च प्राप्स्यति, प्राग्वचनादित्यवगम्यते, तत्र नियोगः शुद्ध एव विधिर्यथा व्रीहीन्प्रोक्षतीति।

यत्र तु प्राग्वचनात्पाक्षिकी प्राप्तिः सम्भाव्यते, तत्राप्राप्तिपक्षं पूरयन्यो विधिः प्रवर्तते, स नियन्तृत्वान्नियम इत्युच्यते। यथा व्रीहीनवहन्तीति। तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलम्, किं तर्हि अप्राप्तांशपूरणम्। तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन्। पूरणे तु सति या तेषां निवृत्तिरसावर्थान्न वाक्यात्। न च तद्वारणं नियमः। परिसंख्या हि तथा स्यात्। प्रत्यासन्नां वाऽवहन्तिनियततामत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः। तत्प्रसक्तिद्वारा त्ववहन्तेरनियतिरासीदिति, नियमान्तर्गतैवार्थान्निवृत्तिर्गम्यते। न च प्राप्ते सति विधिरयं प्रवृत्तः, येनास्यान्यनिवृत्त्यर्थता कल्प्येत। प्रागेव तु प्रवर्तमानेनार्थस्य प्रापकशक्तिनिरोधादन्याप्रप्तिः कृता, सा चार्थलभ्येति, न तयैव व्यपदिश्यते।

यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति सम्भाव्यते, यत्र वा यच्चान्यच्च सा परिसंख्या। यथाऽत्रैवोदाहृते। यथा च गृहमेधीये पञ्चमे पक्षे। अत्रापि च न प्राप्ते सत्येषा प्रवर्तते, प्रापकस्य शास्त्रस्याननुमितत्वात्। कथं तर्हि? यद्येतद्वाक्यं नाभविष्यत्तत एनं प्राप्स्यदिति। सर्वस्य प्रत्यक्षस्य वाक्यस्य

नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते। किं हि तेन पठितेन यस्यान्यतोऽप्यर्थः सिद्ध्यति तदर्थं गर्दभरशनानिवृत्तिः फलं कल्प्यते। तेनैवं कल्प्यते क्त्वाचिन्तान्यायेन यदि नामैत्रं वाक्यं न भवेत्, ततः कीदृशमनुष्ठानं स्यात्। तत्र मन्त्रप्राप्तिस्तावदेकान्तेन सिध्येदश्वाभिधान्याम्, तद्वदेव तु गर्दभरशनायामपि प्रसज्येत। यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषविनियोगसमर्थंवाक्यानुमानं निषिद्धम्, तदा केवलाश्वाभिधानीविषयत्वसिद्धिरित्यपौनरुक्त्यादर्थवद्वाक्यम् ॥३४॥

न्या० सु०—अत्र भाष्यकृता 'परिसङ्ख्याणे चेति' पूर्वोक्तदोषत्रयमनुभाष्य लिङ्गप्राप्तमन्त्रादानसम्बन्धविधानानर्थक्यापत्तेः। स्वार्थहानं स्यात्, तदप्राप्तमन्त्राश्वाभिधानासम्बन्धविधानात्तु नैव दोषप्रसक्तिरिति नैवमित्यादिना स्वार्थहानिं परहृत्य, लिङ्गादित्यादिना श्रुतिपरिच्छिन्नेऽर्थे लिङ्गस्याविनियोजकत्वाद् गर्दभरशनासम्बन्धाप्राप्तेर्न प्राप्तबाधः प्राप्त्यभावादेव च गर्दभरशनादानेति प्रतिषेधायोगात्परार्थकल्पनाभाव इति दोषत्रयं परिहृतम्। तत्र प्राप्तबाधपरिहारभाष्यं तावदृजुत्वाद्व्याख्यातुमाह—**यावद्धीति**।

नन्वप्रामाण्यापत्तेर्मा नाम रशनामात्रे मन्त्रविनियोजकश्रुतिः कल्प्यताम्, लिङ्गादेव तु विनियोगस्सेत्स्यत्यत आह—**न चेति**। उक्तेऽर्थे भाष्यं योजयति—**तदेतदाहेति**। श्रुत्यभिप्रायो भाष्ये वाक्यशब्दः। स्वार्थहानपरिहारभाष्यमिदानीं व्याचष्टे—**यदपीति**। गर्हार्थेनापिशब्देन क्लिष्टत्वमस्य भाष्यस्य सूचितम्। सामान्येनेत्यभिप्राय इति शाकपार्थिवादिवन्मध्यमपदलोपी समासः सामान्यशब्देन निर्विशेषणत्वमुक्तं न शब्देनादाने मन्त्रस्य सम्बन्धो विधीयते, येन लैङ्गिकप्राप्तिः। सम्भवात्तदर्थशास्त्रानर्थक्यप्रसक्तेः स्वार्थहानं स्यादित्यर्थः। किमित्येवं व्याख्यायते इत्यपेक्षायाम्, यतः क्रिययैव मन्त्रस्य सम्बन्धो युक्त इत्यध्याहारेण योज्यम्। तदेव कुत इत्यपेक्षायां कारकाणां साक्षात्परस्परसम्बन्धाभावादित्युक्तम्। तेनादानसम्बन्धनिराकरणभाष्यस्यायमर्थो भवतीत्याह—**तस्मादिति**। का तर्हीत्यश्वाभिधानीमिति कारकसम्बन्धप्रतिपादकस्य भाष्यस्य गतिरत आह—**किं तर्हीति**। द्वितीयान्तेन कर्मशक्त्याक्षिप्तविशिष्टक्रियासम्बन्धविवक्षयेदमुक्तमिति भावः। एवं व्याख्यायमाने विशिष्टानुवाददोषापत्तेरपरितोषादश्वाभिधान्युद्देशेन मन्त्रविशिष्टादानविध्युत्तरकालं परस्परनियमलभ्यकारकसम्बन्धाभिप्रायेणान्यथा व्याचष्टे—**अथ वेति**। नन्वश्वाभिधानीविशिष्टेऽप्यादाने रशनादानत्वाविशेषणं लैङ्गिकमन्त्रप्राप्तिसम्भवात्तदर्थशास्त्रत्वमपरिहृतं स्यात्, अत आह—**सर्वथेति**। परिसंख्याफलत्वेनायं दोषः परिहार्य इत्याशयः।

नन्वश्वाभिधान्यां मन्त्रविशिष्टादानविधौ वर्जनबोधकत्वाभावान्न परिसंख्यात्वं स्यादित्याशङ्कते—**नन्वेवमिति**। परिहरति—**फलेनेति**। न चैवमौपचारिकत्वापत्तिः, फलत एव परिसंख्याव्यपदेशादित्याह—**सर्वत्र हीति**। प्रसङ्गान्नियमव्यपदेशोऽपि फलेनैवेति

दर्शयितुं नियमग्रहणम् । परिसंख्या—वर्जनबुद्धिः । तदर्थो नञादिः परिसंख्याशब्दः । तस्माद्वा ब्राह्मणो न हन्तव्यो नेक्षेतोद्यन्तमादित्यमित्यादीनामेव श्रुत्या परिसंख्यात्वं निषेधपर्युदासव्यपदेशविशेषात्तु व्यवहारसिद्धेः न परिसंख्याव्यपदेशः । सत्यमेव वेदितव्य-मित्यादीनामेवकाराच्छ्रुत्या नियमत्वम् । अन्यत्र तु फलेनैव नियमपरिसंख्याव्यपदेशः ।

ननु प्रोक्षणादावप्यौदासीन्यनिवृत्तिकर्त्तव्यतानियमदर्शनादवघातादौ चाप्राप्तप्रापणाद्-लनादिनिवृत्तिदर्शनात्, इमामगृह्णन्नित्यादावपि चाप्राप्तप्रापणकर्त्तव्यतानियमदर्शनात् फलतो व्यपदेशः तत्सङ्करात् विध्यादीनां सङ्करप्रसङ्ग इत्यभिप्रायेण पृच्छति—**कस्तर्हीति** ? फलासङ्कराभिप्रायेणोत्तरमाह—**उच्यत इति** । श्लोकं व्याचष्टे—**विधिरेव हीति** । कोऽसौ विशेष इत्यपेक्षायामाह—**तत्रेति** । विधेयस्वरूपप्राप्तेरेवात्र फलत्वसम्भवान्न तत्र नियमौ-दासीन्यनिवृत्त्योर्विप्रकृष्टयोः फलत्वं युक्तमिति भावः ।

अवघातादौ तु नियमताफलत्वान्नियमव्यपदेशमाह—**यत्र त्विति** । ननु तत्राप्यर्थाक्षेपात् प्रागेव प्रत्यक्षेण विधिनावघातादेरप्राप्तस्यैव विधेः स्वरूपप्राप्तिरेव फलं स्यादत आह—**तण्डुलेति** । नन्वर्थतः प्राप्तिसम्भवान्माभूत्प्राप्तिमात्रस्य फलत्वम् । अप्राप्तांशपूरण-वत्त्वन्यनिवृत्तेरपि प्रतीयमानायाः कस्मान्न फलत्वं स्यादत इत्याह—**तदप्राप्तीति** । अय-माशयः—अप्राप्तांशपूरणात्प्रागुपायान्तराक्षेपस्य निराकर्त्तुमशक्यत्वात्तन्निवृत्त्यनुपपत्तेः उत्तरकालं चानुनिष्पादितत्वेन सिद्धेर्न प्रयोजनापरपर्यायमन्यनिवृत्तेः फलत्वं युक्तमिति । प्रसिद्धनियमव्यपदेशहान्यापत्तेरपि नास्याः फलत्वमित्याह—**न चेति** । अविधेयगतत्वेन च विप्रकृष्टत्वान्नान्यनिवृत्तिः फलमित्याह—**प्रत्यासन्नं वेति** । नन्वन्यनिवृत्तेः फलत्वाभावे विध्यनिवारितत्वादुपायान्तराणामप्याक्षेपः प्रसज्येतेत्यत आह—**तत्प्रसक्तीति** । अन्य-निवृत्तिं विना नियमानुपपत्तेर्नान्तरीयकान्यनिवृत्त्यवगतेरुपायान्तराक्षेपवारणमित्याशयः । यदि चाक्षिप्तेषूपायान्तरेष्वयं विधिः प्रवर्त्तेत, ततः शास्त्रमन्तरेण प्राप्तोपायान्तरनिवृत्त्य-योगाच्छास्त्रस्येवान्यनिवृत्तावपि तात्पर्यफलल्पना स्यात् न त्वेतदस्ति । श्रुतिकल्पनं विना-र्थाक्षेपस्याप्राप्तत्वेन मन्थरत्वाच्छीघ्रप्रवृत्तेन प्रत्यक्षेण विधिनैवैकोपायनियमे नैराकाङ्क्षचे-णार्थाक्षेपानुपपत्तेः प्रापकाभावादेवोपायान्तरनिवृत्तिसिद्धेर्न शास्त्रस्य तत्पर्यन्तं व्यापारः कल्प्यत इत्यभिप्रायेणाह—**न चेति** । उपसंहरति—**सा चेति** ।

### शेषपरिसंख्याशेषिपरिसंख्ययोर्निरूपणम्

उभयोस्तु नित्यप्राप्तौ पुनर्वचनस्य स्वरूपप्राप्तिनियमफलत्वायोगेनान्यनिवृत्तिफलत्वा-त्परिसंख्याव्यपदेश्यत्वमित्याह—**यत्पुनरिति** । प्राप्त इति सप्तम्याः, तत्र चान्यत्र चेति सप्तमीभ्यां वैयधिकरण्येनान्वये तत्र चान्यत्र च प्राप्नुयादित्यर्थो भवति, सामानाधिकरण्ये तु तच्चान्यच्चेति । यथासंख्येनोभयत्रोदाहरणमाह—**यथेति** ।

### गृहमेधीयाधिकरणार्थवर्णनम्

चातुर्मास्येषु साकमेधपर्वणि पूर्वेद्युर्गृहमेधीयेष्टिं विधाय श्रुतमाज्यभागौ यजति यज्ञ-ताया इत्युदाहृत्य दशमेऽष्टधा चिन्तयिष्यते ।

तत्रातिदेशप्राप्तयोराज्यभागयोरनुवादमात्रमेतदित्याद्यः पक्षः ।

द्वितीयस्त्वानर्थक्यपरिहारायोभयत्र विहितयोराज्यभागयोरिहाभ्युदयकारित्वकल्पनया प्रकृतिवदित्थं कर्त्तव्यमित्युपदेशातिदेशाभ्यां संहृत्य विधिरिति ।

तृतीयस्तूभाभ्यां विधानस्यादृष्टार्थत्वापत्तेर्यज्ञताया इति च स्तुतिदर्शनात् प्रकृतगृहमेधीयस्तुत्यर्थमिति ।

चतुर्थस्तु गृहमेधीयविध्येकवाक्यत्वाभावेन तत्प्रशंसार्थत्वायोगात् यज्ञताया इत्याज्यभागस्तुतिप्रतीतेरनन्यपरं पुनः श्रवणमाज्यभागधर्मककर्मान्तरविधानार्थमिति ।

पञ्चमस्त्वाज्यभागशब्दस्य धर्मलक्षणार्थत्वापत्तेः कर्मान्तरविध्ययोगादतिदेशो नाज्यभागयोः प्रयाजादिषु च प्राप्तेष्वाज्यभागपुनःश्रवणमन्यपरिसंख्यार्थमिति । सोऽयमिह दर्शितः ।

षष्ठस्तु चोदकप्राप्तेः प्राथम्यात्फलतः परिसंख्यानुपपत्तेस्त्रिदोषत्वापरिहारादुपदिष्टाज्यभागवर्जमतिदेश इति ।

सप्तमस्त्वखण्डकरणोपकारातिदेशद्वारेण युगपत्सर्वपदार्थप्राप्तेस्तद्वर्ज्जनपक्षस्य तृतीये चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थमित्यत्र निराकृतत्वादाज्यभागयोरेवातिदेशोपसंहार इति ।

इममपि पक्षमतिदेशस्य क्रत्वर्थपदार्थविशेषगोचरत्वेन सामान्यविधिरस्पष्टः संह्रियेत विशेषत इत्युपसंहारायोग्यत्वान्निराकृतस्य क्लृप्तोपकारप्राकृताज्यभागनिराकाङ्क्षत्वेनातिदेशाभावाद् गृहमेधीयस्यापूर्वत्वज्ञापनार्थमिदं वचनमिति सिद्धान्तो वक्ष्यते ।

नन्वन्यनिवृत्तिफलत्वे परिसङ्ख्याया निवृत्तेः प्राप्तिपूर्वकत्वात्प्राप्तमन्त्रविषयत्वोपपत्तेः त्रिदोषत्वमपरिहार्यं स्यादत आह—**अत्रापि चेति**। नन्वेवं सत्यानुमानिकवाक्यप्रतिबन्धकत्वेनार्थवत्त्वोपपत्तेर्न गर्दभरशनानिवृत्तिफलत्वं स्यादत आह—**सर्वस्येति**। अप्राप्तविधित्वेऽपि फलतः परिसंख्यात्वे विस्तरेणोक्तम् सुखग्रहणार्थं सफलयति—**तेनेति**। परिसंख्यानिरूपणस्य तदर्थशास्त्रतापरिहारोपयोगितामाह—**इत्यपौनरुक्त्यादिति** ॥ ३४ ॥

भा० प्र०—"इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते' (वा० सं० २२।२) इत्यादि वाक्य कहे गये हैं, किन्तु पुनः उल्लेख नहीं है। कारण, 'अश्वरशना' एवं 'गर्दभरशना' दोनों की ही प्राप्ति की सम्भावना है। ब्राह्मणवाक्य में कहा गया है कि गर्दभरशना ग्रहणीय नहीं है अश्वरशना ही ग्राह्य है। इस प्रकार की विधि न रहने पर गर्दभरशना भी ग्राह्य हो सकती थी, कारण, अश्वरशना के समान वह भी प्रकरण प्राप्त है। किन्तु, ब्राह्मणोपदिष्ट परिसंख्या विधि गर्दभारशना की व्यावृत्ति कर देती है। इस प्रसङ्ग में पूर्वपक्षी कह सकते हैं कि परिसंख्या अर्थात् अन्य की निवृत्ति स्वीकार करने पर तीन दोषों की प्राप्ति होती है।

१—श्रुतार्थ त्यागः—श्रुत अर्थात् वाक्य प्राप्त गर्दभरशना-ग्रहणरूप अर्थ का परित्याग करना होगा।

२—अश्रुत अर्थ की कल्पना—गर्दभरशना ग्रहणत्यागरूप अश्रुत अर्थ की कल्पना करनी होगी।

३—प्राप्तबाध—प्रकरण या लिङ्ग अर्थात् सामर्थ्यवश प्राप्त गर्दभरशना का बाध करना होगा। अश्वरशना के समान गर्दभरशना भी प्रकरण या लिङ्ग के अनुसार ग्रहणीय होता है, किन्तु, परिसंख्या के द्वारा बाधित होकर अश्वरशना के ग्रहण में ही पर्यवसित होता है, इस प्रकार तीन दोषों की प्रसक्ति होती है। पूर्वपक्षी ने परिसंख्या में इन तीन दोषों का उद्भावन किया है। किन्तु, ये दोष सङ्गत नहीं हैं। कारण, प्राप्त विषय का बाध होने पर ही उक्त तीन दोषों की सम्भावना होती। किन्तु, इस स्थल में प्रकरण या लिङ्गवश गर्दभरशना की प्राप्ति से पूर्व ही प्रत्यक्ष श्रुति के आधार पर अश्वरशना ग्रहण बोधित है, अतः, प्राप्तार्थ का बाध नहीं होता है। क्योंकि, प्रकरण या लिङ्ग स्वयं विनियोजक नहीं होता है, प्रकरण के द्वारा वाक्य, वाक्य के द्वारा लिङ्ग या सामर्थ्य एवं सामर्थ्य के द्वारा विधायिका श्रुति अनुमित होती है। "इत्यश्वाभिधानीम्" इस स्थल में प्रत्यक्ष श्रुति ही अश्वरशना के ग्रहण का विधान करती है। प्रत्यक्ष श्रुति की अपेक्षा लिङ्ग या प्रकरण परवर्ती है, उसके द्वारा प्रत्यक्ष श्रुति के द्वारा किसी पदार्थ के प्राप्त होने के बाद ही अन्य पदार्थ की प्राप्ति होती है। जिस समय प्रत्यक्ष श्रुति के द्वारा किसी पदार्थ का विधान होता है, उस समय लिङ्ग आदि के द्वारा विहित पदार्थ की प्राप्ति की उपस्थिति न होने से उसके बाध का प्रश्न ही नही उठता है। अनुपस्थिति का बाध कैसे सम्भव है? प्राप्त अर्थ का बाध न होने पर निषेध रूप पदार्थ की कल्पना एवं विधि के स्वार्थ त्याग का भी प्रश्न नहीं है। इस दृष्टि से मीमांसकों ने स्वीकार किया है कि प्राप्त परिसंख्या में ही तीन दोषों का प्रसङ्ग होता है, अप्राप्त परिसंख्या दोष शून्य है। अतः, त्रिविध दोषों में एक दोष भी यहाँ सम्भावित नहीं है। फलतः, परिसंख्या के कारण इस स्थल में पुनरुल्लेख नहीं है।

'परिसंख्या' = अन्य निवृत्ति। 'इत्यश्वाभिधानीमादत्ते' इत्यादि स्थल में परिसंख्या अर्थात् अन्य की निवृत्ति के लिए ही ब्राह्मणवाक्य कहा गया है।

आशय यह है कि "इमामगृभ्णन् रशनामृतस्य" (वा० सं० २२।२) 'इत्यश्वाभिधानीमादत्ते' इस मन्त्र के सामर्थ्य से ही प्राप्त रशनादान का ब्राह्मणवाक्य विनियोजक है, इसका पुनः कथन व्यर्थ है। 'गर्दभाभिधानीमादत्ते' यह परिसंख्या है। परिसंख्या में तीन दोष हैं—आदत्ते यह रशनादान रूप स्वार्थ का परित्याग करेगा, गर्दभरशना के आदान का निषेध रूप अन्य अर्थ की शब्द से कल्पना करनी पड़ेगी, रशनात्व सामान्य के आदान से गर्दभरशना और अश्वरशना इन दोनों के आदान की प्राप्ति होने से गर्दभ-

रशना के आदान का बाध होगा । इस प्रसङ्ग में सिद्धान्ती का कथन है कि गर्दभरशना की अप्राप्ति ही है । प्रकरण पाठ की अन्यथा अनुपपत्ति होने से इस मन्त्र से 'आदान=ग्रहण करना चाहिए' इस वाक्य की परिकल्पना होती है । इस वाक्य से मन्त्र और आदान का सम्बन्ध सिद्ध होने के बाद किस विषय का आदान किया जाय इस अन्वेषण में लिङ्गवश रशनामात्र का आदान प्राप्त होने से गर्दभरशना की प्राप्ति होनी चाहिए । किन्तु, यह विलम्ब से प्राप्त है । अतः 'अश्वामिधानीम्' इस प्रत्यक्ष वाक्य से मन्त्र और आदान का सम्बन्ध रहने पर लिङ्गाधीन रशना अर्थ का प्राप्त आदान की 'अश्वामिधानीम्' इस श्रुति से विशेष व्यवस्था होती है । रशना विशेष का आदान अश्वरशना के आदान से मन्त्र निराकाङ्क्ष हो गया है, अतः, गर्दभरशना के आदान की अप्राप्ति होने से प्राप्त का बाध नहीं होता है । इसलिए निषेधार्थं की कल्पना और विधि व अर्थं का त्याग यहाँ नहीं है । अप्राप्त गर्दभरशना का निवारण की दृष्टि से परिसंख्या अर्थात् अन्य निवृत्ति कही गई है ॥ ३४ ॥

## अर्थवादो वा ॥ १.२.३५ ॥

**शा० भा०—उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यर्थवादार्था पुनः श्रुतिः, यज्ञपतिमेव तत्प्रथयतीति । ननु नायं मन्त्रस्य वाक्यशेषो, न च प्राप्तस्य स्तुत्या प्रयोजनम् । सत्यम् । नायं मन्त्रस्य विधिः संस्तवः । प्रथनमेव तत्र स्तूयते । मन्त्र पुना रूपादेव प्राप्त इहानूद्यते प्रथनं स्तोतुम् । इत्थं प्रथनं प्रशस्तं यत्क्रियमाणमेवंरूपेण मन्त्रेण क्रियते । कस्तदा भवति गुणः । 'यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति' । किमेतदेवास्य फलं भवति । नेति ब्रूमः । स्तुतिः कथं भविष्यतीत्येवमुच्यते कथमसति प्रथने प्रथयतीति शब्दः । मन्त्राभिधानात् । मन्त्रेण पुरोडाशमध्वर्युः प्रथस्वेति ब्रूते । यश्चैवं प्रथस्वेति ब्रूते, स प्रथयति । यथा यः कुर्विति ब्रूते, स कारयति ॥ ३५ ॥**

भा० वि—परोक्तं शास्त्रान्तरानर्थक्यं परिहरति—**अर्थवादो वेति ।** सूत्रं व्याकरोति—**ऊरु प्रथस्वेतीति ।** अर्थवादार्थत्वेन=स्तुत्यर्थत्वेनेति यावत्, स्तुतिमभिनयति—**यज्ञेति ।** ब्राह्मणप्रदेशाम्नातस्यास्य न मन्त्रप्रदेशाम्नातमन्त्रविशेषलिङ्गप्रकरणानुमितविधिशेषत्वेन स्तुतित्वमित्युक्तमित्याशङ्कते—**नन्विति ।** मन्त्रस्य=मन्त्रलिङ्गानुमितस्य विधेरित्यर्थः, किं च स्वस्यैव प्ररोचनाशक्तयाविभर्विन निवृत्ताकाङ्क्षत्वान्न स्तुत्या सम्बन्ध इत्याह—**न चेति ।** प्राप्तस्य=पर्यवसितस्येत्यर्थः, यद्यपि नायं मन्त्रस्य प्रथने विनियोगं विधत्ते, लिङ्गाद्यनुमितिविधिनैव तत्सिद्धेः, नापि विनियोगं स्तौति, प्रकरणान्तरस्थत्वादस्य, तथापि प्रथयतीति प्रथनोत्पत्ति विधायोरु प्रथस्वेति प्रथनं स्तूयते नानर्थक्यमिति परिहरति—**उच्यते इत्यादिना ।**

ननु यज्ञपतिमेव तत्प्रजया प्रथयसीति अनेनैव स्तुतौ सिद्धायां किं प्रथनमन्त्रानुवादेनेति तत्राह—**मन्त्रः पुनरिति । स्तोतुमिति ।** प्रथनसाधनमन्त्रपर्यालोचनयापि स्तोतुमित्यर्थः, स्तुतिमभिनयति—**इत्थमिति ।** नन्वनेन मन्त्रेण क्रियमाणमपि प्रथनं कथं प्रशस्तं भवतीति पृच्छति—**कस्तदेति ।** उत्तरं—**यज्ञपतिमिति ।** एतन्मन्त्रशेषे हि उरु ते यज्ञपतिः प्रथतां इत्येवंरूपाण्यक्षराणि पठ्यन्ते, तत्र च पुरोडाशप्रथनस्य यजमानप्रथनसाधनत्वावगमात् स्पष्टा प्रथनस्तुतिरित्यर्थः, यज्ञपतिप्रथनमस्य फलत्वेन स्तुतित्वेन वा सङ्कीर्त्यत इति जिज्ञासया पृच्छति—**किमिति ।** अस्य पुरोडाशप्रथनस्य यज्ञपतिप्रथनमेव फलं भवति किं फलमस्यैवैतत् किं न स्यादिति भावः । लिङ्गविनियोज्यतया प्रमेयमन्त्रस्य फलप्रमापकत्वाभावात् प्रथनफलानुवादेन स्तुत्युपपत्तेश्च, स्तुत्यर्थतैव युक्तेति परिहरति—**नेति । ब्रूम इति ।** ननु प्रयोज्यव्यापाराभिधानं विना प्रयोजकव्यापाराभिधानासम्भवात् प्रथत इति च प्रयोज्यव्यापारानभिधानेन च प्रथयतीत्यपि निर्देशासम्भवात् अप्रतीयमानप्रयोजकव्यापारविधानासम्भवाच्च न विधिशेषतया स्तुतित्वेनार्थवत्तेति चोदयति—**कथमसतीति ।** प्रथने=प्रथनशब्द इत्यर्थः, ऊरु प्रथस्वेति प्रतीकोपात्तमन्त्राभिहितप्रथनरूपप्रयोज्यव्यापारमाश्रित्य प्रथयतीति प्रयोजकव्यापारविधिसम्भवाद्युक्ता स्तुत्यर्थतेति परिहरति—**मन्त्राभिधानादिति ।** एतद्विवृणोति—**मन्त्रेणेति ।** तथा किमित्यत आह—**यश्चेति ।** प्रथस्वेति स्वव्यापारे प्रथने पुरोडाशं प्रेरयन् ह्यध्वर्युः प्रथयति, ततश्च प्रथनरूपप्रयोज्यव्यापाराभिधायित्वं मन्त्रस्य स्फुटमित्यर्थः, प्रयोज्यं स्वव्यापारे प्रेरयन् प्रयोजको भवतीत्यत्र दृष्टान्तमाह—**यथेति ॥ ३५ ॥**

त० वा०—यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न स्तूयते, तथाऽपि प्रथनविधानात्तत्परोचनया च सकलं वाक्यमर्थवत् । तस्य ह्येतदेवोत्पत्तिवाक्यम् । ननु च पुरोडाशान्यथानुपपत्तिप्राप्तत्वात्प्रथनं न विधातव्यम् । नैतन्नियोगतः प्राप्नोति । द्रुततरं हि पिष्टमप्रथितमपि प्रथेत । विधाने तु सति तादृशं कर्तव्यम्, येन प्रथयितव्यं भवति । एवं चाध्वर्युकर्तृकताऽपि सिद्ध्यति । पठ्यमानं ह्याध्वर्यवसमाख्यां लब्ध्वा कर्तृविशेषं नियच्छति । अर्थप्राप्तं त्वसमाख्यातत्वान्न नियामकं स्यात् । एवमर्थं च यद्यप्येकान्ततोऽर्थात्प्राप्नुयात्, तथाऽपि वाक्येनैव प्रापयितव्यम् । तस्मादुपपन्नो प्रथनस्तुतिः ।

**एवमपि यज्ञपतिमेव तत्प्रथयतीत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । न । मन्त्रस्यैव स्तुत्यर्थमुपादानात्, प्रथनं कर्तव्यम्, तस्य हि क्रियमाणस्यायं मन्त्रः साधनं भवति । तत्र चोरु ते यज्ञपतिः भवतीति गुणो लभ्यते । किमेतदेवास्य फलमिति । नेत्याह । स्तुत्यर्थमेव तद् द्रव्यसंस्कारकर्मस्विति न्यायात् । यद्यप्यत्र**

करणमन्त्राभिहितत्वात्फलं कल्प्येत, तथाऽपि ब्राह्मणे तावत्तत्संकीर्तनमेकान्तेन रतावकम्। मन्त्रोऽपि तु लिङ्गविनियोज्यो न फलकल्पनायै प्रभवति। करणविभक्तिविनियुक्तानां हि सकलोपयोगान्यथानुपपत्त्या फलसाधनता युक्ता, लिङ्गानुमिता पुनः श्रुतिराकाङ्क्षावशेन क्रियाप्रकाशनमात्रविनियोगायैव ज्ञायते। तेनैवंजातीयको मन्त्रोऽपि प्रधानफलसंकीर्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या।

**कथमसति प्रथन इति**। कस्यायं प्रश्नः किं विध्युद्देशवर्तिनः पुरोडाशप्रथनस्य, अथ वाऽर्थवादगतस्य यज्ञपतिप्रथनस्येति। द्विधाऽपि चायुक्तं पुरोडाशप्रथनं तावद् विधीयमानत्वादेव न प्रष्टव्यम्। न च मन्त्राभिधानात्तस्यास्तित्वम्, किं तर्हि? स्वरूपसद्भावादित्युत्तरमप्यसम्बद्धम्। अथ पुनरितरार्थवादन्यायेन कथमरुदतीतिवत्प्रश्नः। तथाऽप्युत्तरमसम्बद्धम्। **मन्त्रेणाध्वर्युः पुरोडाशमिति** पुरोडाशेन सम्बध्यते, न यजमानेन। तस्मादग्रन्थ इति केचित्।

उभयथाऽपि त्विदमदुष्टम्। अस्तु तावत्पुरोडाशप्रथने। तत्र हि याज्ञिकानां केषाञ्चिदय मन्त्रः कृत्वा प्रथनम्, अभिमर्शने प्रयुज्यते। सोऽयं स्वसिद्धान्तेन पृच्छति कथमसति वृत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति।

तत्राभ्युपेत्यवादेनोत्तरं **मन्त्राभिधानादिति**। यद्यपि प्रथनं प्रथमकृतत्वान्नास्ति, मन्त्रेण नु सत्तयोच्यत इत्युपपन्नः शब्दार्थः। अथ वा सर्वप्रयोजकव्यापाराणां प्रयोज्यव्यापारपूर्वकत्वमर्थरूपेण स्थितमिति शब्दैरपि तथैव प्रवर्तितव्यम्। इह च स्तुतिविषयसिद्ध्यर्थं प्रथयतीत्येतद्विधीयत इत्युक्तम्।

तत्राऽऽह नायं विधिः सम्भवति, विषयानुपपत्तेः। प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात्। स चानुपात्तप्रयोज्यव्यापारत्वान्न प्रतीयते, तेन यथा यजेतेत्यनुक्ते याजयतीति नोच्यते, तथेह प्रथेतेत्यनुक्ते प्रथयतीति न वाच्यम्। न चेह पुरोडाशः प्रथेत, तेन वा प्रथितव्यमित्युपादानमस्ति। तस्मिन्नसति प्रथयतीत्यनुपपन्नम्।

तदुपपादयति **मन्त्राभिधानादिति** प्रतीकगृहीतमन्त्रोपात्तप्रयोज्यव्यापारं हि ब्राह्मणं प्रथयतीति विधत्ते। **यश्च प्रथस्वेति** ब्रूत इत्यनेन पुरोडाशकर्तृकं क्रियामध्वर्युः प्रेष्यतीत्येतद्दर्शयति। यद्यपि च सम्भाव्यमानक्रियाणां प्रयोज्यानामनुपादायापि व्यापारं शब्देन प्रयोजकव्यापारः सिद्ध्यतीत्येतदप्युत्तरं सम्भवति, तथाऽपि तूत्तरविभवादुपादानपूर्वकतैवोक्ता।

अथ वाऽस्तु यजमानप्रथने **कथमसतीति** सर्वस्तुतीनां किञ्चिच्छब्दगतमर्थगतं वाऽऽलम्बनमुक्तम्। तदत्र किंनिबन्धना स्तुतिरिति। तदभिधीयते। **मन्त्रोक्तमर्थमाश्रित्य** स्तुतिः प्रवर्तिष्यते। **मन्त्रेणाध्वर्युः पुरोडाशं ब्रूत** इति न पुरोडाशप्रथनोपादानाभिप्रायम्, किं तर्हि पुरोडाशं ब्रवीति, उरु ते यज्ञपतिः प्रथतामिति।

प्रथस्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै। यश्च प्रथस्वेति ब्रूत इत्यपि तदाद्यर्थं एव। प्रथतामिति ब्रूत इत्यर्थः। यश्चैवं ब्रूते, स प्रथयत्यनेनैव, गुणवादात्। अथ वा तदाचष्ट इत्येवं मुख्यमेव प्रथयतीत्यर्थमाश्रित्य प्रथनबुद्धचा सिद्धा स्तुतिः ॥ ३५ ॥

न्या० सु०—नन्विति। भाष्येण ब्राह्मणाम्नातस्य वाक्यस्य मन्त्रप्रदेशाम्नातमन्त्रविशेषलिङ्गप्रकरणानुमितविधिशेषत्वाभावादर्थवादत्वं न युक्तमिति, प्रागुक्तां शङ्कामनुभाष्य नायमित्यादिना मन्त्रस्तुत्यसम्भवेऽपि प्रथनस्तुतिर्भविष्यतीति परिहृतं तद्व्याचष्टे—यद्यपीति। प्रथनस्यार्थप्राप्तत्वेनाविधेयत्वात्। स्तुतिरयुक्तेति शङ्कते—ननु चेति। परिहरति—नैतदिति। आनर्थक्यात्तर्ह्यविधेयं प्रथममत आह—विधाने त्विति। अस्तु वा नियोगतः प्राप्तिः तथाप्यर्थाक्षेपात्प्रागध्वर्युकर्तृकत्वसिद्धयर्थं विधिरर्थवान् भविष्यतीत्याह – एवं चेति। उपसंहरति—तस्मादिति। मन्त्रः पुनरिति भाष्यमवतारयितुमाशङ्कते—एवमपीति। एतदाशङ्कानिराकरणार्थत्वेन व्याचष्टे—नेति। कथं मन्त्रोपादानेन प्रथनस्तुतिरित्यपेक्षायां स्तुतिप्रकारदर्शनार्थमित्थमिति भाष्यं व्याचष्टे—प्रथनमिति। प्रसङ्गाद्यज्ञपतिप्रथनं पुरोडाशप्रथनस्य फलत्वेन कीर्त्यते स्तुत्यर्थं चेति जिज्ञासितुं किमेतदिति पृष्टं तद्व्याचष्टे—किमिति। फलत्वेन मन्त्रार्थत्वेनानुसन्धानमनेकयजमानकेषु च विकारेषु यजमानशब्दवद्यज्ञपतिशब्दस्योहः इति जिज्ञासाप्रयोजनम्। 'नेति ब्रूम' इत्युत्तरभाष्यमर्थवादाभिप्रायेण तावत् व्याचष्टे—नेत्याहेति। एवं तु मान्त्रवर्णिकफलकल्पनसम्भवेन यज्ञपतिप्रथनस्य फलत्वानपायात्पर्णमय्यधिकरणे निराकृतत्वेन च जिज्ञासानुपपत्तेरपरितोषान्मन्त्राभिप्रायेण व्याचष्टे—मन्त्रोऽपि त्विति। करणविभक्तिनिर्देशाभावेऽपि ममाग्ने वर्च्चो विभवेष्वस्त्वितिपूर्वमग्निं गृह्णातीत्यादिषु तृतीये किमृत्विग्गामितया वर्चःप्रभृतिफलमाशास्यं यजमानगामितया वेति विचारदर्शनेन फलकल्पनाभ्युपगमादिति करणावगतक्रियासम्बन्धान्यथानुपपत्तिकल्पितकरणतान्वयसिद्धयर्थं श्रुतार्थापत्त्या करणविभक्तिकल्पनमभिप्रेत्य, करणविभक्तिविनियुक्तानामित्युक्तम्। कथमित्यादिना भाष्यमाक्षिपति—कथमिति। कस्येति कर्मणि षष्ठी। किं विषये इत्यर्थः। समाधानं प्रतिजानीते—उभयथाऽपि त्विति। पुरोडाशप्रथनविषयत्वमङ्गीकृत्य प्रश्नं तावदुपपादयति—अस्तु तावदिति। सोऽयं याज्ञिकमतानुसारीत्यर्थः—स्वसिद्धान्तेनेति। निष्प्रमाणकत्वं सूचितम्। उत्तरमुपपादयति—तत्रेति। यस्त्वयमध्वर्युकर्तृकः पुरोडाशविषयः प्रयोजकव्यापारात्मकः प्रथनरूपोऽर्थो नास्तीत्युक्तः स यद्यपि पूर्वमेव कृतत्वादिदानीं नास्त्येव, न वर्त्तते, तथापि यथा सत्ता वर्त्तमानता भवति तथा मन्त्रेणोच्यत इत्यर्थः। इत्थम्भूतलक्षणे सत्तयेति तृतीया। ननु पुरोडाशकर्त्तृकः प्रयोज्यव्यापारो मन्त्रेणानुष्ठेयतयोच्यते, नाध्वर्युकर्त्तृकः प्रयोज्यव्यापारो वर्त्तमानतयेत्याशङ्क्योपपन्नः शब्दार्थं इत्युक्तम्। अनुष्ठातृरूपप्रयोजकव्यापारानभिधानेऽपि प्रेषणात्मकप्रयोजकव्यापाराभिधानादुपपन्नः प्रथयतिशब्दार्थ इति भावः।

अनेन च यश्चेत्यादिभाष्यं व्याख्यातं लिङ्गान्मन्त्रस्य प्रथनाङ्गत्वावगतेरभिमर्शनकाले प्रयोज्यत्वानुपपत्तेरपरितोषात्पुरोडाशप्रथनविषय एवान्यथाभाष्यं व्याचष्टे—अथ वेति। अस्मिन्पक्षे कथमसत्यनुक्ते पुरोडाशकर्तृके प्रयोज्यव्यापाररूपे प्रथने प्रयोजकव्यापारवाची प्रथयतीतिशब्द इति प्रश्नभाष्यार्थः। उत्तरभाष्यं व्याचष्टे—तदुपपादयतीति। प्रतीकेनैकदेशेन गृहीतो यो मन्त्रः तेनोपात्तः प्रयोज्यव्यापारो यस्मिन्ब्राह्मणे, तत्प्रथयतीति। प्रयोजकव्यापारं विधत्त इत्यर्थः। यश्चेति भाष्यं प्रथस्वेति प्रेषणरूपे प्रयोजकव्यापाराभिधानेन प्रयोज्यव्यापाराभिधानानुपादानादस्मिन्पक्षेऽनुपपन्नमाशङ्क्य, प्रयोज्यव्यापारोपादानपरतया व्याचष्टे—यश्चेति।

नन्वेतयान्नाद्यकामं याजयेदित्यादिषु प्रयोज्यव्यापारानुपादानेऽपि प्रयोजकव्यापारोपादानदर्शनात्तत्पूर्वकत्वनियमो नास्तीत्युत्तरं कस्मान्नोक्तमत आह—यद्यपि चेति। अर्थक्रमानुसारिशब्दक्रमनियमादर्शनेनास्याभिप्रायस्यातितुच्छत्वात्प्रश्नोत्तरभाष्ययोश्चोभयोरप्यनार्जवापत्तेरपरितोषात्स्वमतेनार्थवादगतयज्ञपतिप्रथनप्रश्नविषयतया व्याचष्टे—अथ वेति। अत्रैवोत्तरभाष्यं व्याचष्टे—तदभिधीयत इति। नन्वस्मिन्पक्षे मन्त्रेणेत्यादिभाष्यं पुरोडाशप्रथनाभिधायित्वादयुक्तं स्यादत आह—मन्त्रेणेति। नन्वेवं तर्ह्युरु ते यज्ञपतिः प्रथतामिति ब्रवीति यश्चोरु ते यज्ञपतिः प्रथतामिति ब्रूत इति च वक्तव्यमत आह—प्रथस्वेत्यतमिति। ततश्चैवं भाष्यार्थो भवतीत्याह—यश्चैवमिति। यश्चोरु ते यज्ञपतिः प्रथतामिति शब्दोच्चारणेन यज्ञपतिं प्रथयतीत्यर्थः। कथं शब्दोच्चारणमात्रेण प्रथनकर्तृत्वं स्यादत आह—गुणवादादिति। प्रेषणरूपप्रयोजकव्यापारकर्तृत्वमुत्पादनरूपप्रयोजकव्यापारकर्तृत्वेनोपचर्यत इत्यर्थः।

यद्वा तत्करोति तदाचष्टे इत्याख्यानेऽपि णिजुत्पत्तिस्मरणान्मुख्यवृत्तित्वेन प्रथनाख्यानात्प्रथयतिशब्दोपपत्तिरित्याह – अथ वेति। एवं व्याख्याने यज्ञपतिप्रथनस्य फलत्वाभावे निरालम्बना स्तुतिर्न युक्येत्याशङ्कोत्थानात्पूर्वग्रन्थसङ्गतिः समञ्जसेति, एतदेव व्याख्यानमभिप्रेतम् ॥३५॥

भा० प्र०—"उरु प्रथस्वेति पुरोडाशं प्रथयति" (तै० ब्रा० ३।२।८।४) यह ब्राह्मण वाक्य न तो मन्त्र का विधायक है और न प्रशंसा है। यह वाक्य 'यज्ञपतिमेव तं प्रथयति' यह वाक्य मन्त्रार्थ का ही अनुवादक है इसके द्वारा मन्त्र-प्राप्त प्रथन की प्रशंसा की गई है। इस सूत्र में 'वा' शब्द वैयर्थ्य का वारण करता है। अर्थवाद से सम्बन्ध के लिए ही ब्राह्मण में विधि कही गई है।

"अर्थवादः" = 'वा' (एव) = आशङ्कित विफलता के निवारण के लिए है। "उरु प्रथस्वेति प्रथयति" इस स्थल में अर्थवाद होने से ब्राह्मण ग्रन्थ में मन्त्र के अर्थ का अनुवाद किया गया है॥ ३५॥

## अविरुद्धं परम् ॥ १.२.३६ ॥

**शा० भा०—यदुक्तं पदनियमस्यार्थवत्त्वादविवक्षितार्था मन्त्रा इति । काममनर्थको नियमः, न दृष्टमप्रमाणम् । नियतोच्चारणमदृष्टायेति चेत् ? अविरुद्धा अदृष्टकल्पनाऽस्मत्पक्षेऽपि । एवं प्रत्याय्यमानमभ्युदयकारि भवतीति ॥ ३६ ॥**

भा० वि०—परमविवक्षितार्थत्वकारणं दूषयति—**अविरुद्धमिति** । परमित्यनुवादभागं व्याचष्टे—**यदुक्तमिति** । अर्थवत्त्वाद्धेतोरर्थवत्त्वायेति यावत् । नियम एव निष्प्रयोजनत्वादविवक्षितो भवतु, न दृष्टफलमर्थाभिधानमप्रमाणमविवक्षितमिति दूषयति—**काममिति** । नियमस्यापि निष्प्रयोजनत्वमसिद्धमिति शङ्कते—**नियमेति** । अविरुद्धमिति सूत्रावयवं व्याचक्षाणः परिहरति—**अविरुद्धेति** । अदृष्टकल्पनाप्रकारमाह—**एवमिति** । क्रमविशेषवद्भिः पदसमूहैरर्थरूपं प्रत्याय्यमानमित्यर्थः, उच्चारणाददृष्टं ब्रुवतापि यथाक्रमनियमाददृष्टं कल्प्यते इति न विरोध इत्यर्थः ॥ ३६ ॥

त० वा० अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमादपरमवश्यं कल्पनीयमदृष्टम्, तन्ममापि प्रत्यायननियमाद्भविष्यतीत्यविरोधः । एतेन मन्त्रत्वादिनियमः प्रयुक्तः । सत्स्वप्युपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानादुपायान्तरनिवृत्तौ नियमाद्दृष्टमात्रकल्पनया सिद्धमर्थाभिधानम् ॥ ३६ ॥

न्या० सु० यदुक्तमिति भाष्येणार्थपरत्वे विशिष्टपदक्रमसमूहात्मकवाक्यनियमानर्थक्याशङ्कानुभाषणार्थत्वेन परमिति सूत्रावयवं व्याख्याय, काममित्यादिना परिहारार्थत्वेनाविरुद्धमिति सूत्रावयवो व्याख्यातः, तस्य तात्पर्यमाह—**दृष्टार्थेति** । क्रमान्यत्वेऽप्युच्चारणविशेषावगमाददृष्टान्तरं विनोच्चारणक्रमनियमानर्थक्यापत्तेरदृष्टद्वयकल्पनात्पूर्वपक्षे गौरवमित्याशयः । वाक्यनियमहेतोर्व्याख्यानान्तरेष्वप्येतदेव सूत्रं परिहारार्थत्वेन योजयति—**एतेनेति** । एतेन नियमाददृष्टकल्पनायामपि दृष्टार्थस्याविरोधेनादृष्टार्थहेतुत्वेन मन्त्रत्वादिनियमो निराकृत इत्यर्थः; एतदेव विवृणोति—सत्स्वपीति ॥ ३६ ॥

भा० प्र०—पूर्वपक्ष में 'अग्निमूर्द्धा दिवः' इत्यादि मन्त्रों का पद विन्यास का क्रम नियत है, अर्थात् क्रम में किसी प्रकार का परिवर्तन सम्भव न होने से ( अपरिवर्तनीय ) होने से वह अदृष्टार्थक है—यह मैं भी स्वीकार करता हूँ । जिस रूप में मन्त्र का पाठ है, उसी रूप में वह उच्चारणीय है, व्यतिक्रमकर उच्चारण करने पर वह याग के फल के साधनीभूत अपूर्व का जनक नहीं होता है । किन्तु, अदृष्ट के अनुरोध से अर्थ-प्रकाश रूप दृष्ट प्रयोजन का अपलाप करना उचित नहीं है । क्योंकि, अदृष्ट दृष्ट का विघातक नहीं हो सकता है । कारण, दृष्ट के उपपादन के लिए ही अदृष्ट की कल्पना होती है,

इसलिये आचार्य उदयन ने कहा है—"नादृष्टं दृष्टघातकम्" ( कुसु० ५।४ ) अतः, द्वितीय दूषण मेरे सिद्धान्त का विरोधी नहीं है।

"अविरुद्धम्" = विरुद्ध नहीं है, परम् = द्वितीय वचन, वाक्यनियमात् = यह वचन हमारे सिद्धान्त का विरोधी नहीं है ॥३६॥

## सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ १.२.३७ ॥

शा० भा०—अथ यदुक्तं 'प्रोक्षणीरासादयेति' बुद्धबोधनमशक्यं अत उच्चारणाददृष्टमिति। तन्न। कर्तव्यमित्यपि विज्ञातेऽनुष्ठानकाले स्मृत्या प्रयोजनम्। उपायान्तरेणापि सा प्राप्नोति। अतोऽनेनोपायेन कर्तव्येति नियमार्थमाम्नानम्, संस्कारत्वात् ॥ ३७ ॥

भा० वि०—यद्वा अविरोधे हेतुमाह—एवमिति। इतिर्हेतौ।

बुद्धशास्त्रानर्थक्यं परिहरति—सम्प्रैष इति। सम्प्रैषे कर्मगर्हेति सूत्रावयवमनुभाषणपरतया व्याचष्टे—अथेति। यद्यपि पूर्वमग्नीदग्नीनिति वाक्यमुदाहृतमिति ध्येयम्, अनेन सम्प्रैषेऽग्नीदग्नीन् इत्यादौ याभिधानकर्मगर्हाभिप्रेतेति सूत्रार्थो विवृतः अनुपालम्भ इति परिहारप्रतिज्ञां व्याचष्टे—तन्नेति। संस्कारत्वादिति हेतुमनुष्ठेयार्थस्मृतिलक्षणपुरुषसंस्कारार्थत्वादिति व्याचष्टे—कर्तव्यमिति। बुद्धबोधनमपि कर्तव्यमिति विज्ञायते यतः प्रयोगकालीनया स्मृत्या प्रयोजनमस्तीति सम्बन्धः।

ननु विध्यादिनापि स्मृतिसिद्धेरानर्थक्यं तदवस्थमेवेति चोदयति—उपायान्तरेणेति। संस्कारत्वादिति हेतुमावृत्त्या योजयन् परिहरति—अनेनेति। अदृष्टरूपसंस्कारार्थत्वात् स्मरणस्य मन्त्रेणैवोपायेन कर्तव्यमिति नियमार्थं शास्त्रमर्थवदित्यर्थः ॥ ३७ ॥

त० वा०—येयं सम्प्रैषे 'अग्नीदग्नीनित्यत्र' बुद्धबोधनासम्भवादभिधानकर्मगर्हाऽभिहिता, साऽप्यनुपालम्भः, स्मरणसंस्कारार्थत्वात्। बुद्धीनां हि क्षणिकत्वात्स्वाध्यायकालोत्पन्नानां न प्रयोगकालं यावदवस्थानम्, तत्रावश्यं केनचिद्ध्यानादिनाऽनुसन्धाने कर्तव्ये मन्त्रो नियम्यते।

अथ वा संस्कारत्वादिति। यदि हि बोध एवावतिष्ठते, ततोऽनवकाशत्वं भवेत्, इह तु तदीयसंस्कारमात्रावस्थानात्तदभिव्यक्तिद्वारेणास्ति ज्ञानोत्पत्त्यवसर इति न मन्त्रानर्थक्यम् ॥ ३७ ॥

न्या सु०—अथेति भाष्येण बुद्धशास्त्रानर्थक्याशङ्कानुभाषणार्थत्वेन सम्प्रैषे कर्मगर्हेति सूत्रावयवं व्याख्याय, तन्नेत्यनेन च परिहारप्रतिज्ञार्थत्वेनानुपालम्भ इति सूत्रावयवं

व्याख्याय, कर्त्तव्यमित्यनेन च हेतुप्रतिपादनार्थत्वेन संस्कारत्वादिति सूत्रावयवं व्याख्याय पुनरुपायान्तरेणापि सा प्राप्नोतीत्यन्यथापि स्मृतिसिद्धेरानर्थक्यमाशङ्क्यानेनोपायेनेत्यनेन भाष्येणादृष्टसंस्कारत्वादिव्यावृत्त्या स एव व्याख्यातः तत्सर्वं तात्पर्यतो व्याचष्टे—येयमिति। संस्कारत्वादिति सूत्रावयवं स्वयमन्यथा व्याचष्टे—अथ वेति ॥३७॥

भा० प्र०—'बुद्धशास्त्रात्' इस सूत्र में पूर्वपक्षियों ने दोष उद्भावन किया है, किन्तु वह ठीक नहीं है। क्योंकि मन्त्र के द्वारा अनुष्ठेय विषय का स्मरण होता है। मन्त्र के द्वारा स्मरण करने पर याग संबंधी अपूर्व निष्पन्न होता है, अन्यथा नहीं। अतः, ऐसे स्थलों में मन्त्र के द्वारा ही स्मरण करना चाहिए—इसी नियम की कल्पना करना चाहिए। 'संस्कारार्थात्' इसके अर्थ में आचार्य कुमारिल ने कहा है कि—स्मृति उद्बोधक सापेक्ष है। और मन्त्र स्मरणीय विषयक उस उद्बोधनरूप संस्कार का साधन है। अतः, मन्त्र के द्वारा अग्नीध्र का संस्कार अर्थात् स्मृति का उद्बोध न होने से वह निरर्थक नहीं है। इसलिए, जूता पहने हुए पैर में पुनः जूता के पहनने का दृष्टान्त इस स्थल में उपयुक्त नहीं है।

"सम्प्रैष"='अग्नीदग्नीन् विहार' इत्यादि प्रैषण में, 'कर्मगर्हा'=ज्ञातकर्म की पुनः ज्ञापनरूप निन्दा या दोष का उदाहरण दिया है वह "अनुपालम्भः" = निन्दा या दूषण नहीं है 'संस्कारत्वात्'=क्योंकि, उसके द्वारा अग्नीध्र का संस्कार होता है ॥३७॥

## अभिधानेऽर्थवादः ॥ १.२.३८ ॥

**शा० भा०—'चत्वारि शृङ्गा' इत्यसदभिधाने गौणः शब्दः। गौणी कल्पना प्रमाणवत्त्वात्। उच्चारणाददृष्टमप्रमाणम्। चतस्रो होत्राः शृङ्गाणीवाऽस्य। त्रयोऽस्य पादा इति सवनाभिप्रायम्। द्वे शीर्षे इति पत्नीयजमानौ। सप्त हस्तास इति च्छन्दांस्यभिप्रेत्य। त्रिधा बद्ध इति त्रिभिर्वेदैर्बद्धः। वृषभः कामान्वर्षतीति, रोरवीति शब्दकर्मा, महो देवो मर्त्यानाविवेशेति मनुष्याधिकाराभिप्रायम्। तद्यथा चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदीति नद्याः स्तुतिः।**

**यज्ञसमृद्धये साधनानां चेतनसादृश्यमुपपादयितुकाम आमन्त्रणशब्देन लक्षयति ओषधे त्रायस्वैनमिति, शृणोत ग्रावाण इति च। अतः परं प्रातरनुवाकानुवचनं भविष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयुः, किं पुनर्विद्वान्सोऽपि ब्राह्मणा इति। इत्थं चाचेतना अपि ग्रावाण आमन्त्र्यन्ते ॥ ३८ ॥**

भा० वि०—असदर्थत्वेनानर्थक्यं दूषयति—अभिधाने इति। सूत्रं व्याचष्टे—चत्वारीति। अविद्यमानमपि चतुश्शृङ्गत्वादिरूपकल्पनयाभिधाय यागस्तावकोऽयं मन्त्रः इत्यर्थः।

ननु गौणार्थत्वकल्पनाददृष्टार्थत्वकल्पनं गौरवमत आह-**गौणीति**। प्रमाणवती दृष्टचरी अप्रमाणं-विनियोजकप्रमाणरहितम्। उपमेयस्योपमानगुणयोगं सूचयितुमुपमेयस्वरूपं दर्शयन् मन्त्रं व्याचष्टे-**चत्वार इति**। शृङ्गाणीव शृङ्गाणि होनारः अत्यन्तोपकारकत्वगुणयोगात्, अस्य यागस्य त्रीणि सवनानि पादा इव पादाः, अस्य सवनाश्रितत्वाद्यज्ञस्य, प्राधान्यात् पत्नीयजमानौ शीर्षे इव शीर्षे। गायत्र्यादीनि छन्दांसि हानोपादानोपायत्वात् हस्ता इव हस्तासः, त्रिभिर्वेदैः बन्धनकल्पैः बद्धः अयमेव यज्ञो नायमिति, ततः काम्यमानफलत्वाद्वृषभ इव वृषभः रोरवीतीव स्तोत्रशास्त्राद्यनेकशब्दोपेतत्वात् आवेशस्यासंभवादाविवेशेवेति मनुष्याधिकाराभिप्रायम्। एवं गुणवादेन यज्ञस्तुतिपरोऽयं मन्त्र इत्यर्थः, गुणकल्पनया स्तुतिं दृष्टान्तेनोपपादयति—**तद्यथेति**। एवं मा मा हिंसीरित्यादिषु हविर्धानादिष्वविद्यानमपि हिंसादिसामर्थ्यमारोप्य तन्निषेधेन हविर्धानादिः स्तूयत इति नानर्थक्यमिति द्रष्टव्यम्।

अचेतनेऽर्थबन्धनपरिहारतयाप्येतत्सूत्रं व्याचष्टे—**एवमिति**। यज्ञसमृद्धये—यज्ञ उत्साहजननाय यज्ञसाधनभूतामोषधिं चेतनसादृश्येन स्तोतुमामन्त्रणशब्देन लक्षयति—**ओषध इति**। सम्बुद्ध्यन्तेन प्रतिपादयतीत्यर्थः, त्रायस्वेति प्रैषणं तु ग्रावप्रैषणन्यायेनाविद्धमिति मत्वा ग्रावप्रैषणमुपपादयति—**शृणोतेति**। इतः प्रभृति अस्माद्धोमादनन्तरमित्यर्थः, इतीत्यस्यानन्तरमनुवाकः स्तूयत इत्यध्याहार्यम्। ग्रावस्वामन्त्रणोपपत्तिमप्याह—**इत्थं चेति**। प्रैषणवत् स्तुत्यर्थतयेत्यर्थः। अनेन च प्रबन्धेनाचेतने चैतन्याभिधानेऽर्थवादश्शब्द इति सूत्रं व्याख्यातम्। अर्थविप्रतिषेधं दूषयति—**गुणादिति**। सूत्रं व्याचष्टे—**अदितिरिति**। अदितेस्तत्तत्कार्यकारित्वेन गुणेन द्युदिव्यपदेशो गौण इति न विप्रतिषेध इत्यर्थः, व्यपदेशस्य गौणत्वेनापि प्रतिषेधं दृष्टान्तेनाह—**यथेति**। एतदेव सूत्रं गुणाद्विशेषणात् कर्मविशेषलक्षणं विशेषभेदं निमित्तीकृत्यायं व्यपदेशः; अतो न विप्रतिषेध इत्येवमुदाहरणान्तरे व्यावृत्त्या योजयति—**तथैवेति** ॥ ३८ ॥

त० वा०—'चत्वारि शृङ्गेति' रूपकद्वारेण यागस्तुतिः कर्मकाल उत्साहं करोति। होत्रे त्वयं विषुवति होतुराज्ये विनियुक्तः। तस्य चाऽऽग्नेयत्वादह्नश्चाऽऽदित्यदैवतत्वसंस्तवादादित्यरूपेणाग्निस्तुतिरुपवर्ण्यते। तत्र चत्वारि शृङ्गेति दिवसयामानां ग्रहणम्। त्रयो अस्य पादा इति शीतोष्णवर्षाकालः। द्वे शीर्षे इत्ययनाभिप्रायम्। सप्त हस्ता इत्यश्वस्तुतिः। त्रिधा बद्ध इति सवनाभिप्रायेण! वृषभ इति वृष्टिहेतुत्वेन स्तुतिः। रोरवीति स्तनयित्नुना। सर्वलोकप्रसिद्धेर्महान्देवो मर्त्यानाविवेशेत्युत्साहकरणोपकारेण सर्वपुरुषहृदयानुप्रवेशात्। एवमनेन मार्गेणास्ति तावद्धर्मसाधनस्मृतिः ॥ ३८ ॥

न्या० सु०—चत्वारीत्यादिभाष्येणाविद्यमानवचनपरिहारार्थत्वेन तावदेतत्सूत्रं व्याख्यातम् । तत्र कस्य स्तुतिः ? किमर्था वेत्यपेक्षायामाह—चत्वारीति । अस्मिंस्तु व्याख्याने प्रदेशविशेषापरिज्ञानान्मन्त्रस्यादृष्टार्थत्वापत्तेरपरितोषाद्विनियोगानुसारेण स्वयमन्यथा व्याचष्टे -होत्रे त्विति । हौत्रं-प्रवचनमृग्वेदः । तद्विहितानां मन्त्राणां नोत्साहकत्वं यजुर्वेदविहितानामेव केषांचित्तथात्वदर्शनादिति वक्तुं होत्रग्रहणम् । विषुवन्नामैकाहविशेषः तत्रातिदेशतश्च चत्वार्याज्यसंज्ञकानि शस्त्राणि होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकप्रयोज्यानि प्राप्तानि । तत्रान्येषामनाग्नेयत्वाद्धौत्रविशेषणम् । ततः किमिति चेत् अत आह—तस्येति । आग्नेयं होताज्यं शंसतीति श्रुतिर्होतुराज्यास्याग्नेयत्वं सूर्यदेवत्यं ह्येतदहरिति श्रुतेर्विषुवत्संज्ञकस्याह्न आदित्यदेवतात्वमतिदेशप्राप्तानैन्द्रवाय्वादिदेवतात्वान्न वस्तुवृत्त्याऽऽदित्यदेवतत्वमस्तीति कृत्वा संस्तवादित्युक्तं तेजस्त्वादिसामान्यं चादित्यधर्माणामग्नावुपचारस्यालम्बनम्, स्तोत्रशस्त्राणामदृष्टार्थत्वात्कर्मसमवेतदेवतानादरेणाव्यक्तलिङ्गत्वादस्य मन्त्रस्यास्येति च सर्वनामयुक्तत्वात्सन्निहिताग्निस्तुत्यर्थत्वावधारणं यज्ञसमृद्धय इत्यादिभाष्येण एतदेव सूत्रमचेतनार्थबन्धनपरिहारार्थत्वेनाप्यौषध्यादावचेतनचैतन्याभिधानेनार्थवादत्वं परिहार इत्यावृत्त्या व्याख्यातम् ।

तत्करणमन्त्राणामदृष्टसाधनस्तुत्यर्थत्वानुपपत्तेरयुक्तमाशङ्क्याह–एवमिति । अविद्यमानवचने यथा स्तुतित्वं परिहारः एवमचेतनार्थबन्धनेऽप्यनेन स्तुतित्वमात्रेण कर्मसाधनस्मृतिपरिहार इत्यर्थः । कर्मसाधनस्मृत्यर्थस्यापि मन्त्रस्य विशेषणांशे स्तुत्यर्थत्वोक्तिरिति भावः । सकलस्य तर्हि मन्त्रस्य करणत्वं न सिद्ध्येदित्याशङ्क्यास्ति तावदित्युक्तम् । करणमन्त्रोच्चारणे, कर्मसाधनस्मृतिस्तावद्भवति । तत्राकर्मसमवेतार्थाभिधायिनामपि पदानां समवेतार्थपदशेषत्वेन स्मृत्यर्थत्वोपपत्तेः सकलस्य मन्त्रस्य करणत्वसिद्धिरित्याशयः ॥३८॥

भा० प्र०—अभिधाने=अभिधानविषय में अर्थात् अविद्यमानवचन के विषय के सम्बन्ध में जो कहा गया है वह, अर्थवादः = प्रशंसा निन्दा अर्थात् गौण अर्थ में प्रयुक्त हुआ है ।

पूर्वपक्षी । अविद्यमानवचनात् १।२।३१ इस सूत्र के द्वारा यह कहा गया है कि जिसका अस्तित्व नहीं है, उसके विषय में मन्त्र से कहा गया है । उस प्रसङ्ग मे उक्त आपत्ति का उत्थापन ठीक नहीं है, क्योंकि वह अर्थवाद मात्र है ।

चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य !
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥
—(ऋग्वेद ४।५८।३)

इस मन्त्र में रूपक के व्याज से यज्ञपुरुष का वर्णन किया गया है । यज्ञपुरुष का चार शृङ्ग अर्थात् होता, अध्वर्यु, उद्गाता एवं ब्रह्मा ये चार ऋत्विक् यज्ञ के शृङ्ग स्वरूप हैं । इनके तीन चरण अर्थात् प्रातःसवन, माध्यन्दिनसवन, तृतीयसवन ये तीन सवन तीन पादस्वरूप हैं । इनके दो शीर्ष अर्थात् यजमान और पत्नी ये दो मस्तक स्वरूप हैं । इनके सात हाथ अर्थात् (१) गायत्री, (२) उष्णिक्, (३) अनुष्टुप्,

(४) वृहती, (५) पङ्क्ति, (६) त्रिष्टुप्, (७) जगती ये सात छन्द सात हाथ स्वरूप हैं। त्रिधा बद्ध अर्थात् ऋग्वेद, यजुर्वेद और सामवेद इन तीन वेदों के द्वारा ऋङ्मन्त्र, साममन्त्र और यजुर्मन्त्र के द्वारा तीन प्रकार से बद्ध है। यह वृषभ अर्थात् कामनाओं का वर्षण करने वाला, सभी कामनाओं का सफल करने वाला है। रोरवीति = पुनः पुनः शब्द करता है अर्थात् ऋत्विक् यज्ञ में स्तोत्र, शस्त्र आदि की आवृत्ति के द्वारा शब्दायमान रहते हैं। यह महो देवः परिपूर्ण यज्ञपुरुष है। यह मर्त्यां आविवेश अर्थात् मनुष्यों के मध्य में प्रविष्ट हुए हैं। क्योंकि त्रैवर्णिक मनुष्य ही यज्ञ के अधिकारी हैं। काव्यों में कवियों के द्वारा किसी के सौन्दर्य आदि वर्णन के प्रसङ्ग में चक्रवाकस्तनी, हंसदन्तावली, शैवालकेशिनी नदी आदि रूपक कहा जाता है, प्रकृत में भी इसी प्रकार रूपक के व्याज से यज्ञपुरुष का वर्णन किया गया है। अतः यह अविद्यमान वचन नहीं है। यह निरुक्तकार ने व्याख्या प्रस्तुत की है।

वस्तुतः इस मन्त्र का अर्थ गूढ है—

महाभाष्य में आचार्य पतञ्जलि ने इस मन्त्र से शब्द ब्रह्म के स्वरूप का वर्णन किया है। सर्वदर्शन संग्रह में पाणिनीयदर्शनप्रकरण में एवं ऋग्वेदभाष्यभूमिका में व्याकरण की उपयोगिता-प्रदर्शन-प्रसङ्ग में सायणाचार्य ने महाभाष्य की व्याख्या को उद्धृत किया है—नाम, आख्यात, उपसर्ग और निपात ये चार शृङ्ग के समान हैं। भूत, भविष्य, और वर्तमान ये तीन काल चरण के समान हैं। सुबन्त एवं तिङन्त ये दो मस्तक हैं। सात सुप् विभक्तियाँ सात हाथ के समान हैं। वक्ष, कण्ठ एवं मस्तक इन तीन स्थानों के विशेष संस्पर्श से शब्दों की अभिव्यक्ति होने से शब्द तीन प्रकार से आबद्ध है। वृषभ कामना वर्षण करते हैं। ये विशेष रूप से रव शब्द करते हैं अर्थात् शब्द विवर्तप्रपञ्च के मध्य में प्रवेश करते हैं, जीव इनसे अभिन्न है क्योंकि जगत् शब्दब्रह्म का विवर्त होने से उसमें अध्यस्त है अर्थात् आध्यासिक सम्बन्ध से कल्पित है कल्पित वस्तु की अधिष्ठान से अतिरिक्त सत्ता नहीं होती है, अतः अधिष्ठान से वह भिन्न नहीं होता है। ऐसा महान् देव शब्द मनुष्यों के बीच विशेष रूप में प्रकट हुआ है।

आचार्य सायण ने इस मन्त्र की व्याख्या में विनियोग के अनुसार इस प्रकार कहा है—

सूर्य पक्ष में --

दिन का चार प्रहर चार शृङ्ग स्वरूप हैं। शीत, ग्रीष्म और वर्षा ये प्रधान तीन ऋतु तीन चरण के समान हैं। उत्तरायण और दक्षिणायन ये दो अयन दो मस्तक के समान हैं। प्रातःसवन, माध्यन्दिनसवन एवं तृतीयसवन ये तीन सवनों से त्रिधा आबद्ध है। वृष्टि हेतु होने से वृषभ है। मेघ के शब्द से ये महान् शब्द करते हैं एवं मानवों में प्रसिद्ध होने से महादेव हैं, ये सभी मनुष्यों को उत्साहित करते है क्योंकि सूर्योदय होने पर मनुष्य उत्साह सम्पन्न होते हैं। इसी प्रकार अग्नि, वायु आदि का भी वर्णन इससे किया है।

इसी प्रकार 'अचेतनेऽर्थसम्बन्धात्' १।२।३१ इस सूत्र की व्याख्या में भी जो आपत्तियाँ उपस्थापित की गई हैं वे भी समीचीन नहीं हैं, क्योंकि ओषधे त्रायस्वैनम्, स्वधिते मैनं हिंसीः (तै० सं० १।२।१।१) यह वपन का मन्त्र है, यज्ञ में केश आदि का छेदनरूप संस्कार के समय यथाक्रम कुश एवं क्षुरा को उद्देश्य कर यह पढ़ा जाता है। अर्थात् वपन कर्म में अचेतन ओषधि एवं अस्त्र भी रक्षा करे—हिंसा न करे। चेतन नापित रक्षा करे अर्थात् हिंसा न करे यह कहने की आवश्यकता नहीं रहती है। शृणोत ग्रावाणः (तै० सं० १।३।१३।१) यह मन्त्र प्रातःकालीन अनुवाक के अध्ययन के समय पढ़ा गया है। अर्थात् अचेतन प्रस्तर आदि भी जब पठ्यमान अनुवाक का श्रवण करता है तब विद्वान् ब्राह्मण इसे अवश्य ही सुनेंगे।

वेदान्तियों ने इसकी भिन्न व्याख्या की है—अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (वेदान्तदर्शन २।१।५) इस सूत्र के भाष्य में आचार्य शङ्कर ने कहा है कि मृदब्रवीत्, आपोऽब्रुवन् (श० प० ब्रा० ६।१।३।२,४) मिट्टी बोली, जल बोला। तत्तेज ऐक्षत ता ऐक्षन्त (छा० ६।२।३,४) तेज ने देखा, जल ने देखा। ते हेमे प्राणाः अहं श्रेयसे विवदमाना ब्रह्म जग्मुः, वे ये प्राण (इन्द्रियाँ) अपनी प्रधानता के लिए विवाद करते हुए ब्रह्म के समीप गये इत्यादि प्रसङ्ग में अचेतन भूत, इन्द्रिय आदि ने जो चेतन के समान व्यवहार किया है वह भूत और इन्द्रियों का नहीं है अपितु वहाँ मृत्तिका, जल, तेज एवं इन्द्रियों के अभिमानी चेतन देवता हैं, उनका है। क्योंकि श्रुतियां भूत आदि अचेतनों एवं उसके भोक्ता चेतन के विशेषत्व को कहती है। अग्निर्वाग् भूत्वा मुखं प्राविशत् (ऐ० आ० २।४।२।४) अग्नि वाणी होकर मुख में प्रविष्ट हुआ। इत्यादि कथन से सर्वत्र वाक् आदि इन्द्रियों के मध्य में देवता की अनुगति अर्थात् अधिष्ठातृत्व कहा गया है, इसलिए इन स्थलों में अचेतन पदार्थों का सम्बोधन किया गया है। अतः अभिमानी चेतन देवता का ही अचेतन से उल्लेख किया गया है ॥ ३८ ॥

## गुणादविप्रतिषेधः स्यात् ॥ १.२.३९ ॥

**शा० भा०—'अदितिर्द्यौरि'ति गौण एष शब्दः। अतो न विप्रतिषेधः। यथा त्वमेव माता पितेति, तथैकरुद्रदैवत्ये एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इत्यविरोधः ॥ ३९ ॥**

भा० वि०—स्वाध्यायवचनेनाभ्यासदोषं परिहरति—**विद्येति**। तत्र प्रथमं तावत् परेणानुक्तमपि शङ्कान्तरं संभवमात्रेणोपन्यस्य निराकुर्वन् सूत्रं योजयति—**यस्त्विति**। अकर्मकाले विद्याकाले, विवक्षितार्थत्वे हि मन्त्राणां विद्याकालेऽपि मन्त्रेणार्थप्रकाशनेच्छा भवेत्, हन्तिरूपस्यार्थस्य सन्निहितत्वादतस्तदभावादेवार्थाविवक्षा गम्यत इति यदुक्तम्, तदप्ययुक्तं पूर्णिकाहन्तेरयज्ञाङ्गत्वेन यज्ञोपकाराय प्रकाशनेच्छानुपपत्तेरित्यर्थः, विद्याकाले मन्त्रेणार्थस्यावचनप्रकाशनं प्रकाशनेच्छाभावः असंयोगाद्यज्ञसंयोगाभावादिति सूत्राक्षरार्थः ॥ ३९ ॥

त० वा०—अदितिर्द्यौरदितिरिति। नात्र द्युत्वादीनि विवक्षितानि। किं तर्हि ? अदितौ प्रकाशयितव्यायामविद्यमानविप्रतिषिद्धधर्मोपादानं स्तुत्यर्थम्। गुणवादेन त्वौदुम्बराधिकरणवत्संवादो योजयितव्यः ॥ ३९ ॥

न्या० सु०—यस्त्वर्थविप्रतिषेधः शङ्कितः, स गौणत्वात्परिहर्त्तव्य इत्येवं सूत्रं व्याख्यातुमदितिरित्यादिभाष्यं व्याचष्टे—अदितिरिति। स्तुतिविषयत्वाद् गौणत्वस्य स्तुतित्वस्य चार्थवादाधिकरणव्युत्पादितस्याप्यौदुम्बराधिकरणविधित्वशङ्कानिराकरणेन प्रष्ठिानादौदुम्ब-राधिकरणवदित्युक्तम् ॥ ३९ ॥

भा० प्र०—गुणात् = गौण प्रयोग होने से, अप्रतिषेधः = विरोध नहीं है।

"अदितिर्द्यौरदितिरन्तरिक्षम्" इत्यादि मन्त्रों में जो विरोध प्रदर्शन किया गया है वह ठीक नहीं है आप ही 'माँ-बाप हैं' इस लौकिक वाक्य के समान ही यह गौणार्थक है, अतः किसी तरह का विरोध नहीं है।

एको रुद्रः एवं सहस्राणि सहस्रशो ये रुद्राः आदि मन्त्रों का भी विरोध नहीं है, क्योंकि एक रुद्र जिस कर्म का देवता है 'एको रुद्रः' यह मन्त्र उसी में पढ़ना चाहिए एवं जो कर्म शतरुद्रदैवत्य है, उसमें 'सहस्राणि सहस्रशो ये रुद्राः' आदि मन्त्र उसी में पढ़ना चाहिए। अतः कर्मभेदनिबन्धन देवता का भेद होने से किसी प्रकार का असामञ्जस्य नहीं है।

इस प्रसङ्ग में वेदान्तियों ने कहा है कि रुद्र अनेक नहीं हैं, किन्तु एक ही रुद्र हजार या करोड़ मूर्तियों को धारण करता है—यह एक ही रुद्र की महिमा या विभूति के अतिरिक्त कुछ भी नहीं है। इसीलिए वृहदारण्यक उपनिषद् में कहा है कि "त्रयश्च त्री च शता च त्रयश्च त्री च सहस्रा, महिमान एव एषामेते त्रयस्त्रिंशत्त्वेव देवाः"। एको देव इति प्राण इति स ब्रह्मेत्यादित्याचक्षते" (वृ० उ० ३।९।१,२,९) शाकल्य ने याज्ञवल्क्य से प्रश्न किया था कि कितने देवता हैं ? याज्ञवल्क्य ने प्रथम उत्तर दिया तीन सौ तीन, द्वितीय बार उत्तर दिया तीन हजार तीन। इसके बाद कहा कि देवता तैंतीस हैं और सब इन्हीं की महिमा है। अन्त में उत्तर दिया देवता एक है, वही प्राण अर्थात् हिरण्यगर्भ वही ब्रह्म, इसी को ज्ञानी 'त्यत्' शब्द से कहते हैं। हम लोगों में देवता की संख्या तैंतीस करोड़ है—यह प्रवाद निराधार नहीं है। क्योंकि, इस शास्त्र के सिद्धान्त से तैंतीस देवता की ही यह महिमा या विभूति है। तैंतीस देवताओं का भी एक में ही पर्यवसान होता है। यद्यपि आठ वसु, ग्यारह रुद्र बारह आदित्य, इन्द्र एवं प्रजापति आदि विभिन्न नाम धारण करने वाले सभी देवताओं की समष्टि को लक्ष्य कर ही श्रुतियों में तैंतीस देवता कहा गया है। एक ही ब्रह्म को औपाधिक भेद के अनुसार ही यह प्रकार भेद कहा गया है। इसलिए श्रुति ने आगे भी कहा है—एको देव इति प्राण इति स ब्रह्मं त्यादित्या-चक्षते। श्रुति ने अन्यत्र भी कहा है कि—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
—(ऋग्वेद १।१६८।४६)

एक ही सत् वस्तु को ब्राह्मणों ने इन्द्र, मित्र, वरुण, अग्नि, गरुत्मान्, यम, मातरिश्वा आदि नाम से अभिहित किया है। इसलिए सायणाचार्य ने ऋग्वेदभाष्योपक्रमणिका में कहा है कि—'परमेश्वरस्यैव इन्द्रादिरूपेणावस्थानात् ।' यतः परमेश्वर ही इन्द्रादि रूप में अवस्थान करता है। अतएव एक एव रुद्रः एवं सहस्रशो रुद्राः, इन दो मन्त्रों के मध्य में कोई भी विरोध नहीं है एवं अर्थ की भी किसी तरह की सन्दिग्धता नहीं है ॥ ३९ ॥

## विद्यावचनमसंयोगात् ।। १.२.४० ।।

**शा० भा०—यत्त्वकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकाऽर्हन्ति प्रकाशयितुमिच्छतीति । अयज्ञसंयोगाद्, न। यज्ञोपकारायैतत्प्रकाशयितुमिच्छतीति। ननु प्रकाशनानभ्यासः, अक्षराभ्यासश्च परिचोदितः। उच्यते। सौकर्यात्प्रकाशनानभ्यासः। दुर्ग्रहत्वाच्चाक्षराभ्यासः ॥ ४० ॥**

भा० वि०—नन्वक्षराभ्यासादध्ययनविधिविहितत्वाविशेषे कथमर्थप्रकाशनानभ्यास इति पूर्वोक्तमाङ्क्ते—**नन्विति**। विशेषहेतुं वदन् परिहरति—**उच्यत इत्यादिना** ॥ ४० ॥

त० वा०—यद्यपि पूर्वपक्षेऽयमभिप्रायो नोपन्यस्तः, तथापि संभवादुपन्यस्यते। यदि हि स्वाध्यायकालेऽर्थवचनमुपयुज्येत, ततस्तदाश्रीयेत, न त्वेवमस्ति, कर्मभिरसंयोगात्। तदनभ्यासस्तु प्रोक्षणादिवत्सौकर्यात् ॥ ४० ॥

न्या० सु०—यत्त्वित्यादिना भाष्येण विद्याकाले सन्निहितस्याप्यर्थस्य यद्वचनमनभिधानम्, तत्तस्य कर्मानङ्गत्वाद्युक्तमिति सूत्रं व्याख्यातम्। तदर्थस्य प्रागनुपन्यासादयुक्तमाशङ्क्याह—**यद्यपीति**। व्याचष्टे—**यदि हीति**। नन्वित्यादिना प्रागुपन्यस्ताभिधानानभ्यासाशङ्काऽनुभाषणपूर्वकं परिहृता। तद्व्याचष्टे **तदनभ्यासस्त्विति** ॥ ४० ॥

भा० प्र०—विद्यावचनम् = विद्या-अवचन। माणवक का अवघात मन्त्रपाठ अवचन अर्थात् अवघातरूप अर्थ का प्रकाशक नहीं है। असंयोगात्—क्योंकि यज्ञ का संयोग अर्थात् संभव नहीं है।

स्वाध्यायवदवचनात् (१।२।३१) इस सूत्र के द्वारा उठायी गई आपत्तियाँ भी ठीक नहीं है। क्योंकि पूर्णिका नाम की नारी के द्वारा धान्य का अवहनन एवं ब्रह्मचारी के द्वारा मन्त्रपाठ का एक काल में होने में किसी प्रकार का वाचनिक संयोग नहीं है। अर्थात् न

तो पूर्णिका नाम की नारी यज्ञ के लिए अवहनन कर रही है और न ब्रह्मचारी ही यज्ञ के लिए मन्त्रपाठ कर रहा है। किन्तु काकतालीयन्याय से स्वाभाविक रूप में दोनों की एक कालीनता है। यही कारण है कि माणवक के द्वारा पढ़ा गया अवघात मन्त्र वहाँ अर्थ का प्रकाशक नहीं है। किन्तु यज्ञ का मन्त्रपाठ वाचनिक अर्थात् शास्त्रवचन से सिद्ध है और उन दोनों में वैसा वाचनिक या वैध सम्बन्ध रहता है। इसलिए इस स्थल में स्वतः प्राप्त अर्थ का प्रकाश निवारण के योग्य नहीं है। अथवा स्वाध्याय विधि स्थल के समान यहाँ भी विद्या-अवचन विद्या अर्थात् अर्थज्ञान का अवचन अर्थात् अविधान असंयोगात् अर्थात् अर्थ सिद्ध होने से दोष नहीं है।

आशय यह है कि स्वाध्यायविधि स्थल में जैसे अर्थ का ज्ञान विधि से बोधित नहीं है, क्योंकि वह अर्थ सिद्ध है वैसे ही मन्त्र के उच्चारण स्थल में भी अनुष्ठेय अर्थ का प्रकाशन अर्थ सिद्ध है। क्योंकि स्वाध्याय वेद के अध्ययन से सभी मन्त्र पढ़ने योग्य एवं उनका अर्थबोध भी स्वारसिक है ॥ ४० ॥

## सतः परमविज्ञानम् ॥ १.२.४१ ॥

**शा० भा०—विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते। निगमनिरुक्त-व्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः। यथा सृण्येव जर्भरी तुर्फरीतू इत्येवमादीन्यश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते। अनेन 'अश्विनोः काममप्रा' इत्याश्विनं सूक्तमवगम्यते। देवताभिधानानि च घटन्ते जर्भरीत्येवमादीनि। अवयवप्रसिद्ध्या च लौकिकेनार्थेन विशेष्यन्ते। एवं सर्वत्र ॥ ४१ ॥**

भा० वि०—अविज्ञानादित्युक्तमनुभाष्यं दूषयति—**सत इति**। तत्र पर इत्यनुवादभागं व्याचष्टे—यत्त्विति। न ज्ञायत इत्यस्मादूर्ध्वमिति परं कारणमुक्तम्, तदयुक्तमिति वाक्यं पूरणीयम्, सतो विज्ञानमिति सूत्रावयवं व्याचष्टे—**विद्यमानोऽपीति**। नोपलभ्येतेति शेषः। अतो नानुपलब्धिमात्रेणासत्त्वमिति भावः।

ननु लोके तेनाप्यप्रयुक्तपूर्वपदार्थस्य कथं सत्त्वावधारणमत आह—**निगमेति**। उपलक्षणमेतत् अर्थप्रकरणार्षसूक्तदेवतावशेन चेति द्रष्टव्यम्, तत्र तावत् सृण्येवेति मन्त्रस्य सूक्तान्तर्गतत्वेन सूक्तदेवताविषयत्वं दर्शयितुं सूक्तदेवतां तावद्दर्शयति—**यथेति**। कुत इत्यत आह—**द्विवचनेति**।

ननु द्विवचनान्ततया द्वित्वाभिधायित्वेऽपि कथमश्विनोरभिधानं मित्रावरुणाद्यभिधानोपपत्तेरत आह—**अनेनेति**। अश्विनोः काममग इत्यन्ते प्रत्यक्षात् सङ्कीर्तनात् अश्विनामित्येव सूक्तं निश्चीयत इत्यर्थः।

ननूक्तदेवतापरत्वेऽपि मन्त्रस्य कथं तदभिधानसामर्थ्यं पदानामत आह—**देवतेति**। जर्फरी तूर्फरीतू इत्येवमादीति प्रकृतिप्रत्ययरूपार्थप्रसिद्ध्यैवेति निग-

मादयो दर्शिताः सृण्येव जर्फरी तूर्फरी तू नैतौ शेव तूर्फरी पूर्फरीका उदन्यजे वजमेनामदेरुतामे जरावजरम्मरात्यिनेन मन्त्रेण भूतांशो नाम ऋषिरश्विनावस्तुवत् तत्र सरणसाधनत्वात् सृणिरङ्कुशः तमर्हत इति सृण्यौ, गजौ, आकारस्च्छन्दसि द्विवचनस्यादेशः ताविव जर्फरी जृम्भभाणौ प्रहरणव्यापृतौ तुर्फरीतू हिंसन्तौ नितो शेवधस्तत्कारिणौ नैतोशौ योद्धारौ ताविव तूर्फरी त्वरमाणौ पर्फरीका शोभायुक्तौ उदन्या पिपासा तेन यत्र चातकान्या [ना ?] मुदन्या, स प्रावृट्कालो लक्ष्यते तत्र जातौ चातकाविव जेमना उदकवन्तौ तौ यथोदकलाभेन मत्तौ भवतः, तथा यौ मदेरुनौ मे जरायु मरायु च जरामरणधर्मकं शरीरमजरममरं च कुरुतमति वाक्यशेषः, ततश्च जरामरणयोः कुपितावजरत्वस्यामरत्वस्य कुपितौ सन्तौ मम शरीरमजरममरं च कुरुतामिति वाक्यार्थः, एवं च युक्तं देवताभिधानसामर्थ्यं पदानामिति भावः ।

नन्वर्थाभिधानेऽपि कथं विवक्षितार्थत्वं तत्राह—**लैकिकेनेति**। अविशिष्टस्तु वाक्यार्थ इत्युक्तन्यायादित्यर्थः। उक्तन्यायं मन्त्रान्तरेऽप्यतिदिशति—**एवमिति**। अम्यक् सात इन्द्र ऋष्टिरस्मे न सनम्यभ्यं मरुतो जुनन्ति अग्निश्चिद्धिष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसीत्यत्रैकया प्रतिधापिवत् साकं सरांसि त्रिंशतं इन्द्रस्सोमस्य काणुकेत्यत्र चेत्यर्थः, तत्र प्रथमया अगस्त्येनेन्द्रो मघवान् धनं प्रार्थितः अम्यगित्यत्रामाशब्दोऽव्ययस्साहित्यवाची अमा साहित्येनाञ्जनि गच्छतीत्यम्यक् सात इन्द्र ऋष्टिरायुधविशेषः कथं भूतेत्यपेक्षायां तृतीयपादान्वयः यातसे शुष्कतृणे शुशुक्वान् दीप्तवान् अग्निश्चिदग्निरिव सा त्वत्प्रसादादस्मे अस्माकमित्यर्थः; हि स्मेति पादपूरणार्थः, येऽप्यमी मरुत सनेमि पुराणमभ्रं जलं जुनन्ति वृष्टिरूपेण क्षिपन्ते आपोन। आपइव द्वीपमन्नाद्यानि दधति धारयन्ति, तव प्रियसखास्तेऽप्यस्माकं एवं साधारणद्रव्यः सन्नपि रयिन्नः केवलं दा अस्माकमेव देहीत्युत्तरमन्त्रेणान्वयः, एकयेत्यनया तु इन्द्रस्यैव स्तुतिः एकया प्रतिधा एकेन प्रयत्नेन साकं यौगपद्येन सोमस्य पूर्णानि त्रिशतं सरांसि पात्राणि इन्द्रोऽपिबत् काणुका कामयमानः कामुकशब्दस्य च्छान्दसो वर्णव्यत्ययः आकारश्च विभक्त्यादेशः तदेवं सर्वत्राभियुक्तानाम् अर्थोत्प्रेक्षोपपत्तेः नानर्थक्यमित्यभिप्रायः ॥ ४१ ॥

त० वा०—यत्तु परं कारणमविज्ञेयत्वमुक्तम्, तदयुक्तम्। सत एवार्थस्य पुरुषापराधेनाविज्ञानात्। तत्र चार्थप्रकरणसूक्तदेवतार्षनिगमनिरुक्तव्याकरणज्ञानान्यधिगमोपायाः। तेषां ह्येवमर्थमेवं परिपालनम्। यथैव च व्याकरणेन नित्यपदान्वाख्याने क्रियमाणे लोपविकारादीनामुपायत्वेनोपादानम्, अव्युत्पन्नाश्च तैरेव पदोत्पादनमिव मन्यन्ते। तथाऽत्र नित्यवाक्यार्थप्रतिपत्तावार्षोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते। तत्र यथा कश्चिद्व्याचक्षाणः पदतदवयवादीनां चेतनत्वमिवाध्यस्य विशेषबाधादिव्यापारं निरूपयत्येतेनैवमुक्तोऽयमेवं प्रत्याहेति।

यथा च पूर्वपक्षोत्तरपक्षवादिनौ व्यवहारार्थं कल्पितौ, एवमृष्यार्षेयविषया कल्पना।

अथ वा परमार्थेनैवेदमृषिभिस्तथोक्तम्, न तु स मन्त्रस्तैरेव कृतः तदानीं वा पुरुषान्तरेष्वसन्नेव तेषामाविर्भूतः। किं तर्हि ? यथाऽद्यत्वेऽपि कैश्चित्प्रकृतार्थविवक्षायां तदर्थं वाक्यमुपादित्समानस्तदर्थसरूपं मन्त्रम्, श्लोकं वाऽन्यदीयं स्मृत्वा स्ववाक्यस्थाने प्रयुङ्क्ते तत्प्रत्ययेन चान्ये तदर्थमवधारयन्ति, एवमिहापि वेदार्थविद्भिस्तद्वासितान्तःकरणैर्भृग्वादिभिरात्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्रा प्रयुक्ताः तद्बलेन चास्मदादीनां तदनुरूपाऽनित्यार्थप्रतिपत्तिर्भवति। प्रत्ययदृढत्वार्थमेव चाऽऽर्षस्मरणम्।

तत्रैवमुपाख्यानं स्मरन्ति यथा किल भूतांशो नाम कश्चिदृषिर्जरामरणनिराकरणार्थी सृण्येवेत्येवमादिना सूक्तेनाश्विनौ स्तुतवान् भूतांशो अश्विनोः काममप्रा इति चान्ते संकीर्तनात्, तस्याऽऽर्षमाश्विनं सूक्तमिति च द्योतितम्। तत्र सृणिरङ्कुशः सरणसाधनत्वात्तमर्हन्तौ, तत्र वा साधू इति सृण्यावर्थात्कुञ्जरौ। आकारश्छन्दसि द्विवचनादेशः। ताविवात्यर्थं जृम्भमाणावष्टाङ्गप्रहरणव्यापृतौ जर्भरी। तुर्फरीतू-हिंसन्तौ। नितोशतिर्वधकर्मा तत्कारिणौ नैतोशौ–योद्धारौ ताविव तुर्फरी–त्वरमाणौ, हिंसकाविति वा। पर्फरीका–शोभायुक्तौ। उदन्यतिः पिपासार्थः, तत्र जातौ, उदन्यजौ प्रावृषिजौ चातकौ जेमना–उदकवन्तौ जेमशब्दात्पामादिविहितो मत्वर्थीयो नप्रत्ययः। तौ यथोदकलाभेन मत्तौ भवतः तथा यौ मदेरू, तौ मे जरायुमरायु जरामरणधर्मकमर्थाच्छरीरमजरममरं च कुरुतामिति वाक्यशेषः।

तेनैवं वाक्यार्थो यावङ्कुशचोदिताविव कुञ्जरौ सर्वतो जृम्भमाणौ शत्रूणां निहन्तारौ भवतः, हिंस्राविव च हिंसनव्यापृतौ दाक्ष्येण च शोभेते चातकाविव चोदकलाभेन मदात्प्रीयेते, तावुभावपि जरामरणयोः कुपिताविवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्तामिति।

"अम्यक्सा त" इत्यगस्त्यार्षं तेन किलेन्द्रोऽमरत्वं धनं प्रार्थितः तथा चोपरितन्यामृचि "त्वं तू न इन्द्र तं रयिं दा" इति श्रूयते। तदेवास्यामृच्यनुषङ्गेण द्रष्टव्यम्। इयं च छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे विनियुक्ता। तत्राम्यगित्यमाशब्दोऽव्ययं साहित्यवाची। यतोऽमात्य इति भवति, सहाञ्चतीत्यम्यक्सा त इन्द्र, ऋष्टिरायुधविशेषः पाणिक्षेप्यः, अस्मे इति—अस्माकं सनेमि—पुराणम्। अम्वं—तोयं मरुतो जुनन्ति—क्षिपन्ति। अग्निश्चिदित्युपमार्थो हि स्म, अतसे–शुष्कतृणे शुशुक्वान्—दीप्तवान् आप इव द्वीपं दधति पयांसि—अन्नाद्यानि। वाक्यार्थे तु प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पदानां सम्बन्धः। तत्र सेत्येतदाक्षिप्तो यच्छब्दस्तृतीयपादे कल्प्यते। शुष्कतृणे

दीप्तोऽग्निरिव या लक्ष्यते तव सहचारिणी नित्यमृष्टिस्तव वल्लभा सा, तावत्त्वत्प्रसादेनास्माकमेव। येऽप्यमी पुराणं जलं वृष्टिरूपेण विक्षिपन्त आप इव द्वीपमन्नाद्यानि धारयन्ति तव प्रियसखास्तेऽप्यस्माकमेव स त्वमेवं साधारणद्रव्यः सन्नमरत्वं न केवलं देहि।

एकया प्रतिधाऽपिबदितीन्द्रस्यैव स्तुतिः। एकेन प्रयत्नेनापिबत्साकं—यौगपद्येन, सरांसि—पात्राणि सोमस्य पूर्णानि इन्द्रः काणुका—कामयमानः-कामुकशब्दस्य च्छान्दसो वर्णव्यत्ययः आकारस्तु विभक्त्यादेशः।

अथ वा कान्तकानीत्यादयो निरुक्तोक्ताः काणुकाशब्दविकल्पा योजनीयाः। तदेवं सर्वत्र केनचित्प्रकारेणाभियुक्तानामर्थोत्प्रेक्षोपपत्तेः प्रसिद्धतरार्थाभावेऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम् ॥ ४१ ॥

न्या० सु० —सूत्रव्याख्यानार्थं विद्यमानेऽपीति भाष्यं व्याचष्टे—यस्त्विति। लोकाप्रयुक्तपदार्थस्य केनापि ज्ञातुमशक्यत्वात्कथं सत्त्वावधारणेत्याशङ्क्य निगमेत्यादिभाष्यकृतोक्तम्, तद्व्याचष्टे—तत्र चेति। अर्थः—सामर्थ्यम्, पदान्तरसामानाधिकरण्याधियोग्यता, प्रकरणम् प्रक्रमः। तयोः सर्वत्र लोकवेदयोरर्थज्ञानोपायत्वं प्रसिद्धम्। सूक्तं देवताज्ञानमव्यक्तलिङ्गायामृचि देवताज्ञानहेतुत्वेनार्थज्ञानोपायः। आर्षज्ञानस्याहं मनुरभवं सूर्यश्चेत्यादावस्मदर्थज्ञानहेतुत्वेनार्थज्ञानोपायत्वम्। निगमादेरपि प्रसिद्धमेवार्थज्ञानोपायत्वम्। सूक्तदेवतादिस्मरणाददर्शनाच्चैषामर्थज्ञानोपायत्वं विदुषामभिमतमिति निश्चीयत इत्याह—तेषां हीति।

ननु स्वार्थज्ञानस्योपायत्वे भूतांशो नाम ऋषिर्जरामरणनिरासायाश्विनौ तुष्टावेत्येवमार्षस्योपाख्यानादनित्यसंयोगेऽनित्यत्वं वेदस्यापद्येत, अत आह—अथैवेति। ननु लोपविकारादीनामुपायमात्रत्वेनापारमार्थिकत्वात्पदानित्यत्वापादकत्वन्न जातम्, आर्षे तु कथमित्याशङ्क्यार्षस्याप्युपायत्वेनाङ्गीकारेण तत्परिहारमाह—तत्रेति। पारमार्थिकत्वेऽपि वा मन्त्राणामृषिकृतत्वाभावात्प्रयोगस्य च प्रवाहरूपेण सर्वदा सद्भावान्न वेदानित्यत्वापादकत्वमित्याह—अथ वेति।

ननु वृद्धव्यवहारावगतपदार्थानुसारेणैव मन्त्रार्थावगतिसम्भवान्नास्मदादीनां ऋषिप्रत्यक्षबलेन मन्त्रार्थप्रतिपत्तिरित्याशङ्क्याह—प्रत्ययेति। आर्षस्मरणादेरदर्शनात् ऋषिसम्प्रदायानुसारेणैव मन्त्रार्थतत्त्वावधारणं भवति नान्यथेति भावः।

सृण्येव जर्भरी तुर्फरीतु नैतो शेव तुर्फरीपर्फरीका उदन्यजेव जेमना मदेरुता मे जरास्वजरं मरायु' इति मन्त्रार्थतत्त्वावधारणायार्षोपाख्यानं दर्शयति—तत्रेति। अस्या ऋचः सूक्तादित्वाभावात् उभा उ नूनं तदिद्दर्थयेथे इत्यादिनैकादशर्चेन सूक्तेन सृण्येवेत्यादिनोपमानरूपेणाश्विनौ स्तुतवानिति व्याख्येयम्। भाष्यकारेण च द्विवचनान्तत्वादश्विनोरभिधानानीत्युक्त्वा मित्रावरुणादिष्वपि द्विवचनोपपत्तेः कथमश्विपरत्वनिर्णय इत्याशङ्कानिराकरणायाश्विनाः काममित्युक्तम्। तद्व्याचष्टे—भूतांश इति। मन्त्रव्याख्यापरतया देवताभिधानानि चेत्यादिभाष्यं व्याख्यातुमाह—तत्रेति। चत्वारः पादा द्वौ दन्तौ शुण्डा

च पुच्छं वेत्यष्टावङ्गानि कस्यचिज्जन्तोः पिपासायामनुत्पत्तेस्तत्र जाताविल्युक्तमाशङ्क्य चातकयोः पिपासाकालः प्रावृडिह लक्ष्यत इति प्रावृषि जाताविल्युक्तम् । कथं जेमनशब्देनोदकवत्त्वमुच्यत इत्याशङ्क्योदकवाचिनो जेमशब्दस्य पामादिषु पाठाल्लोमादिपामादिपिच्छादिभ्यः शनेलच इति यथासंख्यन्यायेन पामादिभ्यः परो विहतो नप्रत्ययो जेमशब्दात्परो भवतीत्युक्तम् । मे इतिषष्ठ्याः शरीरसम्बन्धजनितत्वं दर्शयितुं मे शरीरमित्युक्तम् । पदार्थान्व्याख्याय वाक्यार्थं व्याचष्टे—तेनेति ।

एवं सर्वत्रेति भाष्येणोत्तरयोरपि मन्त्रयोः सूचितां व्याख्यां वक्तुम् ।

अम्यक्सात इन्द्रऋषिरस्मे सनेम्यश्वं मरुतो जुनन्ति ।

अग्निश्चिद्धिस्माऽतसे शुशुक्वानापोन द्वीपं दधति प्रयान्सीत्येतस्यां ऋच्यार्षोपाख्यानं तावद्दर्शयति-अम्यगिति मरुत्वद्गुणकस्येन्द्रस्य देवतात्वं वक्तुं विनियोगं दर्शयति—इयं चेति । छन्दोमसंज्ञकानां त्रयाणामह्नां मध्ये द्वितीयेऽह्नि मरुत्वतीयसंज्ञके शस्त्रे 'महसि त्वमिन्द्र यत एतानीति सूक्तमिति श्रुत्या विनियुक्तेत्यर्थः । पदार्थांस्तावद्व्याचष्टे तत्रेति अकारस्य छान्दसवर्णव्यत्ययेनेकारादम्यगिति रूपसिद्धिः चिच्छब्दस्येवार्थे प्रयोगादुपमानार्थत्वम् । हिस्मेतिपदयोः पदपूरणार्थत्वादर्थाकथनम् । नकारस्येवार्थत्वकथनायाप इवेत्युक्तम् । द्वीपं पुलिनम् । वाक्यार्थं व्याख्यातुमाह—वाक्यार्थे त्विति । द्वीपमन्नाद्यानि चेति चकारोऽत्र कल्पः ।

एकया प्रतिधापि वत्साकं सरांसि त्रिशतं इन्द्रः सोमस्य काणुकेत्यृचं व्याचष्टे—एकयेति । कान्तं-प्रियम्, कमुदकं सोमं रसात्मकं येषु तानि कान्तकानि । सर्वत्र शब्दसूचितां मन्त्रान्तरव्याख्यां दर्शयित्वा भाष्यं व्याचष्टे—तदेवमिति ॥ ४१ ॥

भा० प्र०—सतः = विद्यमान अर्थ का, अविज्ञानं = न जानना, परम् = मूल । 'स्तृण्येव' इत्यादि मन्त्र का भी अर्थ है, किन्तु वह दुर्बोध होने से साधारण जन के मध्य में अप्रचलित होने पर पूर्व पक्षी ने नहीं जाना ।

आशय यह है कि 'स्तृण्येव जर्भरी, अम्यक् सा' इत्यादि मन्त्र का अर्थ ही नहीं है—इस प्रकार की आपत्ति की गई है, वह सङ्गत नहीं है । क्योंकि इन मन्त्रों का भी अर्थ होता है । किन्तु यह प्रमाद आलस्य आदि के कारण साधारण लोगों को अवगत नहीं होता है । क्योंकि निगम, निरुक्त एवं व्याकरण की पर्यालोचना कर इसका अर्थ जानना चाहिए । इन मन्त्रों का पूर्णरूप और अर्थ निम्नलिखित है ।

स्तृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरु ता मे जरायु मरं मरायु ॥

—(ऋग्वेद १०।१०६।६)

स्तृण्या इव = अङ्कुश के द्वारा ताडन के योग्य दो गजों के समान, जर्भरी = विक्रम दिखाने वाले, तुर्फरी = हिंसा करने वाले, नैतोशा = शत्रु को वध करने वाले गजद्वय

के समान, तुर्फरी = त्वरायुक्त अर्थात् शीघ्रता से शत्रु का वध करने वाले, पर्फरीका = शोभायुक्त, उदन्यजा इव = वर्षाकालीन चातकद्वय के समान, जमना = जलयुक्त अर्थात् जल प्राप्त कर, मदेरु = मत्त अर्थात् आनन्दित, ता = वे अश्विनीकुमार, जरायुमरायु = जरामरणशील अर्थात् शरीर, अजरम् = जराहीन (करे)। स्तृण्या, नेत्याशा, उदन्यजा, जेमवा, एवं ता में द्विवचन, औ के स्थान में वैदिक नियम के अनुसार आ हो गया।

आशय यह है— अङ्कुश से प्रेरित दो हाथियों के समान जो अतिशय पराक्रम को व्यक्त कर शीघ्रतायुक्त हाथ से शत्रुओं का नाश कर कुशलता के कारण शोभायमान हो रहे हैं, एवं चातक जिस प्रकार जल को प्राप्तकर आनन्दित होता है, वे भक्तों के प्रति उसी प्रकार प्रसन्न होते हैं, वे अश्विनीकुमारद्वय हमारे इस जरामरणशील शरीर को अजर और अमर करें। भूतांश नामक ऋषि इस मन्त्र से अश्विनीकुमारद्वय की स्तुति कर रहे हैं।

अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यमूं मरुतो जुनन्ति।
अग्निश्चिद्धि स्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥ (१।१६९।३)

अम्यक् = सहचारी, सा = वह प्रसिद्ध, ते = तुम्हारा, इन्द्र = हे इन्द्र, ऋष्टिः = अस्त्र विशेष या वस्त्र, अस्मे = हम लोगों का, सनेमि = पुराण (सञ्चित) अमूं = जल, मरुतः = वायु, (इन्द्र का वाहन पर्जन्य) जुनन्ति = निक्षिप्त करता है या वृष्टि करता है, अग्निःचित् = अग्नि के समान, हि स्मे = पादपूणार्थक अव्यय, अतसे = शुष्कतृणे, शुशुक्वान् = दीप्यमान, आपः = जल, द्वीपम् = द्वीप को, दधति = धारण करता हैं, प्रयांसि = अन्न (शस्यादि)।

आशय यह है—हे इन्द्र ? शुष्कतृणपुञ्ज में प्रदीप्त अग्नि जैसे शोभा प्राप्त करती है, तुम्हारा नित्य सहचारी वज्र, वह भी उसी रूप में वाधारहित हो शोभा प्राप्त करता है, एवं वह तुम्हारा अत्यन्त प्रिय वज्र तुम्हारी कृपा से हमलोगों का उपकारक है। और वह आकाश में चिर सञ्चित जल को वृष्टि के रूप में निक्षिप्तकर जल जैसे द्वीप को धारण करता है, वैसे ही हमलोगों के अन्न (शस्यादि) को धारण करता है। तुम्हारा प्रिय मित्र मरुत् अर्थात् पर्जन्य हमलोगों का ही उपकारक है। इस मन्त्र के ऋषि अगस्त्य है, इस मन्त्र से उन्होंने इन्द्र की स्तुति की है ॥ ४१ ॥

## उक्तश्चानित्यसंयोगः ॥ १.२.४२ ॥

**शा० भा०—परं तु श्रुतिसामान्यमात्रमित्यत्रेति ॥ ४२ ॥**

भा० वि०—अनित्यसंयोगप्रसङ्गं परिहरति—**उक्तश्चेति**। प्रत्युक्तः-परिहृत इत्यर्थः, कुत्र परिहृत इत्यपेक्षायां पूरयन् व्याचष्टे—परमिति। एवं श्रुतिसामान्यं यजमानः प्रार्थयिता इन्द्रश्च प्रार्थ्यमानोऽन्यम (अनित्याः) एव कीकटाः कृपणाः

प्रमगन्दः कुसीदवृत्तिः प्रकर्षेण धनं मामागमिष्यतीति एवं ददातीति प्रमगन्द., नीचाशाखः = षण्ढः तदीयं धनं नैचाशाखं तत्सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृत्तेः तदस्माकमाहरेति ॥ ४२ ॥

त० वा०—परं तु श्रुतिसामान्यमात्रमिति । यजमानस्तावत्प्रार्थयिता, इन्द्रश्च प्रार्थ्यमानः सर्वदाऽस्ति । कीकटा नाम यद्यपि जनपदाः तथाऽपि नित्याः ।

अथ वा सर्वलोकस्थाः कृपणाः कीकटाः । प्रमगन्दः—कुसीदवृत्तिः । स हि प्रभूततरमागमिष्यतीत्येवं ददाति । नीचाशाखः—षण्ढः तदीयं धनं नैचाशाखम् । तच्च सर्वमयज्ञाङ्गभूतम्, तेषां कर्मण्यप्रवृत्तेः तदस्माकमाहरेति । शेषं गतार्थम् ॥ ४२ ॥

न्या० सु०—यस्त्वनित्यसंयोगः शङ्कितः, स परमं तु श्रुतिसामान्यमित्यत्र सूत्रे प्रत्युक्त इति । सूत्रव्याख्यानार्थं परं त्विति भाष्यं व्याचष्टे—परमिति । श्रुतिसामान्यमात्रतां दर्शयति—यजमानस्तावदिति । प्रमगन्दनैचाशाखशब्दयो राजनगरविशेषसंज्ञत्वे सत्यनित्यसंयोगापत्तेरन्यथा व्याख्यानम् ॥ ४२ ॥

भा० प्र०—उक्तः = कह दिया गया है, अर्थात् दे दिया गया है । च = और, अनित्यसंयोगः = अनित्य संयोग अर्थात् अनित्य या नश्वर अर्थ के साथ वाचकता संयोग । जन्ममरणशील अर्थ के साथ मन्त्र का वाचकता सम्बन्ध रहने से मन्त्रार्थ विवक्षित होने पर वह अनित्य है, अतः अप्रमाण होता है, इस प्रकार की आपत्ति का निराकरण किया है अर्थात् पूर्वपाद में उसका उत्तर दे दिया गया है ।

आशय यह है कि—मन्त्रों का स्वार्थ विवक्षित नहीं है, यह प्रतिपादन करने के लिए पूर्वपक्षी ने अनित्यसंयोगात् (१।२।११) इस सूत्रांश में 'किं ते कृण्वन्ति कीकटेषु गावः' इत्यादि मन्त्रों के दृष्टान्त में आपत्ति का उत्थापन कर कहा है कि मन्त्रों का स्वार्थ विवक्षित होने पर 'कीकट' नामक जनपद, नैचाशाख नामक नगर एवं प्रमगन्द नामक राजा आदि अनित्य जन्ममरणशील अर्थ के वाचक हैं, अतः मन्त्र अनित्य अर्थात् पौरुषेय एवं अप्रमाण हो जायगा, किन्तु यह कथन ठीक नहीं है, क्योंकि इन सभी मन्त्रों में जन्ममरणशील अनित्य वस्तु के विषय में नहीं कहा गया है । "परं तु श्रुतिसामान्यमात्रम्" (मी० १।१।३१) इस सूत्र में प्रतिपादन किया गया है । वस्तुतः वेद में जिस रूप में कहा गया है, उसके अनुरूप घटना हुई थी यह कहने पर भी कोई असम्भव बात नहीं कही गई है, क्योंकि आज के समय में भी इस प्रकार की अनेक घटनाएँ घटित होती हैं, जो किसी की उक्ति या भविष्यवाणी के अनुरूप रहती हैं ।

आचार्य कुमारिलभट्ट ने तन्त्रवार्तिक में कीकट शब्द का अर्थ निर्देश करते हुए लिखा है कि कीकट = कृपण । प्रमगन्द = कुसीदवृत्ति । नीचशाख = षण्ढ, (नपुंसक) उसका धन नैचाशाख है, अर्थात् नपुंसक का धन । इन अर्थों को कहने वाले इन शब्दों का जनन-

मरणशील मनुष्य के साथ सम्बन्ध नहीं है । इसलिए मन्त्र के द्वारा जन्ममृत्युयुक्त मनुष्य की चर्चा नहीं की गई है, अतः अप्रमाण नहीं हैं ॥ ४२ ॥

## लिङ्गोपदेशश्च तदर्थवत् ॥ १.२.४३ ॥

**शा० भा०—आग्नेय्याऽग्नीध्रमुपतिष्ठत इति विधानाद्विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः। यदि तेऽग्निप्रयोजनाः, ततस्त आग्नेय्या, नाग्निशब्दसंनिधानात् ॥ ४३ ॥**

भा० वि०—एवं तदर्थशास्त्रादीनि पूर्वपक्षलिङ्गानि परिहृत्य सिद्धान्ते लिङ्गत्रयं दर्शयितुं सूत्रत्रयं तेषां मन्त्राणामर्थो यथास्ति तथा लिङ्गोपदेशो भवति इत्याद्यं सूत्रं व्याचष्टे—**आग्नेय्येति, लिङ्गेनेति**। अग्निना देवतया लिङ्गेनेत्यर्थः।

नन्वविवक्षितार्थत्वेऽप्यग्निशब्दसन्निधानमात्रेणाग्निलिङ्गत्वमुपपत्स्यते तत्राह—**अग्नीति**। तत्प्रयोजनत्वं तत्प्रकाशकत्वं त्वां हि मन्द्रतममर्कशोकैरित्यादावनेकदेवतापदप्रयोगेऽप्येकवेद्यत्वव्यपदेशादित्याशयः ॥ ४३ ॥

त० वा०—आग्नेय्येत्यग्निना देवतया, लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थार्हतां मन्त्रस्य द्योतयति। देवतातद्धितो ह्येष स्मर्यते, यं चार्थप्राधान्येन मन्त्रः प्रकाशयति, सा तस्य देवता, नाभिधानमात्रेण। एकदैवत्येऽपि मन्त्रेऽनेकदेवतान्तरपदप्रयोगे सति तद्दैवत्यव्यपदेशाभावात्। प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ॥ ४३ ॥

न्या० सु०—तदर्थशास्त्रादीनि पूर्वपक्षलिङ्गानि परिहृत्य, सिद्धान्ते लिङ्गत्रयं दर्शयितुं सूत्रत्रयम्। तत्र तेषां मन्त्राणामर्थो यथाऽस्ति, तथा लिङ्गोपदेशो भवतीति, सूत्रव्याख्यानार्थमाग्नेय्येति भाष्यं व्याचष्टे-आग्नेय्येति। लिङ्गशब्दस्य सामर्थ्ये मीमांसकानां प्रसिद्धत्वात्तद्धितप्रतिपादिताग्निदेवत्यत्वकल्पितं देवताभिधानसामर्थ्यं लिङ्गशब्देन विवक्षितमिति व्याख्यानान्तरं लिङ्गशब्दस्योक्तम्। तृतीया चेत्थंभूतलक्षणार्था।

नन्वविवक्षितार्थत्वेऽप्यभिधानमात्रेणाग्निलिङ्गत्वमुपपत्स्यते, अत आह—**देवतेति**। ननु देवतात्वमप्यभिधानमात्रेण सेत्स्यत्यत आह—**यं चेति**। एकदेवत्ये मन्त्रे त्वां हिमं द्रुत ममर्कशोकैरित्यादावनेकेन्द्रवाय्वादिदेवतान्तरपदप्रयोगे सत्यप्यनेकदेवत्यव्यपदेशाभावादित्यर्थः। नन्वस्तु नामाऽत्राऽग्नेः प्राधान्येनाभिधानम्, तात्पर्यं तु नास्तीत्याशङ्क्याह **प्राधान्येति** ॥४३॥

भा० प्र०—लिङ्गोपदेशः = लिङ्ग के द्वारा अर्थात् अर्थ के ज्ञापक साधन से उपदेश अर्थात् विधि है। च = क्योंकि, तत् = वह अर्थात् मन्त्रवाक्य, अर्थवत् = सार्थक या विवक्षित अर्थ को कहने वाला है। क्योंकि, श्रुतियों में मन्त्र का लिङ्ग अर्थात् अर्थ के ज्ञापक हेतु से कर्म की विधि कही गई है, अतः मन्त्रवाक्य अर्थवान् है अनर्थक नहीं है, वरन् सार्थक या विवक्षितार्थक है।

आशय यह है कि पूर्वकथित सूत्रों में यह आपत्ति दी गई है किन्तु प्रकृत में सिद्धान्त के अनुकूल युक्तियों का प्रदर्शन किया जा रहा है—लिङ्गोपदेशः इत्यादि। मन्त्र विवक्षित अर्थ को कहने वाले हैं, क्योंकि, स्थल-स्थल में मन्त्र के अर्थ का उल्लेख कर कर्म की विधि कही गई है। जैसे "आग्नेय्या आग्नीध्रमुपतिष्ठते", आग्नेयो ऋचा के द्वारा आग्नीध्र अर्थात् आग्नीध्र का जो स्थान उसका उपस्थान = संस्कार या पूजा करनी चाहिए—इस प्रकार की एक विधि है, इस स्थल में "अग्ने नय" आदि मन्त्र से उपस्थान करें—यह न कह कर आग्नेयी ऋचा के द्वारा करें—यह कहा गया है। अग्नि जिसका देवता है वही आग्नेयी ऋक् है। इस मन्त्र में अग्नि का ही विषय प्रधान रूप से वर्णित है या नहीं यह अवगत नहीं होता है, इसलिए, यह कहना पड़ेगा कि मन्त्र का अर्थ विवक्षित है। अतः मन्त्र अनर्थक नहीं है, अपितु विवक्षित अर्थ को कहने वाले हैं—"आग्नेय्या अग्नीध्रमुपतिष्ठते" इत्यादि विधि ही इसका लिङ्ग या ज्ञापक है। ॥ ४३ ॥

## ऊहः ॥ १.२.४४ ॥

**शा० भा०—ऊहदर्शनं च विवक्षितार्थानामेव भवति। किमूहदर्शनम्? 'न पिता वर्धते न मातेति। अन्ये वर्धन्त इति गम्यते। प्रत्यक्षं कौमारयौवनस्थाविरैर्वर्धन्ते मात्रादयः। शब्दो न वर्धत इति ब्रूते। का पुनः शब्दस्य वृद्धिः? यद्द्विवचनबहुवचनसंयोगः ॥ ४४ ॥**

भा० वि०—ऊह इत्येतत्पूर्वसूत्राच्चशब्दमर्थवच्छब्दं चादाय व्याचष्टे—**ऊहदर्शनं चेति।**

ननूहः कार्यं इति वचनादर्शनात् किमूहदर्शनमिति पृच्छति—**किमिति,** उहप्रतिषेधकवाक्यस्य प्राप्तिमन्तरेणायोगात् मात्रादिविशेषोपादानेन शब्दान्तरे प्रतीतेश्चास्त्येवोहदर्शनमित्याह—**न मातेति।**

ननु मात्राद्यर्थस्यैव वृद्धिप्रतिषेधात् कथं शब्दान्तरोहप्रापकत्वं तत्राह—**प्रत्यक्षमिति।** अर्थवृद्धेः प्रत्यक्षत्वेन प्रतिषेद्धुमशक्यत्वाच्छब्दवृद्धेरेव प्रतिषेध इत्यर्थः।

ननु वर्णेषु स्थौल्यादेरसम्भवात् कथं वृद्धिरिति पृच्छति—**का पुनरिति।** उत्तरं—**यद्द्विवचनेति।** अर्थाधिक्येन द्विवचनादिसंयोग एव वृद्धिः, न पुनः स्थौल्यादिरिति भावः ॥ ४४ ॥

त० वा०—ऊहदर्शनं 'न माता वर्धत' इति। अर्थे च पुष्ट्यादिवृद्धेः प्रत्यक्षत्वात्प्रतिषेधासंभवादानर्थक्यात्तदङ्गेष्विति शब्दे विज्ञायते। तत्रापि स्थौल्यादिवृद्ध्यसंभवादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः। स

चार्थपरत्वे सर्वपशुविशेषणमात्राद्युपादित्सायां सत्यामवकल्पते। या चान्यपदवृद्धिसद्भावप्रतीतिरियं च अर्थपरत्वेऽवकल्पत इति। यद्यपि मातृप्रभृतीनां पारार्थ्यात्संबन्धिभेदादेव च भेदसिद्धेरनूह्यत्वं सदेवानुवदति; तथाऽपि न्यायावगतानूहसंकीर्तनान्न्यायरहितेषूहसंप्रत्ययात्प्रकृतौ विवक्षितार्थता विज्ञायते। अन्यथा तु तददृष्टम् विकृतैरेव साध्येत। तथा यद्यप्यन्यदैवत्यः पशुराग्नेय्येवमनोता कार्येत्यूहप्राप्तिदर्शनम्, एवमुस्राणां वपानामित्येवमादीनां यथार्थमूहितानामेवाऽऽम्नानमपि विवक्षितार्थं भविष्यति। इतरथा प्राकृतपदत्यागे, अन्यकल्पने चादृष्टद्वयं कल्प्येत ॥ ४४ ॥

न्या० सु०—भाष्यकारेणोहश्च तदर्थवदिति पूर्वसूत्रगतपदद्वयानुषङ्गेणेदं सूत्रमूहदर्शनं चेत्येनेन व्याख्याय वेदे क्वचिदूहः कार्य इत्यश्रवणात्किमूहदर्शनमिति पृष्टे न माता वर्द्धते न पितेत्यूहप्रतिषेधस्यैवाप्राप्तप्रतिषेधायोगेनोहप्रापकत्वात् मात्रादिविशेषोपादानसामर्थ्येन वा शब्दान्तरोहप्रतीतेरूहदर्शनमित्युत्तरे दत्ते, मात्राद्यर्थस्येह वृद्धिप्रतिषेधात्कथं शब्दोहप्रापकत्वमित्याशङ्कानिराकरणार्थं वृद्धेः प्रत्यक्षत्वेन प्रतिषेद्धुमशक्यत्वाच्छब्दवृद्धिप्रतिषेध इति प्रत्यक्षमिति भाष्येणोक्तम् तद्व्याचष्टे—ऊहदर्शनमिति। शब्दवृद्धेरपि वर्णान्तरोपजननादिनोपपत्तेः। तस्यार्थपरत्वेऽपि वचनमन्तरेणाप्तेर्न सिद्धान्तिलिङ्गत्वमिति प्रतिपादनार्थं का पुनरिति भाष्येण पृष्ट्वा, यत् द्विवचनबहुवचनसंयोग इत्युक्तम्। तद्व्याचष्टे—तत्रापीति। वर्णान्तरोपजनने पदान्तरत्वापत्तेरपदत्वापत्तेर्वा तत्पदवृद्ध्यसम्भवात्स्थौल्यादेश्च नादधर्म्मत्वेन वर्णेष्वसम्भवाद् द्विवचनबहुवचनान्तत्वेनाधिकार्थद्वारा शब्दवृद्धिरूहात्मिकेह प्रतिषिद्ध्यत इत्यर्थः।

ऊहदर्शनस्य सिद्धान्तलिङ्गत्वं भाष्योक्तमुपपादयति—स चेति। प्रसक्तत्वादिति भावः। मात्रादिशब्दोहदर्शनस्य सिद्धान्तलिङ्गत्वमुपपाद्य, शब्दान्तरोहदर्शनस्योपपादयति—या चेति। अर्थपरत्वे च कल्प्यते इत्यनुषङ्गः। नन्विडानिगदगतयज्ञपतिशब्दवन्मात्रादीनां पारार्थ्यादपारार्थ्येऽपि चैकैकमात्रादिसम्बन्धे पशुभेदोऽपि मात्रादिशब्दोहस्यानाशङ्क्यत्वान्मात्रादिभेदेऽप्येकपशुसंबन्धाभावात् संबन्धिभेदेनैव भेदसिद्धेः न्यायादेवानूहावगतेः प्रतिषेधायोगात्कथं तद्बलेनोहप्राप्तिरत आह—यद्यपीति। न्यायसिद्धानुवादस्यापि प्रयोजनापेक्षायां न्यायरहितेषूहप्राप्तिरेव प्रयोजनमवसीयत इति भावः। अविवक्षितार्थत्वेन सिध्येदित्याह अन्यथेति।

ऊहदर्शने स्वयमुदाहरणान्तरमाह—तथेति। त्वं ह्यग्ने प्रथमो मनोतेति मनोतासूक्तस्य वायव्ये पशावतिदेशप्राप्तस्योहः प्रसक्तोऽनेन वचनेन वार्यते। उदाहरणान्तरमाह—एवमिति। गवादिपशुके अतिदेशप्राप्तस्य 'छागस्य वपाया मेदसो ऽनुब्रूहीति मन्त्रस्योहप्रसक्तौ उस्रादिपदयुक्तस्यार्थपरत्वे छागपदस्थानेऽस्य प्रयोगपाठः अपर्यायान्तरनिवृत्त्यर्थः अर्थवान् भविष्यतीत्यर्थः। नन्वर्थपरत्वेऽप्युस्रादिपदनियमस्यादृष्टार्थपरिहारात् केन विशेषेणाविवक्षितार्थता निराक्रियते इत्याशङ्क्य अविवक्षितार्थे कल्पनागौरवमाह—इतरथेति ॥ ४४ ॥

**भा० प्र०—ऊहः = पद का अध्याहार मन्त्र का अर्थ विवक्षित है—इसका ज्ञापक है।**

आशय यह है—मन्त्र का अर्थ विवक्षित है, इसका कारण 'ऊह' है। प्रकृतिभूत कर्म में जो मन्त्र पढ़े गये हैं, विकृतिभूत कर्म में भी स्थल विशेष में उसी मन्त्र के पद की विभक्ति, वचन आदि का परिवर्तन कर पाठ किया गया है। क्योंकि, प्रकृति के अनुरूप पाठ करने पर वह मन्त्र विरुद्ध अर्थ का प्रतिपादन करेगा। जैसे प्रकृतिभूत एक पशु से सम्पन्न होने वाले यज्ञ में पशु के संस्कार के समय में "अन्वेनं माता मन्यतामनु पिता नु भ्राता" (मै० सं० ४।१३।४) अर्थात् इसकी माता इसको अनुमति दे, इसका पिता एवं भाई अनुमति दे। किन्तु विकृतिभूत अनेक पशुओं से साध्य याग में 'एनम्' के स्थान पर एनौ पद 'एनान्' पद देकर अन्वेनम् के स्थान पर 'अन्वेनौ' अन्वेनान् करना पड़ेगा। यह परिवर्तन करना ही ऊह है। यह " न पिता वर्द्धते, न माता", इस ब्राह्मण वाक्य से निर्णय होता है। क्योंकि, यह ब्राह्मणवाक्य माता पिता आदि की वृद्धि अर्थात् इन पदों के आगे द्विवचन और बहुवचन के प्रयोग का निषेध करता है। अतः, अवशिष्ट 'एनम्' इस पद में द्विवचन और बहुवचन के प्रयोग की सूचना देता है। यदि मन्त्र का अर्थ विवक्षित न होता तो 'एनम्' आदि में 'ऊह' का कोई प्रयोजन ही नहीं रहता, किन्तु मन्त्र का अर्थ विवक्षित है, इसलिए विकृति स्थल में ऊह किये विना मन्त्र विरुद्ध अर्थ का प्रतिपादक होगा, अतः विकृति में परिवर्तन (ऊह) आवश्यक है। ऐसा मानने पर मन्त्र क्रिया-समवेत अर्थ का प्रकाशक होता है, इसलिए बाधा न होने पर मन्त्र का स्वार्थ अविवक्षित नहीं हो सकता है। ऊह कहाँ-कहाँ कर्तव्य है, इसका विशेष विचार नवम अध्याय में किया गया है ॥ ४४ ॥

## विधिशब्दाश्च ॥ १.२.४५ ॥

**शा० भा०—विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति। शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाऽऽहेति सिद्धान्ते युक्तिः। मन्त्राधिकरणम् ॥४५॥**

**इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः।**

भा० वि०—विधिशब्दाश्चेत्येतदपि तदर्थवदिति पदानुषङ्गेण व्याचष्टे—**विधिशब्दाश्चेति।** ब्राह्मणमित्यर्थः, कोऽसौ विधिशब्द इत्यपेक्षायां हिमाशब्दव्याख्यानपरं ब्राह्मणमुदाहरति—**शतमिति।** तस्माद्विवक्षितवचना मन्त्रा इति सिद्धमिति भावः ॥ ४५ ॥

॥ इति श्रीमन्नारायणामृतपूज्यपादशिष्यदेवेन्द्रसरस्वत्युपनामधेय-
श्रीगोविन्दामृतमुनिविरचिते धर्ममीमांसाभाष्यविवरणे
प्रथमाध्यायस्य द्वितीयः पादः ॥ १।२ ॥

त० वा०—विधिरेव च ब्राह्मणाभिधः तत्र तत्र पर्यायैरवयवान्वाख्याननिर्वचनादिभिश्चार्थप्रकाशनपरत्वं दर्शयति। अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात्। तस्माद्विवक्षितवचना मन्त्रा इति सिद्धम् ॥ ४५ ॥

इति मन्त्राधिकरणम् ॥ ४ ॥

इति श्रीमद्भट्टकुमारिलस्वामिविरचिते धर्ममीमांसाभाष्यव्याख्याने तन्त्रवार्तिके प्रथमस्याध्यायस्य द्वितीयः पादः ॥

न्या० सु०—भाष्यकारेण विधिशब्दश्च तदर्थवदिति पूर्वसूत्रगतपदानुषङ्गेण सूत्रं व्याख्याय 'शतं हिमा' इति मन्त्रगतहिमाशब्दव्याख्यानार्थं 'शतं वर्षाणी'त्यर्थवाद उदाहृतः। तत्र विधिशब्दानुपपत्तिमाशङ्क्याह—विधिरेवेति। सिद्धान्तमुपसंहरति—तस्मादिति ॥ ४५ ॥

॥ इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिमाधवभट्टात्मजभट्टसोमेश्वरविरचितायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां तन्त्रवार्तिकटीकायां प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥

भा० प्र०—विधिशब्दाः = विधिका अर्थात् ब्राह्मण का शब्द अर्थात् मन्त्रार्थ का व्याख्यारूप शब्द, 'च' एव है, ब्राह्मण वाक्य में मन्त्र की व्याख्या है, इसलिए, मन्त्र का अर्थ विवक्षित है।

आशय यह है कि विधिशब्दाश्च इस हेतु के द्वारा मन्त्र का अर्थ विवक्षित है—यह कहा गया है। मन्त्र की व्याख्या रूप में ब्राह्मण में स्थित शब्द ही विधि शब्द है। जैसे "शतं हिमाः शतं वर्षाणि जीव्यासम इत्येव एतदाह" (श० ब्रा० २।३।४।२।१) इत्यादि। इस स्थल में 'शतं हिमाः' इस मन्त्र का अर्थ ब्राह्मण ग्रन्थ में भी कहा गया है—"शतं वर्षाणि"। अतः इन कारणों के विद्यमान रहने से यह मानना ही पड़ेगा कि कर्म के समय मन्त्र का अर्थ विवक्षित है ॥ ४५ ॥

॥ इति मीमांसादर्शन की भावप्रकाशिका में मन्त्राधिकरण नामक प्रथमाध्याय का द्वितीय पाद समाप्त हुआ ॥

———

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

### प्रथमं स्मृत्यधिकरणम् ।

**[ १ ] धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १.३.१ ॥ पू०**

#### शाबरभाष्यम्

शा० भा०—एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । अथेदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्त्येवमयमर्थोऽनुष्ठातव्य एतस्मै च प्रयोजनायेति । किमसौ तथैव स्यात्, न वेति । यथा अष्टकाः कर्तव्याः; गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यमित्येवमादयः । तदुच्यते । धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति । शब्दलक्षणो धर्म इत्युक्तम् चोदनालक्षणोऽर्थो धर्म इति । अतो निर्मूलत्वान्नापेक्षितव्यमिति ।

ननु ये विदुरित्थमसौ पदार्थः कर्तव्य इति कथमिव ते वदिष्यन्त्यकर्तव्य एवायमिति । स्मरणानुपपत्त्या । ह्यननुभूतोऽश्रुतो वाऽर्थः स्मर्यते, न चास्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते, पूर्वविज्ञानकारणाभावादिति । या हि बन्ध्या स्मरेदिदं मे दौहित्रकृतमिति, न मे दुहिताऽस्तीति मत्वा न जातुचिदसौ प्रतीयात्सम्यगेतज्ज्ञानमिति ।

एवमपि यथैव पारम्पर्येणाविच्छेदादयं वेद इति प्रमाणमेषां स्मृतिरेवमियमपि प्रमाणं भविष्यतीति । नैतदेवम् । प्रत्यक्षेणोपलब्धत्वाद् ग्रन्थस्य नानुपपन्नं पूर्वविज्ञानम् । अष्टकादिषु त्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावाद्व्यामोहस्मृतिरेव गम्यते । तद्यथा कश्चिज्जात्यन्धो वदेत्स्मराम्यहमस्य रूपविशेषस्येति । कुतस्ते पूर्वविज्ञानमिति च पर्यनुयुक्तो जात्यन्धमेवापरं विनिर्दिशेत् । तस्य कुतः ? जात्यन्धान्तरात् एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित्संप्रतीयुर्विद्वांसः सम्यग्दर्शनमेतदिति । अतो नाऽऽदर्तव्यमेवंजातीयकमनपेक्षं स्यादिति पूर्वपक्षः ॥ १ ॥

#### भाष्यविवरणम्

भा० वि०—सङ्गतिं वक्तुं वृत्तवर्त्तिष्यमाणार्थं वक्ति—**एवमित्यादि** । सकलस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य प्रामाण्यम्—धर्मप्रमितिहेतुत्वम्, तत्रापि कृत्स्नप्रामाण्यं चोदनोपयोगश्च प्रथमेन पादेन, द्वितीयेन मन्त्रार्थवादयोश्चोपयोग-

विशेषो दर्शितः, नामधेयानां तु विध्यन्तर्गतत्वेन सिद्धप्रामाण्यानां नामधेयत्वमात्रं प्रामाण्यप्रतिपादनाय नामधेयपादे प्रतिपादयिष्यत इति विवेकः।

**अथेदानीमिति।** भवति विचारणेति सम्बन्धः विध्यर्थवादमन्त्रात्मिकानां स्मृतीनामनिबद्धानां चाचाराणां प्रामाण्यस्य तथाविधवेदमूलकत्वेन वक्तव्यत्वात् तत्प्रामाण्यप्रतिपादनानन्तर्यं स्मृत्यादिप्रामाण्यप्रतिपादनस्य युक्तमिति वक्तुमथेत्युक्तम्, अष्टकादिनामधेयानां तु यागादिनामधेयादिवत् लोकसिद्धानां वेदमूलत्वाभावेन नामधेयत्वविचारानपेक्षत्वात् ततः प्रागेवापेक्षितप्रामाण्यप्रतिपादनानन्तरमारम्भः स्मृत्यादिप्रामाण्यविचारस्य युक्त इति वक्तुमिदानीमित्युक्तम्, न च वाच्यं चोदनैव धर्मे प्रमाणमित्यध्यायप्रतिपाद्यत्वेन प्रतिज्ञातं स्थितमेव, न च तत्स्मृत्यादिप्रामाण्याभावे परावर्तते अतः स्मृत्याचारप्रामाण्यविचारस्य कथध्यायसङ्गतिरिति, यतो धर्मजिज्ञासैव प्रमाणाधीनत्वात् प्रमेयज्ञानस्य यथा वेदप्रामाण्यविचारं प्रयोजयति, तथा स्मृत्यादिप्रामाण्यविचारमपि प्रयोजयेत् यो धर्मः स चोदनालक्षणः इति धर्मोद्देशेन विहितस्य वेदप्रामाण्यस्य यावद्धर्मभावितया स्मृत्याद्यवगतधर्मस्यापि वैदिकत्वसाधनाय वेदमूलत्वेन स्मृत्यादिप्रामाण्यविचारप्रयोगादिति भावः। प्रयोजनं तु विचारस्य स्मृत्याचारसिद्धानां अष्टकावसन्तोत्सवादीनां श्रेयस्साधनतयानुष्ठानसिद्धिः सम्प्रत्यधिकरणस्य विषयमाह—**यत्रेत्यादिना**। यस्मिन्नष्टकाः श्रेयस्साधनत्वादौ उपलभन्ते अद्यतना इत्यर्थः।

अथ च तत्रापि स्मरन्ति मन्वादयः—असावष्टकादिपदार्थः एवमितिकर्तव्यताक एतस्मै प्रयोजनाय स्वर्गादिरूपाय कर्तव्य इति स्मरन्तीत्यर्थः, स्मृत्युदाहरणमाचारस्याप्युपलक्षणम्, विषयमुक्त्वा विशयमाह—**किमिति**। असौ श्रेयस्साधनत्वरूपोऽर्थः कर्तव्य एव प्रामाणिक इति यावत्, तदनेन तद्विषयस्मृत्यादिः प्रमाणमप्रमाणं वेति संशयो दर्शितः, स च महाजनपरिग्रहान्मूलप्रमाणानुपलम्भाच्च, स्मरन्तीति सामान्यनिर्दिष्टं विषयं नैराकाङ्क्ष्याय विशेषतो दर्शयति—**यथेत्यादिना**।

ननु न मन्वादिग्रन्थोऽत्र विचार्यः, तत्प्रामाण्याप्रामाण्यविचारो हि वक्त्रवगतार्थविषयो न वेत्येवंरूपस्संभवति, स चात्र मन्वादीनामविप्रलम्भकत्वेऽर्थे बुद्धिस्थे ग्रन्थरचना नान्यथेति असन्देहादेव न समस्ति, तत्कथं मन्वादिवाक्यान्युदाहृतानीति चेत्, नैष दोषः। यस्मादप्रमाणधीमूलकृता प्रामाण्यशङ्केह निरस्यते, तेन मन्वादिवाक्यप्रामाण्याप्रामाण्यविचारो वाक्यकारणधियोऽर्थनियतानियतहेतुजत्वविचारः पर्यवसितो भवति, तेन धियः तदर्थचिन्ताविषयत्वेऽपि नावाक्यस्योदाहरणत्वविरोधः।

अत्र पूर्वपक्षमाह—**तदुच्यत इत्यादिना**। तत्र किं प्रामाणान्तरविषयविषयतया तन्मूलत्वेन। नाद्य इति सूत्रावयवं योजयति—शब्देति। धर्मस्य साध्यस्वभावस्य

न सिद्धविषयप्रत्यक्षादिगोचरत्वम्, अपि तर्हि वैदिकशब्दप्रमाणकत्वमेवेति गदितं चोदनासूत्र इत्यर्थः। अस्तु तर्हि शब्दस्यैवाष्टकादिविषयस्य स्मृतिमूलत्वमित्याशङ्क्याशब्दमिति सौत्रं पदं तद् यत्र न वैदिकं शब्दमुपलभन्त इत्यनेन व्याख्यातमित्युपेक्षितम्।

तदयमर्थः—न तावदग्निहोत्रादिवाक्यवत् प्रत्यक्षमेवाष्टकादिवाक्यमुपलभ्यते, न च कल्पयितुं शक्यते अनुपलब्धिविरोधात् नाप्यनुमानादिना तदवगन्तुं शक्यं व्याप्तिलिङ्गाद्यभावात् इति। अतः प्रमाणमूलासंभवात् भ्रान्त्यादिमूलत्वेन स्मृतेरप्रामण्यात् तदर्थो नापेक्ष्यः, तद्विषयं स्मृतिप्रामाण्यं नापेक्ष्यमिति सूत्रशेषं व्याचष्टे—**अत इति**।

ननु प्रसिद्धाप्तभावस्य मन्वादेरन्यथा संविदानस्यैवान्यथा वादानुपपत्तेः अवश्याश्रयणीयं मूलप्रमाणमिति शङ्कते—**नन्विति**। ये विदुरकर्तव्य एवायमिति व्यवहितेन संबन्धः कर्तव्य एवायमिति, ये न विदुरित्यर्थः। त एवमितिकर्तव्याक एवं फलकश्चासौ पदार्थः कर्तव्य इति कथमिव वदिष्यन्तीति शेषान्वयः। यद्यपि कर्तव्यतावादात् कर्तव्यतास्मरणमनुमीयते, तथापि न तद्यथार्थः अनुपपत्तेरिति परिहरति—**स्मरणेति**। अनुपपत्तिमुपपादयति—**नहीति**।

नन्वाप्तोपदेशमूलत्वात्स्मरणस्य न तन्मूलानुभवः, शब्दो वा कल्प्यते तत्राह—**न चेति**। स्मृतेः पूर्वरूपं विज्ञानं पूर्वविज्ञानं तस्य कारणं शब्दप्रत्यक्षादि, तदभावादित्यर्थः। तदभावमुपपादयितुं अवैदिकस्येत्याद्युक्तम्। संभवति हि मूलतया तत्कल्पना, अन्यथा तु मन्वादेरेव पुरुषत्वेन मोहादिकल्पना भागिनीति भावः। कारणाभावे कार्याभावं दृष्टान्तेनाह—**या हीति**। यदा बन्ध्या दौहित्रेण कृतमिदं कर्मेति ज्ञानं न समीचीनं मन्यते दुहितुरभावे दौहित्रस्याभावावगमात्। एवमवितथस्य पूर्वविज्ञानस्यासंभवेन स्मरणस्यापि तथाविधस्याभावनिश्चयाद्, न तन्निमित्तमुपदेशमपि यथार्थं मंस्यते मन्वादिरित्यर्थः। एवं मूलप्रमाणासंभवेन मन्वाद्युपदेशस्य प्रामाण्ये निरस्ते, स्मृत्यनुमेयश्रुतिमूलत्वेन प्रामाण्यं मन्वानश्शङ्कते—**एवमपीति**। अविच्छिन्नपूर्वपूर्वसंप्रदायपूर्वपूर्वस्मृतिमूलत्वादियं वेद इति, एषा स्मृतिः यथाप्रमाणम्, एवमियं मन्वाद्युपदेशलक्षणापीत्यर्थः, स्मृत्या श्रुत्यनुमानासंभवं मन्वानः परिहरति—**नैतदिति**। अष्टकादिस्मृतिप्रामाण्यं वेदस्मृतिप्रामाण्यवत् न संभवतीत्यर्थः, वैषम्यं विवृणोति—**प्रत्यक्षेणेति**। ग्रन्थस्य=वेदस्यादृष्टार्थेषु=प्रत्यक्षाद्यविषयेष्वर्थेषु कारणाभावान्न मन्वाद्युपदिष्टतया व्यामोहादिति।

ननु किमिति व्यामोहमूला पूर्वपूर्वस्मृतिमूलत्वादत आह—**तद्यथेति**। स्मरामीति स्मरणं ज्ञानं कर्मणि षष्ठ्यौ अमुं रूपविशेषमित्यर्थः, तस्य कुतः पूर्वविज्ञानमिति पर्यनुयुक्तो जात्यन्धान्तरादेवेति यथा व्यपदिशेदित्यन्वयः, एवं

व्यपदेशे को दोषस्तत्राह—**एवमिति**। एवं नावधारयेयुरित्येतद्विवृणोति—**सम्यगिति**। एतदिति रूपविशेषस्मरणं तादृशं चेदमष्टकादिस्मरणमूलापेक्षपूर्वपूर्वस्मरणमूलत्वस्य त्वयोक्तत्वादित्याशयः। तेन प्रमाणमूलासंभवेन निर्मूलतया स्मृत्यप्रामाण्यात् तदर्थोऽष्टकादिरपि नादर्तव्यः। ततश्चाननुष्ठेय इत्युपसंहरति—**अत इति**। पौरुषेयी हि वाक्यरचना यदर्थविषयोपलभ्यते, तदर्थविषयमेव रचयितुर्ज्ञानं कल्पयति, नार्थं निश्चाययतीत्यष्टकादिवाक्यरचनाप्यष्टकादिकर्तव्यताज्ञानमात्रमनुमापयेत्, तच्च ज्ञानं मूलप्रमाणाधीनप्रामाण्यमिति तन्मूलापेक्षायां यदि मन्वादिज्ञानमपि स्मृत्यन्तराधीनमेव कल्पयेत् ततस्तस्याः स्मृत्यन्तराधीनत्वादपर्यवसानमेव स्यात्।

अथैतद्दोषपरिहाराय मन्वादिज्ञानमूलतया श्रुतिरेव कल्पयितव्येति। तदप्यभद्रम्, ज्ञानमूलतयापि हि प्रथमं श्रुतिज्ञानमेव कल्प्यते, न श्रुतिः। तेन च श्रुतिसद्भावनिश्चयः; ततश्चार्थज्ञानवच्छ्रुतिज्ञानस्यापि मूलापेक्षायाः स्मृत्यन्तरमेव मूलतया कल्पनीयम्, तत्र च पूर्ववदपर्यवसानमेव इति श्रुतिस्वरूपानिश्चयात् न मन्वादिज्ञानस्य तन्मूलत्वनिर्णय इति न स्मृत्या श्रुत्यनुमानसंभवः, ततश्च कारणाभावात् भ्रान्तिमूलैव स्मृतिरिति अष्टकाद्यनपेक्ष्यत्वेन च तद्विषयस्मृतिप्रामाण्यस्यानपेक्ष्यत्वमनादेयत्वमभिसंहितम्।

एतेनाचाराणामप्यनन्तानामेकश्रुतिमूलत्वासंभवात्, आचरितॄणां चानन्तश्रुतिदर्शनानुपपत्तेः 'आचारश्चैव साधूनाम्' इत्याचारप्रामाण्यश्रुतेश्च संभवन्मूलान्तरतया श्रुत्यननुमापकत्वान्निर्मूलतया स्मृतिवदप्रामाण्यमुक्तं वेदितव्यम्।

सिद्धान्तमाह—**अपि चेति**। सूत्रावयवं पूर्वपक्षव्यावर्तकतया व्याचष्टे—**अपि वेति**। सौत्रं प्रमाणपद सिद्धान्तप्रतिज्ञार्थत्वेन व्याचष्टे—**प्रमाणमेवेति**। कुत इत्यपेक्षायामुत्सूत्रं हेतुमाह—**विज्ञानं हीति**। अन्यथा अप्रमाणमित्यर्थः। अत्र विज्ञायतेऽनेनेति करणव्युत्पत्त्या ज्ञानोत्पादकत्वं हेतूकृतम्, ततश्च न मन्वादिवचनानामनुत्पादकत्वलक्षणमप्रामाण्यम्, भ्रममूलकत्वलक्षणं तु भविष्यतीत्याशङ्कते—**पूर्वेति**। विज्ञानं-विशिष्टं ज्ञानं प्रमारूपं कारणमस्या नास्ति। कुत इत्यत आह—**कारणेति**। अर्थनियतस्य कारणस्याभावादित्यर्थः। अनुमानं स्यादिति सूत्रावयवेन परिहरति—**अस्या इति**। आप्तप्रमाणीकृतत्वमहाजनपरिगृहीतत्वादिदृढत्वम्, यथा स्मृतेः कार्यात् कारणानुमानम्, तथा द्रढिम्नः कारणस्यार्थनियतत्वमपि अनुमातव्यमित्यर्थः, तर्हि स्मृतिदार्ढ्यात् तन्मूलविज्ञानकारणं प्रत्यक्षमेवानुमीयतामत आह—**तत्त्विति**। तदपि कारणमनुभूयतेऽनेनेत्यनुभवनं प्रत्यक्षं नानुमास्यामहे इति संबन्धः। तत्र **हेतुरनुपपत्त्येति**। तामेव विवृणोति—**नहीति**। किमिदं मन्वादीनां स्वर्गाष्टकादिसाध्यसाधनसंबन्धविषयं प्रत्यक्षं साधनावस्थायाम्, फलावस्थायां वा? नाद्यः अस्मदादीनामिव

मन्वादीनामपि अतीन्द्रियार्थदर्शित्वाभावस्य प्रथमपाद एव सिद्धत्वादित्यर्थः, यदि चाष्टकाफलस्य विश्वजिन्न्यायावगतस्य निरतिशयसुखरूपस्य स्वर्गस्य मर्दनादिफलवदानन्तर्यं स्यात् ततः प्रत्यक्षेणापि साध्यसाधनसंबन्धो गम्येत, न त्वेतदस्ति तथाविधसुखस्य मनुष्यैरनुभवितुमयोग्यत्वादिति दर्शयितुं मनुष्या इत्युक्तम्। न द्वितीयः इत्याह—**जन्मान्तरेति**। यदि साधनावस्थायामनुभूतं फलावस्थायां स्मर्येत ततोऽस्येदं फलमिति साध्यसाधनसंबन्धः प्रतिसन्धीयेत। न चैतदस्ति निश्शेषसंस्कारोच्छेदिमरणान्तरितत्वेन स्मरणायोग्यत्वादित्यर्थः। किं तर्ह्यनुमीयते इत्यपेक्षायां पारिशेष्याच्चोदनैवेत्याह—**ग्रन्थस्त्विति**।

ननु मन्वादिषु ग्रन्थस्यापि चोदनापरपर्यायस्य कथमुपपत्तिरित्याशङ्क्य कर्तृसामान्यादिति सूत्रावयवं व्याचष्टे—**कर्तृसामान्यादिति**। मन्वादीनां वेदसंयोगोपपत्तौ हेतुस्त्रैवर्णिकानामिति त्रैवर्णिकत्वमुपपादयितुं **स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादिति**। ये ह्यग्निहोत्रादिवैदिकपदार्थाननुतिष्ठन्ति, त एव मन्वादयः स्मृतिप्रणेतार इति तेषां त्रैवर्णिकतया वेदसंयोगोपपत्तौ तन्मूलता स्मृतेरनुमीयत इति अभिसन्धिः। अनुपलब्धिविरोधान्न चोदनामूलत्वकल्पना युक्तेति चोदयति—**नन्विति**। नोपलभन्त आधुनिका इत्यर्थः। न तावदनुपलब्धिमात्रमभावं गमयति; अतिप्रसङ्गात्; विप्रकीर्णानेकशाखाप्रकरणस्थत्वे च योग्यानुपलब्ध्यभावान्नानुपलब्धिविरोध इति मन्वानः परिहरति—**अनुपलभमाना अपीति**। उपलभ्यमानानामेव वाक्यानामिदमत्रेति विशेषस्मरणाभावमात्रत्वादनुपलब्धिरेवासिद्धेत्याह—**विस्मरणमपीति**। एवं कारणसंभवेन पूर्वविज्ञानसंभवमुपपादयितुमुपसंहरति—**तदिति**। स्मर्तॄणां त्रैवर्णिकतया वेदसंयोगित्वेन पूर्वविज्ञानस्योपपन्नत्वाद्वेदानुमानमुपपद्यत इत्यर्थः। एवमविशेषतः स्मृतीनां श्रुतिमूलकत्वमुक्त्वा, अष्टकास्मृतेः लिङ्गमूलतामप्याह—**अष्टकेति**। रात्रि धेनुमिवायती संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गल्यष्टकायै सुराधसे स्वाहेति मन्त्रशेषः। तत्र चाष्टकायै सुराधस इति स्पष्टमष्टकालिङ्गत्वे अस्त्वदृष्टार्थेषु अष्टकादिवाक्येषु अप्रामाण्याशङ्का दृष्टार्थेषु तु गुर्वनुगमनादिवाक्येषु सापि न संभवतीति विशेषमाह—**तथेति**। ये ह्युपस्थितमुपस्थितं निमित्तमासनोत्थानगमनादिरूपं प्रति नियम्यन्ते ते प्रत्युपस्थितनियमा नीचासनप्रत्युत्थानगमनादयः तथाविधाचारा विद्यन्ते, येषामर्थतया येषां स्मृतिग्रन्थानामिति विग्रहः गुर्वनुगमनादिनियमस्य वैदिकमूलतया वैदिकत्वे सत्यपि दृष्टार्थत्वरूपमतिशयं वक्तुमेवकारः, दृष्टार्थमुपपादयति—**गुरोरिति**। अर्थग्रन्थिभेदिनश्चेति निगूढार्थविवरणनिपुणतया न्यायानां नैर्मल्यमुक्तम्, गुर्वनुगमनेऽपि लिङ्गदर्शनमाह—**तथा चेति**। यस्माच्छ्रेयानश्वः पापीयसा गर्दभेनानुगन्तव्यः, तस्मादेव लोके श्रेयांसं श्रेष्ठं पूर्वं यन्तम् अग्रे गच्छति पापीयान्

न्यूनः पश्चात् पृष्ठतोऽन्वेति—गच्छतीत्यर्थः, प्रपादावपि दृष्टार्थत्वमाह—**तथा चेति। प्रपेति, न धर्मायेति** केवलादृष्टार्थत्वनिषेधः प्रपातटाकयोः परोपकारत्वे लिङ्गमाह—**तथा चेति**। यथा धन्वनि–निरुदके प्रदेशे कृता प्रपा परेषामुपकरोति, तथा त्वमपीत्यग्निस्तुतिपरोऽयं मन्त्रः। स्थलया-कृत्रिमेण स्थलेन सेतुना कृतेनेत्यर्थः। अकृत्रिमस्थले ङीष्प्रत्ययविधानेऽपि कृत्रिमे टाप्पत्ययानपवादस्मृतेः स्थलाशब्दस्य कृत्रिमतीरवाचित्वात् तटाकलिङ्गत्वं व्यक्तमित्याशयः।

शिखाकर्मणोऽपि दृष्टार्थत्वं प्रतिपादयति—**तथागोत्रेति**। गोत्रज्ञानं तावच्चतुरवत्तपञ्चावत्तविभागद्वारेण कर्माङ्गं गोत्रज्ञानस्य च त्रिशिखत्वपञ्चशिखत्वादिरूपं शिखाकर्म चिह्नमिति शिखाकर्मणोऽपि दृष्टार्थत्वमित्यर्थः, तत्रापि लिङ्गदर्शनमित्याह—**दर्शनं चेति**। कुमारा विशिखा इवेति विविधशिखत्वप्रतिपादनात् शिखाकर्मलिङ्गत्वमस्य, अधिकरणार्थमुपसंहरति—**तेनेति**। दृष्टार्थगुर्वनुगमनादिविषयाश्शब्दाः अदृष्टार्था अष्टका कर्तव्येत्येवमादयः, ततश्च दृष्टादृष्टार्थस्मृतीनां कथंचिददृष्टार्थत्वाविशेषाच्चोदनामूलत्वेनैव प्रामाण्यमाश्रयणीयमिति भावः।

अत्र यद्यप्याचरयितॄणामाचारमूलानन्तश्रुतिदर्शनासंभवः तथापि स्मर्तुरेकस्य शाखान्तरविप्रकीर्णानिकश्रुतिदर्शनसंभवात् स्मृतिदार्ढ्येन च मूलान्तरकल्पनानुपपत्तेः आचाराणामपि धर्मबुद्ध्यानुष्ठीयमानानां स्मृतिव्यवधानेन श्रुत्यनुमापकतया धर्मप्रामाण्यमित्यपि अदृष्टार्थेषु **वैदिकशब्दानुमानमित्यनेन** सूचितम् ॥१॥

**तन्त्रवार्तिकम्।**

त० वा०—एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः इदानीं पौरुषेयेषु स्मर्यमाणार्थविधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिषु अनिबद्धेषु चाऽऽचारेषु चिन्ता। तत्र किंचिदुदाहृत्य विचारः कर्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाह्रियन्ते। सन्देहहेतुश्चाभिधीयते।

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा।
अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते॥

मन्वादिवचनं स्मृत्यपेक्षम्,[1] स्मृतिश्च मूलप्रमाणापेक्षिणीति, नैकस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः। यतस्तु वेदवादिनामेवाविगानेनाविच्छिन्नपारम्पर्यपरिग्रहदार्ढ्यम्, अतो नाप्रामाण्याध्यवसानमिति, युक्तः संदेहः।

१. अत्र वार्तिकेऽनपेक्षम्, अनपेक्ष्यमिति पाठद्वयमङ्गीकृत्य श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यस्य वापेक्षणीयमन्यन्नास्ति, तत्, प्रमाणमिति व्याख्यातमिति बोध्यम्।

तत्र पूर्वपक्षवादी वदति नैषां प्रामाण्यमेवापेक्षितमिति । कुतः ?

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते ।
पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते ॥

सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्पयन्ति । तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम् । शब्दोऽपि यथाऽग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते, नैवमनवस्थाः ।

प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना ।
धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत् ॥

शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् । स चेत्तेनानवगम्यमानोऽप्यस्तीत्युच्यते, ततो वरं धर्मास्तित्वमेव निष्प्रमाणकमभ्युपगतमिति ।

न वाऽनुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने ।
न हि स्मृतिस्तया व्याप्ता दृष्टाऽन्यद्वाऽनुमापकम् ॥

यथैव धर्मे संबन्धादर्शनान्न किंचिल्लिङ्गं क्रमते, तथाऽष्टकादिश्रुतावपि ।

न वाऽऽगमेन तद्बोधो नित्येन कृतकेन वा ।
विस्रम्भः कृतके नास्ति नित्यो नैवोपपद्यते ॥

यद्यप्यैन्द्रियकत्वादष्टकादिस्मृतीनां पौरुषेयागमगम्यत्वं संभवति । तथाऽपि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यवसानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिदद्यत्वेऽप्यभिदधानाः । तेन मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुपलभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति सन्देहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्याऽऽदिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति । न च मन्त्रलिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते, विधिशून्यत्वात् । न च मूलान्तरं न्यायागतं सूचयन्ति । अन्यपरत्वात् । न च सर्वेषां स्मृतिप्रणयिनामविगानम् । येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् ।

न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् ।
अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ॥

यदि ह्येतदेकान्तेन गम्येत, यथाविधि वाक्यान्येव मन्वादिभिरुपलब्धानीति । ततः काऽपि कल्पना स्यादद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रलीनशाखामूलत्वकल्पनायां यस्मै यद्रोचते, स तत्प्रमाणीकुर्यात् । तस्मान्नाऽऽगमेनापि मूलोपलब्धिः ॥

उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते ।
नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥
अर्थापत्त्याऽपि यत्किंचिन्मूलमित्यवगम्यते ।
तच्चाप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुध्यते ॥

यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते, ततः सम्यङ्मूला स्यात् । संभवति तु स्वप्नमूलत्वेन तेनानैकान्त्यादर्थापत्तेः, सामान्यतो दृष्टस्य वाऽनवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् । **ननु ये विदुरेवमितिकर्तव्यताक एवंफलकश्चासौ पदार्थः कर्तव्य इति ।** अथ वा ये कर्तव्योऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्तव्योऽसाविति वदेयुः । नन्वन्य एवं वदन्ति कर्तव्य इत्यन्ये न वा कर्तव्य इत्याहुः । कथमन्यत्वं यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः ।

अथ वा ये मन्वादयो विदुरकर्तव्योऽयं पदार्थ इति, कथमिव ते विनाऽपराधेन लोकं वञ्चयितुं वदिष्यन्ति कर्तव्य एवायमिति । **स्मरणानुपपत्त्येति ।** ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किंचित्प्रमाणं संभाव्यते ततः स्मरणं भवेन्नान्यथा ।

कस्मात्पुनः पुत्रं दुहितरं वाऽतिक्रम्य बन्ध्यादौहित्रोदाहरणं कृतम् ? स्थानतुल्यत्वात् । पुत्रादिस्थानीयं हि मन्वादेः पूर्वविज्ञानं दौहित्रस्थानीयं स्मरणम्; अतश्च यथा दुहितुरभावं परामृश्य, दौहित्रस्मृतिं भ्रान्तिं मन्यते, तथा मन्त्रादिभिः प्रत्यक्षाद्यसम्भवपरामर्शादष्टकादिस्मरणं मिथ्येति मन्तव्यम् । तथैव **पारम्पर्येणाविच्छेदादयं वेद इति**—वाक्यानुमानाभिप्रायेणोक्तम् ।

इतरस्त्वर्थस्यैवाविच्छेदस्मरणमयमाहेति मत्वा, पुनर्निर्मूलत्वमाह । वेदः पुनः सविशेषः प्रत्यक्षगम्यस्तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरपि स्मृतमुपलभ्याऽन्येऽपि स्मरन्तोऽन्येभ्यस्तथैव समर्पयन्तीत्यनादिता । सर्वस्य चाऽऽत्मीयस्मरणात्पूर्वमुपलब्धिः संभवतीति, न निर्म्मूलता । शब्दसंबन्धव्युत्पत्तिमात्रमेव चेह वृद्धव्यवहाराधीनम् । प्रागपि हि वेदशब्दादन्यवस्तु विलक्षणं वेदान्तरविलक्षणं वाऽध्येतृस्थमृग्वेदादिरूपम्, मन्त्रब्राह्मणादिरूपाणि चान्यविलक्षणान्युपलभ्यन्ते । सर्वेषां चानादयः संज्ञा इति तद्द्वारेणोत्तरकालमपि गम्यमानानां प्रत्यक्षत्वं साधितम् ।

नन्वष्टकादिषु पुरुषान्तरस्थेष्वपि कुम्भकारक्रियास्विव किंचिद्विज्ञानमूलमस्ति । यदि हि कर्मस्वरूपमात्रं स्मर्येत, ततः पाकादि तदिन्द्रियैरन्यानतुतिष्ठतो दृष्ट्वा परे स्मरेयुः । यतस्त्विह स्वर्गादिसाध्यसाधनसम्बन्धःस्मर्यते नासौ पुरुषान्त-

रेषूत्पद्यमानः कैश्चिद् दृश्यत इत्यन्धपरम्परान्यायेनाप्रमाणता। सर्वस्यानादिव्यवहारोपन्यासेन वेदवत्प्रसिद्धचभिमानो भवति, अतोऽन्धपरम्परानिदर्शनम्। वेदे हि प्रामाण्यस्यानादित्वमिहाप्रामाण्यस्य कथम्?

यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान्।
स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते॥

तादृशं वाऽष्टकादिस्मरणम्। न च चोदना मूलभूतोपलभ्यते। न चाननुभूतसम्बन्धाऽनुमातुं शक्यते। यदि च वेदादुपलभ्य स्मृतयः प्रवर्तिताः स्युः, ततोऽर्थस्मरणवदित उपलभ्यायं मन्वादिभिः प्रणीत इत्यपि पारम्पर्येण स्मर्येत। स्यादेतद्। अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमनादराद् भ्रष्टमिति। तदयुक्तम्। न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते। अर्थस्मृतेः स्वतः प्रामाण्याभावात्। सर्वे पुरुषास्तावदेतज्जानन्ति यथा वेदमूलज्ञानादिना प्रामाण्यं न निश्चीयत इति, ते कथमिव तत्रानादरं कुर्युः।

अपि च—येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम्।
कस्मात्तेनैव तन्मूलं चोदना न समर्पिता॥

यदि हि तैरप्यर्थमात्रमेवान्येभ्योऽधिगतम्, न वेदो दृष्ट इति, ततस्तत्पूर्वकेष्वप्ययमेव पर्यनुयोग इति, निर्मूलसम्प्रदायत्वप्रसङ्गान्निर्मूलत्वान्न मुच्यसे यदि तु प्रलीनशाखामूलता कल्प्येत, ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्यते। यस्यैव च यदभिप्रेतम्, स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात्। अथ विद्यमानशाखागता एवेतेऽर्थास्तथाऽपि मन्वादय एव सर्वे पुरुषास्तत एवोपलप्स्यन्ते। युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद्वेदादेव प्रतीतिरिति, स्मृतिप्रणयनवैयर्थ्यं स्यात्। न च तद्विज्ञायते। कीदृशाद्वाक्यादिदं मन्वादिभिः प्रतिपन्नम्, किं विधिपरात्, उतार्थवादरूपादिति।

पश्य—महताऽपि प्रयत्नेन तमिस्रायां परामृशम्।
कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति॥

न च मन्वादिवचनाद्वेदमूलत्वं निश्चिनुमः। ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्या लोकं वञ्चयितुमेवं वदेयुः। तस्मादप्रमाणम्॥ १॥

**न्यायसुधायाम्**

## सर्वानवद्यकारिण्यां प्रथमं स्मृत्यधिकरणम्।

न्या० सु०—अत्र भाष्यकारेण सङ्गतिप्रदर्शनार्थमेवं तावदिति वृत्तमनुकीर्त्तितम्। तच्च नामधेयप्रामाण्यस्यानुक्तत्वादयुक्तमाशङ्क्य व्याचष्टे—एवं तावदिति। अयमाशयः—नामधेयानां विध्युद्देशान्तर्भावात् त्र्यंश एव वेदः। कृत्स्नश्चासावर्थवादाद्यनुपयोगनिराकरणेन प्रमाणतया साधितः। नामधेयाधिकरणे तु विधिस्तुतिस्मृतिवन्नामधेयत्वमपि प्रामाण्यद्वारं भवति वा, न वेति चिन्तयिष्यते।

नामधेयस्य धर्मप्रयोगाभावात्त्वानर्थक्येन पूर्वपक्षकरणं नामधेयं रूपाभिप्रायम्। गुणविधित्वेनापि उद्भिदादिपदानां दध्यादिपदवत्प्रामाण्योपपत्तेर्न स्वरूपेणाप्रामाण्यं शङ्कितुं युक्तम्। न चैवमुभयथापि प्रामाण्यसिद्धेः प्रमाणलक्षणासङ्गतिः शङ्कनीया। को धर्मः कथं लक्षणश्चेत्येकेनैव सूत्रेण व्याख्यातं चोदनालक्षणोऽर्थो धर्म इति, अत्र कथमिति प्रकारवचने थाल्प्रत्ययप्रयोगेण प्रामाण्यप्रकारविशेषनिरूपणस्यापि प्रतिज्ञासूत्रार्थत्वेनोक्तत्वात्। अन्यथा हि किंलक्षण एवावक्ष्यत्। अत एव स्मृतिविचारस्यापि सङ्गतिः। अनवगतस्वरूपस्य हि वेदस्य प्रामाण्यायोगात्स्वरूपावगतिः प्रामाण्यप्रकारः। तत्र किं प्रत्यक्षावगतिरेव प्रकारः, अथ वा स्मृत्याचारद्वारेणाप्यवगतिरिति प्रामाण्यप्रकारविशेषनिरूपणरूपत्वात्स्मृतिविचारस्यापि सङ्गतिः सिद्धा। अतः स्मृत्याचारद्वाराया अपि चावगतेः सत्याः प्रामाण्यप्रकारत्वस्य निराकर्त्तुमशक्यत्वात्सैव सम्भवति, न वेति इह चिन्त्यते।

यद्वा स्मृत्याचारावगतानामपि कर्मणां परिग्रहदाढर्चात् धर्मत्वावगतेश्चोदनैवेत्यवधारणाक्षेपेण सङ्गतिः। तत्समाधानार्थमेव चेह चोदनामूलत्वमस्ति, न वेति चिन्त्यते। चोदनाशब्दस्य वा प्रत्यक्षाप्रत्यक्षचोदनासाधारण्यादप्रत्यक्षचोदनानां च स्मृत्याचारोपस्थापनं विना प्रामाण्यायोगात् स्मृत्याचारप्रामाण्यमपि प्रतिज्ञातं भवतीति नासङ्गतिः।

जिज्ञासासूत्रेण वा सकलधर्मप्रमाणजिज्ञासाकर्त्तव्यत्वाभिधानाच्चोदनासूत्रप्रतिज्ञातवेदप्रामाण्यप्रतिपादने पर्यवसिते, प्रसङ्गादार्यप्रसिद्धचादीनामपि प्रसिद्धं (प्रामाण्यं ययोः स्मृत्याचारयोः प्रसिद्धप्रामाण्ययोः स्मृत्याचारयोरपि।) प्रामाण्यमिह चिन्त्यते। सर्वं चैतत्तावच्छब्देन सूचितम्। वेदस्य तावदुपयोगः साधित इत्युक्ते, अन्यस्यापि साधयितव्य इति प्रतीतेः परतः प्रामाण्यादिद्वाराऽप्रामाण्यस्य प्रथमपाद एव निराकृतत्वेऽपि प्रामाण्यप्रकारासम्भवेनाप्रामाण्यमाशङ्क्य प्रकारविशेषनिरूपणं द्वितीयपादेन कृतमित्युपयोगशब्देनोक्तम्। अथेदानीमिति भाष्येण वर्त्तिष्यमाणसङ्कीर्त्तनं कृतम्।

तत्र वेदमूलकत्वनिवन्धनत्वात्स्मृतिप्रामाण्यस्य वेदप्रामाण्यविचारानन्तरं स्मृतिप्रामाण्यविचारसङ्गतिरथशब्देनोक्ता। प्रत्यक्षवेदगामिनामधेयविचारात्पूर्वं स्मृतिविचारानौचित्यमाशङ्क्य, कस्याश्चित्स्मृतेर्नामधेयमूलत्वाभावेन तदनपेक्षत्वात् महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदित्यादिस्मृतेस्तु तद्यथैवादौ मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा छदन्ते इत्याद्यर्थवादमूलत्वात्, न पचेदन्नमात्मन इत्यादिस्मृतेश्च केवलाघो भवति केवलादीत्यादिमन्त्रमूलत्वात्, तत्प्रामाण्ये प्रतिपादिते नामधेयविचारात्पूर्वं स्मृतिप्रामाण्यं वक्तुमुचितमिति सूचयितुमिदानीमित्युक्तम्।

तद्विषयप्रदर्शनपरतया तावद्वचाचष्टे—इदानीमिति। पौरुषेयीष्विति वेदप्रामाण्यहेत्वभावो दर्शितः। स्मर्यमाणोऽर्थोऽत्रधिर्मर्यादा यासां नार्थमतिक्रम्य तस्य प्रमाणमपि विषयीकुर्वन्तीत्यस्मर्यमाणमूलत्वं स्मर्यमाणार्थविधिष्वित्यनेनोक्तम्। एतच्चाप्रामाण्योपयोगिविशेषणद्वयम्। अस्मर्यमाणार्थावधिष्विति पाठे त्वितः प्रभृतीयं स्मृतिः प्रवृत्तेत्यस्मर्य-

माणोऽर्थस्यावधिर्यासामिति षष्ठीतत्पुरुषगर्भबहुव्रीहिः। सिद्धान्तोपयोगिविशेषणं मन्वादिप्रणीतो ग्रन्थो निबन्धनं यासामिति शिष्टप्रणीतत्वं मन्वादिप्रणीतनिबन्धनास्वित्यनेन प्रामाण्योपयोगिविशेषणमुक्तम्। आचारग्रहणेनाशब्दत्वपूर्वपक्षहेतुकर्तृसामान्यसिद्धान्तहेतुसाम्यादाचाराणामप्यधिकरणविषयत्वमुक्तम्।

ननु यत्रेत्यादिभाष्येणैव विषयावगतिसिद्धेः, तत्स्वरूप तस्य च विशेषस्यात्राविचार्यत्वादष्टकादिस्वरूपोदाहरणं व्यर्थमित्याशङ्क्याह—तत्रेति। स्वरूपगतविशेषाविचारेऽप्युदाहरणविशेषं विना नैराकाङ्क्ष्यमभावादष्टकाद्युदाहरणमिति भावः।

मन्वादिस्थानां स्मरणानामन्येन ज्ञातुमशक्यत्वात्कथं विचारविषयत्वमित्याशङ्क्य तद्ग्रन्थसमर्पितानीत्युक्तम्। विषयप्रदर्शनार्थतया भाष्यं व्याख्याय सन्देहहेतुश्चानेन भाष्येणाभिधीयत इत्याह—सन्देहेति। कथमित्यपेक्षिते पूर्वपक्षप्रतिभानार्थत्वेन यत्रेति भाष्यं व्याचष्टे—पारतन्त्र्यादिति। सिद्धान्तप्रतिभानार्थत्वेनाऽथ वेति भाष्यं व्याचष्टे-अप्रामाण्येति। श्लोकं विवृणोति—मन्वादीति। (शब्दानामर्थपरत्वे स्वतः प्रामाण्ये च सत्यपि वक्तृज्ञानानुमानं विनार्थाभावव्युदासरूपपरिच्छेदाख्यविज्ञानानुत्पादकत्वाद्, ज्ञानमात्रस्य च प्रामाण्याभावाद्वक्तृज्ञानानुमानद्वारा विज्ञानोत्पादकत्वावगतेर्मन्वादिवचनस्य स्मृत्यपेक्षतोक्ता भाष्यकृता। आचाराणामप्युदाहरणत्वसिद्ध्यै वाक्यानुदाहरणेऽपि पूर्वोत्तरपक्षहेतुसाम्यात्तेषामप्युदाहरणत्वोपपत्तिसूचनार्थं वचनोक्तिः।) तदुच्यत इति पूर्वपक्षभाष्यं व्याचष्टे—तत्रेति। पूर्वविज्ञानमूलप्रमाणम्, तस्य यो विषयः, स एवास्येति पूर्वविज्ञानविषयविषयमित्येकोऽत्र विषयशब्दो लुप्तो द्रष्टव्यः। श्लोकं विवृणोति—सर्वेति।

ननु शब्द एवात्र मूलप्रमाणं भविष्यत्यत आह—शब्दोऽपीति। ननु प्रत्यक्षानुपलब्धोऽपि कल्पयिष्यत्यत आह—प्रत्यक्षेति। प्रमाणशब्देन भावव्युत्पत्त्या कल्पनमभिप्रेतम्। तदेव तावन्निष्प्रमाणकत्वात्कल्पाद्धर्मास्तित्वाद्विप्रकृष्टं दूरे न तत्स्पृशतीत्यर्थः, योग्यानुपलब्ध्यभावाद्धर्मास्तित्वकल्पनापेक्षयाऽसन्निकृष्टं धर्मास्तित्वं शब्दास्तित्वस्य योग्यप्रत्यक्षानुदयेनाभावनिश्चयात्तत्कल्पना विप्रकृष्टतरा। श्लोकं व्याचष्टे—**शब्दस्य तावदिति**। अभ्युपगतमित्यनेन कल्पनार्थत्वेन प्रमाणशब्दो व्याख्यातः। नन्वनुमानादिनापि शब्दावगतिसम्भवात्प्रत्यक्षमेव प्रमाणमित्ययुक्तमुक्तमत आह—न चेति। श्लोकं व्याचष्टे—यथैवेति। आगमं निराकरोति—न चेति। कृतके नास्ति विश्रम्भ इत्येतद्व्याचष्टे—यद्यपीति। दुष्टैः प्रतारकैः पुरुषैराकुलितं भ्रामितं चेतो येषाम् = अस्मादीनामित्यर्थः। 'नित्यो नैवोपपद्यते' इत्येतद्व्याचष्टे—नित्यस्य त्विति।

ननु धन्वन्निव प्रपेत्यादिमन्त्रलिङ्गानां प्रपादिस्मृतिमूलत्वदर्शनाद्वेदमूलत्वाभिधायिनां मन्वादीनां तद्दृष्टान्तेन सत्यवादित्वावगतेः कृतके नास्ति विश्रम्भ इत्ययुक्तमत आह—न चेति। एवं तर्हि मूलान्तरसूचकत्वान्नित्यो नैवोपपद्यत इत्युक्तमत आह—न चेति। कर्त्तव्यतानुवादे विधिसूचनं स्यात् स्वरूपमात्रानुवादस्तु यदृच्छासिद्धप्रपादिविषयत्वेनोपपन्नो य विन्ध्याक्षेपालमित्याशयः।

**मन्त्रलिङ्गानां च स्मृतिमूलसूचकत्वनिराकरणेन नित्यानुमेयश्रुतिमूलत्वमपि निराकृतं** भवति । अन्धपरम्परान्यायापत्त्या स्मरणेन नित्यानुमेयश्रुतिकल्पनस्य निराकरिष्यमाणत्वात्, प्रत्यक्षश्रुतिमूलत्वे त्वैकरूप्यात्तस्यास्तन्मूलानां स्मृतीनामप्यैकरूप्यं स्यात् न त्वेतदस्ति ।

'यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥' या० स्मृ० आ० श्लो०

इत्यादिविगानदर्शनादित्याह—**न चेति** । ननूपलब्धश्रुतिमूलत्वेऽपि विगीतानेकश्रुतिमूलत्वात् स्मृतिविगानमविरुद्धमत आह—**न चेति** । श्लोकं व्याचष्टे—**यदि हीति** । विधिरूपं वाक्यं मन्वादिभिर्निरूपितमुपलब्धमिति यदि विज्ञायेत, ततः क्वापि विगीतानेकश्रुतिमूलत्वादिकल्पना स्यात् । अर्थवादपरेष्वपि त्वद्यत्वेऽपि 'स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति, य एवमेतत्सत्यस्य सत्यत्वं वेदेत्यादिषु मृषोद्याभ्यनुज्ञाभ्रान्तिदर्शनेन मन्वादिष्वपि भ्रान्तिशङ्काया निराकर्त्तुमशक्यत्वात् एकश्रुतिमूलत्वेऽपि भ्रान्त्यवसितानेकतात्पर्यविगाननिमित्तस्मृतिविगानोपपत्तेर्नानेकश्रुतिमूलत्वकल्पनोचितेति भावः । प्रलीनशाखामूलत्वं तर्ह्यस्त्वत आह—**मृतेति** । प्रासङ्गिकं परिसमाप्य प्रकृतमुपसंहरति—**तस्मादिति** ।

उपमानं निराकरोति—**उपमानं त्विति** । अर्थापत्तिं निराकरोति—**अर्थापत्त्यापीति** । श्लोकं व्याचष्टे—**यदि हीति** । सामान्यतो दृष्टग्रहणं दृष्टान्तार्थमतो निर्मूलत्वादित्युपसंहारभाष्यं निर्मूलस्मृत्यसम्भवेन, कस्यचिद् भ्रान्त्यादेरवश्यकल्प्यत्वादयुक्तमाशङ्क्य व्याचष्टे—**तस्मादिति** ।

नन्विति भाष्यमर्वाचीनाभिप्रायेण तावद् द्वेधा योजयति—**नन्विति** । अर्वाचीनानां कर्त्तव्यत्वाज्ञानाद्ये विदुरित्ययुक्तमित्याशङ्कते—**नन्विति** । वदनानुमेयत्वात्परिज्ञानस्य वदन्तीत्युक्तम् । तेषामपि मन्वादिवाक्यश्रवणाद्भवति कर्त्तव्यत्वज्ञानमिति परिहरति—**कथमिति** । एवं कर्त्तव्यज्ञानात्कर्त्तव्यत्वाभिधानयोर्विप्रतिषेधप्रतिपादनपरत्वेन व्याख्याय नन्वविदुषामुपदेशो नावकल्पत इत्यनेन न्यायेनोपदेशान्यथानुपपत्त्या मन्वादेः पूर्वज्ञानकल्पनाशङ्कार्थमेतद्भाष्यमित्यन्यथाचष्टे—**अथ वेति** । ये कर्त्तव्य इति न विदुः, कथमिव ते वदिष्यन्तीत्थमसौ पदार्थः कर्त्तव्य इति व्यत्ययेनास्मिन्व्याख्याने भाष्यं योज्यम् । निषेधाभावेन त्वकर्त्तव्यत्वस्यानाशङ्क्यत्वात्कर्त्तव्यत्वाज्ञानमेवाकर्त्तव्यत्वज्ञानमुखेनाकर्त्तव्यो यस्मिन्नित्यनेनोक्तम् । विवक्षितार्थलाभाय च व्यत्ययाङ्गीकरणमदोषः । 'स्मरणानुपपत्त्येति भाष्यमर्वाचीनानां स्मरणानुपपत्त्येत्येव कैश्चिद्व्याख्यातम् । तत् मन्वादिवाक्यश्रवणजनितस्यार्वाचीनानामष्टकादिकर्त्तव्यताज्ञानस्याकर्त्तव्यत्वाभिधानविरोधित्वेनोपन्यस्तस्य स्मृतित्वेनाशङ्कितत्वादयुक्तमित्यभिप्रायेण दूषयति—**स्मरणेति** । तदर्वाचीनानामष्टकादिकर्त्तव्यत्वज्ञानमाशङ्कावादिनैव तावन्न स्मृतित्वेनेष्टम्, अतस्तस्य स्मृतित्वनिराकरणमयुक्तमिति **तावच्छब्दस्यार्थः** ।

ननु मन्वादीनामपि स्मरणं निराकर्त्तुमशक्यम्, तदभावे ग्रन्थरचनानुपपत्तेरित्याशङ्क्याह—मन्वादीनामपीति। तस्माद्व्याख्यानद्वयेऽपि मन्वाद्यभिप्रायेणैवैतत्परिहारभाष्यं योज्यमिति भावः। तत्रार्वाचीनाभिप्रायशङ्काव्याख्याने मन्वादिवाक्योत्पन्नकर्त्तव्यत्वज्ञानां अप्यर्वाञ्चो मन्वादीनां स्मरणानुपपत्तिमालोच्याकर्त्तव्यत्वं वदन्तीति योज्यम्। द्वितीयव्याख्याने तूपदेशकल्प्यस्मरणस्य पूर्वविज्ञानकारणाभावेनानुपपत्त्या नोपदेशस्य तत्कल्पकत्वं सम्भवतीत्यसम्भवतोऽर्थापत्त्या कल्पयितुमशक्यत्वादिति भावः। विदितपूर्वस्याप्यस्मृतस्योपदेष्टुमशक्तेः, स्मरणद्वारेणोपदेशस्य ज्ञानकल्पकत्वात्स्मरणनिराकरणेन ज्ञानमेव निराकृतम्।

बन्ध्यादौहित्रोदाहरणस्य प्रश्नपूर्वमभिप्रायमाह—कस्मात्पुनरिति। कारणाभावेन कार्याभावोऽत्र दृष्टान्तो वाच्य इति, दौहित्रस्य कारणभूतदुहित्रभावेनाभावो निदर्शनीयः। दुहितुस्तु बन्ध्याकारणमस्तीति न कारणाभाव इत्याशयः। उपदेशान्यथानुपपत्त्या मन्वादिस्मरणेऽवश्यकल्पे सम्यक्त्वमात्रमिह निषेध्यमिति सूचयितुं दृष्टान्तभाष्ये सम्यग्ग्रहणम्। एवमपीत्याशङ्काभाष्यं पूर्वं विज्ञानकारणाभावे स्मृतिप्रामाण्यानुपपत्तेर्युक्तमाशङ्क्य पूर्वविज्ञानकारणभूतवेदवाक्यानुमानाभिप्रायत्वेन व्याचष्टे—यथैवेति।

एवं तर्हि नैतदेवमिति परिहारभाष्यं पूर्वविज्ञानकारणाभावे हेत्वप्रदर्शनादयुक्तं स्यादित्याशङ्क्याऽगृहीताभिप्रायत्वेन व्याचष्टे इतरस्त्विति। एतदेव भाष्यमवयवशो व्याचिख्यासुर्वेदत्वस्मृतिप्रामाण्योपपत्तिप्रतिपादकं तावत् प्रत्यक्षेणेतिभाष्यावयवं व्याचष्टे—वेदः पुनरिति। ननु वर्णस्वरूपस्य प्रत्यक्षत्वेऽपि तस्य वेदावेदसाधारण्याद्वेदत्वस्मृतिर्निर्मूलैव स्यादत आह—शब्देति। वेदशब्दवाच्यत्वमात्रमेव तत्राप्रत्यक्षं तदपि तु वृद्धव्यवहारावगम्यत्वान्न निष्प्रमाणकम्, ग्रन्थान्तरविलक्षणमेतत्स्वरूपं प्रत्यक्षमेवेति भावः। एतदेवोपपादयति—प्रागपि हीति। वेदशब्दस्योपलक्षणत्वाहग्वेदादिविशेषमन्त्रब्राह्मणोपन्यासः। ननु वेदशब्दात्प्रागपि वेदादिस्वरूपप्रतीतौ वेदादिसंज्ञानां डित्थादिवत्पौरुषेयत्वान्निष्प्रमाणकत्वं स्यादित्याशङ्क्याह—सर्वेषां चेति। नन्वेवमपि वेदादिशब्दोल्लेखावगतेर्वृद्धव्यवहाराधीनशब्दार्थसम्बन्धप्रतीत्युत्तरकालीनत्वात् प्रत्यक्षत्वं न स्यात् अत आह—इतीति। शब्दोल्लेखप्रतीतिनिर्देशार्थ इतिकरणः। संज्ञाद्वारेण तदुल्लेखेनोत्तरकालमपि गम्यमानानां प्रत्यक्षसूत्रे तत्र शब्दार्थसम्बन्धप्रमातुरित्यत्र प्रत्यक्षत्वं साधितमित्यर्थः।

दार्ष्टान्तिके वैषम्यप्रतिपादनार्थमष्टकादिषु त्विति भाष्यावयवं व्याचष्टे—नन्विति। कुम्भकारक्रियास्विवेति वैधर्म्यदृष्टान्तः एतदेवोपपादयति - यदीति। अन्धपरम्परान्यायेनेति व्याख्येयतयोपक्षिप्तस्यान्धपरम्परानिदर्शनस्य प्रयोजनं तावदाह—सर्वस्येति। वेदत्वस्मृतिवदष्टकादिस्मृतावप्यनादित्वात्प्रामाण्यप्रसिद्ध्यभिमानं निवर्त्तयितुमन्धपरम्परानिदर्शनमित्यर्थः। कथमनेन निदर्शनेन प्रामाण्यप्रसिद्ध्यभिमाननिवृत्तिरित्यपेक्षितेऽस्मिन्निदर्शनेऽनादित्वस्याप्रामाण्यापादकत्वदर्शनादित्याह—वेदे हीति। एतदेव प्रश्नपूर्वमुपपादयन्निदर्शनभाष्यं व्याचष्टे—कथमिति। दार्ष्टान्तिके योजयति—तादृशं चेति।

ननूभयविधदृष्टान्तोपलब्धौ कथमष्टकादिस्मरणस्यान्धरूपस्मृतितुल्यत्वम्, न तु वेदत्व-स्मृतितुल्यतेति निर्णय इति आशङ्क्य पूर्वविज्ञानकारणाभावादिति भाष्योक्तहेतुव्याख्यानार्थं पूर्वोक्तमेव चोदनामूलत्वनिराकरणं स्मारयति— न चेति । मूलसद्भावे प्रमाणं नास्तीत्युक्त्वा तदभाव एव तु स्मर्त्तव्यास्मरणं प्रमाणमस्तीत्याह—यदि चेति । अनेन चाप्तोक्तिनिबन्धनेषु व्यवहारेषु प्रामाण्यहेतुभूतस्य मूलस्य स्मरणेन व्याप्तत्वाद्व्यापकस्मरणाभावेन व्याप्यमूलाभावानुमानमुपन्यस्तम् अर्थापत्तिर्वा व्यवहारार्थिनां व्यवहारहेतुमूलविस्मरणानुपपत्तेर्दृश्यादर्शनवद्वा स्मर्त्तव्यास्मरणस्याप्यनवगतपूर्वातीताभावज्ञानकरणतायाः ।

स्वरूपमात्रं दृष्ट्वा च पश्चात्किञ्चित्स्मरन्नपि ।
तत्रान्येनास्तितां पृष्टस्तदेव प्रतिपद्यते ॥ [अ. प्र. श्लो. २८]

इति वदद्भिराचार्यैरिष्टत्वादभावाख्यमेव प्रमाणमनेनोपन्यस्तम् ।

नन्वविच्छिन्नपारम्पर्यदृढस्मरणमात्रेण व्यवहारसिद्धिरवश्यस्मर्त्तव्यत्वविशेषणाभावात्, अस्मरणमात्रस्य च चिरवृत्तेषु सत्स्वपि पदार्थेषूपलब्धेरभावात् असाधकत्वान्नास्मरणेन मूलाभावसिद्धिरित्याशङ्कते—स्यादेतदिति । निर्मूलस्य स्मरणस्याप्रमाण्येन व्यवहारासाधकत्वान्मूलस्यावश्यस्मर्त्तव्यत्वं साधयति—तदयुक्तमिति । अवश्यसमर्पणीयासमर्पणादपि स्मृतिमूलभूतानां चोदनानामभावोऽवसीयत इत्याह—अपि चेति । ननु स्वयंदृष्टस्य मूलस्यावश्यसमर्पणीयत्वं भवेत् मन्वादिभिस्तु स्मृतिमूलभूतानां चोदनानां स्वयमदृष्टत्वादशक्यं समर्पणमित्याशङ्क्याह—यदि हीति । एवमपि मन्वादिभ्यः पूर्वैराचार्यैः स्वयंदृष्टत्वे समर्पणीयत्वापत्तेः, अदृष्टत्वे वा नित्यानुमेयत्वापत्तेस्तस्य च निराकरिष्यमाणत्वान्निर्मूलत्वमेव बलादापद्यतेति भावः

ननु पूर्वाचार्यैः समर्पितमपि स्मृतेर्मूलं प्रलीनत्वेन मन्वादिभिः स्वयमदृष्टत्वान्न समर्प्यतेऽत्र आह—यदि त्विति । ननु मन्वादिभिः स्वयं दृष्टानामपि मूलानामन्यैरपि स्वयं दृष्टत्वादसमर्पणमित्याशङ्क्यास्मिन्पक्षे स्मृतिप्रणयनवैयर्थ्यमाह—अथेति । इतश्च वैयर्थ्यमित्याह—युक्ततरा चेति । किं चान्यैः स्वयंदृष्टानामपि वेदवाक्यानां तात्पर्याज्ञानेनेदमस्याः स्मृतेर्मूलमिति निर्णेतुमशक्यत्वात्तात्पर्यज्ञापनार्थं मन्वादिभिरवश्यं समर्पणं कर्त्तव्यमित्याह—न चेति । प्रमाणशून्यो मूलविशेषनिर्णयोऽशक्य इति, अन्यथैव दृष्टान्तमाह—पश्येति ।

ननु—

'यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्त्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥'

इति मन्वादिभिः सामान्येन स्वस्मृतीनां वेदमूलत्वाभिधानाद्विशेषासमर्पणोऽपि स्मृत्यनुरूपमूलविशेषनिर्णयो भविष्यत्यत आह—न चेति । अतोऽनादर्त्तव्यमित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति ॥ १ ॥

## भावप्रकाश

भा० प्र०—प्रथम पाद में वेदविधि का प्रामाण्य निरूपित किया गया है और द्वितीय पाद में अर्थवाद और मन्त्र का प्रामाण्य सिद्ध किया गया है। तृतीय पाद में अन्य शाखाओं में स्थित वेदविधि, मन्त्र या अर्थवादमूलक स्मृति के प्रामाण्य का विचार किया जा रहा है।

स्मृति प्रमाण है या अप्रमाण इस प्रकार का संशय होने पर 'धर्मस्य शब्दमूलत्वाद-शब्दमनपेक्षं स्यात्' १।३।१ इस सूत्र की पूर्वपक्ष के रूप में अवतारणा की गई है। पूर्वपक्ष के समर्थन में यहाँ कहा गया है कि 'अष्टकाः कर्तव्याः' अर्थात् अष्टका श्राद्ध करना चाहिये, 'तडागं खनितव्यम्' तालाब खन कर प्रतिष्ठा करनी चाहिये, 'प्रपा प्रवर्तयितव्या' जल सत्र को प्रवर्तित करना कर्तव्य है, 'शिखाकर्म कर्तव्यम्' शिखा धारण करना चाहिये इत्यादि शिष्टजनों से परिगृहीत स्मृति वचन हैं, किन्तु वे धर्म में प्रमाण नहीं हैं, अर्थात् ये कर्म धर्म नहीं हैं। क्योंकि धर्म का लक्षण निरूपण करते हुए कहा गया है कि धर्म चोदनालक्षण अर्थात् वेदविधि से बोध्य ही है, किन्तु इन स्मृति वचनों के मूल में कोई वैदिक वचन नहीं है।

यदि यह कहा जाय स्मरण अर्थ वेद के अर्थ का स्मरण मात्र है और स्मरण की उत्पत्ति अनुभव के बिना नहीं हो सकती है, अतः, अर्थापत्ति के आधार पर उसका पूर्व में अनुभव अवश्य ही मानना होगा; धर्म यह अलौकिक अदृष्ट तत्त्व है, अतः, इसमें प्रत्यक्ष एवं प्रत्यक्ष को उपजीवक मान कर स्थिर अनुमान एवं उपमान प्रमाण का प्रामाण्य नहीं हो सकता है। अपितु शाब्द ज्ञान रूप अनुभव के फलस्वरूप ही धर्म का स्मरण किया जा सकता है। किन्तु इस प्रसङ्ग में यह कहना है कि वन्ध्या नारी यह कहे कि 'यह मेरे दौहित्र का मकान है, तो यह वचन वाधित मानना पड़ेगा, क्योंकि कन्या की उत्पत्ति के बाद उस कन्या का पुत्र दौहित्र होगा, और दौहित्र होने पर उसके भवन का ज्ञान होगा, कन्या के स्मरण के बिना दौहित्र का स्मरण नहीं हो सकता है। प्रकृत में भी श्रुति के वचनों के अनुभव के बाद ही उसके अर्थ का स्मरण होगा, अर्थात् स्मृति का मूलीभूत शाब्दज्ञान, इस शाब्दज्ञान का कारण स्वरूप शब्द .अर्थात् श्रुतिवचन है, श्रुति वचन के स्मरण के बिना श्रुति वचन सहित अर्थ का स्मरण नहीं हो सकता है। वेद अविच्छिन्न परम्परा के क्रम में आ रहा है, अर्थात् अपौरुषेय रूप में परम्परा से प्राप्त है, अतः, प्रमाण है, इसी तरह स्मृति भी परम्परा क्रम में आ रही है, अतः प्रमाण है। किन्तु, इस प्रसङ्ग में यह कहना है कि वेद मात्र परम्परा क्रम में प्राप्त होने से प्रमाण नहीं है, अपितु, किसी पुरुष विशेष से रचित न होने के कारण ही—यह प्रमाण है, किन्तु स्मृतियाँ तो मनु आदि मनुष्यों के द्वारा रचित हैं, अतः, भ्रम प्रमाद आदि दोष से युक्त मानव की रचना स्वतः प्रमाण नहीं है, धर्म अलौकिक है, अदृष्ट है, उसका साक्षात्कार मनुष्य नहीं कर सकता है, इसलिए साक्षात्कारपूर्वक उस विषय का प्रतिपादन

मनुष्य ने किया है—यह भी नहीं कहा जा सकता है। अतः जिस स्मृति वाक्य का मूलभूत कोई वेदवचन मिलेगाः वही स्मृति वचन प्रमाण होगा। अतः, इस प्रसङ्ग में यही कहा जा सकता है कि स्मृतियाँ अन्ध परम्परा के समान हैं जैसे कोई जन्म से अन्धा व्यक्ति यह कहता है कि वह इस वस्तु के वर्ण का स्मरण कर रहा है। उस व्यक्ति से यह जिज्ञासा की जाय तुमने इस वस्तु का किस प्रकार अनुभव किया ? इसके उत्तर में वह किसी दूसरे जन्मान्ध व्यक्ति का निर्देश कर कहता है कि मैंने उस अन्धे की बात सुनकर अनुभव किया है, उस जन्माध से जिज्ञासा करने पर वह भी किसी जन्मान्ध के द्वारा श्रुत को ही अपने अनुभव का आधार बताता है तो उनका कथन अप्रामाणिक होगा। अतः, प्रकृत में स्मृतियों के धर्मोपदेश की यही स्थिति है। इसलिए स्मृति वाक्य पौरुषेय होने से ये आचारमूलक या अन्य स्मृतिमूलक या भ्रान्तिमूलक है—यह निश्चित नहीं कहा जा सकता है। अतः, इस प्रकार के स्मृति वचन—'अनपेक्षं स्यात्' अपेक्षित अर्थात् आदरणीय नहीं है, इन स्मृतियों पर आस्था की स्थापना कर धर्म-कर्म करना उचित नहीं है—यही पूर्वपक्ष का आशय है।

'धर्मस्य' धर्म के, शब्दमूलत्वात्' = शब्दमूलक होने से, वेद प्रमाणकता साधन होने से, 'अशब्दम्' = जो साक्षात् वेद वचन के द्वारा विहित नहीं हैं, अतः (वे) 'अनपेक्षम्' = अपेक्षारहित अर्थात् अनादरणीय, 'स्यात्' = होंगे। अतः वेद ही धर्म में प्रमाण है, अतः जो कण्ठतः अर्थात् श्रुति वचन से नहीं कहे गये हैं उसको धर्म का प्रमाण मानकर ग्रहण नहीं किया जा सकता है ॥ १ ॥

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ १.३.२ ॥ सि०

**शा० भा०—अपि वेति पक्षो व्यावर्त्यते। प्रमाणं स्मृतिः। विज्ञानं हि तत्किमित्यन्यथा भविष्यति पूर्वविज्ञानमस्य नास्ति, कारणाभावादिति चेत्? अस्या एव स्मृतेर्द्रढिम्नः कारणमनुमास्यामहे। तत्तु नाननुभवनम्, अनुपपत्त्या। न हि मनुष्या इहैव जन्मन्येवंजातीयकमर्थमनुभवितुं शक्नुवन्ति। जन्मान्तरानुभूतं च न स्मर्यते। ग्रन्थस्त्वनुमीयेत, कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोः। तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्।**

**ननु नोपलभन्त एवंजातीयकं ग्रन्थम्। अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यत इति तदुपपन्नत्वात्पूर्वविज्ञानस्य। त्रैवर्णिकानां स्मरतां विस्मरणस्य चोपपन्नत्वाद् ग्रन्थानुमानमुपपद्यत इति प्रमाणं स्मृतिः। अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते यां जनाः प्रतिनन्दन्तीत्येवमादयः।**

**तथा प्रत्युपस्थितनियमानाम्, आचाराणां दृष्टार्थत्वादेव प्रामाण्यम्। गुरोरनुगमात्प्रीतो गुरुरध्यापयिष्यति ग्रन्थग्रन्थिभेदिनश्च न्यायात्परितुष्टो वक्ष्यतीति। तथा च दर्शयति, तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान्पश्चादन्वेतीति। प्रपास्तडागानि च परोपकाराय, न धर्मायेत्येवावगम्यते। तथा च दर्शनम्। 'धन्वन्निव**

**प्रपा असीदि, ति। तथा, 'स्थलयोदकं परिगृह्णन्ती' ति च गोत्रचिह्नं शिखाकर्म, दर्शनं च यत्र 'बाणाः संपतन्ति कुमारा विशिखा इवे, ति। तेन ये दृष्टार्थाः ते तत एव प्रमाणम्। ये त्वदृष्टार्थाः सिद्धान्ताः तेषु वैदिकशब्दानुमानमिति ॥ २ ॥**

**स्मृत्याधिकरणम् ॥ १ ॥**

भा० वि०—यद्युत्सर्गतः प्रामाण्यं स्मृतीनामाचाराणां च श्रुतिमूलतया प्रामाण्यम्, अथ प्रत्यक्षवेदविरोधेऽपि स्यादितिशङ्कानिराकरणात् सङ्गतिमथशब्देन सूचयन् विषयमाह—**अथेत्यादिना**। यत्रेति सामान्यनिर्देशाद्यावत्स्मृत्याचाररूपं प्रत्यक्षश्रुतिविरुद्धं तत्सर्वमत्रोदाहरणमिति सूचितम्। कथंशब्देन किं तादृगपि धर्मे प्रमाणतयावधार्यते, तद्व्यतिरिक्तमेवेति तुल्यं मूलत्वतदभावाभ्यां संशयस्सूचितः। विचारप्रयोजनं तु विरोधे श्रौतस्मार्तयोरेवानुष्ठानसिद्धिः, यद्यपि प्रत्यक्षवेदविरुद्धा इत्येवोदाहर्तव्यम्, अथ च यदा कासांचित् आप्तत्रैवर्णिकप्रणीतत्वादिना संभवद्वेदमूलकानामपि प्रत्यक्षवेदविरुद्धार्थत्व.न्मूलश्रुत्यनुमानेनानुष्ठापकत्वासंभवादप्रामाण्यम् तदा किमु वक्तव्यमसंभवद्वेदमूलानां शाक्यादिस्मृतीनामिति मत्वा तादृशीरुदाहरति—**अथेत्यादिना**, यद्यपि सर्ववेष्टनस्मरणमूलस्य तामुर्ध्वदेशेन वाससा परिवेष्टयन्ति इति शाख्यानि शाखागतस्य क्रीतराजकभोज्यान्नत्वस्मरणमूलत्वस्य च तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवतीति आथर्वणगतस्य [1]प्रत्यक्षत्वेनाननुमेयत्वात् न तन्मूलस्मृतेः प्रत्यक्षश्रुत्या बाधः, तथापि कदाचित् केषांचित् तदप्रत्यक्षसंभवात्, तदानीं तान् प्रतीदं बाध्योदाहरणमेवेति मत्वोदाजहार। यद्यपि मध्यमोदाहरणमपि—

'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्' ॥ अ० ३. श्लो. २

इति मनुवचनानुगृहीतया—

"द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत्"

इत्यनया गौतमस्मृत्यैव कृष्णकेशश्रुत्यनुकूलया द्वादशवर्षब्रह्मचर्यपक्षस्य गार्हस्थ्ययोगं प्रति विहितत्वात् अष्टाचत्वारिंशद्वर्षपक्षस्य तदयोग्यं प्रति विधानेन व्यवस्थितविषयत्वान्न कृष्णकेशश्रुतिबाध्यत्वम्, अथापि श्रुतिस्मृत्योरेकविषयत्वं मन्वानं प्रति संभवत्येव बाध्योदाहरणत्वमिति ध्यात्वोदाहृतम्, अत्र चाद्ययोरुदाहरणयोः स्मृत्यर्थविरोधद्वारा स्मृत्योरेव श्रुतिभ्यां विरोधोऽभिमतः।

सम्प्रति पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षमाह—**तदित्यादिना**। वेदस्मृतिविरुद्धमपि स्मरणमित्यर्थः, औदुम्बरीवेष्टनादिविषयाणां तावत् सूत्रकारादिवचनानां शिष्टत्रैवर्णिकप्रणीततया, तत्परिगृहीततया च संभवद्वेदमूलत्वाद्युक्तं प्रामाण्यं बौद्धादिस्मृतीनामपि संभवद्वेदसंयोगत्रैवर्णिकप्रणीतत्वेन, महाजनपरि-

---

१. यस्य वापेक्षणीयमन्यन्नास्ति, तत्प्रमाणमिति व्याख्यातमिति बोध्यम्।

गृहीतत्वेन च संभवद्वेदमूलानुमानानामुपपद्यत एव प्रामाण्यम्, आचाराणामपि प्रत्यक्षश्रुतिस्मृतिविहिताग्निहोत्रादिसमानकर्तृकतया संभवद्वेदादिमूलानामुपपद्यत एव प्रामाण्यम्, न च प्रत्यक्षश्रुतिस्मृतिविरोधात्स्मृत्याचारेण वा श्रुत्यनुमानम्, स्मृत्यनुमानं वा न संभवतीति सांप्रतं व्रीहियवश्रुतिवत् विरुद्धश्रुतिस्मृतिद्वयसंभवेन स्मृत्याचारेण वा तदनुमानोपपत्तेरित्यभिसन्धिः ।

तत्र तावत् सर्ववेष्टनादिस्मृतीनां पूर्वोक्तनीत्या अबोधकत्वादिलक्षणाप्रामाण्याभावमङ्गीकृत्यैवाननुष्ठापकत्वलक्षणमप्रामाण्यं दर्शयन् सिद्धान्तमाह—**एवमित्यादिना**। श्रुत्यवगतस्पर्शनविरोधेन सर्ववेष्टनस्याननुष्ठातुमशक्यत्वात् तद्विषयस्मरणं व्यामोहोऽप्रमाणम् अनुष्ठापकमित्यवगम्यत इत्यर्थः ।

ननु वस्त्रान्तरितौदुम्बरीस्पर्शेऽपि औदुम्बरी स्पृष्टेति बुद्धिदर्शनात् कथं स्पर्शनसर्ववेष्टनयोः कलह इति शङ्कते—**कथमिति**। अपि च स्पर्शनं हि त्वगिन्द्रियेण स्पृश्यसंवेदनम्, न च वस्त्रान्तरितायाः तत्संभवः, तद्बुद्धिस्तु गौण्यपि स्यादित्याह—**न शक्येति**। यद्युदुम्बरीसंबद्धवासःस्पर्शात् सा स्पृष्टेत्यभिधीयेत, तदा भूमिस्पर्शेनापि तत्सिद्धेः वृथा स्पर्शविधिः स्यादिति परिहरति—**स्पर्शेति**[1]।

ननु सत्यपि विरोधे स्पर्शश्रुतेरेव व्यामोहत्वं किं न स्यादित्याशङ्क्य बलवद्बाधकाभावादित्याह—**तामिति** ।

ननु सर्वशब्दपर्यायपरिशब्दोपेता स्मृतिरेव सर्ववेष्टनं विनानुपपद्यमाना स्पृष्टस्पर्शेऽपि कथंचिदुपपद्यमानायाः स्पर्शश्रुतेः बाधिका भविष्यतीति चोदयति—**सर्वेति**। अपरिदृश्यमानमूलतया दुर्बलत्वान्न स्मृतेः बाधकत्वमित्युत्तरमाह—**नन्विति**। अनुमीयमानश्रुतिमूलतया बाधकत्वमाशङ्कते—**वैदिकमिति**। निराह—**भवेदिति**। अयमर्थः यदि स्पर्शनविधायकं वाक्यं व्यामोहः, तर्हि स्मृतिरनुष्ठापकतया वैदिकं वचनमनुमापयेत्, यदा तु स्पर्शनश्रुतेरेव प्रत्यक्षायाः प्रथमतरमेवाव्यामोहत्वमनुष्ठापकत्वम्, तदा सर्ववेष्टनानुष्ठानस्याशक्यत्वात् अनुपपन्नं मूलवेदानुमानमिति । यथानुष्ठेये स्मृत्यर्थे प्रत्यक्षमूलमघटमानत्वान्न कल्प्यते, तथा वैदिकमपि वाक्यं न कल्प्यमनुष्ठानस्यान्यथासिद्धत्वेनानुपपत्तेरविशेषादित्याह—**यथेति**। तदनेनैवं सूत्रं व्याख्यातं विरोधे श्रुतिस्मृत्योर्विरोधे यदनपेक्ष्यं अपेक्ष्यमाणप्रमाणान्तरशून्यं श्रुतिवाक्यम् तदेव प्रमाणमनुष्ठापकं स्यात् । असति हि स्वप्रत्यक्षे स्मृतिमूलवेदविषयपरप्रत्यक्षानुमानं भवेदिति । ननु श्रुतिस्मृतिद्वयदर्शिनोऽनपेक्षश्रुतिबलादेवानुष्ठानसिद्धेः स्मृतिमूलवेदानुमानवैयर्थ्येऽपि पौरुषेयवाक्यतया मूलापेक्षायां तदनुमानमिति शङ्कते—**कथं तर्हीति**। अगं वा समभिव्याहाराद्वेदमधीत्य स्नायादित्यादाविव दुःश्रुतस्य स्वप्नस्य न्यायाभासस्य वा मूलत्वशङ्कासंभवान्मैवमिति पराकरोति—**व्यामोहादिति** ।

---

१. स्पर्शनेति व्याख्याने पाठः ।

ननूत्सर्गतः स्मृतेः श्रुतिमूलत्वदर्शनात् कथं मूलान्तरकल्पनेति पृच्छति—**कथमिति**। यथा अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति कालवाच्यमावास्याशब्दविरोधात् पितृयज्ञस्य दर्शाङ्गत्वस्मरणं दुःश्रुतमूलम्, तथेहापि श्रुतिविरोधदर्शनात् मूलान्तरसंभावना अयुक्तेति परिहरति—**श्रौतेति**।

ननु स्मृत्यनुमिततया श्रुत्या सह प्रत्यक्षश्रुतेः विकल्पाङ्गीकरणेऽपि विरोधस्य परिहारान्न युक्ता मूलान्तरकल्पनेति चोदयति—**अथेति**। तुल्यबलयोः विकल्पोपपत्तिं दृष्टान्तेनाह—**व्रीहीति**। बुद्धिसाम्यदार्ढ्याय दृष्टान्तान्तरं यथा व्रीहियवयोः पुरोडाशसाधने, बृहद्रथन्तरयोर्वा पृष्ठसामप्रयोगे विकल्पः, तथा स्पर्शनवेष्टनयोरप्यौदुम्बर्या विकल्पः किं न स्यादित्यर्थः, विकल्पाङ्गीकरणेऽपि स्पर्शनवेष्टनयोः युगपदनुष्ठानासंभवात् न विरोधः परिह्रियेत। सति च विरोधे स्मृतेस्तदनुमिताया वा श्रुतेर्दुर्बलतया प्रत्यक्षश्रुत्या प्रथममनुष्ठापयन्त्या बाधात् स्मृतावेव व्यामोहत्वमवतिष्ठेतेति, न विकल्पावकाश इति मन्वानो निरस्यति—**नासतीति**। व्यामोहविज्ञाने व्यामोहरूपविज्ञान इत्यर्थः, अन्यतरव्यामोहत्वावश्यंभावमेव स्फुटीकरोति—**यदि सर्वेति**। स्पर्शनम् स्पृष्ट्वोद्गायेदिति वाक्यजनितज्ञानम्। एवं विरोधापादनेन विकल्पपदवीमनारूढाया एव स्मृतेः श्रुत्यबाधमुपपाद्य, विकल्पपदवीं गताया अपि पाक्षिकेणाप्यननुष्ठापकत्वेन सर्वदैव मूलश्रुत्यदर्शनावस्थायामप्रामाण्यमुपपादयति—**विकल्पं त्विति**। ततः किं तत्राह—**तस्येति**। तथापि किमत आह—**सा चेदिति**। तदा तावत् स्मृतेः मूलश्रुत्यदर्शनाद् दुःश्रुतादिमूलतां प्रत्यक्षा श्रुतिः संभावयति, तादृश्या च स्मृत्या सकृदप्यनुमतं प्रामाण्यं न कदाचिदपि श्रौतं विज्ञानं जहाति इत्यपाक्षिकत्वमित्यर्थः। सर्ववेष्टनस्मरणस्य चाप्रामाण्यग्रस्तस्य प्रत्यक्षश्रुतिदर्शनं विना पुनरुज्जीवनासंभवादपाक्षिकत्वमित्याह—**अपाक्षिकं चेति**। चकारस्मरणं चेति सम्बन्धनीयः, स्मरणाप्रामाण्यस्यापाक्षिकत्वमुपपादयाति—**पक्ष इति**। तावच्छब्दो विकल्पवादिसम्मतिप्रदर्शनार्थः बाधितत्वादिति। सर्ववेष्टनविरोधिनः स्पर्शनस्यानुष्ठापितत्वादित्यर्थः। अस्तु तर्हि स्मृतिप्रामाण्यपक्षे मूलानुमानमत आह—**अव्यामोहे चेति**। तस्मिन् स्पर्शनविज्ञानेऽव्यामोहे सति पक्षान्तरेऽपि न शक्या श्रुतिः कल्पयितुमित्यर्थः।

ननु पक्षान्तरे स्पर्शनश्रुतेः व्यामोहत्वात् स्मृतिमूलश्रुत्यनुमानं भविष्यतीत्याशङ्क्याह—**न चेति**। असौ-स्पर्शनश्रुतिः। तत्र हेतुः—**यदिति**। निरपेक्षानुष्ठापकत्वस्येति तस्य अव्यामोहकत्वस्य। ततः किमत आह—**एकस्मिन्निति**। **श्रुतिप्रामाण्येति**। एकदाप्यनुष्ठापकतया लब्धप्रामाण्या श्रुतिः न प्रत्यक्षाश्रुत्यन्तरदर्शनमन्तरेण व्यामोहो भविष्यतीति भावः।

तुल्यत्वमुपपादयति—**न चेति**। अपि तर्हि पक्षद्वयेऽपीत्यर्थः, न च स्पर्शनश्रुतेः प्रमादपाठत्वेनाननुष्ठापकत्वं शङ्कनीयमित्याह—**निबद्धेति**। एकरूपदृढ-

सम्प्रदायविरोधादित्यर्थः। एवं श्रुतिस्मृतिप्रामाण्याप्रामाण्ययोरपाक्षिकत्वमुक्तं निगमयति—**तेनेति**। एतत्-स्पर्शनविज्ञानं पक्षे प्रमाणविज्ञानं सद्व्यामोहकल्पनया पक्षान्तरं प्रमाणाभासत्वरूपं न सङ्क्रान्तमिति गम्यत इति एकत्र योजना। इतरत्र तु एतत्स्मार्तविज्ञानं पक्षेऽप्रमाणं सद्यावन्मूलश्रुतिदर्शनं न व्यामोहपक्षात्पक्षान्तरं प्रामाण्यरूपं सङ्क्रान्तमिति किं मूलत्वं तर्हि तदानीं सर्ववेष्टनादिस्मृतेरत आह—**दुःश्रुतेति**। यथावदविचारितं वाक्यं दुःश्रुतम् स्वप्नविज्ञानम्–भ्रान्तिः, आदिशब्दान्न्यायाभासः। तुशब्दात्परं मूलशब्दाध्याहारः।

ननूत्सर्गतः स्मृतीनां श्रुतिमूलत्वसाधनात् कथं मूलान्तराशङ्का तत्राह—**न हीति**। यद्यप्यसति विरोधे स्मृतेः मूलान्तरसंभावना न निराकृतेत्याशयः, अतः श्रुतिविरोधात् श्रुतिप्रामाण्यपक्षवत् स्मृतिप्रामाण्यपक्षेऽपि न स्मार्तश्रुत्यनुमानमिति निगमयति—**तस्मादिति**। तुल्यं कारणं श्रुतिविरोधलक्षणं यस्य श्रुतिकल्पनाभावस्य तत्त्वादित्यर्थः।

इतश्च न विकल्पो युक्त इत्याह—**अपि चेति**। विकल्पानभ्युपगम इतरेतराश्रये सत्यन्यतः परिच्छेदसंभवात्, तदभ्युपगमे च तदसंभवान्न विकल्प इत्यभिप्रायः। केयमत्रेतरेतराश्रयतेति पृच्छति—**केयमिति**। उत्तरम्—**प्रमाणायामिति**। प्रमाणभूतां श्रुतिमयत इत्यर्थे प्रमाणशब्दात् परोऽयं "अय गतौ" इति धातुः प्रयुक्तः, तस्य च क्विबन्तत्वाल्लोपोव्योर्वलीति यकारलोपे शिष्यमाणकारात् परं टापि च कृते तेन पूर्वेण चोपपादाकारेण सवर्णदीर्घत्वेऽपि कृते प्रमाणायेति रूपसिद्धिः, स्पर्शनं व्यामोह इत्यत्र स्पर्शने व्यामोहः, स्मृतिः प्रमाणेत्यध्याहार्यम् स्मृतिः व्यामोह इत्यत्र स्मृतौ व्यामोहे स्पर्शनं प्रमाणमिति तत्-तस्मादेतदितरेतराश्रयद्वयं विकल्पोपगमे, इतरत्र तु चरममेव मत्वाह—**तदिति**। एवं परस्पराश्रयं प्रदर्श्य, स्वपक्षेऽन्यतः परिच्छेदमाह—**तत्रेति**। स्पर्शनस्य क्लृप्तं मूलम् न कल्प्यम्। स्वत एव प्रमाणमिति यावत् तेन स्वतःसिद्धश्रुतिप्रामाण्यापेक्षया स्मृत्यप्रमाण्यस्य स्वतःसिद्धस्यापि दृढत्वसिद्धेः नान्योऽन्याश्रयतेत्यर्थः। स्मृतेः प्रामाण्यस्य कल्प्यताधीनतया स्वतोऽप्रामाण्यात् तदपेक्षया श्रुतिप्रामाणस्य स्वतः सिद्धस्यापि निरपवादत्वसिद्धेः अपि नान्योन्याश्रयतेत्याह—**कल्प्यमिति**। निगमयति—**सोऽसाविति**। विकल्पाभ्युपगमे तु श्रुतिस्मृतिप्रमाण्याप्रामाण्ययोः इतरेतराधीनत्वेनान्यतः परिच्छेदाभावाद् दुष्परिहरमितरेतराश्रयमिति हृदयम्। तत्र स्वपक्षे दर्शितमन्यतः परिच्छेदं प्रपञ्चयन् श्रुतिप्रामाण्येतरेतराश्रये तावत् व्युत्पादयति—**कल्प्येत्यादिना**। अनवक्लृप्तम् स्वतोऽनवधारितम्, ततश्च स्वतोऽप्रामाण्यमित्यर्थः। तदप्रमा च न तया बाधश्रुतेरित्याह—**तदिति**। अबाधितश्रुतिविरोधे च न तया स्मृत्या मूलकल्पनाबाधितविषयतया स्मृतेरगमकत्वादित्याह—**तदव्यामोहादिति**। ततश्च कल्पितया श्रुत्या विरोधाभावात् प्रतिष्ठितं प्रत्यक्ष-

श्रुतिप्रामाण्यमित्यभिसन्धिः। स्मृत्यप्रामण्येतरेतराश्रये तु स्वतः प्रमाणभूतप्रत्यक्षश्रुतिविरोधे मूलानुमानमित्यप्रमाणमेव स्मृतिरित्यन्तः। परिच्छेद इति भावः, न च स्मृतेः स्वतोऽप्रामाण्याभ्युपगमे स्मृत्यधिकरणविरोधः प्रत्यक्षश्रुतिविरोधे सति यावन्मूलवेददर्शनं मूलान्तरसंभावनामात्रस्यैवाप्रामाण्यशब्देनाभिप्रेतत्वादिति ध्येयम्।

एवं स्मृत्या तदनुमितया वा श्रुत्या सह प्रत्यक्षश्रुतेः न विकल्प इत्युक्तम् तत्र परो दृष्टान्तेऽपि विकल्पानुपपत्तिमाह—**नन्विति**। स्मृत्यनुमेयश्रुतिवद्यवश्रुतेरप्रत्यक्षत्वाभावाद्युक्तो विकल्प इति, परिहरति - **सत्यमित्यादिना**।

नन्वप्रत्यक्षाया इव प्रत्यक्षाया अपि प्रत्यक्षश्रुतिविरोधादनुपपत्तिस्तुल्येति तत्राह—**नहीति**। कुतोऽत आह—**द्वयोरिति**। स्मृत्यनुमेयत्वे ह्यस्या श्रुतेः इतरप्रत्यक्षश्रुतिविरोधेन स्मृतेर्मूलान्तरसंभावनया श्रुत्यनुमानानुपपत्तिस्स्यात् द्वयोर्भावित्वेनानुमेयत्वादत्यन्ताप्रामाण्यस्य च द्वयोरेकस्य वा कल्पयितुमशक्यत्वादगत्या विकल्पाभ्युपगमान्नानुपपत्तिरित्यर्थः।

नन्विदं श्रुतिद्वयं संभूय मिश्रैः यागं विदधाति, कथमत्र विकल्पावकाशः तत्राह—**द्वे इति**। अन्यथान्यनिवृत्तिफलत्वाभावेन नियमविधित्वानुपपत्तेरिति भावः।

ननु विहायैव नियमविधित्वं मिश्रविषयत्वमेवाभ्युपगम्यतामत आह—**एकेनेत्यादिना**। यवैः व्रीहिभिरिति च निरपेक्षकरणत्वप्रतिपादकश्रुतिविरोधान्न मिश्रविषय*त्वकल्पना युक्तेति भावः।

ननु केवलयोस्साधनतावगमेऽपि भवतु वाक्यद्वयप्रामाण्याय मिश्रैरनुष्ठानमत आह—**न चेति**। एकैकेन वाक्येनावगतोऽर्थः केवलसाधनत्वरूप इत्यर्थः, तत्रापि वाक्यद्वयाप्रामाण्यतादवस्थ्यादिति भावः, गत्यन्तराभावफलमाह—**तस्मादिति**। स्मृत्यनुमेयायास्तु श्रुतेः दौर्बल्यात् न तया सह प्रत्यक्षश्रुतेः विकल्प इत्याशयः, अतश्च सर्ववेष्टनादिस्मृतेरनुमितश्रुतिमूलाया अपि प्रत्यक्षश्रुत्यपेक्षया दौर्बल्याद् यावद्वेददर्शनमननुष्ठापकत्वलक्षणमप्रामाण्यं सिद्धमिति निगमयति—**तस्माद्युक्तमिति**।[1]

एतेन या बौद्धार्हतादिस्मृतयः, तासामपि प्रत्यक्षादिमूलतायाः प्रथमे पादे निरस्तत्वात् श्रुतिमूलतायाश्च स्वयमनभ्युपगमात्, अभ्युपगमेऽपि चैत्यवन्दनादिश्रुतेरदर्शनात् तदनुमानस्य च वेदविरुद्धानुष्ठातृप्रणीतत्वेन शूद्रादिपरिगृहीतत्वेन—

---

१. उक्तमिति मूल भाष्य पुस्तके पाठः। सर्वंव्याख्याविकल्पानां द्वयमेव प्रयोजनम्। पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वेतिवार्तिकमत्रानुसन्धेयम्।

'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः' ॥

मनु. १२. श्लोक ९५

इति वेदवादिशिष्टगर्हितत्वेन लोभादिकारणान्तरदर्शनेन चासंभवात् भ्रान्त्यादिमूलत्वपरिशेषादप्रामाण्यं दर्शितमिति मन्तव्यम्, तत्र च स्मृतितत्कर्तृतत्परिग्रहीतॄणां प्रत्यक्षवेदविरोधे सत्यनपेक्ष्यं स्मृतेः श्रुत्यनुमापकतया प्रामाण्यम् । असति हि प्रत्यक्षवेदविरोधे मूलश्रुत्यनुमानमिति सूत्रं योज्यम्, म्लेच्छाचाराणां तु समुद्रयानोच्छिष्टभोजनादिरूपाणां सत्यपि कर्तृसामान्ये प्रत्यक्षस्मृतिबाधिततया मूलानुमापकत्वासंभवात् अप्रामाण्यमेवेति द्रष्टव्यम् । अप्रामाण्यफलमाह—**अतश्चेति** । आदिशब्दाद्बौद्धादिस्मृतिरपि गृह्यते अनादरणीयत्वं धर्मानुष्ठानतत्प्रमित्यङ्गत्वेनानादेयत्वम्, सत्यपि श्रुतिविरोधे कारणाग्रहणे प्रामाण्यस्य कारणग्रहणरूपे हेतुदर्शनं विरोधविशेषणत्वेन दर्शयति "हेतुदर्शनाच्च" इति सूत्रं विवृणोति—**लोभादिति,** केचिदुद्गातार इति शेषः, तल्लोभमूलकं वेष्टनं सर्ववेष्टनस्मृतेर्मूलमित्यर्थः, क्रीतराजकस्य यजमानस्य यदन्नम्, तस्येत्यर्थः, अपुंस्त्वम् स्वीयं प्रजननासामर्थ्यम् । **तत एषेति** । बुभुक्षादोषगूहनरूपकारणद्वयात् **स्मृतिद्वयमिति,** असन्मूलत्वादप्रमाणमवगम्यत इत्यर्थः ॥ २ ॥

त० वा०—सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः । शेषाणि च विद्यास्थानानि स्वार्थं प्रतिपादयन्त्युपलभ्यन्ते । मन्वादीनां चाप्रत्यक्षत्वात्तद्विज्ञानमूलमदृष्टं किंचिदवश्यं कल्पनीयम् ।

तत्र च—भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥

सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यम्, यद् दृष्टं न विरुणद्धि न वाऽदृष्टान्तरमासञ्जयति । तत्र भ्रान्तौ तावत्सम्यङ्निबद्धशास्त्रदर्शनविरोधापत्तिः, सर्वलोकाभ्युपगतदृढप्रामाण्यवादश्च । इदानींतनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुवर्तिता । तत्परिहारोपन्यासश्च मन्वादीनामित्येकादृष्टकल्पना ।

अनुभवेऽपि स एव तावदनुभवः कल्पयितव्यः । पुनश्चेदानींतनसर्वपुरुषजातिविपरीतसामर्थ्यकल्पना मन्वादेः, तच्चैतत्सर्वज्ञवादे निराकृतम् । पुरुषवाक्यपरम्पराऽप्यन्धपरम्परया निराकृता । न हि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते ।

तथा विप्रलम्भेऽपि तत्कल्पना । विप्रलिप्सा प्रयोजनम्, लोकस्य च तत्र भ्रान्तिः तस्याश्चेयन्तं कालमनुवृत्तिरित्याद्याश्रयणीयम् । उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद् दृष्टविरोधः ।

तस्मात्सर्वेभ्यश्चोदनाकल्पनैव ज्यायसी। तत्र हि तन्मात्रदृष्टाभ्युपगमः। शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते। संभाव्यते च मन्वादीनां चोदना पूर्वविज्ञानकारणत्वेन। तदर्थमेवाऽऽह—**तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानामिति।** यानि पुनरनुपपन्नवेदसम्भावनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि, तेषां मूलकल्पनावेलायामेव चोदना संभावनापदं नाऽऽरूढेति, मिथ्यात्वहेतुभूतचतुष्टयपारिशेष्यादप्रमाणत्वम्। संभावितायां पुनश्चोदनायां कारणान्तरनिषधे कृते निर्मूलत्वासंभवात्परिशेषसिद्धं चोदनामूलत्वम्।

यत्तु किमर्थं चोदना नोपलभ्यन्त इति। तत्र केचिदाहुः। नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते। यथालिङ्गादिकल्पिताः। कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्? नैष दोषः। पाठविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः। यथैव हि ग्रन्थः संप्रदायादविच्छिन्नोऽस्तित्वं भजते, तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसंप्रदायाविच्छेदसिद्धिः। तत्त्वयुक्तम्। अन्धपरम्परान्यायादेव। या हि चोदना न कदाचिदुच्चार्यते, तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम्। तथा च स्मृतेरपि सैव बन्ध्यादौहित्रतुल्यता। लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम्। तेन वरं प्रलीनश्रुत्यनुमानमेव। न च प्रलयो न संभाव्यते। दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम् न चैवं सति यत्किंचित्प्रमाणमापत्स्यते। शिष्टत्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलभ्यत्वाच्छ्रुत्यनुमानस्य।

यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु। कथमनुपलब्धिरिति चेत्? उच्यते—

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः।
नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यते॥ १६।

यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानीति, संप्रदायविनाशभीतेः। विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते। स्मार्ताश्चाऽऽचाराः केचित्क्वचित्कस्यांचिच्छाखायाम्। तत्रापि तु केचित्पुरुषमेवाधिकृत्याऽऽम्नायन्ते। येन क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते। यथा **'मलवद्वाससा सह न संवदेत'** (तै० सं० २।५।१)। **'तस्मान्न ब्राह्मणायावगुरेत्'** (तै० सं० २।६।१०)। **इत्येवमादयः।** तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्याध्यापयेयुः ततः क्रमान्यत्वात्स्वाध्यायविधिविरोधः स्यात्। अनेन च निर्देशेनान्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन्कर्मौपयिकमात्रं वा। तत्र वेदप्रलयः प्रसज्येत।

न चावश्यं मन्वादयः सर्वशाखाध्यायिनः। तं हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वाऽर्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः। न च वाक्यविशेषो

ज्ञायते । यथैव हि स्मृतेर्दृढत्वाद् भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम् । अपि च 'वेदोऽखिलो धर्ममूलं' स सर्वोऽभिहितो वेदे' इति च स्वयमेव स्मर्तृभिरात्मा बध्वा समर्पितस्तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धमतः सिद्धं वेदद्वारं प्रामाण्यम् ।

यस्तु कर्तृसामान्यात्स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः । श्रूयमाणश्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता । तस्मादर्थापत्तिरेवात्राव्यभिचारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता ।

**अस्या एव स्मृतिर्द्रढिम्न इति ।** दृढत्वात्कारणानुमानम् अथ वा दृढत्वस्य । **न हि मनुष्या इहैवेति ।** निःशेषसंस्कारच्छिदा मरणेनान्तरित्वात्कर्मफलसंबन्धानुसंधानासंभवेनोच्यते । **स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादुपपन्नो वेदसंयोगस्त्रैवर्णिकानामिति ।** चोदनामूलसंभावनापदलाभार्थम् । **विस्मरणमप्युपपद्यत इति ।** दृश्यते ह्यद्यत्वेऽप्यर्थस्मरणम्, ग्रन्थनाशश्च । यदा तु शाखान्तरेषु विद्यन्त एव ताः श्रुतयस्तदाऽपि कस्यां शाखायां काः पठ्यन्त इत्यस्यांशस्य विस्मरणम् । वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति । तद्विशेषज्ञानं पुनरनौपयिकत्वादनादर्तव्यमेव ।

**तथा प्रत्युपस्थितनियमानामिति ।** आगतमागतं निमित्तं प्रति ये नियम्यन्ते वृद्धवयःप्रत्युत्थानादयः तेषाम् । **दृष्टार्थत्वादेव प्रामाण्यमिति ।** एतदयुक्तम् ।

कुतः—

धर्मं प्रति यतोऽवेदं प्रामाण्यं प्रस्तुतं स्मृतेः ।
तस्मात्कृष्यादिवत्तेषामुपन्यासो न युज्यते ॥ १७ ।

न हि यावत्किंचिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणीक्रियते । धर्मजिज्ञासाधिकारात् । यदि च गुर्वनुगमनादीनां केवलं दृष्टार्थत्वमेव स्यात्ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्याः । स्यादेतदप्रमाणत्वेनैषामुपन्यास इति ? न । तथा सति "हेतुदर्शनाच्च" इत्यत्रोदाहर्तव्या भवेयुः । तस्माच्छ्रेयांसमिति च दर्शनं निष्फलम् । न च नियोगतः शास्त्रादृते प्राप्तिः । शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम् । तत्रास्ति नियमविधेरवकाशः । सर्वत्र च यथाकथंचिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम् । न चावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम् । तस्मात्सत्यपि दृष्टार्थत्वे संभाव्यते वेदमूलत्वम्, नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात् । अतश्च गुर्वनुगमनादेर्नैमित्तिक-

त्वादक्रियायां प्रत्यवायः, करणे च न भवति । दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि निष्पद्यते । नियमाच्चाविघ्नसमाप्त्यर्थापूर्वसिद्धिः । एवं च "आचाराद् गृह्यमाणेषु तथा स्यादित्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः । इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात् ।

यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तम्, तत् अस्मिन्विषये वार्तिकमतं पूर्वपक्षवाद्यतिशयार्थम् । एतदुक्तं भवति । यास्तावददृष्टार्थाः स्मृतयः ताः कथंचिदप्रमाणीकुर्याद्भवान्, इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्यन्तीति । सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते, तथाऽपि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवच्छ्रेयसामनैरनुगमनं दर्शयति । यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्त्येवं त्वामिति देवतास्तुतिपरे वाक्ये सिद्धवत्प्रपासद्भावः, तस्याश्च पारार्थ्यं दृश्यते । गोत्रचिह्नं शिखाकर्म । तत्राप्याचारनियमस्यादृष्टार्थत्वान्नैव तावन्मात्रमेव प्रयोजनम् । शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुम् । तेनान्य एवाभिप्रायः । कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थमवश्यं स्मर्तव्यं गोत्रम् । अतश्च तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु । तन्नियमादृष्टस्य त्वेकान्तेनैवानन्यगतित्वात्पुरुषार्थता सेत्स्यतीति । तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः ।

### अलौकिकविषये वेदमूलत्वमिति कथनम्

तत्र यावद्धर्ममोक्षसंबन्धि, तद्वेदप्रभवम् । यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम् । एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः । उपाख्यानानि त्वर्थवादेषु व्याख्यातानि । यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किंचिद्दर्शनपूर्वकम्, किंचिद्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मणक्षत्त्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसंप्रदायानुमानपूर्वकम् । भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम् ।

### शिक्षादीनां वेदमूलकत्वम्

अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् । तत्र शिक्षायां तावद्यद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम् । यत्तु तथाविज्ञानात्प्रयोगे फलविशेषस्मरणम् । मन्त्रो हीनः स्वरतो वर्णतो वेति च प्रत्यवायस्मृतिः तद्वेदमूलम् ।

एवं कल्पसूत्रेष्वर्थवादादिमिश्रशाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहारफलमर्थनिरूपणं तत्तत्प्रमाणमङ्गीकृतम् । लोकव्यवहारपूर्वकाश्च केचिदृत्विगादिव्यवहाराः सुखार्थहेतुत्वेनाऽऽश्रिताः ।

व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्षनिमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिरपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् ।

छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम् । तथा चानिष्टं श्रूयते यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति, याजयति वेत्यादि ।

ज्योतिःशास्त्रेऽपि युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसंप्रदायगणितानुमानमूलं ग्रहसौस्थ्यदौस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यापि व्याख्यातम् । ईदृशा वा विधयः सर्वत्रानुमातव्याः । ईदृशे गृहशरीरादिसंनिवेशे सत्येतदेतच्च प्रतिपत्तव्यमिति ।

मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसंप्रदायपण्डितव्यवहारैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः ।

एतेन न्यायविस्तरं व्याचक्षीत ॥

विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते ।
ते च जात्यादिभेदेन संकीर्णा लोकवर्त्मनि ॥ १८ ।
स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा ।
परीक्षकार्पितैः शक्याः प्रविवेक्तुं न तु स्वतः ॥ १९ ।
वेदोऽपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः ।
स्वार्थं साधयतीत्येवं ज्ञेयास्ते न्यायविस्तरात् ॥ २० ।

तथा च मानवेऽप्यभिहितम्—

प्रत्यक्षमनुमानं च शाब्दं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सताम् ॥

तथा—यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

इत्यादिभिस्तर्कविशुद्धिराश्रिता ।

प्रायेण च मनुष्याणामधर्मभूयिष्ठत्वात्तज्ज्ञानप्रतिबद्धाः प्रतिभास्तेषु तेषु कुमार्गेषु प्रवर्तन्ते । तत्र लोकार्थवादोपनिषत्प्रसूतैस्तर्कशास्त्रैः सर्वविप्रतिपत्तिमुखप्रदर्शनम् । तदुपपत्तयस्तद्बलाबलपूर्वकं च निश्चयद्वारं कथ्यते । अन्यथा पुनः—

प्रतिभान्त्यः स्वयं पुंसामपूर्वा ह्युपपत्तयः।
भ्रान्तिं बहुमताः सत्यः कुर्युरज्ञानबोधनात् ॥ २१ ।

जगत्सृष्टिप्रलयादिज्ञानं वेदपूर्वकमेवेति वार्तिकमतस्योपसंहारः ।

सर्वासु तु प्रदर्शितासु स्वातन्त्र्येण विशोधयन्तः काश्चिदुत्सृज्यान्याः प्रमाणीकरिष्यन्ति । यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपातादृतेऽन्यतरांशनिरूपणाशक्तेः । अवश्यं च सर्वात्मकवस्तुयुगपद्ग्रहणासम्भवात्तद्भागोपनिपातिपदविषयविवेकार्थमेकैकनिरूपणमादरेण कर्तव्यम् । अन्यथा येऽनवाप्तसामान्यविशेषाद्युपपतयः पुरुषाः ते पदप्रतिपाद्यं निष्कृष्टं वस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः । मन्त्रार्थवादोपात्ताश्च स्तुतिनिन्दास्तत्तन्नित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्यु ।

याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः। प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम् । सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम् । सर्वत्र हि तद्बलेन प्रवर्तते, तदुपरमे चोपरमतीति विज्ञानमात्रक्षणभङ्गनैरात्म्यादिवादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम् । सर्वत्र च यत्र कालान्तरफलत्वादिदानीमनुभवासंभवस्तत्र श्रुतिमूलता । सांदृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः ॥ २ ॥

( इति वार्तिकमतेन स्मृत्याचारप्रामाण्याधिकरणम् ॥ १ ॥ )

न्या० सु०—अत्र भाष्यकारेण प्रमाणं स्मृतिरिति सौत्रं प्रमाणशब्दं सिद्धान्तप्रतिज्ञानार्थत्वेन व्याख्याय, विज्ञानं हि तत्किमित्यन्यथा भविष्यतीति करणव्युत्पन्नेन विज्ञानशब्देन विज्ञानोत्पादकत्वं हेतुत्वेनोक्तं तद्व्याचष्टे—**सर्वथेति** । पक्षद्वयेऽपि विज्ञानोत्पादकत्वं तावदविप्रतिपन्नमिति हेतुत्वोपपत्त्यर्थं दर्शयितुम्—**सर्वथेत्युक्तम्** । मन्वादिस्थानां स्मरणानां पुरुषान्तरं प्रति ज्ञानोत्पादकत्वाभावमाशङ्क्य, निबन्धनद्वारेण ज्ञानोत्पादकत्वं सूचयितुम् —**सन्निबन्धना इत्युक्तम्** । विद्यमाननिबन्धना इत्यर्थः । शोभनार्थेन वा सच्छब्देन साधुनिबन्धनत्वाभिधानादसाधुशब्दभूयिष्ठनिबन्धनत्वेन शाक्यादिवन्निबन्धुर्मन्वादेरप्रत्ययितत्वानुमानं प्रत्युक्तम् । स्मृतिशब्दस्य धर्मशास्त्रेष्वेव प्रसिद्धत्वात्पुराणादीनां प्रामाण्यमिह न प्रतिपाद्यत इति कस्यचिच्छङ्का स्यात्तन्निवृत्त्यर्थं वेदाविरिक्तसमस्तविद्यास्थानविषयत्वं दर्शयितुम् —**शेषाणि च विद्यास्थानानि** । इत्युक्तं भाष्यकारेण 'पूर्वविज्ञानस्य नास्ति कारणाभावादिति कारणाभावेन स्मृतिमूलभूतविज्ञानाभावमप्रामाण्यहेतुं पूर्वपक्षोक्तमनुभाष्य तन्निराकरणार्थत्वेनानुमानं स्यादिति सूत्रावयवो अस्या एव स्मृतेरित्यादिना ग्रन्थस्त्वनुमीयत इत्यन्तेन

व्याख्यातः, तदुपपादयितुमाह मन्वादीनां चेति । प्रत्यक्षत्वे मन्वादीनां तत्स्मृतिमूलविज्ञानमूलस्य द्रष्टुं शक्यत्वाददृष्टकल्पनानुपपत्तेरप्रत्यक्षत्वादित्युक्तम् ।

ननु कल्पनानामादृष्टं विज्ञानकारणं अतत्तु चोदनाख्यमेवेति कथमध्यवसीयतेऽत आह - तत्रेति । श्लोकं व्याचष्टे—सर्वत्रैवेति । भ्रान्तेस्तावद् दृष्टानुगुण्येनासाध्यत्वमाह—तत्रेति । सम्यङ्निबद्धाच्छास्त्राद्यष्टकादीनां धर्मत्वदर्शनं तद्विरोधापत्तिरित्यर्थः । मन्वादीनामिति कर्त्तरि षष्ठी । स्मृतिग्रन्थग्राहिणः पुरुषात्प्रति स्वज्ञानस्य भ्रान्तस्यापि भ्रान्तत्वपरहारोपन्यासो मन्वादिकर्त्तृकः कल्प्यत इति शेषः । अनुभवस्याह—अनुभवेऽपीति । पुंवाक्यस्याह—पुरुषेति । विप्रलम्भनस्याह -तथेति । अनुवृत्तिहेतोर्भ्रान्तत्वपरिहारोपन्यासस्यादिशब्देनोपादानं विप्रलम्भे न केवलमनेकादृष्टकल्पनाप्रसङ्गः किं तु दृष्टप्रामाण्यविरोधोऽपीत्याह—उत्पन्नस्य चेति । चोदनायास्तु दृष्टानुगुण्येन साध्यत्वाज्ज्यायसी कल्पनेत्याह –तस्मादिति ।

ननु चोदनाकल्पने दृष्टानुगुण्यसाध्यत्वस्य हेतुत्वे, कर्त्तृसामान्यादिति सौत्रं हेत्वभिधानमनर्थकं स्यादित्याशङ्क्य सम्भावनामात्रेऽसौ हेतुर्न निर्णायक इति सूचयितुं मन्वादीनां विज्ञानस्य चोदनामूलत्वसम्भावनामाह—सम्भाव्यते चेति । एतमेवार्थं वक्ष्यमाणभाष्यारूढं करोति—तदर्थमेवाहेति । नन्वेवमप्यनेनैव हेतुना चोदनामूलनिर्णये सिद्धे किमसाधकेन सम्भावनामात्रहेतुनेत्याशङ्क्य म्लेच्छस्मृतिवैषम्यप्रदर्शनार्थः सम्भावनाहेतूपन्यास इति सूचयितुं म्लेच्छार्यस्मृत्योर्वैषम्यमाह —यानि पुनरिति । अनुभवपुंवाक्यपरम्परयोर्मिथ्यात्वहेतुतामापाद्य चतुष्टयोक्तिः ।

प्रत्यक्षानुपलब्धे चेति श्लोकोक्तं योग्यानुपलम्भविरोधं परिहर्तुमनुभाषते—यत्त्विति । परेषां परिहारं दूषयितुमुपन्यस्यति –तत्रेति । अनुच्चरितानामज्ञातत्वेनाबोधकत्वान्मूलत्वानुपपत्तिमाशङ्कते—कथमिति । मन्वादिभिरप्यस्मदादिवत्पूर्वाचार्यस्मरणान्यथानुपपत्त्यानुच्चरितानामपि ज्ञातुं शक्यत्वान्मूलत्वोपपत्तिरिति परिहरति—नैष इति । पूर्वाचार्याणामपि चोदनोपलम्भं विना कुतः स्मरणमित्याशङ्क्य पारम्पर्येणेत्युक्तम् । एवं सत्यनवस्थापत्तिमाशङ्क्य पाठाविच्छेदवदित्युक्तम् । एकपुरुषपाठस्याविश्रम्भणीयत्वेन चोदनायाथात्म्यनिश्चायकत्वायोगात्पारम्पर्याविच्छेदेनैव निश्चायकत्वमङ्गीकार्यमनादित्वाच्चानवस्थादोषाभावः तद्वदत्रापीत्याशयः । एतदेव विवृणोति—यथैव हीति । प्रतिस्मर्तृपूर्वंपूर्वाचार्यस्मरणान्यथानुपपत्त्या श्रुतिज्ञानम्, तथैव प्रतिज्ञायेत्यर्थः ।

इमं परिहारं दूषयति—तत्त्विति । अयमाशयः –यद्यप्यष्टकादिकर्त्तव्यत्वस्मरणस्य पूर्वविज्ञानायत्तत्वात्तस्य च श्रुतिज्ञानं विनानुपपत्तेर्मन्वादीनां श्रुतिज्ञानं कल्प्यते, तथाप्यनुच्चरितानां प्रत्यक्षत्वायोगाद्व्याप्त्याद्यभावेन चानुमानाद्यप्रवृत्तेर्मूलप्रमाणासम्भवात्स्वप्नादिमूलापत्तेर्न श्रुत्यस्तित्वनिश्चयोपपत्तिरिति । दृष्टान्तवैषम्यमाह—लिङ्गादीनां त्विति । स्मृतेरनित्यत्वेन पूर्वज्ञानापेक्षत्वात्तस्य चानुच्चरितश्रुतिज्ञानासम्भावेनानुपपत्तेः पारिशेष्याद् भ्रान्त्यादिमूलत्वापत्तिसूचनार्थं लिङ्गादीनां नित्यत्वाभिधानम् ।

परिहारान्तरमाह—तेनेति । नित्यत्वव्याघातापत्तेरत्राप्यपरितोषसूचनार्थं वरमित्युक्तम् । अध्येतृपरम्पराविच्छेदाभावात्प्रलयानुपपत्तिमाशङ्क्याह—न चेति । अन्यत्रासक्तिः प्रमादः तत्रानासक्तिरालस्यम् आदिशब्देन विघ्नयोगादिभिरध्यापकपुरुषक्षयाच्च स्वल्पो वेदाध्येतॄणां विषयो दृश्यत इत्यर्थः । सबीजत्वायास्य पक्षस्य पूर्वोक्तं दोषं परिहरति—न चेति ।

स्वमतमाह—यद्वेति । अस्मिन्मतेऽनुपलब्धिविरोधं परिहर्त्तुमनुभाषते—कथमिति । परिहृति–उच्यत इति । नानादेशपाठ्यमानानां शाखानां प्रमादिभिः पुरुषैस्तद्देशागमनाच्छ्रोतुमशक्तेस्तद्गतश्रुत्यनुपलब्धिसंभवः । एकशाखागतानामपि श्रुतीनां नानाप्रकरणस्थानां तत्तत् कर्तृधर्मत्वबाधेन पुरुषधर्मत्वस्य प्रमादिभिर्निर्णेतुमशक्तेः स्मृतिमूलत्वनिरूपणानुपलब्धिसम्भव इत्यर्थः । स्मर्त्तव्यास्मरणस्याभावसाधनत्वेनोपन्यस्तस्य विस्मरणमप्युपपद्यत इति भाष्ये निराकरिष्यमाणत्वात्तदुपेक्ष्य समर्पणीयासमर्पणमभावसाधनत्वेनोपन्यस्तं निराकर्त्तुमनुभाषते—यत्त्विति । निराकरोति—सम्प्रदायेति । समर्पणैः सम्प्रदायविनाशापत्तिमुपपादयति—विशिष्टेति । यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात्तामपरुध्य यजेते [तै. सं. २-५-] त्यवरोधवचनाद्दर्शपूर्णमासयोरुदक्या संवादाप्रसक्तेर्न मलवद्वाससा सह संवदेदिति प्रतिषेधः प्रकरणादुत्कृष्यते । ब्राह्मणावगोरणप्रतिषेधस्य ऋत्विगानामागानार्थं प्रसक्तावपि (देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमब्रुवन्निमन्नो यज्ञं स्वगाकुर्विति सोऽब्रवीद्वरं वृणै ये देवा ब्राह्मणोक्तो श्रद्दधानो यजातै सनियज्ञस्याशीरसदिति, तस्माद् ब्राह्मणोक्तो श्रद्दधानो यजते शंयुमेव बार्हस्पत्यं यज्ञस्याशीर्गच्छत्त्वेतन्ममेत्यब्रवीत्किं मे प्रजाया इति, योऽवगुरा‌ेत, तं शतेन यातयाद्योनि हनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पा⁀सू.नूसंगृह्णात्तावतः संवत्सरान् पितृलोकं न प्रजानादिति तस्माद् ब्राह्मणो नावगुरेत्तेन निहन्यान्न लोहितं कुर्यादेतावता हैनसा भवति इत्याद्यर्थवादात्सर्वेभ्यो वरदानागवतेरवगोरणप्रतिषेधस्य ब्राह्मणमात्रविषयत्वावसायात्प्रकरणादुत्कर्षः—कर्मौपयिकमात्रं वेति । येन यत्कर्मानुतिष्ठासितं स तदौपयिकमात्रमधीयीतेत्यर्थः ।

स्वयमपठितत्वादप्यसमर्पणमुपपद्यत इत्याह - न चेति । स्वयमपठितायाः श्रुतेः कथं मूलत्वमित्याशङ्क्याह ते हीति । यत्त्वसमर्पणे मूलविशेषस्य निर्णेतुमशक्यत्वादवश्यं समर्पणीयत्वमुक्तं तन्निराकरोति—न चेति । असिद्धं चासमर्पणम्, सामामन्येन वेदमूलत्वस्य समर्पितत्वादित्याह—अपि चेति । आत्मा वेदमूलाभिधायितया बध्वा नियम्य समर्पित इत्यर्थः ।

यत्तु वेदमूलत्वाभिधानस्य लोकवञ्चनार्थत्वशङ्कया मूलसमर्पणासामर्थ्यमुक्तम्; तन्निराकरोति—तच्चैतदिति । यथैव शिष्टत्रैवर्णिकदृढपरिग्रहान्यथानुपपत्त्या मन्वादीनां श्रुतिदर्शनं कल्प्यते, तथैव तत्कालीनानां तद्ग्रन्थपरिग्रहीतॄणामपि तत्कल्प्यमित्याशयः । सिद्धान्तमुपसंहरति—अत इति । एवं स्वमतेन दृष्टानुसाराद् दृष्टकल्पनालाघवं तर्कोपबृंहितशिष्टत्रैवर्णिकदृढपरिग्रहान्यथानुपपत्तिप्रसवयाथार्थापत्त्या वेदमूलत्वकल्पनेन स्मृतिप्रामाण्यं साधितम् । कर्तृसामान्यं तु चोदनामूलत्वसम्भावनहेतुत्वेन व्याख्यातम् ।

अन्यैस्तु व्याख्यातृभिः साक्षात् प्रामाण्यानुमाने वेदमूलत्वानुमाने वा लिङ्गत्वेन कर्तृसामान्यं व्याख्यातम्। मन्वादिस्मृतिः प्रमाणम्। वेदार्थानुष्ठातृभिरनुष्ठीयमानार्थत्वात् वेदवत्, वेदमूला वा वेदवादिस्मृतित्वात्प्रत्यक्षवेदार्थस्मृतिवत् स्मृत्यर्थो वा श्रेयोहेतुर्वेदमूलो वा वेदार्थानुष्ठातृभिरनुष्ठीयमानत्वात्।

प्रत्यक्षवेदार्थवदिति दूषयितुमुपन्यस्यति—यस्त्विति। स्वतन्त्रशब्देन सम्भावनानैरपेक्ष्यमुक्तम्। दूषयति—तस्येति। अनुमानस्य स्मृत्याचारयोस्तुल्यत्वादाचारग्रहणेन स्मृतिमप्युपलक्षयति। पठ्यमानस्य तावद्वेदवाक्यस्य श्रूयमाणस्यैव श्रोतृन्प्रति प्रमाजनकत्वम् अश्रोतुः प्रमानुपपत्तेर्लिङ्गादिकल्प्यस्यापि श्रूयमाणमन्त्रादिश्रुत्यधीनमेव प्रामाण्यं दृष्टमित्यव्यभिचारान्मन्वादिस्मृतेरपि श्रूयमाणश्रुत्यधीनमेवास्मदादीन्प्रति प्रामाण्यं प्रसज्यतेति साध्यधर्मविशेषविपरीतसाधनाद्विरुद्धत्वम्। न च मन्वादिभिः श्रूयमाणत्वात्सिद्धसाध्यताशङ्का तान्प्रति स्मृतेः प्रामाण्याभावात् प्रत्यक्षवेदार्थस्मृतौ चैवमेव, वेदवादिस्मृतित्वस्य श्रूयमाणश्रुतिमूलत्वलक्षणेन श्रुत्यधीनत्वेन सह व्याप्त्युपलब्धे धर्मविशेषविपरीतसाधनत्वम्। तदा च श्रूयमाणश्रुत्यधीनत्वापत्तेर्विरुद्धतेति योज्यम्।

कथं तर्हि सूत्रभाष्ययोरनुमानशब्दः? अत आह—तस्मादिति। एवमस्या एवेत्यादिभाष्योक्तं चोदनाकल्पनमुपपाद्यैतदेव भाष्यमवयवशो व्याचष्टे—अस्या एवेति। द्रढिम्न इति पञ्चमी, षष्ठी वेत्यर्थः। कारणविशेषाकाङ्क्षायामनुपपत्तिमनुभवस्य कारणमुक्त्वा, न हीत्यादिभाष्येणानुपपत्तिरुपपादिता। तत्र मनुष्यग्रहणस्य कर्मफलसंबन्धानुसन्धानासम्भवकारणमरणधर्मकत्वप्रदर्शनम् अस्मिश्च जन्मनि विश्वजिन्न्यायावगतां विमिश्रसुखात्मकस्वर्गाख्याष्टकादिफलोपभोगस्य मनुष्यशरीरेणासम्भवप्रदर्शनं प्रयोजनमिति च दर्शयितुं व्याचष्टे—न हीति। जन्मान्तरीयस्य कस्यचिदर्थस्यास्मरणान्निःशेषस्मृतिबीजसंस्कारनाशकत्वं मरणस्यानुमीयते। जातमात्रस्य तु स्तन्यपाने प्रवृत्तिर्याद‍ृच्छिकी प्रथमस्त्रीभोगप्रवृत्तिवत्। किं तर्हि कारणमनुमीयते? इत्यपेक्षिते ग्रन्थस्त्वनुमीयत इत्युक्त्वा, सौत्रहेतुव्याख्यानार्थं कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोरिति भाष्यकृतोक्तं तद्वेदानुमाने कर्तृसामान्यस्य हेतुत्वं दर्शयतीति भ्रान्तिं व्यावर्त्तयितुमाह—स्मृतीति।

मन्वादीनां वेदसंयोगोपपत्त्यर्थं त्रैवर्णिकत्वं विशेषणत्वेनोपात्तमुपपादयितुं (स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादित्युक्तम्। पदार्थशब्दः स्मृतिशब्देन स्मृतेः पदार्थ इति वैयधिकरण्येन संबद्ध्यते वैदिकशब्देन सामानाधिकरण्येन) वैदिकपदार्थकर्तृभिस्त्रैवर्णिकैः स्मार्त्तानां पदार्थानां क्रियमाणत्वात्तेषां चात्रैवर्णिकोक्तपदार्थाननुष्ठातृत्वस्वभावदर्शनात्स्मृतिप्रणेतृणां त्रैवर्णिकत्वं कल्प्यत इत्यर्थः।

यद्वा स्मृतिकर्तृणां मन्वादीनां वैदिकपदार्थकर्तृणां चेदानीन्तनानां शिष्टानां त्रैवर्णिकत्वेन समानत्वादिदानीन्तनवन्मन्वादीनामप्युपपन्नो वेदसंयोग इत्यर्थः। सम्भवद्वेदसंयोगत्वप्रतिपादनप्रयोजनं च चोदनाख्यस्य मूलस्य सम्भावनापदलाभ इति—चोदनेत्यनेनोक्तम्। नन्विति भाष्येणानुपलब्ध्यविरोधाच्चोदनाकल्पनानुपपत्तिमाशङ्क्यानुपलब्धमानोऽपीत्यनेन विप्र-

कीर्णशाखानेकप्रकरणस्थत्वेनोपलब्ध्ययोग्यत्वमनुपलब्धिमात्रस्य चाभावासाधनत्वादविरोध-मुक्त्वा विस्मरणमप्युपपद्यत इत्युक्तं तत्प्रलीनत्वनिमित्तानुपलम्भप्रतिपादनपरत्वेन तावत्सो-पपत्तिकं व्याचष्टे—**विस्मरणमपीति**। नित्यत्वव्याघातापत्तेस्त्वेतत्—पक्षापरितोषाद्विद्यमा-नशाखामूलत्वपक्ष एव स्मर्त्तव्यास्मरणात्तदभावमाशङ्क्य सामान्यतो वेदमूलत्वस्याभियुक्तैः स्मरणाद्विशेषस्य त्वनौपयिकत्वेनावश्यस्मर्त्तव्यत्वाभावादस्मरणमात्रस्य चाभावासाधकत्वाद-विरोधप्रतिपादनपरतया स्वमतेन व्याचष्टे—**यदा त्विति**। तदुपपन्नत्वादित्युपसंहारभाष्यं मन्वादीनां त्रैवर्णिकत्वेन सम्भवद्वेदसंयोगतया पूर्वविज्ञानोपपत्तेरिदानीन्तनानां च त्रैवर्णि-कानां स्मृतिमूलविशेषास्मरणस्यानुपलम्भस्य चोपपन्नत्वेनाभावासाधकत्वाद् ग्रन्थानुमाना-विरोधोपसंहारार्थतया स्पष्टत्वान्न व्याख्यातम्।

स्मृतिप्रामाण्ये लिङ्गदर्शनान्युपन्यस्याष्टकालिङ्गो मन्त्रो भाष्यकृतोदाहृतः—

'यां जनाः प्रतिनन्दन्ति रात्रिंधेनुमिवायतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली॥

अष्टकायै सुराधसे स्वाहेति। तस्याष्टकादेवतारातिप्रकाशकत्वादेषा वै संवत्सरस्य पत्नी यदष्टकेति संवत्सरपत्नी त्वसंस्तुष्टकाप्रकाशकत्वाच्चाष्टकालिङ्गत्वं स्पष्टमेवेति, तदपि न व्याख्यातम्।

तथेति भाष्यं व्याचष्टे—**तथेति**। आक्षिपति—**एतदिति**। श्लोकं व्याचष्टे—**न हीति**। ननु धर्माप्रामाण्यमेवानेन प्रकारेणोक्तमिति शङ्कते—**स्यादेतदिति**। निराकरोति—**तथा सतीति**। वेदमूलत्वानिराकरणार्थंस्तर्हि दृष्टार्थत्वोपन्यासो भविष्यतीत्यत आह—**न चेति**। वैदिकेष्वपि च सर्वत्र दृष्टार्थत्वस्योत्प्रेक्षितुम् शक्यत्वान्न तेनावैदिकत्वसिद्धिरित्याह—**सर्वत्र चेति**। लोकपंक्तिः-लोकोपसंग्रहः, तदुत्पादकत्वरूपादनादेर्दृष्टार्थताध्यापनादेः शिष्यादि-सहायोपादानोत्पादकत्वरूपा सवनस्थक्षत्रियवैश्यवधे ब्रह्महत्येति यागस्यात्मरक्षणोत्पादकत्व-रूपा कुटुम्बभरणस्य प्रीत्युत्पादकत्वरूपेत्यर्थः। पारमार्थिक्यपि दृष्टार्थता नावैदिकत्वसाधि-केत्याह —**न चेति**। दृष्टार्थत्वस्य वेदमूलत्वाविरोधित्वमुक्तमुपसंहरति—**तस्मादिति**।

भवत्ववधावादीनां नियमादृष्टार्थत्वाद्वेदमूलत्वं गुर्वनुगमनादीनां तु कथमित्या-शङ्क्याह—**अतश्चेति**। निष्पन्नविद्यैरप्यनुष्ठीयमानस्य गुर्वनुगमनादेर्दृष्टार्थत्वायोगादवश्य-कर्त्तव्यतान्यथानुपपत्तेरकरणनिमित्तप्रत्यवायपरिहार्यत्वावसायात्, तस्य चानन्यप्रमाणकत्वा-द्वेदमूलत्वसिद्धिरित्याशयः।

यत्तु दृष्टार्थत्वं भाष्यकृतोक्तम्, तदानुषङ्गिकमित्याह—**दृष्टं चेति**। निष्पद्यत इत्यनेनानु-षङ्गिकत्वं दर्शितम्। दृष्टार्थत्वेऽपि वा नियमस्यादृष्टार्थत्वाद्वेदमूलत्वं सेत्स्यतीत्यभिप्रायेणाह— **नियमाश्चेति**। षष्ठे च सकृदसकृदनुष्ठानविचारात्सूत्रकारस्यापि केवलदृष्टार्थत्वाभिप्रायो लक्ष्यत इत्याह—**एवं चेति**। गुरुगमनावृत्तौ तदनुगमनमावर्त्तनीयं न वेति सन्दिह्य गुरुगमनस्य निमित्तत्वाभावेऽपि, तदभावेऽनुगमनस्यासम्भवात् तत्कालेऽनुष्ठेयत्वोपपत्तेर्निमित्तत्वे प्रमाणा-

भावास्सकृदनुष्ठानेन शास्त्रार्थसिद्धेरनावृत्तिप्राप्तौ, वक्ष्यते आचारानुमितस्य विधेरधिकारिविशेषणापेक्षायामावश्यकत्वोपपत्तये गुरुगमनस्य निमित्तत्वेनाधिकारिविशेषणत्वावसायाद् भेदेन होमादिवन्नैमित्तिकत्वाद् गुर्वनुगमनस्याप्यावृत्तिः सिद्धा। कथं तर्हि दृष्टार्थत्वादेवेत्येवकारः अत आह—यत्त्विति। तथा चेति गुर्वनुगमनलिङ्गदर्शनभाष्यं तावदतिक्रम्य प्रपा इति भाष्यं न धर्मायेत्यदृष्टार्थत्वनिषेधेन प्रपादेर्गुर्वनुगमनादिवत् केवलदृष्टार्थत्वप्रतिपादकत्वेन बुद्धिस्थत्वाद्व्याचष्टे—सभेति। प्रपादिष्वपि स्मृत्यनुरूपानेकश्रुतिकल्पनौचित्यात् पूर्वभाष्यपदस्याप्यतिशयार्थत्वसूचनार्थं—यद्यपीत्युक्तम्। परोपकारश्रुतेः सर्वसाधारण्यप्रदर्शनार्थं समस्तग्रहणम्। अतिक्रान्तलिङ्गदर्शनं व्याचष्टे—तस्मादिति। प्रपालिङ्गमपि स्तुतिपरं मन्त्रावयवं व्याचष्टे—यथेति। 'स्थलयोदकम्परिगृह्णन्ती'ति जानपदकुण्डगोणस्थलेत्यादिसूत्रेणाकृत्रिमे स्थले ङीष्प्रत्ययविधानात्कृत्रिमे टाप्प्रत्ययानपवादप्रतीतेः स्थलाद्राष्ट्रस्य कृत्रिमतीरवाचित्वात्तडागलिङ्गं स्पष्टत्वान्न व्याख्यातम्।

शिखाकर्मणो दृष्टार्थत्वप्रतिपादकं गोत्रचिह्नमित्यपि भाष्यमतिशयार्थमेवेति व्याचष्टे—गोत्रेति। चतुरवत्तस्य सामान्येन विहितस्य पञ्चावत्तं भृगूणामित्यपवादाच्चतुरपञ्चावत्तविभागं कर्माङ्गम्। वशिष्ठशुनकात्रिवाध्र्यश्वानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषामिति [आप० श्रौ० सू०] द्वितीयप्रयाजविभागः ताभिर्यथर्ष्याप्राणीयादित्याप्रासूक्तविभागश्चादिशब्दोपात्तः। तदुपयोगित्वादौपचारिकी गोत्रस्य कर्माङ्गभूततोक्ता। तस्याश्चार्षसंख्याशिखाविधानाच्छिखाकल्पस्त्रिशिखपञ्चशिखत्वादिरूपश्चिह्नमिति दर्शनं चेति भाष्यं कुमारा विशिखा नानाशिखत्वद्योतकशिखाकर्मलिङ्गदर्शनप्रतिपादनार्थतया स्पष्टत्वान्न व्याख्यातम्। तेनेत्युपसंहारभाष्यस्य तात्पर्यं व्याचष्टे—तेनेति। यद्यप्यत्र वेदमूलतया स्मृतीनां धर्मप्रामाण्यं प्रतिपाद्यम्, तथाप्यर्थकामविषयासु प्रमाणान्तरमूलत्वेन प्रामाण्योपपत्तेस्तत्प्रणेतॄणामाप्तत्वावधारणाददृष्टविषयासु वेदमूलत्वं सुकल्प्यमिति दर्शयितुं सामान्यतः प्रयोजनत्वाभिधानम्। अदृष्टार्थस्मृतिप्रामाण्यं प्राधान्येनेह प्रतिपाद्यमिति सूचयितुं व्युत्क्रमेण विवेककथनम्। धर्मविशेषस्यापि मोक्षस्य ब्राह्मणपरिव्राजकवद्भेदेनोपादानम्। भाष्ये तु कर्मव्युत्पत्त्या पदार्थप्रामाण्याभिधानम्।

अनेन च भाष्येण वेदातिरिक्तसकलविद्यास्थानप्रतिपाद्यानां पदार्थानां दृष्टादृष्टप्रयोजनभेदेन मूलविवेककथनं कृतमिति दर्शयितुं पुराणेतिहासगतेषु दृष्टादृष्टोपदेशवाक्येषु तावद्धर्मशास्त्रोक्तं विवेकमतिदिशति—तथैवेति। ननूपाख्यानासत्यत्वेनेतिहासपुराणप्रणेतॄणामनाप्तत्वावसायात्कथमत्रोपदेशवाक्यानां मूलप्रमाणकल्पनमित्याशङ्क्याह—उपाख्यानानि त्विति। तेषामप्यर्थवादन्यायेन प्रयोजनत्वं प्रामाण्यं चोक्तमित्यर्थः।

पृथिवीविभागकथनस्य कथं प्रयोजनत्वप्रामाण्ययोः सिद्धिरित्यपेक्षायाह—यत्त्विति। धर्माधर्मसाधनप्रदेशो जम्बूद्वीपस्य भारतवर्षम्। तत्कथनं दर्शनपूर्वकं तदतिरिक्तफलोपभोगप्रदेशकथनम्। भारतवर्षस्य च धर्माधर्मसाधनत्वं वेदमूलम्। वंशानुक्रमणस्य प्रयोजनं मूलं चाह—वंशेति।

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

इतिदेशपरिमाणम्, निमेषकाष्ठाकलामुहूर्त्ताहोरात्रमासवर्षभेदेन च कालपरिमाणं लोकव्यवहारसिद्धयर्थम्, ज्योतिःशास्त्रव्यवहारसिद्धयर्थं च दर्शनपूर्वकम् । चन्द्रसूर्यान्तरालादिदेशपरिमाणम्, युगादिकालपरिमाणं च ज्योतिःशास्त्रव्यवहारसिद्धयर्थं गणितविषयसम्प्रदायोत्थानुमानपूर्वकमित्याह—**देशेति** । कलावधर्मभूयिष्ठाः सर्वे भविष्यन्त्यल्पीयसापि धर्मेण भूयानभ्युदयो भविष्यतीत्यादिभविष्यत्कथनस्य प्रयोजनं युगस्वभावनिबन्धनस्य धर्माधर्मानुष्ठानवैचित्र्यस्य, फलपाकवैचित्र्यस्य च ज्ञानं तत्कारणत्वेन आ घाता गच्छान् उपबर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् इत्युत्तरार्द्धर्चः (आ घा ता गच्छान् उत्तरा युगानि इति पदानि घ निश्चितम् । घा इति दीर्घश्छान्दसः । तानि उत्तराणि युगानि आगच्छान् आगमिष्यन्ति । यत्रः जामयः बालिशाः अजामि अतिरिक्तानि शास्त्रविरुद्धानि कर्माणि कृण्वन् करिष्यन्तीति नियमोक्तिः ।

अत्रेदं निरुक्तम् । आगमिष्यन्ति तान्युत्तराणि युगानि, यत्र जामयः करिष्यन्त्यजामि कर्माणि जाम्यतिरेकनामबालिशस्य वा समानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातमित्यादिर्वेदो मूलमित्याह—**भविष्यत्कथनमपीति** । नित्यवेदविषयत्वाविरोधायानादिकालप्रवृत्तत्वं युगस्वभावस्योक्तम् ।

## शिक्षाद्यङ्गानामुपयोगकथनम्

अङ्गानां मूलप्रयोजने विवेचयिष्यत्सामान्यतस्तावद्यथासम्भवं क्रत्वर्थप्रतिपादनं पुरुषार्थप्रतिपादनं च प्रयोजनम्, लोको वेदश्च मूलमित्याह—**अङ्गेति** । शिक्षायां वर्णादिस्वरूपकथनं लोकमूलं तद्विज्ञानपूर्वकस्य तूच्चारणस्य क्रत्वर्थपुरुषार्थत्वकथनं वेदमूलमित्याह—**तत्रेति** । अकारादयो वर्णाः । संवृतादीनि करणानि, उदात्तादयः स्वराः । ह्रस्वादयः कालाः । कण्ठादिस्थानान्यादिशब्देनोक्तानि ।

कल्पेषु सूत्रेषु च क्रत्वर्थपुरुषार्थाङ्गप्रधानप्रतिपादनं प्रयोजनम्, वेदश्च मूलमित्याह—**कल्पेति** । अर्थवादमन्त्रमिश्राणां विधीनामुपसंहारो-विविक्तीकरणम् । शाखान्तरविप्रकीर्णानामेकत्र सन्निवेशः । न्यायलभ्यानां तात्पर्यनिर्णयः तत्तद्विधिरूपमित्यर्थः । ये तु कल्पसूत्रेष्वृत्विगादीनां को यज्ञ इति प्रश्नोत्तरादिव्यवहाराः तेषामनुष्ठानसौकर्यादिमुखं प्रयोजनं दक्षिणा प्रश्नोत्तरादिव्यवहारणां चार्थः प्रयोजनं लोकश्चोभयत्र मूलमित्याह—**लोकेति** ।

व्याकरणे शब्दान्वाख्यानं लोकमूलं साध्वसाधुप्रयोगस्त्विष्टानिष्टहेतुत्वकथनं वेदमूलमित्याह—**व्याकरणेऽपीति** । निगमनिरुक्तयोर्लोकमूलपदार्थज्ञानप्रयोजनत्वस्य स्पष्टत्वादनुपन्यासः । छन्दोविचित्याङ्गायेत्यादिविवेककथनं लोकवेदमूलम्, तद्विज्ञानपूर्वकस्य क्रत्वर्थपुरुषार्थत्वकथनं वेदमूलमित्याह—**छन्दोविचित्यामपीति** । प्रत्यक्षा चासौ श्रुतिरित्याह—**तथा चेति** ।

ज्योतिःशास्त्रे तिथ्यादिकथनं गणितानुमेयत्वाल्लोकमूलं ग्रहसौस्थ्यादिनिमित्तेष्टानिष्टफलविपाकसूचनं तु वेदमूलमित्याह—ज्योतिशास्त्रेऽपीति । कल्पादावेकनक्षत्रे स्थिताश्चन्द्रादयः ततः प्रभृत्यात्मनो गतिविशेषेण शीघ्रमन्दत्वरूपेणान्यान्यन्यानि नक्षत्राण्युपसंक्रामन्ति, तेषां च नक्षत्रचक्रे सञ्चरतां शीघ्रमन्दत्वविशेषेण गतिपर्यायवैलक्षण्यं भवति । चन्द्रादित्यगतिविशेषावच्छिन्नस्य च कालस्य तिथिनक्षत्रव्यपदेश्यत्वाच्चन्द्रादित्यगतिविभागज्ञानेन तिथिनक्षत्रज्ञानं भवति एतावन्तश्चन्द्रादित्योर्गतिपर्याया एकस्मिन्युगे भवन्तीत्यवगतेषु तद्भागेषु संवत्सरादिष्विहेदानीं चन्द्रमा । इहेदानीमादित्य इत्येवम्, चन्द्रादित्यादिगतिविभागज्ञानस्य तिथ्यादिज्ञानोपयोगित्वम् । एतावद्भिर्युगपर्यायैः एतावन्तश्चन्द्रादित्यगतिपर्याया इति च युगपरिवर्त्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागो ज्ञायते । एतावन्तो युगपरिवर्त्ता जाता इति ज्ञातेऽस्य युगस्यैतावन्त्यहोरात्राण्यस्यैतावन्तीति समस्तातीताहोरात्रसंख्यानात्मकमहर्गणं कृत्वाऽस्य ग्रहस्येदानीमीदृशी गतिर्वर्त्तते, अस्येदृशीति ज्ञानं भवतीति युगपरिवर्त्तपरिमाणज्ञानस्य चन्द्रादित्यादिगतिविभागज्ञानोपयोगित्वम् । यथा दिवसस्याष्टमोऽयं मुहूर्त्तस्तेनास्मिन्मुहूर्त्ते नभोमध्ये सूर्य इति मुहूर्त्तसंख्यानेनादित्यस्य गतिविशेषज्ञानं भवतीत्यर्थः । यथा च प्रकृतिप्रत्यादिप्रक्रिया साधुशब्दावधारणे लिङ्गम्, तथात्र गणितम् । तस्य चास्मिन् गणिते सत्यस्मिन्देशे चन्द्रादयो भवन्तीति प्रत्यक्षेणैव केनचिदभियुक्तेन व्याप्तिं गृहीत्वा, अन्यस्मै गणितलिङ्गोपदेशे कृते तस्याप्याप्तोपदेशे कृते तस्याप्याप्तोपदेशावगतावन्यस्यानुमाने जाते स्वप्रतिपत्तिवत्परस्यापि प्रतिपत्तिं कर्तुमुपदेश इति सम्प्रदायाविच्छेदान्न निर्मूलत्वाशङ्केति दर्शयितुमविच्छिन्नेत्युक्तम्, ग्रहसौस्थित्यनिमित्तपूर्वंकृतस्य शुभकर्मणः फलविपाकः, ग्रहदौस्थित्यनिमित्तोऽशुभस्य तद्गतशब्देन सौस्थित्यदौःस्थित्यविषयतोक्ता, ज्योतिःशास्त्रे ग्रहदौःस्थित्ये शान्तिविधानात्सौस्थित्ये चोपनयनादिविधानात्तस्य च वेदमूलत्वात्कर्मफलविपाकसूचनं वेदमूलमित्यर्थः ।

ज्योतिःशास्त्रन्याये साधुमुद्रादिष्वतिदिशति—एतेनेति । पूर्वंशान्त्यादिविधानद्वारेण वेदमूलत्वमुक्तम् ।

यद्वा साक्षादेव तत्प्रतिपादका विधयोऽनुमातव्या इत्याह—ईदृशा वेति । गृहसन्निवेशो वास्तुविद्याविषयः । शरीरसन्निवेशः सामुद्रविषयः । आदिशब्दोपात्तानां ग्रहाणां सौस्थित्वदौःस्थित्यरूपः सन्निवेशो ज्योतिःशास्त्रविषयः ।

मीमांसाया धर्मज्ञानप्रयोजनत्वस्य प्रथमसूत्रेणैवोक्तत्वात्तदुपेक्ष्य लोको मूलमित्याह—मीमांसा त्विति । कथं लोकात्प्रवृत्तेत्यपेक्षिते प्रत्यक्षानुमानादिभिरित्युक्तम् प्रत्यक्षादिसिद्धत्वे शास्त्रानर्थक्यमाशङ्क्याविच्छिन्नसम्प्रदायानां पण्डितानां व्यवहारो यैरित्युक्तम् । सम्प्रदायविच्छेदस्य प्रयोजनमाह न हीति ।

मीमांसामूलप्रयोजने न्यायविस्तरेऽतिदिशति—एतेनेति । ननु प्रत्यक्षादिलक्षणपरस्य न्यायविस्तरस्य कथं धर्मज्ञानप्रयोजनत्वमित्याशङ्क्य वाक्यार्थधर्मप्रतिपत्त्युपायभूतपदार्थ-

विवेकहेतुप्रत्यक्षादिविवेचनेति श्लोकद्वयेनाह—**विषय इति**। वेदस्वरूपावधारणद्वारेणार्थस्य धर्मज्ञानोपयोगित्वमाह—**वेदोऽपीति**। प्रत्यक्षमात्रेण वेदावधारणसिद्धेरादिशब्दादानर्थक्यमाशङ्क्य विप्रकीर्णात्मकेत्युक्तम्। प्रतीकग्रहणेन मन्त्रशेषस्यानुमेयत्वात्स्वयमश्रुतस्यापि कस्यचिद्वेदभागस्याप्तवाक्यावसेयत्वाद्विश्वजिदादौ च ज्योतिष्टोमवदित्यादिवाक्यशेषस्योपमानाधीनावगतित्वात्स्वर्गकाम इत्यस्य वार्थापत्तिगम्यत्वाद्विचित्रप्रमाणगम्य इत्यर्थः। न्यायविस्तरस्य धर्मज्ञानोपयोगित्वं मनुनाप्युक्तमित्याह—**तथा चेति**। त्रयमित्युपलक्षणार्थमुक्तम्।

ननु तर्कस्य धर्मज्ञानोपयोगित्वे बौद्धादितर्काणामपि धर्मज्ञानोपयोगित्वं प्रसज्येतेत्याशङ्क्य, तेषामपि पूर्वपक्षप्रतिपादनार्थत्वेनोपयोगादनिष्टापत्त्यभावं दर्शयितुमाह—**प्रायेण चेति**। कुमार्गप्रवृत्तावधर्मवासितान्तःकरणत्वं हेतुः। निश्चितचन्द्रैक्यस्य दोषवशाद् द्विचन्द्रभ्रमोत्पादेऽपि द्वित्वानध्यवसायाद्धर्मतत्त्वज्ञानस्याधर्मवासनादोषात् कुमार्गप्रवृत्तावपि तत्राध्यवसायानुपपत्तिमाशङ्क्य -**तत्त्वज्ञानप्रतिबद्धत्वमुक्तम्**। स्वोत्प्रेक्षितत्वनिरासार्थं लोकादिमूलोपन्यासः। सर्वासां विरुद्धानां प्रतिपत्तीनां यानि मुखानि विषयास्तेषां प्रदर्शनं क्रियत इति शेषः। तेषां च मुखानामुपपत्तयः कथ्यन्त इति वक्ष्यमाणमाख्यातं विपरिणमय्याऽनुषज्यते। तासां चोपपत्तीनां बलाबलसम्प्रधारणपूर्वकं तत्त्वनिश्चयस्य द्वारनियमे चोपपत्तिरिति कथ्यत इत्यर्थः। ननु स्वोत्प्रेक्षितेनापि तर्केण तत्त्वनिश्चयोपपत्तेः, किं लोकादिप्रसूतैस्तर्कशास्त्रैरित्याशङ्क्याह—**अन्यथा पुनरिति**। भ्रान्त्युत्पादनशक्तिहेतुत्वेनोक्तं बहुजनवचनसम्मतत्वमुपपादयितुम्—**अज्ञानबोधनादित्युक्तम्**। न्यायविस्तरानभिज्ञत्वेनोपपत्तिबलाबलज्ञानरहितानां पुंसां बोधोत्पादनादित्यर्थः।

ननु न्यायविस्तरस्योपदेशशास्त्रत्वाभावात्कथं तेन बलाबलावधारणमित्याशङ्क्याह—**सर्वासु त्विति**। **स्वातन्त्र्येणेति**। प्रत्यक्षादिप्रमाणानुसारेणेत्यर्थः।

ननु धर्मप्रमाणनिरूपणार्थस्य तर्कस्योक्तेन प्रकारेणास्तु धर्मज्ञानोपयोगित्वं यस्तु सर्वं जगन्नित्यमेवेति सांख्यानां नित्यत्वैकान्तप्रतिपादनम्, बौद्धानां च सर्वं जगदनित्यमेव सर्वात्मना पृथग्भूतं चेत्यनित्यत्वपृथक्त्वैकान्तप्रतिपादनम्। अद्वैतवादिनां च सर्वेषामेकत्वैकान्तप्रतिपादनम्, सामान्यविशेषयोश्च व्यतिरेकैकान्तप्रतिपादनमौलुक्यानाम्, आदिशब्दोपात्तं वा व्यतिरेकैकान्तप्रतिपादनं सांख्यानाम्, तस्य कथं धर्मज्ञानोपयोगितेत्याशङ्क्य निष्कृष्टैकैकपदार्थांशानिरूपणार्थत्वेनोपयोगमाह—**यदपि चेति**। ननु समुग्धेनापि वस्तुना वाहनदोहनादिव्यवहारसिद्धेः किमंशनिष्कर्षेणेत्याशङ्क्य वाक्यार्थप्रतिपत्तेः पदार्थप्रतिपत्तिहेतुकत्वात्पदार्थानां च वस्त्वंशविषयत्वात्तन्निष्कर्षोऽवश्यकार्य इत्याह—**अवश्यं चेति**। एतदेव व्यतिरेकमुखेनोपपादयति —**अन्यथेति**। मन्त्रार्थवादी यः स्तुतिनिन्दालम्बननिरूपणार्थमप्येकान्तप्रतिपादनमवश्यकार्यमित्याह—**मन्त्रेति**।

ननु यैषा सुखदुःखमोहात्मकसत्वरजस्तमोरूपं प्रधानं जगत्कारणमिति प्रक्रिया स्थितिसिद्धान्तापरपर्याया सांख्यैः, पुरुष इति ब्रह्मविद्भिः, ईश्वर इति पातञ्जलीयैः परमाणव

इत्यौलुक्यै रादिशब्दात्ततत्कार्यं जगदिति यथाक्रमं सांख्यादिभिः प्रतीताः प्रतिगताः प्रतिज्ञाताङ्गीकृताः किमासां सर्वासां मूलमित्याशङ्क्याह—याश्चैता इति। सृष्टिप्रलयादिरूपेणेति प्रधानादिभ्यो जगतः सृष्टिप्रलयादिरूपेणेति प्रधानादिभ्यो जगतः सृष्टिरुत्पत्तिः, तेष्वेव च प्रलय इत्युपादनकारणत्वमुक्तम्। आदिशब्देनेश्वरस्य निमित्तकारणत्वमुक्तम्, तृतीयेत्थम्भूत लक्षणार्थी सूक्ष्माद्वटबीजात् स्थूलवृक्षोत्पत्तिदर्शनात्प्रधानादेः सूक्ष्मात् स्थूलं जगदुत्पद्यत इत्यनुमानमित्यर्थः। प्रयोजने सत्यपि वेदप्रामाण्ये स्वर्गयागादीनां साध्यसाधकत्वावबोधे कथं सूक्ष्मादपूर्वात्स्वर्गादेः स्थूलस्योत्पत्तिः सम्भवतीति हेतुकानां विचिकित्सानिवृत्तिरित्याह—प्रयोजनतेति।

सृष्टिप्रलयाङ्गीकरणस्य प्रयोजनमाह—सर्गेति। यस्मात्सत्यसति वा पुरुषकारे तद्बलेन दैवबलेन कार्यं प्रवर्त्तते, दैवोपरमे चोपरमति, सृष्ट्यादौ तु पुरुषकाराभावेऽपि दैवमात्राज्जगदुत्पत्तेः प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमे जगदुपरमते। तस्माद्दैवस्याधिकः पुरुषकारात्प्रभावः सामर्थ्यमिति मत्वा श्रौतस्मार्त्तकर्मानुष्ठाने यतितव्यमिति सृष्टिप्रलयविषयस्यापि तर्कस्य धर्मोपयोगितेति भावः।

विज्ञानमात्रादिप्रक्रियाणां मूलप्रयोजनं चाह—वि॰ानमात्रेति। निवर्त्तयितुं वादानामित्यन्वयः। एवं बाह्यतर्काणामपि कथंचिद्धर्मज्ञानोपयोगसम्भवान्नानिष्टापत्तिरित्युक्त्वा, प्रकृतं सकलं वेदातिरिक्तविद्यास्थानप्रामाण्यमुपसंहरति—इत्युपपन्नमिति। अतश्चोपसंहारभाष्ये दृष्टादृष्टप्रयोजनभेदेन मूलविवेककथनं सर्वविषयमेव योजनीयमित्याह—सर्वत्र चेति। वृश्चिकविद्याग्रहणेनायुर्वेदोपलक्षणादादिशब्देन च नीतिशास्त्राद्युपसंग्रहात्त्रैवर्णिकपरिगृहीतानामर्थकामोपयोगिनामपि विद्यास्थनानां प्रामाण्यं सूचितम्। त्रैवर्णिकापरिगृहीतानां बौद्धादिग्रन्थानां प्रामाण्याभ्यनुज्ञानाशङ्कया निषेत्स्यमानत्वात्॥ २॥

॥ इति प्रथमसर्वानवद्यकारिण्यां स्मृत्यधिकरणम्॥

भा० प्र०—'अपि वा' = पूर्वपक्ष की निवृत्ति का द्योतक है। 'कर्तृसामान्यात्' = कर्ता अर्थात् वेदोक्त कर्मों के अनुष्ठान को करने वाले एवं स्मृति-निबन्ध की रचना करने वाले की समानता अर्थात् अभिन्नता है, अतः 'प्रमाणम्' = प्रमाण, 'अनुमानम्' = अनुमान अर्थात् वेदार्थ की अनुमापक शिष्टपरिगृहीत स्मृति, 'स्यात्' = होगी। क्योंकि वेद के द्वारा विहित कर्मों का अनुष्ठान करने वाला और स्मृति कर्ता अभिन्न है, अतः शिष्टों के द्वारा परिगृहीत मनु आदि स्मृतियाँ अवश्य ही प्रमाण है। (यह सिद्धान्त पक्ष है।)

आशय यह है कि इस सूत्र में कथित 'अपि वा' इस शब्द के द्वारा पूर्व सूत्र से जो पूर्वपक्ष की उपस्थापना की गई है, उसकी निवृत्ति की जा रही है। पूर्वपक्षियों = शिष्ट व्यक्तियों के द्वारा परिगृहीत स्मृतियों के अप्रामाण्य होने का सन्देह उत्थापित किया था—वह समीचीन नहीं है। शिष्टजनों से परिगृहीत स्मृतियाँ धर्म में प्रमाण है। शिष्ट =

वेद का प्रामाण्य स्वीकार करने वाला व्यक्ति शिष्ट कहा जाता है। वे ही शिष्टगण जब वेदोक्त कर्मों के समान एक ही तरह की श्रद्धा और विश्वास के साथ स्मृति विहित कर्मों का भी अनुष्ठान करते हैं, तब स्मृति का प्रामाण्य नहीं है—यह नहीं कहा जा सकता है। परम आस्तिक वेदप्रामाण्यवादी सर्वज्ञकल्प मनु आदि त्रैवर्णिक महर्षियों ने जब उसका संग्रह किया है एवं मनु आदि के समान सर्वज्ञ सदृश महर्षियों ने भी जब वेद-वाक्यों के समान ही सभी स्मृति वचनों का भी प्रामाण्य माना है, तब इन सभी शिष्टों से परिगृहीत स्मृतियों का भी प्रामाण्य अवश्य ही मानना होगा। इन स्मृति वचनों का मूलभूत वेद वचनों के न रहने पर जब स्मृति नहीं हो सकती है, तब अर्थापत्ति के द्वारा वेदवचन का अनुमान हो सकता है। इसलिए सूत्र में स्मृति को अनुमान शब्द से कहा गया है। अनुमान जैसे प्रत्यक्ष मूलक है वैसे ही स्मृति भी प्रत्यक्ष सदृश वेदवचन मूलक है। शास्त्र मत में उपलभ्यमान वेदवचन प्रत्यक्षपद से वाच्य है, क्योंकि, जो प्रत्यक्ष के समान ही निःसन्दिग्ध रूप में अलौकिक अर्थ को विज्ञापित करता है वह स्मृतिवचन अनुमान स्थानीय है, कारण जैसे अनुमान प्रत्यक्षका आश्रयण कर पदार्थ विषयक ज्ञान को उत्पन्न कराता है, वैसे ही स्मृति भी वेदवचन का आश्रयण कर अलौकिक धर्म और अधर्म के विषय में अनुभव उत्पन्न कराती है।

यदि यह कहा जाय कि ऐसा मानने पर उसके मूलाधार भूत वेदवचन भी स्मृत होगा, अन्यथा वह वन्ध्य नारी के दौहित्र के घर के स्मरण के समान अप्रमाण होगा। इसके उत्तर में कहा गया है कि वेद की अनेक शाखाएँ थीं, जो सम्प्रति उपलब्ध नहीं है, उन शाखाओं में अवस्थित होने से स्मृति का मूलाधार वचन उपलब्ध नहीं है। वार्तिक-कार कुमारिल ने कहा कि उत्सन्नवाद को स्वीकार करना उचित नहीं है। अनुसन्धान करने पर स्मृतिवचनों का मूलाधार श्रुतिवचन दुर्लभ नहीं है। उस प्रसङ्ग में यह भी कहा जा सकता है कि श्रुतिवाक्य हैं तो स्मृतिवाक्य निरर्थक है। किन्तु यह कथन ठीक नहीं है, कारण, वेद की एक-एक शाखा विभिन्न सम्प्रदायों में आबद्ध है। उन सम्प्रदायों की गुरुशिष्य-परम्परा ने उन शाखाओं को अक्षुण्ण रूप में धारण किया है, अतः, अपनी शाखा के समान दूसरी शाखामें आस्था-स्थापन करने पर साङ्कर्य्य होने से सम्प्रदाय का ही विनाश हो जायगा। इसलिए शाखाओं में अनेक शाखाओं के ग्रहण का आदर एक सम्प्रदाय को नहीं है। अपि तु ऐसा होने पर भी अन्य शाखाओं में स्थित सर्व-साधारण के लिए अवश्य अनुष्ठेय कर्मों की उपेक्षा नहीं की गई है इसलिए मनु आदि सर्वज्ञ महर्षियों ने सभी कर्मों का सभी शाखाओं में कथन न होने से एवं सभी के लिए वे अवश्य अनुष्ठान के योग्य भी हैं, अतः सभी कर्मों को सभी शाखाओं से सङ्कलन कर स्मृति के रूप में निबद्ध कर दिया है। स्मृति का पाठ श्रुति के अध्ययन के समान विशेष नियमबद्ध न होने से उसके साथ श्रुति का साङ्कर्य्य सम्भव नहीं है। एक शाखा विशेष के सम्प्रदायबद्ध व्यक्ति साधारणतः अन्य शाखाओं का अध्ययन नहीं करते हैं अतः स्मृति का मूलभूत वहाँ के वेदवचनों को वे नहीं जान पाते हैं। इसीलिए, यह

बन्ध्या के दौहित्र के मकान के स्मरण के समान इसको नहीं कहा जा सकता है। मनु आदि महर्षि यदि वेदवचन को ही स्मृति निबद्ध न करें तो उनके समान अन्य महर्षि उनका अनुष्ठान कैसे करेंगे ? अतः यह मानना होगा कि स्मृतिवाक्य श्रुतिवाक्य के समान ही प्रमाण हैं। पूर्वोक्त स्मृति के मूलाधार श्रुतिवचनों का भाष्यकार ने स्वयं उद्धार किया है। यथा "यां जानाः प्रतिनन्दति", इस वेदमन्त्र का एवं "एषा वै सम्वत्सरस्य पत्नी यदेकाष्टका" ये अर्थवाद वाक्य स्मृति के मूल हैं। "स्थलया उदकं परिगृह्णन्ति" यह अर्थवाद तडाग स्मृति का मूलवचन है। "धन्वन्निव प्रपा असि" यह मन्त्र प्रपा स्मृति का मूल है।

भाष्य के आपातलभ्य अर्थ से यह अवगत होता है कि गुरु का अनुगमन, तडाग, प्रपा विषयक स्मृतियाँ दृष्टार्थक हैं, अर्थात् उनका दूसरे का उपकार करना आदि लौकिक प्रयोजन ही है। किन्तु वार्तिककार ने कहा है कि यह भाष्यकार का प्रौढ़िवाद मात्र है, वस्तुतः वे भी अदृष्ट जनक हैं अर्थात् धर्म के साधन हैं, किन्तु लौकिक प्रयोजनका निर्वाह उनका अविनाभूत फल है। स्मृति वेद विषयक हैं, वे धर्म में प्रमाण हैं इस प्रसङ्ग में सूत्र में सूचित अनुमान का स्वरूप निम्नलिखित है।

स्मृतियाँ, वेद मूलक हैं ( प्रतिज्ञा )

क्योंकि, वेद प्रामाण्यवादी उनका कर्ता है ( हेतु )

जो वेदप्रामाण्यवादी कर्ता से निबद्ध नहीं हैं, वे वेदमूलक नहीं हैं, यथा बौद्धादि सम्प्रदाय के शास्त्र ( उदाहरण )

इसी प्रकार स्मृतियाँ धर्म में प्रमाण है ( प्रतिज्ञा )

क्योंकि, वे वेदमूलक हैं ( हेतु )

जो वेदमूलक नहीं हैं वे धर्म में प्रमाण नहीं है, यथा बौद्ध आदि सम्प्रदाय के शास्त्र ( उदाहरण )

( स्मृति प्रामाण्याधिकरण ) ॥ २ ॥

## [ २ ] विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥ सि०

शा० भा—अथ यत्र श्रुतिविरोधस्तत्र कथम्। यथौदुम्बर्याः सर्ववेष्टनम्। 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या विरुद्धम्। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन विरुद्धम्। क्रीतराजको भोज्यान्न इति 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इत्यनेन विरुद्धम्। तत्प्रमाणम्, कर्तृसामान्यादित्येवं प्राप्ते—

ब्रूमः।

अशक्यत्वादव्यामोह इत्यवगम्यते। कथमशक्यता? स्पर्शविधानान्न सर्वा शक्या वेष्टितुं उद्गायता स्प्रष्टुं च। तामुद्गायता स्प्रष्टव्यामवगच्छन्तः केनेमं संप्रत्ययं बाधेमहि? सर्ववेष्टनस्मरणेनेति ब्रूमः।

ननु निर्मूलत्वाद्व्यामोहस्तत्स्मरणमिति वैदिकं वचनं मूलं भविष्यतीति। भवेद्वैदिकं वचनं मूलम्, यदि स्पर्शनं व्यामोहः। अव्यामोहे त्वशक्यत्वादनुपपन्नम्। यथाऽनुभवनमनुपपन्नमिति न कल्प्यते, तथा वैदिकमपि वचनम्। कथं तर्हि सर्ववेष्टनस्मरणम्? व्यामोहः। कथं व्यामोहकल्पना? श्रौतविज्ञानविरोधात्।

अथ किमर्थं नेमौ विधी विकल्प्येते, व्रीहियववद्बृहद्रथन्तरवद्वा? न नासति व्यामोहविज्ञाने विकल्पो भवति, यदि सर्ववेष्टनविज्ञानं प्रमाणम्, स्पर्शनं व्यामोहः। यदि स्पर्शनं प्रमाणम्, स्मृतिर्व्यामोहः। विकल्पं तु वदन्स्पर्शनस्य पक्षे तावत्प्रामाण्यमनुमन्यते। तस्य च मूलं श्रुतिः। सा चेत्प्रमाणमनुमता, न पाक्षिकी। पाक्षिकं च सर्ववेष्टनस्मरणं पक्षे तावन्न शक्नोति श्रुतिं परिकल्पयितुम्। स्पर्शविज्ञानेन बाधितत्वात्। ततश्चाव्यामोहे च तस्मिन्नशक्या श्रुतिः कल्पयितुम्। न चासावव्यामोहः पक्षे, पक्षे व्यामोहो भविष्यतीति। यदेव हि तस्यैकस्मिन्पक्षे मूलम्, तदेवेतरस्मिन्नपि।

एकस्मिंश्चेत्पक्षे न व्यामोहः, श्रुतिप्रामाण्यतुल्यत्वादितरत्राप्यव्यामोहः। न चासावेकस्मिन्पक्षे श्रुतिः, निबद्धाक्षरा हि सा, न प्रमादपाठ इति शक्या गदितुम्। तेन नैतत्पक्षे विज्ञानं व्यामोहात्पक्षान्तरं संक्रान्तमित्यवगम्यते। तत्र दुःश्रुतस्वप्नादिविज्ञानं मूलत्वं तु सर्ववेष्टनस्येति विरोधात्कल्प्यते। न हि तस्य सति विरोधे प्रामाण्यमभ्युपगन्तव्यमिति किंचिदस्ति प्रमाणम्। तस्माद्यथैवैकस्मिन्पक्षे न शक्या श्रुतिः कल्पयितुमेवमपरस्मिन्पक्षे तुल्यकारणत्वात्।

अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात्। केयमितरेतराश्रयता? प्रमाणायां स्मृतौ स्पर्शनं व्यामोहः, स्पर्शनं प्रमाणे, स्मृतिर्व्यामोहः। तदेतदितरेतराश्रयं भवति। तत्र स्पर्शनस्य क्लृप्तं मूलम्, कल्प्यं स्मृतेः। सोऽसावन्यतः परिच्छेदः। कल्प्यमूलत्वात्स्मृतिप्रामाण्यमनवक्लृप्तम्। तदप्रामाण्यात्स्पर्शनं न व्यामोहः। तदव्यामोहात्स्मार्तश्रुतिकल्पनाऽनुपपन्ना, प्रमाणाभावात्।

नन्वेवं सति व्रीहिसाधनत्वविज्ञानस्याप्यव्यामोहाद् यवश्रुतिर्नोपपद्येत। सत्यं नोपपद्यते, यद्यप्रत्यक्षा स्यात्। प्रत्यक्षा त्वेषा। न हि प्रत्यक्षमनुपपन्नं नामास्ति, द्वयोस्तु श्रुत्योर्भावात्। द्वे ह्येते वाक्ये। तत्रैकेन केवलयवसाधनता गम्यते, एकेन केवलव्रीहिसाधनता। न च वाक्येनावगतोऽर्थोऽपह्नूयते। तस्माद्व्रीहियवयोरुपपन्नो विकल्पो बृहद्रथंतरयोश्च। तस्मादुक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणमिति। अतश्च सर्ववेष्टनादि नाऽऽदरणीयम्॥ ३॥ श्रुतिप्राबल्याधिकरणम्।

इति भाष्यमतेन विरोधाधिकरणम्

भा० वि०—अत्रत्यं भाष्यविवरणम् २५९ पृष्ठे द्रष्टव्यम् ।

त० वा०—स्मृतिप्रामाण्यमुत्सृष्टं प्रसक्तं सर्वगोचरम् ।
सति वेदविरुद्धत्वे तदिदानीमपोद्यते ॥ २२
विरोधे त्वनपेक्षं स्यादसति ह्यनुमीयते ।
विरोधे वेदवाक्येन तेन चार्थेऽनधिष्ठिते ॥ २३

यावती स्मृतिः प्रत्यक्षवेदवाक्यविरुद्धा, तां सर्वामुदाहृत्य संप्रधार्यते किं पुनस्तादृश्यपि धर्मप्रमाणत्वेनावधार्यते, किं वा पर्युदस्यत इति । कुतः संशय इति चेत् ? तदुच्यते ।

विरोधपरिहाराद्वा सति वा तुल्यमूलतः ।
अबाधो वा भवेदस्या बाधो वा तद्विपर्ययात् ॥ २४

एकविषये विरुद्धार्थोपसंहारिणी विज्ञाने विरुध्येते, बलवदबलवत्त्यनिर्णयाच्च बाध्यबाधकभावं प्रतिपद्येते । तद्यदि शङ्कितविरोधयोरपि श्रुतिस्मृत्योः केनचित्प्रकारेण भिन्नविषयत्वेन व्यवस्था सिध्येत् । विधेयप्रतिषेध्ययोर्वा विरोधाभावात् एकस्मिन्नपि विषये समुच्चयसंभवादेकप्रयोगगतत्वासंभवाद्वोभयोः प्रामाण्याङ्गीकरणेन प्रयोगान्तरे चोभयानुग्रहः स्यादित्येवं विकल्पाश्रयणेऽप्यत्यन्तविरोधाभावात्प्रत्यक्षानुमितश्रुतिजनितज्ञानयोश्च वैदिकत्वाविशेषे तुल्यबलत्वकल्पनादुभयप्रामाण्यमुपपत्स्यते । ततो यथोपन्यस्तविषयेऽपि स्मृतिप्रामाण्यमपेक्षितव्यम् । अथ तु प्रयत्नेनान्विष्यमाणेऽपि न विषयान्तरकृता व्यवस्था, नापि प्रमेयाविरोधात्समुच्चयो नापि विकल्पेनोभयानुग्रहः, किं तर्ह्युभयपीडनादत्यन्तविरोध एव । प्रत्यक्षानुमेयश्रुत्योश्च लौकिकप्रत्यक्षानुमानवन्महान्बलविशेषस्तदा गत्यन्तराभावादुभयानुग्रहासंभवे श्रुतिबलीयस्त्वेन स्मृतिप्रामाण्यमुपेक्षणीयं भविष्यतीति ।

किं तावत्प्राप्नुयादत्र विरोधेऽपि प्रमाणता ।
अप्रामाण्यप्रसङ्गे हि मर्यादातिक्रमो भवेत् ॥ २५

अनाशङ्कितविप्रलम्भभ्रान्त्यादिमूला ह्यव्याहतवेदमूलत्वावधारणाः स्मृतयो निर्व्याजप्रामाण्याः शक्यन्ते धर्मव्यवहाराङ्गत्वेन स्थापयितुम् । यदा तु वेदविरुद्धत्व-हेतुदर्शन-परस्परविगानादिना केनचिदपि च्छलेनाऽऽसामप्रामाण्यं कल्प्यते, तदा बहुशाखाखिलप्रकरणादिभेदभिन्नेषु वेदेषु श्रुतिलिङ्गाद्यात्मकोपदेश-नामादिद्वारातिदेशात्मकविचित्रप्रमाणभागेषु को जानाति का स्मृतिः कीदृशेन वेदभागेन विरुध्यमाना कदाऽनुमास्यत इति । अतश्चैवं जाताशङ्कैर्नैव क्वचिदपि विश्वस्येत । अविश्वासाच्चात्यन्तमेव प्रामाण्यं प्रतिहन्येत ।

तथा हि—

कदाचिच्छ्रुतिमूलत्वमुक्त्वा भ्रान्त्यादिमूलता ।
स्मृतिभिः प्रतिपन्ना चेत्कस्तामिन्द्रोऽपि वारयेत् ॥ २६

एकमूलव्यवस्थायां मूलान्तरनिराक्रिया ।
अप्रामाण्यनिवृत्त्यर्थं शक्या न तदुपेक्षणे ॥ २७

किं च—परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि ।
स्मृतेःश्रुतिविरुद्धायास्ततो मूलान्तरं भवेत् ॥ २८

यदा तूदितानुदिताग्निहोत्रहोमविधिवदतिरात्रगतषोडशिग्रहणवच्च सहस्रशः श्रुतयोऽप्यसंभववद्युगपदनुष्ठानार्थतया परस्परविरुद्धा दृश्यन्ते तदा यदि नाम कासांचित्स्मृतीनां स्ववेदशाखागतवचनविपरीतार्थशाखान्तरवचनमूलानामधीतवाक्यविरोधो दृश्यतेऽतस्तावतैव सर्वशाखाप्रत्ययकर्मव्यवहारिणां स्वयमश्रुतानधीतत्वमात्रेण दृढस्मरणोपस्थापितपुरुषान्तरस्थश्रुतिनिराकरणं न शोभते चैकं प्रतिशिष्यत इति हि सर्वश्रुतीनां सर्वपुरुषान्प्रति प्रामाण्यादध्ययनवच्च स्मृतेरपि श्रुतिधारणसामर्थ्यात् ।

तस्माद्यथा विरोधेऽपि पठ्यमानप्रमाणता ।
पठितस्मर्यमाणानां तथैवेत्यवधार्यताम् ॥ २९

किं च—

अविरोधे श्रुतिर्मूलं न मूलान्तरसंभवः ।
विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम् ॥ ३०
मूलान्तरं निरस्तं च सामान्येनैव यत्पुरा ।
तदनुप्राण्यते पश्चाद्विरोधे नेत्यतिक्रिया ॥ ३१
तेनाऽऽसां श्रुतिमूलत्वं सर्वदैव व्यवस्थितम् ।
मूलान्तरप्रवेशे वा किं तत्प्रामाण्यतृष्णया ॥ ३२
किं च भ्रान्त्यादिमूलानां संभवासंभवाश्रयः ।
स्मृतीः प्रति विरुद्धोऽयं बाधपक्षो न युज्यते ॥ ३३
तेनाऽऽसां यदि वा नैव क्वचिदस्ति प्रमाणता ।
सर्वत्राव्याहता वा स्यान्न त्वर्धजरतीयता ॥ ३४
विरुद्धत्वं च जानन्ति स्मर्तारस्ताः स्मरन्ति यत् ।
वेदमूलबलं त्यक्त्वा किमन्यत्तत्र कारणम् ॥ ३५
गृह्यमाणनिमित्तत्वाद्यद्युच्येताप्रमाणता ।
उत्प्रेक्षणीयहेतुत्वात्सा सर्वत्र प्रसज्यते ॥ ३६
रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥ ३७
अदुष्टेन हि चित्तेन सुलभा साधुमूलता ।
दुष्टमूलत्वलाभस्तु भवत्याशयदोषतः ॥ ३८

का वा धर्मक्रिया यस्यां दृष्टो हेतुर्न युज्यते ।
कथंचिद्वा विरुद्धत्वं प्रत्यक्षश्रुतिभिः सह ॥ ३९
लौकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ।
यावत्किंचिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ॥ ४०
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥ ४१
तेभ्यश्चेत्प्रसरो नाम दत्तो मीमांसकैः क्वचित् ।
न च कंचन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥ ४२
प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचरे ॥ ४३
क्वचिद् दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः ।
जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम् ॥ ४४
तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् ।
एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥ ४५
यच्चाऽऽदौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम् ।
आज्ञासिद्धप्रमाणत्वं पुराणादिचतुष्टयम् ॥ ४६
तत्तथैवानुमन्तव्यं कर्तव्यं नान्तरा श्लथम् ।
सर्वं श्लथयतः सीदेद् दुर्नद्धशकटादिवत् ॥ ४७
पक्षो योऽङ्गीकृतो येन तमत्रस्यन्स निर्वहेत् ।
हारयेदन्तरा त्रस्यन्भीतोपद्रवकारिभिः ॥ ४८
वेदश्च यदि दृष्टार्थं श्रूयमाणविरोधि वा ।
न विदध्यात्ततस्तादृक्स्मृतिस्तन्मूलतां त्यजेत् ॥ ४९
यदा तु हन्तिपिष्यादिकर्म दृष्टं सहस्रशः ।
दृष्टार्थं विहितं वेदे तदा किं हेतुदर्शनैः ॥ ५०
ऋत्विग्भ्यो दक्षिणादानं तानूनप्त्रादिकर्म च ।
यदृत्विग्यजमानानां दृष्टार्थं सर्वमिष्यते ॥ ५१
तद्यद्यवैदिकं तादृक्स्यात्ततोऽन्यदवैदिकम् ।
यदा चैवंविधान्येव वेदे कर्माणि सन्ति नः ॥ ५२
तदा किं नाम दृष्टार्थं बुद्ध्या सिध्येदवैदिकम् ।
तेनाऽऽदावेव या क्लृप्ता स्मार्तानां वेदमूलता ॥ ५३
निर्वोढव्येह सैकान्तात्किमिदं खिद्यतेऽधुना ।
तस्माद्वेदविरुद्धानां दृष्टार्थानां च हेतुभिः ॥ ५४
स्मृतीनां न प्रमाणत्वं विहन्तव्यं मनागपि ।
अवशिष्टं प्रमाणत्वं सर्वासां प्राप्तमीदृशम् ॥ ५५

विरोधेऽप्यधुना युक्तमेवं प्राप्तेऽभिधीयते ।
विरोधे त्वनपेक्षं स्यात्प्रामाण्यं स्मृतिबन्धनम् ॥ ५६
अविरोधे हि वेदेन तन्मूलमनुमीयते ।
या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते ॥ ५७
सा तु स्याद् भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका ।
स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न सम्मतम् ॥ ५८
वेदमूलानुमानं च प्रत्यक्षेण विरुध्यते ।
वेदवाक्यानुमानं हि तावदेव प्रवर्तते ॥ ५९
तदर्थविषये यावत्प्रत्यक्षं नोपलभ्यते ।
प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम् ॥ ६०
न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते ।
स्मृतीनां श्रुतिलिङ्गत्वमस्ति हस्तिपदादिवत् ॥ ६१
तत्प्रत्यक्षविरुद्धत्वे तद्वदेव निवार्यते ।
तावदेव स्फुरन्त्यर्थाः पुरस्तादानुमानिकाः ॥ ६२
यावत्प्रत्यक्षशास्त्रेण मूलमेषां न कृत्यते ।
कृत्तमूलाः स्फुरन्त्योऽपि स्मृतयो न चिरायुषः ॥ ६३
निराधारत्वदोषेण शाखा इव वनस्पतेः ।
न हि साक्षात्प्रमाणत्वं स्मृतीनामुपपद्यते ॥ ६४
नान्यमूलं यतस्तत्स्यात्तत्तु मूलं न विद्यते ।
प्रत्यक्षप्रतिबद्धा हि श्रुतिर्नास्त्यानुमानिकी ॥ ६५
नैराकाङ्क्ष्यात्प्रमातॄणामनुमानं न लभ्यते ।
प्रमेयं यत्परिच्छेद्यं भवेत्केनचिदात्मना ॥ ६६
तस्य स्यात्तत्परिच्छेदात्सावकाशप्रमाणता ।
ताद्रूप्येण परिच्छिन्ने तद्विपर्ययतोऽपि वा ॥ ६७
भूयस्तस्मिन्प्रमेये हि न प्रमाणं प्रवर्तते ।
भिन्नकक्षागते ये च प्रमाणे तत्र धावतः ॥ ६८
तयोः शीघ्रेण निर्णीते मन्थरं न प्रवर्तते ।
तद्धि दूरमपि प्राप्तमेकमप्यगतं पदम् ॥ ६९
इतरेण गतेनाऽऽदावेकान्तेनैव जीयते ।
यत्र शीघ्रतरं नास्ति तस्यार्थस्यापहारकम् ॥ ७०
चिरेणापि व्रजेत्तत्र दुर्बलं न निवार्यते ।
न हि येन प्रमाणत्वं लब्धपूर्वं कदाचन ॥ ७१

तेन तत्सर्वदा लभ्यमित्याज्ञापयतीश्वरः ।
सर्वमुत्पद्यमानं हि यद्यन्येन विरोधिना ॥ ७२
न रुध्यते ततस्तस्य सिद्धिः कालेन लभ्यते ।
यस्य तूत्पद्यमानस्य मूलमेव निकृत्यते ॥ ७३
मुखं वा रुध्यते तस्य नाऽऽत्मलाभः कदाचन ।
न च यद्वलवद्रुद्धमात्मानं नैव विन्दति ॥ ७४
अविरोधेऽपि तेनाऽऽत्मा न लब्धव्यः कथंचन ।
न चापि बाधकाभावाल्लब्ध आत्मेति सर्वदा ॥ ७५
लब्धव्यः स विरोधेऽपि पूर्वसामान्यदर्शनात् ।
उत्सर्गश्चापवादश्च सर्वत्रैवोपलभ्यते ॥ ७६
तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यते ।
अपवादेन वा यस्मादुत्सर्गो बाधितः क्वचित् ॥ ७७
तस्मात्सर्वत्र बाध्योऽसावित्येतदपि नेष्यते ।
विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ॥ ७८
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ।
यो हि सामान्यदृष्टेन व्यवहारं निनीषति ॥ ७९
तृष्णाच्छेदो भवेत्तस्य मृगतृष्णाजलैरपि ।
बाधितां मृगतृष्णां वा दृष्ट्वा ह्रदगतोऽप्यसौ ॥ ८०
विप्रलम्भभयादेव न स्नानादि समाचरेत् ।
तावदेव हि तोयादिज्ञानस्येष्टा प्रमाणता ॥ ८१
न तोयं मृगतृष्णेयमिति यावन्न बुध्यते ।
अनुमानं प्रमाणं च तावदर्थेषु जायते ॥ ८२
रुध्यते विषयो यावन्नास्य प्रत्यक्षजन्मना ।
एवं स्मृतिप्रमाणत्वे तावच्छ्रुत्यनुमानजम् ॥ ८३
यावत्प्रत्यक्षया श्रुत्या विषयो नावरुध्यते ।
अतः क्वचित्प्रमाणत्वं क्वचिदप्यप्रमाणताम् ॥ ८४
व्यवस्थापयता न्यायैर्न भवेदर्धवैशसम् ।
प्रमाणत्वाप्रमाणत्वे प्रत्यक्षमृगतृष्णयोः ॥ ८५
यथा तथैव ते स्मृत्योरविरुद्धविरुद्धयोः ।
तस्मादेवं न वक्तव्यं सर्वासां वा प्रमाणता ॥ ८६
अथ वा सा न कस्याश्चिद्यदि क्वचिदनाश्रिता ।
तेन वेदविरुद्धानां स्मृतीनामप्रमाणता ॥ ८७
रुद्धश्रुत्यनुमानत्वादन्यमूला हि ता यतः ।

### तुल्यबलयोर्विकल्पशंका-निरासौ

विकल्पः किं पुनस्तासां नेष्यते श्रुतिभिः सह ॥ ८८

उच्यते—विकल्पस्याष्टदोषत्वान्न तावत्स्वभ्युपेयता ।
पाक्षिके चाप्रमाणत्वे स्मृतयः सुनिराकराः ॥ ८९

तुल्यबलविकल्पो हि तावदष्टदोषत्वादगतिकगतिन्यायेन क्वचिदेवाऽऽश्रीयते ।

### अतुल्यबलविकल्पस्यान्याय्यत्वम्

किमुत कक्षान्तरितप्रामाण्यविषयमशिष्टविकल्पः ।

तथा हि—प्रमाणपदवीं यावन्नाऽऽरोहत्येव हि स्मृतिः ।
बाध्यते तावदत्यन्तं श्रुत्याऽन्यनिरपेक्षया ॥ ९०
स्मृतेर्धर्मप्रमाणत्वं न तावत्स्वत इष्यते ।
तुल्यकक्षतया येन विकल्पपदवीं व्रजेत् ॥ ९१
पराधीनप्रमाणत्वान्न प्रमाणपदे स्थिता ।
श्रुत्या बाधितमात्राऽसौ पुनर्नोज्जीवितुं क्षमा ॥ ९२

### विकल्पस्याष्टदोषत्ववर्णनम्

तुल्यकक्षविकल्पोऽपि नाप्रामाण्येऽस्त्यकल्पिते ।
प्रमाणस्याप्रमाणत्वकल्पना च द्विदोषभाक् ॥ ९३
प्रमाणत्वं प्रतीतं यदुज्ज्वलत्तदपह्नुतम् ।
एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात् ॥ ९४
तथा तदप्रमाणत्वं यदभावप्रमाणकम् ।
भावे सत्यथ भावेन विनैव परिकल्प्यते ॥ ९५
सोऽपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् ।
अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना ॥ ९६
प्रयोगान्तरकाले तु पुनर्दोषद्वयं भवेत् ।
यदभावप्रमाणत्वं पूर्वमेतस्य कल्पितम् ॥ ९७
संप्रत्यपह्नुवानस्य दोष एको हि जायते ।
प्रत्यक्षं दृढरूपं च यत्पुरस्तान्निराकृतम् ॥ ९८
एष जायेत दोषोऽन्यस्तदुज्जीवयतः पुनः ।

### वाक्यान्तरे दोषचतुष्टयस्योपपादनम्

एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः ॥ ९९
एत एव प्रसज्येरन्द्वितीयेऽपि प्रकल्पिते ।
एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ॥ १००

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ।
व्रीहिशास्त्रप्रवृत्तौ हि यवशास्त्रेण कृष्यते ॥ १०१

श्रोता तत्र प्रवृत्तोऽपि व्रीहिशास्त्रेण कृष्यते ।
द्वाभ्यामश्वमुखीवच्च श्रुतिभ्यामभितः समम् ॥ १०२

श्रोतुराकृष्यमाणस्य बलाबलमपश्यतः ।
एकस्मिन्नुपसंहर्तुं बुद्धिं युक्त्या न पश्यतः ॥ १०३

उभयोरप्रमाणत्वं प्रतिघातात्प्रसज्यते ।
तत्र प्रामाण्ययोग्यस्य यदप्रामाण्यकल्पनम् ॥ १०४

तदनन्यगतित्वेन तथाऽप्यभ्युपगम्यते ।
सति गत्यन्तरे त्वेतन्नैव कल्पनमर्हति ॥ १०५

एकस्य वा प्रमाणत्वं परिहर्तुं न शक्यते ।
तदप्रामाण्यमात्रे तु न द्वयोरप्रमाणता ॥ १०६

सिद्धो लोकप्रवादोऽयमेकानेकविनाशिनाम् ।
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ॥ १०७

स चायमुभयोर्नाश उभयार्थपरिग्रहात् ।
मिश्रैर्वा यजमानस्य मिश्राणां विध्यदर्शनात् ॥ १०८

नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी ।
प्राप्ते चान्यनिवृत्त्यंशः फलमर्थात्प्रतीयते ॥ १०९

व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम् ।
यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते ॥ ११०

नैव व्रीहिभिरिष्टं स्याद्यवैर्न च यथाश्रुतैः ।
मिश्रैरिज्येत चेत्तत्र भवेदुभयबाधनम् ॥ १११

एवमप्रतिपत्त्यैव तुल्यैषा मिश्रतामतिः ।
तेनोभयाप्रमाणत्वाद्युक्तैकैकाप्रमाणता ॥ ११२

सेयमत्यन्तमन्याय्या द्वयोरप्यनवस्थितिः ।
अव्यवस्था न युक्ता हि व्यवस्था यत्र लभ्यते ॥ ११३

सर्वत्रैव ह्येकरूपत्वावधारणेन निरूपितरूपं व्यवहर्तुं शक्यम् ।

तेन यस्य प्रमाणत्वं प्रमाणं सर्वदाऽस्तु तत् ।
यस्यापि त्वप्रमाणत्वमप्रमाणं तदुच्यताम् ॥ ११४

तदेव तु कदाचित्प्रमाणम्, कदाचिदप्रमाणमिति न कथंचिदपि विश्रम्भः स्यात् तदेतद्व्रीहियवश्रुत्योरत्यन्तापरिहार्यत्वादवश्यमापतितम् ।

**विकल्पपदमनारूढायाः स्मृतेः एकः बाधप्रकारः**

न हि तत्रैकरूपत्वे चिह्नं किंचिद् व्यवस्थितम् ।
येनैकत्र प्रमाणत्वं स्यादन्यत्राप्रमाणता ॥ ११५
श्रुतिस्मृत्योः पुनः स्पष्टं व्यवस्थाकारणद्वयम् ।
येन श्रुतेः प्रमाणत्वं स्यात्स्मृतेश्चाप्रमाणता ॥ ११६
स्वरूपेण तयोस्तावत्प्रमाणत्वाप्रमाणते ।
ततोऽन्यापेक्षया स्यातामप्रामाण्यप्रमाणते ॥ ११७

यो यस्य स्वरूपाश्रयो धर्मः प्राप्तः, स बलवत्ता कारणान्तरेण विपर्ययं प्रतिपद्यते । न च श्रुतिजनितप्रत्ययस्य स्मृतिजनितो बाधकत्वं प्रतिपद्यते ।

स्मार्तस्य बाधकः श्रौतो बलवत्त्वात्प्रतीयते ।
प्रत्यक्षे चानुमाने प्रागेतद्धचवधारितम् ॥ ११८
श्रुतिलिङ्गे यथा चेष्टे व्यवस्थितबलाबले ।
संनिकृष्टविकृष्टार्थे तथैवेह श्रुतिस्मृती ॥ ११९
स्मृत्या प्रतीयते यावच्छ्रुत्या तावत्प्रमीयते ।
विरुद्धधर्मतामेको न च धर्मः प्रतीच्छति ॥ १२०
न च शीघ्रहृतेऽर्थेऽस्ति चिरादागच्छतो गतिः ।
अश्वैरपहृतं को हि गर्दभैः प्राप्तुमर्हति ॥ १२१
स्मृत्या चार्थं परामृश्य यावत्तद्विषयां श्रुतिम् ।
अनुमातुं प्रवर्तेत तावत्सोऽर्थोऽन्यतो गतः ॥ १२२
किं कर्तव्यमितीदं च कर्ता यावदपेक्षते ।
प्रमाणं क्रमते तावत्प्रमिते तन्न जायते ॥ १२३
युगपत्प्रमिमीयातां यदि चार्थं श्रुतिस्मृती ।
अगृहीतविशेषत्वात्स्यातां तुल्यबले ततः ॥ १२४
यद्वा यावच्छ्रुतेरर्थः साक्षादेव प्रतीयते ।
तस्मिन्नेव क्षणे मूलं कल्पयेत्स्वं स्मृतिः श्रुतिम् ॥ १२५
ततोऽर्थविप्रकर्षेऽपि प्रमाणत्वेन तुल्यता ।
भवेदेव श्रुतिस्मृत्योरर्थः श्रुतिपरिग्रहात् ॥ १२६
यतः स्मृत्या गृहीतेऽपि चिरेण श्रुतिकल्पना ।
जायते क्लृप्तया तस्मात्सा बाध्येताप्रतिष्ठिता ॥ १२७
स्मृतिमूलानपेक्षा हि स्मृतित्वादेव हीयते ।
तदपेक्षा पुनः श्रुत्या बाध्यते मूलवर्जिता ॥ १२८

एष तावद्विकल्पपदमनारूढाया एव स्मृतेरेको बाधप्रकारः ।

**विकल्पपदमारूढायास्स्मृतेः बाधप्रकारो द्वितीयः**

द्वितीयेन प्रकारेण विकल्पपदवीं गता ।
आपन्ना पाक्षिकं बाधमत्यन्तं बाध्यते स्मृतिः ॥ १२९

तद्दर्शयति—**'विकल्पं तु यवन्पक्षे तावच्छ्रुतिप्रामाण्यमभ्युपैतीति'**। तदा च स्मृत्यप्रामाण्यमवश्यंभावि, तस्याश्चाप्रामाण्यकल्पनायां न श्रुतेरिव तदध्यारोपः।

किं तु तस्याः प्रमाणत्वं श्रुतिमूलत्वकारितम् ।
यतस्तस्मादतन्मूला तदानीं साऽवधार्यते ॥ १३०

श्रुतिमूलत्वविच्छेदोत्तरकालं च प्राङ्निराकृतमूलान्तरोपप्लवादविगानस्मृतपुरुषप्रणीतत्वनिर्णयाच्च नित्यत्वद्वारनिर्मूलत्वासंभवादवश्यंभावि विप्रलम्भाभिप्रायादि किंचिदेकं मूलमापद्यते ।

श्रुतिं मुक्त्वा च यन्मूलं स्मृतेरन्यत्प्रकल्प्यते ।
तेनैवास्याः प्रमाणत्वमत्यन्तं प्रतिहन्यते ॥ १३१

व्रीहिश्रुतिपरिग्रहकाले हि यवश्रुतेरभूतमेवाप्रामाण्यमध्यारोपितम्। तत्प्रयोगान्तरवेलायां तुल्यसांप्रदायिकाम्नायमानत्वेन संनिकृष्टविप्रकृष्टार्थत्वादिविशेषाभावेन च पुनः सहजेन प्रामाण्येनाभिभूयते ।

न तु स्मृतेः प्रमाणत्वं पुनरुज्जीवितुं क्षमम् ।
विच्छिन्नश्रुतिमूलत्वाद् ग्रस्तं भ्रान्त्यादिहेतुभिः ॥ १३२

न ह्येकस्या एव स्मृतेः प्रत्यक्षश्रुत्यर्थपरिग्रहकालेऽनुमितश्रुतिमूलत्वं तत्परिग्रहाश्रयणे तु भ्रान्त्यादिमूलत्वमिति विरुद्धावधारणाऽवकल्पते । आह । सत्यं यदि प्रथममेव विकल्पकारी श्रुत्यर्थं परिगृह्य द्वितीयादिप्रयोगे स्मृत्यर्थपरिग्रहणायोपतिष्ठेत ।

ततस्त्वदुक्तमार्गेण प्रतिहन्येत सर्वदा ।
न त्वेतस्य प्रसङ्गोऽस्ति स्मृतेः पूर्वपरिग्रहे ॥ १३३

यो हि श्रुतिं प्रथममत्वान्यां श्रुतिमेवैकां पश्यति तस्याप्रतिहतश्रुत्यनुमानवृत्ते ।

न पश्चाच्छ्रूयमाणाऽपि श्रुतिः स्यात्प्रतिबन्धिका ।
गर्दभेनापनीतं हि हरेन्नाश्वश्चिराद् गतः ॥ १३४

न चैष नियमोऽस्ति जिज्ञासुभिः स्मृतिविरुद्धा श्रुतिरेव प्रथमं श्रोतव्येति ।

बहुजिज्ञासमानानां कदाचित्किंचिदापतेत् ।
पूर्वपश्चाद्विभागेन न तद्धेतुबलाबलम् ॥ १३५

आद्ये प्रपाठके येन व्रीहिशास्त्रं प्रतीयते ।
द्वितीये यवशास्त्रं च न तत्तत्प्रति दुर्बलम् ॥ १३६
स्वशाखाविहितैश्चापि शाखान्तरगतान्विधीन् ।
कल्पकारा निबध्नन्ति सर्व एव विकल्पितान् ॥ १३७
सर्वशाखोपसंहारो जैमिनेश्चापि संमतः ।
न तु पूर्वावबुद्धोऽर्थो बाधतेवोत्तरं विधिम् ॥ १३८

तस्मात्पौर्वापर्यश्रवणमनाश्रित्य 'न चैकं प्रति शिष्यत' इत्यनेन न्यायेन सर्वपुरुषान्प्रति नित्यावस्थितसमस्तपठ्यमानस्मर्यमाणवेदशाखायत्तज्ञानैर्जिज्ञासुभिरात्मीयशक्तिमात्रकारितपूर्वापरग्रहणविभागैरेकवाक्यगतपूर्वोत्तरवर्णपदवद्बलाबल -मनपेक्ष्य मातापितृप्रणीतोपदेशवन्निर्विचिकित्समेव प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा हि—

पूर्वप्राप्तौ प्रमाणत्वं परत्वेनाप्रमाणताम् ।
प्रसज्यमानिकामेवं कोऽध्यवस्येत्सचेतनः ॥ १३९
इत्थं च भ्रान्तिमूलत्वप्रसङ्गे कल्पिते स्मृतेः ।
अविरोधेऽपि हि श्रुत्या प्रामाण्यं दुर्लभं भवेत् ॥ १४०
सर्वैव श्रुतिमूलाऽतः सर्वा वा भ्रान्तिमूलिका ।
स्मृतरेवं निरूप्येत न तु स्यान्मूलसङ्करः ॥ १४१

उच्यते । यद्यपि पूर्वोपलब्धया स्मृत्या श्रुतिमनुपलभमानस्य प्रतिबन्धरहितश्रुत्यनुमानं क्रियते तथाऽपि कालान्तरे श्रुतिं श्रुत्वा तत्प्रतिपक्षस्मृतेर्बाधाध्यवसानादवश्यंभाविश्रुतिमूलत्वविच्छेदवशेन मूलान्तरसञ्चरणम् ।

ततश्च पूर्वविज्ञानं मिथ्यैतदिति चिन्तयन् ।
आदावेवाप्रमाणत्वं स्मृतेरित्यध्यवस्यति ॥ १४२

यो हि कूटकार्षापणेन कंचित्कालमज्ञो लोकमध्ये व्यवहरति न तेन विवेकज्ञानजनितव्युत्पत्तिनाऽपि तथैव व्यवहर्तव्यम् । न चास्य तदानींतनज्ञानमात्रात् बाधबुद्धिर्भवति ।

समानविषयत्वाद्धि पूर्वेषामपि बाधनम् ।
न हि तेषाममिथ्यात्वे मिथ्येदानींतनं भवेत् ॥ १४३
ननु च प्रागवस्थायां श्रुतिर्यैवानुमीयते ।
सैवेदानीं विरुद्धेति गम्यते न पुनः स्मृतिः ॥ १४४

नैतदेवम् । प्रतिप्रयोगं प्रमाणपर्यालोचनात् । यदि ह्येकप्रयोगमात्रालोचनेनैव प्रयोगान्तराण्यप्यनुतिष्ठेयुः ततो येन व्रीहिशास्त्रमप्रमाणीकृत्य यवाः परिगृह्येरन्, स यावज्जीवं तैरेव यजेतेति, नैव प्रतिपुरुषमुभाभ्यां विकल्प्यमानाभ्यां व्यवहारः

सिध्येत् । तेन यावत्प्रयोगभाविप्रमाणालोचनवशात्पूर्वानुमितां श्रुतिं क्वदचिप्यशृण्वन्पुनरपि स्मृतिमेवोपलभ्य कर्तृसामान्यलिङ्गेनैव श्रुतिमनुमिमानः प्रत्यक्षया श्रुत्याऽऽक्षिप्तचित्ततया तत्प्रामाण्येनान्यथानुपपद्यमानेन स्मृत्यप्रामाण्यं कल्पयन्पूर्वावधारितमूलव्यत्ययमेव प्रतिपद्यते न पूर्वक्लृप्तमूलस्याप्रामाण्याध्यारोपम् । अपठ्यमानतयैवास्य सुलभाज्ञानत्वात् ।

यच्चैतदनवस्थानं त्वया मां प्रति चोद्यते ।
भवतोऽपि तदस्त्येव तेनाचोद्यत्वमेकतः ॥ १४५

यदा ह्यादौ श्रुतिं श्रुत्वा स्मृतेर्नान्याऽनुमीयते ।
तदऽन्यमूलतापत्तेरेकान्तेनैव बाध्यते ॥ १४६

कालान्तरेऽपि यो बाधः स्फुटत्वेनावधार्यते ।
यत्तेनाप्यप्रमाणत्वं कृतं तन्न निवर्त्यते ॥ १४७

पूर्वंस्मृतिग्राहिणां च स्वयं बाधमचेतयमानानामपि पुरुषान्तरस्य श्रुतिश्रवणप्राथम्यबलेन बाधसंतानोऽनुवर्तत एव ।

पुरुषान्तरबाधोऽपि नैवाल्पं भ्रान्तिकारणम् ।
न हि द्विचन्द्रदिङ्मोहौ न बाध्येते नरान्तरैः ॥ १४८

ननु यवश्रुतेरपि तर्हि प्रमाणत्वेन परिगृह्यमाणायाः पुरुषान्तरबाधस्तदानीमस्तीति मिथ्यात्वप्रसङ्गः ।

उच्यते—

पठ्यमानत्वादुन्मज्जननिमज्जने ।
सर्वान्प्रति तयोस्तुल्ये विशेषोऽन्यो न गृह्यते ॥ १४९

स्मृतिस्तु यावतां पुंसां प्रथमं गोचरीभवेत् ।
तावतां सर्वदाऽभावान्नाप्रामाण्येन मुच्यते ॥ १५०

अप्रमाण्यपदं चैकमस्त्येवं प्रथमं स्मृतेः ।
तावता लब्धमिथ्यात्वान्न श्रुतिं बाधितुं क्षमा ॥ १५१

अध्यारोप्येत मिथ्यात्वमुज्ज्वलायाः श्रुतेः पुनः ।
लब्धमेव स्मृतौ तच्चेत्किमर्थं कल्प्यते श्रुतेः ॥ १५२

विरुद्धयोर्हि श्रुतिस्मृत्योर्विकल्पप्रसङ्गेनावश्यं कल्पनीयेऽन्यतरत्राप्रमाणत्वे यावच्छ्रुतौ पटाच्छादनन्यायेन कल्पयितुमारभ्यते, तावत्स्मृतौ स्वरूपाश्रयं क्लृप्तमेवोपलभ्य, संशयच्छेदे जाते न कदाचिदप्यभूताप्रामाण्याध्यारोपकल्पनोपपत्तिः ।

ननु श्रुत्यविरुद्धायाः श्रुतिमूलत्वनिश्चयः ।
अनुमानादपि प्राप्स्यन् केनचित्प्रतिबध्यते ॥ १५३

तस्मात्कारणवैषम्यान्नोभयत्रैकरूपता ।
सिध्येन्मूलव्यवस्था हि प्रतिपक्षानुसारिणी ॥ १५४

ततश्चार्धवैशसप्रसङ्गनिवृत्तिः ।

यथा—प्रमाणत्वाप्रमाणत्वे लिङ्गादीनां व्यवस्थिते ।
पूर्वैः सह विरुद्धत्वाविरुद्धत्वनिबन्धने ॥ १५५

तथेहापि व्यवस्थेष्टा न परस्परसङ्करः ।
प्रतिबन्धाभ्यनुज्ञाभ्यां श्रुत्या नास्त्येकरूपता ॥ १५६

यद्यप्यौदुम्बरीसर्ववेष्टनं धर्मशास्त्राध्येतृस्मृतिविलक्षणप्रत्यक्षश्रुत्यर्थोपसंहार-परसूत्रकारोपनिबद्धम्, तथाऽप्युपरिष्टाद्वक्ष्यमाणाल्पान्तरत्वाभिप्रायेण पुरुषोपदिष्ट-त्वाविशेषाच्च स्मृतिवदेवोदाहृतम् ।

क्रीतराजकभोज्यान्नत्ववचनं यद्यप्यथर्ववेदेऽस्ति, तथाऽपि तस्याऽऽहवनीय-संबद्धयज्ञकर्मोपकाराभावात्तदधिकृतत्रयीप्रतिपादिताग्नीषोमीयसंस्थावधिभोजनप्र-तिषेधविरोधात् "प्रकरणविशेषाद्विकृतौ विरोधि स्यात्" इत्यनेन न्यायेनाविकृता-नधिकृतबलाबलविशेषाभिप्रायेण स्मृतिपक्षनिःक्षेपाद्भाष्यकारेणोदाह्रियते ।

कृष्णकेशत्वं च यद्यप्यनवस्थितवयोवस्थाकालविशेषं जातपुत्रत्वपक्षे संदिग्ध-समावेशं च, तथाऽपि 'युवैव धर्ममन्विच्छेदि'त्येवमादिस्मरणप्रकाशितार्थं यौवना-वस्थापरिग्रहादन्ततो वा वयोर्धानतिक्रमाश्रयणादष्टाचत्वारिंशद्वर्षब्रह्मचर्यंप्रागुप-नयनसंबद्धकालस्य च वयसः सातिरेकद्विपञ्चाशच्चतुष्पञ्चाशन्मात्रसंवत्सरपरिमि-तत्वेनापरिहार्यवयोर्धानातिक्रमावश्यंभावित्वाद् व्यक्त एव विरोधो दृश्यते ।

ननु च पूर्वकृतसर्ववेष्टनोत्तरकालविहितवेष्टिताया एव स्पर्शनं संभवतीत्य-विरोधः । कथमविरोधो ? यदा स्पर्शनं नाम त्वगिन्द्रियद्वारं स्पृश्य संवेदनम् । न च वस्त्रान्तरिताया औदुम्बर्याः स्पर्शो गृह्यते । न च वस्त्रे स्पृश्यमान औदुम्बरी स्पृष्टा भवति । वस्त्रौदुम्बरीजातिव्यक्तिस्पर्शानामत्यन्तभेदात् ।

अथ संबन्धिसंस्पर्शात्स्पृष्टैवेत्यभिधीयते ।
भूमिस्पर्शेन तत्सिद्धेर्वृथा स्पर्शविधिर्भवेत् ॥ १५७

ननु भूमावौदुम्बरीबुद्ध्यभावाद्वस्त्रान्तरितायां च तद्बुद्ध्यव्यतिरेकाद् दृष्टा-न्तवैषम्यम् ।

तथा हि—वस्त्रान्तरितचाण्डालस्पर्शेऽप्यापतिते क्वचित् ।
साक्षात्स्पृष्टवदेवेष्टा सचेलस्नानशुद्धता ॥ १५८

सत्यं तत्रेष्यते स्नानं तद्वस्त्रस्पर्शकारितम् ।
अशुद्धिकारणं तद्धि चण्डालस्पर्शवन्मतम् ॥ १५९

तथा च तद्वियुक्तेऽपि वस्त्रे तत्स्पर्शदूषिते ।
स्पृश्यमाने भवत्येव दोषः संयुक्तवस्त्रवत् ॥ १६०

कथं पुनरयं धर्मशास्त्रेष्वनुपनिबद्धोऽपि चण्डालस्पृष्टवस्त्रस्पर्शननिमित्तो दोषोऽध्यवसीयते ।

कथं वा नेष्यते दोषः काष्ठलोष्टतृणादिषु ।
तत्स्पृष्टस्पृश्यमानेषु न क्रमन्तेऽत्र युक्तयः ॥ १६१

तदुच्यते—तथा काष्ठतृणादीनां मारुतादेव शुद्धता ।
स्मर्यते वाससो नैवं तोयप्रक्षालनाद्विना ॥ १६२

नन्वमेध्येन लिप्तस्य सा शुद्धिरभिधीयते ।
न लिप्तग्रहणं तत्र पाठेऽस्ति तु चिरंतने ॥ १६३

अमेध्यस्यैवं यस्मात्पठन्ति । चण्डालस्पृष्टवाससश्चास्त्येवामेध्यता । तस्मादस्ति सलिलादिशुद्धिः ।

ननु च मनुष्यस्यैव चण्डालस्पर्शनिमित्तप्रायश्चित्तविधानादशुद्धिरूपममेध्यत्वं गम्यते न द्रव्यान्तरस्य गवाश्वादेः । ततश्च वस्त्रं किं गवाश्वादिवददुष्टमुत पुरुषवद् दुष्टमिति सन्देहे गवाश्वादितुल्यमेवावधारयितुं युक्तम् ।

उच्यते—पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते ।
तस्मात्पुरुषवद्वस्त्रं न गवाश्वादिवन्मतम् ॥ १६४

यदाऽपि हि शुद्धेनैव हस्तादिना चण्डालः स्पृश्यते, गवादीनां तु चण्डालादिस्पृष्टानां स्नानप्रक्षालनविध्यभावाच्छुद्धिर्विज्ञायत इति, न तन्मध्यपातित्वम् । अतश्च नानेन प्रकारेणौदुम्बरीसंबद्धवस्त्रस्पर्शनात्तत्स्पर्शनज्ञानोपपत्तिः । यदा तु तयैवोद्गाता स्पृष्ट उद्गायेदिति विधिस्तदाऽवश्यमेवौदुम्बरीत्वं चोद्गातृशरीरं प्राप्तव्यम् । अपाश्रयणाभ्युपगमपक्षोऽपि च स्पृष्टत्वापरित्यागेनैव स्थित इति, न समस्ताच्छादितायामवकल्पते । पराश्रितमपि च वस्त्रमुद्गातुराश्रयत्वं प्रतिपद्यते । तेनैवौदुम्बर्याश्रितेनोद्गायेत् । तस्मादस्ति सर्ववेष्टनस्पर्शनयोर्विरोध इति युक्तं बाध्यबाधकव्यवस्थापनम् ।

**अथ किमर्थं नेमौ विधी विकल्प्येते इति** । स्मृतेरविधायकत्वात्स्वयमतुल्यबलत्वाच्च तदनुमितशाखान्तरपठितविधिपरिग्रहाभिप्रायेणोक्तम् । **न नासति व्यामोहविज्ञान इति ।**

पूर्वोक्तेनैव मार्गेण व्यामोहैकान्तकल्पनाम् ।
विकल्पेऽवश्यमापन्नां स्मृतावेव नियच्छति ॥ १६५

व्यामोहविज्ञानं च ज्ञानान्तरगतव्यामोहत्वावधारणम्, तद्विज्ञानगतव्यामोहरूपं वा विवक्ष्यते । तेन षष्ठीसमासः कर्मधारयो वा योज्यः । **विकल्पं तु बद-**

**ज्ञिति।** कदाचित्स्मृतिमूलश्रुतिविच्छेदाद् भ्रान्त्यादिमूलत्वमापादयति। तादृश्या च सकृदपि श्रौतं विज्ञानमनुज्ञातमध्यारोप्यमाणव्यामोहाविषयत्वान्न कदाचित्प्रामाण्यं त्यजतीत्यपाक्षिकत्वाभिधानम्। एवं केवलाप्रमाणात्वपक्षग्रहः तस्य पुनर्जीवनासंभवादपाक्षिकं च सर्ववेष्टनस्मरणमित्याह—**पाक्षिकं चेति।** विकल्पवादिसंमतपाक्षिकत्ववशादेव श्रुतिप्रामाण्यपक्षे स्मार्तश्रुतिकल्पनायामकृताया मूलान्तरसंक्रान्तेः सर्वकालाप्रमाणत्वप्रसङ्गः।

एकदाऽपि च लब्धप्रामाण्यावकाशा श्रुतिर्दुर्बलप्रतिपक्षतया न कदाचिदपि व्यामोही भविष्यतीति समर्थयमानो **'यदैव हि तस्यैकस्मिन्पक्षे मूलमि'त्याह।**

नहि प्रमादपाठत्वं शक्यं कल्पयितुं श्रुतेः।
दुःश्रुतस्वप्नविज्ञानमूलां त्वापद्यते स्मृतिः॥ १६६

**'तेन नैतत्पक्षे विज्ञानमिति'**—प्रमाणविज्ञानमभिप्रेत्योक्तम्। **व्यामोहात्पक्षान्तरमिति।** व्यामोहकल्पनातः प्रमाणाभावपक्षान्तरसंक्रमणं प्रतिषेधति। यद्वा स्मार्तज्ञानमेव पूर्वावधारितव्यामोहात्प्रामाण्यपक्षान्तरं न संक्रान्तमिति। दुःश्रुतस्वप्नादिमूलत्वेन श्रुतिविरोधं दर्शयति—**'तुल्यकारणत्वादिति'।** बलीयःप्रतिपक्षनिराकृतत्वात्सर्वदैव श्रुत्यनुमानप्रतिबन्धान्न स्मृतेः प्रामाण्यपक्षसंक्रान्तिः। **अपि चेतरेतराश्रयेऽन्यतः परिच्छेदादिति।** उपरिष्टादितरेतरविरोधविवरणाद्विरोधमेवेतरेतराश्रयमाह—

परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत्।
प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः॥ १६७

प्रमाणशब्दस्य ज्ञानसमानाधिकरणत्वेन भावोत्पन्नल्युडन्तत्वेन वा नपुंसकलिङ्गत्वाद्भेदाः प्रमाणम् स्मृतयः प्रमाणमितिवत्प्रमाणं स्मृतौ स्पर्शनं व्यामोह इति भवितव्यम्। करणविशेषविवक्षायां वाऽभिधेयलिङ्गवचनानुवृत्तौ ल्युडन्ताट्टिड्ढाणञिति ङीपि प्राप्ते प्रामाण्यं स्मृताविति प्रयोक्तव्यम्। तमिममुभयभ्रष्टं भाष्यकारप्रयोगं समर्थयमानैरेवमनुगमः कर्तव्यः।

### दुरुक्तं चिन्ताकरणेन वार्तिकलक्षणस्य योजना

प्रमाणमयते याति मूलभूतां श्रुतिं यतः।
क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते॥ १६८

तत्र यद्यपि नित्यत्वाक्क्विब्लोपः प्रथमं भवेत्।
यलोपोऽपि भवेदेव वलादिप्रत्ययाश्रयः॥ १६९

न च वर्णाश्रयत्वेन यलोपो न भविष्यति।
व्योर्वलीति यलोपो हि वलादिप्रत्ययाश्रयः॥ १७०

यद्वा योगविभागेन वेर्व्यंबस्य च लुप्यते ।

वकारश्च यकारश्चेत्येवं लोपो भविष्यति ॥ १७१

यलोपे च कृतेऽकारो यः शुद्धः परिशिष्यते ।

तदन्तावधिकात्पश्चादतष्टाप्क्रियते स्त्रियाम् ॥ १७२

अकः सवर्णदीर्घत्वं परयोरन्तरङ्गतः ।

सर्वेणापि ततः कृत्वा प्रमाणेत्यनुगम्यते ॥ १७३

तदेतदितराश्रयं भवतीत्युक्तम् ।

यद्वा श्रुत्यप्रमाणत्वात्स्मृतेः प्रामाण्यमिष्यते ।

सिद्धाच्च तत्प्रमाणत्वाच्छ्रुत्यप्रामाण्यकल्पना ॥ १७४

तथा श्रुतिप्रमाणत्वात्स्मृत्यप्रामाण्यकल्पनम् ।

तदप्रामाण्यसिद्धया च श्रुतिप्रामाण्यनिश्चयः ॥ १७५

तदिदं विकल्पवादिन उभयत्रेतरेतराश्रयत्वम् । एकान्तवादिनस्त्वन्यतरत्र ।

तत्रान्यतः परिच्छेदाद्वाच्यं हेत्वन्तरं स्फुटम् ।

भाष्यकारस्त्विहोक्त्वैवं तयोरेकैकमुक्तवान् ॥ १७६

तत्र स्पर्शनस्य क्लृप्तं मूलं कल्प्यं स्मृतेरिति ।

### समाधानम्

नैवात्यन्ताप्रकृतहेत्वन्तराभिप्रायेणान्यतः परिच्छेदोऽभिहितः । प्रकृतयोरपि चयत्कृतगितरेतराश्रयत्वं तद्व्यतिरिक्तधर्मदर्शनान्निश्चीयमाने भवत्येवान्यतः परिच्छेदः ।

स्वतः स्थितात्प्रामाणत्वाच्छ्रुतेः स्यात् क्लृप्तमूलता ॥ १७७

स्मृतेः श्रुत्यनुमापकप्रामाण्यात्कल्प्यमूलता । ततश्च प्रत्यक्षश्रुत्यप्रामाण्यकल्पनायत्तं स्मृतेः प्रामाण्यम्, तद्बलेन च श्रुत्यप्रामाण्यं कल्पयत इतरेतराश्रयत्वमपरिहार्यम् ।

न चाध्यारोप्यमाणाऽपि श्रुतेः स्यादप्रमाणता ।

न च तस्यामसिद्धायां स्मृतिप्रामाण्यसंभवः ॥ १७८

बलवन्तं पराजित्य यः प्रतिष्ठातुमिच्छति ।

हस्तिना पादयोधीव संतिष्ठेताचिरादसौ ॥ १७९

एवं तावत्स्मृतिप्रामाण्यं कल्पयन्नेव यद्वादी पराजीयते । यदा तु श्रुतिप्रामाण्यगतमितरेतराश्रयत्वमालोच्यते, तदा तत्रापि प्रतिपक्षभूतस्मृत्यप्रामाण्यापेक्षया निरपवादप्रामाण्यावधारणसिद्धेः पराधीनत्वात्पूर्वसिद्धस्मृत्यप्रामाण्यलिप्सायाम् ।

सिद्धमेवाप्रमाणत्वं स्वरूपाश्रयमादितः ।

क्षणमात्रमपि प्राप्य श्रुतिः प्रामाण्यमश्नुते ॥ १८०

तेन यत्तदाद्ये पदकेऽननुमितावस्थायां श्रुतावापातक्षणमात्रे स्मृतेरप्रामाण्यं दृश्यते, तावतैव लब्धप्रामाणत्वात् श्रुतिः सर्वदा निरपवादप्रामाण्या भवतीत्यन्तः परिच्छेदः ।

तेनैकत्र श्रुतेराद्यात्प्रामाण्यादवसीयते ।
स्मृत्यप्रामाण्यतोऽन्यत्र क्षणमात्रावधारितात् ॥ १८१
कृत्वैकमवधिं तस्मात्सिद्धमाद्ये क्षणे दृढम् ।
आनुपूर्व्या व्रजेत्तावत्सिद्धोऽपरः स्फुटः ॥ १८२

तदेकेन मार्गेण दर्शयति—**कल्प्यमूलत्वात्स्मृतिप्रामाण्यमनवक्लृप्तमित्यादि यावत्स्मार्तश्रुतिकल्पनमनुपपन्नं प्रमाणाभावादिति**। द्वितीयमार्गेऽपि श्रुतिप्रामाण्यदर्शनादारभ्य तावन्नेतव्यं यावत्तदेव निरपवादं सिद्धमिति । व्रीहियवबृहद्रथंतरविधीनां त्वनन्यगतिकत्वात्कक्षान्तरितपदका इव स्थानभेदाभावात्तुल्यबलतयाऽनवस्थितविकल्पाश्रयणं प्रागुपदिष्टमेव योज्यम् । अतो नापेक्ष्यं प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमिति ॥ ३ ॥

॥ इति भाष्यमतेन विरोधाधिकरणम् ॥

**अथ द्वितीयं विरोधाधिकरणम्**

न्या० सू०—सङ्गतिमाह—**स्मृतीति**। कथमपोद्यत इत्यपेक्षिते, सूत्रारूढं तत्स्वरूपमाह—**विरोधे त्विति**। कस्मिन्नसतीत्यपेक्षिते विरोधे वेदवाक्येनेत्युक्तम् । विरोधेऽपि वैपरीत्यपरिच्छेदात्प्रागनुपसञ्जातविरोधित्वाच्छ्रुत्यनुमानसम्भवान्न प्रत्यक्षश्रुतिः प्रागनुमानं प्रवर्त्तते मन्थरत्वादित्युक्तम् । तेन चार्थेनाधिष्ठिते इति वेदवाक्येन स्मृत्यर्थे वैपरीत्येनापरिच्छिन्ने परिच्छेदात्प्रागित्यर्थः । सङ्गतिमुक्त्वा विषयप्रदर्शनपूर्वकं सन्देहमाह—**यावतीति**। सम्प्रधार्यत इत्यनेन यत्र तु श्रुतिविरोधः तत्र कथमिति भाष्यगतः कथं शब्दः सन्देहप्रदर्शनार्थत्वेन व्याख्यातः । अकथिते च विषये सन्देहस्य वक्तुमशक्यत्वादेतदेव भाष्यं विषयकथनार्थमपीति वक्ष्यमाणोदाहरणभाष्यानादरायोदाहृत्येत्यनेन सूचितम् । यावन्तीत्यादिना चानादरकारणमुक्तम् । पर्युदस्यत इत्यनेनापवादत्वं दर्शितम् । निषेधस्य विकल्पापादकत्वेनापवादत्वायोगात् । प्रश्नपूर्वकं सन्देहहेतुमाह—**कुत इति**। ननु कथं प्रतीयमानस्य विरोधस्य परिहारः । कथं वा तस्मिन्सति बाधमन्तरेण गतिरित्याशङ्क्य सामान्यन्यायप्रदर्शनपूर्वकमुभयमुपपादयति—**एकविषये इति**। विचाराविषयत्वापत्तेर्विरोधपरिहारेण पूर्वपक्षो न युक्त इति शङ्कितविरोधयोरपीत्युक्तम्—**केनचित्प्रकारेणेति**।

वेष्टनस्मृतेर्द्वित्र्यङ्गुलव्यतिरिक्तविषयत्वात्स्पर्शश्रुतेश्च तन्मात्रविषयत्वात्, राजक्रयाग्निषोमीयावध्योश्चापद्विषयत्वात्, अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतिकृष्णकेशाधानश्रुत्योश्च गार्हस्थ्यायोग्यायोग्यविषयत्वादित्यर्थः । विधेयप्रतिषेध्ययोर्वेत्यनेन सत्यप्येकविषयत्वे विरुद्धार्थोपसंहारित्वाभावादपि विरोधपरिहारः—**सम्भवतीत्युक्तम्**।

राजक्रयादूर्ध्वं विधेयस्याभोजनसङ्कल्पस्य प्रतिषेध्यस्य च राजक्रयात्प्राग्भोजनस्य विरोधाभावेनैकस्मिन्नपि दीक्षितान्नरूपे विषये समुच्चयसम्भवादित्यर्थः। स्पर्श-वेष्टनयोः कृष्णकेशाधानाद्याचत्वारिंशद्वर्षब्रह्मचर्ययोरप्येकविधानेनार्थादितरप्रतिषेधम-भिप्रेत्य वेष्टिताया अपि स्पर्शसम्भवात् कृष्णकेशत्वस्य चानवस्थितवयोऽवस्थां कालविशेष-त्वेनाद्याचत्वारिंशद्वर्षब्रह्मचर्योत्तरकालमपि कस्मिंश्चित्पुरुषे सम्भवाद्विरोधपरिहारो वक्तुं शक्यते। सति वा तुल्यमूल इत्येतद्व्याख्यातुम्—एकप्रयोगेत्याद्युक्तम्। विकल्पाश्रयणेऽप्यु-भयप्रामाण्यमुपपत्स्यत इत्युक्ते विरोधिनोः समावेशायोगात्कथमुभयप्रामाण्यमित्यशङ्क्य—अत्यन्तविरोधाभावादित्युक्तम्। कथं विरोधाभाव इत्याशङ्क्योभयोः प्रामाण्याङ्गीकरणे-नेत्युक्तम्। प्रामाण्यशब्देनात्रानुष्ठानलक्षणफलानपहारोऽभिप्रेतः। समुच्चय एव तर्हि कस्मा-न्नेष्यत इत्याशङ्क्यैकप्रयोगगतत्वासम्भवादित्युक्तम्। कथं तर्हि फलानपहार इत्याशङ्क्य प्रयोगान्तरे चोभयानुग्रहः स्यादित्युक्तम्। प्रत्यक्षानुमेयश्रुत्योरतुल्यबलत्वाद्विकल्पासम्भव-माशङ्क्य—प्रक्षेत्याद्युक्तम्।

समस्तफक्किकायोजनं त्वेवं-यद्याशङ्कितविरोधयोरपि भिन्नविषयत्वेन व्यवस्था सिद्ध-येद्यदि वैकस्मिन्नपि विषये विधेयप्रतिषेध्ययोर्विरोधाभावेन समुच्चयसम्भवादुभयप्रामाण्य-मुपपत्स्यते, एकप्रयोगगतत्वासम्भवाद्विकल्पाश्रयणेऽपि, यद्युभयप्रामाण्यमुपपत्स्यते, ततो विरोधविषयेऽपि स्मृतिप्रामाण्यमादर्त्तव्यमिति सिद्धान्तसम्भवाभिधानार्थं बाधो वा तद्विपर्य-यादिति, यदुक्तम्—तद्विवृणोति। अथ त्विति। महान् बलाबलविशेष इति, महच्छब्देन प्रत्यक्षश्रुतिविरुद्धाया श्रुतेरनुमानमेव नास्तीति सूचितम्। लौकिकप्रत्यक्षानुमानवदिति दृष्टान्तेन चैतदेव प्रकटितं प्रत्यक्षविरोधे त्वनुमानस्योत्पत्तिरेव प्रतिबद्ध्यते। यथोक्तं मूले तस्य ह्यनुत्पन्नपूर्वेण विषयो हृत इति।

पूर्वपक्षमारभते—किं तावदिति। अन्यथा ह्यविरोधेऽप्यप्रामाण्यप्रसङ्गे सत्यप्रामण्येन विरोधमर्यादातिक्रमात्पूर्वाधिकरणसिद्धान्तः प्रत्युद्ध्येतेत्यर्थः एतदेवोपपादयति—अना-शङ्कितेति। अतिप्रसक्तिप्रदर्शनार्थं हेतुदर्शनाद्युपन्यासः। आदिशब्देन पूर्वानुभवपारतन्त्र्य-मभिप्रेतम्। खिलानि-परिशिष्टानि। शाखाश्च खिलानि-प्रकरणानि वा। आदिशब्दोक्तानि काण्डानि। तेषां ये बहवो भेदाः तैर्भिन्ने त्विति विग्रहः लिङ्गादीत्यादिशब्देन समस्तोपदेश-प्रामाण्याभिधानम्। नामादीत्यादिशब्देनातिदेशकवचनाभिधानम्। श्रुतिलिङ्गाद्यात्मकश्चो-पदेशो नामादिद्वारश्चातिदेशः तदात्मका विचित्राः प्रमाणभागा येषां वेदानामिति विग्रहः।

ननु विरोधाशङ्कानिराकरणेनाऽन्यत्र प्रामाण्यस्याध्यवसातुं शक्यत्वात्कथं सर्वत्र प्रामा-ण्यप्रतिघातापत्तिरित्याशङ्क्याह—तथा हीति। ननु त्वत्पक्षे कथं भ्रान्त्यादिमूलत्ववारण-मत आह--एकेति।

एवं तावत् (स्थिततदुपेक्षणे एकमूलव्यवस्थोपेक्षणे अप्रामाण्यनिवृत्त्यर्थं मूलान्तरनिरा-क्रिया न शक्येत्यन्वयः। सिद्धान्तिमते स्मृत्यधिकरणसिद्धान्तः)। सिद्धान्तहानिभयाद्वि-रोधेऽपि, वेदमूलत्वं न निराकार्यमित्युक्तम्। इदानीं विरोधो मूलभूतवेदनिराकरणं कर्त्तु-

मपि न शक्नोत्यनैकान्तिकत्वादित्याह—किं चेति। श्लोकं व्याचष्टे—यदा त्विति। कल्पितस्यापि वचनस्य शाखान्तरीयत्वेनानादराशङ्का निराकर्त्तुं सर्वशाखाप्रत्ययकर्मव्यवहारिणामिति। यदुक्तं यद्वयाचष्टे—न चेति। न च प्रमाणाभावेनाकल्पनामिति यद् दृढस्मरणोपस्थापितशब्देनोक्तम्, तदुपपादयति—अध्ययनवच्चेति। न शोभत इत्यनेनोभयोरपि पञ्चम्योरन्वयः। एतदेवोपसंहरति—तस्मादिति। अर्द्धवैशसापत्तेरपि नेह श्रुतिमूलत्वं निराकार्यमित्याह—किं चेति। एकस्यां धर्मसंहितायामर्द्धमस्यार्थान्तरेण वैशसं विरोध इत्यर्थः। अतिक्रियालक्षणश्चास्मिन्पक्षे दोषः स्यादित्याह—मूलान्तरमिति। उचितां क्रियामतिक्रम्य क्रियाऽतिक्रिया, का पुनरुचिता क्रियेत्यपेक्षायामाह—तेनेति।

एकस्मिंश्च धर्मशास्त्रे क्वचित्प्रामाण्यसिद्ध्यर्थं भ्रान्त्यादिमूलानामसम्भवः, क्वचिच्च बाधसिद्ध्यर्थं सम्भवोऽङ्गीकार्य इति विरुद्धसम्भवासम्भवापादकत्वादपि स्मृतिबाधो न युक्त इत्याह—किं चेति। विरोधपक्षे बाधो बाधपक्षः पक्षे चेद् बाधो न युज्यते किन्तर्हि युज्यते ? अत आह—तेनेति। केनचित्पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात् सर्वतरुण्याश्च वृद्धेऽप्यरुचिप्रसङ्गादर्द्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्द्धजरतीयशब्देनात्रोपमानत्वेनोक्तः।

अस्तु तर्ह्यैकरूप्याय सर्वासामप्रामाण्यमत आह—विरुद्धत्वं चेति। विशिष्टपुरुषप्रणीतत्वं प्रामाण्यकारणत्वेनोक्तम्, विरोधेऽपि निराकर्त्तुमशक्यमित्याशयः। यच्चात्र हेतुदर्शनं स्मृत्यप्रामाण्यकारणमुच्यते, तदपि स्थितसिद्धान्तहान्यापादकत्वादयुक्तमित्याह—गृह्यमाणेति। उत्प्रेक्षणीयो हेतुर्यस्य धर्मशास्त्रस्य, तत्तथोक्तो लोभादेः सर्ववेष्टनादिस्मृतिहेतुत्वं न केनचित्प्रमाणेनावगतं किं तूत्प्रेक्षामात्रेणोच्यते। सा चाष्टकादावपि शक्या कर्त्तुमित्याशयः।

एतदेव प्रपञ्चयति— रागेति। रागः प्रीतिर्द्वेषोऽप्रीतिः। मदो—गर्वः उन्मादो-ग्रहावेशः, प्रमादालस्ये त्वन्यासक्तधनासक्त्यर्थे व्याख्याते, लुब्धता लिप्सातिशयः। प्रत्युत प्रामाण्यहेतुकल्पनमेव सुलभमित्याह—अदुष्टे न हीति। जिज्ञासुचित्तेन मन्वादिष्वदुष्टेन निराशङ्केनेत्यर्थः। यदि चोत्प्रेक्षामात्रकल्पितेन हेतुना, प्रत्यक्षश्रुतिविरोधेन वा प्रामाण्यमपह्नूयते, ततो वेदस्यापि सर्वस्याप्रामाण्यं प्रसज्येतेत्याह—का चेति। न चेयमुत्प्रेक्षास्माभिरेव श्रूयते किन्त्वन्यैरेव सर्वाप्रामाण्यवादिभिः कृतेत्याह—लोकायतिकेति। उत्प्रेक्षाभिनिवेशो तेषां मूर्खत्वं मुग्धत्वं भ्रान्तत्वाख्यं कारणत्वेनोक्तम्। कर्मव्यवहारः कस्मादन्यदपेक्षिते यावत्किंचिदित्यादिना सार्द्धश्लोकेन तद्दर्शितम्।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेयं बृहस्पतिः॥

इत्यग्निहोत्रादीनां दृष्टार्थत्वं नास्तिकैरुक्तम्। अग्नीषोमीयादिहिंसाविधेश्च न हिंस्यात्सर्वाभूतानीति निषेधेन विरोधो योजितः। अथश्चैवंस्वभावानां लौकायतिकानामवकाश-

दानमशेषमेव धर्ममार्गं नाशयेदित्याह—तेभ्यश्चेह इति। ईषदर्थे नामशब्दः। एतदेव दृष्टान्तत्वेनोपपादयति—प्रसरमिति।

ननु विरोधहेतुदर्शनकारणकमप्रामाण्यमुच्यमानं तदभावे कथं चार्वाकैरापाद्यते, अत आह—क्वचिदिति। धाम-स्थानम्। तस्मात्तेभ्योऽवकाशो न क्वचिद्देय इत्याह—तस्मादिति। लोकायतं नास्तिकशास्त्रम्। तत्र तिष्ठन्तीति लोकायतस्थाश्चार्वाकाः। धर्मो नाश्यते येन युक्तिजालेन तत्संपन्नाः।

'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।

आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

इति च निषिद्धत्वात्, स्मृतिप्रामाण्ये विचिकित्सा न कार्येत्याह—यच्चादाविति। राजाद्याज्ञाया यत्कार्यत्वेन सिद्धम्—निश्चितम्, तद्वेदे विचारितमाज्ञासिद्धमुच्यते। आज्ञासिद्धं प्रमाणत्वं यस्य पुराणादिचतुष्टयस्य, तत्तथोक्तं कथमविचारितसिद्धतेत्यपेक्षायामादौ न्यायनिरूपणात्प्रागनादिकालमहाजनपरिग्रहदार्ढ्यप्रसवया श्रद्धया पुराणादिचतुष्टयमाज्ञासिद्धप्रमाणत्वरूपेण सिद्धमित्युक्तम्। न चैतावता न्यायशून्यत्वं शङ्कनीयमिति दर्शयितुं—पुनर्न्यायेन साधितमित्युक्तम्। विचिकित्सायां को दोषः स्यादित्यपेक्षयामाह—सर्वमिति। पराभवभयादपि नान्तरा श्लथयितव्यमित्याह—पक्षइति। एवं तावदुत्प्रेक्षामात्रकल्पितं दृष्टार्थत्वं न वेदमूलत्वनिराकरणायालमित्युक्तम्।

इमिदानीं वास्तवमपि दृष्टार्थत्वम्। विरोधवदनैकान्तिकत्वान्न तन्निराकरणायालमित्याह—वेदश्चेति। श्रूयमाणविरोधी वेतीवार्थे समुद्रो वा महासत्त्वैत्व इति। यद्वाशब्दः। अनैकान्तिकत्वं दर्शयति—यद्वा त्विति। ननु पुरुषार्थसाधनत्वलक्षणं दृष्टार्थत्वमिह हेतुः न चावघातादीनां तदस्ति क्रत्वर्थपुरोडाशनिष्पत्त्यर्थं तण्डुलीभावादिसाधनत्वादित्याशङ्क्योदाहरणान्तरमाह—ऋत्विग्भ्य इति। ऋत्विगभिमतदक्षिणालाभहेतुत्वेन दानस्य पुरुषार्थतापि वक्तुं शक्यतेति सूचयितुम्—ऋत्विग्भ्य इत्युक्तम्। तानूनप्त्रं परस्परमृत्विजां यजमानस्य चाव्यभिचारार्थं कर्मारम्भे शपथकर्म।

अतश्च सिद्धमनैकान्तिकत्वात् दृष्टार्थत्वस्यासाधकत्वमित्याह—यदा चेति। तस्माद्विरोधहेतुदर्शनाभ्यां न वेदमूलत्वं निराकर्तुं शक्यमित्युपसंहरति—तेनेति। वेदमूलत्वानिराकरणाच्च न प्रामाण्यं निराकर्तुं शक्यमित्याह—तस्मादिति। पूर्वपक्षमुपसंहरति—अविशिष्टमिति। ईदृशं मूलश्रुत्यनुमानद्वारमविशिष्टं सामान्यतः सर्वासां स्मृतीनाम्, यत्पूर्वन्यायेन प्रमाणत्वं प्राप्तं तदधुना विरुद्धश्रुत्यन्तरपर्यालोचनकाले सत्यपि विरोधे युक्तमित्यर्थः।

साध्याहरं सूत्रं योजयत्सिद्धान्तमारभते--सिद्धान्तः—एवमिति। निर्मूलस्मृत्ययोगाद्वेदमूलत्वाभावे किमन्यमूलं स्यादित्याशङ्क्याह—या त्विति। स्पष्टग्रहणेनान्यपरश्रुतिमूलत्वेऽप्यप्रामाण्योपपत्तेस्तात्पर्यमात्रापवादोऽयमिति दर्शितम्। न च सत्यपि वेदमूलत्वे

स्वातन्त्र्येण प्रामाण्यं भविष्यत्यत आह—**स्वातन्त्र्येणेति**। अस्तु तर्हि वेदस्यैवानुमानमत आह—**वेदेति**। ननु सत्यपि प्रत्यक्षश्रुतिविरोधे, किमिति नानुमीयतेऽत आह—**वेदेति**। तस्यानुमेयस्य वेदवाक्यस्य योऽर्थं औदुम्बर्यादिः, तद्विषये प्रत्यक्षं वेदवाक्यं यावन्नोपलभ्यत इत्यर्थः। अनुमानस्यासन्निकृष्टार्थविषयत्वात्संनिकृष्टस्य च ताद्रूप्य-तद्विपर्ययपरिच्छेदयोस्तुल्यत्वाद्विपर्ययपरिच्छिन्नस्याननुमेयत्वे ताद्रूप्यपरिच्छिन्नं दृष्टान्तयति—**न हीति**। एतदेव विवृणोति—**स्मृतीनामिति**। निवारणे कारणमाह—**तावदेवेति**।

ननु प्रत्यक्षेणानुमानस्योत्पत्तिप्रतिबन्धलक्षणो बाधो भवति। स्मार्त्तं तु सर्ववेष्टनादिकर्त्तव्यताज्ञानं विरोधेऽप्युत्पद्यमानं कथं बाध्यते। न ह्युत्पन्नस्य ज्ञानस्य मिथ्यात्वलक्षणो बाधः सम्भवतीत्याशङ्क्याह—**कृत्तमूला इति**। मूलप्रमाणापेक्षत्वात्स्मृतिप्रामाण्यम्, तदभावे इदं न सम्भवतीत्याशयः। एतदेवोपपादयति—**न हीति**। यतो वेदाख्यान्मूलात्स्मृतिप्रामाण्यं स्यात् तद्वेदाख्यं मूलं न विद्यत इत्यर्थः। किमिति न विद्यत इत्यपेक्षिते पूर्वोक्तमेव प्रत्यक्षशास्त्रेण मूलश्रुत्यनुमानप्रतिबन्धमुपपादयितुं स्मारयति—**प्रत्यक्षेति**।

उपपादयति—**नैराकाङ्क्ष्यादिति**। अयमाशयः—गृहीतव्याप्तिकस्याप्यजिज्ञासोर्धूमादिदर्शनेऽप्यग्न्यादिज्ञानानुपलम्भात्परोक्षार्थविषयज्ञाने जिज्ञासापि सहकारिकारणमवसीयते। स्पर्शश्रुत्या चावेष्टितस्वरूपेणौदुम्बर्याः परिच्छिन्नत्वात्कीदृश्यौदुम्बर्यङ्गमिति जिज्ञासा नास्तीति, जिज्ञासैवात्राकाङ्क्षाशब्देनोक्ता। कथं नैराकांक्ष्यमित्याशङ्क्याह—**प्रमेयमिति**। यत्पर्वतादिप्रमेयं केनचिदग्निमत्त्वादिरूपेण परिच्छेद्यं भवेत् तस्य पर्वतादेस्तेन रूपेण परिच्छेदात्सावकाशप्रमाणता स्यादित्यन्वयः। अवकाशः प्रमाणस्य प्रमेये प्रवर्त्तितुं मार्गो जिज्ञासोपलक्षणोऽभिप्रेतः। प्रमाणं तस्मिन्प्रमेये सावकाशं स्यादिति समासार्थः।

नन्वसत्यामपि जिज्ञासायां किमित्यनुमानं न प्रवर्त्तते। व्याप्यज्ञानं हि व्यापकज्ञाने कारणम्। यत्तु क्वचिद्व्याप्यज्ञानेऽपि व्यापकाज्ञानम्, तद्व्याप्त्यस्मरणादप्युपपत्स्यते। द्रव्यत्वस्य चानौष्ण्यव्याप्तिस्मरणेऽपि तेजस्यनौष्ण्यानुमानानुपपत्तिः प्रत्यक्षेणौष्ण्यावगतौ तेजसो विपक्षत्वे सति तद्वृत्तेर्द्रव्यत्वस्य व्याप्तिभङ्गादुपपत्स्यते। इह तु स्पर्शश्रुत्या वेष्टनाभावावगमेऽपि सर्ववेष्टनस्मरणस्य श्रुतिकल्पकस्य सद्भावाद्विरुद्धश्रुतिदर्शनस्य चानैकान्तिकत्वेन सर्ववेष्टनश्रुत्यभावानुमापकत्वायोगात्कथं श्रुत्यनुमानानुपपत्तिरित्याशङ्क्याह—**ताद्रूप्येणेति**। प्रत्यक्षावगतेऽग्नौ व्याप्तिस्मरणे सत्यपि धूमज्ञानस्याग्निज्ञानजनकत्वादर्शनादजिज्ञासैव तत्रानुमानानुत्पत्तिकारणमवसीयत इति भावः। नन्वेवमपि स्मृत्या परिच्छिन्ने श्रुतेरप्रवृत्तिरिति विपरीतं कस्मान्न स्यादित्याशङ्क्याह—**भिन्नेति**। भिन्नयोः—सन्निकृष्टविप्रकृष्टत्वरूपेण विलक्षणयोः कक्ष्ययोः—प्रकोष्ठयोः स्थिते प्रमाणे तत्रैकस्मिन्प्रमेये धावत इत्यर्थः। ननु प्रत्यक्षशास्त्रस्यापि पदपदार्थपर्यालोचनादिसापेक्षत्वेनार्थपरिच्छेदविक्षेपात्तद्विरोधात्पूर्वं मन्थरस्याप्यारब्धव्यापारत्वात्कथमप्रवृत्तिरित्याशङ्क्याह—**तद्धीति**। एकमपीत्यपिशब्दो यद्यपि शब्दार्थो व्याख्येयः। यद्यपि तन्मन्थरं प्रमाणं दूरमपि प्राप्तं बहूनपि व्यापारान् कृतवत् एकमेवार्थपरिच्छेदाख्यं पदमगतमर्थपरिच्छेदमात्रं न कृतव-

दित्येवकाराध्याहारेण व्याख्येयम् । तथापीतरेणादौ गतेनार्थपरिच्छेदं कृतवता जीयत इति । तथापि योत्वौ शब्दौऽत्राध्याहार्यः । मन्थरत्वाविशेषात्तर्हि विरोधेऽप्यप्रामाण्यापत्तेर्मर्यादातिक्रमः स्यादित्याशङ्क्याह—यत्रेति ।

नन्वेवं सत्यर्द्धवैशसादिदोषपरिहारार्थं विरोधेऽपि प्रामाण्यमिष्यतामित्याशङ्क्यार्द्धवैशसं परिहर्त्तुमारभते—न हीति । यस्मादेवमैकरूप्यनियमो नास्ति, तस्माच्छीघ्रप्रमाणभावाभावयोर्मन्थरप्रमाणप्रवृत्त्यप्रवृत्तिव्यवस्था न विरुद्धेति हिशब्दयोजना ।

एतदेवोपपादयितुं सामान्यन्यायं तावद्व्युत्पादयति—सर्वमिति । मूलमेव निकृत्यते, मुखं वा विरुध्यत इति च पूर्वश्लोकोक्तस्य विरोधस्यैव द्वैविध्यमुक्तम् । श्रुत्या हि लिङ्गादीनां मूलं विनियोगहेतुः श्रुतिरेव छिद्यते-नास्तित्वेन बोध्यते । लिङ्गादिभिस्तु वाक्यादीनां मुखं विनियोजकश्रुत्यनुमानस्य द्वारं लिङ्गादिप्रतिबध्यते-श्रुत्यननुमापकत्वेन ज्ञाप्यते । न च रोधारोधव्यवस्थैव न युक्तेति वाच्यमित्याह—न चेति । अवाच्यत्वे कारणमाह—उत्सर्गश्चेति । कथं तर्ह्युत्सर्गापवादयोर्व्यवस्थेत्याशङ्क्याह—विषयाविषयाविति । उत्सर्गस्य विषयमपवादस्याविषयं ज्ञात्वा बाधाभावः । अपवादस्य विषयमुत्सर्गस्याविषयं ज्ञात्वा बाध इति विवेक इत्यर्थः । व्यवस्थानभ्युपगमे तु व्यवहारविरोधः स्यादित्याह—यो हीति । यस्तु कश्चिद्वैयात्यादेवमपि व्यवहर्त्तुमारभते, तस्य लोकविरोधमाह तावदेव हीति । अनुमानस्य च प्रत्यक्षविरोधाविरोधयोर्बाधाबाधव्यवस्था लोकप्रसिद्धेवेत्याह—अनुमानमिति ।

सामान्यन्यायमुक्त्वा प्रकृते योजयति—एवमिति न्यायलभ्यव्यवस्थाप्रतिपादनस्यार्द्धवैशसादिदोषपरिहारोपयोगितामाह—अत इति । अर्द्धवैशसग्रहणमतिक्रयार्द्धजरतीयत्वयोरप्युपलक्षणार्थम् । कथं न्यायतो व्यवस्थेत्यपेक्षायामुक्तामेव व्यवस्थां सुग्रहणार्थमनुसन्दधाति—प्रमाणत्वाप्रमाणत्व इति । अतश्चैकरूप्यमेवायुक्तमित्याह—तस्मादिति । सिद्धान्तमुपसंहरति - तेनेति ।

ननु मृगतृष्णानुमानादेः सिद्धवस्तुविषयत्वेन वैकल्पिकतया विरोधपरिहारासम्भवाद् बाधो युक्तः । स्मृतेस्तु कार्यविषयतया विकल्पेनोभयानुग्रहसम्भवादत्यन्तबाधो न युक्त इत्याशङ्कते—विकल्प इति । परिहरति—उच्यत इति । पूर्वार्द्धेनात्यन्तबाधादपि विकल्पः पापीयानित्युक्तम् उत्तरार्द्धेन त्वङ्गीकृतेऽपि विकल्पे, स्मृतेरत्यन्तबाधोऽपरिहार्य इत्युक्तमिति विवेकः । विकल्पस्य सुखाभ्युपगम्यता वोक्त्या तुल्यबलयोरगत्या तदङ्गीकरणम् । इह तु स्मृतेरत्यन्तबाधेन गत्यन्तरसम्भवाद्विकल्पाङ्गीकरणमत्यन्तमन्याय्यमिति सूचितं वक्तावद्व्याचष्टे—तुल्यबलेति । कक्षाभ्यां विलक्षणाभ्यामन्तरितेन विलक्षणीकृतेन श्रुतिस्मृत्योः प्रामाण्येन विषमत्वेन शिष्ट्योरवगतयोः श्रुतिस्मृत्योर्विकल्प इति विग्रह । किमुतेत्यनेनोक्तमतुल्यबलविकल्पस्यात्यन्तान्याय्यत्वमुक्तमुपपादयति—तथा हीति । न च स्मृतिरपि निरपेक्षा, येन तुल्यबला स्यादित्याह—स्मृतेरिति ।

ननु सापेक्षत्वेऽप्यनुमीयमानायाः श्रुतेः प्रत्यक्षया सह तुल्यबलत्वाद्विकल्पो भविष्यत्यत आह—**पराधीनेति**। यदि विरोधेऽपि श्रुतिरनुमीयेत, ततः पराधीनप्रमाणत्वाच्छ्रुत्या बाधितापि पुनरुज्जीवितुं क्षमा स्यात् न त्वेतदस्तीत्युक्तम्—**न प्रमाणपदे स्थितेति**। श्रुत्याख्यं प्रमाणं पद्यते गम्यतेऽनेनेति श्रुत्यनुमानं प्रमाणपदं-तत्त्वमस्थिता-अननुमितश्रुतिकेत्यर्थः।

विकल्पस्याष्टदोषत्वमुपपादयितुमारभते—**तुल्यकक्ष्येति**। तुल्या समाना कक्षा ययोस्ते, तुल्यकक्षे, तयोर्विकल्प इति विग्रहः। व्रीहियवशास्त्रयोर्नियमार्थत्वेनान्यनिवृत्तिपर्यन्तत्वाद् व्रीहिशास्त्रप्रामाण्ये यवप्रयोगानुपपत्तेः, यवशास्त्रप्रामाण्ये च व्रीहिप्रयोगानुपपत्तेरितरेतराप्रामाण्यकल्पनं विना विकल्पो न युक्त इत्यर्थः। ततः किमिति चेत् अत आह—**प्रमाणस्येति**। कीदृशं दोषद्वयमित्यपेक्षायामाह—**प्रमाणत्वमिति**। प्रतीतप्रमाणत्वापह्नवः प्रतीतिविरोधादेव दोष इत्यर्थः। अप्रतीताप्रामाण्यकल्पनं च द्वितीयो दोष इत्याह—**तथेति**। सन्देहविपर्ययदोषजन्यत्वात् वेदे च तदभावात्प्रामाण्याभावरूपमेवाप्रामाण्यं वाच्यम्। तस्मिंश्च प्रामाण्योपलम्भाभावः। प्रमाणमिति तच्छब्देन दर्शितम्। तस्य प्रमाणस्याप्रमाणत्वमित्यर्थः। कथं न प्रामाण्योपलम्भस्याभाव इत्यपेक्षिते—प्रामाण्योपलम्भस्य भावे सतीत्युक्तम्—**यत्परिकल्पत इति**। यच्छब्दस्य क्रियाविशेषणत्वात्सोऽप्यप्रमाणत्वकल्पनरूपो दोषः स्यादित्यनेनान्वयः। प्रमेयवचनोऽर्थशब्दः। प्रमाणप्रमेययोः प्रामाण्योपलम्भाभावात् प्रमाणत्वयोः परस्परं विपर्ययाद्विरोधादित्यर्थः। कल्पितप्रामाण्यस्य च शास्त्रान्तरस्य प्रामाण्योपजीवनं विना तदर्थानुष्ठानायोगामदर्थानुष्ठानकाले तस्मिन्नेव शास्त्रान्तरे परं दोषद्वयं स्यादित्याह—**अङ्गीकृत्यापीति**। कीदृशमित्यपेक्षिते कल्पिताप्रामाण्यत्यागं तावद्दोषमाह—**यदभावप्रमाणत्वमिति**। प्रामाण्योपलम्भाभावः प्रमाणं यस्याप्रमाणत्वस्य, तत्तथोक्तमेतस्याप्रमाणत्वस्येत्यर्थः। निराकृतप्रामाण्योपजीवनं च द्वितीयो दोष इत्याह—**प्रत्यक्षमिति**। शास्त्रान्तरवर्जनाश्रयणयोरुपपादितं दोषचतुष्टयमुपसंहरति—**एवमिति**। वाक्यान्तरेऽप्येवं दोषचतुष्टयं योज्यमित्याह—**एत एवेति**। द्वितीयेऽपि वाक्ये प्रतीतप्रामाण्यापह्नवेऽनुपलब्धे चाप्रामाण्ये कल्पितस्य चाप्रामाण्यस्य त्यागे, निराकृतस्य च प्रामाण्यस्योपजीवने प्रकल्पित इत्यर्थः। यद्यष्टदोषो विकल्पः कस्माद् व्रीहियवादिष्वाश्रीयतेऽत आह—**एवमिति**। गत्यन्तराभावमेवोपपादयति **व्रीहीति**। ततः किमिति चेत् अत आह—**द्वाभ्यामिति**। अश्वमुखीभ्यां किंनरीभ्यामिवेत्यर्थः। एकस्मिन् श्रुत्यर्थे बुद्धिमुपसंहर्तुमपश्यन्तं श्रोतारं प्रत्युभयोः श्रुत्योरप्रामाण्यं प्रसज्येतेत्यर्थः। अस्तु तर्ह्युभयाप्रामाण्यमेवात आह—**तत्रेति**। किमत्र गत्यन्तरमित्यपेक्षायामाह—**एकस्य चेति**। एकाप्रामाण्यामात्राद्गतिसम्भवे न द्वयोरप्रमाणता युक्तेति साध्याहारं योज्यम्। कस्मान्न युक्तेत्याशङ्क्याह—**सिद्ध इति**। एकं विनाशयितुं शीलं एषां चानेकन्तेषाम्मध्ये सर्वनाशे समुत्पन्ने ह्यर्द्धं त्यजति पण्डित इति अयं लोकप्रवादः प्रसिद्ध इत्यन्वयः। भवति च प्रस्तुतोऽर्थोऽस्य प्रवादस्य विषय इत्याह—**स चायमिति**। उभयो श्रुत्योर्यावर्थौ, तयोरपरिग्रहादित्यर्थः। ननु मिश्रे-

र्यागादुभयोरनुग्रहो भविष्यत्यत आह—**मिश्रैर्वेति**। अप्यर्थे वाशब्दः। मिश्रैरपि यागं कुर्वाणस्योभयोः श्रुत्योर्नाश इत्यनुषङ्गः। ननु 'विधिस्त्वेकश्रुतित्वादित्यनेन न्यायेन सर्वाङ्गोपसंहारिणा प्रयोगवचनेन व्रीहियवयोः समुच्चयावगमात्कथं मिश्रविधेरदर्शनमत आह—**नियमार्थे हीति**। अप्राप्तविधिगोचरप्रयाजादिविषयोऽसौ न्यायः। व्रीहियवयोस्तु नियमविधिगोचरत्वात्समुच्चयो न युक्त इत्याशयः। ननु समुच्चयेऽपि नियमफलस्य नित्यत्वस्य सिद्धेरविरोध इत्याशङ्क्याह—**प्राप्ते चेति**। पुरोडाशाक्षेपादेव प्राप्तेषु व्रीह्यादिषु द्रव्यान्तरप्रसक्तिनिमित्तानियतत्वनिवृत्त्यर्थं नियतत्वफलस्य नियमस्य समुच्चायानुपपत्तिरित्याशयः। ननु श्रुतव्रीहियवातिरिक्तगोधूमादिनिवृत्त्यापि नियमोपपत्तेर्न व्रीहायवयोरितरेतरनिवर्त्तकत्वमित्याशङ्क्याह—**व्रीहय इति**। 'समर्थः पदविधिरिति पदमात्रविधेः सामर्थ्यापेक्षत्वाद् व्रीह्यादिप्रातिपदिकस्य च यवादिसापेक्षत्वेन व्याघातापत्तेर्विभक्त्यन्वयायोगान्निरपेक्षाणामेव व्रीहियवानां तृतीयया करणत्वप्रतीतेर्मिश्रत्वं न युक्तमिति भावः। किं चाद्दष्टार्थत्वे सत्यनिर्ज्ञातोपायपरिमाणत्वेन प्रधानस्यैकाङ्गविधानेन नैराकाक्ष्याप्रतीतेः समुच्चयः स्यात्। व्रीह्यादेस्तु प्रदेयप्रकृतित्वेन दृष्टार्थत्वादेकविधानेन नैराकाक्ष्यत्वागतेः समुच्चयो न युक्त इत्यभिप्रायेणाह—**नैवेति**। यथाश्रुतैर्निरपेक्षतया प्रदेयप्रकृतित्वेन श्रुतेरित्यर्थः। तस्मादुभयार्थापरिग्रहवन्मिश्रयागेऽप्युभयनाशः स्यादित्युपसंहरति—**एवमिति**। अप्रतिपत्तिः—अपरिग्रहः, एकस्य चाप्रमाणत्वमित्यादिना पर्यायेणैकैकाप्रामाण्याश्रयणं नाम यद्गत्यन्तरमुपपादितम्। तदुपसंहरति—**तेनेति**। एतच्चैकैकाप्रामाण्यमसम्भवात् क्वचिदङ्गीक्रियते न तु दोष एव न भवतीति शङ्कनीयमित्याह—**सेयमिति**। येयमे'कैकाप्रमाणता द्वयोरप्यनवस्थिता, सात्यन्तमन्याय्येत्यर्थः। कथमन्याय्येत्यपेक्षायामाह—**अव्यवस्थेति**।

अयुक्तत्वे हेतुमाह—**सर्वत्रैव हीति**। एवं तर्ह्यप्रतीयमानमपि गत्यन्तरं किंचित् व्रीहियववाक्ययोरपि मृग्यताम्, न त्वत्यन्तान्याय्यविकल्पाङ्गीकरणं युक्तमित्याशङ्क्याह—**तदेतदिति**। श्रुतिस्मृत्योस्त्वेकरूपत्वे व्यवस्थितं चिह्नमस्तीत्याह—**श्रुतीति**। किं तदित्यपेक्षायामाह—**स्वरूपेणेति**। ततः स्वरूपादित्यर्थः। अन्यशब्दस्य नित्यसापेक्षत्वात्समासाविघातः। कथमनयोर्व्यवस्थाकारणत्वमित्याशङ्क्याह—**यो यस्येति**। न च श्रुतेः स्वरूपाश्रयस्य प्रामाण्यरूपस्य धर्मस्य बलवत्कारणान्तरं बाधकमस्तीत्याह—**न चेति**। ततश्च स्मृतेः स्वरूपाश्रयस्याप्रामाण्यरूपस्य धर्मस्य बाधकं मूलश्रुत्यनुमानं प्रत्यक्षश्रुतिविरोधान्नास्तीत्यर्थादुक्तं भवति। अन्यापेक्षस्य तु स्मृतेः प्रामाण्यरूपस्य श्रुतिरेव बाधिकास्तीत्याह—**स्मार्त्तस्येति**। ततश्च श्रुतेरन्यापेक्षस्यास्याप्रामाण्यरूपस्य धर्मस्य कारणाभाव एव बाधकोऽस्तीत्येतदप्यर्थादुक्तं भवति। कथं श्रौतप्रत्ययस्य स्मार्त्तप्रत्ययाद् बलवत्त्वमित्याशङ्क्याह **प्रत्यक्षे चेति**। सन्निकृष्टविप्रकृष्टार्थत्वादपि श्रुतिस्मृत्योर्बलाबलव्यवस्था प्रतीयत इत्याह—**श्रुतिलिङ्गेति**। ननु श्रौतप्रत्ययस्य समकालमेव स्मार्त्तप्रत्ययोदयात्कथं सन्निकर्षविप्रकर्षावित्याशङ्क्याह—**स्मृत्येति**। प्रतीतिमात्रं स्मृत्वा तदा क्रियते, न श्रुतिवत्प्रमिति

रित्यर्थः। क्वचिद्विपरीतपाठः। तत्र प्रमीयत इति भावे लकारः। यावत् स्मृत्या श्रुत्यनुमानेन प्रमाणीभूयते-भवितुमारभ्यते तावच्छ्रुत्यार्थ एव प्रतीयत इत्यर्थः।

नन्वर्थपरिच्छेदाय प्रवृत्ता स्मृतिः पश्चादपि तावदर्थपरिच्छेदं करिष्यतीति किमिति विकल्पो न स्यादित्याशङ्क्य, अपवादसिद्ध्यर्थं जिज्ञासाविरहेणैकप्रमाणपरिच्छिन्नेऽर्थे प्रमाणान्तराप्रवृत्तिं पूर्वोक्तामेव विकल्पनिरासार्थं स्मारयति—विरुद्धेति। प्रमेयाकाङ्क्षानिराकरणेन प्रमात्रा आकाङ्क्षैवं निराकृता ताद्रूप्यपरिच्छिन्नेऽपि मन्थरं न प्रवर्तते, किमुत वैपरीत्यपरिच्छिन्न इत्याह—न चेति। ननु श्रुत्यर्थपरिच्छेदकाले यद्यपि स्मृत्यार्थो न परिच्छिद्यते, तथापि श्रुतिस्तावदनुमीयते, ततश्चानुमितायाः श्रुतेः प्रत्यक्षया सहाविशेषात्किमिति विकल्पो न स्यादित्याशङ्क्याह—स्मृत्या चेति। स्मार्त्तार्थपरामर्शमात्रं तदोत्पद्यते न श्रुत्यनुमानमित्यर्थः। नन्वन्यतः परिच्छिन्नोऽप्यर्थो सत्यामपि जिज्ञासायां स्वसामर्थ्यस्मृत्यापि पश्चाच्छेत्स्यतेऽत आह—किं कर्त्तव्यमिति। यदि चैवमभविष्यत्ततः सन्निकर्षविकर्षविशेषाभावाद् बलाबलव्यवस्था नाभविष्यदित्याह—युगपदिति।

यदि च श्रुत्यर्थपरिच्छेदसमकालमेव स्मृत्या स्वमूलं स्मृतिरनुमीयेत, ततोऽर्थविप्रकर्षेऽपि श्रुत्यवष्टम्भात् बलाबलव्यवस्था न स्यात् न त्वेतदस्तीत्याह—यद्वेति। तस्मिन्नेव क्षणे मूलं यदि कल्पयेदिति, यदिशब्दोऽध्याहार्थः, यद्वेति वा यच्छब्द एव यदिशब्दार्थे व्याख्येयः'। यतस्तु स्मृत्या गृहीतेऽप्यर्थे मूलान्तरनिषेधयुक्तिपर्यालोचनापेक्षत्वाच्चिरेण श्रुतिकल्पनेति तुशब्दाध्याहारेण व्याख्येयः। ननु श्रुत्यनुमानासम्भवेऽपि स्वतन्त्रैव स्मृतिः प्रतिष्ठास्यतीति विकल्पोऽपरिहार्य इत्याशङ्क्याह—स्मृतिरिति। अतोऽस्ति श्रुतिस्मृत्योरेकरूपत्वे व्यवस्थितं चिह्नमित्युपसंहरति—तदपेक्षेति। ततश्चेत्यस्मिन्नर्थे पुनः शब्दः।

एवं विकल्पस्याष्टदोषत्वान्न तावत्स्वाभ्युपेयतेति पूर्वार्द्धं व्याख्याय, पाक्षिके चाप्रमाणत्वे स्मृतयः सुनिराकरा इत्युत्तरार्धं व्याख्यास्यन्विवेकार्थं पूर्वार्द्धोक्तं बाधप्रकारमुपसंहरति—एष तावदिति। उत्तरार्द्धं व्याचष्टे—द्वितीयेनेति। विकल्पपदवीं गतायाः स्मृतेरत्यन्तबाध इति द्वितीयः प्रकार इत्यर्थः। कथमित्यपेक्षायामापन्नापाक्षिकं बाधमित्युक्तम्। अत्रैवार्थेऽनारब्धव्याख्यानमपि भाष्यं प्रसङ्गाद्विवेक्तुं योजयति—तद्दर्शयतीति। नासति व्यामोहविज्ञाने इत्यादिभाष्येणैको बाधप्रकार उक्तः। विकल्पं त्वियादिना द्वितीय इति विवेकः। पाक्षिकबाधापत्तावपि कथमात्यन्तिको बाध त्याशङ्क्याह—तदा चेति। भाष्योक्तः श्रुतिप्रमाणपक्षस्तदाशब्देन परामृष्टः। किं तु तदानीं स्मृत्यप्रामाण्यकल्पनावेलायां सा स्मृतिरश्रुतिमूलावधार्यते। यतस्तस्याः प्रमाणत्वं श्रुतिमूलत्वकारितमित्यन्वयः। ननु श्रुतिमूलत्वाभावेऽपि स्वातन्त्र्येण प्रामाण्यसम्भवात्कथमत्यन्तबाध इत्याशङ्क्याह—श्रुतीति। विप्रलम्भादेर्निराकृतत्वात्कथमापत्तिरित्याशङ्क्य निराकृतेत्युक्तम्। स्वातन्त्र्यनिरासायाविगानेत्युक्तम्। नित्यत्वद्वारेत्यनेन नित्यत्वं बिना स्वातन्त्र्यं न सम्भवतीत्युक्तम्।

नन्वेवमपि प्रमाणान्तरमूलतया प्रामाण्यं भविष्यतीत्यत आह—श्रुतिमिति। स्मृतेरतीन्द्रियार्थविषयत्वात्प्रमाणान्तरं मूलं न सम्भवतीत्याशयः। श्रुतेरिवेति पूर्वोपन्यस्तं

वैधर्म्यदृष्टान्तं विवृणोति—व्रीहीति । अयमाशयः-सन्देहविपर्ययोस्तावद्दोषजन्यत्वाद्वेदे च तदभावादसम्भवः । विज्ञानानुत्पत्तिलक्षणमप्रामाण्यं संवेदनविरोधादयुक्तम् । न च यथा सामान्यशास्त्रादेरापाततो विशेषशास्त्राद्यवरुद्धेऽपि विषये प्रवृत्तिप्रतीतावपि, विरोधपरिहारार्थापत्त्या विशेषशास्त्राद्यनवरुद्धेऽर्थे तात्पर्यावसायात् तात्पर्यावधारणसहकृतेन सामान्यशास्त्रादिना तत्रैव विषये परिच्छेदफलात्मकविशिष्टज्ञानाख्यं विज्ञानमुत्पाद्यत इति विशेषशास्त्राद्यवरुद्धेऽर्थे विज्ञानोत्पत्तिलक्षणमप्रामाण्यं जातम् । तथात्रापि यवशास्त्रस्य यवव्यतिरिक्तद्रव्यमात्रनिवृत्त्यर्थत्वप्रतीतावपि व्रीहिशास्त्रपर्यालोचनया व्रीहिव्यतिरिक्तद्रव्यान्तरनिवृत्तौ तात्पर्यावसायात्तदवधारणसहकृतस्य यवशास्त्रस्य तत्रैव विज्ञानोत्पादकत्वाद् व्रीहिनिवृत्त्यंशे विज्ञानानुत्पत्तिलक्षणप्रामाण्यं भविष्यतीति वाच्यम् । तथा सति मिश्रत्वस्य निराकर्त्तुमशक्यत्वात् । किञ्च व्रीहियवशास्त्रयोर्निरपेक्षव्रीहियवविधानत्वेऽपि प्रयोगभेदेनोभयोर्निरपेक्षसाधनत्वोपपत्तेर्विनियोगावस्थायां विरोधाभावान्नैकस्याप्यप्रामाण्यं कल्प्यम्, प्रयोगावस्थायां त्वेकोपादानेनैव कार्यसिद्धेरितरोपादानानर्थक्याद्विरोधः स्यात् । न चानयोर्विनियोगविध्योः प्रयोगविधानार्थत्वमस्तीति विरोधाभावाद्वस्तुतो नास्त्येवाप्रामाण्यम् । प्रयोगविधेस्तु समस्ताङ्गप्रधानशास्त्रपर्यालोचनपूर्वकत्वेन व्रीहियवशास्त्रालोचनया व्रीहयो वा यवा वा प्रयोगभेदेनोपादेया इत्येवं रूपस्यैव कल्प्यत्वान्नाप्रामाण्यशङ्का । तस्माद् व्रीहियवशास्त्रयोः प्रयोगविधानार्थत्वाभावेऽपि स्वविषयानुष्ठापकत्वस्य सर्वविधिसाधारणस्य स्वरसतः प्रतीयमानस्य निराकर्त्तुमशक्यत्वान्निरपेक्षव्रीहियवानुष्ठापकत्वस्य चैकस्मिन्प्रयोगे विरोधादवश्यमेकस्यानुष्ठापकत्वे शास्त्रान्तरस्याननुष्ठापकत्वमङ्गीकार्यम् । दृष्टं चैकस्यापि विधेः सामर्थ्याद्यपेक्षया देशकालपुरुषविशेषापेक्षमनुष्ठापकत्वम् अननुष्ठापकत्वं चेति न कश्चिद्विरोधः । अतश्चानुष्ठापकयोरपि व्रीहियवशास्त्रयोरेकप्रयोगकाले शास्त्रान्तरस्यौदासीन्येऽनुष्ठानाख्यफलापहारादारोपितमेव प्रामाण्याभावरूपमप्रामाण्यमिति, प्रयोगान्तरकाले वा स्तावनोज्जीवितेन तत्प्रामाण्येन वाधो युक्त इति ।

ननु स्मृतिप्रामाण्यस्यापि प्रयोगान्तरवेलायामुज्जीवनसम्भवात्कथमत्यन्तप्रतीघात इत्याशङ्क्याह—नन्विति । ननु प्रयोगागान्तरकाले तस्याः स्मृतेः श्रुतिमूलत्वं कल्पयिष्यते, अत आह—न हीति ।

ननु प्रथमप्रयोगकाले स्मृतेर्भ्रान्त्यादिमूलकल्पने माभूत्प्रयोगान्तरकाले प्रामाण्योज्जीवनं प्रागगृहीतविरुद्धश्रुतिकेन तु श्रुतिमूलत्वकल्पनेन स्मृत्यनुसारात्प्रथमप्रयोगे कृते प्रयोगान्तरकाले विरुद्धश्रुतिग्रहणेऽप्यनुमितायाः श्रुतेः प्रत्यक्षया सहाविशेषाद्विकल्पो दुर्वार इत्याशङ्कते—आहेति । एतस्येति । सर्वदा प्रतिघातस्येत्यर्थः । यदि तु सर्वैः श्रुतिरेव प्रथमं ग्रहीतव्या, न स्मृतिरिति नियमः स्यात्, तथापि पौर्वापर्यनिबन्धनः सर्वान्प्रति वलाबले विशेषः स्यात् न त्वेतदस्तीत्याह—न चेति । नन्वस्तु तर्हि प्रथमश्रुतिग्राहिपुरुषापेक्षोऽयं स्मृतिप्रामाण्यापवाद इत्याशङ्क्य, पौर्वापर्यस्य बलाबलकारणत्वाभावे दृष्टान्तमाह—आद्य इति । तत्प्रथतीति पाठे येन पुरुषजातेनेति वक्तव्यम्, स्वपरशाखाविहितानां च सत्यपि पौर्वापर्ये कल्पसूत्र-

कारैरेवं :प्रातरूपोदयं व्युषित, उदिते वेत्यादिवदद्धिर्विकल्पाङ्गीकरणात्पौर्वापर्यस्य बलाबलकारणत्वं नास्तीत्याह—**स्वशाखेति**। जैमिनेरपि 'न चैकं प्रतिशिष्यते' इति सर्वशाखोपसंहाराभिधानात्पौर्वापर्यस्य बलाबलकारणत्वमनभिमतमित्यागमविरोधो भवत्पक्षे स्यादित्याह—**सर्वेति**। पौर्वापर्यस्य बलाबलकारणत्वाभावमुपसंहरति—**तस्मादिति**। मातापितृप्रणीतोपदेशवत्पौर्वापर्यश्रवणमनाश्रित्य सर्वान्पूर्वश्राविणः पश्चाच्छ्राविणश्च पुरुषान्प्रति निर्विचिकित्समेव प्रामाण्यम् चैकं प्रतिशिष्यत इत्यनेन न्यायेन जिज्ञासुभिरभ्युपगन्तव्यमित्यन्वयः। पौर्वापर्यश्रवणानाश्रयणहेतुत्वेन बलाबलापर्यालोचनात्को बलाबलहेतुत्वे हि सति पौर्वापर्यश्रवणमाद्रियेत तस्य तु नित्यावस्थितासु शाखासु वस्तुतः पौर्वापर्यरहितास्वात्मीयाशक्तिमात्रकारितत्वाद् बलाबल हेतुत्वं नास्तीत्यर्थः। आत्मीयाशक्तिमात्रकारितस्य पौर्वापर्यस्य बलाबलहेतुत्वाभावे दृष्टान्तत्वेनैकवाक्यगतपूर्वोत्तरवर्णवदित्युक्ते वर्णानां प्रत्येकमप्रत्यायकत्वेनार्थप्रतीत्यर्थतया तत्पौर्वापर्यस्याशक्तिमात्रकारितत्वाभावेनादृष्टान्तत्वात्पदवदिति दृष्टान्तान्तरमुक्तम्। वेदवाक्यगतपदपौर्वापर्यस्य वेदो वा प्रायदर्शनादित्यत्र बलाबलहेतुत्वाभिधानाल्लौकिकवाक्यगतपदपौर्वापर्यमत्र दृष्टान्तः। वर्णपौर्वापर्यमपि बलाबलहेतुर्न भवतीत्येतावता दृष्टान्तितम्।

पौर्वापर्यस्य च बलाबलहेतुत्वे तस्यानवस्थितत्वेन बलाबलास्यानवस्थितत्वेन प्रामाण्यानवस्थानं स्यादित्याह—**अन्यथा हीति**। पौर्वापर्यस्य च बलाबलकारणत्वाभावे स्वोत्प्रेक्षामात्रेण विकल्पभ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्यमङ्गीक्रियमाणमर्द्धवैशसपरिहारार्थमविरोधेऽप्यापादयेदित्याह—**इत्थं चेति**। ऐकरूप्यमेवोत्प्रेक्षितुं युक्तमित्याह—**सर्वे चेति**। प्रथमं स्मृतिग्रहणेऽपि पश्चाद्विरुद्धश्रुतिदर्शनेन पूर्वोत्पन्नमूलश्रुत्यनुमानबाधाद्विकल्पे सर्वदा प्रामाण्यं प्रतिहन्येतेति परिहरति—**उच्यत इति**। अत्रैव दृष्टान्तमाह—**यो हीति**। द्वात्रिंशत्कृष्णलरजतपरिमाणं कार्षापणः, कूटाकूटविलक्षणविवेकज्ञानेन जनिता व्युत्पत्तिः—कूटत्वनिश्चयो यस्य स तथोक्तः। ननु श्रुत्यर्थपरिग्रहणकाले मूलश्रुत्यनुमानबाधोऽपि पूर्वं स्मृत्यर्थपरिग्रहकाले बाधाभावाद्विकल्पो भविष्यत्यत आह—**न चास्येति**।

ननु द्वितीयप्रयोगे विरुद्धश्रुतिदर्शनेऽपि पूर्वोत्पन्नस्य मूलश्रुत्यनुमानस्य प्रतिबन्धायोगादनुमितायाश्च श्रुतेरत्यन्तबाधानुत्पत्तेर्दुर्वारो विकल्पः स्यादित्याशङ्कते—**ननु चेति**। अप्रमितस्यार्थस्यानुष्ठातुमशक्यत्वादेकप्रयोगकालोत्पन्नायाश्च प्रमितेः प्रयोगान्तरकाले विनष्टत्वात् तन्मूलस्य स्मरणस्यानुवृत्तावपि मूलप्रमाणालोचनं विना निश्चायकत्वायोगात्प्रतिप्रयोगमनुष्ठेयपदार्थविषयप्रमाणालोचनापेक्षणाद्वेष्टितौदुम्बर्यङ्गमिति प्रथमप्रयोगवेलायां स्मृतिमूलस्मृत्यनुमानान्निश्चितेऽपि, पुनः प्रयोगान्तरवेलायां कीदृश्यौदुम्बर्यङ्गमित्याकाङ्क्षायां स्मृत्या श्रुतिमनुमिमानो विरुद्धश्रुतिदर्शनान्निवार्यत इत्यननुमितमूलायाः स्मृतेरत्यन्तबाधो विकल्पाङ्गीकरणे प्रसज्येतेति परिहृति—**नैतदेवमिति**। एतदेव याज्ञिकाचारेण द्रढयति—**यदि हीति**।

ननु सङ्कर्षे व्रीहिभिरिष्ट्वा, वीहिभिरेव यजेत, यवेभ्यो यवैरिष्ट्वा यजेतान्व्रीहिभ्य इति वाक्यमुदाहृत्य किमनेनाग्रयणाभ्यासो विधीयते दर्शपूर्णमासयोर्वा द्रव्यनियम इति सन्दिह्याग्रयणप्रकरणे पाठाद्यजेस्तद्विषयत्वप्रतीतेर्व्रीह्याग्रयणेनेष्ट्वा पुनर्व्रीह्यग्रयणेन यजेतेत्याग्रयणाभ्यासविधिरयमिति व्रीहिभिरिष्ट्वा वीहिभिरेव यजेत यवेभ्य इत्यन्ताग्रयणाभ्यासः प्रकरणादित्यनेन सूत्रेण पूर्वपक्षयित्वा अभ्यासविधौ प्राप्ते कर्मण्यभ्यासद्रव्यरूपानेकगुणविधानेन वाक्यभेदापत्तेः कर्मान्तरविधौ च गौरवापत्तेः। प्रकृताग्यणप्रकृतित्वेनोपस्थापिते दर्शपूर्णमासाख्ये कर्मणि व्रीहियवयोर्विकल्पेन प्राप्तयोर्यवव्रीह्याग्रयणावधिव्यवस्थाविधानार्थमेतद्वाक्यमिति दर्शपूर्णमासयोर्वान्तरालसंयोगान्न ह्यन्यत् अन्यक्रमं प्रत्यक्षं विद्यते[जै० ३।१।२५]इति सूत्रेण सिद्धान्त यिष्यमाणत्वात्कथं—यावज्जीवं तैरेव यजेतेत्युक्तम् उच्यते। अग्निहोत्री वै नानादयिता तस्याः पयसा जुहुयादित्याग्रयणेष्टिस्थाने अग्निहोत्रस्थाने अग्निहोत्रविशेषविधनात्तत्पक्षाश्रयणेनेह उक्तमित्यदोषः। अव्यवस्थितविकल्पोऽपि व्रीहियवयोरकृताग्रयणविषयतयैव व्याख्येयः। एतदेवोपसंहरति—नेति। यद्यपि समस्ताङ्गोपेतप्रधानविषयप्रयोगशास्त्रालोचनेनानुष्ठानं प्रवर्तते, तथापि तस्य प्रत्येकपदार्थावधारणपूर्वकत्वात् तस्य च विनियोगशास्त्राधीनत्वात्तदालोचनमिहोक्तम्। प्रयोगशास्त्रस्य त्वनुष्ठानमात्रफलत्वेनाङ्गाङ्गिभावे प्रमाणत्वाभावात्तदभिप्रायः प्रमाणशब्दो न युज्यते। यच्चात्यन्ताप्रामाण्यवादिमते पौर्वापर्यानवस्थानात्प्रामाण्यानवस्थानमुक्तम्। तदस्मिन्नपि विकल्पवादिमते प्रथमश्रुतिग्रहणेऽत्यन्तस्मृत्यप्रामाण्याङ्गीकरणेन पर्यनुयोगसाम्याद्विकल्पवादिना वा पौर्वापर्यानादरेऽत्यन्ताप्रामाण्यवादिनापि तदनादरेण परिहारसाम्यादवाच्यमित्याह—यच्चेति। पर्यनुयोगसाम्यमुपपादयति—यदा हीति। ननु पर्यनुयोगसाम्येऽपि प्रथमं स्मृतिग्रहणे विरोधादर्शनेन मूलश्रुतेरवश्यकल्प्यत्वात्क्लृप्तायाश्च श्रुतेरत्यन्तबाधायोगात्पौर्वापर्यानादरेऽत्यन्ताप्रामाण्यसिद्धेः परिहारसाम्यं नास्तीत्याशङ्क्याह—कालान्तरेऽपीति। क्लृप्ताया अपि श्रुतेर्विरुद्धश्रुतिदर्शने सत्यभावावधारणस्योक्तत्वादत्यन्ताप्रामाण्यवादिमतेऽपि पौर्वापर्यमकारणं तदनङ्गीकृतमेव तु पौर्वापर्यस्य बलाबलहेतुत्वमापाद्य विकल्पवादिना निरस्तमित्याशयः। किं च प्रथमं स्मृतिग्रहणेऽपि पुरुषान्तरदृष्टया श्रुत्या तदानीमपि मूलश्रुत्यनुमानबाधाद्विकल्पो न युक्त इत्याह—पूर्वेति। ननु पुरुषान्तरस्य विरुद्धश्रुतिदर्शनेऽपि स्वयमदर्शनात्कथं बाधोऽत आह—पुरुषान्तरेति। एव तर्हि व्रीहियवश्रुत्योरपि पुरुषान्तरबाधेनाङ्गीकृतप्रामाण्यमपि पुरुषं प्रत्यप्रामाण्यापत्तेः। सर्वान्प्रत्यप्रामाण्यं प्रसज्येतेति शङ्कते—यवेति। श्रुतेरननुष्ठापकत्वमात्रमप्रामाण्यम्, न च पुरुषान्तराननुष्ठापकत्वेन पुरुषान्तरं प्रत्यनुष्ठपकत्वं बाध्यते। न चैवं पुरुषव्यवस्थया विकल्पानापत्तिः शङ्कनीया। पठ्यमानत्वाविशेषण प्रमाणीकृतयवश्रुतिकमपि पुरुषं प्रति कालान्तरे यवश्रुतेः प्रामाण्याभ्युपगमादिति परिहरति—उच्यत इति। प्रतियोगित्वेन व्रीहिश्रुतेरपि बुद्धिस्थत्वात्तयोरिति द्विवचनम्। ननु स्मृत्यनुमितायाा अपि श्रुतेः पुरुषान्तरगतिविरुद्धश्रुतिदर्शनेनानुष्ठापकत्वरूपं निमज्जनमात्र करिष्यते। नाभावावधारणमित्याशङ्क्याह—स्मृति त्विति। सर्वेषां प्रथमस्मृतिग्रहणे निष्प्रतिद्वन्द्वानुमानसिद्धः पश्चाद्विरुद्धश्रुतिदर्शने सति निमज्जनमात्रकल्पनं भवेदपि।

केषांचित्तु प्रथमश्रुतिग्राहिणां स्मृतिमूलश्रुत्यभावावधारणे सत्येकस्याः श्रुतेः सदसत्त्वविरोधात्पुरुषान्तरगतमपि श्रुत्यनुमानं मिथ्येति निश्चीयत इत्याशयः। सर्वदा तावतां पुंसामभावात् न स्मृतिरप्रामाण्येन मुच्यत इत्याकारप्रश्लेषेणान्वयः । कर्त्तरीयन्तृतीया। अप्रामाण्यं स्मृतिमात्मनः सकाशान्न मुञ्चतीत्यर्थः। प्रामाण्येनेति तु पाठे यदि सर्वदा तावतां भावः स्यात्ततो न प्रामाण्येन मुच्यते । न त्वेतदस्ति । प्रथमश्रुतिग्राहिणामपि केषांचिद्भावादिति व्यवधारणकल्पनया योज्यम् । अभ्युपगमवादमात्रं चैतत् ।

परमार्थतस्तु सर्वेषामपि प्रथमश्रुतिग्रहणे पश्चात्तेन विरुद्धश्रुतिदर्शनेन पूर्वोत्पन्नस्मृतिमूलश्रुत्यनुमानमिथ्यात्वनिश्चयाद्विकल्पो न युक्त इत्याह—**अप्रामाण्यपदं चेति** । पारतन्त्र्यम् अप्रामाण्मपदम् । ननु सत्यपि विरुद्धश्रुतिदर्शने विकल्पेनोभयप्रामाण्यसम्भवात्किमिति स्मृत्यनुमितायाः श्रुतेरभावोऽङ्गीक्रियत इत्याशङ्क्याह—**अध्यारोप्येतेति** । गत्यन्तरसम्भवेऽष्टदोषदुष्टविकल्पापादकश्रुत्यनुमानस्यायुक्तत्वात् स्मृत्यप्रामाण्यकल्पनमेव न्याय्यमित्याशयः ।

एतदेव विवृणोति—**विरुद्धयोर्हीति** । एवं च सति श्रुतिविरोधेऽत्यन्तदुष्टविकल्पपरिहारार्थं भ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्याङ्गीकरणस्य न्याय्यत्वेनार्द्धवैशसानापादकत्वान्न तत्परिहार्थमविरोधेऽप्यप्रामाण्यमापादनीयमित्याह –**नन्विति** । यत्तु सर्वत्रैकरूप्योत्प्रेक्षैव युक्तेत्युक्तम् । तद्विरोधाविरोधाभ्यां सर्वत्र व्यवस्थादर्शनादयुक्तमित्याह—**यथेति** । नास्त्येकरूपतेत्यतः शब्दाध्याहारेणोपसंहारः । अधिकरणार्थं व्याख्याय भाष्यमनुसन्दधानस्तत्र यथेत्युदाहरणभाष्यं पूर्वाधिकरणप्रतिपादितश्रुत्यनुमानद्वारस्मृतिप्रामाण्यापवादार्थेऽस्मिन्नधिकरणे प्रत्यक्षश्रुत्यर्थोपसंहारपरकल्पे सूत्रकारवचनस्यानुदाहार्यत्वादयुक्तमित्याशङ्क्य समर्थ्यते—**यद्यपीति** । कल्पसूत्राधिकरणे स्वातन्त्र्यस्य निषेत्स्यमानत्वात्पौरुषेयत्वेन च वस्तुतोऽप्यनुपपत्तेः कल्पसूत्रमूलभूतानामपि श्रुतीनां शाखान्तराधीतानामनुमेयत्वाविशेषात्प्रत्यक्षश्रुत्यर्थोपसंहारपरत्वलक्षणस्य वैलक्षण्यात्मकस्यान्तरस्याव्यापकत्वेनाल्पत्वाद्युक्तमुदाहरणत्वमित्याशयः। सर्ववेष्टनस्मृतेर्जैमिनिदृष्टशाट्यायनिब्राह्मणगतश्रुतिमूलत्वेऽप्यस्मदादीनां मूलादर्शनादस्तूदाहरणत्वम् ।

क्रीतराजकभोज्यान्नत्वस्मृतिमूलस्य तु तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवतीत्यथर्ववेदे पठ्यमानस्यास्मदादिप्रत्यक्षत्वेन निराकर्त्तुमशक्यत्वात् क्रीतराजको भोज्यान्न इत्युदाहरणभाष्यमयुक्तमाशङ्क्य समर्थ्यते—**क्रीतेति** । बाध्यत्वासम्भवशङ्कानिरासाम्याद्व्युत्क्रमो न दोषः। तथापि स्मृतिपक्षे बाध्यत्वे निक्षेपादुदाह्रियत इत्यन्वयः। अग्निषोमीयसंस्थावधिभोजनप्रतिषेधविरोधादिति बोध्यत्वे हेतुः। विरोधेऽपि कथं बाध इत्याशङ्क्य—**अधिकृतानधिकृतेत्युक्तम्** । अधिकृतानधिकृतविवेकार्थं तस्येत्याद्युक्तम् । कथमधिकृतानधिकृतयोर्बलाबलविशेष इत्याशङ्क्य प्रकरणविशेषादिति प्रकरणाधीतसामिधेनीपाञ्चदश्यानारभ्याधीतसाप्तदश्यबलन्यायायोदाहरणं दीक्षितान्नभोजनस्यायज्ञाङ्गत्वेन यज्ञाङ्गगोचरन्यायाविषयत्वात्स्वासंमतिसूचनार्थम्—**भाष्यकारेणेत्युक्तम्** । भाष्यकृतश्चै-

षोऽभिप्रायः त्रयीप्रतिपादतस्य दीक्षितान्नभोजनप्रतिषेधस्यावश्यपेक्षायामथर्ववेदप्रतिपादितस्यावधेर्दूरस्थत्वेन विलम्बितत्वादथर्ववेदप्रतिपादितस्य तु तस्माद्दीक्षितस्याविज्ञातस्याक्रीतराजकस्याभोज्यं भवतीति प्रतिषेधस्य निर्ज्ञातावधित्वेनावश्यनपेक्षत्वाद्दौर्बल्यमिति ।

अष्टाचत्वारिंशद्वर्षंब्रह्मचर्योदाहरणमयुक्तम् । कृष्णकेशत्वस्यानवस्थितवयोवस्थाविशेषत्वेनावस्थितवर्षसंख्यारूपकालविशेषत्वेन चोत्तरकालमपि सम्भवात् । न च जातपुत्रोऽग्नीनादधीतेत्युत्तरकालं पुत्रजन्मप्रतीक्षणाद् बहुकालातिक्रमे सति कृष्णकेशत्वापनयः शङ्कनीयः । जातपुत्रस्य पक्षान्तरत्वसम्भवेन समुच्चयस्य संदिग्धत्वादित्याशङ्क्य समर्थ्यते—**कृष्णकेशत्वं चेति** । तथापि व्यक्त एव विरोधो दृश्यत इत्यन्वयः । कथमित्यपेक्षिते स्मरणप्रकाशितस्यार्थस्य यौवनावस्थारूपस्य जातपुत्रत्वकृष्णकेशत्वाभ्यां बाल्यवार्द्धक्यव्यवच्छेदेन परिग्रहादुपलक्षणादित्युक्तम् । कृष्णकेशत्वजातपुत्रत्वयोः प्रत्येकमाधानाधिकारिविशेषणत्वेऽष्टदोषविकल्पापत्तेर्विशेषणविशेष्यभावाप्रतीतेश्च समुच्चयायोगाद्दारपरिग्रहोत्तरकाले च कृष्णकेशस्य नियमेनाधानप्राप्तेः पलितकेशव्यावृत्त्यर्थतया कृष्णकेशत्वविशेषणत्वविशेषणस्य परिसंख्यार्थत्वापत्तेरजातपुत्रस्यापि च हरिश्चन्द्रादेः पुत्रार्थयागोपाख्यानेनाहिताग्नित्वदर्शनेनाजातपुत्रत्वस्य स्वरूपेण विशेषणत्वानुपपत्तेः । स्मृत्यनुसाराच्चोभयोर्यौवनावस्थोपलक्षणार्थत्वमवसीयत इति । ननु यौवनावस्थायाः किंचिच्छेषेऽपि स्मृत्यनुसारोपपत्तेर्विरोधः स्यादित्याशङ्क्य -**अक्रतो वेत्युक्तम्** । 'शतायुर्वै पुरुष' इति श्रुतेः पञ्चाशद्वर्षस्यार्द्धं वयो भवति तावता यौवनावस्थासमाप्तिरित्याशयः । तथापि कथं विरोध इत्याशङ्क्य—**अष्टाचत्वारिंशद्वर्षेत्याद्युक्तम्** । पञ्चवर्षोपनयनपक्षे सातिरेकाणि द्विपञ्चाशद्वर्षाणि गर्भाष्टमपक्षे सातिरेकाणि चतुःपञ्चाशदिति । तत्प्रमाणमशक्यत्वादिति पूर्वपक्षसिद्धान्तभाष्ये स्पष्टत्वान्न व्याख्याते ।

वस्त्रान्तरितौदुम्बरीस्पर्शेऽप्यौदुम्बरीं स्पृष्ट्वेति बुद्धवचनपायात् स्पर्शनासर्ववेष्टनयोरविरोध इति कथमशक्यतेत्यविरोधाशङ्काभाष्याभिप्रायं व्याचष्टे—**ननु चेति** । नौपचारिकशब्दप्रयोगमात्रेणानुपलब्धिविरोधात् वस्त्रान्तरितौदुम्बरीस्पर्शानुभवकल्पना युक्तेति स्पर्शनविधानादित्यादिपरिहारभाष्याभिप्रायं व्याचष्टे—**कथमिति** । ननु व्यक्तिद्वारेणेव जातेर्वस्त्रद्वारेणौदुम्बर्याः स्पर्शो भविष्यतीत्याशङ्कां निराकर्त्तुमाह—**न चेति** । जात्योर्व्यक्त्योः स्पर्शयोश्चेति विग्रहः । औपचारिकस्पर्शाङ्गीकरणे तु विध्यानर्थक्यमित्याह—**अथेति** । अविरोधवादी स्वाभिप्रायं विवृणोति—**नन्विति** । बुद्ध्यवैलक्षण्यमेव व्यवहारेण द्रढयति—**तथा हीति** । परिहर्त्ता व्यवहारमन्यथोपपादयति –**सत्यमिति** । किं तु चण्डालस्पृष्टवस्त्रस्पर्शकारितमित्यर्थः । वद्वस्त्रं स्पृश्यमानमित्यध्याहारः । कथं तस्याशुद्धिकारणत्वमित्याशङ्क्याह—**तथा चेति** ।

नन्वशुचिस्पर्शो निषिद्धत्वादशुद्धिकारणं वस्त्रस्य च चाण्डालादिवत् स्वतोऽशुचित्वाभावान्मनुष्यवच्च निषेधाधिकाराभावेन निषिद्धाचरणनिमित्ताशुचित्वाभावात्तत्-

स्पर्शस्याशुद्धिकारणत्वानुपपत्तेः पतितचण्डालसूतिकोदक्याशवस्पृष्टिवतत्स्पृष्टस्पर्शने सचैलो जलमाविशेदित्यस्य च मनुष्यमात्रविषयत्वोपपत्तेर्न चण्डालस्पृष्टवस्त्रस्पर्शे दोषकल्पनं युक्तमित्याशङ्कते—कथं पुनरिति। ननु सूत्यादिवदनिषिद्धोऽपि वस्त्रस्याशुचिस्पर्शो शुचित्वमापादयिष्यतीत्याशङ्कयानिष्टापादनेन प्रत्याचष्टे—कथं वेति। तत्स्पृष्टेषु स्पृश्यमानेष्विति विग्रहः। अनिष्टापत्तिं तावत्परिहरति—तदुच्यत इति। काष्ठादीनां चण्डालादिस्पर्शापादितस्याप्यशुचित्वस्य।

अष्टाङ्गुलं भवेत्काष्ठं तृणमुष्टिर्यदा भवेत्।
मारुतेनैव शुद्धिः स्यादूर्ध्वं स्पृष्टिर्न दूष्यति ॥

इति स्मृतेः आदिशब्दोक्तानां च रथ्याकर्दमादीनाम्—

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानिति ॥

स्मृतेर्वायुस्पर्शेनापनयात् स्पर्शस्य च दोषकारणत्वं न जातमशुचित्वानापादनादित्याशयः। ननु निर्वातिस्थस्य काष्ठादेश्चण्डालादिस्पृष्टस्यापि शुद्ध्यन्तरास्मरणेन मारुतशुद्धिस्मृतेरशुचित्वानापत्तिप्रतिपानपरत्वावसायान्न तावत्तत्साम्येन वस्त्रस्याशुचित्व.पत्तिर्वक्तुं शक्यते। न च प्रक्षालनशुद्धिस्मृतेर्वस्त्रस्याशुचित्वापत्तिर्वक्तुं शक्यते। "तस्याः" गन्धलेपापकर्षणे शौचममेध्यस्ये'ति लेपापकर्षणोपदेशाल्लिप्तविषयत्वप्रतीतेरित्याशङ्कते—नन्विति। प्राक्तनलेपापकर्षणविषयत्वेनापि विध्युपपत्तेर्नाश्रुतलिप्तविषयत्वकल्पनं युक्तमिति परिहरति–नेति। तुशब्दः शङ्कानिवृत्त्यर्थः। यद्यपि केनचिदमेध्येन लिप्तस्येति लिप्तपदं प्रक्षिप्य पठ्यते, तथाप्यभियुक्तबहुजनापठितत्वान्नासावार्षः पाठ इति चिरन्तनग्रहणेन सूचितम्। तवं तर्हि वस्त्रस्यामेध्यत्वाभावान्नानेन शुद्धिरुक्ता स्यादित्याशङ्क्याह–चण्डालेति। आशङ्कावादी स्वाभिप्रायं प्रकटयति—ननु चेति। गवाश्वादितुल्यत्वावधारणहेतुः स्वाभाविकाशुचित्वनिषेधाधिकाराभावलक्षणः प्रागेवास्माभिरुक्तः। स्वाभाविकाशुचित्वनिषेधाधिकारयोरभावेऽपि प्रक्षालनविधिसामर्थ्याच्चण्डालादिस्पर्शेन वस्त्रस्याशुचित्वापत्तिरवसीयत इति परिहारवादी स्वाभिप्रायं प्रकटयति—उच्यत इति। चण्डालस्पृष्टवस्त्रस्पर्शनिमित्तदोषप्रतिपादनस्य प्रकृतौदुम्बरीस्पृष्टवस्त्रस्पर्शनिमित्तौदुम्बरीस्पर्शबुद्ध्यभावोपयोगितामाह–अतश्चेति। शाखान्तरे चौदुम्बर्योद्गाता स्पृष्टव्य इति विधानात्तस्याश्चाचेतनत्वेन स्पर्शसंवेदनलक्षणस्पर्शायोगात्प्राप्तिमात्रवचनत्वेन स्पर्शश्रुतेः प्राप्तेश्च व्यवधानेऽनुपपत्तेरविरोधाशङ्कैव नास्तीत्याह—यदा त्विति।

ननु कस्यांचिच्छाखायामौदुम्बर्याश्रयत्वमात्रविधानाद्वस्त्रान्तरिताया अपि चौदुम्बर्याः पतनप्रतिबन्धकत्वेनाश्रयत्वोपपत्तेरविरोधो भविष्यतीत्याशङ्क्याह–अपाश्रयणेति। अस्पृष्टायाः संयोगाभावेनाश्रयत्वायोगादपाश्रयणहस्तसंयोगाद्यनेकोपायसाध्ये च स्पर्शेऽपाश्रयणनियमार्थत्वेनापाश्रयणविधेरपाश्रयणेनैवौदुम्बरीं स्पृष्ट्वेत्येकवाक्यत्वावसायादस्त्येव विरोध इत्याशयः।

ननु संयुक्तस्यापि वस्त्रस्य पतनप्रतिबन्धकत्वायोगात्संयुक्तसंयोगो नास्पृष्टाप्यौदुम्बर्येवाश्रयो भविष्यतीत्याशङ्क्याह—परेति । संयुक्तसंयोगमात्रेणाश्रयत्वाङ्गीकरणेऽविन्ध्यसंयुक्ताकाशसंयुक्तस्य हिमवतोऽपि विन्ध्याश्रयत्वापत्तेर्वस्त्रस्यैवौदुम्बरीसंयोगलब्धस्थैर्यस्य पतनप्रतिबन्धकत्वं प्रसज्येतेत्यपाश्रयणस्पर्शयोर्विरोधोऽस्तीत्याशयः ।

ननु सत्यपि विरोधे सर्वशब्दस्य कतिपयवेष्टनेऽत्यन्तबाधानापत्तेः । स्पर्शश्रुतेश्चौदुम्बरीसम्बद्धवस्तुस्पर्शेऽप्यौपचारिकत्वेनोत्पत्तेः कथंचिद् बाधमात्रेण चानुपपत्तिपरिहारसम्भवेऽत्यन्ताबाधायोगान्न सर्ववेष्टनस्मृतेर्व्यामोहत्वं युक्तमित्याशङ्क्य कथंचिद् बाधोऽपि श्रुतेः कारणाभावादयुक्त इति वामुद्गायतेतिभाष्येणोक्ताः सर्वेत्यनेन स्मृतेर्बाधकारणत्वमाशङ्क्य, नन्वित्यनेन निर्मूलत्वान्निराकृत्य वैदिकमित्यनेन श्रुतिमूलत्वामाशङ्क्य भवेदित्यादिना प्रत्यक्षश्रुतिविरोधान्मूलश्रुतिकल्पनासम्भवमुक्त्वा, कथं न हीत्यनेन किं तर्हि मूलमिति पृष्ट्वा व्यामोहादित्युत्तरे दत्ते कथमित्यनेन व्यामोहमूलत्वे किं प्रमाणमिति पृष्ट्वा श्रौतेत्यनेन विरुद्धश्रुत्यवगवा यथार्थत्वान्यथानुपपत्तिः प्रमाणमित्युक्तम्, तत्सर्वं संक्षेपेण तात्पर्यतो व्याचष्टे—इति युक्तमिति । पूर्वोक्तबलाबलहेतुपरामर्शार्थोऽयमितिकरणः ।

अथेत्याद्यशङ्काभाष्यं श्रुतिमूलत्वस्य निराकृतत्वात्स्वातन्त्र्येण चाप्रामाण्यादविधित्वाच्चायुक्तमाशङ्क्य, विकल्पाङ्गीकरणेन विरोधपरिहारसम्भवाच्छ्रुतिकल्पनोपपत्तिमङ्गीकृत्यैतदुक्तमिति व्याचष्टे—अथेति । नासतीत्यादितुल्यकारणत्वादित्यन्तं भाष्यं तात्पर्यतस्तावद्व्याचष्टे—नासतीति । (हसे हसने मृङ् प्राणत्यागे, गॄ निगरणे, इण् गतौ, वा गतिगन्धनयोः, अम गतौ, दम उपशमे, लूञ् छेदने, पूञ् पवने, धुर्वी हिंसायाम्, हस्तः करनक्षत्रयोः । मर्तः, 'भूर्लोकः । गर्तः अवटः' । एतः-लवुंरः । वातो-वायुः, रोगश्च । अन्तः-अन्तेऽन्तिके च । दन्तः दशनम् । लोतः-अश्रुवह्नचोः । पोतः-बालवहित्रयोः । धूर्तः शठः) । औणादिके तत्प्रत्यये कृते गम्यतेऽसावित्यस्मिन्नर्थेऽयमन्तशब्दः । एकेनाम्यते गम्यते प्राप्यते योऽसावेकान्तव्योमाहश्चासावेकान्तश्चेति तृतीयासमासगर्भः कर्मधारयः । विकल्पेऽङ्गीक्रियमाणे पूर्वोक्तेनैव तुल्यकक्षविकल्पोऽपीत्यादिना मार्गेण व्यामोहस्यैकविज्ञानगतस्य कल्पनामवश्यमापन्नां पूर्वोक्तेनैव द्वितीयेन प्रकारेणेत्यादिना मार्गेण स्मृतावेव नियच्छतीति प्रथमपादावृत्त्या योज्यम् ।

एतदेव भाष्यमवयवशो व्याचिख्यासुर्व्यामोहविज्ञानसमासं द्वेधा विगृह्णाति—व्यामोहेति । विकल्पं त्विति भाष्ये न पाक्षिकीत्यपाक्षिकत्वाभिधानमेकस्मिन्प्रयोगेऽङ्गीकृतप्रामाण्याया अपि स्पर्शश्रुतेः प्रयोगान्तरे व्रीह्यादिश्रुतिवदप्रामाण्याङ्गीकरणोपपत्तेरयुक्तमाशङ्क्योपपादयति—विकल्पं त्विति । अपाक्षिकं चेति पाठे सर्ववेष्टनस्मरणं चेति भिन्नक्रमश्चाकारः । पक्षे तावदित्यादिपाक्षिकत्वोपपादनार्थमिति व्याचष्टे—एवमिति । यथा श्रुतिरपाक्षिकी तथा स्मरणमपीत्येवंशब्देनाभिधानाद्भिन्नक्रमत्वं सूचितम् । पाक्षिकं चेति

तु पाठे विकल्पेऽङ्गीक्रियमाणे पाक्षिकत्वमेवात्यन्ताप्रामाण्यहेतुरिति व्याचष्टे—**पाक्षिकं चेति**। ततश्चाव्यामोहे तस्मिन्स्पर्शनविज्ञाने पक्षान्तरेऽपीत्यध्याहृत्य भाष्यं योज्यम्।

ननु पक्षान्तरे स्पर्शनश्रुतेर्व्यामोहत्वात्स्मृतिमूलश्रुतिकल्पनं भविष्यतीत्याशङ्कानिवृत्त्यर्थं न चासाविति भाष्यं व्याचष्टे—**एकदापि चेति**। यदेव हीत्यादिभाष्यं श्रुत्यपाक्षिकत्वोपपादनार्थतया व्याचष्टे—**इति समर्थ्यमान इति**। तस्याव्यामोहत्वस्य निरपेक्षप्रमाजनकत्वं मूलम्, तदपाक्षिकत्वात्तद्वशेनैव च स्मृतिव्यामोहत्वस्यापाक्षिकत्वात्सर्वदा निर्विचिकित्सश्रुतिप्रामाण्यसिद्धिरिति भाष्यार्थः।

ननु पक्षान्तरे प्रमादपाठत्वान्निरपेक्षप्रमाजनकत्वं न सम्भवतीत्याशङ्कानिरासार्थं नासाविति भाष्यं व्याचष्टे—**न हीति**। स्मृतेः श्रुत्यादिमूलत्वं वैधर्म्यदृष्टान्तत्वेनोक्तम्। तेनेति भाष्यं श्रुत्यपाक्षिकं चोपसंहारार्थत्वेन तावद्व्याचष्टे—**तेनेति**। व्यामोहादिति हेतौ पञ्चमीत्यर्थः। अन्यपर्यायान्तरशब्दयोगनिमित्तपञ्चम्यङ्गीकरणेन वा तेन श्रुतिविरोधपरिहारासम्भवेन नैतत्स्मार्त्तविज्ञानं व्यामोहपक्षात्प्रामाण्यरूपं पक्षान्तरं संक्रान्तम्, किं तु दुःश्रुततादिविज्ञानं सर्वदा तस्य मूलमित्येवमेतद् भाष्यं योज्यमित्याह—**यद्वेति**। दुःश्रुतस्वप्नादिमूलत्वेनैकदाङ्गीकृतेन सर्वदापन्नेन हेतुना पक्षान्तरं न संक्रान्तमित्यर्थः।

ननु सत्यपि विरोधे शिष्टत्रैवर्णिकदृढपरिग्रहस्य श्रुतिकल्पनहेतोर्भावात्किमिति श्रुतिर्न कल्प्यत इत्याशङ्क्य, प्रमित्सानिरपेक्षपरोक्षार्थविषयप्रमाणानुत्पत्तेर्न विरोधे श्रुतिकल्पनं युक्तमिति प्रतिपादनार्थं 'न हीति' भाष्यं किं कर्त्तव्यमिदानीं चेत्यनेन पूर्वमेव व्याख्यातप्रायत्वान्न व्याख्यातम्। तस्मादित्युपसंहारभाष्ये तुल्यकारणत्वं व्याचष्टे—**श्रुतीति**। विषमशिष्टत्वादपि विकल्पो न युक्त इति प्रतिपादनार्थमपि चेति भाष्यम्। प्रमाणायां स्मृताविव्यत्रोभयं प्रामाण्यविरोधविवरणदर्शनादयुक्तमाशङ्क्य विरोधप्रतिपादनपरतयैव तावद्व्याचष्टे—**अपि चेति**। इतरस्मृतिप्रामाण्यं श्रुतिप्रामाण्यं चेतरच्छ्रुतिप्रामाण्यं स्मृतिप्रामाण्यं वा नाश्रयतीति नञ्समासो। नन्वयमकारो दीर्घ इत्याशयः। अन्यतो बलाबलपरिच्छेदाभावे तुल्यबलत्वावगत्या विकल्पः स्यात्सति तु तस्मिन्नष्टदोषविकल्पाङ्गीकरणं न युक्तमिति भाष्याभिप्रायः। क्व पुनरितरेतराश्रयविरोधेऽन्यतः परिच्छेदोऽदृष्ट इत्याशङ्क्याह—**परस्परेति**।

प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य बाधकैः।
तत्पराजयतः कार्यो निर्णयो बाधवर्जनात्॥

—श्लो० वा० अनु०, ९३-९४

इत्यत्रोक्तो विरुद्धाद् व्यभिचारिणो विरोधे, अन्यतः परिच्छेदो दृष्टान्तितः।

प्रमाणशब्दमाक्षिपति—**प्रमाणशब्दस्येति**। प्रमाणशब्दस्य स्मृतिसामानाधिकरण्यप्रयोगेण ज्ञानसमानाधिकरण्याभावात् स्मृतेश्चाप्रमितित्वेन भावोत्पन्नल्युडन्तत्वायोगान्नानेन कारणद्वयेन नपुंसकलिङ्गत्वसिद्धिरित्याशङ्क्य प्रमाणशब्दस्य वेदाः प्रमाणमित्यादिप्रयोगेण

लोके नियतलिङ्गत्वावधारणात्, करणसाधनत्वेऽपि ज्ञानशब्दवत्सामान्यविवक्षया नपुंसकलिङ्गत्वात् भावे ल्युट् चेति ल्युट्प्रत्ययस्मरणात्तदाश्रयणेन नपुंसकलिङ्गत्वसमर्थनार्थं वेदाः प्रमाणमितिनिदर्शनम्। ज्ञानसामानाधिकरण्येनेति च तस्य ज्ञानमुपदेश इति करणव्युत्पन्नस्यापि ज्ञानशब्दस्य नपुंसकलिङ्गत्वदर्शनाद्यदेव ज्ञानशब्दस्याधिकरणमभिधेयम्, नपुंसकलिङ्गं तदेवास्यापीति व्याख्येयम्। ज्ञानशब्दस्य विषयाव्यभिचारिबुद्धिविशेषवाचिदवयंवार्थप्रत्यभिज्ञानेन च च रूढित्वायोगाद् बुद्धिबोधादिसामानाधिकरण्याविशेषण चानेकलिङ्गतापत्तेरव्युत्पन्नस्यैव प्रमाणशब्दस्य ज्ञानशब्दपर्यायत्वाभिप्रायं समानाधिकरण्यव्याख्यानं कथं निर्वहतीति न विद्मः। भावव्युपत्तौ तु स्मृतिजन्यसर्ववेष्टनज्ञानलक्षणया स्मृतिशब्दस्य प्रमाणशब्दसामानाधिकरण्यं द्रष्टव्यम्। करणविशेषविविक्षायां वेति विशेषशब्देन पूर्वं सामान्यविवक्षा द्योतिता।

समर्थनं प्रतिजानीते—तस्मिन्निति। समर्थयते—प्रमाणमिति। मूलप्रमाणाश्रितायाः स्मृतेः श्रुत्या सह स्पर्द्धा भवति, न स्वतन्त्राया इति प्रतिपादयितुं प्रमाणशब्दात्परात्रअयगताविस्येष धातुर्भाष्यकृता प्रयुक्तः। न शुद्धः प्रमाणशब्दः ततश्च प्रमाणमयनायां गच्छन्त्यां प्रमाणायां स्मृतौ स्पर्शनं व्यामोहो न तन्निरपेक्षायामिति भाष्यार्थो भवतीत्याशयः। योजना चैवम्। यतः स्मृतिः प्रमाणमयते तस्मात्प्रमाणोच्यते धात्वन्तरेण यतिधात्वर्थव्याख्यानार्थम्—यातीत्युक्तम्। किं तत्प्रमाणमित्यपेक्षिते—मूलभूतां श्रुतिमित्युक्तम्। नन्वयतेर्यकारान्तरत्वात्कथं प्रमाणेति रूपसिद्धिरित्याशङ्क्य, क्विपो बलादित्वेन लोपो व्योर्वलीति यकारलोपे सत्येतद्रूपसिद्धिरिति सूचनार्थं—क्विबन्तादयतेरित्युक्तम्। ननु कृताकृतप्रसङ्गितया नित्यत्वेन क्विपो लोपस्य प्राथम्यात् वलः परभूतस्याभावे सति कथं यकारलोपः स्यादित्याशङ्क्य वल्प्रत्ययपरत्वनिमित्तयकारलोपाभ्युपगमेनैव तावत्परिहरति—तत्रेति। प्रत्ययलोपे प्रत्ययलक्षणमितिस्मरणात्प्रथमं क्विपो लोपेऽपि तत्कार्यसिद्धिरिति भावः। नन्विदं वल्ग्रहणं वर्णविषयम्। तथा सति गोधाया अपत्यमित्यस्मिन्नर्थे गोधाया ढ्रगिति विहित ढ्रक्प्रत्ययादिभूतढकारस्यायनेयीनियियः फढखच्छघां प्रत्यादीनामित्ययादेशे कृते लोपोव्योर्वलीति यलोपाद् गौधेर इति रूपं सिद्ध्यति। प्रत्ययविषयत्वे तु प्रत्ययमध्यगतस्य वलो रेफमात्रस्य प्रत्ययत्वाभावात्प्रत्ययमध्यगतयकारलोपनिमित्तत्वाभावेन न रूपसिद्धिः स्यादित्याशङ्क्याह—न चेति। वल्ग्रहणस्य वर्णविषयत्वेन, प्रत्ययविषयत्वेन च द्वेधा वैयाकरणैर्व्याख्यानादिह लक्ष्यानुसारेण प्रत्ययविषयत्वाभ्युपगमेन बलादिपत्ययनिमत्तोऽत्र यलोपः प्रत्ययलोपलक्षणेन युक्त इति भावः।

माभूद्वा वल्प्रत्ययपरत्वनिमित्तो यकारलोपः, तथापि यदि वा कानिचिदन्यान्यपि वर्णाश्रयाणि कार्याणि प्रत्यययलोपलक्षणेन भवन्ति तद्वदिदमपि भविष्यतीत्युक्त्वाऽथ वैवं वक्ष्यामि लोपोव्योर्वलि ततः वेर्व्यन्तस्य व्योर्लोपो भवतीति भाष्ये पतञ्जलिना वेरपृक्तस्येति योगविभागाभिधानाद्विभक्तस्य वेदिति सूत्रस्य येनविधिस्तदन्तस्येति स्मरणेन व्यन्तस्येत्यर्थावगतेः कृताकृतप्रसङ्गित्वेन च नित्यत्वेऽपि विलोपस्य प्रथमकरणे व्यन्तशब्दाभावेन

वेरिति सूत्रस्यानवकाशापत्तेः सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवानिति विलोप-प्राथम्यप्राबेनास्य व्यन्तत्वानपायाल्लोपो व्योरिति पूर्वसूत्रगतपदद्वयानुवृत्त्या व्यन्तस्य वकारयकारयोर्लोप इति सूत्रार्थनिष्पत्तेर्व्यन्तत्वनिमित्तो यकारलोपो भविष्यतीति परिहारान्तरमाह—यद्वेति ।

वेरितीतिकरणाध्याहारेणैव योज्यम् । वेरिति योगविभागेन लोपो भविष्यतीयुक्ते कथमित्यपेक्षायां व्यन्तस्य वकारश्च यकारश्च लुप्यत इत्येवमर्थावगमादिति न केवलं वल्परत्वनिमित्त एव वकारयकारयोर्लोपः किं तु व्यन्तत्वनिमित्तोऽपीति चकारार्थः । ननु यकारलोपेऽप्यकारस्य ह्रस्वस्य पिति कृति तुगिति तुगागमापत्तेरनित्यमागमशासनमिति स्मरणाद्वा तदकरणेऽपि शुद्धस्याकारस्यादन्तत्वात्प्रमाणपदसंहितायां वा दीर्घत्वापत्तेष्टाप्प्रत्ययाभावेन याडाप इति तन्निमित्तयाडागमाभावात्कथं प्रामाणायामिति रूपसिद्धिरित्याशङ्क्याह—यलोपे चेति । शुद्धग्रहणेन तुगागमदीर्घत्वापादके निराकृते शुद्धस्याप्याद्यन्तवदेकस्मिन्नित्यन्तवत्कार्यसिद्धया टाप्प्रत्ययोत्पत्तिसमर्थनार्थम् – तदन्तावधिकादित्युक्तम् । यः शुद्धः परिशिष्टाकारः स एवान्तरूपो विधिः स्वार्थे कप्रत्ययः । तस्माददन्तरूपावधिभूतादतः पश्चात् स्त्रियां विषये टाप् क्रियत इत्यर्थः । ननूपपदाकारसंहितायाः प्रथमातिक्रमकारणाभावेन पूर्वकार्यत्वाद्दीर्घत्वापत्तेष्टाप्प्रत्ययानुत्पत्तिः स्यात् । पूर्वाकरणे वा भ्रष्टावसरत्वेन पश्चादप्यकार्यत्वात्प्रमाणेतिरूपं न सिद्धयेदित्याशङ्क्याह—अक इति । एकपदाकारसंहितायाः पदान्तरसंहितातः शीघ्रप्रतीतेर्दीर्घादेशयोश्च धातुप्रत्ययाकारयोर्दीर्घादेशस्यान्तरतमत्वातिशयाद्धातुह्रस्वाकारद्वयदीर्घादेशाच्छीघ्रप्रतीतेः परयोर्धातुप्रत्ययगतयोरकाराकारयोरकः सवर्णदीर्घत्वं पूर्वं कृत्वा ततः पूर्वेणाप्युपपदाकारेण अकः सवर्णदीर्घत्वं कृत्वा प्रमाणेत्यनुगम्यत इति योज्यम् । तदितरेतराश्रयमित्युपसंहारभाष्यमपीतरेतरविरोधपरतया पूर्ववद् व्याख्यातं भवतीत्याह—तदेतदिति ।

उपक्रमोपसंहारानुरोधेन वा विवरणभाष्यमेवेतरेतराश्रयपरमध्याहारेण व्याख्येयमित्याह—यद्वेति । प्रमाणायामित्यत्र स्पर्शने व्यामोहे स्मृतिः प्रमाणमित्यध्याहारः, स्पर्शन इत्यत्र स्मृतौ व्यामोहे स्पर्शनं प्रमाणमिति । [प्रमाणेत्याद्यमध्याहृतं भाष्यमिष्यमाणार्थत्वेन व्याख्यायते रुदित्युपसंहारभाष्यं श्रुतावारोप्यमाणाप्रामाण्यपरतया व्याख्यातम् । एवं तथेत्यादिना संहारभाष्यमावृत्त्या स्मृत्यप्रामाण्यसमानार्थत्वेन व्याख्यायेत्यध्याहृतं स्पर्शने प्रमाणे इत्यादिभाष्यं श्रुतिप्रामाण्यासमर्थनार्थत्वे व्याख्यातम् । एतच्छ्रुतिप्रामाण्यपक्षेऽप्यन्योन्याश्रयस्य सुपरिहरत्वं स्मृतिप्रामाण्यपक्षेऽन्योन्याश्रयस्य दुःपरिहरत्वं वक्ष्यमाणमभिप्रेत्योक्तम्] । तत्राद्यश्लोकेनेष्यमाणार्थतयाध्याहृतं भाष्यं व्याख्याय, आरोप्यमाणार्थतया पठितं व्याख्यातम् । द्वितीयेन समर्थ्यमानार्थतया पठितं व्याख्याय, निश्चीयमानार्थतयाध्याहृतं भाष्यं व्याख्यातम् ।

ननु श्रुतिप्रामाण्यगतमितरेतराश्रयं सिद्धान्तवादिनोऽपि समानात्वान्नोद्भावनीयमित्याशङ्क्याह—तद्विदमिति । तस्यैकत्रैवेतरेतराश्रयं तच्च सुपरिहरमिति भावः । अन्यतः

परिच्छेदप्रदर्शनार्थं तत्रेति भाष्यं तत्प्रदर्शनासमर्थत्वेनाक्षिपति—तत्रेति । तत्रेतरेतराश्रयेऽन्यतः परिच्छेदस्य प्रतिज्ञातत्वात् स्फुटमत्यन्तव्यतिरिक्तं हेत्वन्तरं वाच्यम् । भाष्यकारस्त्वेवमुक्त्वा तयोरेव श्रुतिस्मृत्योर्धर्ममेकं श्रुतिप्रामाण्यपरिच्छेदे क्लृप्तमूलत्वम्, स्मृत्यप्रामाण्यपरिच्छेदे चैकं कल्प्यमूलत्वं हेतुमिह किं प्रमाणं किमप्रमाणमिति परिच्छेदवेलायामुक्तवानित्यर्थः । (श्रुतेः क्लृप्तमूलत्वम्, स्मृतेः कल्प्यमूलत्वं धर्ममुक्तवान् । न च सधर्मिणोऽन्यो धर्मधर्मिणोरभेदात् तेन नान्यतः परिच्छेदोऽयमित्याशयः) द्वितीयव्याख्याने तु श्रुतिप्रामाण्यगतेतरेतराश्रयस्य सुपरिहरत्वपरिच्छेदे हेतुं क्लृप्तमूलत्वम् स्मृतिप्रामाण्यगतेतरेतराश्रयस्य दुःपरिहरत्वपरिच्छेदे कल्प्यमूलत्वम्, इह किं सुपरिहरं किं दुःपरिहरमिति परिच्छेदवेलायामित्यर्थः ।

समाधत्ते—नैवेति । श्रुतिस्मृत्योर्विपरीतार्थत्वकृतमितरेतरविरोधित्वमितरेतराश्रयत्वं तु श्रुतिस्मृतिप्रामाण्याप्रामाण्ययोः स्वरूपकृतं समाहितं भाष्यं व्याचष्टे—स्वत इति । स्मृतिप्रामाण्यगतेतरेतराश्रयस्य दुःपरिहरत्वपरिच्छेदे कल्प्यमूलत्वस्य हेतुत्वमुपपादयति—ततश्चेति । नन्वात्मलाभाय स्मृतेर्मूलप्रमाणापेक्षत्वेऽप्यर्थप्रतिपादने निरपेक्षतया पुरुषवाक्यवत्स्वतः प्रमाणत्वेन श्रुत्यप्रामाण्यानपेक्षत्वात्तत्परिग्रहपक्षे वैकल्पिकशास्त्रान्तरवच्छ्रुत्यप्रामाण्याध्याहारारोपेऽपीतरेतराश्रयानापत्तिरित्याशङ्क्याह—न चेति । न तुल्यबलयोर्विकल्पः सम्भवतीत्याशयः ।

दृष्टान्तेनैतदेवोपपादयति - बलवन्तमिति । स्मृतिप्रामाण्यगतेतरेतराश्रयस्य दुःपरिहरत्वमुपसंहरति—एवं तावदिति । श्रुतिप्रामाण्यगतेतरेतराश्रयस्य सुपरिहरत्वपरिच्छेदे क्लृप्तमूलत्वस्य हेतुत्वमुपपादयति—यदा त्विति । तदा पूर्वसिद्धस्मृत्यप्रामाण्यलिप्सायां पूर्वानुभवपारतन्त्र्यलक्षणस्मृतिस्वरूपाश्रयमप्रमाणत्वमादितः सिद्धमेव प्राप्य श्रुतिः प्रामाण्यमश्नुत इत्यन्वयः । श्रुतेः स्वतः प्रामाण्यात्स्मृत्यप्रामाण्यलिप्सानुपपत्तिमाशङ्क्य, तत्रापि श्रुतावपि निरपवादप्रामाण्यावधारणसिद्धेः—पराधीनत्वादित्युक्तम् । किं तत्परमित्यपेक्षिते—प्रतिपक्षेत्याद्युक्तम् । पर्यालोचनापेक्षानिवृत्त्यर्थं क्षणमात्रमपीत्युक्तम् उपसंहरति—तेनेति । अननुमितावस्थायामित्यनेनाद्ये पदक इति व्याख्यातम् ।

क्लृप्तकल्प्यमूलस्यान्यतः परिच्छेदहेतुत्वप्रतिपादनार्थत्वेन सोऽसाविति भाष्यं व्याचष्टे—इतीति । सर्वमेव वा ततश्चेत्याद्येतद्भाष्यव्याख्यानार्थं ततः क्लृप्तकल्प्यमूलत्वादुक्तेन प्रकारेणान्यतः परिच्छेद इत्यर्थः । उक्तमेव प्रकारं कल्प्यमूलत्वादित्यादिभाष्यारूढं कर्तुं संक्षिप्य यथाक्रमं दर्शयति—तेनेति । उक्तेन प्रकारेणैकत्र स्मृतिप्रामाण्यगतेतरेतराश्रये श्रुतेराद्यस्य स्वतः सिद्धस्य प्रामाण्यस्यापवादासम्भवेनापेक्षितश्रुत्यप्रामाण्यालाभाद् दुःपरिहरत्वावसानं परिच्छेदो भवति । अवसीयत इति भावे लकारः । अन्यत्र श्रुतिप्रामाण्यगतेतरेतराश्रये स्मृत्यप्रामाण्यस्यापेक्षितस्य लाभात्सुपरिहरत्वस्यावसानमित्यर्थः । नन्वेवं सत्यपेक्षितस्मृत्यप्रामाण्यलाभमात्रेण श्रुतिप्रामाण्यगतेतरेतराश्रयस्य सुपरिहरत्वपरिच्छेदसिद्धेः किमर्थं भाष्यकृताऽनुपूर्वी दर्शितेत्याशङ्क्याह—कृत्वेति । अपेक्षितलाभालाभोपपादनार्थं-

मुभयत्राप्यानुपूर्वी दर्शनीयेत्याशयः। श्रुतिप्रामाण्यगतेतरेतराश्रयपरिहारायापेक्षितो यः स्मृत्यप्रामाण्यरूपोऽर्थः, तमाद्ये क्षणे दृढसिद्धत्वेनावधिं कृत्वा विरोधे स्मृत्यप्रामाण्याच्छ्रुत्यबाधः। श्रुत्यबाधाच्च तद्विरोधे स्मृतिमूलश्रुतिकल्पनानुपपत्तिर्यावत्तावद्गच्छेत्तावता ह्यपरश्रुतिप्रामाण्यगतेतरेतराश्रयपरिहारसाध्यः श्रुतिप्रामाण्यरूपोऽर्थः सिद्ध्यति। तथा स्मृतिप्रामाण्यगतेतरेतराश्रयस्यापरिहार्यत्वायापेक्षितो यः श्रुतिप्रामाण्यरूपोऽर्थः तमाद्ये क्षणे दृढसिद्धत्वेनावधिं कृत्वा विरोधे श्रुतिप्रामाण्यात् स्मृतिमूलश्रुत्यकल्पनम्, तदकल्पनाच्च स्मृतेर्भ्रान्त्यादिमूलत्वकल्पनं यावत्तावद् गच्छेत् तावता ह्यपरः स्मृतिप्रामाण्यगतेतरेतराश्रयापरिहार्यत्वसाध्यः स्मृत्यप्रामाण्यरूपोऽर्थः सिद्ध्यतीत्यर्थः।

ननु भाष्यकृतैकविधानुपूर्वीकथनादानुपूर्वीद्वयाभिधानं भाष्यव्याख्यानानुपयोगित्वादनर्थकं स्यादित्याशङ्क्याह—तदेकेनेति। उपलक्षणार्थमेकानुपूर्वीकथनमित्याशयः। कीदृशी तर्हि द्वितीयानुपूर्वी दर्शनीयेत्यपेक्षायामाह—द्वितीयेति। स्वयं पूर्वोक्तस्याप्यस्य मार्गस्य भाष्योक्तापेक्षया द्वितीयत्वम्। नन्वित्याशङ्कापूर्वकं तुल्यबलविकल्पोपपत्तिप्रतिपादनार्थं भाष्यं व्याचष्टे—व्रीहीति। तस्माद्युक्तमिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—अत इति।

॥ इति वार्तिकव्याख्यायां सर्वानवद्यकारिण्यां द्वितीयं विरोधाधिकरणम् ॥ ३ ॥

भा० प्र०–पूर्व अधिकरण में स्मृति का प्रामाण्य प्रतिष्ठापित किया गया है। प्रकृतमें यह विचारणीय है कि श्रुतिविरुद्ध स्मृति प्रमाण है या नहीं? जैसे "औदुम्बरवृक्ष से निर्मित स्थूणा=स्तम्भ का समग्रभाव से वेष्टन करना चाहिए" यह स्मृति वाक्य "औदुम्बरीं स्पृष्ट्वा उद्गायेत्" अर्थात् उदुम्बर निर्मित स्तम्भ का स्पर्शकर उद्गाता गान करे इस श्रुति वाक्य से विरुद्ध है। क्योंकि, स्मृति के अनुसार सम्पूर्ण का वस्त्र के द्वारा वेष्टन करने पर उनका स्पर्श सम्भव नहीं है अर्थात् स्तम्भ के साथ त्वचा का संयोग सम्भव नहीं है। इसी प्रकार "अष्टाचत्वारिंशद् वर्षाणि वेदब्रह्मचर्यं चरेत्" अड़तालीस वर्ष तक वेद के अध्ययन के लिए ब्रह्मचर्यका अवलम्बन करे, यह स्मृतिवाक्य "जातपुत्रः कृष्णकेशः अग्नीनादधीत" अर्थात् जिसको पुत्र हो गया है ऐसा व्यक्ति कृष्णकेश की अवस्थामें ही अर्थात् केशपकने से पूर्व ही अग्नि का आधान करे, इस श्रुतिवाक्य का विरोध है, कारण, अडतालीस वर्ष तक ब्रह्मचर्य का पालनकर इसके बाद दश वर्ष से कम वर्ष की कन्याके साथ पाणिग्रहणपूर्वक पुत्रकी उत्पत्ति पर्यन्त अपेक्षाकरने से पूर्व ही उसका केश पक जायगा, अतः बाल पकने से पूर्व अग्नि का आधान सम्भव नहीं है। इस प्रकार उपलभ्यमान श्रुति के विरुद्ध स्मृतियाँ प्रमाण है या अप्रमाण्य है पूर्व अधिकरण में उल्लिखित युक्ति के अनुसार श्रुति के समान स्मृति भी जब प्रमाण है, तब स्मृति के अप्रमाण होने की आशङ्का उचित नहीं है, क्योंकि ऐसा मानने पर सभी स्मृतियों का ही अप्रामाण्य प्राप्त होगा। अतः परस्पर विरुद्ध श्रुति वाक्यों में जिस प्रकार विकल्प का आश्रयण कर दोनों का ही प्रामाण्य माना जाता है, प्रकृत में भी ऐसी स्थिति में उसी के समान परस्पर विरुद्ध श्रुति और स्मृति में भी वैसा ही विकल्प मानना उचित है।

विकल्प दो प्रकार का होता है—(१) इच्छा विकल्प (२) व्यवस्थित विकल्प।

जिस स्थल में कर्ता अपनी इच्छा के अनुसार शास्त्र में उल्लिखित एक से अधिक पदार्थों में जिस किसी पक्ष का इच्छा से अनुसरण कर सकता है—वह इच्छा विकल्प है। जैसे—'व्रीहिभिर्यजेत यवैर्वा यजेत' अर्थात् व्रीहि के द्वारा याग करे या यव के द्वारा याग करे। इस स्थल में कर्ता का स्वातन्त्र्य है। व्रीहि या यव किसी के द्वारा भी याग कर सकता है।

जिस स्थल में विकल्पित पदार्थ विशेष अधिकारी के मध्य में व्यवस्थित रहता है—उसको व्यवस्थित विकल्प कहते हैं। जैसे—"उदिते जुहोति" अनुदिते जुहोति" अर्थात् सूर्योदय होने पर अग्निहोत्र होम करे, एवं सूर्योदय होने से पूर्व अग्निहोत्र होम करे। इस स्थल में एक शाखा के व्यक्तियों के लिए उदित होम का विधान है, और अन्य शाखा के व्यक्तियों के लिए अनुदित होम व्यवस्थित है, इस शाखा के लिए उदित होम अकर्तव्य है। क्योंकि दोनों स्थलों में अर्थवाद वाक्य में निन्दा की गई है।

प्रकृत में परस्पर विरुद्ध श्रुति और स्मृति में इच्छा का विकल्प होगा। इस प्रकार पूर्वपक्ष के उत्तर में सिद्धान्त के रूप में कहा गया है कि "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" श्रुति और स्मृति में विरोध रहने पर श्रुति ही प्रमाण है, स्मृति प्रमाण नहीं है। क्योंकि श्रुति शब्द प्रमाण है; वह स्वतः प्रमाण है और स्मृति का प्रामाण्य श्रुति सापेक्ष है। इसलिए, श्रुति बलवती है और स्मृति दुर्बल है। उपजीव्य और उपजीवक में विरोध होने पर उपजीव्य ही प्रमाण होता है, क्योंकि, उपजीवक उपजीव्य के आश्रित होने से उपजीव्य को छोड़कर अर्थात् अप्रमाण कर उपजीव्य स्थान नहीं पा सकता है, और न प्रमाण हो सकता है। प्रकृत में श्रुति उपजीव्य है और स्मृति उपजीवक है। अतः, स्मृति और श्रुति का समान बल नहीं है। समान बल में ही विकल्प होता है, इसलिए इन दोनों में विकल्प नहीं हो सकता है। पूर्वपक्षी के द्वारा प्रस्तुत विकल्प की चर्चा भी ठीक नहीं है, क्योंकि, विकल्प मानने पर आठ दोष होते हैं। अतः अन्य पक्ष सम्भव रहने पर आठ दोषों से युक्त विकल्प नहीं माना जाता है। जैसे व्रीहिभिर्यवैर्वा यजेत' व्रीहि या यव के द्वारा याग करे। इस विधि में व्रीहि और यव का समुच्चय निरर्थक होने से विकल्प माना गया है। इस विकल्प को मानने पर यव से यज्ञ करने पर (१) व्रीहि में शास्त्र के द्वारा प्राप्त प्रामण्य का त्याग (२) अप्राप्त अप्रमाण्य का स्वीकार (३) व्रीहि के ग्रहण के समय यव शास्त्र का प्रामाण्य परित्यक्त हुआ था उसका पुनः उज्जीवन या पुनः स्वीकार। (४) प्राप्त अप्रामाण्य का हान या परित्याग करना होगा—इस प्रकार यव के पक्ष में चार दोष हैं और इसी प्रकार व्रीहि के द्वारा यज्ञ करने पर (१) यव-शास्त्र के पूर्वप्राप्त प्रामाण्य का परित्याग (१) अप्रामाण्य की कल्पना (३) यव के ग्रहण के समय व्रीहिशास्त्र का प्रामाण्य जो परित्यक्त हुआ था उसका पुन उज्जीवन, (४) प्राप्त अप्रमाण्य का परित्याग—इस प्रकार व्रीहिपक्ष में भी चार दोष होते हैं। इस प्रकार

आठ दोष की प्राप्ति विकल्प के पक्ष में होती है। अतः अन्य गति न रहने पर ही विकल्प स्वीकार किया जाता है, अन्यथा नहीं।

विकल्प मानने पर श्रुति को प्रमाण मानने पर स्मृति अप्रमाण होगी। किन्तु स्मृति के प्रामाण्य का उपजीवन अन्य किसी के न रहने से स्मृति को प्रमाण और श्रुति के पक्ष में अप्रमाण नहीं कहा जा सकता है। इस प्रकार के स्थल में इतरेतराश्रय अर्थात् अन्योऽन्याश्रय दोष भी होगा, क्योंकि श्रुति का अप्रामाण्य स्मृतिप्रमाणत्वसापेक्ष है और स्मृति का प्रामाण्य श्रुति सापेक्ष है। इसलिए जिसका प्रामाण्य पूर्व से ही निरपेक्ष रूप में सिद्ध है, वह अनपेक्ष श्रुति अप्रमाण नहीं हो सकती है। अतः श्रुति के साथ स्मृति का विकल्प नहीं है। यदि यह कहा जाय कि उक्त स्मृति का क्या मूल है? यह जिज्ञासा करने पर यही कहना होगा कि सम्यक् रूप से न सुनना या स्वप्न विज्ञान, या लाभ या मोह आदि ही उक्त स्मृति का मूल है॥ ३॥

## हेतुदर्शनाच्च ॥ ४ ॥

**शा० भा०—लोभाद्वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्। तत्स्मृतेर्बीजम्। बुभुक्षमाणाः केचित्क्रीतराजकस्य भोजनमाचरितवन्तः। अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः। तत एषा स्मृतिरित्यवगम्यते।**

**अधिकरणान्तरं वा। 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति 'यूपहस्तिनो दानमाचरन्ति इति। तत्कर्तृसामान्यात् प्रमाणमिति प्राप्ते अप्रमाणं स्मृतिः। अत्रान्यन्मूलम्। लोभादाचरितवन्तः केचित् एषा स्मृतिः। उपपन्नतरं चैतत्।**

**वैदिकवचनकल्पनात् ॥ ४ ॥**

भा० वि०—अथ यदि हेतुदर्शनविशिष्टश्रुतिविरुद्धता व्याप्ता स्मृत्यप्रमाणता, हन्त तर्हि यत्र श्रुतिविरोधाभावः, तत्र सा न स्यादित्याशङ्क्य, हेत्वन्तरेणापि व्याप्तिं दर्शयितुमावृत्त्याऽधिकरणान्तरतयापीदं सूत्रं व्याकरोति—**अधिकरणान्तरं वेति**। आचारपक्षे त्वर्थसुखाद्यर्थानामाचाराणामविरोधात् कर्तृसामान्याच्च धर्मप्रामाण्यमाशङ्क्य लोभादिहेत्वन्तरदर्शनेनाप्रामाण्यं साधयितुमारम्भः। तस्य विषयमाह—**वैसर्जनेति**। अग्नीषोमप्रणयनार्थविसर्जनहोमसंबन्धि वासोऽध्वर्युर्हरति यूपहस्तिनः—यूपपरिवेष्टनवाससोऽध्वर्यवे दानमाचरन्तीति च श्रूयत इत्यर्थः। तत्रापि कर्तृसामान्यहेतुदर्शनाभ्यां धर्मे प्रामाण्याप्रामाण्यसन्देहे पूर्वपक्षमाह—**तदिति**। विचारप्रयोजनं तु श्रुत्यदर्शने दृष्टहेतुमूलस्मृत्यर्थाननुष्ठानम्। यथा शिष्टैस्त्रैवर्णिकप्रणीततया तत्परिगृहीततया प्रत्यक्षवेदविरोधाभावेन चाष्टकादिस्मृतयः प्रमाणम्, तद्वदियमपि स्वार्थानुष्ठापकतया प्रमाणमेवेत्यर्थः, अत्र च शब्द-

सूचितां प्रतिज्ञां व्याकुर्वन् सिद्धान्तमाह—**अप्रमाणं वेति**। एवेत्यर्थः यथाष्टकादिस्मृतेः वेदातिरिक्तमूलं न दृश्यते, नैवमत्र, लोभादिमूलत्वदर्शनादिति हेतुभागं व्याचष्टे—**स्मृतेरत्रेति**। तदेत्र दर्शयति—**लोभादिति**। ततः—लोभाचरणात्, तदेवास्या मूलमित्यर्थः।

ननु वेदमूलत्वस्यापि संभवात् कथं लोभादिमूलत्वनियम इत्याशङ्क्याह—**उपपन्नतरं चेति**। दृष्टे सत्यदृष्टकल्पनानुपपत्तेरित्यभिसन्धिः[1] ॥ ४ ॥

त० वा०—इतश्च न प्रमाणत्वं मूलहेत्वन्तरेक्षणात्।
व्यभिचारे हि नोत्पत्तिरर्थापत्त्यनुमानयोः ॥ १८३

श्रुतिविरोधभग्नप्रसरायां हि स्मृतौ पूर्वोक्तेन न्यायेन श्रुत्यनुमानप्रतिबन्धादाकाङ्क्षितमूलान्तरावश्यकल्पयितव्यत्वाच्च।

क्वचिद् भ्रान्तिः क्वचिल्लोभः क्वचिद्युक्तिविकल्पनम्।
प्रतिभाकारणत्वेन निराकर्तुं न शक्यते ॥ १८४
स्मृतेश्च श्रुतिमग्नायाः कारणान्तरसंभवः।
न तु श्रुतेरतः सैव तद्विरोधे हि बाध्यते ॥ १८५
यथैव वेदमूलत्वमनेकान्तान्न लभ्यते।
तथाऽन्यमूलताऽपीति तदाशङ्क्येदमुच्यते ॥ १८६
उपपन्नतरं चैतद्वेदवाक्यानुमानतः।
दृष्टे हि सत्यदृष्टस्य कल्पना निष्प्रमाणिका ॥ १८७

भाष्यमतेन विरोधाधिकरणम्।

**अधिकरणान्तरं वेति**।

सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥ १८८

अपरितोषस्तावत्प्रथमेनैव श्रुतिविरुद्धत्वहेतुना बलवता सिद्धे बाधे, नान्वाचयहेतुरतीव प्रयोजनवान्। अधिकरणान्तरे पुनः पूर्वोक्तहेतुनिरपेक्षः पर्याप्त एवैकः स्मृतिबाधनायेति स्वतन्त्रत्वेन प्रदर्शनम्। विरोधेन च व्याप्तायाः स्मृतेरप्रमाणतद्व्याप्तौ नापवादान्तरोद्भवः। 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इत्यग्नीषोमप्रणयनार्थं विसर्जनहोमकालसंबन्धियजमानाच्छादनं वासोऽवध्वयुर्हरति मुक्तकमेवैतदावरणानुमितं स्मरणम्। एवं **यूपहस्तिनो दानमाचरन्तीति** यूपपरिव्याप्तशाटक यूपहस्तिशब्देन निर्दिश्याध्वर्युहर्तव्यतयाऽऽचारानुमितयैव स्मृत्या प्रतिपादयन्ति।

---

१. सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वेतिवार्तिकमन्त्रानुसन्धेयम्।

तत्रापि वेदमूलत्वकल्पना नोपपद्यते ।
कर्तृसामान्यतः प्राप्ता लोभसंभवपूर्वकात् ॥ १८९

ऋत्विजो हि प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्मावश्यसमापनीयत्वनिबद्धसमाप्त्युत्तरकालभावि स्वाच्छन्द्यं च विदित्वा कार्यवत्तावेलायामेव खलगतप्राधान्यविभागव्यावृत्तमृतकवत्स्वयमुत्पाद्योत्पाद्य तानि तान्यादेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च यजमानः श्रद्दधानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छतीति, तैरेषा स्मृतिः प्रवर्तिता स्यादित्याशङ्कायाम्, वेदमूलत्वं नानुमीयते । पूर्ववच्च लोभपूर्वकत्वकल्पनमेवोपपन्नमिति निर्णयात्संदेहनिवृत्तिः । इदं च भाष्यकारेण प्रदर्शयता तुल्यकारणत्वात्पूर्वत्रापि प्रदर्शितमेवेति योजयितव्यम् ।

( भाष्यकारीयाधिकरणाक्षेपः । )

एतावत्त्विहाधिकरणद्वयेऽपि वक्तव्यम् ।

स्मृतीनां श्रुतिमूलत्वे दृढे पूर्वं निरूपिते ।
विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम् ॥ १९०

शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात्स्वरूपेणानुपन्यस्यार्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते । तत्र यथैवाऽऽप्तप्रत्ययादिदमिह पठ्यत इति कथितमुच्चारितमनुच्चारितं वा शिष्याः प्रतिपद्यन्ते तथैव सूत्रकारवचनान्यध्यापकवचनस्थानीयानि स्वानुरूपवेदवाक्यसमर्पणमात्रं कृत्वा निवृत्तव्यापाराणीति न ताल्वादिध्वनिप्रेरणवत्पौरुषेयत्वेन परिभवितव्यानि ।

वेदो हीदृश एवायं पुरुषैर्यः प्रकाश्यते ।
स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक् ॥ १९१
अनुच्चारणकाले च संस्कारैरेव केवलैः ।
तत्कृतस्मरणैर्वाऽयं वेदोऽध्येतृषु तिष्ठति ॥ १९२
तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः ।
पठिताभिः समानाऽसौ केन न्यायेन बाध्यते ॥ १९३
स्मृतिशास्त्रं च यद्येकं भवेत्कृत्स्नमवैदिकम् ।
तन्मुक्त्वैकं ततोऽन्यानि व्यवहाराङ्गतामियुः ॥ १९४
कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यन्ते स्मृतयः सर्वा भद्रोपनयनादिषु ॥ १९५

तदा तन्मध्यपात्येकं वाक्यं किंचिदपस्मृतिः ।
मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्त्तते ॥ १९६
बाधिता च स्मृतिर्भूत्वा काचिन्न्यायविदा यदा ।
श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ॥ १९७
तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः ।
बाधाबाधानवस्थानं ध्रुवमेवं प्रसज्यते ।। १९८

यच्चैतत्सर्ववेष्टनस्मरणं स्पर्शनश्रुतिविरुद्धत्वेनोदाह्रियते । एतज्जैमिनिनैव च्छान्दोग्यानुपादे शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेनौदुम्बरीप्रकरणे च शाट्यायानिनां तामूर्ध्वदेशेनोभयत्र वाससी दर्शयतीति 'वेष्टुतं वै वासः श्रीर्वै वासः श्रेः सामे' इति दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टनवाससोऽपि प्रकाशश्रुतिमूलत्वमेवान्वाख्यातम् ।

ततश्च श्रुतिमूलत्वाद्बाध्योदाहरणं न तत् ।
विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥ १९९
विरुद्धत्वे च बाधः स्यान्न चेहास्ति विरुद्धता ।
नहि वेष्टनमात्रं नः स्पर्शश्रुत्या विरुध्यते ॥ २००
यदि द्वित्राङ्गुलं मध्ये विमुच्योत्तरभागतः ।
वेष्ट्येतौदुम्बरो तत्र किं नाम न कृतं भवेत् ॥ २०१
सर्वा वेष्टयितव्येति न ह्येवं सूत्रकृद्वचः ।
न ह्यस्याः क्रियते कैश्चित्कर्णमूलेषु वेष्टनम् ॥ २०२
परिशब्दोऽपि यस्तव सर्वतो वेष्टनं वदेत् ।
तद्वर्जितसमन्तत्वे सोऽर्थवानेव जायते ॥ २०३
लोभमूलं च यत्तस्याः कल्प्यते सर्ववेष्टनम् ।
तल्लोभः सुतरां सिध्येन्मूलाग्रपरिधानयोः ॥ २०४
अन्तरीयोत्तरीये हि योषितामिव वाससी ।
स्मरेत्कौशेयजातीये नोद्गातैकं गुणैर्विना ॥ २०५
प्राक् च लोभादिह स्पर्शः कुशैरेवान्तरीयते ।
वेष्टितैषा कुशैः पूर्वं वाससा परिवेष्ट्यते ॥ २०६
कुशवेष्टनवाक्ये च न किंचिद्धेतुदर्शनम् ।
नियमेऽपि च तद् दृष्टं नैवोर्ध्वदशवाससः ॥ २०७

**दीक्षितान्नभोजनविचारः**

क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् ।
न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणम् ॥ २०८

यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः ।
अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते ॥ २०९
शान्तिपुष्ट्यभिचारार्था ह्येकब्रह्मर्त्विगाश्रिताः ।
क्रियास्तया प्रमीयन्तेऽत्राप्येवाऽऽत्मीयगोचराः ॥ २१०
न चायमपि यज्ञाङ्गविधिः शान्त्यादिशास्त्रवत् ।
अतोऽस्यापि प्रमाणत्वं पुरुषार्थेन वार्यते ॥ २११

न ह्येतद्यजमानस्य नर्त्विजामुपदिश्यते ।
सर्वेभ्यः पुरुषेभ्यो हि भोज्यान्नत्वमिदं श्रुतम् ॥ २१२
वाक्यान्तरैर्निषिद्धं यद्दीक्षितान्नस्य भोजनम् ।
तस्यैव श्रूयते पश्चादभ्यनुज्ञाविधिद्वयम् ॥ २१३

अग्नीषोमीयसंस्थायां क्रीते वा सति राजनि ।
सोऽयं कालविकल्पः स्यादाशौचच्छेदकालवत् ॥ २१४
ननु चाशौचकालोऽपि धर्मपीडाद्यपेक्षया ।
अतः समविकल्पत्वं नैव तस्यापि संमतम् ॥ २१५

यस्य ह्यल्पेन कालेन शुद्धिर्भोज्यान्नताऽपि वा ।
स कस्मात्तावता शुद्धो दीर्घकालत्वमाश्रयेत् ॥ २१६
एकरात्रे त्रिरात्रे वा शुद्धस्य ब्राह्मणस्य च ।
अशुद्धिरनुवर्तेत दशरात्रं कथं पुनः ॥ २१७

पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा ।
प्रागदशाहात्कथं तस्य सदसद्भावकल्पना ॥ २१८
एवं प्राक् पशुसंस्नानाद्दीक्षितान्नविशुद्धता ।
अस्ति नास्तीति चेत्येवं सहते नावधारणम् ॥ २१९

स्यादेतद्येन यः कालः पुरस्तात्परिगृह्यते ।
तस्यासावेव होमस्य प्रागूर्ध्वोदयकालवत् ॥ २२०
युक्तं समविकल्पत्वमुदितानुदितत्वयोः ।
न काचिदत्र पूर्वोक्ता सदसत्त्वविरोधिता ॥ २२१

न चानुदितहोमोक्तावुदितोक्तिरनर्थिका ।
क्लेशक्षयव्ययादीनां नातिरेकोऽत्र कश्चन ॥ २२२
इह त्वल्पेन कालेन शुद्धेर्या दीर्घकालता ।
न वर्धयेदघाहानि साऽनेनापि निवार्यते ॥ २२३
क्लेशप्रायं च तं पक्षं नाऽऽश्रयेतैव कश्चन ।
ततोऽनङ्गीकृते तस्मिन् स्यात्तद्वाक्यमनर्थकम् ॥ २२४

तेनर्ते विषयान्यत्वान्न विकल्पोऽवकल्पते ।
स चोक्तो धर्मपीडाख्यस्तत्र चाह्नामवर्धनम् ॥ २२५
दन्तजातानुजातान्यकृतचूडेषु च क्रमात् ।
चितिक्रिया त्र्यहैकाहास्तत्र चाह्नामवर्धनम् ॥ २२६

तथा गौतमेनाप्युक्तम्—राज्ञां च कार्याविघातार्थं ब्राह्मणानां च स्वाध्यायानिर्वृत्त्यर्थमिति ।

अथ वाऽन्तर्यदाऽऽशौचनिमित्तं किंचिदापतेत् ।
तत्र शेषेण या शुद्धिस्तच्छेषोऽयं भविष्यति ॥ २२७
न वर्धयेदघाहानि निमित्तादागतान्यपि ।
पूर्वस्यैव हि कालस्य प्रसङ्गेन तदङ्गता ॥ २२८
प्रवृत्तोऽनपवृक्तश्च दशरात्रादिकोऽवधिः ।
अन्तः पतितमाशौचं स व्याप्नोति स्वसंख्यया ॥ २२९
वितत्य दश संख्या हि तान्यहानि व्यवस्थिता ।
शक्नोत्येव परिच्छेत्तुमन्तराशौचमागतम् ॥ २३०
शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति ।
नन्वेवं भोजनस्यास्ति विषयावधिकारणम् ॥ २३१
तत्र दीर्घावधिर्व्यर्थः स्यादल्पावध्यनुज्ञया ।
तस्मादिहापि वैषम्यहेतुर्वाच्योऽवधिद्वये ॥ २३२
अत्राप्यसंभवे तस्य दीक्षिते वा ददत्यपि ।
तन्नियुक्तकदत्तान्नं भोज्यं सोमक्रये कृते ॥ २३३
आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।
तथैव प्राणपीडायां क्रीतराजकभोजनम् ॥ २३४
हन्तैवमप्रमाणत्वमुक्तमन्यप्रकारकम् ।
जग्धवानापदि ह्यार्तो विश्वामित्रः श्वजाघनीम् ॥ २३५

उच्यते—

एकं विनाऽप्यनुज्ञानात् क्रियते गत्यसंभवात् ।
क्रियतेऽनुज्ञया त्वन्यद्विशेषश्च तयोर्महान् ॥ २३६
सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते ।
विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया ॥ २३७
तथा च मनुनाऽप्युक्तमापद्धर्मगतं प्रति ।
तत्रत्यपापशेषाणामन्ते शौचं भविष्यति ॥ २३८

कर्मणा येन केनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ इति । २३९

धर्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥ २४०

यत्तु क्रीतराजकभोज्यान्नत्ववचनं तद्गत्यन्तरासंभवे निर्दोषत्वज्ञापनार्थमेव ज्ञायते ।

तत्रापि तु—प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥ २४१

इति निन्दितत्वान्न संभवद्भोज्यान्तरेणापि लोकयात्रादिवशेन भोक्तव्यम् ।

यदि वा कालवैषम्यादसत्समविकल्पयोः ।
अर्थभेदव्यवस्थानादविरोधोऽवधार्यते ॥ २४२

दीक्षितान्नमभोज्यं स्यादक्रीते राजनि ध्रुवम् ।
क्रीते त्वभोजनं नाम मनःकर्म नियम्यते ॥ २४३

यथैवाश्राद्धभोजित्वं यथा वाऽमांसभक्षणम् ।
श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ॥ २४४

श्राद्धमन्तर्दशाहं हि नियोगेन निषिध्यते ।
एकोद्दिष्टं सदेकेषां न तु पित्र्यं कदाचन ॥ २४५

तत्राश्राद्धभोजितत्वनियमः स्वर्गायेति विज्ञायते । तथा षष्ठ्यष्टमीचतुर्दशी-पञ्चदशीषु मांसभक्षणमैथुनादिक्रियाप्रतिषेधाद् गृहस्थस्यान्यत्र कामचारे प्राप्ते तदकरणनियमः श्रेयसे विहितः । यथाऽऽह ।

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ इति । २४६

ननु च वाक्यद्वयदर्शनात्तत्र संयोगपृथक्त्वं युक्तमिह त्वेकमेव दीक्षितान्नभोजन-प्रतिषेधवाक्यं कथं क्रयात्प्रतिषेधति तदुत्तरकालं च प्रागग्नीषोमीयसमाप्तेर्निः-श्रेयसेन नियच्छतीति ।

तदुच्यते—

स्याद्वाक्यद्वयमेवैतदवधिद्वयकल्पितम् ।
यः पूर्वः प्रतिषेधोऽत्र संस्थितः क्रीतराजके ॥ २४७

परोऽवधिः पुनस्तस्य नैकत्वादवकल्पते ।
द्वितीयान्नादनानुज्ञादर्शनात्तेन गम्यते ॥ २४८

अभोजनविधिर्नूनमस्त्यन्योऽप्यान्तरालिकः ।
न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः ॥ २४९
वरणादभ्यनुज्ञाते निर्वापे किमनुज्ञया ॥ २५०

यथाऽध्वर्योर्वरणवेलायामेव सर्वं यजमानेन यज्ञोपयोगि स्वयमनुज्ञातमेवेति निर्वापमन्त्रे प्रसवशब्देन तदानींतनयजमानानुज्ञाप्रकाशनं न क्रियते तथेह क्रीतराजकावस्थानुज्ञातभोजनानुज्ञावचनमग्नीषोमीयसमाप्तौ पुनरुक्तमित्यवश्यं नियमेन प्रतिषेधान्तरेण वा वारितस्यानुज्ञानार्थमित्यवगम्यते ।

प्रतिषिद्धाभ्यनुज्ञा च विकल्पेनैव दूष्यते ।
पर्युदस्ताभ्यनुज्ञानं तस्मादिष्टं व्यवस्थया ॥ २५१

दीक्षितान्नविशिष्टाभोजननियमो हि श्रेयोर्थिभ्यो विधीयते ।

पाश्चात्यभोजनानुज्ञा नान्यथा ह्युपपद्यते ।
अदृष्टार्थप्रसङ्गित्वान्न विधिश्चायमिष्यते ॥ २५२
एवं विषयनानात्वादविरोधादबाधनम् ।

**अष्टाचत्वारिंशदिति उदाहरणनिरासः**

अष्टाचत्वारिंशशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पापेक्षनिबन्धनादाश्रमान्तरविषयत्वसंभवाद्वा विरोधाभावः । तथा हि—

'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।'
सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥ २५३

गौतमेनापि द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेदिति प्रथमकल्पमाशु गार्हस्थ्यप्रतिपत्त्यर्थमुक्त्वा, द्वितीयकल्पे द्वादशप्रतिवेदं वा, सर्वेष्वित्यष्टाचत्वारिंशत्परिग्रहः कृतः ।

तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥ २५४
नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा ।
तैरवश्यं ग्रहीतव्या तेनाऽदावेतदुच्यते ॥ २५५
उपकुर्वाणकेनैव याप्यः कालो बहुस्ततः ।
संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषैः ॥ २५६
सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः ।
स्तोकैरप्याश्रमाचारैर्गतिमिष्टां गमिष्यति ॥ २५७

### प्रसंगाद् बादरायणमतस्य निर्देशः

द्वैपायानादयश्चाहुः—

परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ २५८

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यनादिब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः ।

यो वा कश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन्ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षोकृताविति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ ।

तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते ।
श्रुत्योरेव ह्यसौ दृष्टः क्वचिद्वा नैव विद्यते ॥ २५९

तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते ।
यदि वा बाध्यमानत्वमुक्तं बाह्यं स्मृतीः प्रति ॥ २६०

### अत्र जैमिनिमतस्योपन्यासः

एतद्धि जैमिनिनाऽत्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते ।

यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥ २६१

व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् ।

ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् ।
तथाऽपि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥ २६२

यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य, मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्याजसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति, श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते ।

### वार्तिकमतेन सूत्रार्थवर्णनम्

सूत्रार्थोऽप्येवं योजयितव्यः—श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षम् अपेक्षावर्जितम्, यस्य वाऽपेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि, पूर्वसूत्रात्प्रमाणशब्दमनु-

षङ्गेन संबद्धय यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते ।

ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्कायां सत्यामेवात्यन्तनिराकरणपक्षः परिग्रहीष्यते। न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः यदा तु क्वचिच्छाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षीभविष्यति, तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव ।

नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम्—

वार्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते ।
यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते ॥ २६३

अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते ।
नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥ ५६४

(वार्तिकमतेन बाह्यग्रन्थानामप्रामाण्यनिरूपणम् । )

यद्वा—यान्येतानि त्रयीविद्भिर्न परिगृहीतानि, किंचित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रह-लाभ-पूजा-ख्यातिप्रयोजनपराणि त्रयीविपरीतासंबद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि, तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते । न चैतत्क्वचिदधिकरणान्तरे निरूपितम्, न चावक्तव्यमेव गाव्यादिशब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात् ।

यदि ह्यनादरेणैषां न कल्प्येताप्रमाणता ।
अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः ॥ २६५

शोभासौकर्यहेतूक्तिकलिकालवशेन वा ।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥ २६६

ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वमाश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रतिपद्येरन् ।

तेन यद्यपि लभ्येत स्मृतिः काचिद्विरोधिनी ।
मन्वाद्युक्ता तथाऽप्यस्मिन्नेतदेवोपयुज्यते ॥ २६७

त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान्सर्वान्धर्मशुद्धिर्न लभ्यते ॥ २६८

महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥ २६९

तत्र श्रद्धामात्रमेवैकं व्यवस्थानिमित्तं सर्वेषां स्वपितृपितामहादिचरितानुयायित्वात् । यैश्च मानवादिस्मृतीनामप्युत्सन्नवेदशाखामूलत्वमभ्युपगतम्, तान्प्रति सुतरां शाक्यादिभिरपि शक्यं तन्मूलत्वमेव वक्तुम् । को हि शक्नुयादुत्सन्नानां वाक्यविषयेयत्तानियमं कर्तुम् । ततश्च यावत्किंचित्कियन्तमपि कालं कैश्चिदाद्रियमाणं प्रसिद्धिं गतं तत्प्रत्यक्षशाखाविसंवादेऽप्युत्सन्नशाखामूलत्वावस्थानमनुभवतुल्यकक्षतया प्रतिभायात् । अत आह—**विरोधे त्वनपेक्ष्यं स्यादिति** । पारतन्त्र्यं तावदेषां स्मर्यमाणपुरुषविशेषप्रणीतत्वात्तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादराच्च पार्श्वस्थैरपि ज्ञायते ।

**शाक्यादिवचसां प्रायेण श्रुतिस्मृतिविरुद्धत्ववर्णनम्**

वेदमूलत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्वेषिदुष्टपुत्रवन्नाभ्युपगच्छन्ति । अन्यच्च स्मृतिवाक्यमेकमेकेन श्रुतिवचनेन विरुध्येत । शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेदमूलत्वेन संभाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्व-प्रतिग्रहौ प्रतिपन्नौ, स धर्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः ? ।

उक्तं च—परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हित इति ॥ २७०

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलंकारबुद्धौ स्थितः, येनैवमाह—

कलिकलुषकृतानि यानि लोके ।
मयि निपतन्तु विमुच्यतां तु लोकः, इति ।

स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य, प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणैः स्तूयते, तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते ।

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् ।
ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥ २७१

न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति ।

न च शाखान्तरोच्छेदः कदाचिदपि विद्यते ।
प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ॥ २७२

न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः । एवं चैत्यकरणतद्वन्दनशूद्रसंप्रदानकदानादीनां संवादः संभवति । मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् ।

**हेतुदर्शनेन शाक्यमतनिरासः ।**

लोभादिकारणं चात्र बह्वेवान्यत्प्रतीयते ।
यस्मिन्संनिहिते दृष्टे नास्ति मूलान्तरानुमा ॥ २७३
शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥ २७४
न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् ।
हेतवश्चाभिधीयन्ते ये धर्मा दूरतः स्थिताः ॥ २७५
एत एव च ते येषां वाङ्मात्रेणापि नार्चनम् ।
पाखण्डिनो विकर्मस्था हैतुकाश्चैत एव हि ॥ २७६

एतदीया ग्रन्था एव च मन्वादिभि परिहार्यत्वेनोक्ताः ।

'या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृता ॥ इति । २७७

तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् ॥ ४ ॥

न्या० सु०—सूत्रव्याख्यानार्थं लोभादित्यादिभाष्यं सर्ववेष्टनादिस्मृतीनां लोभक्लीबपुंसकत्वप्रच्छादनप्रयोजनमूलत्वे प्रामाणाभावादयुक्तमाशङ्क्य श्रुत्यतिरिक्तसम्भवे, मूलमात्रोपलक्षणार्थतया व्याचष्टे—इतश्चेति । विरोधो व्यभिचारशब्देनोक्तः । श्लोकं व्याचष्टे—श्रुतीति । ननु सत्यपि विरोधे भ्रान्त्यादिमूलत्वं विना बाध्यत्वायोगाद् बाध्यत्वेनैव भ्रान्त्यादिमूलकल्पनायामितरेतराश्रयं स्यात्, इत्याशङ्क्याह—स्मृतेश्चेति । विरोधपरिहारायाऽवश्याङ्गीकार्येऽन्यतरस्य बाध्यत्वे स्मृतेरेव भ्रान्त्यादिमूलत्वनिश्चयापत्तेरितरेतराश्रयापत्तिरित्याशयः ।

उपपन्नतरं चैतदिति वक्ष्यमाणवर्णकभाष्यमिहापि योज्यमिति सूचयितुमाशङ्कोत्तरत्वेन व्याचष्टे—यथैवेति । भाष्यकृतास्यैव सूत्रस्याधिकरणान्तरविषयत्वेन वर्णकान्तरं कृतम्, तत् पूर्वापरितोषविषयव्याप्तिव्यतिरेकेण क्वचिद्वर्णकान्तरस्य प्रयोजनान्तरादर्शनात्तयोश्चापरितोषकारणविषयान्तरादर्शनेनासम्भवादयुक्तमित्याक्षिपति—सर्वेति । न

च तयोर्मध्येऽन्तरदप्यत्रास्तीति शेषः । समाधातुमपरितोषकारणं तावन्मन्दप्रयोजनत्वमाह — **अपरितोषस्तावदिति** । विषयव्याप्तिरप्यत्राविरुद्धस्मृतिविषयत्वादस्तीत्याह — **विरोधेन चेति** । सत्यप्यस्याविरुद्धस्मृतिविषयत्वे कारणान्तरेणापि केनचिदपवादान्तरोपपत्तेः कथं विषयव्याप्तिरित्याशङ्क्य, कारणान्तरासम्भवान्नापवादान्तरोद्भव इत्युक्तम् ।

वैसर्जनहोमीयमित्यादिविषयप्रदर्शनार्थं भाष्यं व्याचष्टे—**वैसर्जनहोमीयमिति** । श्रुत्यविरुद्धानामपि स्मृतीनां लोभादिमूलत्वसम्भवेनाप्रामाण्याङ्गीकरणे दायधर्मादिस्मृतीनामप्यप्रामाण्यं स्यादित्याशङ्क्य, मन्वादिमहर्षिनिबन्धनस्य वेदमूलत्वकल्पनाहेतोरविरोधे कल्पकत्वप्रतिबन्धाभावान्मूलान्तरकल्पनानुपपत्तावप्यविरुद्धानामाचारानुमितानामर्वाचीन - मनुष्यस्मृतीनां दृष्टमूलासम्भवेनैव वेदमूलत्वस्यापि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् १-३-७इत्यत्र वक्ष्यमाणत्वात् सम्भवेऽपवादविषयत्वोपपादनार्थं मुक्तकमेवैतदित्युक्तम् ।

तत्कर्तृसामान्यादिति पूर्वपक्षसिद्धान्तभाष्यद्वयमेकहेलया व्याचष्टे—**तत्रापीति** । इदानीं धर्मबुद्ध्याऽनुष्ठानेऽपि पूर्वप्रवृत्तिकाले लोभादिमूलत्वसम्भवप्रदर्शनार्थं पूर्वग्रहणम् । लोभस्य मूलत्वसम्भवः पूर्वं कालान्तरे यस्मिन्कर्तृसामान्ये, तस्मादिति हेतुगर्भं विशेषणम् । लोभमूलत्वसम्भवमुपपादयति—**ऋत्विजो हीति** । आशङ्काशब्देन लोभमूलत्वानिश्चयेऽपि, वेदमूलत्वनिश्चयस्तावन्नास्तीति सूचितम् । ननु वेदमूलत्वस्यापि सम्भवात्कथमप्रामाण्यनिश्चय इत्याशङ्क्य, निराकरणार्थमुपपन्नतरं चेदिति भाष्यं व्याचष्टे—**पूर्ववच्चेति** ।

ननु वेदमूलत्वाभावनिश्चयाभिधानपरत्वेऽस्य भाष्यस्य पूर्वंलोभमूलत्वनिश्चयाभिधानपरत्वेन योजनमयुक्तं स्यादित्याशङ्क्याह—**इदं चेति** । दृष्टे सम्भवत्यदृष्टकल्पनमयुक्तमिति न्यायस्य वेदमूलत्वाभावान्यमूलत्वयोर्निश्चयकारणस्य तुल्यत्वादुभयत्रापि योजितमित्यर्थः ।

### भाष्यकारीयाधिकरणाक्षः

यथाभाष्यमधिकरणद्वयं व्याख्याय दूषयितुं प्रतीजानीते—**एतावत्त्विति** । सर्ववेष्टनस्मरणस्य लोभमूलत्वनिराकरणेन तुल्यन्यायतया यूपहस्तिदानादिस्मरणस्यालोभमूलत्वनिराकरणाद्धर्मबुद्ध्या चेदानीमनुष्ठीयमानानां दृष्टमूलत्वकल्पनासम्भवाद्—**अधिकरणद्वयेऽपीत्युक्तम्** । प्रत्यक्षश्रुतिविरोधे हि स्मृतिमूलश्रुत्यभावः साधकाभावाद्वा स्याद् बाधकसद्भावाद्वा तत्र त्रैवर्णिकदृढपरिग्रहादस्य स्मृतिमूलश्रुतिसाधकस्य विरोधेऽप्यनपायात्साधकाभावस्तावन्नास्तीत्याह—**स्मृतीनामिति** ।

यत्तु जिज्ञासां विना प्रमाणाप्रवृत्तेः साधकाभाव इत्युक्तम् । तत् एवं परिहर्त्तव्यम्, यद्यपि परिच्छिन्ने प्रमेये तत्परिच्छेदार्थं श्रुत्यनुमानं न प्रवर्त्तते, तथापि किमियं स्मृतिः प्रमाणमप्रमाणं वेति जिज्ञासायां तत्परिच्छेदार्थं श्रुत्यनुमानप्रवृत्तिर्न वारयितुं शक्यते । प्रमाणान्तरपरिच्छिन्नेऽपि शङ्खशौक्ल्ये शङ्कितपित्तोपघातस्य किं मे चक्षुर्दुष्टमदुष्टं वेति जिज्ञासया चक्षुर्विस्फुरणदर्शनात् परमाण्वादौ च कदाचिदनुपलब्धत्वाद्व्यवहारानुपयोगित्वाच्च जिज्ञासितेऽप्युपलब्धस्थूलादिकार्यानुपपत्तिपरिहारार्थं प्रमाणप्रवृत्तिदर्शनान्न जिज्ञासादरः ।

किं च स्मृतेर्मूलप्रमाणोपस्थापनमात्रेण कृतार्थत्वान्नौदुम्बरी प्रमेया, तत्प्रमेयायाः श्रुतेः प्रत्यक्षश्रुत्यविषयत्वेन तथा परिच्छेत्तुमशक्यत्वान्नानुमानप्रतिबन्धो युक्त इति ।

बाधकं तु स्मृतिमूलश्रुत्यभावव्याप्तं लिङ्गं विरुद्धश्रुतिदर्शनस्यानैकान्तिकत्वप्रतिपादनेन पूर्वपक्षवेलायामेव निरस्तम् । अनुपलब्धिस्त्वस्मदादीनां विप्रकीर्णशाखान्तरगतश्रुत्युपलम्भाशक्तेः स्मर्तृप्रत्यक्षस्य च स्मृत्यधिकरणसाधितत्वेनेदानींतनपुरुषान्तरप्रत्यक्षत्वस्य चोपनयादिस्मृतिमूलश्रुतिदृष्टान्तेनानुमानोपपत्तेः, सर्वान्प्रत्यसिद्धत्वान्नाभावसाधनयाऽलमित्याह—शाखान्तरेति । न च स्मर्तृपुरुषाधीनप्रत्ययत्वमात्रेणानुमेयश्रुतिष्वनाश्वासः अध्यापकपुरुषाधीनप्रत्यक्षत्वेनेतरास्वप्यनाश्वासापत्तेरित्याह—तत्रेति ।

नन्वग्निहोत्रादिश्रुतीनां प्रत्यक्षत्वान्न तास्वनाश्वासापत्तिरित्याशङ्क्य वर्णस्वरूपस्य प्रत्यक्षत्वेऽप्यनादिसम्प्रदायागतत्वस्य पुरुषाधीनत्वात्तुल्यतामाह—वेदो हीति । न च स्मरणार्थत्वेन पूर्वदृष्टघटादिवन्नित्यत्वानवधारणं शङ्कनीयमग्निहोत्रादिश्रुतिष्वप्यविशेषादित्याह—अनुच्चारणकालेति । उपसंहरति—तेनेति ।

ननु वेदविरोधेन स्मर्तुरनाप्तत्वान्न मूलश्रुत्यनुमानं सम्भवतीत्याशङ्क्य, प्रत्यक्षवेदमूलोपनयनादिस्मृतिप्रणेतृत्वेनावधारितत्वाप्तभावस्य सत्त्वादेरेकदेशविरोधेऽप्यनाप्तत्वकल्पनं न युक्तमित्याह—स्मृतीति । किं च नित्यानुमेयाया श्रुतेर्न्यायेन बाधो युज्येतापि, शाखान्तरपठितश्रुतिबाधे तु प्रत्यक्षविरोधाशङ्का दुःपरिहरेत्याह बाधिता चेति । उपरिष्टात्तें इति शब्ददर्शनात्त्वया न्यायविदा भूत्वेत्यध्याहारेण योज्यम् । न चिरादित्यव्ययान्वयेऽपि नञो विभाषाधिकारे नञ्समासस्मरणान्न होतारं वृणीते इतिवदसमासान्नलोपाभावो न दोषः । प्रत्यक्षविरोधाशङ्काया च त्वदुक्तस्य न्यायस्य सम्यक्त्वानवधारणान्यायाभासेन मूलश्रुत्यनुमानबाधाङ्गीकरणे मर्यादातिक्रमादिसर्वं पूर्वोक्तमपरिहार्यं स्यादित्याह—बाधेति ।

न्यायं दूषयित्वोदाहरणानि दूषयन्नाद्यं तावदुदाहरणं 'तामूर्ध्वंदशेन' वा ससा परिवेष्टयन्तीति प्रत्यक्षश्रुतिमूलत्वात् दूषयति—यच्चैतदिति । एतच्छान्दोग्यानुपपदे जैमिनिकृते सूत्रग्रन्थे जैमिनिनैवौदुम्बरीप्रकरणे चेत्यादिना दर्शयतीत्यन्तेन स्वग्रन्थेन शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेनान्वाख्यातमित्यन्वयः । शाट्यायनिनां शाखिनामौदुम्बरीप्रकरणे तामूर्ध्वंदशेनेति श्रुतिरुभयत्र विष्टुत्यामौदुम्बर्यां च वाससी दर्शयतीति जैमिनिग्रन्थस्यार्थः । उभयत्र शब्दः किं विषय इत्यपेक्षायां वेष्टुत इत्याद्युक्तं स्तोत्रीयपरिगणनार्थानामौदुम्बरीणां प्रादेशमात्राणां कुशानां विष्टुतिशब्दवाच्यानां स्थापनार्थं वासो वेष्टुतमुच्यते । तस्मिन् श्रीर्वै वासः श्रीः सामेत्यर्थवादपुरःसरं प्रत्यक्षश्रुतिमूलत्वेन दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टनवाससाऽपि प्रकाशश्रुतिमूलत्वमेवान्वाख्यातं तामूर्ध्वदशेनेति प्रकृतौदुम्बरीपरामर्शिप्रतीकोपन्यासेनेत्यर्थं । उपसंहरति—ततश्चेति । अविरोधादपीदं नोदाहरणं युक्तमित्याह—विरुद्धत्वे चेति । औदुम्बरी परिवेष्टयितव्येत्येतावन्मात्रं सूत्रकारेणोक्तम्, न सर्वेति तत्र यथोपनेष्यमाणमहतेन

वाससा छादयन्तीति चक्षुर्मुखानाच्छेदनेऽपि शास्त्रार्थसम्पत्तिः प्रसिद्धा, तथात्रापि भवतीत्याशयः।

ननु सर्वशब्दाभावेऽपि परिशब्देनापि सर्वशब्दार्थसम्पत्तेर्विरोध इत्याशङ्क्याह— यदीति। औदुम्बर्याद्युत्तरदेशे पृष्टेन तां स्पृशतोदङ्मुखेनोपविष्टेनोद्गातव्यं तेन चौदुम्बरी-मध्यस्योत्तरभागे द्वित्राङ्गुलमात्रं स्पृश्यते तदनुरोधेन चोत्तरभागतो मध्ये द्वित्राङ्गुलं विमुच्यते, सर्ववेष्टनेऽपि परिशब्दार्थसम्पत्तेरविरोध इत्यर्थः। एतदेव श्लोकद्वयं यथाक्रमं श्लोकद्वयेन विवृणोति—सर्वेति। भाष्यकारेण गौरवात्कस्मिंश्चित्सूत्रे, कल्पे वा सर्वशब्दो भविष्यतीति कल्पनां निराकर्तुम्—न हीत्युक्तम्। सर्ववेष्टनवचने हि कर्णयोर्वेष्टनं कृत्वा वंशो निधेयः, मूलं च वेष्टयित्वा निखातव्यं स्यात्, न चैवं याज्ञिकाः कुर्वन्ति। परिशब्दस्तु समन्तार्थः सर्वतो देशवेष्टनं ब्रूते। न कृत्स्नाया इत्यौदुम्बरीमध्योत्तरभागा द्वित्राङ्गुलवर्ज्जित-सर्वौदुम्बरीवेष्टनेऽप्यर्थवानित्यर्थः।

हेतुदर्शनोदाहरणत्वमप्यस्य न सम्भवतीत्याह—लोभमूलं चेति। यदि तर्हि शब्दार्थ-योर्यत्तदित्यव्यये मूलाग्रयोश्च वंशाधारयोः कर्णयोः परिधाने वेष्टने दीर्घवासोलाभाल्लोभमूले तदनुष्ठाने याज्ञिकाचारविरोधः स्यादित्यर्थः।

अयं चापरोऽचारविरोधो लोभमूलत्वे प्रसज्येतेत्याह—अन्तरीयेति। पूर्वापरकाययो-रन्तरस्य, मध्यस्य परिधानार्थमधोवासो नान्तरीयैकदेशस्य कल्पयित्वान्तरीयतामाचामे-दिति, प्रयोगदर्शनादन्तरीयशब्देनोच्यते। अधरीयोत्तरीये हीत्यपि पाठे तदेवोक्तम्। कौशे-यस्य गुणाभावात्कार्पासस्य गुणराहित्यम्।

लोभमूलत्वे च कुशवेष्टनपूर्वकत्वोर्ध्वदेशत्वनियमौ न स्यातामित्याह—प्राक्चेति। उदाहरणान्तरमपि दूषयति—किं चेति। अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्यचाष्टाचत्वारिंशद्वर्षं सर्वं वेदब्रह्मचर्यमित्यादि। अथ सर्ववैदिकविहितत्वादनुदाहरणता चकारसूचिता। पूर्वोक्त-बलाबलविशेषं निराकरोति—यदीति। किं तदर्थान्तरमित्यपेक्षायामाह—शान्तीति। न चास्यानारभ्याधीतन्यायेन दौर्बल्यम्। तस्य कल्प्यक्रतुसम्बन्धमनारभ्याधीतम्, क्लृप्तं क्रतुसम्बन्धात्प्रकरणाधीताद् दुर्बलम्, क्रतुसम्बन्धविप्रकर्षादित्येवंरूपस्य क्रत्वङ्गविषयत्वादस्य च क्रत्वङ्गविषयत्वाभावादित्याह—न चेति। एतदेवोपपादयति—न हीति। विरोधपरि-हारस्तर्हि कथमित्यपेक्षयामाह—वाक्यान्तरैरिति।

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
अर्वाक्सञ्चयनादस्थ्नां त्र्यहमेकाहमेव च॥

इत्याशौचच्छेदकालानां यथा व्यवस्थितो विकल्पः, तथेहापि भविष्यतीति व्यववस्थित-विकल्पसूचनाय दृष्टान्ताभिधानपरत्वादाशौचकालानाम्।

'एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः॥'

इति वचनान्तरेण।

(दन्तजातपदेन वर्द्धमानोपलक्षकः कुमारादनुजातपदेन वध्वोपलक्षकः, कृतचूडपदेन वर्षत्रयोपलक्षकः ।)

'दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।
अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते ॥'

इत्युपक्रमानुसारेण वा व्यवस्थावगमान्न तद्दृष्टान्तेनेह विकल्पाङ्गीकरणं युक्तमित्यगृहीताभिप्रायः शङ्कते—ननु चेति । अग्निवेदसमन्वितस्य दशाहाशौचानुवृत्तावुभयसाध्यहोमजपादिलोपाद् भूयसी धर्मपीडा स्यात्केवलवेदस्य तन्मात्रसाध्यजपादिलोपादल्पाद्विहीनस्याल्पतरेति धर्मपीडाल्पत्वमहत्वापेक्षया आदिशब्दाज्जातदन्ताद्यपेक्षया चाशौचकालोऽपि व्यवस्थितविषय इत्यध्याहारेण योज्यम् । उभयत्र समविकल्पानाश्रयणे कारणं पक्षयोरसाम्यं तावदाह - यस्य हीति । यस्तु विरोधं चापरं विकल्पानाश्रयणे कारणं दृष्टान्ते तावदाह—एकरात्र इति । दार्ष्टान्तिकेऽप्याह—एवमिति । ननु योऽल्पेन कालेनाहं शुद्धः स्यामिति सङ्कल्पयति, तस्याल्पेन कालेन शुद्धिः बहुकालसङ्कल्पे तु बहुनेति परिग्रहव्यवस्थयाऽशौचकालानामविरोधः ।

यश्चाहमक्रीतराजकस्य दीक्षितस्यान्नं न भोक्ष्य इति सङ्कल्पयति, तं प्रति तावत्कालमभोज्यान्नता । पशुसंस्थावधिसङ्कल्पे तावत्कालीमत्युभयत्रापि वस्तुविरोधपरिहारमाशङ्कते—स्यादेतदिति । यथा यः प्रागुदये-सूर्योदयोत्तरकालेऽग्निहोत्रं होष्यामीति सङ्कल्पयति, तं प्रत्युदयोत्तरकालोऽग्निहोत्राङ्गम् । यस्तूर्ध्वोदये सूर्योदयात्प्राक्काले होष्यामीति सङ्कल्पयति, तं प्रत्यसाविति परिग्रहाव्यवस्थाया प्रागूर्ध्वोदययोः कालयोरविरोधः तथेहापीत्यर्थः । प्रागूर्ध्वं चोदयो याभ्यामिति विग्रहः । सर्वेष्वपि वैकल्पिकेषु व्रीहियवादिषु परिग्रहव्यवस्थयैवाऽविरोध इति समविकल्पत्वाविघातः ।

आशङ्किता विकल्पे इमं परिहारं दूषयति—युक्तमिति । परिग्रहव्यवस्थया वस्तुविरोधपरिहारो वाभिप्रेतः । अनुष्ठानविरोधपरिहारो वा । तत्र वस्तुस्वरूपस्य पुरुषेच्छाधीनत्वान्न तद्वशेन वस्तुविरोधपरिहारः सम्भवति उदितानुदितहोमयोस्त्वनुष्ठानात्मकत्वाद्वस्तुविरोधो नास्त्यनेन श्लोकेनोक्तम् । अथानुष्ठानविरोधपरिहारः परिग्रहव्यवस्थयानेन दृष्टान्तेनोच्यते । तदप्ययुक्तम् । पक्षद्वयस्य हि साम्ये सति पुरुषेच्छावशाद्विकल्पेनोभयानुष्ठानं युज्येत । दृष्टान्ते च पक्षद्वयसाम्यात्तद्युक्तमित्याह—न चेति । क्लेशः=शरीरायासः । क्षयो=न्यूनद्रव्यत्वम्, व्ययः=अत्यन्तनाशः । आदिशब्दात्तत्कालीनलौकिककार्यान्तरबाधः । दार्ष्टान्तिके तु सिद्धे वस्तुनि सदसत्त्वविरोधस्यापरिहार्यत्वाद्विकल्पो—न सम्भवतीत्युक्तम् ।

न च दीर्घकालस्य परिग्रहः सम्भवत्याशौचाहवृद्धेर्निषिद्धत्वादित्याह—इह त्विति । न केवलं सदसत्त्वविरोधान्निवार्यते, किं त्वनेनापि मनुवचनेनेत्यपिशब्दार्थः । ननु दीक्षितान्नभोज्यत्वस्य दीर्घकालत्वनिषेधाभावात्परिग्रहव्यवस्थयाऽनुष्ठानविरोधपरिहारो भविष्यतीत्याशङ्क्योभयत्राप्यल्पकालनिरोधेन कृतार्थस्य बहुकालनिरोधे प्रवृत्त्यसम्भवाद्दीर्घकाल-

वाक्ययोरानर्थक्यमेवापद्येतेत्याह—क्लेशेति । उभयत्रापि समविकल्पासम्भवमुपसंहरति—तेनेति । वस्तुविरोधात्पक्षयोश्चासाम्याद्विषयान्यत्वमेव विरोधपरिहाराय वाच्यं न तु विकल्पो युक्त इत्यर्थः । स चान्यो विषयो दृष्टान्ते दर्शित इत्याह—स चेति । ननु यस्यापि धर्मपीडा नास्ति, तस्याप्याशौचाह्ववृद्धेर्निषिद्धत्वान्नेयं विषयव्यवस्था युक्तेत्याशङ्क्य, निषेधोऽपि तद्विषय एवेत्याह—तत्र चेति ।

धर्मपीडाद्यपेक्षयेत्यादिशब्दसूचितमाशौचकालानां व्यवस्थान्तरमाह—दन्तेति । आहिताग्न्यादिपाठाज्जातशब्दस्य परनिपातः । मानवीयानुजातपदस्यानुपश्चाज्जातमपत्यं यस्मादिति व्याख्यानार्थोऽन्यशब्दप्रक्षेपः । चितिक्रियाशब्दश्चतुरहोपलक्षणार्थः । चितिक्रियात्र्यहैकाहा ये विहिताः ते दन्तजातादिविषया इत्यर्थः । पारिशेष्याद्दशाहं कृतचूडे चेति चकारसूचितोपनीतविषयो ज्ञायते । कथमेषा व्यवस्था प्रतीयत इत्यपेक्षायां—क्रमादित्युक्तम् । दन्तजातादिषु संस्थितेष्वशुद्धा वान्धवा इत्युक्ते कस्मिन्संस्थिते कियन्तं कालमशुद्धतेत्यपेक्षायां दशाहादीनामुक्तत्वात्स्मृत्यन्तरपर्यालोचनया प्रातिलोम्यक्रमेणेयं व्यवस्था प्रतीयत इत्यर्थः । अस्मिश्च पक्षे वृद्धिनिषेधोऽप्येकशास्त्रगतत्वादेतद्विषय एवेत्याह—तत्र चेति ।

नन्वस्तु प्रातिलोम्यक्रमेणैकाहादीनां दन्तजातादिविषयत्वम्, धर्मपीडाल्पत्वविषयत्वे तु किं कारणं दक्षवचनाच्चाग्निवेदसमन्वितादिमात्रविषयत्वं प्रतीयते, न चाग्निवेदसमन्वितत्वं धर्मभूयिष्ठत्वेन नियतम् । दाम्भिकादौ व्यभिचारदर्शनादित्याशङ्क्य दक्षवचनस्य धर्मपीडाविषयत्वद्योतनार्थं गौतमवचनमुदाहरति—तथेति । कार्यशब्दस्य धर्मविषयत्वात् तत्साहचर्येण च स्वाध्यायशब्दस्यापि स्वाध्यायसाध्यजपादिधर्मविषयत्वप्रतीतेः तद्विघातार्थं सद्यः शौचं विदधताऽल्पाशौचस्य धर्मपीडापरिहारार्थत्वद्योतनान्महत्यामापद्यग्निवेदसाध्यकर्मानुष्ठानं विना प्रतीकारासम्भवेऽनुष्ठात्रन्तराभावे वा तत्प्रतीकारार्थकर्मानुष्ठानमात्रविषयाशौचाभावप्रतिपादनपरम् 'एकाहाच्छुद्ध्यते विप्र' इति दक्षवचनं व्याख्येयमिति भावः ।

यथा अस्माभिर्दक्षवचनस्य धर्मपीडापरिहारर्थत्वाङ्गीकरणेनाल्पाशौचकालानां—तद्विषयत्वमुक्तम् । गौतमेनापि तथोक्तं द्योतितमित्यर्थः ।

नन्वेवं सति तत्कालमात्राशौचाभावप्रतिपादनपरत्वेनोत्तरकालानुवृत्तेरनुज्ञातत्वाज्जातदन्तादिविषयाणां चाशौचकालानां भिन्नविषयत्वेन वृद्धेरप्रसक्तत्वान्निषेधो न युक्त इत्याशङ्क्य विषयान्तरमाह—अथ वेति ।

अन्तर्दशाहात्स्यातां चेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥

इति पूर्वाशौचासमाप्तावाशौचान्तरनिमित्तसन्निपाते पूर्वाशौचकालशेषेण मनुना शुद्धिमुक्त्वा, निमित्तावृतौ नैमित्तिकाशौचानावृत्तिरन्याय्येत्याशङ्कानिराकरणार्थं पूर्वाशौचपरिच्छेदार्थंप्रवृत्तेन दशाहादिना प्रसङ्गेनान्तः पतितस्याशौचान्तरस्यापि परिच्छेत्तुं शक्यत्वादाशौचानावृत्तेर्न्याय्यत्वं न वर्द्धयेदघाहानीत्यनेनोक्तमिति भावः ।

एतदेव विवृणोति—न वर्द्धयेदिति। प्रसङ्गन्यायमात्रं योजयति—प्रवृत्त इति। नन्वसमासेनापि दशरात्राद्यवधिना शौचान्तरस्यैकदेशवर्तिनः कथं व्याप्तिरित्याशङ्क्याह—वितत्येति। नात्राह्नामाशौचपरिच्छेदकत्वं किं तु संख्यायाः। तस्याश्च व्यासज्यवृत्तित्वेनान्त्येऽह्न्युपजायमानायास्तत्कालवर्तित्वाविशेषात्पूर्वापरीभूतानेकाशौचापरिच्छेदकत्वमविरुद्धमित्याशयः।

नन्वेवं तर्हि पूर्वाशौचकालशेषेण तदन्तःपात्याशौचान्तरनिवृत्तेर्न्यायसिद्धत्वाद्वचनान्तरानर्थक्यं स्यादित्याशङ्क्याह—शुद्धीति। अयमाशयः। शब्दैकसमधिगम्योऽर्थो न स न्यायस्य विषयः तथा सत्यपेक्षाबुद्धिहेतुकत्वेनैकत्वातिरिक्तसंख्यायाः संख्येयाहर्विशेषमूहापेक्षत्वात्तस्य च जातमृतबन्धुभेदेन जन्ममरणावधिभेदेन भेदाज्जन्ममरणसामान्यविविक्षायां शावेन सूतिशुद्धेरसम्भवादाशौचनिमित्तसामान्यविवक्षायां सूत्यापि शावशुद्ध्यापत्तेः।

यत्तु न वर्द्धयेदघाहाहानीत्यनेन शेषाहः शुद्धेर्न्यायमूलत्वदर्शनं तच्छुद्धिप्रतीक्षि जातेष्टिमासिकादिमात्रविषयशेषमुद्धचमिधानशङ्कानिवृत्त्यर्थमिति। नन्वेवं तर्ह्याशौचकालवद्दीक्षितान्नकालयोरपि व्यवस्थैवास्तु, व्यवस्थितः कल्पो-विकल्प इति तु व्युत्पत्त्या व्यवस्थामेव विकल्पशब्देनाभिप्रेत्याशौचच्छेदकालवदित्युक्तमित्याशङ्क्याह—नन्वेवमिति। अस्मिन्विषये अयमवधिरिति विषयव्यवस्थितोऽवधिर्विषयावधिरिति मध्यमपदलोपी समासः। तस्य कारणं विषयविशेषावधिव्यवस्थापकं कारणं भोजनान्वयेऽप्यवधेर्नित्यमवत्यसापेक्षत्वात्कारणशब्दसमासाविघातः। तस्माद्दार्ष्टान्तिके विकल्पव्यवस्थयोर्द्वयोरप्यसम्भवाद्विरोधपरिहाराशक्तेर्दीर्घावधेश्चाल्पावधिबाधं विनात्मलाभायोगादल्पावधेर्बाध इत्याशङ्किता स्वाभिप्रेतसिद्धमुपसंहरति—तत्रेति।

एवमाशङ्किते विरोधपरिहारवादी स्वाभिप्रायं प्रकटयति—तस्मादिति। यस्मादल्पावधेरपि वैदिकत्वात् बाधो न युक्तः। तस्मादशौचच्छेदकालवदिहापि भोजनावधिद्वये वैषम्यस्य व्यवस्थाया हेतुर्विषयभेदो वाच्यः, न तु कस्यचिद् बाध इत्यर्थः। कीदृशो विषयभेदे इत्यपेक्षायामाह—अत्रापीति। अनापद्यपि वा दीक्षितनियुक्तपुरुषान्तरदत्तान्नस्य राजक्रयोत्तरकालं भोज्यत्वमिति परिहारान्तरम् दीक्षिते वेत्युक्तम्। अत्र सत्रिणो हि अन्यैः प्रदापयेदन्नं भोज्यं तद्द्विजसत्तमैरिति स्मृतिपर्यालोचनया सूतकादसन्निपातभयान्मासादिपर्याप्तं ब्राह्मणभोजनार्थमन्नमुकल्प्य, अन्यमन्नं दानाय नियुञ्जते। अग्नीषोमीयोत्तरकालं तु दीक्षितदत्तान्नभोजनमप्युदुष्टमित्याशयः। एतश्च परिहारान्तरं दीक्षितो न ददातीति निषेधेन अग्नीषोमीयोत्तरकालमपि दीक्षितस्यान्नदानायोगादापातप्रतिभानमात्रेणापारमार्थिकमेवोक्तमित्यपिशब्देन सूचितम्। नन्वन्नान्तरासम्भवेऽपि निषिद्धान्नभोजनं न कार्यमित्याशङ्क्याह—आपद्धर्मइति। ननु करिष्यमाणप्रायश्चित्तबलेनापत्कालेऽप्यनुष्ठितस्य निषिद्धस्य निर्दोषत्वाभावादनुज्ञाशास्त्रमप्रमाणमित्याशङ्कते—हन्तैवमिति। आपद्यपि निषिद्धानुष्ठानस्य दोषत्वोपपादनायेतिहासमुदाहरति—जग्धवानिति। स च प्राप्तवानिति-

शेषः। श्वमांसभक्षणस्याननुज्ञानात्सदोषत्वं क्रीतराजकान्नभोजनस्य त्वनुज्ञानान्निर्दोषत्वमिति परिहरति—उच्यतइति। विशेषरूपेणानुज्ञानस्यात्यन्तनिर्दोषत्वसूचनार्थम्—महानित्युक्तम्।

नन्वापत्काले निषिद्धान्नभोजनस्य।

जीवनात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाश इव पङ्केन न स पापेन लिप्यते॥

इति सामान्येन मनुनानुज्ञातत्वाद्विशेषानुज्ञाऽनर्थिकेत्याशङ्क्याह—सामान्येनेति। अनुज्ञासाफल्यप्रदर्शनार्थः स्तोकशब्दः। सामान्यानुज्ञातानुष्ठानस्य अल्पदोषत्वं कथमवगम्यत इत्यपेक्षायामाह—तथा चेति। विशेषानुज्ञातादन्येषां निषिद्धानां पापत्वेऽपि तानि शेषाण्यल्पानीति, अल्पवाची शेषशब्दः। अन्ते शौचं भविष्यतीत्यापद्धर्मगतं प्रत्युक्तमितीतिकरणाध्याहारेण योज्यम्। मनुवचनमुदाहरति—कर्मणेति। ननु कथं धर्ममाचरेदित्यस्य शौचविधानार्थताऽवसीयत इत्यपेक्षायामाह—धर्मश्चेति। फलार्थस्य धर्मस्य वाक्यान्तरविहितत्वेन विध्यानर्थक्यात्, आपत्कालीनस्य वा कार्यकरणस्य निर्दोषत्वे धर्माधिकारनिवर्त्तकत्वायोगात्प्रतिप्रसवार्थमपि विध्यनुपपत्तेः, सदोषत्वे वा प्रायश्चित्तं विना धर्माधिकाराभावात्प्रायश्चित्तविधानार्थमेवेदं वचनमिति भावः। अतो विशेषानुज्ञानस्यात्यन्तनिर्दोषत्वज्ञापनार्थत्वान्नानर्थक्यमित्युपसंहरति—यत्त्विति। ननु क्रीतराजकान्नभोजनस्यात्यन्तनिर्दोषत्वे द्वितीयोऽवधिरनर्थकः स्यादित्याशङ्क्यानापदि सदोषत्वात्तद्विषयोऽसाविति दर्शयितुमाह—तत्रापि त्विति। एवमाशौचच्छेदकालवदापदनापद्विषयत्वेनावधिद्वयस्य व्यवस्थामुपपाद्याऽशौचकालानां जातदन्तादिविषयत्वपक्षे तत्साम्यार्थम्, अन्यथा व्यवस्थामाह—यदि वेति। कालवैषम्यात्समविकल्पत्वाभावेऽप्यविरोधोऽवधार्यते इति अपि शब्दाध्याहारेण योज्यम्। कथमित्यपेक्षायाम्—अर्थभेदव्यवस्थानादित्युक्तम्। तस्माद्दीक्षितस्याविज्ञातस्य क्रीतराजकस्याभोज्यं भवतीत्याथर्ववैदिकस्य दीक्षितान्नभोजननिषेधोऽर्थः तस्य तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवतीत्याथर्ववैदिकोऽवधिर्न दीक्षितस्याश्नीयादिति त्रयीगतस्याभोजनसङ्कल्पविधिरर्थः। तस्य त्रयीगतोऽवधिरिति त्र्यथर्ववेदगतयोर्वाक्ययोरर्थभेदेन तद्विषयतया विधिद्वयस्य व्यवस्थानादविरोध इत्यर्थः। अर्थभेदं दर्शयति—दीक्षितान्नमिति। नित्यत्वप्रदर्शनार्थम्—ध्रुवमित्युक्तम्। न भोक्ष्य इति भोजनविषयो मनोव्यापारः सङ्कल्पो विधीयत इत्यर्थः।

नन्वभोजननियमस्यापि भोजननिषेधार्थत्वात्तत्करणे दोषापत्तेः क्रीतराजकस्याप्यभोज्यान्नत्वं स्यादित्याशङ्क्य, फलार्थं वर्ज्जनीयस्यानुष्ठानं न दोषापादकमिति दर्शयितुं दृष्टान्तद्वयमाह—यथैवेति। श्राद्धभोजन-मांसभक्षणयोरपि निषिद्धत्वेन दोषवत्त्वात्साध्यविकलत्वाशङ्कानिराकरणार्थम्—न सर्वत्र निषिध्यत इत्युक्तम्। क्व निषिद्धता, क्व वा नेति विवेकापेक्षायामाह—श्राद्धमिति। सदेति सपिण्डीकरणात्प्रागूर्ध्वं चेत्यर्थः। सपिण्डीकरणोत्तरकालमप्येकोद्दिष्टमप्यन्येषां स्मर्तॄणां मतेनानिषिद्धमिति द्योतनाय—एकेषामित्युक्तम्।

प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थात्सपिण्डीकरणात्प्राक् पार्वणस्याविधानेन सपिण्डीकरणानन्तरभाविपार्वणश्राद्धस्येत्यादिप्रेतश्राद्धस्याभावात्पित्र्यशब्देनाभिधानम् ।

मांसभक्षणेऽपि विवेकमाह—**तथेति** । एतदेव मनुवचनेन द्रढयति—**यथाहेति** । श्राद्धभोजनमांसभक्षणाभ्यां दीक्षितान्नभोजनस्य वैषम्यमाशङ्कते—**ननु चेति** । निःश्रेयसेन कारणेन प्रयोजनेनेति चतुर्थ्यर्थे तृतीया—निःश्रेयसार्थं नियमयतीत्यर्थः । 'न दीक्षितस्याश्नीयादि'त्यस्याथर्ववैदिकवच्छ्रुतशब्दसामानाधिकरण्यविकल्पप्रसक्तिरूपपर्युदासकारणाभावान्निषेधार्थत्वप्रतीत्यविशेषेण स्वरूपभेदेऽप्यर्थैकत्वमभिप्रेत्य वाक्यैकत्वाभिधानम् ।

अन्यत्राव्युत्पादितमप्यत्रावधिद्वयान्यथानुपपत्तेः पर्युदासकारणत्वं न्यायोपेतत्वादिहाङ्गीकार्यमित्यभिप्रायेण परिहरति—**स्यादिति** । प्रत्यक्षस्यापि वाक्यद्वयस्याभिन्नार्थत्वं न्यायकल्पमभिप्रेत्य—**कल्पितमित्युक्तम्** । कथमवधिद्वयेन भिन्नार्थकत्वकल्पनेत्यपेक्षायामाह—**यः पूर्वं इति** । यः प्रतिषेधः, स क्रीतराजके स्थितो निवृत्तः । कथं निवृत्ततावसीयत इत्यपेक्षिते—**पूर्वं इत्युक्तम्** । **अक्रीतराजकस्येति** । क्रयप्राग्भावावगमात्प्रतिषेधस्योत्तरकालं व्यापाराभाव इत्यर्थः । ततश्च तस्य केवलप्राग्भावित्वेनैकरूपत्वाद्द्वितीयोऽवधिर्न विकल्पत इत्येकत्वादित्यनेनोक्तम् । यदि ह्यसौ प्रतिषेधो राजक्रयात्प्रागुत्तरकालं च व्याप्रियेत ततस्तस्यैवापदनापद्विषयत्वेनाऽवधिद्वयमवकल्पेत । अतोऽन्यथानुपपत्त्याथर्ववैदिकादन्यस्य त्रयीगतस्य पर्युदासार्थत्वं कल्पनीयमित्याह - **द्वितीयेति** । नन्वभोजनविधित्वेऽपि तत्र कालविशेषाश्रवणात् क्रीते त्वभोजनं नामेति निष्प्रमाणमित्याशङ्क्य—**अथान्तरालिक इत्युक्तम्** । निषेधेनैव प्राग्वर्जनसिद्धेः पर्युदासानर्थक्याद्राजक्रयाग्नीषोमीयान्तरालकालविशेषवत्त्वमपि निश्चीयत इति भावः ।

दृष्टान्तं विवृणोति—**यथेति** । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"ति निर्वापमन्त्रे सवित्रश्विपूषशब्दानामसमवेतदेवताप्रकाशनार्थत्वायोगादन्यदेवत्यायां विकृतावनूहे प्रतिपादिते, किमर्थंस्तर्हि सवित्रादिशब्दप्रयोग इत्याशङ्क्य सवित्रादिशब्दानां यजमानपरत्वात्प्रसवशब्दस्य चानुज्ञार्थत्वाद्यजमानानुज्ञाप्रकाशनार्थत्वेऽभिहिते, यजमानबहुत्वे तर्ह्यूहो भविष्यतीत्याशङ्क्य पूर्वानुज्ञातत्वेनेदानीं तत्प्रकाशनानर्थक्यान्निर्वापस्तुत्यर्थत्वेन तत्प्रकाशनस्य पारार्थ्याद्यज्ञपतिशब्दवदनूह इति निगमसिद्धो दृष्टान्तः । ननु निर्वापकालेऽपि यजमानहविर्निर्वप्स्यामीत्याध्वर्युणानुज्ञायां पृष्टायामों निर्वपेति यजमानेनानुज्ञानात्तदनुसन्धानार्थं निर्वापमन्त्रे प्रकाशनं भविष्यतीत्याशङ्कानिरासार्थं—**तदानीन्तनेत्युक्तम्** । पूर्वमेवानुज्ञातत्वान्न निर्वापस्तुत्यर्थमिति भावः ।

दार्ष्टान्तिके योजयति—**तथेहेति** । उभयथापि सम्भवे तर्हि कथं पर्युदासत्वावधारणेत्याशङ्क्य 'न होतारं वृणीत' इति तद्विकल्पप्रसक्त्यैव पर्युदासत्वावधारणमाह—**प्रतिषिद्धेति** । क्रयोत्तरकालमर्थप्राप्तदीक्षितान्नभोजनप्रतिषेधे पूर्वप्रतिषेधगतस्याक्रीतराजकस्येति विशेषणस्यानर्थक्यापत्तेः शास्त्रानुज्ञातप्रतिषेधस्याभ्युपगमनीयत्वाद्विकल्पप्रसक्तिरित्यर्थः ।

उपसंहरति—दीक्षितान्नेति । ननु माभूदनुज्ञाग्नीषोमीयोत्तरकालं दीक्षितान्नभोजनस्य विधिरयं भविष्यतीत्याशङ्क्य, दृष्टार्थस्यादृष्टार्थत्वायोगाद्विशिष्टविधौ च गौरवापत्तेः फलाश्रवणात्प्रकृताश्रयालाभादनेकगुणोपादानाच्च फले गुणविध्ययोगाद्विधित्वं न युक्तमित्याह—अदृष्टार्थेति । 'न दीक्षितस्याश्नीयादित्यस्य त्वदृष्टार्थतोभयसाधारण्याददूषणम् । द्वितीयानुपपत्त्या च पर्युदासत्वं न्याय्यमेवेति भावः । कोऽनयोः पक्षयोर्मध्ये सम्मत इत्यपेक्षायामापद्विषयत्वेऽनुकल्पत्वेन स्वरसावगततुल्यकल्पत्वबाधापत्तेरथर्ववैदिकस्य च निषेधस्यावध्यनपेक्षत्वेन तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवतीत्यस्यावधिसमर्थकत्वायोगाच्छ्रेयोऽर्थमयं यजते न प्रायश्चित्तार्थमित्येवं विज्ञातस्य क्रीतराजकस्यान्नमदुष्टमेवेत्यवध्यन्तरदर्शनजनितदोषाशङ्कानिराकरणार्थत्वप्रतीतेर्द्वितीयस्य पक्षस्य सम्मतत्वं दर्शयितुमाह—एवमिति । ऐतरेयब्राह्मणगतस्य त्वशितव्यं वपायां हुतायामित्यस्याग्निषोमीयसंस्थावधिवाक्यवत्पर्युदस्तदीक्षितान्नभोजनानुज्ञानार्थत्वेऽपि बह्वल्पफलगुरुलघुकल्पत्वेनावधिद्वयव्यवस्थानादविरोध इत्येवंशब्देन सूचितम् । पर्युदस्तानुज्ञानर्थत्वसाम्येन चैतदवधिद्वयमेकीकृत्यावधिद्वयोपन्यासः ।

अष्टाचत्वारिंशद्वर्षं ब्रह्मचर्यस्मृत्युदाहरणमपि दूषयति—अष्टेति । स्मार्त्तत्वेन तुल्यत्वाद्विकल्पेनाविरोधं वक्तुं—स्मृतावेवेत्युक्तम् । स्मार्त्तत्वाविशेषेऽपि पक्षाणामसाम्याद्विकल्पानुपपत्तेरपरितोषाद्विषयव्यवस्थां वक्तुमाश्रयान्तरेत्युक्तमिति विवेकः । कीदृशानि पक्षान्तराणीत्यपेक्षिते मनुवचनं तावदुदाहरति—तथा हीति । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदित्युत्तरार्द्धम् । तत्र द्वेधा विषयव्यवस्थामाह—सामर्थ्येति । योऽल्पेन कालेन बहून्वेदानध्येतुं समर्थः तं प्रति बहुवेदपक्षः, असमर्थं प्रत्यल्पवेदपक्ष इति सामर्थ्यमङ्गीकृत्यगार्हस्थ्याश्रमायोग्यं प्रति बहुवेदपक्षः तद्योग्यं प्रत्यल्पवेदपक्ष इत्याश्रमयोग्यत्वमङ्गीकृत्यापेक्ष्यैतन्मनुनोच्यत इत्यर्थः ।

'इह षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवैदिकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥'

इति मनुनैवोक्तत्वात् ग्रहणान्तिकपक्षे सामर्थ्यापेक्षा । वर्षसंख्यापक्षे त्वाश्रमयोग्यत्वापेक्षेति विवेकोऽवसीयते ।

अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मर्त्रा गौतमेनापि पक्षान्तरमुक्तमित्याह—गौतमेनापीति । तत्राप्यष्टाचत्वारिंशत्पक्षो गार्हस्थ्याश्रमायोग्यविषय इत्याह – तत्रैवमिति । नन्वाश्रमान्तरं तान्प्रति कस्मान्न विधीयत इत्याशङ्क्य, तेषां बहुक्लेशत्वादविरक्तानधिकाराच्चाल्पक्लेशबहुफलोपकुर्वाणकत्वेनैव बहुकालक्षपणायैतद्विधानमित्याह—नैष्ठिकेति । उपकुर्वाणकः—अध्ययनार्थं गुरुकुलवासी ब्रह्मचारिविशेषः । गमिष्यतीत्येतदुच्यत इत्यन्वयः ।

स्वाध्यायमात्रेणेष्टगतिप्राप्त्युपपादनार्थं द्वैपायनवचनमुदाहरति—द्वैपायनादयश्चाहुरिति । ब्रह्मयज्ञफलातिशयोपयोगितापि स्वाध्यायतदर्थज्ञानभूयस्त्वस्यास्तीत्याह—यानि चेति ।

प्रतिदिनं प्रतिदिनं प्रयुज्यमानैर्ऋगादिभिर्यो ब्रह्मयज्ञः तन्निमित्तानि यानि यं यं क्रतुमधीयते तस्य तस्याप्नुयात्फलमिति क्रतुसाध्यानि फलानि क्रत्वधिकृतेभ्यो गृहस्थवानप्रस्थेभ्यो निवृत्तत्वादनधिकृतविषयत्वेनावतिष्ठन्त इत्यर्थः। ब्रह्मयज्ञस्याग्निहोत्रादिवन्नित्यकाम्योभयरूपत्वाद्यथायोगं व्यवस्था न विरुद्धेत्याशयः।

द्वादशवर्षपक्षोऽपि गौतमीयेनैव शीघ्रवेदग्रहणसमर्थविषयेण ग्रहणान्तं वेति पक्षान्तरस्मरणेन स्वविषयाद्व्यावर्त्तितत्वान्न सर्वगृहस्थविषय इत्याह—यो वेति। वाशब्दोऽष्टाचत्वारिंशत्पक्षविषयः। पूर्वपक्षीकृतौ स्वविषयाद्व्यावर्तितावित्यर्थः। उपसंहरति—इतीति।

भाष्यभङ्गमुपसंहरति—तेनेति। स्वयं द्वेधा सूत्रद्वयं व्याचष्टे—तेनात्रेति। ननु न्यायनिष्ठत्वान्मीमांसायाः प्रयोगनिरूपणमयुक्तमित्याशङ्क्य प्रयोगार्थत्वाश्रयस्य तत्साम्येऽपि, यत्र प्रयोगवैषम्यम्, तत्र तन्निरूपणीयमित्याह—एतद्धीति। किं प्रतिपाद्यत इत्यपेक्षयामाह—यावदिति। ननूभयोः प्रामाण्ये, कथं नियमेनैकार्थानुष्ठानमित्याशङ्क्याह—व्रीहीति। व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेत व्रीहिभ्य इत्याग्रयणेऽवधिव्यवस्थया व्रीहियवव्यवस्थाविधानदग्निहोत्री वै नानादयित्वात्तस्याः पयसा जुहुयादित्येतत्पक्षाश्रयणाविषयोऽत्रत्यो यावज्जीवशब्द इति प्रागेवोपपादितम्। श्रुत्या सह तुल्या कक्षा यस्याः सा तथोक्ता। अनुष्ठाननियमे कारणमाह—यानीति। वेदवचनस्य विश्रम्भणीयत्वं वदता स्मृतेर्यथाश्रुतमूलानिश्चयेनाविश्रम्भणीयताऽर्थादुक्ता।

कथमस्मिन्नर्थे सूत्रं योज्यमित्याशङ्क्याह—सूत्रार्थोऽपि चेति। यकाररहितः पूर्वपाठः। तत्सहितो द्वितीयः तावच्छब्दाध्याहारे कारणमाह—तदानीन्तनेति। तावत्कालीनव्यवहारप्रतिपादनार्थत्वाङ्गीकरणे प्रयोजनमाह—ततश्चेति। आशङ्काशब्दो यथाश्रुतमूलानिश्चयाभिप्रायः। मात्रशब्दव्यावर्त्यमाह—यदा त्विति।

ननु प्रामाण्यस्य तुल्यत्वेऽपि केनचिद्विशेषेणैकार्थादरे भिन्नशाखागतयोरुदितादिश्रुत्योरपि पठितत्वविशेषेणैकार्थादरापत्तेः एव प्रातरूपोदयम्, व्युषिते, उदिते वेत्याश्वलायनस्य समविकल्पाभिधानं विरुद्ध्येतेत्याशङ्कते—नन्विति। स्मृतेर्विध्याक्षेपकमन्त्रार्थवादमूलत्वस्यापि सम्भवान् नैकस्यै बहवः सह पतय इत्यर्थवादाक्षिप्तस्य च निषेधविधेर्नैका बह्वन्पतीन्विन्देतेति श्रुतिनिषेधविध्यनुसारेणाविवक्षितसाहित्यानेकपतिमात्रनिषेधपरतया व्याख्यानदर्शनादुच्चा दिवि दक्षिणावन्तो अस्थर्ये अश्वदाः सहते सूर्येणेति मन्त्राक्षिप्तस्य चाश्वदानफलविधेर्न केसरिणो ददातीति श्रुतनिषेधानुसारेण साक्षाद्विहिताश्वदानविषयत्वेन व्याख्यानदर्शनात्तन्मूलानां स्मृतीनां प्रत्यक्षश्रुत्यनुसारेणान्यथाव्याख्यानसम्भवात्प्रत्यक्षमूलादर्शने यथाश्रुतमूलानिश्चयादनादरो न वैलक्षण्यमात्रमित्यभिप्रायेण परिहरति—सत्यमिति। अभिप्रायं विवृणोति—अतश्चेति। विप्रलम्भमूलत्वाभावान्नात्यन्तबाध्यत्वं यथाश्रुतमूलानिश्चयाच्च नात्यन्ततुल्यतेत्यर्थः। एवं च वदता यथाश्रुतमूलानिश्चयाभिप्रायेणाऽसति ह्यनुमानमिति सूत्रावयवस्य हेतुदर्शनसूत्रस्य च यथाश्रुतमूलत्वनिश्चयानिश्चयरूपविशेषस्यात्यन्तातुल्यत्वहेतोर्दर्शनादित्येवं

व्याख्या सूचिता। भाष्यं च यथाश्रुतार्थप्रामाण्याभावाभिप्रायत्वेन समाहितम्। उदाहरणभाष्यमप्यदृष्टमूलावस्थास्मृतिविषयत्वेन नेतव्यमिति सर्वमदुष्टम्।

इति वार्तिकमतेन प्रथमाधिकरणाशयः

अथ द्वितीयव्याख्यानम्

द्वितीयव्याख्यानं प्रपञ्चयति—यद्वेति। यान्येतानि सांख्यादिपरिगृहीतानि तैर्विपरीतगृहीतयोर्द्धर्माधर्मयोर्निबन्धनानि यानि च बाह्यान्तराणि म्लेच्छाचारस्य बहुसमाहृतैकदेशामिश्रान्नभोजनाचरणस्य निबन्धनानि तेषामेवैतदनपेक्षणीयत्वं प्रतिपाद्यत इत्यन्वयः। न च तदप्रामाण्याङ्गीकरणे पूर्वोक्तमर्यादातिक्रमादिदोषापत्तिः, शिष्टत्रैवर्णिकपरिग्रहादस्य स्मृतिप्रामाण्यहेतोस्तेष्वसम्भवादिति त्रयीविद्भिर्न परिगृहीतानीत्यनेनोक्तम्। त्रयीवित्परिग्रहाभावेऽप्यहिंसासत्यवचनादिवाक्येषु वेदमूलत्वदर्शनेन वाक्यान्तरेष्वपि वेदमूलत्वानुमानसम्भवात्कथमप्रामाण्यमित्याशङ्क्य किंचित्त्रयीमिश्रस्य धर्मकञ्चुकस्य छायायां पतितानीत्युक्तम्। यथा नर्त्तकी स्वाङ्गवैकृत्यं कञ्चुकेन छादयति, तथा लोकवञ्चनार्थं चैत्यवन्दनादिवाक्यानां मिथ्यात्वं छादयितुं क्वचिद्वेदमूलार्थाभिधानं न सर्वत्र तथात्वानुमानायालमित्याशयः। किं तेषां लोकवचनं प्रयोजनमित्यपेक्षायां लोकोपसंग्रहादिप्रयोजनपरत्वमुक्तम्। कस्मात्पुनः क्वचिद्वेदमूलत्वदर्शनेनान्यत्र तथात्वानुमानं न सम्भवतीत्याशङ्कानिराकरणार्थं—त्रयीत्युक्तम्। त्रय्यप्रामाण्यापादकत्वात्तद्विपरीतेनात एवातन्मूलत्वात्तदसम्बद्धेन दृष्टशोभाभिप्रायेण तत्प्रधानेन तन्मूलेनोपनिबद्धानीत्यर्थः, प्रत्यक्षादिमूलत्वस्य प्रागेव निरस्तत्वात् प्रत्यक्षाद्याभासेष्वेव पराभिमानात्प्रत्यक्षादिशब्दप्रयोगः।

एवं तर्हि प्रामाण्याशङ्कानुपपत्तेस्तन्निराकरणमयुक्तमित्याशङ्क्य—विषचिकित्सेति। पूर्वपक्षबीजमुक्तम् विषचिकित्सादिसमर्थानां कतिपयमन्त्रौषधीनां या कादाचित्का सिद्धिः तन्निदर्शनबलेन जीविकाप्रधानस्यार्थान्तरस्योपदेशकानीत्यर्थः। ननु विषचिकित्सादिदृष्टान्तेन प्रामाण्याध्यवसाने जीविकाप्राधान्याच्चानुष्ठानादरे सत्यपि धर्मत्वाध्यवसाने किं कारणमित्याशङ्क्य—अहिंसादिस्तोकार्थगन्धवासितत्वमुक्तम्। ननु प्रत्यक्षादीनां धर्मप्रामाण्यनिराकरणेन प्रत्यक्षसूत्र एव तन्मूलानां बाह्यस्मृतीनां प्रामाण्यस्य निराकृतत्वात्पुनरुक्तमेतत्स्यादित्याशङ्क्याह—न चैतदिति। वेदमूलत्वं पूर्वमनिराकृतम्। इह निराकार्यमित्याशयः।

ननु वेदमूलत्वस्य परैरनङ्गीकृतत्वेन तन्निराकरणमतिप्रसिद्धत्वान्न कार्यमित्याशङ्क्याह—न चेति। मीमांसकातिरिक्तैः सामवायिकार्थप्रतीत्यभ्युपगमेन कस्मिंश्चिच्छब्दे वाचकत्वानङ्गीकरणाद् गाव्यादिशब्दवाचकत्वस्य परैरनङ्गीकृतस्यापि निराकरणं लोके वाचकविवेकस्याप्रसिद्धत्वाद्यथायुक्तम्; नैवं बाह्यस्मृतीनां वेदमूलत्वनिराकरणं युक्तमतिप्रसिद्धत्वादिति वैधर्म्यदृष्टान्तः।

यद्वा यथा गाव्यादिशब्दानामवाचकत्वे प्रामाण्यस्यातिप्रसिद्धत्वादनादरे लौकिकानां वाचकावाचकेषु समदृष्टित्वापत्तेस्तत्कथनं साधुशब्दाधिकरणे करिष्यते, तथा बाह्यत्वधर्माधर्मनिबन्धनाप्रामाण्यस्याप्यतिप्रसिद्धत्वादनादरेणाकथने लौकिकानां मन्वादिनिबन्धनेषु बाह्येषु च समदृष्टित्वापत्तेस्तत्कथनीयत्वियुत्तरशेषः साधर्म्यंदृष्टान्तः ।

यद्वा शोभादिविशेषवशेन कलिकालवशेन वाऽधर्मप्राबल्याद् बाह्येष्वेव श्रद्धाविशेषापत्तेः श्रौतस्मार्त्तार्थस्यैव त्यागः प्रसज्येतेत्याह—शोभेति । सन्तु वा लौकिकाः परीक्षकाणामपि सम्भवद्वेदसंयोगत्रैवर्णिकप्रणीतत्वाविशेषात्समदृष्टित्वापत्तिरित्याह—ब्राह्मणेति । बाह्यस्मृत्यप्रामाण्यस्यावश्यप्रविपाद्यतामुपसंहरति— तेनेति ।

पूर्वपक्षमाह—महाजनेति । (आदिपदेनानुपलब्धिविरोधपरिहाराय मूलश्रुतेरपि द्वीपान्तरवर्तित्वमुपादीयते) ननु विरोधे का गतिरित्याशङ्क्याह—तत्रेति । विरोधेऽप्युक्तेन न्यायेन मूलश्रुत्यनुमानाविघाताद्व्यवस्था विकल्पो वा भविष्यतीत्याशयः । मूलानुमानस्य चानुपलब्धिविरोधः । प्रत्यक्षश्रुतिमूलत्वपक्षे तु विरोधशङ्कैव नास्तीत्याह—यैश्चेति । अस्मिन्पक्षे यस्मै यद्रोचते तत्प्रामाणीकुर्यादिति पूर्वोक्तं दूषणं परिहरन्नुपसंहरति—ततश्चेति ।

सूत्रेण सिद्धान्तमाह—अत आहेति । ननु पारतन्त्र्ये सति विरोधे मूलानुमानासम्भवेनानपेक्षत्वं स्यात्, वेदवत्तु स्वातन्त्र्यसम्भवे मूलानुमानासम्भवेऽपि न किंचिद् दूष्यतीत्याशङ्क्याह—पारतन्त्र्यं तावदिति । अतो वेदमूलत्वमात्रं निराकार्यम् । तच्चापसिद्धान्तापत्तेर्बौद्धादिभिर्वक्तुं न शक्यत इत्याह—वेदमूलत्वं पुनरिति । यदि तु तावदेकदेशी कश्चिदभ्युपगच्छेत् तं प्रत्यनेन सूत्रेण निराकरोति-अन्यच्चेति । वेदविरुद्धस्यापि मन्वादिवाक्यस्य वेदमूलत्वाभ्युपगमान्न तेन वेदमूलत्वं निराकर्तुं शक्यमित्याशङ्क्य समस्तविद्यास्थानविरुद्धत्वमुक्तम् । ग्रन्थकाराणां वा अनेन सूत्रेण वेदविरोधोऽभिधीयत इत्याह —त्रयीमार्गेति । वेदविरुद्धाचरणानां तन्मूलोपदेशानुपपत्त्या वेदमूलानुमानस्य बाध इत्याशयः । वेदविरोधिभ्यश्च समर्प्पणं वेदविरोधिनां वेदमूलोपदेशपरिग्रहानुपपत्तेर्वेदमूलानुमानस्य बाधकमित्याह—त्रयी बाह्येभ्यश्चेति । चतुर्थवर्णः शूद्रः । निरवसितः वर्णाश्रमाचाररहितः । परिग्रहीतॄणामपि वेदविरोधो वेदमूलानुमानस्य बाधकोऽनेन ग्रन्थेनोक्तो भवति । आत्मविरुद्धाचरितृत्वेन च शाक्यादेर्लोकहितैषित्वस्य दूरनिरस्तत्वात्तदुपदेशस्य प्रमाणमूलत्वानुमानं न युक्तमित्याह—स्वधर्मेति । एतदेवाभियुक्तवचनेन द्रढयति—उक्तं चेति । मनोस्तु क्षत्रियस्यापि प्रवर्तकत्वे 'यद्वै किंचिन्मनुरवदत्तद्भेषजमिति वेदानुज्ञातत्वादविरुद्धमित्याशयः । स्वधर्मातिक्रम एवालङ्कारामिमानादत्यन्तमूढ़त्वं प्रतीयत इत्याह—बुद्धादेः पुनरिति । तद्ग्रन्थपरिग्रहीतॄणामपि' न शूद्राय मतिं दद्यादित्यादिप्रतिषेधातिक्रमसामर्थ्येन ब्राह्मणनिन्दाम् तत्कारित्वेन च शाक्यस्तुतिं कुर्वतामत्यन्तमूढ़त्वमाह—स किलेति । तद्ग्रन्थविहिताचरितॄणां च वेदविरोधो वेदमूलत्वस्य बाधक इत्याह—तदनुशिष्टेति ।

षट्स्वप्यर्थेषु सूत्रं योजयति—तेनेति । बाह्यग्रन्थजातं वेदविरोधादनपेक्ष्यमिति प्रथमव्याख्यानेऽर्थः । ग्रन्थकारिणां वेदविरोधात्तत्कृतं ग्रन्थजातमनपेक्ष्यमिति द्वितीये परि-

ग्रहीतॄणां वेदविरोधात्तेभ्यः समर्पकाणां ग्रन्थकारिणां सम्बन्धिग्रन्थजातमपेक्ष्यमिति तृतीये परिग्रहीतॄणां वेदविरोधात्तत्परिगृहीतं ग्रन्थजातमनपेक्ष्यमित्यर्थोक्ते चतुर्थे । ग्रन्थकारिणामात्मविरुद्धाचरितृत्वात्तत्कृतं ग्रन्थजातमनपेक्ष्यमिति पञ्चमे । आचरितॄणां वेदविरोधात्तदनुस्मृतं ग्रन्थजातमनपेक्ष्यमिति षष्ठे ।

वेदविरोधाभावेऽप्यनुपलब्धिविरोधेन पठितश्रुत्यनुमानायोगान्नित्यत्वबाधापत्तेश्च प्रलीनशाखागतश्रुत्यनुमानायोगाद् बाह्यग्रन्थप्रामाण्यबाधमित्याह—न चेति । ननु मन्वादिस्मृतिवद्विप्रकीर्णशाखागतश्रुतिमूलत्वेनानुपलब्धिविरोधपरिहारो भविष्यतीत्याशङ्क्य तासां क्वचित्संवाददर्शनात् तद्दृष्टान्तेनान्यत्रापि वेदमूलत्वानुमानं युक्तमिति, इह तु क्वचिदपि संवादाभावाद्वैषम्यमित्याह—न हीति । अहिंसादिवचनस्यापि विषयविशेषानवच्छिन्नस्य विहितव्यतिरिक्तविषयहिंसादिनिषेधश्रुत्या संवादो नास्तीत्याशयः ।

ननु श्रुतिमूलत्वासम्भवेऽपि प्रामाणान्तरमूलत्वेन प्रामाण्योपपत्तेर्ग्रन्थप्रामाण्यबाधनं न युक्तमित्याशङ्क्याह—मूलान्तरेति । अत्रैव हेतुदर्शनाच्चेतिसूत्रं योजयति—लोभादीति । किंचात्रोत्प्रेक्षणीयलोभादिविषयतया हेतुशब्दव्याख्यानेन युक्त एव हेतुशब्दाभिधेया धर्माधर्मोपदेशमूलत्वेन तैरुपन्यस्ताः प्रत्यक्षं दृश्यन्ते इत्याह शाक्यादयश्चेति । ननु याज्ञवल्क्यादिभिरपि ।

'यदुच्यते द्विजातीनां शूद्राद्यारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥' या० स्मृ० अ० ५६

तेन पुनरित्यादिहेतुदर्शनपूर्वकं धर्माधर्मोपदेशनान्न तन्मात्रेण वेदमूलत्वनिराकरणं युक्तमित्याशङ्क्य वेद एव द्विजातीनां निःश्रेयसकरः परः इत्यादिना तैः प्राधान्येन वेदमूलत्वाद्यभिधानात् तेन ह्यन्नं क्रियत इति वदर्थवादार्थं हेत्वभिधानं विज्ञायते । ननु शाक्यादिभिर्वेदमूलत्वं क्वचिदुक्तमित्याह—न चेति । हेतुमूलत्वेनैव तर्हि प्रामाण्यं भविष्यत्यत आह—हेतवश्चेति । हेत्वाभासाः—ते, न सम्यग्घेतव इति भावः । हेतुकत्वेन वा शाक्यादीनामनपेक्ष्यत्वप्रतिपादनार्थैतत्सूत्रमित्यर्थान्तिरन्यासेनाह—एत एव चेति ।

पाषण्डिनो विकर्मस्थान्वैडालव्रतिकांश्छठान् ।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ मनु० अ० श्लो०

इति स्मरणाद्वाङ्मात्रेणापि येषामर्चनं न कार्यं ते शाक्यादय एवेत्यर्थः । पाखण्डित्वम्, विकर्मस्थत्वं च प्रसङ्गादुक्तम्, हेतुदर्शनाच्चेति चकारसूचितं वा । अस्यैव सूत्रस्यानपेक्षत्वहेतोर्वेदबाह्यत्वस्य कुदृष्टित्वस्य च दर्शनादिति चतुर्थं व्याख्यानमाह—एतदीयेति । स्वाभिप्रेतं सिद्धान्तमुपसंहरति तस्मादिति ।

॥ इति वार्तिकमतेन द्वितीयं बाह्यमताप्रामाण्यम् ॥ ४ ॥

भा० प्र०—औदम्बरीस्तम्भ के सम्पूर्ण वेष्टन को कहने वाली स्मृति का आशय प्रदर्शन करते हुए सूत्रकार ने कहा कि सम्पूर्ण औदुम्बरी के वेष्टन करने पर बड़ा वस्त्र

होगा और उससे उपकार होगा। इसी दृष्टि से किसी ऋत्विक् ने औदुम्बरी स्तम्भ प्रमाण वस्त्र से उसका वेष्टन किया था और वही स्मृति हो गई, अतः, लोभ आदि दृष्ट कारणों के आधार पर ही स्मृति होने से श्रुतिमूलक यह स्मृति नहीं है। यतः श्रुतिमूलक यह स्मृति नहीं है, अतः यह आदरणीय नहीं है। फलतः यह स्मृति अप्रमाण है।

'हेतुदर्शनाच्च' इस सूत्र का भाष्यकार ने स्वतन्त्र एक अधिकरण के रूप में व्याख्यान किया है। यथा:—वैसर्ज्जनहोमीयं वासः अध्वर्युर्गृह्णाति अर्थात् वैसर्जन नामक होम का वस्त्र अध्वर्यु ग्रहण करे, इत्यादि स्मृति प्रमाण है या अप्रमाण है—इस प्रकार के संशय में पूर्वपक्षी ने कहा कि प्रथम अधिकरण में कथित नियम के अनुसार ही यह स्मृति भी प्रमाण होगी। इसी प्रस्तुत प्रसङ्ग में सिद्धान्ती ने कहा है कि—"हेतुदर्शनात् च"। इस प्रकार का स्मृतिवचन प्रमाण नहीं। क्योंकि ऐसे स्थल में स्मृति का मूल लोभादि ही हेतु के रूप में दृष्ट होता है। किसी ऋत्विक् के द्वारा लोभ आदि के कारण सभी वस्त्रों का ग्रहण करने पर इस प्रकार की प्रथा का प्रचलन हुआ। अतः इस प्रकार की स्मृति श्रुतिमूलक नहीं है, किन्तु लोभादिमूलक है, अतः यह श्रुतिमूलक न होने से अप्रमाण है। यह भी आशङ्का सङ्गत नहीं है कि एकत्र अप्रमाण होने पर सर्वत्र ही अप्रामाण्य होगा; कारण, ऐसा मानने पर उत्सर्ग और अपवाद का नियम ही समाप्त हो जायेगा। सभी शास्त्रों में सामान्य विधि और विशेष विधि है और सामान्य विधि विशेष विधि से बाधित होती है। किन्तु ऐसा होने से ही क्या सामान्य विधि सर्वथा अप्रमाण हो जाती है? अतः विशेष विधि के द्वारा सामान्य विधि का बाध होने पर भी जैसे सामान्य शास्त्र का अप्रामाण्य नहीं होता है वैसे ही किसी-किसी स्थल में स्मृति अप्रमाण होने पर भी उसका सामान्यतः प्राप्त प्रामाण्य व्याहत नहीं होता है। वरन् वह प्रामाण्य अव्याहत ही रहता है।

तन्त्रवार्तिक में इस सूत्र की व्याख्या भिन्न रूप से की गई है उनका कथन है कि—

"स्मृतीनां श्रुतिमूलत्वे दृढे पूर्वं निरूपिते।
विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम्॥"

पूर्व अधिकरण में वर्णित युक्तियों के द्वारा महाजन परिगृहीत स्मृतियों की वेदमूलकता जब दृढ़ रूप से अवधारित है तब उसकी स्थल विशेष में अन्यमूलकता स्वीकार करना उचित नहीं है, विभिन्न वेद शाखाओं में उपदिष्ट सामान्य अवश्यकर्त्तव्य वचन का मनु आदि सर्वज्ञ महर्षियों के द्वारा स्मृति के रूप में स्वतन्त्र भाव से निबद्ध किया गया है। क्योंकि, उसमें साधारण अनुष्ठेय अन्य शाखाओं में उपदिष्ट सभी विषयों की अवगति होती है एवं शाखा के साङ्कर्य से सम्प्रदाय का भी उच्छेद नहीं होता है। ऐसी स्मृति को स्थल विशेष में श्रुतिमूलक और स्थल विशेष में लोभाभिपूर्ण कहना शोभाधायक नहीं है। यदि यह कहा जाय कि उन स्थलों में लोभादिरूप कारण का जब अनुमान होता है तब अनुमित का पुनः अनुमान न होने से श्रुतिमूलकता या मूल प्रकृति का अनुमान नहीं हो सकता है। ऐसी स्थिति में कहना है कि—

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृता प्रामाण्यहेतवः ॥
का वा धर्मक्रिया यस्यां दृष्टो हेतुर्न युज्यते ।
कथञ्चिद् वा विरुद्धत्वं प्रत्यक्षश्रुतिभिः सह ॥
लौकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ।
यावत्, किञ्चिददृष्टार्थं तत् दृष्टार्थं हि कुर्वते ॥
वैदिकान्यापि कर्माणि दृष्टार्थान्येव ते विदुः ।

अर्थात् राग, द्वेष, मद, प्रमाद आलस्य एवं लुब्धता=लोभ आदि के स्थलों में जिसको स्मृति के मूल की कल्पना कर विशेष स्मृतियों का अप्रामाण्य माना जाता है, किसी स्थल में ही या उनको स्मृति का मूल मानकर स्मृति के अप्रामाण्य की कल्पना नहीं की जा सकती है । क्योंकि, सभी स्मृति-वाक्य को राग, द्वेष लोभादिमूलक ही मानना पड़ेगा । कारण, ऐसा कोई भी धर्म, कर्म नहीं है; जिसके द्वारा साध्य कोई न कोई लौकिक प्रयोजन न रहे अर्थात् सभी धर्मों का साध्य कोई लौकिक प्रयोजन रहेगा ही और ऐसी कोई स्मृति भी नहीं है जिसका किसी न किसी श्रुतिवाक्य से किसी न किसी अंश में विरोध न हो । लौकायतिक एवं मूर्खों को इससे अतिरिक्त कोई काम भी नहीं है । उनको जो भी अदृष्टार्थक कर्म है सभी को दृष्टार्थक अर्थात् ऐहिक प्रयोजन सम्पादक सिद्ध करना है । जैसे होम लक्ष्यकर इस समय के चार्वाक कहते हैं कि इससे दूषित वायु नष्ट होती है । इसीप्रकार जितने भी वैदिक कर्म समूह है उनको दृष्टार्थक अर्थात् लौकिक प्रयोजन का सम्पादक मानते हैं । यदि स्मृति को लोभादि मूलक कहते हैं तो वेद में भी दक्षिणा-दान, तुलापुरुषदान, महादान आदि जो कर्म हैं उनको भी स्मृति के समान लोभमूलक कहा जा सकता है । इसकी पर्यालोचना कर कहा जा सकता है कि --

"तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् ।
एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥
यच्चादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम् ।
आज्ञासिद्धप्रमाणत्वं पुराणादिचतुष्टयम् ॥
तत्तथैवानुमन्तव्यं कर्तव्यं नान्तराश्लथम् ॥"

आशय यह है कि—इस प्रकार से लोकायतमतावलम्बियों के मनोरथ को पूर्ण करना मीमांसकों का कर्तव्य नहीं है । किन्तु पुराण, न्याय, मीमांसा और धर्मशास्त्र इन स्मृतियों का प्रामाण्य उनके द्वारा उपदिष्ट विधि से ही सिद्ध है, इसलिए वैदिक पूर्व से ही स्वाभाविक श्रद्धा से इन्हें स्वीकार करते हैं और यह युक्तियों से भी साधित है । इनका प्रामाण्य इसी रूप में अर्थात् वेदमूलक ही सिद्ध करना उचित है, किन्तु मध्य में उसको शिथिल करना उचित नहीं है अर्थात् स्मृति को स्थल विशेष में लोभादिमूलक

कहना उचित नहीं है। यद्यपि इस उद्धृत कारिका में प्रथम को छोड़कर अन्य सभी भाष्यकार के सिद्धान्त की व्याख्या का पूर्वपक्ष है, तथापि वार्तिककार ने बाद में जो अपने सिद्धान्त को व्यक्त किया है, वे उस सिद्धान्त पक्ष में प्रयोज्य है। भाष्यकार एवं वार्तिककार के मत के भेद का कारण प्रदर्शन करते हुए भाट्टदीपिका में वार्तिक का सार सङ्कलन करते हुए कहा है कि—भाष्यकार के मत में जिज्ञासा अर्थात् साध्य सन्देह भाट्टदीपिका के भाट्ट चिन्तामणि टीकाकार यज्वा के मत में अनुमान का कारण है—अतः, औदुम्बरी स्पर्श विधि के द्वारा आवेष्टित रूप में ही औदुम्बरी का निश्चयात्मक ज्ञान होता है और उसी से जिज्ञासा की निवृत्ति हो जाती है। इसलिए स्मृति के मूलीभूत वाक्य का अनुमान नहीं होता है। वार्तिककार ने कहा है कि अन्वय और व्यतिरेक व्यभिचार होने से जिज्ञासा अर्थात् साध्य सन्देह अनुमिति का कारण नहीं है। अतः, प्रत्यक्ष श्रुति विरुद्ध स्मृति का भी मूलीभूत श्रुतिवाक्य अनुमेय है और उस अनुमेय श्रुति के साथ प्रत्यक्ष श्रुति का विरोध होने पर व्रीहि यव के समान विकल्प ही आश्रयणीय है। ऐसी स्थिति में विकल्प होने पर भी ऐसे स्थल में प्रत्यक्ष श्रुतिविहित पदार्थ ही अनुष्ठेय है क्योंकि, प्रत्यक्ष श्रुति से वोधित अर्थ का अनुष्ठान करने पर किसी भी दोष की सम्भावना नहीं है। दूसरी बात यह है कि अनुमान को अपेक्षा प्रत्यक्ष पर ही अधिक आस्था होनी चाहिए और ऐसी स्थिति में स्मृति के द्वारा अनुमेय श्रुति के अर्थ का उस समय अनुष्ठान न करने पर ही स्मृति का अननुष्ठापकत्व रूप अप्रामाण्य होगा, किन्तु बाधितार्थकत्व रूप अप्रामाण्य नहीं है भाष्यकार का भी यही अभिप्राय है। इस पक्ष में सूत्रार्थ भी इस रूप में योजनीय है। यथा—'विरोधे' अर्थात् प्रत्यक्ष श्रुति के साथ विरोध होने पर "अनपेक्ष्यं स्यात्" अर्थात् स्मृति वचन अपेक्षणीय अर्थात् उस समय तक जब तक उस स्मृति का मूलभूत श्रुतिवचन उपलब्ध नहीं हो जाता है तब तक आदरणीय या अनुष्ठेय नहीं है। वस्तुतः कात्ययनी ब्राह्मण, गोपथब्राह्मण आदि में इन स्मृतियों का मूलीभूत वेदवचन मिलता है। इस प्रकार आचमन, उपवीतित्व, बद्धशिखत्व, दक्षिणाचारता आदि का मूलीभूत श्रुतिवचन उपलब्ध है।

"हेतुदर्शनात्" लोभरूप हेतु दृष्ट होने से, 'च' = और। लोभरूप हेतु दृष्ट होने से ही उक्त स्मृति प्रमाण नहीं है ॥ ४ ॥

## अथ तृतीयं शिष्टाकोपाधिकरणम्

### [ ३ ] शिष्टाकोपेऽविरुद्धमिति चेत् ॥५॥ सि०

**शा० भा०—आचान्तेन कर्त्तव्यम्, यज्ञोपवीतिना कर्त्तव्यम्, दक्षिणाचारेण कर्त्तव्यमित्येवंलक्षणान्युदाहरणानि। किमेतानि श्रुतिविरुद्धानि न कर्तव्यानि, उताविरुद्धानि कार्याणीति चेत्पश्यसि, तैरप्यनुष्ठीयमानैर्वैदिकं किंचिन्न कुप्यति। तस्मादविरुद्धानीति ॥५॥**

भा० वि०—विषयमाह—**आचन्तेत्यादिना**। यद्यप्यत्र कर्तव्यमात्रमनूद्याचमनादिविधायकानामुदाहरणत्वं प्रतीयते, तथापि पुरुषार्थाचमनादिस्मृतीनामप्यविरोधे, विरोधे च प्रमाणत्वाप्रमाणत्वयोर्निरूपितत्वात् क्रत्वर्थाचमनादिविशेषविषयाणामेवोदाहरणत्वमिति मन्तव्यम्। तत्र श्रुत्यर्थाबाधकत्वबाधकत्वाभ्यां सन्देहमाह—**किमेतानीति**। इति विचार्यत इति शेषः, विरुद्धान्युताविरुद्धानीत्येवं सन्देहः, न कर्तव्यानि, कार्याणीति तु तत्फलनिर्देशः, अत्र विरोधाविरोधमात्रं विचार्यम्, अप्रामाण्यप्रमाणते तु पूर्वाधिकरणाभ्यामेव सिध्यत इति भावः। तदनेन यदि विरोधादप्रामाण्यम् तर्ह्याचमनादिस्मृतीनामपि क्रमादिश्रुतिविरोधादप्रामाण्यं स्यादित्याशङ्क्याविरोधप्रतिपादनात् अधिकरणसङ्गतिस्सूचिता।

यद्वा क्रमकालादिश्रुतिविरोधमङ्गीकृत्य तद्विरुद्धान्याचमनादीनि न कर्तव्यानि उत धर्मविरोधेऽपि धर्मिभिः पदार्थैरविरुद्धानि कर्तव्यानीति विचार्यत इत्यर्थः। इह तूत्सृष्टस्य विरोधादप्रामाण्यस्य प्रमेयबलीयस्त्वेनापवादात् सङ्गतिः, विचारफलं च आचमनादीनां क्रत्वङ्गत्वसिद्धिः, अत्राप्याचारपक्षे क्रत्वङ्गपदार्थविषयाणामाचाराणां क्रमाद्यविरोधं विरोधेऽपि वा प्रमेयबलीयस्त्वेनाप्रामाण्यापवादं वक्तुमारम्भः, सिद्धान्तनिरासेन पूर्वपक्षं दर्शयितुं तदनुवादपरं सूत्रं—तस्येति। चेदितिभागं व्याचष्टे—इति चेदिति। इति शब्दार्थं दर्शयन् अवशिष्टं व्याचष्टे—तैरिति। न विरुध्यते न बाध्यत इत्यर्थः। यथैव हि श्रुत्यादिभिः समाख्यापर्यन्तैः प्रापितान् पदार्थानादाय क्रमादीनां प्रवृत्तिः, तथा स्मृत्याचारप्राप्तानपीति, न स्मार्तैराचमनादिभिः अनुष्ठीयमानैर्वैदिकं किंचिदपि हीयत इति भावः। अबाधफलमाह–तस्मादिति। क्रमादिभिरविरुद्धानि, विरोधेऽपि वा तैः पदार्थैरविरुद्धानि कर्तव्यानीति भावः॥ ५॥

त० वा०—**शिष्टाकोपे–**एवं तावत्पुरुषार्थस्मृतीनामविरोधे विरोधे च प्रमाणत्वाप्रमाणत्वे निरूपिते। संप्रति तु क्रत्वर्थानां यज्ञोपवीतोदकाचमनदक्षिणहस्ताचरणस्मृतीनां बहुश्रुत्यर्थमध्यपातिनीनां विरोधाविरोधमात्रमेव विचार्यते। तन्निर्णये तु कृते, पूर्वाधिकरणाभ्यां प्रमाणत्वाप्रमाणत्वसिद्धिः।

कथं पुनर्विरुद्धत्वं कथं वा न विरुद्धता।
श्रुत्यर्थविगुणत्वेन तदभावेन चेष्यते॥ २७८

यदि यज्ञोपवीतादीनि क्रतुमनुप्रवेश्यमानानि चोदकप्रयोगवचनाभ्यां न परिगृह्यन्ते, निराक्रियन्ते वा, ततो विरोधः। यदि पुनरानुगुण्यात्प्रकरणादिपठितवत्स्मृत्यनुमितवाक्यसंयोगेन क्रतुमनुप्रविशन्ति, न च पूर्वगृहीतं किंचिद्बाधन्ते, ततो न विरुद्धानीति।

## प्रमाणप्रमेयबलाबलविचारः

अन्यत्तु दर्शनं सत्यपि विरोधे प्रमाणप्रमेयबलाबलविसंवादात्संदेहः। तथा हि—

श्रुतिस्मृत्योर्विरुद्धत्वे ज्ञातमेव बलाबलम्।
धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः॥ २७९

वक्ष्यति हि 'अङ्गगुणविरोधे च तादर्थ्यादिति' न चेह स्मार्तः कस्यचिदपि श्रौतस्य पदार्थस्य बाध आशङ्क्यते। क्रमकालपरिमाणानि तु समस्तपदार्थधर्मत्वेन निश्चितानि। तत्र यदि प्रमाणबलाबलं बलीयः ततो बलवच्छ्रुतिप्रमेयत्वाद् दुर्बलस्वभावैरपि क्रमादिभिराचमनादीनां बाधः। प्रमेयबलाबलबलीयस्त्वे तु पदार्थधर्मेभ्यः क्रमादिभ्यः पदार्थत्वेनाऽऽचमनादयो बलीयांस इति। सत्यपि स्मृत्याख्यप्रमाणे दुर्बलत्वे बलवदाश्रयानपि स्वरूपेण दुर्बलान्क्रमादीनेव बाधिष्यन्ते।

किं युक्तमविरुद्धत्वं क्रत्वर्थाङ्गस्मृतेरपि।
न तदर्थक्रियायां हि श्रुतं किंचन हीयते॥ २८०

यथैव विज्ञातबलाबलैरपि श्रुत्यादिभिः समाख्यापर्यन्तैर्यावन्तः शेषाः प्रमीयन्ते, ते सर्वे शेषिकथंभावेन प्रार्थिता इत्थंभावेन सहानारभ्यवादाधीतैर्गृह्यन्ते।

स्मृत्या तथैव सन्तुष्ट्या शिष्टाचारेण चार्पिताः।
गृह्यन्ते भावनाभाव्यैरपूर्वैः साधनांशवत्॥ २८१

कथंभावापेक्षितापूर्वोपकारस्याज्ञातपरिमाणाङ्गसाध्यत्वाद् यावर्त्किचिद्येन केनचिदपि प्रमाणेन प्राप्नोति, तत्सर्वमङ्गं भवति। तस्मादाचमनादीन्यपि यज्ञप्रयोगाङ्गानीत्युपन्यस्ते अभिधीयते॥ ५॥

### अथ चतुर्थं शिष्टाकोपाधिकरणम्

न्या० सु० —अत्र भाष्यकारेणाचमनादीन्युदाहृत्य किमेतानि श्रुतिविरुद्धानि न कर्त्तव्यानि, उताविरुद्धानि कार्याणीति विचाररूपं दर्शितम्, तच्छ्रुतिविरुद्धस्मृत्यर्थाकर्त्तव्यत्वस्य पूर्वाधिकरणे सिद्धत्वात्, अविरुद्धार्थकार्यत्वस्य चाद्याधिकरणसिद्धत्वादनर्थकम्। भोजनादिनिमित्तस्य चाचमनस्य शुद्धयर्थत्वेन पुरुषार्थस्य यज्ञोपवीतस्य च हिरण्यादिवत्पुरुषार्थरूपेण नित्यधार्यतया विहितस्य, दक्षिणाचारत्वस्य च भोजनादौ पुरुषार्थतया विहितस्यानाशङ्काविरोधत्वेन पूर्वपक्षासम्भवादयुक्तमाशङ्क्य व्याचष्टे—एवं तावदिति। उक्तेन न्यायद्वयेन यद्यपि सर्वासां पुरुषार्थानां क्रत्वर्थानां च स्मृतीनामविरोधाविरोधयोः प्रामाण्याप्रामाण्ये निरूपिते, यद्यपि च तावन्मात्रेण पुरुषार्थानामाचमनादिस्मृतीनामनाशङ्क्य

विरोधत्वेन पर्यवसितं निरूपणम्। तथापि सम्प्रति क्रत्वर्थानां यज्ञोपवीतादिस्मृतीनां विरोधाविरोधमात्रमेव विचार्यत इत्यर्थः।

ननु क्रत्वर्थस्मार्त्तपदार्थानुष्ठानस्य श्रौतपदार्थपरिमाणविरोधाविरोधशङ्काऽस्तु नाम, न तु किंचिन्मात्राधिक्येन पूर्वाह्णादिकालविरोधशङ्का। न च सर्वादावनुष्ठीयमानस्य क्रमविरोधशङ्केत्याशङ्क्य, बहुश्रुत्यर्थेत्युक्तम्। श्रौतपदार्थानां बहुत्वेन सकलपूर्वाह्णादि-व्यापित्वात्किंचिदाधिक्येऽपि कालातिक्रमापत्तिः। तन्मध्ये च स्मार्त्तपदार्थानुष्ठानक्रमबाधा-पत्तिरित्याशयः। ननु विरोधाविरोधमात्रस्य विचार्यत्वे कार्याकार्यशब्दावनर्थकौ स्याता-मित्याशङ्क्य, विचारप्रयोजनप्रतिपादनार्थत्वेन तयोः साफल्यमाह—तन्निर्णये त्विति।

नन्वाचमनादीनां निषेधाश्रवणे विरोधो नास्ति श्रवणे विरोध इति सन्देहानुपपत्ति-माशङ्कते—कथं पुनरिति। नात्र निषेधश्रवणाश्रवणाभ्यां सन्देहः, किन्तु स्मार्त्तपदार्थानुष्ठाने श्रुत्यर्थवैगुण्यापत्त्यनापत्तिसन्देहादिति परिहरति—श्रुत्यर्थेति। एतदेव विवृणोति—यदीति। प्रकृतिमनुप्रवेश्यमानानि प्रयोगवचनेन निराक्रियन्ते, तन्निराकृतानि च सामि-धेनी साद्दश्यवद्विकृतिमनुप्रवेश्यमानानि प्राकृताङ्गनिराकाङ्क्षत्वाच्चोदकेन न परि-गृह्यन्त इत्यर्थः।

यद्वा नात्र विरोधाविरोधमात्रं विचार्यते किं तु सत्यपि विरोधे किमाचमनादीनां धर्मित्वेन बलीयस्त्वादबाधः, प्रमाणदौर्बल्याद् बाध इति विरोधाधिकरणापवादार्थं विचार्यत इति, अन्यथा सन्देहभाष्यं व्याख्यातुमाह—अन्ये त्विति। सन्देहः किं कर्त्तव्यान्युता-कार्याणीत्येवंरूप इति शेषः। अस्मिन्पक्षे सिद्धान्तवचनव्यक्तिप्रतिपादकमुताविरुद्धानि कार्याणीति भाष्यमविरुद्धानि, विरुद्धान्यपि वा धर्मितया बलीयस्त्वेनाबाधितत्वात्कार्याणीति द्विविधसिद्धान्तप्रतिपादकतया व्याख्येयम्।

यद्वा श्रौतैः क्रम-काल-परिमाणैर्विरोधेऽपि तदीयैः पदार्थैरविरुद्धत्वात्कार्याणीत्येक-रूपसिद्धान्तप्रतिपादकतयेति। यद्यपि शाखान्तराधिकरणसमाप्तावपि वा क्रमसंयोगाद्विधि-पृथक्त्वमेकस्यां व्यवतिष्ठेत(२-४-३२)इति सूत्रेण क्रम-काल-परिमाणविरोधाच्छाखान्तरीय-पदार्थानुपसंहारमाशङ्क्य विरोधेनार्थसंयोगादैकधर्म्ये तत्संयोगाद्विधीनां सर्वप्रत्यय (२-४-३३) इति सूत्रेण पदार्थानां क्रमादिबाधकत्वं वक्ष्यते तथापि स्मार्त्तानां पदार्थानां प्रमाणदौर्बल्याद् बाध्यत्वाशङ्का न विरुध्यते। तत्रत्यस्यैव प्रमेयबलाबलस्य प्रमाणबलाबल-बाधायाऽत्रोपन्यासात् तस्यापि नानेन पौनरुक्त्यं शङ्कनीयम्। यद्यपि च पिकनेमाधिकरणे स्वरूपबलाबलेन आश्रयबलाबलस्य बाध्यत्वं वक्ष्यते, तथाप्यनादित्वेन लब्धात्मकत्वात्समु-दायप्रसिद्धेराश्रयदौर्बल्येऽपि, क्लृप्तत्वेन स्वरूपबलीयस्त्वादलब्धात्मकावयवप्रसिद्धिबाध-कत्वेऽपि प्रमाणदौर्बल्ये प्रमेयस्यात्मलाभायोगादलब्धात्मकस्मर्तृप्रमेयबाधकत्वं युक्तमित्या-शङ्काऽत्र न विरुध्यते। आश्रयदौर्बल्येन स्वात्मलाभायोगाशङ्का तत्र निराकरिष्यत इति विवेकः।

प्रत्यक्षश्रुतिरोधे तु स्मृतिमूलश्रुत्यननुमाने स्मार्त्तपदार्थानामात्मलाभायोगाद्विरोधेऽपि श्रुत्यनुमानमङ्गीकृत्य यथाश्रुतमूलानिश्चयात्प्रत्यक्षश्रुत्यनुरोधवृत्तित्वप्रतिपादनपरतया नात्यन्तबाध्यत्वम् । 'न चाप्यत्यन्ततुल्यतेत्यनेन यत्पूर्वाधिकरणस्य व्याख्यानं कृतम् तदभिप्रायेण पूर्वाधिकरणोक्तस्य श्रुत्यनुरोधवृत्तित्वस्यापवादार्थमेतदधिकरणमिति योजयितुम्—अन्यदर्शनमित्युक्तम् ।

एतदेव विवृणोति—तथा हीति । कथं धर्मिणां बलवत्तेत्यपेक्षायां द्वादशाधिकरणन्यायमुदाहरति—वक्ष्यति हीति । यथा य इष्टचा पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वेति दीक्षणीयेष्टचादीनामङ्गानाम्, प्रधानस्य च सोमस्य बहुदिनव्यवधानेनोभयोः पर्वकालत्वसम्पादनाशक्तेः किं पर्वणि सोमः, पर्वणि दीक्षा, विपरीतं वेति सन्दिग्धे प्राथम्यात् दीक्षायाः पर्वकालत्वे प्राप्ते—प्रधानसाद्गुण्यार्थत्वादङ्गानुष्ठानस्य प्रधानस्यैव पर्वकालतेति वक्ष्यते । तथेहापि प्रधानस्याचमनादेर्यथाश्रुतस्यानुष्ठानक्रमादेस्तदनुरोधेनान्यथाकरणं प्रतीयत इत्यर्थः । सूत्रं च मुख्यं वा पूर्वचोदनाल्लोकवदिति (१२-२-२५) पूर्वाधिकरणसूत्रात्प्राथम्यार्थं मुख्यशब्दं प्राधान्यार्थत्वेनानुषज्य विप्रतिपिद्धधर्मसमवाये भूयसां स्यात् स्वधर्मत्वमिति तत्पूर्वसूत्राच्च स्वधर्मत्वशब्दं मुख्यशब्दान्वयाय भावप्रत्ययलोपेनानुषज्य प्रधानगुणस्याङ्गगुणेन सह विरोधे मुख्यं प्रधानं स्वधर्मकं कार्यं प्रधानार्थत्वादङ्गगुणस्येति योज्यम् ।

नन्वस्तु क्रमपरिमाणयोर्द्धर्मरूपत्वाद्दौर्बल्यम्, कालस्य स्वतन्त्रद्रव्यत्वेन धर्मिरूपत्वात्कथं दौर्बल्यमित्याशङ्क्याह—न चेति । अनुष्ठेयपदार्थावच्छेदकत्वेन कालस्यापि विधेयत्वात्स्वतन्त्रविधेयत्वस्य धर्मित्वेन विवक्षितस्याभावाक्रमपरिमाणवद्धर्मत्वनिश्चय इत्याशयः । नन्वस्तु प्रमाणप्रमेयबलाबलयोर्विसंवादः, कथं त्वाचमनादीनामकर्त्तव्यत्वम् । कथं वा कार्यतेत्यपेक्षायामाह—तत्रेति ।

सिद्धान्तोपक्रमार्थत्वेन सूत्रं व्याख्यातुमिति चेदिति भाष्यं व्याचष्टे – किं युक्तमिति । द्वितीयविचारेऽपि सिद्धान्तद्वैविध्ये क्रमादिविरोधेऽपि वा पदार्थैः सहाविरोधाद्विरोधाभावाभिधानमविरुद्धम् । नन्वविरोधेऽपि शीघ्रप्राप्तैः श्रौतैरेवाङ्गैर्निराकाङ्क्षत्वेन मन्थराणां स्मार्त्तानामङ्गानां क्रत्वपूर्वैरग्रहणान्नानुष्ठानं सिद्धयतीत्याशङ्क्य, क्रत्वपूर्वाणामनिर्ज्ञातोपायपरिमाणतया श्रौताङ्गमात्रेण नैराकाङ्क्ष्याभावाल्लिङ्गादिगम्याङ्गवत्स्मृत्याचारप्रापिताङ्गानामपि ग्रहणमित्याह—यथैवेति । भावनाभिर्भाव्यैरपूर्वैश्शेषिकथम्भावेन प्राथिताः सन्तस्ते सर्वेऽनारभ्यवादाधीतैः सह यथेच्छभावेन गृह्यन्ते, तथैव स्मृत्याचारार्पिता अपि गृह्यन्त इत्यन्वयः । स्मृत्याचारार्पितानामवैदिकत्वेनापूर्वग्राह्यत्वाशङ्कानिराकरणार्थम्—साधनांशवदित्युक्तम् । यथाऽष्टकादयः साधनांशाः स्मृत्याचारार्पिता अप्यपूर्वैर्गृह्यन्ते, तथेतिकर्त्तव्यतांशा अपीत्यर्थः । एतदेव विवृणोति—कथम्भावेति । उपसंहरति–तस्मादिति ॥५॥

भा० प्र०—"शिष्टाकोपे" = शिष्ट अर्थात् अनुशिष्ट अर्थात् श्रुतिविहित विषय के अकोप से = अनुष्ठीयमान स्मार्त पदार्थ के द्वारा व्याकोप अर्थात् बाधा न होने पर

"अविरुद्धम्" = आचमनादि आदि स्मृतिविहित पदार्थं = कर्म अविरुद्ध अर्थात् प्रमाण या अनुष्ठेय होता है, "इति चेत्" = यदि यह कहा जाय तो। जिस स्थल में स्मृति विहित कर्म का अनुष्ठान करने पर श्रुति अनुशिष्ट विषय का व्याकोप अर्थात् पीडा या बाधा नहीं होती है, वहां स्मार्त कर्म का अनुष्ठान करना कर्तव्य है—यदि सिद्धान्ती ऐसा समझता है ॥ ५ ॥

**न शास्त्रपरिमाणत्वात् ॥ ६ ॥ पू०**

**शा० भा०—नैतदेवम्। शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन्। कथम्? 'वेदं कृत्वा वेदिं कुर्वीते'तीमां श्रुतिमुपरुन्ध्यादन्तरा वेदं वेदिं चानुष्ठीयमानमाचमनादि। दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित्प्रधानं स्वकालमतिक्रामेत्। उभाभ्यां हस्ताभ्यामनुतिष्ठन्प्रधानकालं संभावयिष्यति ॥६॥**

भा० वि०—एवं सिद्धान्तमनूद्य पूर्वपक्षमाह—इति। नञर्थमाह—**नैतदेवमिति**। हेतुं व्याचष्टे - **शास्त्रेति**। हिशब्दो यस्मादर्थः। यतः स्मार्ताः पदार्थाः श्रौतपदार्थानुप्रवेशिनः शास्त्रेण श्रुत्या प्रथमत एव परिच्छिन्नं प्रमितं क्रमादिकं बाधेरन्, अतो नाविरोध इत्यर्थः, एवं च शास्त्रेणावगतं परिमाणं क्रमादिनियमरूपं येषामङ्गानां तेषां भावः तत्त्वं तत्त्वादिति सूत्रावयवो व्याख्यातः, अनेनैव शास्त्रशब्देन पदार्थविषयस्मृतेः बहिरङ्गरूपप्रमेयप्राबल्ये सत्यपि श्रुतेः स्वरूपप्राबल्यात् तद्विरोधे स्मार्ताचमनादीनामननुष्ठेयत्वं सूचितम्।

ननु यदि पदार्थविधायिना शास्त्रेण क्रमादयोऽपि परिच्छिन्नाः, ततो बाध्येरन् तदेव कथमिति चोदयति—**कथमिति**। तत्र तावत् क्रमस्य सह पदार्थैः प्रमितस्यान्तरनुप्रवेशिना स्मार्तेन बाधमुपपादयति—**वेदमिति**। कालस्यापि प्रयोगविधिविहितस्य प्रधानप्रत्यासत्त्यादिरूपस्य बाधमाह—**दक्षिणेनेति**। प्रधानकालं पूर्वाह्णादिरूपं सम्भावयिष्यति नातिक्रमिष्यतीत्यर्थः ॥ ६ ॥

त० वा०—न शास्त्रपरिमाणत्वात्पदार्थोऽभ्यधिको भवेत्।
शास्त्रितं परिमाणं हि कोऽतिक्रमितुमर्हति ॥ २८२

शास्त्रेण हि पदार्थानां परिमाणं त्रिधा गतम्।
क्रमेयत्ताशुनिर्माणरूपं तदिह बाध्यते ॥ २८३

द्वाभ्यां श्रुत्यादिषट्काभ्यां कालेयत्ताक्रमात्स्थितान्।
पदार्थाः प्रविशन्तो हि बाधेरन्स्मार्तलौकिकाः ॥ २८४

सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्या इति प्रयोगवचनेन प्रतिपादितम्। तत्र स्मार्तशिष्टलोकाचारप्रमाणकपदार्थानुष्ठानविक्षेपाद्दक्षिणैकहस्ताधीनविल-

म्बितानुष्ठानाच्च प्रधानप्रत्यासत्तिबाधप्रसङ्गः । समस्तप्रयोगकालाश्च पूर्वाह्णमध्यंदिनादयोऽतिक्रम्येरन् ।

क्रमश्च यः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिवत्क्रमैरवगतः, स च वैदिकपदार्थारूढतया विज्ञाताश्रयप्रमाणपरिमाणः सन्नन्यथात्वं क्षुतादिनिमित्ताचमनव्यवधानात्प्रतिपद्येत । एवमायासस्रस्तोपवीतपुनःकरणव्यवधानेऽपि योजनीयम् ।

यो ह्यसावन्तः स्मार्तः पदार्थः क्रियते तदा ।
तस्य क्रमप्रमाणं हि न श्रुत्याद्यवगम्यते ॥ २८५

उक्तपरिमाणस्य क्रमस्य नान्यदपि किंचित्प्रमाणमवकल्पते ।

तथा श्रुत्याद्यवगतप्रचयशिष्टपदार्थपरिमाणमवश्यमध्वर्य्वादिभिरविस्मृतसमस्तपदार्थनिर्माणायावधारणीयम् । ततश्च प्रथमापरिकल्पितपश्चादागतस्मार्तपदार्थानुष्ठाने पूर्वावधारणभ्रंशात्समस्तकृताकृतानिरूपणादनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादपूर्वदौर्बल्येन न्यूनफललाभप्रसङ्गः।

तच्चातिशयवत्सर्वं सार्थवादाद्विधेर्गतम् ।
न्यूनत्वाक्षमयाऽवश्यं विरुद्धां बाधते स्मृतिम् ॥ २८६

परिमितश्रुत्याद्युपदेशातिदेशात्मकाङ्गशास्त्रपरिमाणत्वाद्वा न तद्व्यतिरिक्ताङ्गशास्त्रावकाशः सहकर्तव्यावगतेषु च पदार्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्रकर्षो भवति; तावन्मात्रमेव प्रयोगवचनोऽनुमन्यते । शक्तस्तु क्षणमात्रमपि यदि विक्षेपं कुर्यात्, तदस्य प्रयोगवचनविधिर्न सहेत । तस्मात्त्रिविधस्यापि शास्त्रपरिमाणस्यान्यथाकरणान्नाऽऽचमनाद्यविरुद्धमिति ।[1] तदुच्यते ॥ ६ ॥

न्या० सु०—पूर्वपक्षसूत्रमवतारणपूर्वकं व्याचष्टे–इतीति । नाचमनादिपदार्थः कर्त्तव्यो भवेदिति नञर्थव्याख्या । अभ्यधिकत्वापत्तेरिति शास्त्रपरिमाणत्वादित्यस्य विरोधोपपादनार्थत्वेन व्याख्या । न तु सत्यपि विरोधे प्रमेयबलाबलानुसारेणाचमनाद्यनुष्ठानं भविष्यतीत्याशङ्क्य, प्रमाणाधीनत्वात्प्रमेयसिद्धेः प्रमाणबलाबलस्य तस्माद् बलीयस्त्वाभिधानार्थं शास्त्रशब्दं व्याचष्टे—शास्त्रितमिति । ननु सूत्रकृता परिणामशब्देनेयत्ताबाधापत्तेरुक्तत्वात् शास्त्रपरिच्छन्नं हीत्यादिक्रमकालत्राधापत्त्यभिधानमाष्यमयुक्तमित्याशङ्क्य नेयत्तावचनः परिमाणशब्दः, किं तु परिच्छेदाश्चात्रैतत्क्रमका एव, एतत्संख्याका एवैतत्काला एवेति त्रिविधावधारणरूपान्तराचमनाद्यनुष्ठाने बाध्येतेत्याह—शास्त्रेण हीति । आशुनिर्माणशब्देन प्रधानप्रत्यासत्तिः, पूर्वाह्णाद्यनतिक्रमः, प्रयोगशैघ्र्यं चेति त्रिविधा कालावच्छिन्नतोक्ता । समासश्चात्र शास्त्रेण परिमाणं येषां पदार्थानामिति बहुव्रीहिरभिमतः । कथं शास्त्रेण

---

१. मु० मु० उच्यत इत्येव पाठः ।

क्रमेयत्ता कालावगतिः ? किं च तेषां बाधकमित्यपेक्षायामाह—द्वाभ्यामिति । प्रयोगविधि-श्रुत्याऽङ्गप्रधानविशिष्टभावनाविधानेन युगपदनुष्ठानाक्षेपादत्यन्तयौगपद्याशक्तेश्च प्रधान-प्रत्यासत्तिलक्षणप्रयोगप्राशुभावलक्षणश्च कालोऽवगम्यते । पूर्वाह्णादिकालः पूर्वाह्णादिश्रुत्या, अङ्गान्तरविनियोजकैः श्रुतिलिङ्गादिभिः प्रचयशिष्टाङ्गसंख्यावगम्यते । क्रमनियामकैः श्रुत्यर्थादिभिः क्रमः तेषां श्रौतपदार्थेषु प्रविशन्तः स्मृत्याचारप्राप्ताः पदार्था बाधका इत्यर्थः । प्रयोगवचनावगतस्य प्रधानप्रत्यासत्तिलक्षणस्य च शेषरूपप्रत्यासत्तिलक्षणस्य च कालस्य पूर्वाह्णादिविनियोजकश्रुत्यवगतस्य च पूर्वाह्णादिकालस्य स्मृत्याचारप्राप्तपदार्थानुष्ठाने बाधापत्तिं वि वृणोति—सर्वे हीति । अनेन च भाष्यकारीयस्य दक्षिणाचारप्रधानकालयो-र्विरोधोपन्यासस्योपलक्षणार्थत्वं दर्शितम् । प्रयोगवचनावगम्यस्य प्रत्यासत्तिलक्षणस्य च कालस्योपपाद्यत्वेनाभ्यर्हितत्वात्पूर्वं तद्बाधप्रसङ्गापादभाष्यव्याख्येति व्युत्क्रमदोषाभावः ।

क्रमबाधप्रसङ्गभाष्ये प्रकृतोदाहरणविषयं श्रुतिग्रहणं क्रमप्रमाणमात्रोपलक्षणार्थम् । आचमनग्रहणं च प्रयोगमध्यपातियज्ञोपवीतकरणोपलक्षणार्थमिति व्याचष्टे—क्रमश्चेति । ननु वेदवेद्यन्तरालाचमनविध्यभावात्सर्वादौ च क्रियमाणस्य क्रमविरोधाभावात्कथमन्य-थात्वप्रतिपत्तिरित्याशङ्क्य—क्षुतादिनिमित्तेत्युक्तम् । ननु क्षुतादिनिमित्ताचमनप्रसक्तौ तावदाश्रयः क्रमो भविष्यतीत्याशङ्क्य—विज्ञातेत्युक्तम् । यस्याश्रयणं प्रमाणानां च परिमाणमेतावत्त्वं विज्ञातम्, स तथोक्तः, कीदृशमाश्रयपरिमाणमित्यपेक्षिते यावन्तो वैदिकाः पदार्थाः तावन्तः एवेति—वैदिकेत्यनेनोक्तम् । प्रमाणपरिमाणं तु श्रुत्याद्यनुक्रमणेन ज्ञातमेवान्तराले यज्ञोपवीतस्य नैमित्तिकस्याप्यप्राप्तेः कथं क्रमान्यथात्वापादकत्वमित्या-शङ्क्य—आयासेत्युक्तम् ।

नन्वन्तराले स्मृत्याचारप्रमाणकपदार्थप्राप्त्यभावे वैदिकमात्राश्रयत्वेऽपि तत्प्राप्तावधि-काश्रयत्वं भविष्यतीत्याशङ्क्याह—यो हीति । प्रमाणान्तरं तर्हि कल्पयिष्यते, अत आह—उक्तेति । अङ्गपरिमाणप्रमाणस्येति पाठे त्वञ्चु गतिपूजनयोरिति गत्यर्थादञ्चतेरकर्त्तरि च कारके संज्ञायामिति को भवता दायो दत्त इत्यादिषु संज्ञाव्यभिचार्यत्वाच्च कारकस्या-संज्ञायामपि कर्मणि घञमुत्पाद्य: चजोः कुघिण्यतोरिति कुत्वेन गतशब्दार्थे गमिति रूपानु-सारेणावगतपरिमाणस्येत्यर्थः ।

नन्वियत्तायाः केनचिच्छास्त्रेणाविधानात्तद्बाधेऽपि न शिष्टकोपापत्तिरित्याशङ्क्य, तस्या अपि शास्त्रीयतामाह—तथेति । किं कश्चित्पदार्थो विस्मृतः, कृतं वा सर्वमिति सन्देहस्या-नुष्ठेयपदार्थसंख्यासम्पत्तिपर्यालोचनं विना निराकर्त्तुमशक्यत्वात्प्रयोगवचनेनेयत्तावधारण-मप्यर्थादाक्षिप्यते । अज्ञातस्य परिमाणस्यानुष्ठानकालेऽवधारणासम्भवमाशङ्क्य श्रुत्याद्यव-गतानां पदार्थानां प्रचयशिष्टमित्युक्तम् । ननु विस्मरणेऽपि सकलवैदिकपदार्थानुष्ठाने कृते सम्पूर्ण-फलप्राप्तेर्न कश्चिद्दोष इत्याशङ्क्याह—ततश्चेति । यतश्च पदार्थपरिमाणमवधारणीयम्, ततश्च स्मार्त्तपदार्थानुष्ठानेन न्यूनफललाभप्रसङ्ग इत्यन्वयः । अपूर्वबलदौर्बल्येनेति न्यूनत्वकरणम् अपूर्वदौर्बल्ये किं कारणमित्यपेक्षायामनिवृत्ते वैगुण्याशङ्कस्येति हेतुगर्भं विशेषणम्, किं कृतं किं

वा नेति कृताकृतनिश्चयो वैगुण्याशङ्काकारणम् । कृताकृतानिश्चयकारणं-पूर्वावधारणभ्रंशः । कथं तस्यानिश्चयकारणत्वमित्यपेक्षिते सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादित्युक्तम् । सम्यग्ध्यैतत्कृतमिति स्मृतिदार्ढ्यस्य यन्निमित्तं संस्कारपाटवम्, तस्याभावादित्यर्थः । अनुष्ठानात्पूर्वं ह्येतावन्तोऽनुष्ठेया इत्यवधारिते यावन्तोनुष्ठेयाः तावतामनुष्ठानोत्तरकालेऽनुष्ठितत्वावधारणात्तत्प्रसूतसंस्कारपाटवेन सम्यक्कृतत्वस्मृतिदार्ढ्यात्कृताकृतसन्देहो निवर्त्तते, नान्यथा । ननु सहेयत्ताया: पूर्वमवधारणात्कथं स्मार्त्तपदार्थानुष्ठाने पूर्वावधारणभ्रंश इत्याशङ्क्य—प्रथमेत्युक्तम् । प्रयोगवचनस्य श्रुत्याद्यवगतपदार्थमात्रपर्यवसायित्वेन स्मार्त्तेष्वव्यापारात्प्रथमं प्रयोगवचनव्यापारवेलायामियत्ताश्रयत्वेनापरिकल्पितस्य पश्चात्तद्व्यापारपर्यवसानोत्तरकालं स्मृतिवशादागतस्य प्राप्तस्य पदार्थस्यानुष्ठानेन पूर्वस्य प्रयोगविधिव्यापारकालीनस्येयत्तावधारणस्य भ्रंशादित्यर्थः । वैदिकस्य सुनेदेन होमादेर्नैमित्तिकस्यापि प्रयोगविधिव्यापारवेलायामेवानुष्ठेयत्वावधारणान्न तदनुष्ठाने पूर्वावधारणभ्रंशापत्तिः । वैगुण्याशङ्कायां चापूर्वातिशयहेतुश्रद्धाविरहादपूर्वदौर्बल्यमात्रं भवति न तु सर्वथाऽनुपपत्तिः । तदुत्पादकसमस्ताङ्गप्रधानानुष्ठानस्य निष्पन्नत्वाच्छ्रद्धायाश्चापूर्वातिशयहेतुत्वं 'यदेव विद्यया करोति, श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती (छा० उ० १.१.४) त्यतिशयवाचितरप्प्रत्यययुक्तया श्रुत्या ।

श्रद्धयेष्टं च पूर्त्तं च नित्यं कुर्यादतन्द्रितः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥

इति स्मृत्या चाक्षयहेतुत्वं श्रद्धाया वदन्त्यार्थान्तरभावे क्षीणत्वप्रतिपादनादवसीयते । ननु किंचित्फललाभेऽपि विधेरर्थवत्त्वान्न शिष्टकोपापत्तिरित्याशङ्क्याह – तच्चेति । विधिसिद्धप्रवर्त्तनाविशयार्थेनार्थवादेन प्रवर्त्तनातिशयावसेयफलातिशयावसायात्तत्फलं सर्वं समग्रमतिशयवच्चार्थवादसहिताद्विधेरवगतमिति कृत्वा न्यूनत्वासहिष्णुतया फलातिशयहेतुश्रद्धाविरहवैगुण्याशङ्कापादकपदार्थान्तरविधायकत्वेन विरुद्धामाचमनादिस्मृतिं बाधत इत्यर्थः ।

इयत्ताविरोध एव सूत्रं योजयति—परिमितेति । अङ्गशास्त्राणां यत्परिमाणम्, तदेवाङ्गानामित्यर्थः । क्रमकालेयत्तासाधारणपूर्वव्याख्यानापेक्षा वाशब्दः । प्रयोगविधिप्रमितप्रधानप्रत्यासत्त्याक्षिप्तप्रयोगशैघ्र्यविरोधं प्रधानप्रत्यासत्तिविरोधाभिधानेनार्थादुक्तमपीदानीं प्रयोगविधिना साक्षादपि प्रयोगशैघ्र्यावगमात्पदार्थान्तरानुष्ठाने तद् विरोध इति प्रकारान्तरेणाह—सहेति । उपसंहरति—तस्माविति ॥ ६ ॥

भा० प्र० –'न' ना अर्थात् यह सङ्गत नहीं है, "शास्त्र परिमाणत्वात्" = क्योंकि शास्त्र परिमाण अर्थात् वेदशास्त्र से उपदिष्ट कर्म रहता है । किन्तु सिद्धान्ती का यह मत ठीक नहीं है, क्योंकि वेद वचन विहित अनन्तर कर्तव्य कर्म रहता है । यह पूर्व पक्ष है ।

आशय यह है कि भाष्यकार के मत के अनुसार प्रत्यक्ष श्रुति विरुद्ध स्मृति अप्रमाण है—यह पूर्व अधिकरण में कहा गया है । प्रकृत में यह विचारणीय है कि वह कहाँ

प्रमाण है और कहाँ अप्रमाण है। स्मृतियों में कहा गया है कि "क्षुत आचमेत", "आचान्तेन कर्तव्यम्", एक शास्त्रोक्त कर्म के करने के वाद दूसरे कर्म को करने से पूर्व यदि क्षुत् (छीक) होने पर आचमन करना चाहिये अर्थात् आचमन पूर्वक कर्म करना चाहिए। श्रुति में कहा गया है कि "वेदं कृत्वा वेदिं करोति" वेद अर्थात् कुश के गुच्छे से निर्मित सम्मार्जनी कर वेदि = आहवनीय एवं गार्हपत्य इन दो अग्नियों के मध्य में चार अङ्गुल परिमाण भूमि में गड्ढा करे इस स्थल में वेद करने के बाद यदि छींक हो तब स्मृति से विहित आचमन का अनुष्ठान करे और इसके बाद वेदि करे या आचमन किए विना ही वेदि का निर्माण करे ? इस प्रकार के संशय होने पर सिद्धान्ती यदि यह कहते हैं कि प्रकृत में जब श्रुति के साथ स्मृति का विरोध नहीं है, तब स्मृति के वचन से श्रुति वचन का व्याकोप या बाधा नहीं है, अतः स्मृति से उपदिष्ट वचन अविरुद्ध या प्रमाण होने से अनुष्ठेय है, किन्तु यह सङ्गत सहीं है, क्योंकि, "वेदं कृत्वा वेदिं करोति", इस स्थल में श्रुति में प्रयुक्त कृत्वोपद में 'क्त्वा', प्रत्यय से आनन्तय अर्थ का बोध हो रहा है। अतः वेद के बाद वेदि का निर्माण करना होगा—यही वेदवचन के द्वारा अर्थ अवगत हो रहा है, किन्तु स्मृति वचन के अनुसार यदि वेद करने के बाद आचमन करके अनन्तर वेदि किया जाय तो श्रुति के द्वारा कथित आनन्तर्य क्रम का बाध होगा। इसलिए श्रौतक्रम का विरोध होने से स्मृति के द्वारा प्रतिपादित आचमन कर्तव्य नहीं है, क्योंकि स्मृति की अपेक्षा श्रुति बलवती होती है। यही पूर्वपक्षियों का आशय है।

इसी प्रकार "दक्षिणाचारेण कर्तव्यम्" दक्षिण हस्त से ही शास्त्रोक्त कर्म करे, यह स्मृति वचन श्रौत काल के साथ विरुद्ध होने से अनादरणीय है, क्योंकि, श्रुति में पूर्वाह्ण आदि काल नियमित है, किन्तु केवल दक्षिण हस्त से कर्म का अनुष्ठान किया जाय तो पूर्वाह्ण आदि श्रौतकाल के मध्य में कर्म का समापन नहीं होगा, अतः, दोनों हाथ से शास्त्रीय कर्मों का सम्पादन करना उचित है। क्योंकि; ऐसा करने से अतिशीघ्र कर्म का सम्पादन होने से श्रौतकाल का अतिक्रमण नहीं होगा। परिमाण के सम्बन्ध में इसी प्रकार समझना चाहिये। अत एव श्रुति संबोधित पदार्थ के = कर्म के समान श्रौत क्रम काल एवं परिमाण आदि के साथ विरोध होने पर भी स्मृति विहित कर्म अनुष्ठेय नहीं है ॥ ६ ॥

यह पूर्व पक्ष है।

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥७॥ सि०

**शा० भा०—अपि वेति पक्षव्यावृत्तिः। अगृह्यमाणकारणा एवंजातीयकाः प्रमाणम्। ननु क्रमकालौ विरुन्धन्ति ? विरुन्धन्तु। नैष दोषः। आचमनं पदार्थः, पदार्थानाञ्च गुणः क्रमः। न च गुणानुरोधेन पदार्थो न कर्तव्यो भवति। अपि च प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति। यदा पदार्थः प्राप्नोति, तदा क्रम**

**एव नास्ति, केन सह विरोधो भविष्यति इति। तथा यदि दक्षिणेन नाऽऽचर्यते, मा विरोधीदिति, तत्र कालानुरोधेन पदार्थो नाऽऽन्यथात्वमभ्युपगच्छेत्। प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः। अतो न कालानुरोधेन व्यथयितव्यः पदार्थः। अपि च शौचम्, दक्षिणाचारता, यज्ञोपवीतित्वम्, चैवंजातीयका अर्था व्यवधातारो न भवन्ति, सर्वपदार्थानां शेषभूतत्वात्। तस्मादाचमनादीनां प्रामाण्यम् ॥ ७ ॥**

भा० वि०—एवं श्रौतार्थबाधकतया विरोधे, विरोधाद्वाननुष्ठाने प्राप्ते सिद्धान्तयति– **अपि वेति**। तत्र विरोधादननुष्ठानमिति मतं व्यावर्तयितुं सूत्रावयवं व्याचष्टे—**अपि वेति**। अवशिष्टं व्याकरोति—गृह्यमाणेति। यस्मादपरिदृश्यमानलोभादिकारणाः आचमनादयोऽर्थाः, तस्मात्प्रमाणमनुष्ठेया इत्यर्थः। यद्यपि स्मार्तचमनाद्यनुप्रवेशे श्रौतक्रमादिबाधात् श्रुत्या सह स्मृतेर्विरोधः, तथापि हेतुदर्शनविशिष्टस्यैव विरोधस्याप्रामाण्यप्रयोजकत्वाद्विशेषणाभावे च विशिष्टप्रयोजकाभावेन तदप्रामाण्याभावाद्युक्तं तदर्थानुष्ठानमित्यभिसन्धिः। कारणाग्रहणे सति प्रयुक्तानि-शिष्टैरनुष्ठीयमानानि, प्रतीयेरन्-आश्रीयेरन् इति सूत्रार्थः। परिहारान्तरं वक्तुं चोद्यमुद्भावयति—**नन्विति**। विरुन्धन्ति एवंजातीयका इत्यनुषङ्गः, क्रतुमनुप्रवेश्यमाना आचमनादय इत्यर्थः। आचमनादीनां पदार्थतया प्राधान्यात्, क्रमादीनां च पदार्थधर्मतया गुणत्वात्, गुणानुरोधेन च प्रधानबाधासम्भवाद्युक्तमाचमनादीनामनुष्ठानमिति, परिहरति—**विरुन्धित्विति**। एतदुपपादयति - **आचमनमित्यादिना**। क्रम इति कालस्याप्युपलक्षणम्, न च कालस्य स्वतन्त्रपदार्थतया पदार्थधर्मत्वासंभवः। अनुष्ठेयपदार्थविच्छेदकतया तस्यापि तद्धर्मत्वादिति द्रष्टव्यम्।

एवं तावद्विरोधेऽप्याचमनादीमनुष्ठेयतां प्रतीयेरन्नित्येतदन्तस्य सूत्रवाक्यस्यार्थतया व्युत्पाद्येदानीं तेष्वदर्शनाद्विरोधस्येत्युक्तसूत्रावयवमनुषङ्गेणात्रापि योजयन् विरोधपूर्वपक्षं दूषयति—**अपि चेत्यादिना**। तत्र क्रमविरोधं तावन्निरस्यति—**प्राप्तानामिति**। विनियोगवचनवशेन हि पदार्थेषु प्राप्तेषु पश्चादनुष्ठानाङ्गतया क्रमोऽपेक्ष्यते अतः प्राप्तेषु पदार्थेषु पश्चात् क्रमः प्राप्तः, ततः किमत आह—**यदेति**। इति शब्दः क्रमनिराससमाप्तौ, कालविरोधं निरस्यति—**तथेति**। प्रधानप्रत्यासत्त्यादिरूपः कालो बाधितो मा भूदिति, यदि दक्षिणेनैव हस्तेन नाचार्येतेत्यर्थः। व्यथाबाधः अस्तु को दोषस्तत्राह—**प्रयोगेति**। न हि पदार्थानां उत्पत्तिविनियोगयोः कालापेक्षा, अपि तर्हि प्रयोगे कर्तव्यमित्युक्ते कदेत्यपेक्षा भवति। तेन प्रयोगाङ्गत्वात् कालोऽपि पदार्थसिद्धत्युत्तरकालीन इत्यर्थः। इतोऽपि तत्सिद्ध्युत्तरकालीन इत्याह—**पदार्थानामिति**। करणोप-

कारकतया विनियुक्तानां पदार्थानामवच्छेदक इति यावत्। पदार्थानामुपजीव्यत्वे फलितमाह—अत इति। निखिलाङ्गप्रधानोपकारकत्वाच्चाचमनादीनां न तैर्व्यवधानमित्याह–अपि चेति। शौचं-शुद्धता, आचान्तता यज्ञोपवीतत्वं चेत्यस्यानन्तरमिति शब्दमध्याहृत्यैवं जातीयकपदेन सम्बन्धनीयम्। सर्वोपकारकत्वमेवं जातीयकपदेन सूचितम्, तेन यदा वेदं कृत्वा वेदिमकृत्वापि क्षुत आचामति, तदा स वेदिमेव करोति। अनाचमने वेदिकरणस्यैव वैगुण्यापातादित्याशयः, तदनेन तेष्वाचमनादिषु क्रतुमनुप्रवेश्यमानेषु श्रौतक्रमादिभिः विरोधस्यादर्शनादिति सूत्रावयवो व्याख्यातः, यस्मादेवमविरोधः।

विरोधेऽपि वा पदार्थतयाचमनादीनां प्राबल्यं तस्मात् कर्तव्यानीति निगमयति—तस्मादिति॥ ७॥

त० वा—तेष्वदर्शनाद्विरोधस्येति वा समाप्तिः। अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेरनुपयुज्यमानत्वात्, इह च प्रक्रान्तविरोधाभावस्यावश्यवचनीयत्वात्। उपयोगसद्भावेऽपि च काकाक्षिवदनुषङ्गेण, तन्त्रेण चोभयसम्बन्धात्।

अपि वा कारणं दृष्टं यस्मादेषु न गृह्यते।
तस्मान्नाऽऽचमनादीनां क्रतुश्रुतिविरुद्धता॥ २८७

विरोधत्याजितश्रुतिविरुद्धता। विरोधत्याजितश्रुतिमूलस्य हि स्मरणस्य यस्य मूलान्तरमिदं संभवदुत्प्रेक्षामात्रेणोपप्लवते, तत्राल्पेनैव प्रयासेन निराशङ्कप्रमाणत्वं निश्चीयते।

यत्र तूत्प्रेक्षयाऽप्यन्यत्कारणं नावलम्ब्यते।
अत्यन्तानन्यमूलत्वाच्छ्रुतितस्तत्प्रमाणता॥ २८८

न वाऽऽचमनादिस्मृतेः कामक्रोधलोभद्वेषमानलज्जादिकारणं किंचित्संभाव्यते, यन्मूलत्वेन श्रुतिमूलत्वमपह्नूयेत।

अनन्यमूलिकायां च श्रुतौ मूलेऽवधारिते।
विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते॥ २८९

इयत्ताक्रमकालाश्च श्रौतत्वाद्बलवत्तराः।
पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः॥ २९०

ननु पूर्वभावित्वात्प्रमाणबलाबलमेव प्रमेयबलाबलाज्ज्यायस्त्वेन प्रतिभाति।

उच्यते—नैव तावच्छ्रुतिस्मृत्योः स्वरूपेण विरुद्धता।
बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा॥ २९१

प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति।

तद्यस्यामेव वेलायां विरोधो दृश्यते तयोः।
प्रमेययोः स्वरूपस्थं तस्मादेव बलाबलम्॥ २९२

येषां पदार्थधर्मत्वाद्दौर्बल्यं पूर्वनिश्चितम् ।
न तेषां श्रुत्यवष्टम्भात्तत्पश्चादपगच्छति ॥ २९३

पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम् ।
न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥ २९४

नित्यमेवाप्रमाणं यत्तदेवं बाधमर्हति ।
आपेक्षिकाप्रमाणं तु स्यात्प्रमाणमपेक्षया ॥ २९५

न च प्रमेयदौर्बल्यबलीयस्त्वनिबन्धनम् ।
प्राप्तं स्मृतिप्रमाणत्वं प्रमाणस्थेन बाध्यते ॥ २९६

न च प्रमेयदौर्बल्ये सत्यपि श्रुतिबाधनम् ।
तावता मन्दतेजस्त्वात्स्मृतिस्तां नैव बाधते ॥ २९७

एतदेव श्रुतेः पार्श्वाद् बहु यत्र स्मृतिर्वृथा ।
महास्मृत्याऽपि या काचिन्न शक्या बाधितुं श्रुतिः ॥ २९८

युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्ययोः ।
इह तु द्वयमप्येतन्नास्ति तेनाविरुद्धता ॥ २९९

कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते ।
सुजघन्यप्रमाणोऽपि पदार्थः पूर्वमश्नुते ॥ ३००

प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्षते ।
यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुध्यते ॥ ३०१

परिमाणमपि त्वार्थमविस्मरणसिद्धये ।
स्वयमालोच्यते प्राज्ञैः स्मार्तैः सह तदिष्यते ॥ ३०२

न केनचित्प्रमाणेन पदार्थेयत्ता परिच्छिद्यते। तत्र यदि तेन विनाऽन्ये समस्तपदार्थस्मृतिहेतवो न स्युः, तत एतदप्येकं कारणमिति परिमाणमपि स्थाप्येत। तस्यामपि त्ववस्थायां यथा श्रौतमात्रपरिमाणमसमाप्य, समाख्यापर्यन्तप्रापितपदार्थगतपरिमाणावधारणमाश्रीयते, तथा स्मृत्याचारपर्यन्तावगतपरिमाणमाश्रयिष्यत इति निर्दोषम् ।

## कालस्याङ्गत्वोपपादनम्

कालोऽपि च प्रयोगाङ्गं सर्वान्ते सोऽपि गृह्यते ।
स्मार्तैः सह ससाहित्यमाशुत्वं वा प्रपत्स्यते ॥ ३०३

कालो ह्ययं प्रधानस्य सर्वाङ्गसहितस्य यः ।
अङ्गैरविप्रकृष्टत्वमीदृशस्यैव चोद्यते ॥ ३०४

तस्माद्यत्किंचनप्रमाणकसर्वपदार्थप्राप्त्युत्तरकालापेक्षितसम्बन्धः कालोऽपि नैव सर्वोपसंहारविरोधीति तेषु क्रमकालपरिमाणेष्वदर्शनाद्विरोधस्येत्युच्यते ।

## विरोधो नास्तीतिकथनं

यद्वा तेष्वाचमनादिषु क्रियमाणेष्वदर्शनाद्विरोधस्येति सूत्रार्थयोजना । अपि च—

शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता ।
सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम् ॥ ३०५

अतदङ्गेन हि तुल्यकक्षेण व्यवधानं भवति, न सर्वपदार्थेन ।

वेदं कृत्वा यदा वेदिमकृत्वाऽऽचामति क्षुते ।
वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥ ३०६

वेदिरेव ह्यनाचम्य कुर्वतो विगुणी भवेत् ।
तामेव सगुणां कर्तुं शुद्ध्या न व्यवधास्यते ॥ ३०७

इममेवार्थमभिप्रेत्य भाष्कारेणोक्तं न **चैवंजातीयका अर्थाः पदार्थानां व्यवधातारो भवन्तीति** । इतरथा ह्यङ्गप्रधानार्थत्वेऽनाश्रीयमाणे शून्यहृदयवचनमेवैतत्स्यात् ।

तस्मादाचमनादीनां क्रतुभिः संग्रहे सति ।
पश्चात्प्राप्तक्रमेयत्ताकालशास्त्रविरोधिता ॥ ३०८

### भाष्यकारोक्तोदाहरणाक्षेपः

नन्विदं यज्ञोपवीतमुदाहर्तव्यम् । दर्शपूर्णमासदिषु **'उपव्ययते देवलक्ष्ममेव तत्कुरुते (२-५-११)** इति क्रत्वङ्गप्रत्यक्षविधानात् । तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसम्बन्धः, अध्यापनाध्ययनसम्बन्धश्च श्रूयते । **प्रसृतेन वै यज्ञेन देवा स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन् । प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यद्वै किं च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या २-२—इति'**

तथाऽऽचमनविधिरपि 'दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य, द्विः परिमृज्य, दर्भाणां महदुपस्तीर्योपस्थं कृत्वा, प्राङ्मुख उपविश्य, स्वाध्यायमधीयीत' इति । यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते तथाऽपि वेदोच्चारणसंबन्धात्तदङ्गत्वेनापि तावज्ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात्तदङ्गं भवति । तथा च **"न सोमेनोच्छिष्टा भवन्ति"** इति प्राप्ताचमनप्रतिषेधार्थमेवावधार्यते ।

दक्षिणाचारत्वं तु—

यत्राऽऽहृत्य विधानेन स्यात्सव्याञ्जलिचोदना ।
तस्मादेव निवर्तेत नान्यत्राऽऽशङ्क्यतेऽपि तत् ॥ ३०९

**"यथा वै दक्षिणः पाणिरेवं देवयजनम्"** इति प्रागुदक्प्रवणविधिपरे वाक्ये देवयजनवद्यज्ञाङ्गत्वौचित्यादुपमानमवकल्पते । तेन नात्रैकमपि विरोधबाधशङ्कायोग्यमित्यनुदाहरणानि । तस्मान्नैव तदधिकरणान्तरम् ।

वेदाविरुद्धशाक्यादिवचसामप्रामाण्यनिरूपणम् ।

सूत्राणि तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैव व्याख्यातव्यानि । यर्त्तहि वेदविहितं न बाधते, शिष्टान्वा वेदविदो न कोपयति । विहारारामभण्डलकरण-वैराग्य-ध्यानाभ्यासाऽहिंसा-सत्यवचन-दम-दान-दयादि, तद्बुद्धादिभाषितं प्रमाणेनाविरुद्धमिति चेत् ?

**न । शास्त्रपरिमाणत्वात् ।** परमितान्येव हि चतुर्दशाऽष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि, वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहिता-पुराणशास्त्रशिक्षा-दण्डनीतिसंज्ञकानि, । न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृताः गृहीता वा ।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् ।
यदन्यत्क्रियते तस्य धर्मं प्रत्यप्रमाणता ॥ ३१०

तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयम्, अन्यकविकृतं वा श्लोकम्, सूत्रं वोच्चार्य मानवादिप्रायश्चित्तं दद्यात् कश्चिदपि धर्मार्थं प्रतिपद्येत ।

वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥ ३११
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥ ३१२

तथा च **"मनोर्ऋचः सामिधेन्यो भवन्ति"** इत्यस्य विधेर्वाक्यशेषे श्रूयते **"मनुर्वै यत्किंचिदवदत्तद्भेषजं भेषजतायै"** इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ।

न वैतच्छ्रुतिसामान्यमात्रं नित्येऽपि संभवात् ।
यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा ॥३१३
प्रतिमन्वन्तरं चैवं [1]स्मृतिरन्या विधीयते ।
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ॥ ३१४

---

१. श्रुतिरन्येति पाठः ।

तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः ।
तदुक्तिज्ञापनाद्वेदो नानित्योऽतो भविष्यति ॥ ३१५

प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥ ३१६

उक्तं च—यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भाति युगादिषु ॥ इति । ३१७

इतिहासपुराणं च कृत्रिमत्वेन निश्चिते ।
यथाऽप्यकृत्रिमे वेदे तद्विद्यात्वेन संमतम् ॥ ३१८

एवं ह्युपनिषत्सूक्तम्—"**ऋग्वेदं भगवोऽध्येमि, यजुर्वेदम्, सामवेदम्, अथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चमम्**" (छा० उ० ७.१ इति) । तेन प्रतिकल्प-मन्वन्तर-युगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते, तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन संमतानि। तथा च ऋग्वेदादिविहितयज्ञाङ्गभ्रेषप्रायश्चित्तविशेषानभिधाय **'यज्ञविज्ञात इति ।'** प्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते । अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वादविज्ञातमूलत्वेनानभिधेयमेव स्यात् । यदि च स्मर्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातृवेदविशेषपूर्वकत्वेनापि स्थितानां प्रामाण्यं नाऽऽश्रीयेत, तथा सति नैवाविज्ञातमूलं किंचिद्यज्ञे क्रियत इति, तद्विनष्टप्रायश्चित्तविधिर्नैवोपपद्येत ।

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥ ३१९

यथैवाऽन्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् ।
शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम् ॥ ३२०

तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ ३२१

स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥ ३२२

यथा कृतककर्पूरसुवर्णादिषु दीयते ।
यद्बीजं तदपि व्यक्तमग्राह्यत्वात्प्रलीयते ॥ ३२३

तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमप्यहिंसादि श्वदृतिनिक्षिप्तक्षीरवदनुपयोग्यविश्रम्भणीयं च । तन्मात्रोपलब्धं भवतीत्यवश्यम्, यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते, तावदग्राह्यं भवति ।

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽत्र धार्यते ।
तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकम् ॥ ३२४

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेन नापेक्षितव्यमिति ।

सदाचारप्रामाण्याधिकरणम् ।

यत्त्वेतत् । **'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्'**, इति । सूत्रम् ।

अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्धयर्थं विचार्यते । तद्विपरीतसंकीर्णव्यवहारिषु शिष्टेष्वपथ्यकारिवैद्यातुरवदविस्रम्भणीयचरितत्वात्संभाव्यमानवेदमूलत्वाच्च धर्मसंशयं दर्शयित्वा **"धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यम्"** इति पूर्वः पक्षः क्वचिच्च **"विरोधे त्वनपेक्ष्यम्"** इत्येतन्न्यायानुसारेण । सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः, साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च । प्रजापतेस्तावत्प्रजापतिरुषसमभ्यैत्स्वां दुहितरमित्यगम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रमः । इन्द्रस्यापि तत्पदस्थस्य च नहुषस्य परदारानियोगाद्धर्मव्यतिक्रमः । तथा वसिष्ठस्य पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम् । विश्वामित्रस्य चाण्डालयाजनम् । वसिष्ठवत्पुरूरवसः प्रयोगः । कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेष्वपत्योत्पादनप्रसङ्गः । भीष्मस्य च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम् । अपत्नीकस्य च रामवत्क्रतुप्रयोगः । तथाऽन्धस्य धृतराष्ट्रस्येज्या पाण्डुर्वजितैर्धनैरित्यनधिकृतक्रिया । तथा युधिष्ठिरस्य कनीयोऽर्जितभ्रातृजायापरिणयनमाचार्यब्राह्मणवधार्थमनृतभाषणं च । वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्, उभौ मध्वासवक्षीबाविति सुरापानाचरणम् ।

**अद्यतनानामाचाराक्षेपः**

अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनाद्युदीच्यानाम् । मातुलदुहितृुद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीन्युभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि त्वनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति, नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः ।

किं च—के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः ।
इतीतरेतराचीननिर्णयत्वादनिर्णयः ॥ ३२५

## आत्मतुष्टेः प्रामाण्याक्षेपः

ननु—सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम् ।
आत्मतुष्टिः स्मृताऽन्या तैर्धर्मे सा चानवस्थिता ॥ ३२६

यथाभ्यासं ह्याशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति ।

तथा हि—कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि ।
शाक्यस्येव कुहेतूक्तिर्वेदब्राह्मणदूषणे ॥ ३२७

तथा—पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः ।
तेभ्य एव हि यज्ञेभ्यः शाक्या क्रुध्यन्ति पीडिताः ॥ ३२८

तथा—शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।
स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥ ३२९

अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते ।

ततश्चानवस्थितत्वाद्यथैवाऽऽत्मनस्तुष्टिरेव चेत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यम् । एवमाचारश्चैव साधूनामित्येतदपीति ।

स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम् ।
वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः ॥ ३३०

स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय । अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुः, न शिष्टाः ।

न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते ।
यदि च स्यात्परोक्षाऽपि स्मर्येतैव ह्यसौ ध्रुवम् ॥ ३३१

तस्मान्निर्मूलत्वादपेक्षाणि शिष्टाचरणानीति प्राप्ते ।

## सिद्धान्तः

अभिधीयते—"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।"

दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
प्रयुक्तानि प्रतीयेरन्धर्मत्वेनेह तान्यपि ॥ ३३२

शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥ ३३३

धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते ॥ ३३४

प्रदानानि जपो होमो मातृयज्ञादयस्तथा ।
शुक्रध्वजमहोयात्रा देवतायतनेषु च ॥ ३३५
कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः ।
प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥ ३३६

अनग्निपक्वमाघसप्तमीपौर्णमासीफाल्गुनोप्रतिपद्वसन्तोत्सवादीनां नियमक्रिया-प्रमाणं न शास्त्रादृते किंचिदस्ति ।

स्मृतिकाराश्चाऽऽचारश्चैव साधूनाम्, **देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणमिति (आपस्तम्ब-धर्म-सूत्रम्)**, वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथाऽनध्यायाधिकार ऊर्ध्वं भोजनादुत्सव इति देशनगरोत्सव-प्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते प्रेङ्खमारुह्य होता शंसतीत्येतद्वाक्यशेषे श्रूयते । **यदा वै प्रजा मह अविशन्ति, प्रेङ्खं तर्ह्यारोहन्तीति** । महःशब्द-वाच्योत्सवप्रसिद्धिरनूदिता ।

यत्तु परिमितशास्त्रप्रमेयत्वाद्धर्माधर्मयोरिह च तदसंभवादित्युक्तम् । तद्वेद-मूलत्वानुमानात्पूर्ववदेव प्रत्याख्येयम् । न च स्मृतिर्निर्मूला, विस्तरवचनानामपि प्रपाठकमात्रेणोपसंहारात्, किमुत संक्षेपवचनस्य । शक्यं च स्मृत्यनुरूपमेव वेद-वचनमनुमातुम् ।

तथा हि—शिष्टैराचर्यमाणानां सतां गोदोहनादिवत् ।
फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥ ३३७

न हि तदेवैकं शास्त्रप्रमाणकम्, यस्य स्वरूपमपि तत एवावगन्तव्यम् । अनेका-कारस्य हि प्रमेयस्य कश्चिदेवाऽऽकारः केनचित्प्रमाणेन प्रमीयते । तत्र प्रत्य-क्षाद्यवगतेऽप्याचारस्वरूपे दधिगोदोहनादिवत्फलसंबन्धः शास्त्रेणावगम्यते । यागा-दिष्वपि च नैव स्वरूपज्ञानेन शास्त्रमपेक्षितम्, फलसंबन्धमात्रस्यैवातीन्द्रियत्वेन तदपेक्षितत्वात् । अतो न नामोपलक्षणमन्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः सर्वकालं तु शिष्टव्यवहार-शास्त्रयोरवियोगाद् व्यवहारादेवोद्धृत्य केचि-त्स्वर्गादिसाधनत्वेन नियम्यमानः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञा-यन्ते । तेषां चाऽऽर्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणं वेदेनापि सरस्वतीवि-नशनप्लक्षप्रस्रवणादिवदुपात्तमिति शक्यमनुमातुम् ।

**अन्योन्याश्रयत्वशङ्कानिरासौ**

ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा ।
शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ॥ ३३८
नैव तेषां सदाचारनिमित्ता शिष्टता मता ।
साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः ॥ ३३९

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति । तदपि स्वर्ग्यत्वाद्धर्मरूपमेव ।

तद्यथा शुश्रुवान्विद्वाननूचानश्च वैदिकः ।
पुनस्तल्लक्षितो वेदे तेनैवाध्ययनादिषु ॥ ३४०

तेनाहोरात्रपौर्वापर्यवदनादित्वाद्वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः । स्मृतिरप्याचारं वेदवचनं वोपलभ्याभ्यनुज्ञानायैव प्रवृत्तेत्यदोषः ।

यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम् ।
प्रत्यक्षवेदमूलेऽपि तद् दृष्टेस्तदकारणम् ॥ ३४१

वेदेऽपि हि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्त इति, न तावता वेदमूलत्वाभावः ।

यानि तु म्लेच्छादिसमानानि नियतानियताक्रियान्तराण्यर्थसुखसाधनकृषिसेवा-वाणिज्यादीनि मिष्टान्नपान-मृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि, तेषु नैव कस्यचिद्धर्मत्वाशङ्काऽस्तीति न तत्सामान्यतोदृष्टेनेतरनिराक्रियोपपत्तिः । केषांचिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः ।

किं तु—देवब्राह्मणपूजादि यत्तेषामपि किंचन ।
तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥ ३४२

लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते ।
कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि संगतः ॥ ३४३

तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते ।
स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥ ३४४

### आत्मतुष्टेर्धर्मे प्रामाण्यसाधनम्

एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥ ३४५

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीत्याश्रित्योच्यते—"यदेव किंचनानूचानोऽभ्यूहत्यार्षं तद्भवतीति" । वैदिकवासनाजनितत्वाद्वेद एव स भवति ।

### आत्मतुष्टेः प्रामाण्योपसंहारः

तथा हि—यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥ ३४६

एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ इति । ३४७

## अनेकैर्दृष्टान्तैरात्मतुष्टेः प्रामाण्यसमर्थनम्,

बहुदिनाभ्यस्तधर्मव्याप्तात्मनो हि न कथंचिद्धर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति, धर्मत्वेनाभ्यनुज्ञायते ।

यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता ।
पुण्यकृद्ध्यानवत्तस्मादाचारेष्वपि सा तथा ॥ ३४८

तथा वा वरदानादौ देवताराधनोद्भवे ।
तद्वक्ष्यसि स मन्त्रस्ते विषघ्न इति मन्त्रिते ॥ ३४९

लोकः स्मरति तं मन्त्रं विषापहरणादिषु ।
तथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम् ॥ ३५०

दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ।
यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत् ॥ ३५१

तत्संपर्कपवित्रत्वात्सेव्यते पुण्यकारणम् ।
तथाऽऽचारात्मतुष्ट्यादिधर्म्यं धर्ममयात्मनाम् ॥३५२

वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ॥ ३५३ इति ।

## पूर्वपक्षे उदाहृतानां क्रमेण परिहारवर्णनम्

यत्तु प्रजापतिरुषसमभ्यैत्स्वां दुहितरमहल्यायां मैत्रेय्यामिन्द्रो जार आसीदित्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति ।

तत्रोच्यते—

श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥ ३५४

यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति ॥ ३५५

प्रजापतिस्तावत्प्रजापालनाधिकारादादित्य एवोच्यते । स चारुणोदयवेलायामुषसनुद्यन्नभ्यैत्, सा तदागमादेवोपजायत इति, तद्दुहितृत्वेन व्यपदिश्यते । तस्यां चारुणकिरणाख्यबीजनिक्षेपात्स्त्रीपुरुषयोगवदुपचारः । एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैवाऽहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वाज्जीर्यंत्यस्मादनेनैवोदितेनेत्यादित्य एवाहल्याजार इत्युच्यते । न तु परस्त्रीव्यभिचारात् ।

नहुषेण पुनः परस्त्रीप्रार्थननिमित्तानन्तरकालाजगरत्वप्राप्त्यैवाऽऽत्मनो दुराचारत्वं प्रख्यापितम्। शच्याश्च पतिभक्तिनिमित्तपुण्यातिशयजनिततन्निराकरणावाप्तप्रभावलाभः ख्यात एव।

वसिष्ठस्यापि यत्पुत्रशोकव्यामोहचेष्टितम्।
तस्याप्यन्यनिमित्तत्वान्नैव धर्मत्वसंशयः॥ ३५६

यो हि सदाचारः पुण्यबुद्ध्या क्रियते, स धर्मादर्शत्वं प्रतिपद्येत। यस्तु काम-क्रोध-लोभ-मोह-शोकादिहेतुत्वेनोपलभ्यते, स यथाविधि-प्रतिषेधं वर्तिष्यते। ते। विश्वामित्रस्यापि यद्रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितम्, तत् सर्वं बलवतः पथ्यमित्यनेन न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयत उत्तरकालं वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि। मन्दतपसां गजैरिव महावटकाष्ठादिभक्षणमात्मविनाशायैव स्यात्।

द्वैपायनस्यापि, **"गुरुनियोगादपतिरपत्यलिप्सुर्देवराद् गुरुप्रेरितताद्दृतुमतीयात्"** इत्येवमागमान्मातृसंबन्धभ्रातृजायापुत्रजननं प्राक्कृत-पश्चात्करिष्यमाणतपोबलेन नातिदुष्करम्। अन्योऽपि यस्तादृक्तपोबलो निर्वहेत् स कुर्यादेव।

रामभीष्मयोस्तु स्नेहपितृभक्तिवशात् विद्यमानधर्ममात्रार्थदारयोरेवं साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोर्याग्सिद्धिः, हिरण्मयसीताकरणं लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम्।

भीष्मश्च— भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्॥ ३५७

इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रनृणत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीदित्यर्थापत्त्यानुक्तमपि गम्यते।

यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान्।
शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्ष्यसौ कथम्॥ ३५८

धृतराष्ट्रोऽपि व्यसानुग्रहादाश्चर्यपर्वणि पुत्रदर्शनवत्क्रतुकालेऽपि दृष्टवानेव। शापानुग्रहसमर्था महर्षयः श्रूयन्ते। तद्यथैव तद्वचनादसावन्धो जातो विज्ञायते, तथा यज्ञानुष्ठानवचनात्तावति काले दृष्टवानित्यर्थापत्त्या सुज्ञानम्।

यद्वा, "यजदेवपूजासंगति करणदानेषु" इति दानार्थ एवायं यजिर्भविष्यति। क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते। तत्कारणात्क्रतुक्रियोपचारः।

या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता।
साऽपि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता॥ ३५९
यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता।
सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति॥ ३६०

अत एव चोक्तम्—

इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषः ।
महानुभावा किल सा सुमध्यमा बभूव कन्यैव गतेऽहनि ॥ इति ।

न हि मानुषीष्वेवमुपपद्यते । तेनातीतमानुषमित्युक्तम् । अत एव वासुदेवेन कर्ण उक्तः 'षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति' इति । इतरथा हि कथं प्रमाणभूतः सन्नेवं वदेत् ।

अथ वा बह्व्य एव ताः सदृशरूपा द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते ।

यद्वा नार्यर्जुनस्यैव केवलस्य भविष्यति ।
साधारणा प्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता ॥ ३६१

यथा युधिष्ठिरोपदेशात्सभामध्यमानीयमाना सहसैव रजस्वलावेषं सुपुत्रकस्य धृतराष्ट्रस्यायश उत्पादयितुमात्मानं प्रख्यापयितुं द्रौपदी कृतवती, तथैव केवलार्जुनभार्याया एव सत्याः श्रीत्वं च जनेनाविदितं परस्परं संघाताविशयं च भेदप्रयोगानवकाशार्थं दर्शयितुम्, साधारण्यप्रख्यापनमित्येवमादिविकल्पैः सुपरिहरत्वाद्रागलोभकृतव्यवहारस्य च शिष्टैरेव धर्मत्वेनापरिग्रहस्योक्तत्वादनुपालम्भः ।

तथा द्रोणवधाङ्गभूतानृतवादे 'प्रायश्चित्तं कामकृतेऽप्येके' इत्येवमन्तेऽप्यश्वमेधः प्रायश्चित्तत्वेन कृत एवेति, न तस्य सदाचारत्वाभ्युपगमः ।

यत्तु वासुदेवार्जुनयोर्मद्यपान-मातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्तम्, तत्रान्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत ॥ इति । ३६२

मधु-सीध्वोस्तु क्षत्रियवैश्ययोर्नैव प्रतिषेधः, केवलब्राह्मणविषयत्वात्, मद्यं ब्राह्मणस्य' इति वचनात् ।

यदप्येतत्—गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥ इति । ३६३

एतदपि ब्रह्मवादिशब्दस्य तच्छील-तद्धर्म-तत्साधुकारित्वनिमित्तत्वात्प्रवचनाश्रयणेन ब्रूञ्वदत्योरेकार्थत्वात्प्रब्रूयाद् ब्राह्मणस्त्वेषामिति नियमाद्यस्यैव प्रवचनम्, स एव तच्छीलः तद्धर्मः तत्साधुकारी वा भवति । तस्माद् ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाङ्गनिन्दार्थवादेऽभिहितम् ।

अकार्यमन्यत्कुर्याद्धि ब्राह्मणो मदमोहितः ॥ इति ।

### सुरानिषेधे उक्तस्यार्थस्य संक्षेपः

तस्मादेतदुक्तं भवति यथैवैकान्नसुरा त्रयाणामप्यपेया, तथा सर्वा ब्रह्मवादिभिरपेयेति । इतरथा यथैवैकेति च, ब्रह्मवादिभिरिति चोभयमप्यनर्थकमेव स्यात् । श्लोकान्तनिर्देशेनैव वर्णत्रयसम्बन्धलाभात् । तेनोभौ मध्वासवक्षीबावित्यविरुद्धम् ।

### लिङ्गोपन्यासः

तथा चान्यार्थदर्शनमभ्यनुज्ञानवचनम् । **'यन्माल्यमासीत्तत्पश्चात्पर्यौहत, सुरा वै माल्यम्, ततो राजन्यमसजत, तस्माज्ज्यायाश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चाऽऽसते । पाप्मा वै माल्यम् । तस्माद् ब्राह्मणः सुरां न पिबेत्पाप्मना न संसृज्या इति, तदेतदेतत्क्षत्त्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्ति, य एवं विद्वान्सुरां पिबति' इति** । मधुसीधुविवक्षयैतत् ।

### मातुलदुहितृपरिणयस्य समाधानम्

यत्तु मातुलदुहितृपरिणयनं तयोस्तन्मातृष्वस्तीयादिसम्बन्धव्यवधानेऽपि भ्रात्रादिव्यवहारादविरुद्धम् । यद्यपि वासुदेवस्वसेति सुभद्रा ख्याता, तथाऽप्युत्पत्तौ बलदेववासुदेवयोरेकानंशायाश्च निजत्वान्व्याख्यानान्मातृष्वस्त्रीया सुभद्रा तस्य मातृपितृष्वस्त्रीया दुहिता वेति परिणयनाभ्यनुज्ञानद्विज्ञायते ।

वासुदेवाङ्गजाया च कौन्तेयस्य विरुध्यते ।<br>
न तु व्यवेतसम्बन्धमभवे तद्विरुद्धता ॥ ३६४

येन ह्यन्यत्रैवमुक्तम्—

मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः ।<br>
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ ३६५<br>
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ इति ।

स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्तयिष्यति । एतेन रुक्मिणीपरिणयनं व्याख्यातम् ।

### आधुनिकानामपरिहारोपपादनम्

यत्त्वद्यतनानामाहिच्छत्रकमाथुरब्राह्मणीनां सुरापानादि दाक्षिणात्यानां मातुलदुहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम् ।

तत्र केचित्तावदाहुः । स्मृत्याचारयोरितरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वाद्विहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणाददोष इति । तत्तु वक्ष्यमाणबलाबलविभागादयुक्तम् ।

अन्ये त्वेवमाहुः—

सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया ।
आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ ३६६
येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः ॥ ३६७

तथा मनुनाऽप्युक्तम्—

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥ ३६८

येषां तु यः पित्रादिभिरेवार्थो नाऽऽचरितः स्मृत्यन्तरप्रतिषिद्धश्च ते तं परिहरन्त्येव । अपरिहन्तो वा स्वजनादिभिः परिह्लियन्ते । ननु गौतमेनाऽऽम्नायविरुद्धानामाचाराणामप्रमाण्यमुक्तम् ।

आह—

यदि वेदविरोधः स्यादिष्येतैवाप्रमाणता ।
स्मृतिराम्नायशब्देन न तु वेदवदुच्यते ॥ ३६९

न त्वेदपि युक्तं स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात् । स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तम् 'आम्नायः स्मृतिधारकः' इति । ग्रन्थकारगतायाः स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधारणार्थत्वेनोक्तः । ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम् । आपस्तम्बवचनं तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रयच्छता निराकृतम् । दृष्टकामादिहेत्वन्तरदर्शनान्न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः । आह केन वा ब्राह्मणीनां सुरापानं प्रतिषिद्धम् ?

उच्यते—तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ इत्यनेन

**पुंलिगस्य विवक्षा अस्मिन्न वेति विचारः**

ननु पुंलिङ्गनिर्देशात्स्त्रीणां न प्रतिषिध्यते ।
सुरापानमतो मात्र स्मृत्याचारविरुद्धता ॥ ३७०
उच्यते—हननप्रतिषेधेऽपि भवेत्पुंस्त्वं विवक्षितम् ।
तथा पुंस्त्ववदेकत्वविवक्षाऽपि प्रसज्यते ॥ ३७१
अहत्वा कंचिदेवैकं ततश्च स्यात्कृतार्थता ।
एकेन च सुरापानेऽर्वजिते पूर्ववद्भवेत् ॥ ३७२
आह यत्तावदेकत्वविवक्षागतमुच्यते ।
प्रत्येकव्यक्तिसंबन्धाज्जातेर्वा तन्न दुष्यति ॥ ३७३

एकैकस्या एव हि ब्राह्मणव्यक्तेर्यथाप्रसक्तवधपानयोः प्रतिषेधात्। विवक्ष्यमाणमपि तावदनूद्यमानत्वादन्नक्रियाविशेषणं वा संभवति, किमुत यदा जातिगतैकत्वानुवाद एवायं विज्ञायते। आह। हननप्रतिषेधे कर्मभूतस्य ब्राह्मणस्योद्दिश्यमानत्वात्सुरापाने च कर्तृत्वेनोपादीयमानत्वात्स्वर्गकामौदुम्बरीसंमानार्थयजमानवत्तुल्यविवक्षाविवक्षयोरप्रसङ्गादुदाहरणवैषम्यम्।

तथा हि—यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः।

ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधीयते॥ ३७४

प्रतिषेधविधिपरो हि विधायकः शुद्धवधप्रतिषेधासंभवाद् ब्राह्मणजातिमात्रविशिष्टवधप्रतिषेधं विधाय निवृत्तव्यापारो यदि लिङ्गमपरं ब्राह्मणे वधे प्रतिषेधं वा विदध्यात्, ततः प्रत्ययावृत्तिलक्षणवाक्यभेदप्रसङ्गः।

### विधिप्रतिषेधयोर्नामात्यन्तभेद इति वादिनां मतम्

येषां तु विधिप्रतिषेधौ नामात्यन्तभिन्नौ वेदवाक्यार्थौ, तेषां प्रत्ययसम्बन्धानुगृहीतशक्तिरभावमात्राभिधानादभ्यधिकलब्धव्यापारो नञ्विध्यर्थमपि द्वेषाद्यर्थप्राप्तं पूर्वोक्तन्यायविवक्षितब्राह्मणविशिष्टहननाविशिष्टं चानूदितं प्रतिषिध्य चरितार्थो न लिङ्गमपरं ब्राह्मणवधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुमिति, श्रूयमाणमपि लिङ्गप्रतिषेधं प्रत्यनुपयुज्यमानत्वादविवक्षितं भवति।

### मतभेदेन वाक्यार्थवर्णनम्

एषा ह्यत्र वचनव्यक्तिर्यत्—क्रोधादिवशेन ब्राह्मणं हन्यात्, ब्राह्मणो वा हन्तव्यस्तन्नेति। विध्येकत्वपक्षे पुनरीदृशी वाक्ययोजना—यद् ब्राह्मणहननं तन्न कुर्यादिति, यो वा ब्राह्मणस्तं न हन्यादिति ब्राह्मणविशिष्टहननप्रतिषेधविधिः शुद्धोद्दिष्टब्राह्मणविषयवधप्रतिषेधविधिर्वेति।

सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम्।

न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये विवक्षितुम्॥ ३७५

ब्राह्मणः सुरां न पिबेत्, न पेया ब्रह्मवादिभिरिति निमित्त-देश-काल-फलसंस्कार्यानुपादेयपञ्चकव्यतिरेकादेकत्राऽऽख्यातप्रत्ययोपात्तगुणीभूतोपादीयमानसंख्यापरिच्छेद्यत्वयोग्यसाधनांशविशेषणत्वेनोपादानात्, इतरत्र च तृतीयाविभक्तिश्रुतिवचनं विवक्षितलिङ्गस्यैव प्रतिषेधकमिति दर्शयितव्यम्।

अतश्चाप्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते।

सुरापानमहिच्छत्रब्राह्मण्यस्तेन कुर्वते॥ ३७६

## उद्देश्यविशेषणस्याविवक्षोपपादनम्

नैतदेवमिहाप्येतत्पुंस्त्वं नैव विवक्ष्यते ।
ब्राह्मणस्यानुवाद्यत्वात्तद्वधप्रतिषेधवत् ॥ ३७७

नोपादेयत्वमेवैकं कारणत्वेन संमतम् ।
विशेषणविवक्षायाः कारणं हि महद्विधिः ॥ ३७८

अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते ।
तत्रानाकाङ्क्षितं नान्यद्विधेयेभ्यो विधीयते ॥ ३७९

यदि हि ब्राह्मणः सुरां पिबेदित्ययमवान्तरवाक्यार्थः प्राक्प्रतिषेधसम्बन्धाद्विधिबुद्धिमवस्थापयेत् ततो गुणत्वोपादेयत्वविधिसमवायान्न ब्राह्मणपदे किंचिदविवक्षितं नाम स्यात् ।

यतस्तु रागमोहादेः सुरापानं प्रसज्यते ।
ब्राह्मणादेरतस्तस्मिन्न कश्चिद्विधिसंभवः ॥ ३८०

प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता ।
नावान्तरविधेः शक्तिः प्रादुरस्ति कथंचन ॥ ३८१

तेनेहापि यत्सुरां ब्राह्मणः पिबेन्नेति वा वचनं व्यज्यते । यो ब्राह्मणः स न सुरां पिबेदिति वा सुराविशिष्टपानप्रतिषेधेन प्रतिषेधविधिना वा प्रत्यवायव्यावृत्त्या ब्राह्मणोऽनुगृह्यत इति, नास्य पानं प्रतिषेधं वा प्रतिविधेयत्वोपपत्तिः ।

लोके चैतद्यथाप्राप्तं पानं स्त्रीपुंसकर्तृकम् ।
प्रतिषेधपरे वाक्ये तदवस्थमनूद्यते ॥ ३८२

न च भो ब्राह्मणः पिबेदित्यनूदितम् । स च पुमानिति विधिव्यापाराद्विना लिङ्गविवक्षाऽत्रकल्पते ।

न चास्य लिङ्गसंबन्धः केवलः सन्विधीयते ।
न पानप्रतिषेधाद्धि विधिरन्यत्र गच्छति ॥ ३८३

ततश्चोभयत्राप्यविवक्षितलिङ्गसंख्यत्वं सिद्धम् ।

नन्वेवं सति ब्राह्मणस्त्रीवधेऽपि पुंब्राह्मणवधवद् ब्रह्महत्याऽस्तीति, यदात्रेय्यामेव केवलायां भ्रूणहत्याप्रायश्चित्तविधानं तन्नोपपद्यते ।

उच्यते—ब्राह्मणस्त्रीवधे को वा ब्रह्महत्यां निषेधति ।
प्रायश्चित्तान्तरे तस्याः स्त्रीत्वमात्रनिबन्धनम् ॥ ३८४

न च प्रायश्चित्ताल्पत्वेन निमित्तस्य ब्रह्महत्यात्वमपनीयते, पुंवधेऽपि लघुतरप्रायश्चित्तविधिदर्शनेन ब्रह्महत्यादोषाभावप्रसङ्गात्, तस्मान्न वाचनिकप्रायश्चित्ता-

ल्पत्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । सुरापाने पुनः प्रायश्चित्तविशेषोऽपि न कश्चिदाम्नात इति, दूरादपाकृतत्वादस्त्येवास्य स्मृत्या सह विरोधः। याऽपि चाऽऽपस्तम्बस्मृतिवचनात्तुल्यबलत्वाशङ्का भवेत् साऽपि। **"तस्माद् ब्राह्मणः सुरां न पिबति"** इत्येतेन प्रत्यक्षश्रुतिविधिना निराकृतेति नैवंविधाचारप्रामाण्यमाशङ्कितव्यम् ।

**इति वार्तिकमतेन सदाचारप्रामाण्याधिकरणम्**

अथ वा सदाचारप्रमाणत्वप्रतिपादनार्थं सूत्रद्वयेनाप्येतदेकमाधिकरणं व्याख्यातव्यम् । इह यावन्ति कृष्णमृगसंचरणोपलक्षितार्यावर्तनिवासिचातुर्वर्ण्याचरणानि तान्युदाहृत्य चिन्त्यते-—

धर्मबुद्ध्या यदार्याणां चरित्रमुपलभ्यते ।
किं तथैव प्रमाणं तदथ वा निष्प्रमाणकम् ॥ ३८५ इति ।

कुतः संशयः ?

उच्यते—स्मृतिवत्कर्तृसामान्यात्प्रमाणत्वेन गम्यते ।
अनिबन्धनतायास्तु भवेदप्यप्रमाणकम् ॥ ३८६

ननु च स्मृतिकारैरेवैतत्प्रामाण्यमभ्युपगतं "तद्विदां च स्मृतिशीले" "आचारश्चैव साधूनाम्" "यस्मिन्देशे य आचारः स सदाचार उच्यते"। अतश्च तत्प्रमाण्यादेव सिद्धम् । न । मूलाभावाहेतुदर्शनातिरेकात् । शाखान्तरगतवेदवाक्यदर्शनमूलानि हि स्मरणोपनिबन्धनानि प्रमाणत्वेनाऽधिगतानि ।

ननु सदाचारदर्शनात्तन्मूलमात्रप्रवृत्तस्मरणानां मूलान्तरानुमानसंभवः ।

यथैव च वयं तेषां द्रष्टारः केवलं तथा ।
स्मृतिकारास्ततो नैषां गम्यते मूलदर्शनम् ॥ ३८७

यदि हि तैर्मूलान्यश्रोष्यन्त ततो यथैवान्यानि स्मरणानि निबद्धानि, तथैवैतान्यपि निबद्धान्येवाभविष्यन्यतस्तु स्वयमुपलब्धानुरूपमनिबध्य परप्रत्ययेनैव सदाचाराः प्रमाणमित्याहुः। अतो न दृष्टमूलत्वेनाध्यवसातुं शक्यमिति विचार्यते । तत्र पूर्वाधिकरणद्वयबलेन प्रामाण्यं प्रतिज्ञायते, कर्तृसामान्याद्विधिस्मृतिविरोधरहितत्वाच्च ।

न हि केचित्सदाचाराः श्रौतस्मार्तविरोधिनः ।
अतस्ततुल्यकारित्वात्प्रामाण्येनावधारिताः ॥ ३८८
स्मृतिकाराभ्यनुज्ञानं महदन्यच्च कारणम् ।
तेषामज्ञातमूलानां न ह्यनुज्ञोपपद्यते ॥ ३८९ इति ।

तदपाकुर्वन्नाह—

न शास्त्रपरिमाणत्वाद्धर्माधर्मस्थितेरमी ।
शिष्टाचाराः प्रमाणत्वं लभन्ते शब्दवर्जिताः ॥ ३९०

शास्त्रपरिमेयत्वं तावत्परिमाणशब्दवाच्यं धर्माधर्मयोरवस्थितम्, परिमितानि च शास्त्राणि वेदोपवेदादीनि । न च तेषां मध्ये सदाचारशास्त्रं किंचिदस्ति । न च सदाचारः स्वयमेव शास्त्रम् । नापि तद्दर्शनम्, अनुष्ठानं वा, अत्यन्तपरायत्तत्वात्प्रमेयत्वाच्च । स्मृतेस्त्वेतद्विषयाया निर्मूलत्वमुक्तमेव ।

किं च मूलं भवेदेकमनेकमिति चिन्तिते ।
नैव द्विविधमित्येतदनुमातुं हि शक्यते ॥ ३९१

न तावद्देशजातिकुलभेदाद्भिन्नानामपरिमितस्वरूपाणानेकश्रुतिमूलत्वम् ।

न हीदृशी श्रुतिर्यैं तान् सर्वाचरान् ग्रहीष्यति ।
शब्दाभिधेययोस्तेषां व्यक्त्याकृत्योरसंभवात् ॥ ३९२

यावदाचारं हि वेदवाक्यानि कल्पयतां वेद एवैकः कल्पयितव्यः । एकस्य तु वाक्यस्य नैव कस्यचिदपरिमिताचारविधायित्वमवकल्पते । यत आचाराः प्रवर्तेरन् । न च धर्मसूत्रकारैस्तदेव दृष्ट्वाऽऽचार-प्रामाण्यमुप्यनिबद्धम् । शेष-धर्मस्मृतिवाक्यतुल्यनिबन्धनप्रसङ्गात् न ऽऽचारदर्शनोत्तरकालप्रवृत्ता स्मृतिस्तेषां मूलं भवति । मूलमूलिबलाबलविपर्ययप्रसङ्गात् ।

अतः परिमितं शास्त्रमनुमातुं यतोऽर्हति ।
नाऽऽचाराणां च तन्मूलं बहूनामित्यमूलता ॥ ३९३

न च स्मृतिसरूपाऽपि श्रुतिरत्रानुमीयते ।
आचाराणामतत्पूर्वप्रसङ्गात्सविपर्ययात् ॥ ३९४

शिष्टाचारः प्रमाणमिति हि श्रुतावनुमीयमानायामाचारः प्रथमं सिद्धो भवेत्तत्पूर्विका श्रुतिः ।

न त्वाचारस्य सा मूलामिति निर्मूलता पुनः ।

शास्त्रपरिमाणत्वादिति वा परिमिते ह्यर्थे शास्त्रं प्रवर्तेत । अपरिमितत्वादाचाराणामुच्छास्त्रत्वमिति ।

परिमितार्थविषयत्वाद्वा शास्त्रस्य, 'अप्राप्ते शास्त्रमर्थवत्' जै. सू. (६ । २ । ४) इति ।

दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता ।
तस्मादर्थसुखाङ्गत्वान्नाऽऽचारेष्वस्ति धर्मता ॥ ३९५

वैश्यानां सेवकानां वा वैद्यानां नगरेषु वा ।
चरित्राणां यथा चार्थसुखाङ्गत्वं तथाऽस्त्विह ॥ ३९६

तस्माच्छ्रुतिस्मृती एव प्रमाणे धर्मगोचरे ।
शीलाचारात्मतुष्टीनां गोष्ठीहास्यादितुल्यता ॥ ३९७

इति द्वितीयं वर्णकम्

**अथ तृतीयं वर्णकम्**

यद्वा सूत्रत्रयेणाप्येतदेवाधिकरणं व्याख्यातव्यम् । इहाऽऽर्यावर्तनिवासिशिष्टाचारानेवोदाहृत्य पूर्ववत्प्रामाण्याप्रामाण्यसन्देहे शिष्टाकोपेऽविरुद्धमिति सिद्धान्तस्तावदुपक्रम्यते ।

तथा हि—शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥ ३९८

यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता ।
तदकोपात्तु नाऽऽचारप्रमाणत्वं विरुध्यते ॥ ३९९

( इति वर्णकत्रयादिसहितं शिष्टाकोपाधिकरणम् ॥ ७ ॥ )

न्या० सु०—सूत्रमवधिद्वयेन पूर्वपक्षनिराकरणार्थतयाऽवतारयति—तदुच्यत इति । पूर्वपक्षोक्तविरोधाङ्गीकरणेन प्रमाणबलाबलात् प्रमेयबलाबलबलीयस्त्वमात्रेण सिद्धान्ते पूर्वाऽवधिः पूर्वा समाप्तिः विरोधाभावसिद्धान्ते द्वितीयेति व्यवस्थार्थो वाशब्दः ।

ननु भाष्यकृता अस्योत्तरसूत्रावयवत्वेन पठितत्वात्कथमेतत्सूत्रशेषत्वमित्याशङ्क्याह—अनन्तरेति । विप्रतिपत्तिशब्दोपात्तस्य विरोधस्यैतदवगताया अभावोक्तेर्विरुद्धत्वेनाऽनन्तरसूत्रेऽनुपयुज्यमानत्वाद्विरोधाभावसिद्धान्तपक्षे चेह सूत्रे पूर्वपक्षसूत्रोक्तविरोधाभावस्यावश्यवचनीयत्वादित्यर्थः । ननूत्तरसूत्रेऽपि यवादिशब्दानां साधारणत्वे प्रियङ्ग्वादिद्रव्यकार्ये विकृतावनूहितयवादिशब्दप्रयोगाविरोधप्रतिपादनार्थत्वेनोपयोगो भविष्यतीत्याशङ्क्याह—उपयोगेति । सकृत्पठितस्यापि व्याख्यानवेलायामुच्चारणानुकृतिः = अनुषङ्गः । सकृदुच्चरितस्यैवोभयशेषतया व्याख्याने तन्त्रत्वम् । आद्यावधिना विरोधेऽपि प्रमेयबलाबलबलीयस्त्वेन सिद्धान्तप्रतिपादनार्थमपि चेत्यादिभाष्यं व्याचष्टे—अपि चेति ।

प्रयुक्तानि प्रतीयेरन्निति सूत्रावयवस्य शिष्टैरनुष्ठितानाचमनादीनाद्रियेरन्नित्येवं व्याख्यानार्थं प्रमाणपदमुत्तरार्द्धेन व्याख्यातम् । विरुद्धताशब्देन बाध्यतोक्ता । श्लोकं व्याचष्टे—विरोधेति ।

प्रमाणबलाबलबलीयस्त्वाभिप्रायं नन्वित्यादिशङ्काभाष्यं व्याचष्टे—इयत्तेति । प्रमेयबलाबलबलीयस्त्वाभिप्रायं नैष दोष इति सिद्धान्तभाष्यं व्याचष्टे—पदार्थेति । पूर्वपक्षाभिप्रायं विवृणोति—उच्यत इति । श्लोकं व्याचष्टे—प्रमेयेति ।

नन्वापाततः प्रतीयमानमपि प्रमेयबलाबलं प्रमाणाधीनत्वात्प्रमेयसिद्धेः पश्चादालोच्यमानेन प्रमाणबलाबलेन बाधिष्यत इत्याशङ्क्याह—येषामिति। ननु श्रुतिविरोधिन्याः स्मृतेर्भ्रान्त्यादिमूलत्वेनाप्रामाण्यादाचमनादेस्तत्प्रमेयत्वानुपपत्तेः कथं बलीयस्त्वमित्याशङ्क्याह—नित्यमेवेति। विरोधेऽपि श्रुत्यनुमानप्रतिबन्धाभावेन भ्रान्त्यादिमूलत्वायोगाद् बलवद्विरोधापेक्षमुपक्रमविरुद्धोपसंहारवत्, तदनुरोधवृत्तित्वेनायथाश्रुतत्वमात्रं स्मृतेरप्रामाण्यम्, न चाचमनादिस्मृतेर्बलवद्विरोधोऽस्ति, बलवत्प्रमेयावष्टम्भेन स्मृतेर्दौर्बल्याभावादित्याशयः।

इममेवाभिप्रायं विवृणोति—न चेति। हिशब्दार्थे चशब्दः। ननु श्रुतिप्रमेयक्रमादिबाधे श्रुतिबाधापत्तेः तस्याश्चाप्रमादपाठत्वेन बाधायोगादगत्या स्मृतिरेव बाधनीया स्यादित्याशङ्क्याह—न चेति। अबाधे कारणमाह—तावतेति। न हि प्रमेयबलीयस्त्वमात्रेण स्मृतिः श्रुतिं बाधितुं शक्नोति, श्रुतिकल्पनव्याक्षेपेण गततेजस्त्वादित्यर्थः। प्रमेयबलीयस्त्वस्य तर्हि क उपयोग इत्यपेक्षायामाह—एतदेवेति। प्रमेयबलीयस्त्वेन स्मृतेरबाध्यत्वमात्रं भवति, न तु श्रुतिबाधकत्वमित्यर्थः।

द्वितीयावधिना विरोधाभावसिद्धान्तप्रतिपादनार्थमपि चेत्यादिभाष्यं तात्पर्यतस्तावद्वयाचष्टे—युगपदिति। नन्वयुगपत्प्राप्तानामपि श्रुतिलिङ्गादिविनियोज्यानां पदार्थानां विरोधप्रदर्शनान्न युगपत्प्राप्तिरेव विरोधे हेतुरित्याशङ्क्य, तुल्यकार्ययोरित्युक्तम्। इह तु करणोपकारसाधनपदार्थप्रयोगावच्छेदकत्वेन क्रमादीनां पदार्थगुणत्वाभिधानेनैव तुल्यकार्यत्वं निरस्तम्। युगपत्प्राप्तिरप्यत एव न सम्भवतीति, द्वयमपि—नास्तीत्युक्तम्। ननु वैदिकपदार्थप्राप्त्युत्तरकालीनानामपि क्रमादीनामाचमनादिभिः स्मार्तैः पदार्थैः सह यौगपद्याद्विरोधो भविष्यतीत्याशङ्क्याह—कालेति। प्रयोगावस्थायां क्रमाद्यपेक्षा, स च सकलपदार्थप्राप्त्युत्तरकालभावीत्याशयः।

इदानीमवयवशो भाष्यं व्यचिख्यासुः क्रमविरोधनिरासभाष्यं तावद् व्याचष्टे—प्राप्तेषु हीति। इयत्तावधारणस्याविहितत्वेनोपायान्तरेणाविस्मरणसिद्धावनादरणीयत्वात्तद्बाधे वेदविरोधशङ्का मन्दत्वाद्भाष्यकृतोपेक्षितेति, स्वयंशब्देन सूचयत्स्वयमियत्ताविरोधं परिहरति—परिमाणमिति। इयत्तायाः क्रमवत्पदार्थाश्रितत्वसूचनार्थस्तदनन्तरं विरोधपरिहारः।

कालस्य तु स्वतन्त्रत्वात्पदार्थप्रयोगावच्छेदकत्वमात्रेण पदार्थधर्मत्वाभिधानं श्लोकं व्याचष्टे—न केनचिदिति। यदिशब्देन ध्यानाद्युपायान्तरसम्भवः सूचितः। तथेति कालविरोधपरिहारभाष्यं व्याचष्टे—कालोऽपि चेति।

ननु यद्यपि प्रधानसाहित्यं शैघ्र्यं च स्मार्तैः सह यादृशं सम्भवति, तादृशाङ्गीकरणादविरोधस्तथापि पूर्वाह्णादिकालातिक्रमो भूयिष्ठाङ्गानुष्ठाने दुर्वार एवेत्याशङ्क्याह—कालो हीति। प्रधानस्यैव साक्षाद्विहितः कालः। स च प्रयोगाङ्गत्वात्प्रयोगस्य च साङ्गप्रधानविषयत्वात् प्रधानद्वाराऽङ्गेषु प्राप्नोतीति प्रधानस्य स्वकालसम्पादनमादृत्याऽङ्गेषु

यथासम्भवं सम्पाद्यमानो न विरुद्धचत इत्याशयः। साहित्यसम्पत्तिं विवृणोति—अङ्गैरिति। आशुत्वमपि सर्वाङ्गसहितस्यैवेति तुल्यन्यायत्वादुक्तं भवति। उपसंहरति—तस्मादिति। विरोधनिरासे, तेष्विति सूत्रावयवं द्वेधा योजयति—इतीति। क्रमादीनामाचमनाद्यनपेक्षत्वेऽप्याचमनादेः, स्वतन्त्रपदार्थत्वाभावे नाव्यवधायकत्वात्तद्विरोधाभावप्रतिपादनार्थमपि चेति भाष्यं व्याचष्टे—अपि चेति। आचान्तेन कर्त्तव्यमित्यादिकर्त्तव्यमात्रोद्देशने विधानात्सर्वस्याचमनादेरङ्गप्रधानार्थतेत्याशयः। न चाङ्गस्य व्यवधायकत्वमस्त्यनुल्यकक्षत्वादित्याह—अतश्चाङ्गेन हीति। अव्यवधानमेव दर्शयति—वेदमिति। कृत्वेत्यनेन।

'क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने।
कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्॥ इति

स्मृतिपर्यालोचनया पदार्थमध्येऽनाचमनं सूचितम्। कथमाचमने कृते वेदिः कृता भवतीत्याशङ्क्याह—वेदिरेवेति। नन्वङ्गप्रधानार्थस्याप्याचमनस्य हस्तावनेजनादिवत्सर्वादौ सकृत्कृतस्य सर्वोपकारकत्वात्कथमन्तरा नाचमने वैगुण्यमित्याशङ्कानिरासार्थत्वेन भाष्यगतं शौचशब्दं व्याख्यातुं शुद्धचेत्युक्तम्। शुचिना कर्त्तव्यमिति शुद्धेरपि कर्म्माङ्गत्वेन विधानात् क्षुताद्यापादिताशुद्धचनिवृत्तौ वैगुण्यं स्यादिति भावः। नन्वल्पकालत्वेनाप्यव्यवधायकत्वोपपत्तेः प्रधानार्थत्वमात्रेण निराकाङ्क्षस्याङ्गार्थतापि किमित्यङ्गीकृतेत्याशङ्क्य नाल्पकालत्वमात्रेणाव्यवधायकत्वं भवतीत्यभिप्रायेण परिहरति—इममेवेति। तस्मादित्युपसंहारभाष्यमविरोधसिद्धान्ताभिप्रायेण व्याचष्टे—तस्मादिति।

एवं यथाभाष्यमधिकरणं व्याख्याय, उदाहरणानि प्रत्यक्षश्रुतिदर्शनेन दूषयति—नन्विहेति। आदिशब्दो दर्शपूर्णमासविकृतिष्वस्य विधेरतिदेशतः प्राप्त्यर्थः। नन्वस्योत्तरीयवासो विन्यासविशेषविधानार्थत्वात् त्रिसूत्रनवतन्तुकत्रिवृद्ग्रन्थियज्ञोपवीतविधायकत्वं नास्तीशङ्क्य, वाक्यान्तरं दर्शयति—तथेति। सर्वकर्मार्थत्वायाऽनारभ्यविधित्वोपन्यासः।

आचमनविधिं दर्शयति—तथेति। नन्वस्य ब्रह्मयज्ञप्रकरणपाठाद्दर्शपूर्णमासादिष्वाचमनविधायकत्वं न सम्भवतीत्याशङ्क्याह—यद्यपीति। ब्रह्मयज्ञे पूर्वगृहीतस्वाध्यायाध्ययनस्य कल्पसूत्राधिकरणे कर्माभ्यासानुसन्धानं विध्यर्थश्चानुगम्यत इत्यत्र प्रयोगप्रांशुभावोपयोगिकर्मानुसन्धानप्रयोजनकत्वस्य वक्ष्यमाणत्वेन तदनुसन्धानस्य च लोकावगतशक्त्यनुसारेणाध्ययनसंस्कृतैरक्षरैः क्रियमाणस्यादृष्टार्थाचमनाद्यनपेक्षत्वादाचमनस्य नापूर्वलक्षणार्थं प्रकरणापेक्षास्तीति प्रकरणानादरेण वाक्यात्स्वाध्यायाध्ययनमात्राङ्गत्वप्रतीतेः। सर्वयज्ञेषु च मन्त्ररूपस्वाध्यायाध्ययनसद्भावात्तद्द्वारेणाचमनस्य सर्वयज्ञाङ्गत्वमवसीयते। अध्ययनस्य त्वदृष्टार्थत्वेऽपि तत्संस्कार्याणामक्षराणां क्रत्वपेक्षितनियमाद् दृष्टोपयोगिवेदत्वसम्पत्त्यर्थं क्रमस्वरविशेषवदाचमनाद्यपेक्षा न विरुध्यते। यथैव प्रत्यक्षस्यापि यूपादेरदृष्टोपयोगिरूपं प्रमाणान्तरागोचरत्वात्तदर्थं विहितक्षणादिसकलसंस्कारसमुदायजन्यत्वेनावसीयमानमेकसंस्कारवैकल्येऽपि नोत्पद्यते, तथा वेदस्याप्यदृष्टोपयोगिरूपम्।

'तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥'

इत्यादिवाक्यपर्यालोचनया तदर्थं विहितसकलधर्म्मसम्पाद्यमवसीयते अतोऽलौकिकरूपानभ्युपगमे च वेदवाक्यानामपि लौकिकत्वानपायाल्लौकिकवैदिकव्यपदेशभेदो निरालम्बनः स्यात् । तस्मादाचमनस्य वेदत्वसम्पादनार्थत्वाद्वाक्येन प्रकरणं बाधित्वा सर्वस्मिन्वेदकार्ये प्राप्तिरिति श्रौतत्वान्न स्मार्तोदाहरणत्वमिति भावः । तावच्छब्देन च दर्शपूर्णमासप्रकरणे पठितः 'स वै व्रतमुपैष्यन्नन्तराहवनीयं च गार्हपत्यं चोपविश्याप आचामतीत्याचमनविधिः क्रत्वङ्गाचमनविधानार्थः सूचितः । नन्वस्तु नामेदं सर्वयज्ञाङ्गमाद्यमाचमनम्, प्रयोगान्तःपाति तु नैमित्तिकमिह क्रमविरोधित्वेनोदाहर्त्तव्यम् । तच्च प्रत्यक्षश्रुतिविहितं नास्तीत्याशङ्क्य प्रयोगान्तःपातिनैमित्तिकाचमनप्रापकं लिङ्गं दर्शयति—तथा चेति ।

दक्षिणाचारत्वप्रापकस्यापि वैदिकस्य लिङ्गस्य दर्शनात्तदपि नेहोदाहर्त्तव्यमित्याह—दक्षिणेति । साक्षाद्विधिना यत्र विषये सव्यस्याञ्जलेर्वा चोदना, तस्मादेव विषयाद्दक्षिणाचारत्वं निवर्त्तेत अन्यत्र तु विषये तद्दक्षिणाचारत्वस्य निवर्त्तनं नाशङ्क्यतेऽपीत्यर्थः । किमिति नाशङ्क्यते इत्यपेक्षिते मनसि कृतं लिङ्गमुद्भावयति—यथा वा इति । प्रागुदक्प्रवणं देवयजनम्, प्रत्यक् दक्षिणाप्रवणं श्मशानकरणं यथा वै दक्षिणतः पाणिरेव देवयजनम्, यथा वै सव्यस्तथा श्मशानकरणमिति देवयजनस्य यज्ञभूमेः प्रागुदक्प्रवणत्वं विहितमौचित्येन स्तोतुं दक्षिणः पाणिरुपमानं कृतम् । तदेव यजनवद्दक्षिणस्य पाणेर्यज्ञाङ्गत्वे सत्यवकल्पते, नान्यथेत्यर्थः ।

नन्वनारभ्य विहितस्यापि यज्ञोपवीतस्यायज्ञरूपेषु दर्विहोमादिषु प्राप्तेस्तेष्वपि वा कथंचिद्यज्ञत्वेन मन्त्रोच्चारणवत्त्वेन वा प्राप्तिसम्भवेऽप्यानुषङ्गिकप्रयोगप्राशुभावोपयोगिकर्मानुसन्धानप्रयोजनत्वेऽपि ब्रह्मयज्ञस्याहरहःस्वाध्यायमधीयीतेति नित्यत्वश्रुतेरकरणे च प्रायश्चित्तस्मरणाददृष्टार्थत्वावधारणेनादृष्टार्थोपायापेक्षित्वात्तत्प्रकरणपठितस्याचमनस्यान्यत्राप्राप्तौ वाक्येन कथंचित्प्राप्तावपि प्रयोगारम्भे कृतस्य तत्प्रयोगान्तर्वर्त्तिसमस्तमन्त्रोच्चारणोपकारकत्वेन प्रतिमन्त्रमनावृत्तेरन्तराले प्राप्त्यभावेन क्रमादिविरोधित्वान्न सोमेनोच्छिष्टा भवन्तीत्यस्य च स्मृतिप्राप्ताचमनप्रतिषेधार्थत्वेनाप्युपपत्तेर्यथा वै दक्षिणः पाणिरित्यस्य च यज्ञाङ्गभूतदक्षिणहस्तविध्याक्षेपकत्वे यथासव्यस्तथश्मशानकरणमित्यस्यापि प्रेतकर्माङ्गभूतसव्यहस्तविध्याक्षेपकत्वापत्तेराचारविरोधप्रसङ्गात्स्मृत्याचारप्राप्तदक्षिणहस्तोपमार्थत्वोपपत्तेर्विध्याक्षेपकत्वाभावात् क्रमादिविरोधे प्रत्यक्षाचमनादिविध्यभावान्नोदाहरणदूषणं युक्तमित्याशङ्क्याह—तेनेति । क्रमादेः प्रयोगाङ्गत्वात्प्रयोगस्य चाचारपर्यन्तप्रमाणप्रापितपदार्थविषयत्वात्सकलपदार्थप्राप्त्युत्तरकालभावित्वेन विरोधपूर्वपक्षायोगात्स्मृतेश्च यथाश्रुतमूलनिश्चये प्रामाण्याभावेनाचमनादेस्तत्प्रमेयत्वायोगान्निश्चये वा प्रमाणदौर्बल्यानुपपत्तेः प्रमेयबलाबलेन प्रमाणबलाबलबाधसिद्धान्तायोगादनुदाहरणतेत्याशयः ।

नन्वेवं तर्ह्यग्रवन्ति प्रागग्राण्युदगग्राणि वापवर्गवन्ति, प्रागपवर्गाण्युदगपवर्गाणि वेत्या-द्युदाहरणं भविष्यतीत्याशङ्क्य तत्राप्युक्तदोषसाम्याद् द्विविधस्यापि विचारस्यानुपपत्तेर-धिकरणानन्तरमेवेदं न भवतीत्याह—तस्मादिति ।

का तर्हि सूत्राणां गतिरित्यपेक्षायामाह—सूत्राणि त्विति । बाह्यस्मृतिविषयस्य विरोधाधिकरणस्याक्षेपपरिहारार्थं सूत्रद्वयम्, तृतीयन्तु स्मृत्यधिकरणोक्ताचारप्रामाण्याक्षेपपरि-हारार्थमिति विवेकः । आद्यं सूत्रं विरोधाधिकरणाक्षेपे योजयति यत्तर्हीति । द्वितीयं परिहारे पठित्वा योजयति—परिमितान्येव हीति ।

पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः ।

वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्द्दश ॥ या. स्मृ. आ-श्लो-३

इति स्मृत्यैव चतुर्द्दशानां धर्म्मप्रमाणत्वम् उपपादितं च स्मृत्यधिकरणे ।

अथ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।

अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु ॥

इति स्मृत्या पूर्वैः सह संख्यानेनायुर्वेदादीनामपि क्रत्वर्थाज्यावेक्षणादिसिद्ध्यर्थं-चिकित्सादिग्विजयार्थं शास्त्रविद्यागानौपयिकषड्गादिद्रव्यार्जनोपयोगिनीति द्वारेण धर्म्म-प्रमाणत्वं तथापि बौद्धादिग्रन्थानां तन्मध्यपाताभावान्न धर्म्मप्रामाण्यमित्यर्थः । आयुर्वेद-धनुर्वेदगन्धर्ववेदास्त्रय उपवेदाः । मीमांसान्यायविस्तरौ द्वे तूपाङ्गे । साधारणीविशेषविषया च द्विविधा शिक्षा । तत्र साधारण्याद्वेदाङ्गत्वेन धर्म्मप्रामाण्येऽपि, कात्यायनादिप्रणीताया विशेषविषयायाः प्रतिवाक्यं प्रतिपदं चोच्चारणम् नियच्छन्त्या धर्मप्रमाणत्वाभावशङ्का-निराकरणार्थं पृथगुपादानेऽपि शिक्षात्वेनैक्यान्नातिरेकापत्तिः । दण्डनीतिः = अर्थशास्त्रम् ।

ननु परिमिते विद्यास्थानबाह्यत्वेऽपि तत्संवादिनां बौद्धादिग्रन्थानां कस्मान्न धर्म्म-प्रामाण्यमित्याशङ्क्याध्ययनविधिवशाद्वेदादेवावगम्यानुष्ठितं कर्म्म श्रेयः साधयतीति नियम-प्रतीतेर्बौद्धादिग्रन्थादवगम्यानुष्ठितस्यापि वेदार्थस्य श्रेयःसाधनत्वाभावाद्वेदादिपूर्व्वशास्त्रार्थस्य गोचरस्य बुद्धादिकृतस्य वाक्यस्य धर्मे प्रामाण्यं नास्तीत्याह—प्रतीति । एतदेव व्यवहारेण द्रढयति—तथा चेति ।

नन्वेवं सति मन्वादिग्रन्थानामप्यप्रामाण्यं स्यादित्याशङ्क्याह—वेदेनैवेति । मन्वादीनां धर्मप्रवक्तृत्वस्य वेदानुज्ञां दर्शयति—तथा चेति । नन्वनादेर्वेदस्यादिमन्मन्वादिपुरुष-विशेषाभिधायित्वायोगाच्छ्रुतिसामान्यमात्रेण मन्यते ज्ञायते तेनेति व्युत्पत्त्या मनुशब्देन वेदाभिधानान्नानेन वाक्यशेषेण मनोः प्रवक्तृताऽनुज्ञायत इत्याशङ्क्याह—न चैतदिति । ननु मनोः प्रवाहनित्यत्वेऽपि तत्स्मृतेरनित्यत्वान्न वेदेन प्रामाण्यानुज्ञानं सम्भवतीत्या-शङ्क्याह—प्रतीति ।

ननु कल्पान्तरे मनूनामभावात्तद्वाक्यप्रामाण्यपरत्वे वेदस्यानित्यत्वं स्यादित्याशङ्क्याह—**स्थिताश्चेति** । दृष्टान्तं विवृणोति—**प्रतियज्ञमिति** । मन्वादेः प्रवाहनित्यता कथमवगम्यत इत्यपेक्षिते मनुवचनमुदाहरति—**उक्तं चेति** । दृष्टान्तान्तरमाह—**इतिहासेति** । उपसंहरति—**तेनेति** ।

कथं पुनर्वेदातिरिक्तानामपि तन्मूलानां ग्रन्थानां धर्मप्रमाङ्गत्वमतन्मूलानां च तत्संवादिनामप्यनङ्गत्वमित्यवगम्यत इत्यपेक्षायामुभयद्योतकं लिङ्गं दर्शयति—**तथा चेति** । वेदमूलानां धर्मप्रमाङ्गत्वद्योतकत्वमस्योपपादयति—**अन्यथा हीति** । बाह्यानां धर्मप्रमाङ्गत्वद्योतकमुपपादयति–**यदि चेति** । वेदमूलग्रन्थनिबन्धनानां धर्मप्रामाण्यम्, न बाह्यानामिति यदि नाश्रीयते तथा सति बाह्यानां विज्ञातप्रत्यक्षातिमूलत्वान्नैवाविज्ञातमूलं किंचिदित्यर्थः । अतः साक्षात्परम्परया वा वेदादवगम्यानुष्ठितोऽर्थः श्रेयःसाधनमिति शास्त्रार्थावधारणाद्वेदार्थस्यापि बाह्यस्मृत्यवगतस्य श्रेयःसाधनत्वं नास्तीत्यप्रामाण्याभिधानाभिप्रायं प्रकटयति—**तस्मादिति** ।

एतदेव दृष्टान्तद्वारेण विवृणोति—**यथैवेति** । अतिक्रान्तं वेदोक्तं तथा मर्यादया तया व्यवहारिणामिति विग्रहः धर्मविप्लावकत्वाच्च शाक्यादीनामश्रद्धेयवचनत्वमित्याह—**स्मर्यते चेति** । ननु विसंवादिशाक्यादिवाक्यानामग्राह्यत्वेऽपि संवादिनामहिंसादिवाक्यानां ग्राह्यत्वं भवीष्यतीत्याशङ्क्याह—**यथेति** । परपीडात्मकात्कर्मणस्तदनुरूपमात्मनः पीडात्मकं फलम्भवतीति कर्मानुरूप्योपमानं वैदिक्यपि हिंसा लौकिकीवदधर्म इति सामान्यतो दृष्टदुःखोपभोगस्य पापफलत्वान्नानादुःखोपभोगात्पापक्षयो भवतीत्यर्थापत्तिः तद्बलाच्छाक्याद्यभिप्रायकल्पितानां धर्माभासानां मध्ये पतितमित्यर्थः । संवादोत्तरकाले तर्हि ग्रहीष्यत इत्याशङ्क्याह—**यदेति** । सिद्धान्तमुपसंहरति—**तस्मादिति** । तृतीयं सूत्रं स्मृत्याधिकरणोक्ताचारप्रामाण्याक्षेपपरिहारे योजयितुमुपक्रमते—**यत्त्वेतदिति** । धर्मजिज्ञासाधिकारेऽप्यर्थकामाचाराणामपि दृष्टप्रमाणमूलत्वेन प्रसङ्गात्प्रामाण्यसिद्धिमभिप्रेत्य, त्रिवर्गग्रहणम् । स्मृतिन्यायसिद्धस्याचारप्रमाण्यस्याक्षेपानुपपत्तिमाशङ्क्य तत्समर्थनार्थं सन्देहहेतुप्रदर्शनपूर्वकं पूर्वपक्षमाह—**तद्विपरीतेति** । त्रिवर्गविपरीतैरधर्मानर्थदुःखसाधनैरात्महननादिभिराचारैः सङ्कीर्णो व्यवहारो येषामिति विग्रहः वैद्यश्चासावातुरश्चेति कर्मधारयं कृत्वा पूर्वपदेन कर्मधारयः कार्यः । अत्यन्तविलक्षणानन्ताचारमूलभूतैकश्रुत्ययोगात्प्रत्याचारं च मूलकल्पनेऽनन्तश्रुतिकल्पनापत्तेर्नाचारमूलश्रुतिकल्पनं सम्भवतीति वक्ष्यमाणप्रकारेणाचाराणां श्रुतिकल्पकत्वासम्भवमभिप्रेत्याशब्दत्वोक्तिः । विरोधं दर्शयति—**सदाचारेषु हीति** । लोभाद्यभिभवात्सन्निहितानर्थादर्शनेनाधर्माचरणं धर्मव्यतिक्रमः । दृष्टस्याप्यनर्थस्य बलदर्पेणानादरादधर्माचरणं साहमं वहता ।

**प्रायो धर्मव्यतिक्रमवर्णनम्**

व्यतिक्रमं साहसं च यथासम्भवं दर्शयति—**प्रजापतेस्तावदिति** । इन्द्रस्यापि गौतमभार्यागमनेनागम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रम इत्यनुषङ्गेण योज्यम् । इन्द्रे ब्रह्म-

हत्याभयादपक्रान्ते, नहुषः स्ववे र्येणेन्द्रपदमधिष्ठाय तद्भार्यां शचीमभिगन्तुं चकार । वसिष्ठ-पुत्रे शक्तौ राक्षसैर्भक्षिते तच्छोकान्मर्त्तुकामो जलं प्रवेष्टुमारेभे । विश्वामित्रः क्षत्रियमपि त्रिशङ्कुं ब्राह्मणकन्याहरणकुपितस्य पितुः शापाच्चाण्डालत्वमापन्नं याजयामास । उर्वशी-वियोगशोकात्पुरुरवा मर्त्तुमियेष । विचित्रवीर्येऽनपत्य एव मृते तद्भार्यायामम्बिकायां धृतराष्ट्रमम्बालिकायां पाण्डुमम्बिकाप्रेषितायां दास्यां विदुरं कृष्णद्वैपायनो जनयामास । विधवानियोगोऽपि ब्रह्मचारिणोऽनुचित इति गृहीतेत्यनेन सूचितम् । नियोगविधेरप्येका-पत्यविषयत्वादनेकोत्पादनानौचित्यं प्रसङ्गशब्देन सूचितम् । भीष्मस्यानाश्रमित्वमपत्नीकस्य च स एष भीष्मः कुरुवंशकेतुर्यनाहुतास्त्रिशतो वाजिमेधाः क्रतुप्रयोग इति धर्मव्यति-क्रमद्वयम्, रामवदित्यनेन तस्यापि पत्नीत्यागेनैकाकिनः क्रतुप्रयोगाद्धर्मव्यतिक्रमः सूचितः । धृतराष्ट्रस्यान्धत्वेनानधिकृतस्य यागकरणाद्धर्मव्यतिक्रमः । अन्धस्य निरंशत्वेन धना-भावाद्यागासम्भवमाशङ्क्य ।

तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥
इति दर्शनात्पाण्डुवर्जितैर्धनैरित्युक्तम् ।

सुहृदश्चापि धर्मात्मा धनेन समतर्पयदिति च पाण्डुना धृतराष्ट्रादिभ्यः स्वार्जितधन-समर्पणान्नापहारः शङ्कनीयः । पाण्डुवर्जितधनोपजीवनं ज्येष्ठस्य धृतराष्ट्रस्यानुचितमिति, व्यतिक्रमान्तरं चानेनोक्तम् ।

इदं सज्जं धनुः कृत्वा सज्जेनानेन सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लभेत सुतामिमाम् ॥

इति द्रुपदेनोद्घोषिते तथाकृतवतेऽर्जुनाय द्रौपदी निवेदिता तथा च "विद्ध्येत य इमं लक्ष्यं तं वृणीष्व वरानने" इति भ्रातृवचनाल्लक्ष्यवेधानन्तरमेवार्ज्जुनो वृत इत्यपरि-णयनेऽपि वरणे च जायात्वप्रक्रमादन्यस्य विशेषतो भ्रातुःकनीयसश्च जायायाः परिणय-नादेको युधिष्ठिरस्य धर्मव्यतिक्रमः, तथा द्रोणो ब्राह्मणो युधिष्ठिरादीनां धनुर्वेदाचार्यो त्यक्तशस्त्रो न हन्तुं शक्यः । अश्वत्थाम्नि च पुत्रे हते शस्त्रं त्यक्ष्यतीति मत्वा वध्यत्वाय शस्त्रं त्याजयितुमश्वत्थामा हत इत्यनृतं युधिष्ठिरेणोक्तमित्यपरः ।

वासुदेवेन मातुलदुहिता रुक्मिणी परिणीता । अर्ज्जुनेन सुभद्रेत्येकस्तयोर्द्धर्म-व्यतिक्रमः ।

उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्ज्जुनाविति च सुरापानादपरः ।

### अद्यतनानां धर्मव्यतिक्रमवर्णनम्

अद्यतनानां व्यतिक्रमं दर्शयति—अद्यत्वेऽपीति । अश्वाश्वतरखरोष्ट्रानां 'न केसरिणो ददाति' निषेधविषयत्वार्थं केसरित्वविशेषणं नोभयदतः प्रतिगृह्णातीति निषेधविषयत्वा-

योभयदत्तं विक्रयस्तु व्रीहियवाजात्यश्वभूमिधेन्वनडुहश्चैके (गौ० ध० सू०) इत्यश्वस्य गौतमेन निषिद्धः।

बौधायनेन उभयतो दद्भिर्न व्यवहार इति सर्वेषां न केवलं श्रुतिस्मृतिविरोधेनैवं जातीयकानामाचाराणामनपेक्षणीयत्वं किं तु परस्परविगानलक्षणाद्विरोधाद्धेतुदर्शनाच्चेत्याह–**सर्वत्रेति**। इतरेतराश्रयापत्तेरपि नाचाराणां धर्मप्रामाण्यमित्याह—**किं चेति**।

ननु मन्वादिस्मृतिप्रामाण्यस्य साधितत्वात्, तैश्च वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदामाचारश्चैव साधूनामिति श्रुतिस्मृतिवदाचारप्रामाण्यस्यापि स्मृतत्वात्तन्निराकरणमयुक्तमित्याशङ्कते—**नन्विति**। अतिप्रसङ्गापादनेनैतद् दूषयति—**आत्मतुष्टिरिति**। नन्वसावप्यस्तु प्रमाणमित्याशङ्क्याह—**धर्म इति**। यद्यसौ धर्म एव व्यवस्थितः स्यात् भवेत्प्रमाणम्, नन्वेतदस्तीत्याशयः। अनवस्थितत्वमुपपादयति–**यथाऽस्यासं हीति**। वैचित्र्यं प्रपञ्चयति—**तथा हीति**। अत्यन्तकारुण्याच्छाक्यानां पशुहिंसादर्शने पीडा भवति। ननु साध्वात्मतुष्टेः प्रामाण्यस्मरणाच्छाक्यादीनां चासाधुत्वान्न तदीयान्यतुष्ट्यन्यथात्वेन किंचिद् दुष्यतीत्याशङ्क्य साधुत्वसम्मतानां वेदवादिनामथात्मतुष्टेर्वैचित्र्यमाह—**तथेति**। स पापेन मनसापि तन्मातुलसुताप्रापणं न कुर्वत इत्यपिशब्दाध्याहारेण व्याख्येयम्। का तर्ह्युभयप्रामाण्यस्मृतेर्गतिरित्याशङ्क्याह—**ततश्चेति**। श्रुतिस्मृतिसम्वाद्याचारात्मतुष्टिविषया स्मृतिरित्याशयः। किं चाचारमूलभूता श्रुतिर्मन्वादिभिर्दृष्टा न वा तत्र तैरदर्शनैरर्वाचीनानां दर्शनस्यासम्भवनीयत्वान्निर्मूलत्वापत्तेराचारप्रामाण्यस्मृतेरन्यपरतैवाङ्गीकार्येत्याह—**स्वयमिति**। श्रुत्यभावे च स्मृतिपारतन्त्र्याच्छिष्टानां तदाचारप्रामाण्यमिधानं स्मृतिकाराणां न शोभत इत्याह—**स्मृतीति**। आचारमूलश्रुतिदर्शनं तु मन्वादेर्न कल्पयितुं शक्यम्, तदर्थानिबन्धनादित्याह—**न चेति**। यदि ह्याचारमूलभूता श्रुतिर्मन्वादिभिर्दृष्टा स्यात् ततः परोक्षापि स्वरूपेणासमर्पिताप्युपनयनादिश्रुतिवदर्थं स्मर्येत तदर्थो निनिबध्येतेत्यर्थः। पूर्वपक्षमुपसंहरति—**तस्मादिति**।

## सिद्धान्तः

सिद्धान्ते सूत्रं पठित्वा योजयति—**इति प्राप्त इति**। दृष्टं फलमनुष्ठानकारणत्वेनाचरितृभिर्नाश्रितं येषु कर्मसु तानि दृष्टकारणहीनानि धर्मबुद्ध्या यानि क्रियन्ते इत्यर्थः। विशेषणस्य व्यावर्त्यमाह—**शरीरेति**। अस्मिन्सूत्रे हेत्वनभिधानात्स्मृत्यधिकरणसिद्धान्तसूत्रोक्तं हेतुं योजयितुमाह—**धर्मत्वेनेति**। तान्युदाहरति—**प्रदानानीति**। शक्रध्वजमहः शक्रध्वजोत्सवः महे इति पाठे शक्रध्वजे महायात्रेति सप्तमीसमासः। देवतायतनेष्वित्यत्र महायात्रेत्यनुषङ्गः। सर्ववर्णसाधारण्यार्थे—**सर्वासामित्युक्तम्**। उदाहरणान्तराण्यपि दर्शयन् कारणाग्रहणमुपपादयति—**प्रदीपेति**। प्रदीपानां कार्त्तिकशुक्लप्रतिपदि दानम्। मोदकादिश्चतुर्भिर्द्रव्यैः तत्साध्यानि दानभक्षणादीनि लक्ष्यन्ते। माघसप्तमीपौर्णमासीभ्यां तत्कालानुष्ठेयं कर्म लक्ष्यते। फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्त उत्सवः।

स्मृतितोऽपि सदाचारप्रामाण्यमवसीयत इत्यतिप्रसङ्गदोषाभावं वक्ष्यमाणमभिप्रेत्याह—स्मृतिकाराश्चेति । सर्वाचारसाधारण्यप्रदर्शनार्थः सामान्यशब्दः । उत्सवात्मकस्याचारस्य द्योतकं स्मृत्यन्तरमुदाहरति—तथेति । वैदिकमप्युत्सवलिङ्गमुदाहरति—वेदेऽपि ।

सिद्धान्तमुपपाद्य धर्मस्य शब्दमूलत्वादिति पूर्वपक्षहेतुं साभिप्रायविवरणमनुभाष्य निराकरोति—यत्त्विति । इहाचारेष्वनन्तेषु परिमितशास्त्रमूलत्वासम्भवादशब्दत्वेनानपेक्षत्वं यदुक्तम् ।

तद्—

भ्रान्तेरनुभवाच्चापि पुंवाक्याद्विप्रलम्भनात् ।

दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥

इति पूर्वोक्तेन प्रकारेण वेदमूलत्वानुमानात्प्रत्याख्येयमित्यर्थः । आचारप्रामाण्यप्रतिपादिकायाश्च स्मृतेर्निर्मूलत्वयोगादाचारमूलश्रुतिकल्पनमवश्यंभावीत्याह—न चेति । नन्वनन्ताचारमूलभूतानां श्रुतीनामानन्त्यात्पठितुमशक्तेरपठितानां च मूलत्वायोगान्निर्मूलत्वमपरिहार्यमित्याशङ्क्याह—विस्तरेति । कथमनन्तानां संक्षेपवचनमूलत्वमित्याशङ्क्याह—शङ्क्यं चेति ।

ननु स्मृत्यनुरूपाश्रुतिः कल्प्या कल्प्यमाना साध्वाचरणेनैवोपलक्षितानां धर्मत्वप्रतिपादिका कल्प्येत । तत्र शास्त्रव्यापारात्प्रागाचरणसिद्धौ शास्त्रानर्थक्यम्, असिद्धौ वा शास्त्रादाचरणं तदुपलक्षणेनैव च शास्त्रप्रवृत्तिरितीतरेतराश्रयं स्यादित्याशङ्क्याह - तथा होति । श्लोकं विवृणोति—न हीति । ननु व्यापाररूपत्वात्प्रदानादीनां यागादिवत् स्वरूपेणापि शास्त्रगम्येन भवितव्यमित्याशङ्क्याह—यागादिष्वपि चेति । पूर्वसिद्धत्वादेव च नेतरेतराश्रयमित्याह—अत इति ।

ननु यदि शास्त्रप्रवृत्तिमनुपलभ्यैव शिष्टप्रवृत्तिः ततः स्वयमेवानुष्ठितप्रदानादेर्भोजनादिवत्फलसाधनत्वसिद्धेः शास्त्रानर्थक्यमपरिहृतं स्यादित्याशङ्कानिराकरणार्थम्—क्वाचित्कत्वेत्युक्तम् । शिष्टप्रवृत्त्युत्तरकालं तर्हि शास्त्रस्य प्रवृत्तेरादिमत्त्वं स्यादित्याशङ्क्य—सर्वकालं त्वित्युक्तम् । ननु शिष्टाचारस्यापि मातुलदुहित्र्युद्वाहादिषु विगानदर्शनात्कथमुपलक्षणत्वमित्याशङ्क्याह—तेषां चेति ।

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।

वर्णानां सान्तरालानां स सदाचार उच्यते ॥

इति मनुना सदाचारशब्दार्थस्य निर्णीतत्वादिति भावः ।

स्मृतिबलाच्च श्रुतिरपि विशिष्टविषयैव कल्प्येत्याह—वेदेनापीति । सरस्वत्या विनशनं तिरोभावः सारस्वतसत्रारम्भदेशस्योपलक्षणम् । तस्या एव प्लक्षात्प्रस्रवणं सारस्वतसत्रोत्थानदेशस्योपलक्षणम् । सदाचारस्वरूपावधारणे यत्पूर्वमितरेतराश्रयत्वमुक्तम् । तदेव

शिष्टप्रयोज्यत्वस्योपलक्षणत्वे योजयन्परिहारायानुभाषते—नन्विति । परिहरति—श्लोकं विवृणोति प्रत्यक्षेति ।

ननु साक्षाद्विहितकारित्वनिबन्धनस्यापि शिष्टत्वस्य वेदाधीनत्वाद्वैदिके विधौ आत्माश्रयापत्तेर्नोपलक्षणत्वं सम्भवतीत्याशङ्क्य, वैदिकत्वाभेदोऽपि विशेषरूपेण भेदान्नात्माश्रयापत्तिरिति दृष्टान्तेनोपपादयति—यद्यथेति । यद्यप्यध्ययनविध्याक्षिप्तत्वाद्वेदाङ्गमीमांसाव्याकरणादिश्रवणवेदार्थज्ञानयोरध्यापनविधिविहितत्वाच्चाध्यापनस्य शुश्रुवान्विद्वाननूचानश्च वैदिको वेदविहितश्रवणज्ञानप्रवचननिमित्तत्वाद्वेदाधीनः तथापि य एवं विद्वान्स्वाध्यायमधीयीत त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्य इति गतश्रियं लक्षयित्वा गतश्रीरजस्रमग्नीन्धारयेत्कामं योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्याद् इति वेदविहितेष्वध्ययनादिषु तेनैव तल्लक्षितः—तेन शुश्रुवत्त्वादिना कृत्वा लक्षित इति, तथापि शब्दार्थे पुनःशब्दमङ्गीकृत्य व्याख्येयम् । नन्वेवमपि वेदप्रवृत्तौ सत्यां साक्षाद्विहितकारित्वलक्षणं शिष्टत्वम्, तस्मिंश्च सति शिष्टप्रयोज्यत्वोपलक्षिताचारप्रामाण्यप्रतिपादकवेदप्रवृत्तिरितीतरेतराश्रयं स्यादित्याशङ्क्याह - तेनेति ।

यत्तु स्वयमज्ञातमूलाश्चेत्यादिना मन्वादिभिराचारमूलश्रुत्यदर्शनेऽन्येषां दर्शनस्य दूरोत्सारितत्वादभाव एव प्रसज्येत, दर्शने चोपनयनादिश्रुत्यर्थंवदाचारमूलश्रुत्यर्थोऽपि निबन्धनीयः स्यादित्युक्तं तन् मन्वादीनामपि सर्वशाखाध्यायित्वनियमाभावात्तददर्शनमात्रेणाभावकल्पनानुपपत्तेर्दर्शनेऽपि वा सदाचारः प्रमाणमिति सामान्याभ्यनुज्ञानमात्रेण सिद्धेर्ग्रन्थगौरवभयाद्विशेषरूपेणानिबन्धनोपपत्तेर्भविष्योत्तरादौ च होलाकाद्याचाराणां निबद्धत्वात्परिहृतमित्याह—स्मृतिरपीति । वेदविहितकारिणां धर्मबुद्धयाचरणस्य वेदमूलत्वं विनानुपपत्तेराचाराद्वेदमनुमयापि स्मर्तृप्रणयनमुपपन्नमित्यभिप्रेत्य—चारमित्युक्तम् ।

ननु विस्तरवचनानामपीत्यनेन प्रत्येकमाचारमूलश्रुतिकल्पनमुक्तम्, किमुत संक्षेपवचनस्येत्यनेन स्मृत्यनुरूपसामान्यश्रुतिकल्पनम्, तत्कोऽनयोः पक्षयोः सम्मत इत्यपेक्षायामुभयथापि दोषाभावप्रतिपादनार्थं पक्षद्वयोपन्यासः । परमार्थतस्त्वश्रीरातनूर्भवत रुशती,जायगामुया पतिर्यद्वद्धो वाससा स्वमङ्गमभिधित्सत इत्याद्यानां स्त्रीवासोपरिधानाद्याचारमूलभूतानां बह्वीनां श्रुतीनां दर्शनात्प्रत्येकश्रुतिकल्पनपक्ष एव ज्यायानिति सूचयितुमाह—इत्यवोचइति । हेतुदर्शनमनुभाष्य परिहरति—यस्त्विति । एतदेव विवृणोति—वेदेऽपि हीति । ननु दृष्टार्थत्वसम्भवेऽपि वेदमूलत्वकल्पने धर्माचारस्यार्थकामाचाराभ्यां विवेको न स्यादित्याशङ्क्याह—यानि त्विति । ननु म्लेच्छादिसाधारण्यात्कृष्यादेर्धर्मत्वानभ्युपगमे देवपूजादेरपि धर्मत्वाभावापत्तेर्दानन्दयादमः क्षान्तिः सर्वेषां धर्मलक्षणमित्यादिस्मृतिविरोधः स्यादित्याशङ्क्याह—किं त्विति । ननु सर्वसाधारणस्य कथमसाधारण्येन शिष्टाचारगतत्वमुच्यते इत्याशङ्क्य, शूद्रादिभिरपि शिष्टत्वायैव धर्मबुद्ध्याचरणादसाधारण्यसिद्धिरिति परिहरति—लोके हीति । अतोऽस्ति विवेक इत्युपसंहरति—तत्रेति ।

यत्त्वात्मतुष्टेरपि प्रामाण्यात्तेनं स्मृतेराचारप्रामाण्यप्रतिपादनपरतेत्युक्तं तत् आत्मतुष्टेरपि प्रामाण्योपपादनेन दूषयति—एतेनेति। वेदविहितकार्याचारस्य वेदमूलत्वं विनानुपपत्तेर्वेदमूलतयाऽऽचारप्रामाण्यप्रतिपादनेन वेदजन्यानन्तधर्मधीसंस्कृतान्तःकरणानामात्मतुष्टेरपि वेदमूलत्वं विनानुपपत्तेः सन्दिग्धधर्मनिर्णयार्थत्वेन प्रामामाण्यं वेद एव प्रसिद्धमित्यर्थः। शुद्धिशब्देन निर्णयोऽभिहितः। श्लोकं विवृणोति—तथैवेति। वेदतदर्थज्ञानस्याव्यवस्थितत्वनिराकरणार्थं तथैवेत्युक्तम्। प्रसिद्धिं दर्शयितुमित्याश्रित्योच्यत इति।

वेदवाक्यगतार्षशब्दव्याख्यानार्थं वेद एव सम्भवतीत्युक्तम्। एतदेव दृष्टान्तेनोपपादयति—तथा हीति। सन्दिग्धार्थनिर्णायकत्वमात्मतुष्टेर्द्रढयितुमभियुक्तसम्मतिमाह—एवं चेति। प्रसिद्ध्युपपादनाय—विद्वद्वचनादित्युक्तम्। निरूपणं दर्शयितुं कालिदासवाक्यमुदाहरति—सतां हीति। दुष्यन्तेन शकुन्तलेयं मम परिणेतुमुचिता न वेति सन्दिह्य "असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मन" इत्यात्मतुष्ट्यौचित्यं निश्चित्य कथमात्मतुष्टिमात्रेण निश्चय इत्याशङ्क्य—सतां हीत्युक्तम। अस्यैव वाक्यस्याभिप्रायमाह – बहुविनेति। एवं तावच्छिष्टात्मतुष्टेर्वेदनियतमार्गानुसारित्वात्स्मृत्याचारवद्धर्मप्रतिज्ञापकहेतुत्वमुक्तमिदानीमात्मतुष्ट्या स्वविषयस्य कस्यचिच्छ्रुत्याद्यविरुद्धस्य कर्मणः श्रेयःसाधनशक्तिरूपं धर्मत्वमुत्पाद्यत इति कारकहेतुत्वमाह—यद्वेति। वचनादेवेत्यात्मनस्तुष्टिरेवेत्युत्रानुषज्यमानस्य धर्ममूलपदस्य धर्मोत्पादकत्ववाचित्वमभिप्रेत्योक्तम्—धर्मतेति।

अथ चोपरिष्टात्तथाचारात्मतुष्ट्यादिधर्ममिति तस्मै हितमित्युपकारार्थं यत्प्रत्ययदर्शनाद्धर्मोपकारिता धर्महेतुतेत्यर्थः। स्वभावभिन्नानामप्येकोपधियोगादेकशक्त्याविर्भावः सम्भवतीति दृष्टान्तेनोपपादितं यथा भिन्नानामपि देवदत्तादीनामेकपुण्यक्रियायोगाद् ध्यायमानानां श्रेयःसाधनत्वम्, तथा भिन्नानामपि कर्मणामेकशिष्टात्मतुष्टियोगात् श्रेयःसाधनत्वमित्यर्थः। तस्माच्छब्देन पुण्यकृद्ध्यानस्य श्रेयःसाधनत्वे प्रमाणं पापं ध्यात्वा पुण्यकृतोऽध्यापयति वचनं परामृष्टम्। आचारेऽपीमं परिहारमतिदिशति—आचारेष्वपीति। आचारश्चैव साधूनामित्यनेनापि श्रुतिस्मृत्यविरुद्धं यत्किंचिच्छिष्टैः क्रियते, तत् श्रेयःसाधनमित्युच्यत इत्यर्थः।

अत्रैव दृष्टान्तान्तराण्याह—यथा चेति। भिन्नानामपि मन्त्राणामुच्चारयितृयोगादोषधीनां नकुलदंष्ट्रायोगाद्भुवां पुण्यकृद्योगाद्येकशक्त्याविर्भावो यथेत्यर्थः। दार्ष्टान्तिके योजयन्नुपसंहरति—तथेति।

धर्मव्यतिक्रममनुभाष्य परिहरति—यत्त्विति। प्रजापतौ तावच्छ्रुतिसामान्यं विवृणोति—प्रजापतिस्तावदिति। इन्द्रे विवृणोति —एवमिति। नहुषे श्रुतिसामान्यमात्राद्वेति वाशब्दसूचितं सदाचारत्वाभावं विवृणोति—नहुषेण पुनरिति। सदाचारस्य प्रमाणत्वेनाभ्युपगतस्य व्यभिचारः परिहर्त्तव्यः। नहुषाचारस्य त्वनन्तरमेवाजगरत्वप्राप्त्या सदाचारत्वाभावनिश्चयाद्व्यतिक्रमेऽपि धर्मबुद्ध्या क्रियमाणस्याचारस्य व्यतिक्रमाभावान्न दोष इत्या-

शयः । परदाराभियोगोक्त्या भियुज्यमानायां शच्यामपि शङ्कितं व्यतिक्रमं निराकर्त्तुमाह—शच्याश्चेति । वशिष्ठाचारस्यापि पुत्रशोकजनितव्यामोहनिमित्तत्वाख्यानाद्धर्मबुद्ध्या क्रियमाणत्वाभावात्सदाचारत्वाभावनिश्चय इत्याह—वशिष्ठस्यापीति । श्लोकं व्याचष्टे- यो हीति ।

विश्वामित्रे तेजोबलवशेनेति परिहारं विवृणोति—तेनेति । स हि व्यामोहाभावेऽप्यापदि मत्कुटुम्बं भृतवतस्त्रिशङ्कोः प्रत्युपकर्त्तव्यं मयेति प्रत्युपकारेच्छया चण्डालमपि वा सशरीरं स्वर्गं नयामीति स्वप्रभावख्यापनेच्छया त्रिशङ्कुद्वेष्टरि वशिष्ठे द्वेषाच्च तपोबलेन पापं नाशयामीत्यध्यवसाय चण्डालं याजयामास । येन कारणेन कामादिहेतुकस्याचारस्य धर्मादर्शनं नास्ति, तेन कारणेन विश्वामित्रचरितमपि न धर्मादर्शत्वं प्रतिपद्यत इत्येवं तेन शब्दो योज्यः ।

सर्वं बलवतः पथ्यमित्येतमेव न्यायं प्रकृते योजयितुमाह—महान्ति चेति । द्वैपायने गर्हानिरासार्थं यथा वा न विरुद्धत्वमिति परिहारमुपक्रम्य अपरितोषात्तेजोबलवशेन वेत्येतमेव परिहारं दर्शयति—द्वैपायनस्यापीति । कथं पराशरपुत्रस्य द्वैपायनस्य शन्तनुपुत्रो विचित्रवीर्यो भ्रातेत्याशङ्क्य मातृसम्बन्धवचनम् । सत्यवत्यामनूढायां पराशराद् द्वैपायनो जातः शन्तनुना पश्चादूढायां विचित्रवीर्यः । एवमपि ।

'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥' मनु० ९।६९

इति नियोगस्य वाग्दत्ताविषयत्वादम्बिकाम्बालिकयोश्च विचित्रवीर्येण परिणीतत्वाद्दास्याश्च भ्रातृजायात्वाभावाद् ब्रह्मचारिणश्च मैथुनस्य निषिद्धत्वादपरितोषेण प्राक्कृतेत्युक्तम् । रामभीष्मयोर्यथा वा न विरुद्धत्वमिति परिहारं विवृणोति—रामेति । रतिपुत्रार्थत्वनिरासाय मातृशब्दः—नन्वेवं सति ।

'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
तस्या रजसि तं मासं पितरस्तस्य शेरते ॥'

इति विहितातिक्रमात्प्रत्यवायः स्यादित्याशङ्क्य, स्नेह-पितृ—भक्तिवशादित्युक्तम् । रामेण सीतास्नेहाद्भार्यान्तरागमनव्रतग्रहणात्, भीष्मेण च शन्तनवे सत्यवतीं तत्पितरं याचता त्वयि महाबले राज्याभिलाषुके तिष्ठत्येतरयाः पुत्राणां राज्यालाभान्नेमां ददामीति तत्पित्रा प्रत्याख्यातेन राज्यं नाहं करिष्यामामीति प्रतिज्ञाते, त्वय्यनिच्छत्यपि त्वत्सन्ततिभयान्नैतस्याः सन्तती राज्यभागिनी स्यादिति, तत्पित्रा पुनः प्रत्याख्यातेन ।

अपत्यहेतोरपि च करोम्येतद्विनिश्चयम् ।
अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥

इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणान्नैमित्तिकेन च व्रतेन नित्यस्यर्त्तुकालगमनस्य बाधाद्धर्ममात्रार्थमहं भार्यां परिणेष्यामीति परिभाष्य परिणीतायामगमनेऽप्यदोषः इत्या-

शयः । एवमप्यनपत्यत्वेन पितॄणामपाकरणात्प्रत्यवायः स्यादित्याशङ्क्य—**साक्षादित्युक्तम्** । साक्षादपत्याभ्यां कुशलवाभ्यां कृतपित्राऽनृण्यो रामः व्यवहितैर्विचित्रवीर्यस्यापत्यैर्धृतराष्ट्रादिभिः कृतपित्रानृण्यो भीष्मः ।

ननु रामस्य धर्मार्थदारान्तरसद्भावे यज्ञे यज्ञे प्रकुरुते सीतां पत्नीं हिरण्मयीमिति । हिरण्मयसीताकरणमनर्थकं स्यादित्याशङ्क्याह—**हिरण्मयीति** । अपवादभीत्या त्यक्ता या तद्गतं-तद्विषयं यदानृशंस्यम्-अनैष्ठुर्यम्, तदभावाशङ्कानित्त्यर्थमित्यर्थः । रावणापहारदूषितां सीतां रामो भजत इति लोकापवादभयमात्रेणासौ त्यक्ता, न सीताया दुष्टत्वात् नापि रामस्य सीतायां नैष्ठुर्यादिति द्योतयितुं लोकापवादभीतिं प्रति त्यागस्य नित्यसापेक्षत्वदर्शनाय त्यक्तशब्दस्य सीताशब्देन सह सापेक्षसमासः कृतः ।

कथं व्यवहितापत्यकृतपित्रानृण्यता भीष्मस्येत्यपेक्षायामाह—**भीष्मश्चेति** । ननु तयोर्द्धर्ममात्रार्थदारसद्भावः, क्वचिदपि पुराणेतिहासयोरनुक्तः । केवलप्रमाणेनावगम्येतेत्याशङ्क्याह—**केवलेति** । अपिशब्देनापत्यहेतोरद्य प्रभृतीति च विशेषणसामर्थ्यादप्येवमवगम्यत-इति सूचितम्, ननु मोहादप्यनुष्ठानोपपत्तेर्नैकान्तोऽर्थापत्तिः सम्भवतीत्याशङ्क्य ।

श्राद्धकाले मम पितुर्मया पिण्डः समुद्यतः ।
तं पिता मम हस्तेन भित्त्वा भूमिमयाचत ॥
नैष कल्पविधिर्दृष्ट इति निश्चित्य चाप्यहम् ।
कुशेष्वेव तदा पिण्डं दत्तवानविचारयन् ॥

इति भीष्मस्यात्यन्तनैपुण्यान्मोहासम्भवं दर्शयितुमाह—**यो वेति** । धृतराष्ट्रेऽप्येतमेव परिहारं दर्शयति—**धृतराष्ट्रोऽपीति** । हतेषु पुत्रेषु शोकार्तेन धृतराष्ट्रेण सकृत्पुत्रदर्शनं प्रार्थितम् । व्यासेन योगबलात्सम्पादितमित्याश्चर्यपर्वणि कथापरिहारवैभवाय प्रकारान्तरेणाविरोधमाह—**यद्वेति** । नन्वेवं सति अश्वमेधशतैरीजे धृतराष्ट्रो महामखैरित्यश्वमेधशब्दानुपपत्तिमाशङ्क्यौपचारिकत्वेनोपपादयति—**क्रतुफलेति** ।

युधिष्ठिरग्रहणेन पञ्चानामप्येकपत्नीत्वलक्षणस्य धर्मव्यतिक्रमस्य सूचितत्वात्तत्र मनुष्यप्रतिषेधाद्वेति परिहारं दर्शयितुमाह—**या चेति** । प्रतिकूलतयाऽपादितागमिता निराकृतेत्यर्थः ।

द्वैऽऽगयनीयमुपपादनप्रकारमाह - **यौवनेति** ।

कुमारी चैव तन्वङ्गी वेदिमध्यात्समुत्थिता ।
श्यामा पद्मपलाशाक्षी पीनोन्नतपयोधरा ॥ १ ॥
द्रौपद्येषा हि सा जज्ञे सुता ते देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्वत्यनिन्दिता ॥ २ ॥
स्वर्गस्त्रीपाण्डवार्थाय समुत्पन्ना महामखे ।

इत्यादिबहुप्रकारममनुष्यत्वोपपादनादविरोध इत्याशयः ।

नन्वमनुष्यत्वात्तस्या निषेधाभावेऽपि पाण्डवानां मनुष्यकुन्तीमाद्रीयोनिजत्वेन मनुष्यत्वान्निषेधो भविष्यतीत्याशङ्क्याह—सा चेति ।

लक्ष्मीश्चैषा पूर्वमेवोपदिष्टा भार्या चैषां द्रौपदी दिव्यरूपा ।

कथं हि स्त्री कर्मणोऽन्ते महीतलात्समुत्तिष्ठेदन्यथा दैवयोगाद् ॥

इति द्वैपायनेनैव तस्या स्त्रीत्वव्युत्पादानाच्छ्रिया सर्वसेव्यत्वादनिषेध इत्यर्थः । द्वैपायनीयस्य वेदिमध्योद्भवत्वाद्यभिधानस्यानिषिद्धत्वायामनुष्यत्वोपपादनार्थंतामभियुक्तवचनेन द्रढयितुमाह—अत एव चेति ।

यदि मे पतयः पञ्च वरमिच्छामि याचितुम् ।

कौमारमेव तत्सर्वं सङ्गमे सङ्गमे भवेत् ॥'

इति पूर्वजन्मनि तया च पञ्चकृत्वः पतिं मे देहीति याचितेनेश्वरेण पञ्च ते पतयो भविष्यन्तीत्युक्ते पुरुषसंयोगजयोनिक्षताभावरूपं कौमारं प्रार्थितमित्यभिधानात्प्रत्यहमक्षतयोनित्वरूपं कन्यात्वं तस्याः सूचितमिति मत्वा जगाद विप्रर्षिः कृष्णद्वैपायन इत्युक्तम् ।

कृष्णेनापि कर्णं भेदयितुं पाण्डवास्त्वामेव मातृसम्बन्धाज्ज्येष्ठं भ्रातरं मत्वा राज्येऽभिषेक्ष्यन्तीत्यादिप्रलोभयित्वा 'षष्ठे च त्वामहनि द्रौपद्यागमिष्यतीत्यभिधानादमनुष्यत्वेनानिषिद्धत्वं तस्याः सूचितमित्याह—अत एव चेति । यस्त्वश्रद्दधानतयेममागमिकमपि परिहारं नानुमन्यते, तं प्रत्येकपत्नीत्वमेव पञ्चानामसिद्धमिति दर्शयन्नन्यथा परिहारद्वयमाह—अथ वेति । निश्छद्रत्वायापारमार्थिकोऽपि साधारण्यव्यवहारः पाण्डवानां नीतिशास्त्रानुसारात्सम्भवन्तीति दृष्टान्तेनोपपादयन्नाह—यथेति । रजस्वलायाः स्वयं समागमनस्यात्यन्तमसम्भवाद् दुःशासनस्य चाप्रभुत्वाद् धृतराष्ट्र एव मामानयतीति ख्यापयितुं रजस्वलावेषं कृतवतीत्यर्थः । आनयनख्यापनप्रयोजनं सपुत्रकस्येत्युक्तं दुःशासनस्यानेतृत्वख्यापनेनाऽयशोऽतिशयोत्पादनं चशब्देन सूचितम् । अन्याय्यमानमिति पाठे दुःशासनो मां प्रत्यन्याय्यं करोतीत्यस्मिन्नर्थेऽन्याय्यप्रातिपदिकात्तत्करोति तदाचष्ट इति णिचमुत्पाद्यातो लोप इत्यकारलोपे कृते, णेरनिटीति णिलोपाद्रूपसिद्धिः, स्वापमानख्यापनप्रयोजनं च पाण्डवानां कोपातिशयोत्पादनं श्रीत्वदर्शनप्रयोजनं श्रीपतेर्नारायणस्यैवांशा वयमिति शत्रून्प्रति ख्यापनं परिहारवैभवमात्रार्थमस्य परिहारद्वयस्य सूचयितुमादिशब्देनानवक्लृप्त्यभिधानं दुराचारत्वाभ्युपगमेन धर्मबुद्ध्यानाचरणादसङ्कर इति परिहारवैभवार्थमेव रागेति परिहारान्तरं दत्तम् ।

युधिष्ठिरस्याचार्यब्राह्मणवधार्थानृतभाषणे रागादिकृतत्वमेव परिहार इति प्रायश्चित्तकरणेव दर्शयति—तथा चेति । ननु 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयत इति स्मृतेः कामकृते प्रायश्चित्तं नास्तीत्याशङ्क्य कामकृतेऽप्येक' इति स्मृतिरुदाहृता । अन्तेऽपीत्यपिशब्देनास्य दुराचारत्वेनापि युद्धान्ते प्रायश्चित्तकरणान्नातिगर्हणीयो युधिष्ठिर इत्युक्तम् ।

कृष्णार्जनयोर्मद्यपानमातुलदुहितृपरिणयने यथा वा न विरुद्धत्वमित्येतं परिहारमाह—यस्त्विति । ननु 'सर्वा न पेया ब्रह्मवादिभिरि'ति वेदाध्ययनयोगात्त्रैवर्णिकमात्रस्य त्रिविधसुरानिषेधावधारणेन ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति सामान्यशब्दस्यापि त्रिविधसुराविषयत्वनिश्चयान्न 'सुरा वै मलमन्नानामि'ति वाक्यशेषानुरोधेन पैष्टीमात्रविषयत्वं युक्तमित्याशङ्क्याह—मधुसीध्वोस्त्विति । सीधुः = गोडी । त्रिविधसुराव्यतिरिक्तताडादिप्रभवमद्यमात्रनिषेधो गौतमीये । यथा केवलब्राह्मणविषयः तथा मानवीयोऽपि त्रिविधसुरानिषेधो ब्रह्मवादिशब्दस्य ब्राह्मणमात्रविषयत्वात्केवलब्राह्मणविषय इत्यर्थं । कोऽसौ मानवीयो निषेधः केवलब्राह्मणविषय इत्यपेक्षायामाह—यदपीति । एतदपि मनुवचनं गौतमवचनवत्केवलब्राह्मणविषयमिति विपरिणमतानुषक्तेन पूर्वेण समापनीयं कथमस्य, केवलब्राह्मणविषयतेत्यपेक्षायामाह - ब्रह्मेति । ननु ब्रह्मवचनशीलत्वादेरपि त्रिष्वपि वर्णेपूपपत्तेस्तन्निमित्तत्वेऽपि कथं ब्राह्मणमात्रविषयतेत्याशङ्क्याह—प्रवचनेति । वदतेरुच्चारणमात्रार्थत्वे त्रयाणामपि तच्छीलत्वादिसम्भवात्ताच्छील्यादिवचनस्य णिनेरविशेषकत्वेनानर्थक्यापत्तेः । शूद्रनिवृत्तेश्च कर्तृमात्रवचनतृजादिप्रत्ययप्रयोगमात्रेण सिद्धेः । प्रवचनार्थे वदत्याश्रवणेन यस्यैव प्रवचनम् अध्यापनमस्ति, स एवाध्यापनरूपब्रह्मवदनप्रवृत्तिस्वभावत्वात् ब्रह्मवदनशीलस्तस्यैवाध्यापनं स्वधर्म इति, ब्रह्मवदनधर्मा स एवाभ्यासवसेनास्खलिताध्यापनशक्तत्वाद् ब्रह्मवदनसाधुकारी वा ब्रह्मवादिशब्देन विवक्षितो भवतीत्यर्थः । कथं वदतेः प्रवचनार्थतेत्याशङ्क्य ब्रूञ्वदत्योः - एकार्थत्वादित्युक्तम् । प्रवचनमपि वर्णत्रयसाधारणं कस्मान्न भवतीत्याशङ्क्य प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चय इति स्मृतिरुपन्यस्ता उपसंहरति —तस्मादिति ।

केवलब्राह्मणविषयत्वमेवास्य वचनान्तरे ब्राह्मणग्रहणेन द्रढयति—तथा चेति । न तु पैष्टीनिषेधस्य वर्णत्रयविषयत्वाभ्युपगमाद्यथैवैका तथा सर्वेति सुरामात्रनिषेधस्य वर्णत्रयविषयत्वप्रतीतेर्न केवलब्राह्मणविषयत्वं युक्तमित्याशङ्क्यैतद्वचनं ब्राह्मणविषयत्वे योजयति —तस्मादिति । ननु मद्यान्तरनिषेधस्यापि ब्राह्मणमात्रविषयत्वशङ्कानिवृत्त्यर्थं पदद्वयमप्यर्थवद्भविष्यतीत्याशङ्क्य पूर्वोदाहृतेन मानवीयेनैव श्लोकेनैतच्छङ्कानिवृत्तेरानर्थक्यं समर्थयते—श्लोकान्तरेति । नन्वेवमपि कृष्णार्ज्जुनयोः क्षत्रियत्वात्पैष्टीपानं विरुद्धमेवेत्याशङ्क्य तयोर्माध्वीपानस्मरणान्न पैष्टीपानशङ्कास्तीति परिहरति—तेनेति । केशवार्ज्जुनयोर्मध्वासवपानस्याविरुद्धत्वमेव द्रढयितुं वेदवाक्यमुपन्यस्यति—तथा चेति । क्षत्रियस्य मधुसीधुनिषेधाभावेनाभ्यनुज्ञानर्थक्यादन्यार्थदर्शनमेवदम् । अथापि केनचित्सामान्यवचनेन क्षत्रियेऽपि निषेधः प्रसज्येत' तथाप्यनेनानुज्ञातत्वाददोषः इति वाशब्देन सूचितम् । सत्यपि तु निषेधे प्रतिषिद्धाभ्यनुज्ञायाः विकल्पापादकत्वेन दुष्टत्वान्नायं पक्षविकल्पार्थो वाशब्दः । ननु 'नैव सुरा पीता हिनस्वी, ति सामान्याभिधानात्पैष्टीपानमपि क्षत्रियस्याविरुद्धं स्यादित्याशङ्क्याह—मध्विति । सुरा वै मलमन्नानामिति मनुना पैष्ट्या वर्णत्रये निषेधादस्याश्च श्रुतेरन्यार्थदर्शनमात्रत्वादित्याशयः ।

मातुलदुहितृपरिणयने विरोधाभावमनुभाषणपूर्वकं दर्शयति—यत्त्विति । अयमाशयः–नार्ज्जुनमातुलस्य वसुदेवस्यात्मजा सुभद्रेति क्वचिदाख्यायते, किंत्वनुजा वासुदेवस्य सुभद्रा वरवर्णिनीत्यादिव्यवहारदर्शनात्कल्प्यं स त्वन्यथाप्युपपत्तेर्नैकान्ततः सुभद्राया वसुदेवात्मजात्वं कल्पयितुं शक्नोतीति । एतदेव विवृणोति—यद्यपीति । ननु बलदेवस्य रोहिणीसुतत्वाद्वासुदेवस्य च देवकीसुतत्वादेकानंशायाश्च यशोदाकन्यात्वात्त्रयाणामपि निजत्वं नास्तीत्याशङ्क्योत्पत्तावित्युक्तम् ।

'सप्तमो देवकीगर्भो योंऽशः सोऽन्यो ममाग्रजः ।
स संक्रामयितव्यस्ते प्रथमे मासि रोहिणीम् ॥

इति देवकीगर्भसम्भूतस्यैव बलदेवस्य रोहिणीगर्भसङ्कर्षणे निद्राया विष्णुना प्रेरितत्वात्तया च तथाकृतत्वादेकानंशायाश्च ।

अष्टमे मयि गर्भस्थे कंसो यत्नं करिष्यति ।
या तु सा नन्दगोपस्य दयिता कंसगोपतेः ॥

यशोदा नाम भद्रं ते भार्यागोपकुलोद्वहा ।
तस्यास्त्वं नवमोऽस्माकं कुले गर्भो भविष्यसि ॥

इति यशोदागर्भसम्भूताया अप्येकानंशाख्याया निद्राया नवसंख्यापूरणेन विष्णुनैव निजत्वान्वाख्यानाद्देवक्या अपि दारिका मम जातेति कंसं प्रोवाच देवकीति स्वगर्भसम्भूतत्वान्वाख्यानानिजत्वमित्याशयः । सुभद्रा तु यद्यपि रोहिणीदुहितृत्वेनान्वाख्यायते, तथापि वसुदेवात्मजात्वे तद्भागिनेयस्यार्ज्जुनस्य परिणयनविरोधाद्वासुदेवस्य सापत्नमातू रोहिण्याः स्वसुः सुभद्रा दुहिता रोहिण्या एव वा पितृष्वस्रीयाया लाटादिषु भगिनीशब्दाभिलप्यत्वेन प्रसिद्धा या दुहिता तत्सपत्नीसुतस्य वासुदेवस्य भगिनीति व्यपदिश्यत इति यथासम्भवं व्यवधानं कल्पनीयमित्यर्थः । न त्वर्ज्जुनमातुः पृथाया वसुदेवभगिन्याः पित्रा शूरेण कुन्तीभोजाय दुहितृत्वेन दत्तत्वात्पिण्डगोत्रे जनयितुर्न भजेद्दत्रिमः क्वचिदितिवचनात्सापिण्ड्यनिवृत्तेर्वसुदेवाङ्गजाताया अपि सुभद्रायाः पृथात्मजस्यार्ज्जुनस्य परिणयनविरोधपरिहारसम्भवाद्व्यवधानकल्पनमनर्थकमित्याशङ्क्याह—वसुदेवेति । कुन्तीभोजदुहितृत्वनिमित्तः पृथायां कुन्तीव्यपदेशः यद्यप्यर्जुनः कुन्तीभोजदत्तायाः पुत्रः तथापि 'ऊर्ध्वंसप्तमात्पितृबन्धुभ्यो बीजिनश्चेति निषेधाद्वसुदेवाङ्गजातस्यापरिणेयेत्याशयः । ननु विरुद्धोऽप्ययमाचारो वासुदेवेनार्ज्जुनप्रीत्या प्रवर्त्तित इत्यपि परिहारोपपत्तेरनुक्तव्यवधानकल्पना न युक्तेत्याशङ्क्याह - येन हीति ।

एतमेव विरोधपरिहारन्यायं रुक्मिणोपरिणयनेऽप्यतिदिशति—एतेनेति । अद्यतनाचाराणामपि श्रुतिस्मृतिविरोधाविरोधाभ्यां प्रामाण्याप्रामाण्यव्यवस्थासिद्धेरसङ्कर इति परिहारं वक्तुमनुभाषणं तावत्करोति—यत्त्विति । परमतेन परिहारान्तरमुपन्यस्य दूषयितुमाह - तत्रेति । विरुद्धानामप्याचाराणां देशव्यवस्थया प्रामाण्यमिति परिहारान्तर-

मुपन्यस्यति—अन्ये त्विति । आपस्तम्बवचनं प्रपञ्चयति—येषामिति । (एतदेव परिहारं मनुवचनेन द्रढयन्नाह—तथेति ।) एतमपि परिहारं देशाचारकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति गौतमवचनबलेन—निराकरोति ।

ननु चेति एतत् परिहारवादी स्वाभिप्रायमाशङ्कते—आहेति । निराकरोति—न त्विति । प्रयोगं दर्शयति—स्मार्त्तेति । एतदेव व्याचष्टे—ग्रन्थेति । मन्वादयो ये ग्रन्थकाराः तद्गतायाः स्मृतेर्मूलाद्यो मन्वादिकृतो ग्रन्थ आम्नायशब्दवाच्यः, स स्मृतिग्रन्थाध्यायिनां तस्या एव मन्वादिगताया एव स्मृतेः ग्रन्थमूलत्वेनानुमेयाया धारणार्थत्वेनोक्त इत्यर्थः । अनेन च य आम्नायः, स स्मृतिधारक इति शङ्खलिखितवाक्यस्य वचनव्यक्तिर्दर्शिता । ततश्चार्थाद्यः स्मृतिधारको ग्रन्थः, स आम्नाय इत्युक्तं भवति ।

यद्वा यः स्मृतिधारकः, स आम्नाय इति वचनव्यक्त्या स्मृतिधारणार्थत्वेन य आम्नाय स किं गतायाः स्मृतेः; किं रूपः; केषां चेत्यपेक्षिते—ग्रन्थकारेत्याद्युक्तम् । अविभक्तिकाम्नायशब्दपाठे त्वाम्नायेन स्मृतिधारको ग्रन्थ इत्युक्ते किं गतायाः स्मृतेः; को ग्रन्थः; केषां चेत्याकाङ्क्षानिवृत्त्यर्थत्वेनैवद्व्याख्येयं स्मार्त्तधर्माधिकारादल्पाच्तरत्वेन घ्यन्तत्वेन च स्मृतिशब्दस्य पूर्वनिपातोपपत्तेर्न द्वन्द्वसमासाशङ्का ।

स्वमतमुपसंहरति—ततश्चेति । नन्वापस्तम्बवचनस्य तर्हि का गतिरित्याशङ्क्याह—आपस्तम्बेति । पञ्चधा विप्रतिपत्तिर्दक्षिणतोऽनुपनीतेन भार्यया च सह भोजनम्, पर्युषितभोजनमुच्छिष्टभोजनम्, पितृष्वसृमातुलदुहितृपरिणयनमिति । तथोत्तरतः पञ्चधा-ऊर्णाविक्रयः, सीधुपानमुभयतो दद्भिर्व्यवहार, आयुधीयकम्, समुद्रयानमितीति बौधायनेन स्मृतिविरुद्धदृष्टाचारोदाहरणानि दत्वेतर इतरस्मिन्कुर्वन्दुष्यति नेतरस्मिन्देशप्रामाण्यव्यवस्थया प्रामाण्यमापस्तम्बनोपन्यस्यति—मिथ्यैतदिति । गौतम उभयन्त्वेतन्नाद्रियते शिष्टस्मृतिविरोधादिति निराकृतत्वादापस्तम्बस्यापि मन्वादिवद्धर्मशास्त्रप्रवक्तृतया याज्ञवल्क्येन स्मरणात्तद्वचनस्य मिथ्यात्वायोगेऽपि गर्हानिराकरणमात्रपरतया तद्व्याख्येयमित्याशयः । मनुवचनं तु तेन यायात्सतां मार्गमिति विशेषणादविरुद्धकुलधर्मविषयत्वेनाविरुद्धम्, ननु विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वं विना कथं प्रवृत्तिरित्याशङ्क्याह—दृष्टेति ।

## पुंस्त्वस्य विवक्षेतिशंकासमाधाने

ननूपादेयगतत्वेन सुरापाननिषेधे पुंस्त्वस्य विवक्षितत्वान्न ब्राह्मणानां निषिद्धमित्याशङ्कते—आहेति । अनुवाद्यगतत्वेनाविवक्षामभिप्रेत्य परिहरति—उच्यत इति । आशङ्कितस्वाभिप्रायमाह—नन्विति । पार्श्वस्थो हननप्रतिषेधेऽपि भूतभाव्युपयोगित्वाभावेनासंस्कार्यत्वाद ब्राह्मणस्यानुपादेयपञ्चकव्यतिरिक्तत्वेनानुद्देश्यत्वमभिप्रेत्यातिप्रसङ्गद्वयमापादयति—उच्यत इति । एकत्वविवक्षाप्रसङ्गे को दोष इत्यपेक्षायामाह—अहत्वेति । पूर्ववच्छब्देन निषेधानतिक्रमलक्षणकृतार्थतोक्ता । आशङ्क्य द्वितीयातिप्रसङ्गगतं दोषं

तावत्परिहरति—आहेति । यद्यपि जातेर्वधपानायोग्यत्वेन ब्राह्मणशब्दस्य व्यक्तिपरत्वात्तद्गतमेकत्वमत्रोच्यते, तथाप्येकैकस्या एव व्यक्तेर्वधपानप्रसक्तेर्बहुवधपानेऽपि प्रत्येकमेकत्वसम्बन्धान्निषेधातिक्रमापरिहारान्निषेधानतिक्रमलक्षणकृतार्थत्वदोषो नास्ति स्वत्पक्षे तूपादेयार्थत्वेन ब्राह्मणशब्दस्य प्रकृतव्यक्तिविशेषाभावेन जातिपरत्वात्तस्यां चैकत्वसंख्यासम्भवलक्षणाकारणाभावाद् बहुवधपानेऽप्येकत्वानपायात्कृतार्थत्वलक्षणो दोषः परिहार्य एवेत्यर्थः ।

बहुवधपानेऽपि प्रत्येकं व्यक्तेरेकत्वसम्बन्धाज्जातेर्वैकत्वसम्बन्धादेकत्वविवक्षागतं यदनेकवधपाने निषेधानतिक्रमापत्तिलक्षणं दूषणमुच्यते; तन्न दूषणमिति योज्यम् ।

एतदेव विवृणोति—**एकैकस्या एव हीति** । व्यक्तिविशेषणत्वेन विवक्षितुमारभ्यमाणमप्येकत्वं नित्यप्राप्तत्वेनानूद्यमानत्वापत्तेः प्रतिषेध्यायां वधपानक्रियायामव्यभिचाराद्विशेषणत्वासम्भवेन प्रतिषेधेऽपि विशेषणत्वासम्भवान्नैष्फल्यापत्तेर्न विवक्ष्यते । जातौ तु व्यावर्त्यसंख्यान्तराभावात्तद्विशेषकत्वेन विवक्षाशङ्कैव नास्तीत्यर्थः । प्रथममतिप्रसङ्गं वैषम्योपपादनेन परिहरति—आहेति । पुंस्त्वविवक्षातिप्रसङ्गेऽपि स एव शङ्किता परिहारमाहेत्याहशब्दो योज्यः । वधनिषेधे ब्राह्मणस्यानुपादेयपश्वकव्यतिरेकेऽपि, तव्यद्वितीयाभ्यां कर्मत्वनिर्देशाच्छब्दवृत्तेर्नोद्देश्यत्वमुपपादयितुम्—**कर्मभूतस्येत्युक्तम्** । सुरापाननिषेधे च ब्राह्मणस्य प्रत्यवायव्यावृत्त्याऽनुग्राह्यत्वात् स्वर्गकामादिवदुद्देश्यत्वेऽपि निषेध्ये सुरापाने प्रथमातृतीयाभ्यां कर्तृत्वनिर्देशेनोपादेयत्वं वक्तुम्—**सुरापाने चेत्युक्तम्** । यथा स्वर्गकामस्य यागविधौ उद्देश्यत्वाल्लिङ्गाविवक्षा, औदुम्बरीसम्माने यजमानस्योपादेयत्वाद्विवक्षा तथेहापीत्यर्थः । वधनिषेधे ब्राह्मस्योद्देश्यत्वेनाऽविवक्षितलिङ्गत्वं प्रकटयति—**तथा हीति** । यस्माद् ब्राह्मणमुद्दिश्य हननस्य प्रतिषेधः तस्माद् ब्राह्मणे लिङ्गं न विधीयते, अन्यत्वेनार्थान्तरत्वेनावृत्तिप्रसङ्गादित्याशयः । यस्माद् ब्राह्मणहननमिति चोपरिष्टाद् वधोद्देश्यस्यापि वक्ष्यमाणत्वात्तस्मिन्पक्षे यस्माद्धननमुद्दिश्य तस्य प्रतिषेधः तस्माद्धनने कर्मण्युत्पन्नेन प्रतिषेधशब्देनोह्ये लिङ्गं न विधीयत इति योज्यम् । हननमितिपाठे हननं प्रतिषेधतो वाक्यस्य न लिङ्गं विधेयमित्यर्थः ।

यद्वा यो ब्राह्मण इति, यच्छब्दं नपुंसकलिङ्गत्वेन विपरिणतमनुषज्य यद्धननमित्युक्ते तत्प्रतिषेधतो वाक्यस्येति योज्यम् ।

### सर्वत्र लिङः प्रवर्तनावाचित्वमतोपन्यासः

ये तु प्रवर्त्तनावाचित्वेन क्लृप्तशक्तिकस्य लिङो नञश्चाभाववाचित्वेन क्लृप्तशक्तिकस्य निवर्त्तनावाचित्वायोगान्निषेधाधिकारेऽपि नञर्थस्य प्रागभावरूपस्य सिद्धत्वेऽपि रागाद्युपजनने विनाशोत्पत्तौ तत्परिपालनस्य प्रयत्नापाद्यत्वेन विधेयत्वोपपत्तेः प्रवर्त्तनैव लिङर्थ इत्येतन्मतामिप्रायमेतत् श्लोकं व्याचक्षते ।

तन्मतेनैवं योज्यं यो ब्राह्मण इति ब्राह्मणमुद्दिश्य पूर्ववचच ब्राह्मणोद्देशाभिधानस्योपलक्षणार्थत्वाद् वधं चोद्दिश्य यो ब्राह्मणहननाभावस्तं कुर्यादिति च वचनव्यक्त्यन्तरस्यापि सम्भवाद् ब्राह्मणवधाभावं चोद्दिश्य हननस्य प्रतिषेधादभावादन्यल्लिङ्गं ब्राह्मणे प्रतिषेधशब्दवाच्ये वाऽभावे वा शब्दाद् वधे वा न विधीयत इति । हननमिति पाठे प्रतिषेधत इति प्रथमार्थे तमङ्गीकृत्य यो ब्राह्मणो यद्धननम्, यः प्रतिषेध इत्युक्ते ब्राह्मणतद्वधतदभावानामुद्देश्यत्वात्तद्विशेषणं लिङ्गमन्यत्वापत्तेर्नं विधीयत इति योज्यम् । परिपालनीयत्वरूपेण च विधेयस्याप्यभावस्य स्वरूपेणोद्देश्यत्वमवि॰द्धम् ।

ननु वधोद्देश्यपक्षे ब्राह्मणस्याप्युद्देश्यविशेषणाविवक्षायामविवक्षा प्रसज्येतेत्याशङ्कां निराकुर्वन् श्लोकं व्याचष्टे—प्रतिषेधेति । नान्तरिक्षे न दिवीत्यादिवन्निषेधानुवादाशङ्कानिराकरणार्थो विधिशब्दः, निर्विषयवधाप्रसक्तेर्मृष्यामहे हविषा विशेषणमित्येनेन न्यायेनोद्देश्यान्तर्गत्यङ्गीकारेण ब्राह्मण्यविवक्षा युक्तेत्याशयः । सकृच्छ्रुतप्रत्ययस्यानेकार्थविधिपरत्वायोगान्निर्विषयस्य च लिङ्गस्य विधातुमशक्यत्वाद्यो ब्राह्मणः तं न हन्यात्तं च ब्राह्मणयुग्मं स मेति ब्राह्मणलिङ्गविधौ ब्राह्मणपदप्रत्यययोरावृत्तिः, यद् ब्राह्मणहननं तन्न कुर्यात्तं च पुंसो हननमिति वधलिङ्गविधौ हन्तिप्रत्यययोरावृत्तिरिति विवेकः । प्रतिषेधशब्दोऽपि कर्मव्युत्पत्त्या वधार एव प्रतिषेधे वध इत्यर्थः । अविभक्तिकवधशब्दपाठे वधश्चासौ प्रतिषेधश्चेति कर्मधारयावृत्तिग्रहणमुपलक्षणार्थम् ।

द्वितीयव्याख्याने तु प्रतिषेधविधिपरो हि प्रतिषेधशब्देनाभावोऽभिप्रेतः । शुद्धवधासम्भवात्तद्विशेषणब्राह्मण्यविवक्षाप्रतियोगिनिरूपणाधीनत्वेन शुद्धस्याभावाख्यस्य प्रतिषेधस्यासम्भवात्तद्विशेषणवधविवक्षाप्रतिषेधे वेति यो ब्राह्मणहननाभावः तं कुर्यात्तं च पुंसोऽभावमित्यभावलिङ्गविधौ नञ्प्रत्यययोरावृत्तिरुक्ता एवं तावन्नञुपहितस्य लिङो निषेधकत्वे प्रवर्त्तनाप्रतीत्यभावेन तदाक्षिप्तसाध्याभावाद् ब्राह्मणस्यानुपयोगित्वेनासंस्कार्यत्वादनुपादेयपश्वकव्यतिरेकेण वास्तवोद्देश्यत्वाभावेऽपि शब्दवृत्तेर्नोद्देश्यत्वादविवक्षितलिङ्गतोक्ता ।

यदा तु नञ्मात्रेण निषेधसिद्धेर्द्वेषाद्यर्थप्राप्तप्रवर्त्तनानुवादार्थत्वं लिङोऽङ्गीक्रियते, तदा प्रवर्त्तनाक्षिप्तवैरनियतिनादिसाध्यसिद्ध्युपयोगिहननसंस्कार्यत्वोपपत्तेर्वस्तुतोऽप्युद्देश्यत्वात्सुतरां लिङ्गाविवक्षेत्याह—येषां त्विति । प्रवर्त्तनात्मकनिषेधवचनत्वासम्भवप्रतिपादनार्थम्—अत्यन्तभिन्नावित्युक्तम् । वाक्यार्थभावनाविषयत्वेन विधिवन्निषेधस्यापि सर्वपदार्थान्प्रति प्राधान्यात्तद्वाचिनो नञोऽपि प्रत्ययानुग्राह्यत्वोपपादनायोपचाराद्वाक्यार्थावित्युक्तम् । नानाख्यातार्थस्यापि प्राधान्ये वाक्यार्थाव्यवस्था स्यादित्याशङ्क्य भावनैव सर्वपदार्थानुरञ्जनसहत्वात्सर्वत्र वस्तुतो वाक्यार्थः तद्विषयत्वेन तूपचाराद्विधिनिषेधयोर्वाक्यार्थत्वम्, न चान्यस्य भावनाविषयतास्तीति सूचयितुम्—द्वावेवेत्युक्तम् । तेषां मते श्रूयमाणमपि लिङ्गं प्रतिषेधं प्रत्यनुपयुज्यमानत्वात्तेनापरिगृहीतत्वादविवक्षितमित्यन्वयः । तदुपपादनार्थम्—नञित्याद्युक्तम् । पूर्वमतापेक्षयास्मिन्मते विध्यर्थनिषेधाधिक्याल्लिङ्गनिषेधे गौरवातिशयद्योतनार्थो विध्यर्थमपीत्यपि शब्दः । ब्राह्मणविशिष्टेन हननेन विशिष्टं विध्यर्थं प्रतिषिध्य

चरितार्थत्वान्न लिङ्गं ब्राह्मणे वधे विधौ वा कर्त्तव्यतारूपे नञि निषेद्धुं शक्नोति यद्ब्राह्मणं हन्यात्तं च ब्राह्मणं पुमांसं नेति नञ्ब्राह्मणपदयोरावृत्त्यापत्तेः। ब्राह्मणं न हन्यादित्यत्र च ब्राह्मणहननं न कुर्यादित्येव विगृह्याऽर्थप्रतीतेस्तच्च पुंसो हननं नेति वधे लिङ्गनिषेधेन नञ्हन्त्योरावृत्त्यापत्तेः। विधौ च लिङ्गनिषेधे तच्च पुंसः कर्त्तव्यं नेति नञ्प्रत्यययोरावृत्त्यापत्तेरित्यर्थः।

ननु विशिष्टविधिवद्विशिष्टनिषेधेनापि विशेषणानामर्थाक्षेपोपपत्तेर्नोच्चारणावृत्त्यापत्तिरित्याशङ्क्य - **अनूदितमित्युक्तम्**। विधेयस्य यागादेरन्यतो सिद्धस्यापि विधितः स्वरूपावधारणसम्भवेन स्वरूपानुवादानपेक्षत्वात्पश्वेकत्वाधिकरणन्यायेन विशेषणविवक्षा युक्ता। निषेध्यस्य त्वन्यतो सिद्धौ निर्विषयनिषेधायोगेनानुवादापेक्षावश्यम्भावाद्ग्रहाधिकरणन्यायेन विशेषणाविवक्षेति भावः। नन्वेवं सति ब्राह्मणहननयोरप्यविवक्षा स्यादित्याशङ्क्य—**पूर्वोक्तेत्युक्तम्**। सर्वव्यवहारनिरोधापादकत्वे कर्त्तव्यमात्रस्य निषेध्यत्वायोगाद् वधस्य च निर्विषयस्याप्रसक्तेः प्रतिषेध्यत्वासम्भवस्य पूर्वमेवोक्तत्वात् ब्राह्मणविशिष्टस्यैव विध्यर्थस्योद्देश्यत्वेनोभयोरपि ब्राह्मणहननयोरुद्देश्यान्तर्भावात्(यस्योभयं हविरार्त्तिमार्च्छेतीत्यत्र यस्य कस्यचिदार्त्तौ सत्यां निर्विषयकनिमित्तकयागस्याप्राप्तेः हविःशब्दस्य विवक्षा। तद्विशेषणीभूतोभयशब्दस्य प्राप्तानुवादकत्वात्, तद्विधाने वाक्यभेदापत्तेः। तस्मादुभयशब्दस्याविवक्षेति हविरार्त्त्यधिकरणराद्धान्तः[1]) हविर्वद्विवक्षा युक्तेत्याशयः। विध्यभावाद् वधकर्त्तव्यत्वस्याप्राप्तेरनुवादासम्भवमाशङ्क्य—**द्वेषादीत्युक्तम्**। नन्वाख्यातयोगित्वेनास्य नञो नास्तीत्यादिवदभावमात्रवाचित्वान्निवर्त्तनार्थत्वं न युक्तमित्याशङ्क्य—**प्रत्ययेत्युक्तम्**। 'य एवं विद्वान्पौर्णमासीं यजत, इत्यादावनुवादार्थेनापि यजिना सामानाधिकरण्यात्पौर्णमास्यादिशब्दस्य यागवाचित्ववदनुवादार्थेनापि प्रत्ययेन सम्बन्धान्नञोऽर्थान्तरवाचित्वेनानुपपन्नमिति सूचयितुं सम्बन्धग्रहणम्। यदा तु नञ्युक्तेष्वपि वाक्येषु नञो विषयसमर्पकत्वात्प्रवर्त्तनार्थं एव लिङादिरित्येवन्मताश्रयणेन पूर्वग्रन्थो व्याख्यायते, तदा येषां त्विति ग्रन्थस्य तन्निराकरणार्थत्वाद्द्वावेवेत्येवकारेणैकत्वं निराकृतम्। विधिवच्च निषेधस्यापि वाक्यार्थरूपा भावना विषय एव, न तु धात्वर्थस्यैव विषयिणीति—**वाक्यार्थशब्देनोक्तम्**। अत्यन्तभिन्नावित्यनेनैकत्वनिराकरणार्थं विपरीतस्वभावतोक्ता।

तथा हि—

फल-बुद्धि-प्रमेयाधिकारिबोधकभेदतः।
पञ्चधात्यन्तभिन्नत्वाद् भेदो विधिनिषेधयोः॥ १
विधिरिष्टफलोऽनिष्टपरिहारफलो परः।
प्रेरितोऽस्मीति धीः पूर्वे, वारितोऽस्मीति चापरे॥ २
विधेयस्येष्टहेतुत्वं विधिना च प्रमीयते।
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता॥ ३

---

१. अयं पाठ सर्वत्र नास्ति।

विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्त्तितम् ।
रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥ ४

नञ्वर्ज्जितो लिङादिश्च विधिबोधस्य कारणम् ।
लिङाद्यनुगृहीतस्तु नञ् निषेधस्य बोधकः ॥ ५

एतदेवाभिप्रेत्य वृहट्टीकायामुक्तम्—

अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः ॥ ६
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥ इति ।

शेषं समानम् ।

अस्मिन्नेव पक्षे स्पष्टीकरणार्थं वचनव्यक्तिमाह—**एषा ह्रीति** । तद्ब्ययुक्तवाक्यान्तराभिप्रायो वचनव्यक्त्यन्तरोपन्यासः । पूर्वस्मिन्पक्षे कीदृशी वचनव्यक्तिरित्यपेक्षायामाह—**विध्येकत्वे पक्षे पुनरिति** । विधिशब्दस्य लिङ्गादेरनुवादार्थत्वाभावान्नञा सहैकीकृतस्य तत्सहितस्य निषेधपरत्वं युक्तम् । द्वितीये व्याख्याने तु विधिरेवैकः सर्वत्र, न क्वचिन्निषेधोऽस्तीति विध्येकत्वमेकपदोपात्तयोर्धातुप्रत्ययार्थयोरुद्देश्योपादानविभागस्य शब्देन वक्तुमशक्यत्वेऽप्यर्थमात्रविवक्षया वधस्याप्यविधेयत्वादुद्देश्यत्वमाश्रित्य यद्ब्राह्मणहननमित्युक्तम् । शब्दव्यापारपर्यालोचने ब्राह्मणमात्रोद्देशः । विधिशब्दो न पृथिव्यामग्निश्चेतव्य इत्यादिनिषेधानुवादशङ्कानिराकरणार्थः । द्वितीयव्याख्याने प्रतिषेधशब्देनाभावोऽभिप्रेतः । न कुर्यादिति चाख्यातयोगिनो नञोऽभाववचनत्वादभावं कुर्यादित्यर्थः । न हन्यादित्युक्ते प्रधानभूतेनाख्यातेनैवान्वयात्स एवार्थः । हननव्यतिरिक्तं वा प्रागभावपरिपालनं विधीयते यो ब्राह्मणहननाभावस्तं कुर्यात्, पालयेदित्यपि वचनव्यक्त्यन्तरमिह द्रष्टव्यम् । वचनव्यक्तिभेदप्रपञ्चस्य प्रयोजनमुपसंहरति—**सर्वथेति** । सुरापाने वैषम्यमाह—**ब्राह्मण इति** । व्यतिरेकोपपादनार्थंकत्रेत्युक्तम् । ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्यत्राख्यातप्रत्ययोपात्तक्रियागुणभूतत्वेनोपादीयमानस्य संख्याया परिच्छेद्यत्वयोग्यस्य साधनांशस्य कर्तृविशेषणत्वेनोपादानान्न पेया ब्रह्मवादिभिरित्यत्र च गुणभूतत्वेनोपादीयमानत्वप्रतीतेरित्यर्थः । श्रुतावपीमं न्यायमतिदिशति—**तस्मादिति** । पार्श्वस्थापादितमतिप्रसङ्गद्वयं परिहृत्य ब्राह्मणानां सुरापानप्रतिषेधाभावशङ्कामुपसंहरति—**अतश्चेति** । सुरापाने ब्राह्मणस्यानुद्देश्यत्वेऽप्यनुवाद्यत्वाद्विशेषणाविवक्षेति परिहरति—**नैतदिति** । नन्वनुवाद्यत्वेऽप्युपादेयत्वाद्विशेषणविवक्षा भविष्यतीत्याशङ्क्याह—**नोपादेयत्वमिति** । उद्देश्यविशेषणविवक्षायां वाक्यभेदापत्तेस्तत्परिहारार्थत्वान्नोपादेयत्वस्य विवक्षाकारणत्वेऽप्यविधेयविशेषणस्य विधिना स्प्रष्टुमशक्यत्वाद्विधेयत्वमेव प्रधानं कारणमित्यर्थः । शुक्रान्वारम्भणादौ प्रकरणप्राप्तस्यापि यजमानस्य कर्तृत्वेन विधानाद्विशेषणविवक्षा युक्तेति भावः । नन्वनुवाद्यत्वेऽपि ब्राह्मणस्य क्रियाविशेषणत्वाभ्युपगमाच्छुद्धब्राह्मणविशिष्टक्रियानुवादवत्स्वविशेषणविशिष्टब्राह्मणविशिष्टक्रियानुवादेऽपि यत्पुमान् ब्राह्मणः सुरां पिबेदित्येकप्रसरोपपत्तेरावृत्तिलक्षणवाक्यभेदाभावादेकक्रियावशीकारेण चारुणैकहायनीवत्परस्परनियमोपपत्तेः । प्रत्युद्देश्यवाक्यपरि-

समाप्तिलक्षणस्यापि वाक्यभेदस्याभावात्किमिति विशेषणाविवक्षेत्याशङ्क्याह—अनूद्यमान इति। न केवलं प्राधान्येनानूद्यमानस्य प्राप्त्यपेक्षत्वम्, किन्त्वनुवाद्यविशेषणत्वेनाप्यनूद्यमानस्येति सर्वशब्देन सूचितम्। तत्रानुवादस्य प्राप्त्यपेक्षत्वे सत्यनूदितस्य सुरापानस्य स्त्रीपुंसकर्तृत्वेन प्रागेव प्रतीतेर्लिङ्गविशेषणस्यानाकाङ्क्षितत्वाद्विधेयेऽप्येककर्तृकपानाप्रसक्तेरनुवाद्यपानविशेषणत्वेनाज्ञातज्ञाप्येभ्यो ब्राह्मणादिभ्योऽन्यलिङ्गं न विधीयते। नानुवाद्यविशेषणत्वेनाज्ञातं ज्ञाप्यत इत्यर्थः।

नन्वप्राप्तनिषेधायोगान्निषेध्यप्राप्त्यर्थं 'ब्राह्मणः सुरां पिबेदित्यवान्तरवाक्यार्थपर्यवसानवेलायां विधेयविशेषणत्वेन लिङ्गादिविवक्षा प्रसक्ता पश्चान्निषेधान्वयेऽपि न केनचिद् बाध्यत इत्याशङ्कते तावत्—यदि हीति। तत्र किमप्राप्तस्य पानस्य निषेधायोगादन्यतश्चाप्राप्तेरर्थाद्विधेयत्वं कल्प्यते 'किं वा वाक्यस्वरसादेव विधिपरत्वं प्रतीयते इति विकल्प्य आद्यं तावत्पक्षं दूषयति—यत्त्स्त्विति। द्वितीयं दूषयति—प्रतिषेधेति। यदा च पानं न विधीयते, तदा तत्र ब्राह्मणादेः सत्यपि गुणवादेऽनुवाद्यत्वात्प्रतिषेधे चाक्रियात्मनि गुणत्वायोगात् प्रत्युत प्रत्यवायव्यावृत्त्यानुग्राह्यत्वेन प्राधान्याद्विधानं न सम्भवतीत्याह—तेनेति। भेदवादिमते नाद्यवचनव्यक्तौ पानस्य कर्त्तव्यत्वेनानूदितस्य प्रतिषेधः। विध्येकत्ववादिमतेन द्वितीयवचनव्यक्तौ पानं स्वरूपेणानूद्य प्रतिषेधेन विधीयमानेनेति कर्मव्युत्पन्नस्य विधिशब्दस्य प्रतिषेधशब्देन सह कर्मधारयः। द्वितीयव्याख्याने प्रतिषेधस्याभावस्य विधिनेत्यर्थः। एवं सत्यपि यदि स्त्रीकर्तृकं पानं लोके न प्राप्नुयात् ततस्तन्न निषेध्येत, न त्वेतदस्तीत्याह—लोके चेति। एवमनूद्यमानः सर्वो हीति पूर्वार्द्धोक्तमर्थं प्रकृते योजयित्वा, तत्रानाकाङ्क्षितमित्युत्तरार्द्धं योजयति—न चेति। नन्वेवं तर्हि यो ब्राह्मणः पिबेत्स पुमानिति ब्राह्मपदोपात्तनिषेधपरित्यागेनानुवादपदान्तर्गतसन्निकृष्टब्राह्मणपदोपात्तलिङ्गसम्बन्ध एव केवलो विधीयतामत आह—न चास्येति। निषिद्धश्रुतिवैय्यार्थ्यापत्तेरिति भावः। उपसंहरति—ततश्चेति। प्रासङ्गिकाशङ्काशेषनिराकरणावताराय—उभयत्रापीत्युक्तम्।

ननु वधनिषेधे लिङ्गाविवक्षायां ब्राह्मणवधेऽपि ब्रह्महत्यापत्तेर्महापातकनिमित्तकर्महान्यादिप्रसङ्गः स्यादित्याशङ्काशेषमाह—नन्विति। अत्र कुत्रावस्था अस्तीत्यात्रेयी गर्भिणी। अभ्युपगमेनैव परिहरति—ब्राह्मणेति। न च महापातकत्वे प्रायश्चिताल्पत्वं विरुद्ध्यते, पुंब्राह्मणवधेऽपि रहस्ये प्रायश्चित्ताल्पत्वदर्शनादित्याह—न चेति। उपसंहरति—तस्मादिति। सुरापानस्य तु स्त्रीकर्तृकस्यापि प्रायश्चित्तान्तरानाम्नानान्निःसन्दिग्धं महापातकमित्यहिच्छत्रब्राह्मणीसुरापानस्य स्मृतिविरोधो दुःपरिहर इत्याह—सुरापाने पुनरिति।

नन्वापस्तम्बेन देशव्यवस्थया विरुद्धाचारप्रामाण्याभिधानाद्देशान्तरनिवासिब्राह्मणीविषया सुरापाननिषेधस्मृतिः कल्पयिष्यत इत्याशङ्क्याह—यापि चेति। स्मृतिविरोधेऽद्यतनाचाराप्रामाण्यं विस्तरेणोपपाद्योपसंहरति—इतीति।

एवमुत्सूत्रं पूर्वपक्षं कृत्वा सदाचारप्रमाण्यप्रतिपादनपरतयाऽपि वेति सूत्रं व्याख्याय, इदानीं सूत्रारुढं पूर्वपक्षं कर्त्तुं न शास्त्रपरिमाणत्वादिति पूर्वाधिकरणसिद्धान्तसूत्रमाचारा-

धिकरणपूर्वपक्षेऽप्यावृत्त्या योजयितुमुपक्रमते—अथ चेति। पूर्ववर्णके दुराचारसङ्करेण पूर्वपक्षाभिधानाय सर्वदेशनिवासिशिष्टाचारोदाहरणाद् तद्व्यावृत्त्यर्थमार्यावर्त्तनिवासिशिष्टाचाराणामेवोदाहरणत्वमाह—इहेति। अर्थकामाचारव्यावृत्त्यर्थं धर्माचाराणामेवोदाहरणत्वं दर्शयन्सन्देहमाह—धर्मबुद्धयेति। दुराचारसङ्करस्याप्रामण्यहेतोरायावर्त्तनिवासिधर्माचारेष्वसम्भवात् सन्देहहेतुं प्रश्नपूर्वकमाह—कुत इति। नन्विदं कर्त्तव्यमिदं कर्त्तव्यमिति सदाचाराणां विशेषरूपेणानिबन्धनेऽपि, सदाचारः प्रमाणमिति सामान्यतो निबन्धनमस्तीत्याशङ्कते—ननु चेति। स्मृत्यधिकरणसाधितात्स्मृतिप्रामाण्यादेवाचारप्रामाण्यं सिद्धमित्यर्थः। अष्टकादिस्मृतीनां मूलश्रुत्यदर्शनेऽपि तदभावे हेत्वदर्शनादविरुद्धं श्रुत्यनुमानम्। आचारप्रामण्यस्मृतौ तु मूलश्रुत्यभावसाधनस्य हेतोराचारमूलत्वलक्षणस्य स्मृत्यन्तरेभ्योऽतिरिक्तत्वात्स्मृत्यन्तरन्यायेनाचारप्रामाण्यस्मृतिप्रमाण्यासिद्धेर्न स्मृतिबलादाचारप्रामाण्यसिद्धिरिति। परिहरति—नेति। एतदेव विवृणोति—शाखान्तरेति। आचारदर्शनमात्रप्रवृत्तमेवोपपादयितुं प्रतिजानीते—यथैव चेति। उपपादयति—यदि हीति। अतो न्यायमूलत्वात्स्मृतेर्न्यायसाध्वसाधुतैव विचार्येत्याह—इतीति। सन्देहमुपपाद्य पूर्वपक्षसूत्रगतनञर्थव्याख्यानार्थं सिद्धान्तेनोपक्रमते—तत्रेति। विरोधाधिकरणे विरुद्धस्मृतिप्रामाण्यापवादेनाविरुद्धस्मृतिप्रमाण्यं निरपवादमुक्तमिति मत्वा द्वयबलेनेत्युक्तम्। प्रतिज्ञानम्=उपक्रमः। घञन्तात्करोतेः कारशब्दं व्यापारवचनं व्युत्पाद्य सोऽस्यास्तीति मत्वर्थीयेनिप्रत्यान्तस्य कारिशब्दस्य कर्तृवचनत्वाच्छ्रौतस्मार्तैस्तुल्याः कर्त्तार एषामिति विग्रहः कार्यः। मन्वादिभिश्चाचारमूलश्रुतिदर्शनेऽपि तदर्थस्य शिष्टव्यवहारादेव सुज्ञानत्वेनानिबन्धनोपपत्तेः स्मृतितोऽप्याचारप्रामाण्यं सिध्यतीत्याह—स्मृतिकारेति। उपक्रान्तसिद्धान्तनिराकरणार्थत्वेन पूर्वपक्षसूत्रमवतार्य व्याख्यातुमध्याहारेण पूरयति—तदिति। व्याचष्टे—शास्त्रेति।

तृतीयासमासाभिप्रायं कर्मव्युत्पत्तिप्रदर्शनम्, बहुव्रीहौ तु भावव्युत्पत्तिरेव षष्ठीसमासेन च विद्यास्थानातिरिक्तत्वेन शाक्यादिग्रन्थवदाचाराणामप्यनेनाप्रामाण्यमुच्यत इत्यन्यथा व्याचष्टे—परिमितानि चेति। ननु शब्दात्मकानामेव शास्त्राणामियत्तानियमादशब्दात्मकस्यापि सदाचारस्य पुरुषहितबोधकत्वाच्छास्त्रत्वं भविष्यतीत्याशङ्क्य स्वरसेन त्वेषां धर्मबोधकत्वम्, आचारश्चैव साधूनामिति स्मृत्यनुसाराद्वेति विकल्प्य आद्ये पक्षे स्वरूपेण तावदाचारस्य क्रियारूपस्याबोधकत्वाच्छास्त्रत्वमनाशङ्क्यमेवेत्याह—न चेति। ननु स्वरूपेणाबोधकत्वेऽपि शिष्टानुष्ठानदर्शनादस्मदादीनां धर्मबुद्ध्युत्पत्तेस्तद्द्वारेण शास्त्रत्वं भविष्यतीत्याशङ्क्याह—नापीति। शिष्टानुष्ठानान्यथानुपपत्त्या अनुष्ठेयस्योत्सवादेर्धर्मत्वं कल्प्यम्, भ्रान्त्यादिनापि त्वनुष्ठानोपपत्तेर्नैकान्ततः शिष्टैरनुष्ठीयमानस्याचारस्यास्मदादिभिर्दर्शनम्, शिष्टाचारानुष्ठानं वा धर्मत्वं कल्पयितुं शक्यम्, विशेषतश्च दर्शनस्यानुष्ठानमात्रानुविधायित्वेनात्यन्तपरायत्तत्वादनुष्ठानस्य च प्रमेयत्वादबोधकत्वादित्यर्थः। द्वितीयपक्षे दूषणमाह—स्मृतेस्त्विति।

तृतीयप्रकारेण व्याख्यातुं विकल्पयति—किं चेति। एकश्रुत्यनुमानासम्भवं तावदुपपादयति—न तावदिति। अनेकश्रुत्यनुमानासम्भवमपरिमितानां पाठाशक्तेरपठितानां

च मूलत्वासम्भवेनोपपादयति—यावदाचारं हीति । तुशब्दार्थे हिशब्दः । ननु सर्वाचाराणामेकश्रुतिमूलत्वासम्भवेऽप्येकदेशादिगतानां भिन्नानामप्येकमूलत्वोपपत्तेरनेकश्रुत्यनुमानेऽप्यल्पत्वान्न वेदसम्मितश्रुतिकल्पनापत्तिरित्याशङ्क्याह—एकस्य त्विति । एकदेशादिगतानामप्यनेकेषामेकोपलक्षणाभावान्नैकमूलत्वोपपत्तिरिति भावः ।

अभ्युपगम्याप्यल्पत्वेन शक्यपाठत्वमनिबन्धनामूलदर्शनाभावोऽवसीयत इत्याह—न चेति । ननु प्रत्यक्षोपलम्भाभावेऽप्याचारदर्शनादेव तत्तदाचारमूलभूताः श्रुतीरनुमायाऽन्येषामपि तथैव श्रुत्यनुमानसिद्धयर्थं सामान्यमात्रेणाचारप्रामाण्यमुपनिबद्धमित्याशङ्क्याह—न चेति । मूलत्वेनाचारस्य बलवत्त्वोपपत्तेर्मूलित्वेन च स्मृतेर्दौर्बल्यापत्तेर्वक्ष्यमाणं स्मृतिबलीयस्त्वं विरुध्येतेत्याशयः । मूलमूलिभावस्य बलाबलभावस्य च विपर्ययप्रसङ्गादिति वा योज्यम् ।

अस्मिन्नेवार्थे शास्त्रस्य परिमितस्य स्तोकस्यैवानुमातुं शक्यत्वादितिसूत्रं योजयति—अत इति । ननु बहूनामप्याचाराणामेकैव स्मृतिः सरूपा श्रुतिर्मूलभूतानुमास्यतेऽत आह—न चेति । न केवलमाचाराणां श्रुतिमूलत्वाभावप्रसङ्गः, किं तु श्रुतेरेवाचारपूर्वकत्वापत्तेर्विपर्ययोऽपि प्रसज्येतेत्यर्थः । एतदेवोपपादयति—शिष्टाचार इति । एतमेवार्थमर्थान्तरन्यासेन दर्शयितुं शास्त्रशब्दे शास्त्रीयमर्थं लक्षयित्वा तस्य परिमित्वादल्पत्वादिति चतुर्थं व्याख्याप्रकारमाह—शास्त्रेति । यद्वा शास्त्रीयस्यार्थस्य परिमितत्वात्कतिपयत्वान्मानान्तरागोचरत्वादिति वदतानेन सूत्रेण परिमिते मानान्तरागोचर एवार्थे शास्त्रं प्रवर्त्तते । सदाचाराणां तु शिष्टव्यवहारादेव सिद्धत्वेन मानान्तरगोचरत्वान्न शास्त्रविषयत्वं सम्भवतीत्युक्तमिति पञ्चमं व्याख्याप्रकारमाह—परिमितेति । एतमेवार्थमुपपादयितुं गृहस्थादिकर्मणामशास्त्रीयत्वप्रतिपादनार्थस्य 'अशास्त्रा तूपसम्प्राप्तिः शास्त्रं स्यान्न प्रकल्पकं तस्मादर्थेन गम्येताऽप्राप्ते शास्त्रमर्थवदि'(६.२.१८)त्यस्य षष्ठाध्यायगतस्य सूत्रस्यैकदेशं पठति—अप्राप्ते इति । मानान्तरगोचरत्वमेवार्थं सुखाङ्गत्वेन द्रढयति—दृश्यमानेति । अर्थसुखाङ्गानां धर्मत्वाभावे दृष्टान्तमाह—वैश्यानामिति । पूर्वपक्षमुपसंहरति—तस्मादिति । शीलात्मतुष्टिग्रहणेन तयोरपि तुल्यन्यायत्वाद्विचारविषयत्वं दर्शितम्, स्वभावरचितं शीलम् ।

निषेधस्याश्रौतत्वे नञो सामञ्जस्यापत्तेरपरितोषात् सिद्धान्तोपक्रममपि सूत्रारूढं कर्तुमुपक्रमते—यद्वेति । अस्मिंश्च पक्षे शिष्टाकोपसूत्रमप्यावृत्त्या वेदाविरुद्धशाक्यादिवाक्यविषये पूर्वपक्षसूत्रत्वेन शिष्टाचारविषये च सिद्धान्तोपक्रमार्थत्वेन योज्यं द्वितीयवर्णकवदत्राप्यार्यावर्त्तनिवासिशिष्टाचारणामेवोदाहरणत्वमनिबन्धनत्व-कर्तृसामान्यरूपधर्मद्वयदर्शनं च सन्देहकारणम्, सूत्रयोजनामात्रतिरिक्तमिति दर्शयन् सिद्धान्तोपक्रमं सूत्रारूढं करोति—इहेति । तत्राकोपाविरुद्धशब्दयोः पौनरुक्त्यमाशङ्क्याद्येनाविरोधोऽभिहितो द्वितीयेन प्रामाण्यमिति स्वरूपतस्तावद्व्याचष्टे—तथा हीति । नन्वविरोधेऽप्याचाराणां विद्यास्थानातिरिक्तत्वाच्छाक्यादिग्रन्थवदप्रामाण्यं भविष्यतीत्याशङ्क्य, स्मृतिकारानुज्ञानेनातिरेकस्यादोषत्वं दर्शयितुं विरोधे सत्येवाप्रामाण्यं स्यात् नान्यथेत्येवं परतया व्याचष्टे—यदीति ॥ ७ ॥

॥ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ५ ॥

भा० प्र०—"अपि वा" = पूर्व पक्ष के निवारण अर्थ को कह रहा है, "कारणा-ग्रहणे" = कारण का अर्थात् स्मृति विहित कर्म के अप्रामाण्य का कारण जो लोभ मोह आदि हैं, उनके अग्रहण में अर्थात् ग्रहण या ज्ञान न होने पर, "प्रयुक्तानि" = स्मृति-प्रयुक्त अर्थात् स्मृति से विहित आचमन आदि कर्म, "प्रतीयेरन्" = अविरुद्ध अर्थात् प्रमाण या अनुष्ठेय के रूप में प्रतीत होंगे।

स्मृति विहित कर्म के अप्रामाण्य का कारण जो लोभ मोह आदि हैं उनकी सम्भावना न रहने पर श्रौत क्रम आदि के विरोधी होने पर भी आचमन आदि स्मार्त कर्म को प्रमाण अर्थात् अनुष्ठेय समझना चाहिए।

आशय यह है कि सूत्र में "अपि वा" इस शब्द से पूर्वपक्षी की आशङ्का का निवारण किया गया है। श्रौतकर्म काल एवं परिमाण आदि के विरोधी होने पर भी आचमन आदि स्मार्त पदार्थ अर्थात् कर्म अनुष्ठेय होगा, क्योकि इन कर्मों के अप्रमाण्यका कोई कारण नहीं है। लोभ, मोह आदि ही अप्रमाण्य का कारण है; किन्तु आचमन दक्षिणाचार आदि स्मार्त कर्म लोभादिमूलक नहीं है। अत एव उनका अप्रमाण्य नहीं है, अपितु प्रमाण होने से अनुष्ठेय हैं। इस स्थल में आचमन आदि पदार्थ अर्थात् पदप्रतिपाद्य कर्मफल धर्मी है और आनन्तर्य आदि उस पदार्थ के आश्रित धर्म है। अतः धर्म और धर्मी में विरोध होने पर धर्मी ही निर्बाध होता है। क्योंकि, धर्मीरूप आश्रय के बाधित होने पर धर्मरूप आश्रित रह ही नहीं सकता है। इसलिए पदार्थ (कर्म) में आश्रित आनन्तर्य आदि क्रम श्रौत होने पर भी उसके द्वारा स्मृतिविहित आचमन आदि कर्मों की बाधा नहीं हो सकती है। धर्मी के आविर्भाव के बाद धर्म का आविर्भाव होने से आचमन आदि धर्म के पूर्व में या एक समय में आनन्तर्य आदि रूप क्रम आदि उपस्थित ही नहीं है। सभी शास्त्रीय कर्मों का शुद्ध होकर अनुष्ठान करना पड़ता है—यही नियम है। आचमन यज्ञोपवीतित्व, दक्षिणाचारता आदि शुद्धि या शौच का हेतु है, अतः ये कर्म के ही अङ्ग है। अङ्ग प्रधान या अङ्गी की परिपूर्णता का ही साधन करता है, प्रधान का बाधक नहीं होता है, क्योंकि जो जिसका अङ्ग नहीं होता है ऐसा समकक्ष पदार्थ (कर्म) एक में दूसरे की बाधा को उत्पन्न कराता है। किन्तु आचमन आदि स्वतन्त्र कर्म नहीं हैं, ये सभी कर्म के ही अङ्ग हैं। इसलिए ये समय में ही अनुष्ठेय हैं। इसीलिए शास्त्रकार ने कहा है—

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखोव्युपवीतश्च यत्करोति न तत्कृतम्॥

अर्थात् "सदा उपवीति अर्थात् बायें कन्धे पर यज्ञोपवीत को धारण करे एवं सभी कार्य शिखा को बाँधकर करे शिखाहीन होकर एवं उपवीती हुए विना, जो कुछ भी करता है, वह न करने के समान है इस प्रकार वामहाथ से किया गया कार्य भी

अग्राह्य ही रहता है। इसलिए आचमन उपवीतित्व बद्धशिखत्व, दक्षिणाचारता अवश्य ही कर्तव्य है।

सभी स्थलों में कृताचमनत्व, यज्ञोपवीतित्व, बद्धशिखत्व, दक्षिणाचारता आदि विचारित विषयों में सभी का अनुकूल वेद वचन विद्यमान रहने से इनको स्मार्त कर्म अर्थात् अप्रत्यक्ष श्रुतिविहित कर्म मानकर श्रुतिविहित क्रम इत्यादि के साथ इनका विरोध उपेक्षणीय है या नहीं---इसप्रकार किया गया विचार दृढ़ नहीं हैं, कारण; ये यदि प्रत्यक्षश्रुति से उपदिष्ट न होते तो श्रौत कर्म और स्मार्त कर्म या पदार्थ का विरोध उपेक्षणीय है कि नहीं—इस प्रकार का विचार बलवान् होता, किन्तु, दोनों ही श्रौत हैं तब उनका विरोध रहने पर भी वे प्रबल नहीं है। इसलिए, वार्तिककार ने इस स्थल में भिन्न प्रकार से ही अधिकरण की रचना की है। अतः पूर्व अधिकरण का "विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्" "हेतुदर्शनाच्च" शिष्टाकोपेऽविरुद्धमिति चेत्" "न शास्त्रपरिमाणत्वात्" इन चार सूत्रों को लेकर एक अधिकरण माना है। "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" यह सूत्र एवं आगे के सूत्र का 'तेष्वदर्शनात् विरोधस्य' यहाँ तक के अंश को ग्रहण कर दूसरा अधिकरण होता है। इस प्रकार जिन दो अधिकरणों की रचना हुई है; उनमें पूर्व अधिकरण में पाञ्चरात्र, पाशुपत एवं शाक्यमत के प्रामाण्य का खण्डन किया गया है। पाञ्चरात्र, एवं पशुपत ये कही वेदमूलक भी हैं, किन्तु शाक्यमत तो सर्वथा वेद बाहर है। इसलिए शाक्यमत का खण्डन ही वार्त्तिक मत में प्रदर्शित किया गया है।

पूर्व अधिकरण के द्वारा स्मृतियों का वेदमूलकत्व सिद्ध किया गया है, प्रदर्शित दृष्टि के अनुसार यदि शाक्य आदि के स्मरणों को भी वेदमूलकत्व मानकर उनके प्रामाण्य की आशङ्का भी की जा सकती है, शाक्य सिंह (बुद्ध, महावीर) क्षत्रिय हैं, अतः क्षत्रिय मनु की स्मृतियों के समान उनका भी प्रामाण्य मानने में क्या आपत्ति है, क्योंकि, उन लोगों ने भी वेद का ज्ञान किया होगा? इस प्रसङ्ग में यह कहना है कि "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्", "हेतुदर्शनाच्च"। आशय यह है कि शाक्य आदि की स्मृतियों का वेदमूलकत्व अनुमान नहीं हो सकता है, क्योंकि "असति अनुमानम्" वेद का विरोध न रहने पर वेदमूलकता का अनुमान हो सकता है, किन्तु, "विरोधे त्वनपेक्ष्यम्" अर्थात् शाक्य आदि की वेद विरुद्धता अतिशय स्पष्ट है, इसलिए उनकी स्मृतियाँ वेदमूलक नहीं है। धर्म का उपदेश करना क्षत्रिय का कर्तव्य नहीं है। ब्राह्मण से अतिरिक्त वर्णों के लिए धर्म का उपदेश करना निषिद्ध है, केवल ब्राह्मण का ही यह कार्य है। बुद्ध आदि ने क्षत्रिय होकर भी अशेष जीवन को धर्म के उपदेश देने में ही व्यतीत किया है, अतः उनका सम्पूर्ण जीवन शास्त्र विरुद्ध कर्मों के अनुष्ठान में ही व्यतीत हुआ है। आत्मा का उद्धार करना ही सभी लोगों के लिए प्रथम कर्तव्य के रूप में शास्त्र में कहा गया है, किन्तु, उन्होंने कहा कि मैं अनन्त नरक में ही जाऊँ कोई क्षति नहीं है, संसार के

प्राणियों की मुक्ति हो, जो व्यक्ति आत्मघाती है स्वयं ही धर्म को नहीं मानता है, नरक का भय नहीं करता है—वह धर्म का उपदेश कैसे देगा ? वह उपदेश दे भी तो उसका उपदेश वेदमूलक कैसे हो सकता है ? उन्होंने वेद से हीं धर्मतत्त्व की अवगति की और वेद के विरुद्ध प्रचार किया, माता और पिता का द्रोही है जो माता और पिता को जनक और जननी नहीं मानता है, गौतम बुद्ध ने भी वेद से ही धर्म के तत्त्व की अवगति की किन्तु वह अपने धर्मोपदेश को वेदमूलक नहीं मानता है, धर्म और अधर्म प्रत्यक्ष के अयोग्य हैं, अतः कितना बड़ा भी योगी क्यों न हो, वह अपने प्रभाव से उनका प्रत्यक्ष कर उपदेश नहीं दे सकता है। इसलिए, जब उस मत को मानने वाले स्वयं ही जब धर्म को वेदमूलक नहीं मानते हैं, तब श्रद्धा के कारण जड़मति वर्णाश्रम को मानने वाला उनके उपदेश को वेदमूलक कहे तो यह कैसे सङ्गत होगा ? "हेतु-दर्शनात् च"। इनकी स्मृतियाँ लोभ आदि अनेक कारणों के वर्तमान रहने से, उनको वेदमूलक नहीं कहा जा सकता है। बौद्धगण अपने सम्प्रदाय में अनुस्मृत स्मृतियों को वेदमूलक होने से प्रमाण नहीं माना है। अपि तु अनेक हेतु जालों से उनके उपदेश की धर्मप्राणता सिद्ध करने का प्रयास किया है। वैदिकों के धर्मोपदेश के आधार पर यागादि को धर्म नहीं माना है। यदि इस प्रसङ्ग में यह कहा जाय कि "शिष्टाकोपे अविरुद्धम्"। साधारण रूप में बुद्ध आदि की स्मृतियाँ अनादरणीय भले ही हो, किन्तु अहिंसा, शम, दम, दान आदि विषयों की कर्तव्यता का उपदेश होने से उनके साथ वेदानुशिष्टकर्मों का किसी प्रकार का विरोध न होने से वे प्रमाण हैं और वे धर्मार्थ में बुद्धादि की स्मृति होने पर भी ज्ञातव्य क्यों नहीं होगी ? अर्थात् ज्ञातव्य ही होगी। इस प्रसङ्ग में कहना है कि ऐसा नहीं हो सकता है, क्योंकि, यह सङ्गत नहीं है, "शास्त्रपरिमाणत्वात्" क्योंकि, सभी शास्त्र परिमित हैं, क्योंकि किस-किस शास्त्र से धर्म ज्ञातव्य है—इसका शास्त्रों में ही निर्देश कर दिया गया है। बौद्ध आदि स्मृतियाँ उनके अन्तर्गत नहीं हैं, अतः उनसे धर्म ज्ञातव्य नहीं है। "मनुर्वै यत्किञ्चिन आवदत् तद् भेषजम्" अर्थात् मनु ने जो कहा है वह मनुष्य के पाप=व्याधि का भेषज=औषध है, इत्यादि वेद वचन के द्वारा ही निर्दिष्ट है। किस शास्त्र से धर्म ज्ञातव्य है—इसमें वेद का निर्देश ही प्रमाण है। वेद के अनुसार ही स्मृति में भी कहा गया है—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

चार वेद, छ वेदाङ्ग, पुराण, न्याय, मीमांसा एवं धर्मशास्त्र ये चौदह स्थान अर्थात् शिष्टों से परिगृहीत शास्त्र ही विद्या एवं धर्म के चतुर्दश स्थान हैं। ये नित्य हैं, प्रत्येक कल्प में मनु आदि महर्षिगण पूर्ववत् वेदार्थ का स्मरणादि (स्मृतियाँ) निबद्ध कर देते हैं, आकल्प विच्छेद से ये सर्वथा रहित हैं। अतः, इनसे ही धर्मतत्त्व ज्ञातव्य है बौद्ध ग्रन्थों से ज्ञातव्य नहीं हैं।

अहिंसा, दान आदि वेद से उपदिष्ट होने पर भी बौद्धों के संस्पर्श से सुराभाण्ड में स्थित गङ्गाजल के समान हैं, कुत्ते के चमड़े से बनायी गई दृति (किस्ति) में रखे गये गोदुग्ध के समान वह अपवित्र हो जाने से उनकी स्मृतियों से वे ज्ञातव्य होने पर धर्म नहीं होंगे। अपितु वेद में उल्लिखित महर्षियों के ग्रन्थों से ही धर्म होता है—इसीलिए आचार्य कुमारिल भट्ट ने कहा है—

"वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥"

वेदोक्त अहिंसा आदि और बुद्धोपदिष्ट अहिंसा आदि समान नहीं है, क्योंकि उनके मत में हिंसात्व अवच्छेद में हिंसा वर्जित होने से ज्योतिष्टोम आदि यज्ञ में भी हिंसा परित्याज्य होगी, किन्तु, इस पक्ष में वेद विधि रूप में विहित हिंसा में पाप नहीं है, अपि तु वेदविधि के अविषयत्व एवं वेद निषिद्धत्व रूप में हिंसा पाप है। ज्योतिष्टोम आदि यज्ञ में हिंसा वेदविहित होने से वह अवश्य अनुष्ठेय है, किन्तु उनकी स्मृति के अनुसार अहिंसा अवलम्बनीय होने से ज्योष्टोमादि यज्ञ के स्थल में भी हिंसा का परित्याग करना होगा। सन्देह नहीं कि आज वौद्ध धर्मों में अतिशय अनुराग होने से विहित स्थल में भी हिंसा के वर्णन का विपुल प्रयास चल रहा है साथ ही अमेध्य मांस भक्षण की प्रवृत्ति भी उसी अनुपात में बढ़ रही है। धन्य है धर्म और अन्धानुराग-परम्परा एक ओर हिंसा का विरोध और दूसरी ओर हिंसाजन्य उपलब्ध मांस भक्षण की अतिशय प्रवृत्ति। इसीलिए वार्तिककार ने कहा है—

शोभासौकर्य-हेतूक्तिकलिकालवशेन वा।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥

वेदादिशास्त्रों में ब्राह्मण से भिन्न को विधिपूर्वक सम्प्रदान निषिद्ध है, किन्तु बौद्धादिस्मृतियों में इसे ही प्रशंसनीय विषय के रूप में स्वीकार किया गया है। शम, दम आदि के सम्बन्ध में भी यही रीति अपनानी चाहिए। अतः वेद बहिर्भूत बौद्धादि-स्मृति प्रमाण नहीं है।

**"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्"** इस सूत्र की व्याख्या में वार्तिककार ने शिष्टाचार का प्रामाण्य प्रतिष्ठापित किया है। होलाक (होली का उत्सव) आदि कर्म जो प्रत्यक्ष श्रुति से विहित नहीं हैं एवं स्मृतिकारों ने उन्हें निबद्ध नहीं किया है, किन्तु शिष्ट = वेदप्रामाण्यवादियों ने इनका अनुष्ठान किया है। अतः यह विचारणीय है कि ये शिष्टाचार प्रमाण है या नहीं ? इस सन्देह में यदि यह कहा जाय कि (पूर्वपक्ष के रूप में) शिष्टाचार संख्याबद्ध एवं व्यवस्थित प्रमाण नहीं है, साथ ही अनेक शिष्टों ने भी बहुत

से अकर्म किये हैं, अतः, शिष्टाचार प्रमाण नहीं है। इस प्रसङ्ग में कहा है—"कारणाग्रहणे" शिष्टाचार के मूल में यदि काम, क्रोध आदि कारण न रहें तो "प्रयुक्तानि" अर्थात् स्मृति रूप में निबद्ध न रहने पर भी वे कर्म शिष्टों के द्वारा आचार के रूप में सम्पादित हो रहे हैं, वे "प्रतीयेरन्" धर्म के रूप में प्रतीत होंगे। "तेषु अदर्शनात् विरोधस्य" अर्थात् उन कर्मों के विरुद्ध वचन शास्त्र में नहीं देखे गये हैं। अतः शिष्ट धर्म की बुद्धि से जो अनुष्ठान कर रहे हैं, वे भी धर्म में प्रमाण है और और वे ग्राह्य हैं। ये शिष्टाचार देश के भेद से, कुल के भेद से अनेक होने से, ग्रन्थ के विस्तार के भय से स्मृतिकार ने उन्हें उपनिबद्ध नहीं किया है। इसीलिए उन्होंने शिष्टाचार को प्रमाण कहा है। यथा—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधुनामात्मनस्तुष्टिरेव च ॥ मनु० २/६

समग्र वेद धर्म में प्रमाण है एवं वेदवेत्ताओं की स्मृतियाँ और शास्त्र शिष्टों का आचार एवं आत्मतुष्टि धर्म में प्रमाण है। याज्ञवल्क्यस्मृति में कहा गया है—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ (याज्ञव० स्मृ०)

श्रुति, स्मृति, सदाचार, अपना प्रिय अर्थात् आत्मतुष्टि एवं सम्यक् सङ्कल्पमूलक कामना ये धर्म में प्रमाण है। अतः स्मृति के समान ही शिष्टाचार भी प्रमाण है। शिष्टाचार प्रमाण भी अनुमान के द्वारा ही प्रतिपादित है—

होलाक प्रभृति आचार प्रमाण हैं (प्रतिज्ञा)
यतः वे धर्मबुद्धि से शिष्टों से (वैदिकों) अनुष्ठित हैं (हेतु)
जैसे अष्टका आदि का अनुष्ठान (उदाहरण)

शिष्टाचार को प्रमाण मानने पर स्थल विशेष में शिष्टों का अकर्म भी प्रमाण होगा, यह आपत्ति ठीक नहीं है, क्योंकि वे आचरण धर्म बुद्धि से उनके द्वारा सम्पादित नहीं है। अतः अविगीत (अनिन्दित) शिष्टाचार को ही प्रमाण माना गया है ॥ ७ ॥

### अथ चतुर्थयववराधिकरणम्

## [४] तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥८॥ पू०

**शा० भा०—'यवमयश्चरुः, वाराही उपानहौ, वैतसे कटे प्राजापत्यान् संचिनोति' इति यववराहवेतसशब्दान् समामनन्ति। तत्र केचिद्दीर्घशूकेषु यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु। वराहशब्दं केचित्सूकरे, केचित्कृष्णशकुनौ। वेतसशब्दं केचिद्वञ्जुलके, केचिज्जम्ब्वाम्। तत्रोभयथा पदार्थावगमाद्विकल्पः ॥ ८ ॥**

भा० वि०—एवं तावत्स्मृत्याचारयोः उत्सर्गतः प्रामाण्यम् श्रुतिविरोधे तदपवादम्, क्वचिदपवादादपवादं चोक्त्वेदानीमाचारयोरेव मिथो विरोधे किं बलीय इति विचारयति इति। तत्र शब्दानामर्थविषये प्रयोगरूप आचारविशेषे विप्रतिपत्त्या संशयं दर्शयितुं शब्दानुदाहरति—**यवमय इत्यादिना**। एतद्वाक्यगतानां यव-वराह-वेतसशब्दानां लौकिकप्रयोगेषु विप्रतिपत्तिमाह—**तत्र केचिदिति**। अत्र प्रयुञ्जत इति प्रियङ्ग्वादिष्वनुषज्यमानवर्तमानापदेशसामर्थ्याद्यव-वराह-वेतसशब्दानां प्रियङ्गु-वायस-जम्बूष्वार्यप्रयोगाभावेऽपि, म्लेच्छप्रयोगे भाष्यकारेणोपलब्ध इति गम्यते, अतो नोदा[1]हरणत्वानुपपत्तिरित्यवसेयम् अनेन च विप्रतिपत्तिप्रदर्शनेन किं द्वावप्यर्थावुतैक एवेति तुल्यबलत्वातुल्यबलत्वाभ्यां संशयस्सूचितः, न चानवधृतप्रामाण्यस्य म्लेच्छाचारस्य बलाबलचिन्तैवानुपपन्नेति वाच्यम्, उत्तराधिकरणन्यायेन प्रामाण्यावधारणमाश्रित्य बलाबलचिन्तोपपत्तेरित्यवसेयम्। प्रयोजनं तु विचारस्य चर्वादौ दीर्घशूकादेः प्रियङ्ग्वादिना सह विकल्पाप्राप्तिः तेष्वित्यादिसूत्रं योजयन् पूर्वपक्षमाह—**तत्रेति**।

**अयमर्थः** यदि म्लेच्छप्रसिद्धेरार्यप्रसिद्धिर्बलीयसी, ततस्तत्सिद्ध एवार्थो ग्राह्यः। नत्वेवं धर्मविषये शास्त्रानुसारिण्यास्तस्या बलवत्त्वेऽपि, वृद्धव्यवहारावगम्यपदार्थेषु शिष्टम्लेच्छप्रसिद्धयोर्विशेषादर्शनेनोभयथा शिष्टानां स्वस्वप्रसिद्धा म्लेच्छप्रसिद्धा च म्लेच्छानामपि स्वप्रसिद्ध शिष्टप्रसिद्धा च शब्दार्थावगमसंभवे सति द्वयोरपि पदार्थप्रतिपत्त्योः मूलप्रमाणाविशेषेण तुल्यबलत्वाद्द्वावप्यर्थाविति विकल्पेन पदार्थप्रयोगः प्राप्नोतीति। अनेन च तेषु पदर्थेषु शिष्टम्लेच्छप्रसिद्धयोः विरोधस्य वैलक्षण्यस्य विशेषस्यादर्शनात्, समा-समबलैव स्यात् विप्रतिपत्तिरिति सूत्रार्थो दर्शितः ॥ ८ ॥

त० वा—तेष्वदर्शनाद्विरोधस्येत्येवमुपक्रमं वा सूत्रम्। शब्दार्थविषयप्रयोगशिष्टारविप्रतिपत्तौ सन्देहः।

एकशब्दमनेकार्थं शिष्टैराचर्यते यदा।
विगानेन तदा तत्र कोऽर्थः स्यात्पारमार्थिकः ॥ ३९९

यव-वराह-वेतसशब्दाः प्रियङ्गुवायसजम्बूष्वपि किल क्वापि देशान्तरे प्रयुज्यन्ते।

तेन तद्वचनत्वे हि सन्देह उपजायते।
अनिरूपिततत्त्वानां यावद् दृष्टानुसारिणाम् ॥ ४००
तत्राऽऽह नैव सन्देहः कर्तव्योऽत्र मनागपि।
प्रयोगं प्रति तुल्यत्वात्सर्वलोकप्रयोगिणाम् ॥ ४०१

---

१. अत्र वार्तिककृता भाष्यमते समुद्भाविते दोषं निरस्यतीति बोध्यम्।

यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते ।
शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते ॥ ४०२

तस्याश्च सर्वगामित्वं तन्न्यायत्वात्प्रमीयते ।
नैकेषामेव सा ह्यस्ति केषांचिद्वा न विद्यते ॥ ४०३

ज्ञाताज्ञातविभागस्तु ज्ञातृभेदेऽवकल्पते ।
तस्माद्यैरपि न ज्ञाता यच्छब्दार्थस्य वाच्यता ॥ ४०४

तैरप्यभ्युपगन्तव्या स्वप्रसिद्धिसमा हि सा ॥ ४०५

न चाल्पत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते ।
वाच्यवाचकभावोऽयमक्षपादादिशब्दवत् ॥ ४०६

विभीतकेऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते ।
तथाऽपि वाचकस्तस्य ज्ञायते शकटाक्षवत् ॥ ४०७

तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टः । विकारापन्नमार्याः प्रयुञ्जते, शवमिति मृतशरीराभिधानादित्यादि । बहव एव हि धातवो नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते तस्मात्समेयमभिधाने विप्रतिपत्तिः स्यात् । एवं च विकृतिषु केषांचिदर्थानां साधारणशब्दवाच्यत्वात्प्रकृताविवाविकृतप्रयोगादार्षं चोदकोऽनुग्रहीष्यते । 'तेष्वदर्शनाद्विरोधस्य' इत्यत्रैव चैतद् व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरघटमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वाद्विकल्प इति प्राप्ते ॥ ८ ॥

न्या० सु०—शिष्टाकोपाधिकरणे पूर्वपक्षोक्तं विरोधमभ्युपेत्य प्रमेयबलाबलीयस्त्वमात्रेण सिद्धान्ते विरोधादर्शनस्यावक्तव्यत्वात्तेष्वदर्शनादिति सूत्रावयवस्य पूर्वशेषत्वानुपपत्तेरुत्तरसूत्रशेषत्वं तस्मिन्पक्षेऽङ्गीकार्यमित्याह—तेष्विति । अत्र भाष्यकृता सौत्रविप्रतिपत्तिशब्दव्याख्यार्थं यवमयश्चरुरित्यादिवाक्यगतान्येव वराहवेसशब्दानुदाहृत्य वाच्यविषयप्रयोगे विप्रतिपत्तिरुक्ता तत्रास्य विप्रतिपत्त्यभिधानस्य किं प्रयोजनम्, का च विचारसङ्गतिरित्यपेक्षिते साधितप्रामाण्यशिष्टाचारबलाबलविचारात्मकत्वेन सङ्गतिं सूचयन्विचारविषयप्रदर्शनप्रयोजनमाह—शब्देति । शब्दस्यार्थविषयः प्रयोगः स चासौ शिष्टाचारश्च तस्मिन् विप्रतिपत्ताविति विग्रहः । भाष्यकृद्व्याख्यानेऽपि स्मृत्यधिकरण एवाचारप्रामाण्यस्यापि व्युत्पादितत्वाद्विरोधाधिकरणे तस्यापि स्मृतिवद्वेदविरोधविषये प्रामाण्येऽपोदिते शिष्टाकोपाधिकरणे च क्रत्वङ्गपदार्थविषयाचाराणां क्रमाद्यविरोधाद्विरोधेऽपि वा प्रमेयबलीयस्त्वादनपवादेऽभिहिते सम्प्रत्याचारयोरेव परस्परविरोधे किं बलाबलविरोधोऽस्तु, न वेति चिन्ता सङ्गतैवेत्याचारशब्देन सूचितम् । व्युत्पादितप्रामाण्यस्य शिष्टाचारस्यैव बलाबलचिन्ता युक्ता, नाव्युत्पादितप्रामाण्यस्य म्लेच्छाचारस्येति मत्वोद्ग्राह्यमपि शिष्टाचारविषयत्वं चिन्तायाः शिष्टशब्देन सूचितम् ।

कीदृशः सन्देह इत्यपेक्षायामाह—**एकशब्दमिति**। एकः शब्दोऽस्मिन्ननेकार्थोऽस्मिन्निति द्वावपि बहुव्रीही। आचर्यंत इति भावोत्पन्नलकारान्तेनाचरणं क्रियत इत्युक्तम्। आचरणमन्यपदार्थः। अक्षादिशब्दवैलक्षण्यप्रतिपादनार्थंविप्रतिपत्तिशब्दव्याख्यानार्थम्—**विगानेनेत्युक्तम्**। कोऽर्थं इति, किं द्वावप्युतैक एवेत्यर्थः। ननु शास्त्रानुसारिशिष्टव्यवहारावगतस्यैव वाच्यत्वनिर्णयात्सन्देहो न युक्त इत्याशङ्क्याह—**यवेति**। अविद्यमानप्रयोगारोपसूचनार्थः किलशब्दः वाच्यवाचकसम्बन्धे शास्त्रस्याव्यापारसूचनाय—**अनिरूपितेत्याद्युक्तम्**—समेति पूर्वपक्षप्रतिपादनार्थंसूत्रावयवव्याख्यानार्थं तत्रेति भाष्यं व्याचष्टे—**तत्राहेति**। भाष्ये च विकल्पशब्देन प्रतिज्ञानार्थत्वमुभयथेत्यनेनास्यैवावृत्त्या हेत्वर्थत्वं व्याख्यातमिति सूचयितुम्—**तुल्यत्वादियुक्तम्**। सर्वलोकस्थानां प्रयोगिणामित्यर्थः। तुल्यत्वमेवोपपादयति—**यत्रेति**।

नन्वेवमपि देशव्यवस्थया वाच्यव्यवस्थोपपत्तेः समविकल्पो न युक्त इत्याशङ्क्याह—**तस्याश्चेति**। तस्मिन्सर्वगामित्वे न्यायो युक्तिर्यस्याः शक्तेरस्ति, सा तन्न्याया तद्भावस्तन्न्यायत्वम्। कीदृशो न्याय इत्यपेक्षायामाह—**नैकेषामिति**। एकस्यैव वस्तुनः सदसत्त्वविरोधादित्याशयः। एवं तर्हि सर्वान्प्रत्यसत्त्वमेवास्त्वित्याशङ्क्य, सत्त्वे कस्यचिद्दर्शनानुपपत्तेर्निराकरोति—**केषांचिद्वेति**। सर्वेषामपि पुंसां पाचकशक्तिर्न विद्यत इत्येतदपि नास्तीत्यर्थः। ननु सदसत्त्ववदेकस्य ज्ञाताज्ञातत्वविरोधोऽपि स्यादित्याशङ्क्य, ज्ञानव्याप्यत्वाव्याप्यत्वोपाधिकत्वादज्ञाताज्ञातत्वयोर्ज्ञानस्य च पुरुषाश्रितत्वेन तद्भेदे सदसत्त्वाविरोधान्निराकरोति—**ज्ञातेति**। शक्तेः सर्वगामित्वमुपपादितमुपसंहरति—**तस्मादिति**। नन्वष्टदोषविकल्पापादकमनेकशक्तिकल्पनमन्याय्यमेवागृह्यमाणविशेषत्वेनागत्या क्वचिदङ्गीक्रियते, इह तु प्रयोक्तुरल्पत्वबहुत्वविशेषग्रहणान्नानेकशक्तिकल्पनं युक्तमित्याशङ्क्याह—**न चेति**। दृष्टान्तं व्याचष्टे—**बिभीतक इति**। एकदेशप्रयुक्तानामपिशब्दानां सर्वगामित्वं निरुक्तकृद्वचनेन द्रढयति—**तथा चेति**। प्रकृतय एवैकेषु जनपदेषु प्रयुज्यन्ते, विकृतय एवैकेष्वित्युपक्रम्य निरुक्तकृता शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्या भाषन्ते शव-ति-२-२-८ इति युक्तम्। तदर्थतः पठितम्। कम्बोजेष्वेव जनपदविशेषेषु शवतिर्धातुर्गतिवाची दृष्टः। गच्छतीत्यस्मिन्नर्थे शवतीति प्रयोगात्। आर्यास्तु जनपदविशेषाः ऋदोरबित्यप्प्रत्ययान्तत्वेन विकारापन्नं शवतिधातुं न गतौ युञ्जते। शवशब्देन मृतस्याभिधानादित्यर्थः। महाभाष्यकृता तु विकारापन्नमार्या भाषन्तइति पाठान्तरमुदाहृतम्। तत्र मृतावस्था विकारशब्देनोक्ता। न केवलं शवतिरेव देशविशेषे व्यवस्थितः। किं त्वन्येऽपि बहवो धातवो नामशब्दाश्च व्यवस्थिता एव प्रयुज्यन्ते—**इत्यादीति**। प्राच्येषु हि जनपदेषु दातिर्धातुर्लवनार्थो दातीत्यस्मिन्नर्थे द्यतीति प्रयोगात् तमेव दात्रमिति ष्ट्रन्प्रत्ययान्तत्वेन विकारापन्नमुदीच्याः प्रयुञ्जते।

प्राच्येषु गच्छतीत्यर्थे मध्यमेषु वरं हति।
हन्ततिश्च सुराष्ट्रेषु गमिस्त्वार्येषु भाष्यते॥

महाभाष्यकृतैस्तेऽन्ये प्रतिदेशे व्यवस्थिताः ।
उदाहृता धातवोऽतो ऋादिशब्दस्तदाशयः ॥

पूर्वपक्षमुपसंहरति—तस्मादिति ।

तेष्वदर्शनादित्युपक्रमसूचनं समेत्यस्य प्रतिज्ञामात्रार्थत्वादुभयशब्दार्थावगम इत्यनेन तेष्विति सूत्रावयवो हेत्वर्थेन योजितः । तद्व्याचष्टे—एवं चेति । प्रकृतिवदिति हि चोदकेनार्षं समाम्नायावगतमेव मन्त्ररूपमतिदिश्यते, कार्यप्राधान्यात् तदसम्भवे व्रीह्यादिशब्दस्थाने नीवारादिशब्दोहेनान्यथात्वं कल्प्येत । साधारणशब्दे च न तत्कल्पनापत्तिरित्यर्थः । किमिति विकृतिविषयत्वेनायं सूत्रावयवो व्याख्यात इत्यपेक्षिते प्रकृतौ विप्रतिपत्तिदर्शनेनाविरोधायोगादिति कारणमाह—तेष्विति । एतदुपक्रमत्वस्यानभिमतत्वद्योतनार्थं पूर्वोपक्रमाभिप्रायेण समेत्यस्यैवावृत्त्या हेत्वर्थत्वं दर्शयन्नुपसंहरति—तस्मादिति ।

शास्त्रस्था वा तन्निमित्तत्वादिति सिद्धान्तसूत्रं स्वयं तावदवतारणपूर्वकं व्याचष्टे—इतीति । वाशब्देन साम्यं निराकृत्य पूर्वसूत्रगतस्याच्छब्दानुषङ्गेण शास्त्रस्था स्यादित्युक्ते, तस्या एव बलीयस्त्वमर्थादुक्तं भवतीति मत्वा—बलीयसीत्युक्तम् । शास्त्रानुसारावगतशब्दार्थगतगुणयोगनिमित्तत्वेनाप्यर्थान्तरप्रतीत्युपपत्तेर्नोभयत्र शक्तिः कल्प्येत्येवमर्थत्वेन तन्निमित्तत्वादिति सूत्रावयवं व्याख्यातुम्—लौकिकीत्युक्तम् । एतदेव विवृणोति—नानेति । भाष्यकृता त्वेकस्यापि वाच्यत्वे तत्सादृश्येनेतरप्रतीत्युपपत्तेर्नोभयोः, साम्यं कल्प्यमिति वाशब्दं व्याख्याय, कः पुनरित्यादिना 'शास्त्रस्थेति' विछत्यावृत्त्या शिष्टपरत्वेन शास्त्रस्थशब्दो व्याख्यातः ।

तन्निमित्तत्वादिति च तेषां शिष्टानां श्रुतिधारणवच्छब्दार्थस्मृतिधारणवच्छब्दार्थस्मृतिधारणनिमित्तत्वादित्येवं तेषामित्यादिना व्याख्याय शास्त्रनिमित्तत्वाच्छिष्टगतायाः प्रतिपत्तेरिति, तस्यैवावृत्त्या ते चैवमित्यादिना व्याख्यानानन्तरं तत्र शास्त्रस्थशब्दव्याख्यानार्थं तावद्भाष्यं व्याचष्टे—शास्त्रस्था इति । तेषामित्यादिभाष्यं व्याचष्टे—सप्रत्ययेति । सप्रत्ययतरत्वं तेषामुपपादयति—शास्त्रार्थेष्विति । शिष्टानां प्रत्ययिततरत्वोपपादनस्य प्रकृतोपयोगमाह—तस्मादिति ।

ननु शिष्टप्रतिपत्तेर्बलीयस्त्वेऽप्यविरोधादर्थान्तरस्यापि वाच्यत्वे भविष्यतीत्याशङ्कानिराकरणार्थत्वं द्योतयितुं यवशब्द इत्यादि वाशब्दव्याख्या । भाष्याभिप्रायमिदानीं व्याचष्टे—अनवस्थितेति । ते चैवमित्यादिभाष्यं व्याचष्टे—अविप्लुतश्चेति । ननु वाक्यशेषकृतस्य निर्णयस्य यवमयश्चरुरित्यादिषु वाक्यशेषरहितेष्वसम्भवात्प्रस्तुतोदाहरणगतशब्दार्थनिर्णयो न सम्भवतीत्याशङ्क्य, अभिधेयनिर्णयस्यैकत्र कृतस्याविशेषात्सर्वत्र निर्णायकत्वं वक्ष्यमाणमभिप्रेत्य परिहरति—तत्रेति । भाष्यकारोयस्य करम्भविधिशेषत्वाभिधानस्य विध्यन्तरशेषत्वव्यावृत्त्यर्थत्वशङ्कानिराकरणार्थं विध्यन्तरं दर्शयति—यवमतीभिरिति । दीर्घशूककानिति भाष्यमुपपादयति—फाल्गुन इति । तस्माद्वराहमित्यादिवराह-

वेतसशब्दार्थनिर्णयार्थं वाक्यशेषान्तरोपन्यासभाष्यं व्याचष्टे—एवमिति । त्रिवृदादिशब्दाभिप्रायं बहुवचनम् ।

व्युत्पादितप्रामाण्यस्य शिष्टाचारस्यैव परस्परविरोधे साम्यवैषम्यचिन्ता युक्ता । नाव्युत्पादितप्रामाण्यस्य म्लेच्छाचारस्य । न क्वचित् शिष्टदेशे यवादिशब्दः प्रियङ्ग्वादिषु प्रयुज्यत इति मत्वोदाहरणानि दूषयति—नन्वेतानीति । नन्वेतदुदाहरणासम्भवेऽप्युदाहरणान्तरेषु न्यायस्य फलवत्त्वोपपत्तेरुदाहरणदूषणमयुक्तमित्याशङ्क्याह—अध्यारोप्येति । उदाहरणान्तरसम्भवे तदेवोदाहार्यं, न त्वसदध्यारोपो युक्त इत्याशयः । न चोदाहरणान्तरेऽप्ययं न्यायो व्युत्पाद्य, अन्यत्र व्युत्पादयिष्यमाणत्वादित्याह—सन्दिग्धेषु चेति । न केवलं यवाद्युदाहरणानि न कार्याणि, तु विचारणापि न कार्येत्यपिशब्दो योज्यः । यद्वोदाहरणाभावात्तावन्न कार्या पौनरुक्त्यादपीति ।

ननु तत्रोपादाननिर्णयाद्वाक्यशेषबलाच्चैकत्वं घृतोपादाननिर्णयेऽन्यत्र वाक्यशेषाभावेऽपि तदेवोपादेयमिति नियमाभावादिह त्वभिधेयनिर्णयादेकत्र चाभिधेयत्वेन निर्णीतस्यान्यत्रापि तादृूप्यत्यागायोगात्सर्वत्राभिधेयत्वनिर्णयः इत्यपौनरुक्त्यमाशङ्क्य न्यायफलवैषम्येऽपि विधिस्तुत्योरेकविषयत्वनियमात्स्तुत्यस्यैव विधेयत्वयिति व्युत्पाद्यन्यायस्वरूपैक्यादपरिहार्यं पौनरुक्त्यमित्याह—यद्यपीति ।

ननु नात्र दीर्घशूकादीनां यवादिशब्दवाच्यत्वसन्देहो निराक्रियते, किं तु दीर्घशूकादिवत्प्रियङ्ग्वादीनामपि प्रतीतिप्रयोगान्यथानुपपत्त्या प्रसक्तावाच्यता गौणत्वेनापि प्रतीतिप्रयोगोपपादनेन निराक्रियते । नासावन्यत्र निराकृतेत्याशङ्क्याह—तत्सिद्धिसूत्रे चेति । गौणत्वसम्भवेऽपि प्रतीतिप्रयोगमात्रेण प्रसिद्धार्थत्यागेनाप्रसिद्धार्थकल्पने जहत्स्वार्थाभिधायित्वं स्यात्, तस्य च तत्सिद्धिसूत्रे निराकरिष्यमाणत्वात्तेन सह पौनरुक्त्यं स्यादित्याशयः एवं शिष्टाचारयोरेव परस्परविरोधे वाक्यशेषानुसारिणः शब्दार्थविषयप्रयोगरूपस्य शिष्टाचारस्य प्रामाण्यम्, इतरस्य गौणत्वेनाप्युपपत्तेरप्रामाण्यमिति भाष्यार्थं मत्वोदाहरणाभावात्पौनरुक्त्यापत्तेश्च दूषयित्वेदानीमार्यम्लेच्छाचारयोरिह साम्यवैषम्यचिन्ता वाक्यशेषनैरपेक्ष्येण च निर्णय इत्यभिप्रेत्य समाधत्ते—तस्मादिति ।

वाक्यशेषनैरपेक्ष्यद्योतनार्थमन्यग्रहणं न तु यवादिशब्दोदाहरणनिराकरणार्थम् । अनन्तदेशाग्रहणेन सर्वदेशप्रयोगाभावस्य केनापि निश्चेतुमशक्यत्वाद्भाष्यकृद्वचनाच्चार्यदेशप्रयोगाभावेऽपि म्लेच्छदेशे क्वापि प्रयोगोऽस्तीति निश्चयोपपत्तेः । पूर्वं वा व्युत्पादितप्रामाण्यस्यापि म्लेच्छाचारस्यानन्तराधिकरणे शब्दार्थविषये व्युत्पादयिष्यमाणप्रामाण्यस्य वक्ष्यमाणालोचनेन विचारोपपत्तेर्भाष्यकृतापि शास्त्रस्थशब्दं शिष्टाभिप्रायं व्याचक्षाणेनार्यम्लेच्छप्रयोगयोरेवात्र साम्यवैषम्यचिन्तेति, सूचितमित्यविरोधः । वाक्यशेषोपन्यासस्त्वतिशयार्थः । तत्सिद्धिसूत्रस्य च गौणवृत्तिलक्षणमात्रपरत्वान्न तेनापि पौनरुक्त्याशङ्केत्यनवद्यम् ।

ननु म्लेच्छाचारस्य प्रामाण्याभावान्न साम्येन पूर्वपक्षः सम्भवतीत्याशङ्क्याहदृष्टार्थव्यवहारेष्वार्यम्लेच्छयोर्विशेषाभावान्निराकुर्वन्पूर्वपक्षयति—समेति । एतदेव विवृणोति—आर्यास्ता-

वदिति । आर्यम्लेच्छानां प्रयोगिणामिति विग्रहः । तुल्यत्वोपपादनायोत्तराधिकरणसिद्धं शब्दार्थविषये म्लेच्छाचारस्यापि प्रामाण्यं दर्शयति—सर्वो हीति । आर्यप्रयुक्तवत् म्लेच्छप्रयुक्तस्यापि शब्दस्यार्थप्रत्ययाङ्गत्वप्रदर्शनार्थः सर्वशब्दः ।

ननू गाव्यदिशब्दस्यावाचकस्याप्यर्थप्रत्यायत्वदर्शनान्न तन्मात्रेण म्लेच्छप्रसिद्धेर्थान्तरे यवादिशब्दां वाचकत्वशक्तिः कल्पयितुं शक्येत्याशङ्क्याह—तत्रेति । शक्तेः कारणाश्रितत्वादर्थप्रत्ययकारणस्य च गाव्यादिशब्दस्यादिमत्त्वेनानादिशक्त्याश्रयत्वायोगादवाचकत्वं युक्तम्, यवादिशब्दस्य तु यादृशस्यार्यैः प्रयोगः तादृशस्यैव म्लेच्छैरित्यविशिष्टत्वेनानादित्वावधारणेनानादिशक्त्याश्रयत्वोपपत्तेर्नाविद्यमानशक्त्यारोपकल्पनाक्लेशो युक्त इत्यविशिष्टशब्देन सूचितम्, नन्वनादित्वेऽपि यवादिव्दार्थसम्बन्धानवस्थितत्वादिदोषापत्तेरेकस्थानेऽनेकशक्तिकल्वनायोगान्न म्लेच्छप्रसिद्धेऽर्थेऽनादिसामर्थ्यं कल्पनमित्याशङ्क्याह—यथैव हीति । अगृह्यमाणविषशेषत्वादक्षादिशब्दवदगत्यात्राप्यनेकशक्तिकल्पनं युक्तमित्याशयः । अविशिष्टत्वमेवोपपादयति-नेति । ततश्च प्रयोगाव्यदर्शनादार्यम्लेच्छप्रसिद्धार्थविषययोः शब्दशक्त्योरनादित्वात्कथं विशेषोऽवगम्यतामित्यर्थः । न च म्लेच्छसम्बन्धमात्रं शक्त्यभावे कारणमिति दृष्टान्तेनोपपादयति—यथैवेति । म्लेच्छैः स्वार्थे प्रयोगात्तस्मिन्नप्यर्थे शब्दो वाचकः परीक्षकाणामिष्ट इति योज्यम् । मुख्यत्वेनैव प्रयोगाद्गौणत्वशङ्कानिवृत्त्यर्थः स्वशब्दः । पूर्वपक्षमुपसंहरति—तस्मादिति । वाक्यशेषनैरपेक्ष्यप्रदर्शनार्थमुदाहरणान्तरम् ।

ननु यवाद्युदाहरणार्थंव्यावृत्त्यर्थमित्युपपादितमेव । उत्तरसूत्रेण सिद्धान्तमाह—इतीति । शास्त्रस्थाः पुरुषायेवेति भाष्यानुसारिव्याख्याभिप्रायः पूर्ववच्छब्दः । वाक्यशेषस्त्वतिशयार्थं भाष्यकृतोक्तो न निर्णायकत्वेनेत्यविरोधः शब्दापभ्रंशवच्चार्थापभ्रंशस्याप्युपपत्तेर्न प्रतीतिप्रयोगमात्रेणैकान्ततः सर्वेषामर्थानामेकस्माच्छब्दात्प्रतीयमानां वाच्यत्वनिर्णयः सम्भवतीति, कल्पनालाघवादेकस्यैव वाच्यत्वे निर्णीते कस्यैकस्येत्यपेक्षायां शास्त्रस्थानामभियोगाविशेषात्तत्प्रयोगवशेन वाच्यत्वावधारणमिति व्याख्यान्तरमाह—किं चेति । यथा गाव्यादिषूत्तमवृद्धेन प्रमादेनाशक्त्या वोच्चारितेषु साध्वनुरूपत्वात्तदनुमानेन साधुवाच्यमर्थं मध्यमवृद्धस्य प्रतिपादयत्सुव्युत्पित्सोर्वाचकत्वभ्रान्तिर्जायते तथा म्लेच्छैर्गौण्य ावृत्त्या भ्रान्त्या वा हस्त्याद्यर्थे पील्वादिशब्देन प्रतिपादिते व्युत्पित्सोर्वाच्यत्वाभ्रान्तिर्जायत इत्यर्थः । एतदेव विवृणोति—शब्देति । उपसंहरति—अत इति । अस्यां च व्याख्यायामार्यप्रयोगयोरपि परस्परविरोधेऽभियुक्ततरबलीयस्त्वं शिद्धयतीत्यादि—एतेनेति । इदानीं भाष्यमनपेक्ष्य स्मृत्याचारयोर्विरोधे किं द्वयोस्तुल्यत्वमाचारो वा बलीयान् स्मृतिर्वेति त्रेधा सन्दिह्य, साम्यपक्षे समा विप्रतिपत्तिः स्यादित्येतावसूत्रं योजयति—स्मृतीति । पक्षद्वयोद्देशार्थो वैषम्यशब्दः ।

तेष्वदर्शनादित्युपक्रममाचारबलीयस्त्वे योजयति—यद्वेति । अयमाशयः । शिष्टपरिग्रहदार्ढ्येनोभयोर्भ्रान्त्यादिमूलत्वासम्भवान्मिथ्यात्वलक्षणस्तावद्बाधो न युज्यते, किं तु यथा प्रत्यक्षश्रुतिविरोधे यावदेकं श्रुतौ कर्मेत्यादिना स्मृतेरनुष्ठानाख्यफलापहारमात्रलक्षणा,

बाधो मूलश्रुतिदर्शनं यावदुक्तः तथात्रापि वाच्यः। न चानुष्ठानात्मकस्याचारस्यासौ सम्भवतीति। नन्वाचारस्यापि स्मृतिवच्छ्रुत्यनुमानेनैव प्रामाण्यं न स्वातन्त्र्येण। न च स्मृत्याचारानुमितयोः श्रुत्योर्बलाबलविशेषोऽस्तीत्याशङ्क्याह—श्रुतिरिति।

स्मृतेर्वाक्यात्मकत्वेनानेकरूपार्थप्रतिभाने प्रत्यक्षश्रुत्यविरुद्धार्थप्रतिपादनपरश्रुतिकल्पनेन यथाश्रुतार्थत्यागलक्षणो बाधो युक्तः, आचारस्य त्ववाक्यात्मकत्वेनान्यथात्वकल्पनायोगाद्यथाशिष्टैरनुमीयते, तथैवानुष्ठेयमित्यनुष्ठानाख्यफलनिष्ठैव श्रुतिः कल्प्यतइत्याशयः। एतदेव विवृणोति—यावद्धीति। अस्मिन्पक्षे तेष्वाचारेषु स्मृतिमूलश्रुत्यनुमानात्प्राग्विरोधादर्शनात्प्रतिष्ठितेषु बाधासम्भवाद् बलीयस्त्वमेव तावद्युक्तम्, तदनङ्गीकरणे वरं साम्यमस्तु, न त्वाचारस्य दौर्बल्यमिति सूत्रं योज्यम्। द्विविधमपि पूर्वपक्षमुपसंहरति—तेनेति।

शास्त्रस्था वेति सूत्रेण सिद्धान्तमाह—स्मृतीनां वेति। स्मृत्यभिप्रायः शास्त्रशब्द इत्याशयः। तन्निमित्तत्वादिति शास्त्रत्वसामान्येन प्रकृतत्वाद्वेदाख्यं शास्त्रं तच्छब्देन परामृश्य श्रुतिमूलत्वं हेतुरुच्यते। तच्चोभयोः स्मृत्यधिकरणे प्राप्तम्, विरोधे पुनरुच्यमानमाचाराणां श्रुतिमूलत्वपरिसंख्यार्थम्। तत्रोभयोः श्रुत्यनुमापकत्वाविशेषे विरोधेऽपि स्मृतेरेव श्रुतिमूलत्वम्, नाचारस्येति कथमवसीयत इत्यपेक्षायामाह—उभयोरिति। असाम्यमुपपादयति—सप्रत्ययेति। प्रत्ययशब्देन ज्ञानं विश्वासो वाऽभिधीयते। ऋषित्वाच्च मन्वादेः साक्षात्कृतधर्माण ऋषय इति स्मृतेः, सकलधर्मतत्त्वज्ञानसम्पन्नत्वावसायादाचार्यवचः प्रमाणमिति च श्रुतेर्धर्मप्रवक्तृत्वेनावधारिताचार्यत्वस्य मन्वादेः सत्यवादित्वावगमादप्रतारकत्वेन विश्वास्यत्वात्तत्प्रणीतायाः स्मृतेर्वेदविरोधेऽपि श्रुतिमूलत्ववारणशक्यत्वस्योपपादितत्वादाचारविरोधे का कथेत्याशयः। अर्वाचीनानां तु सकलधर्मतत्त्वज्ञानाभावात्प्रमादादिसम्भवाच्च तदाचारस्य श्रुतिमूलत्वकल्पने श्रुतिस्मृतिविरोधो विघ्नकारीत्यर्थादुक्तम्, लिङ्गवाक्यवच्च सन्निकर्षविप्रकर्षविशेषादपि स्मृत्याचारयोर्बलाबलविशेषोऽवसीयतइत्याह—आचारात्त्विति। चशब्दार्थे तुशब्दस्मृतेर्वा साक्षाच्छ्रुतिकल्पनत्वद्योतनार्थः।

ननु स्मृतिवदाचारस्यापि साक्षाच्छ्रुतिमूलत्वोपपत्तेः किमन्तरा स्मृतिकल्पनयेत्याशङ्क्याह—न हीति। अयमाशयः तदानीन्तनानां मन्वादिवत्सकलवेदार्थतत्त्वज्ञानमस्ति यतः तदाचारस्य साक्षाच्छ्रुतिमूलत्वं सम्भाव्यते, एवं सत्यपि यद्येकैव काचिच्छ्रुतिः सर्वाचाराणां मूलभूता स्यात्, ततस्तस्याः कथंचित्तात्पर्यावधारणसम्भवात्साक्षादिदानीन्तनपुरुषाचारमूलत्वं सम्भाव्येत, न त्वसौ—सम्भवतीत्युक्तम्। यद्यपि सदाचारः प्रमाणमिति स्मृत्यनुरूपैका श्रुतिः कल्प्येत, तथापि तस्याः सिद्धाचारानुवादेन प्रामाण्यप्रतिपादनमात्रपरत्वेनाचारप्रवर्त्तकत्वाभावान्मूलत्वं न सम्भवतीति दर्शयितुम्—प्रवर्त्तिकेत्युक्तम्। यत्तु यद्वा शिष्टात्मतुष्टीनामित्यादिनाशिष्टानुष्ठानमत्रेणाचारादीनां श्रेयःसाधनत्वान्न विधायकश्रुत्यपेक्षेत्युक्तम्, तच्छ्रुतिस्मृतिविहितो धर्मः तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठवचनपर्यालोचनया, मानवीयस्यापि वेदोऽखिलो धर्ममूलमिति स्मृत्याचारादिष्वनुशक्तस्य धर्ममूलशब्दस्य।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ म० २/१२

इति लक्षणशब्दस्य च प्रमाणपरत्वावसायात्प्रौढिमात्रमित्यवगम्यते । भिन्नानामप्याचारमूलभूतानां श्रुतीनां मिलितानामेकत्र पाठे तात्पर्यावधारणं सम्भाव्यते, तासां तु नानाप्रकरणस्थानां विध्यन्तरशेषत्वेन पठितानां पुरुषधर्माचारविधिपरत्वस्याल्पप्रज्ञैरिदानीन्तनैर्निर्णेतुमशक्यत्वाच्छिष्टाचारपारम्पर्यस्मृत्यैव कस्यचिद् बहुवेदविदः प्रज्ञातिशयसम्पन्नस्याचारमूलश्रुतितात्पर्यावधारणमासीदिति कल्पयित्वेदानीन्तनशिष्टप्रवृत्तिर्भवति स्मृत्या व्यवायः श्रुतिकल्पनस्येति विप्रकीर्णत्वमुपपादयति—नेति । विध्यन्तरशेषत्वेन स्तुतिमात्रत्वेनावभासमानस्यापि सिद्धवत्सङ्कीर्तनान्यथानुपपत्तिप्रापकविध्याक्षेपकत्वकल्पनाक्लेशः कथंचिच्छब्देनोक्तः । आचारमूलश्रुतीनां तात्पर्यावधारणक्लेशप्रदर्शनायैवोदाहरणानि दर्शयन्पात्रधारणपूर्वकभोजनाचारमूलभूतां तावच्छ्रुतिमुदाहरति—तद्यथेति । क्रत्वर्थत्वशङ्कासूचनार्थः प्रकरणोपन्यासः । स्तुतिमात्रशङ्कासूचनार्थं विध्यन्तरशेषत्वोपन्यासः । एकेन परिगृह्णीतरेणात्तीति श्रुत्यर्थः । कथं तर्ह्याचारपरविधिपरत्वनिर्णय इत्याशङ्क्य—सत्यपीत्याद्युक्तम् । नन्वन्नस्कन्दनशङ्कापरिहारार्थत्वेन पात्रधारणास्यार्थप्राप्तस्यानुवादोपपत्तेर्नात्र विधिः कल्पनीयः अत आह—न चैतदिति । सम्यक्पात्रप्रतिष्ठापनेनाप्यन्नस्कन्दनशङ्कापरिहारोपपत्तेर्नियमार्थो विधिः सम्भवतीत्याशयः । स्वभावात्प्रयोजनवशाद्वाऽऽर्थिकी नियता प्राप्तिः स्यात् त्वेतदुभयमप्यत्रास्तीति दर्शयितुं वैषम्यदृष्टान्तद्वयम् ।

दक्षिणहस्तभोजनाचारमूलभूतां श्रुतिमुदाहरति—एवमिति । स्त्रीणां पूर्वं सव्याक्ष्यंजनाचारमूलमुदाहरति—तथेति । शेषिभूतविध्यन्तरोपन्यासस्य प्रयोजनमुक्तम् । स्त्रीणां पत्यन्तरवर्जनाचारस्य मूलमुदाहरति तथेति ।

रजस्वलाचारमुदाहरति—तथेति । विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदिति तै० सं० २।५।१ । प्रक्रम्य तस्य वज्रमादाय शीर्षाण्यच्छिनदितीन्द्रस्य त्वाष्ट्रवधनिमित्तब्रह्महत्याप्राप्तिमुक्त्वा, स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रत्यगृहाणेत्यादिपृथिव्यादीनां ब्रह्महत्याविभागमुपक्रम्य स स्त्रीसंसदमुपासीददस्यै ब्राह्महत्यायै तृतीयं प्रतिगृह्णातेन्द्रप्रार्थितानां स्त्रीणां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्निति ब्रह्महत्यायास्तृतीयस्य विभागस्य प्रतिग्रहम्, तन्निमित्तं च मलवद्वासस्त्वमुक्त्वा न मलवद्वाससा सह संवदेन्नास्या अन्नमद्यादिति, तदुपगमनं निषिध्य, यां मलवद्वाससमभिसम्भवति यतस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै तस्यै स्तेनो यां पराचीम्, तस्यै ह्रीतस्य मुख्यप्रगल्भा इत्युपगमननिषेधशेषभूतां निन्दामुक्त्वा तत्प्रस्तावेनागतानां रजस्वलाव्रतानां या स्नाति, तस्या अप्सुमारुका याभ्यङ्क्ते, तस्यै दुश्चर्मायाप्रलिखते, तस्यै खलति रपमारी याङ्क्ते तस्यै काणो पादतो धावते तस्यै श्यावदन्वा, या नखानि निकृन्तते, तस्यै कुनखी या कृणत्ति, तस्यै क्लीबो या, रज्जुं सृजति, तस्या उद्बन्धको, या खर्वेण पिबति, तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदितिस्नानादिनिन्दाद्वारेणोक्तानामग्निषोमीयपुरोडाशयागविधिशेषत्वेन प्रतीयमानानां प्रकरणा-

बाधो मूलश्रुतिदर्शनं यावदुक्तः तथात्रापि वाच्यः। न चानुष्ठानात्मकस्याचारस्यासौ सम्भवतीति। नन्वाचारस्यापि स्मृतिवच्छ्रुत्यनुमानेनैव प्रामाण्यं न स्वातन्त्र्येण। न च स्मृत्याचारानुमितयोः श्रुत्योर्बलाबलविशेषोऽस्तीत्याशङ्क्याह—श्रुतिरिति।

स्मृतेर्वाक्यात्मकत्वेनानेकरूपार्थप्रतिभाने प्रत्यक्षश्रुत्यविरुद्धार्थप्रतिपादनपरश्रुतिकल्पनेन यथाश्रुतार्थत्यागलक्षणो बाधो युक्तः, आचारस्य त्ववाक्यात्मकत्वेनान्यथात्वकल्पनायोगाद्य-थाशिष्टैरनुमीयते, तथैवानुष्ठेयमित्यनुष्ठानाख्यफलनिष्ठैव श्रुतिः कल्प्यतइत्याशयः। एतदेव विवृणोति—यावद्धीति। अस्मिन्पक्षे तेष्वाचारेषु स्मृतिमूलश्रुत्यनुमानात्प्राग्विरोधा-दर्शनात्प्रतिष्ठितेषु बाधासम्भवाद् बलीयस्त्वमेव तावद्युक्तम्, तदनङ्गीकरणे वरं साम्यमस्तु, न त्वाचारस्य दौर्बल्यमिति सूत्रं योज्यम्। द्विविधमपि पूर्वपक्षमुपसंहरति—तेनेति।

शास्त्रस्था वेति सूत्रेण सिद्धान्तमाह—स्मृतीनां वेति। स्मृत्यभिप्रायः शास्त्रशब्द इत्याशयः। तन्निमित्तत्वादिति शास्त्रत्वसामान्येन प्रकृतत्वाद्वेदाख्यं शास्त्रं तच्छब्देन परामृश्य श्रुतिमूलत्वं हेतुरुच्यते। तच्चोभयोः स्मृत्यधिकरणे प्राप्तम्, विरोधे पुनरुच्यमान-माचाराणां श्रुतिमूलत्वपरिसंख्यार्थम्। तत्रोभयोः श्रुत्यनुमापकत्वाविशेषे विरोधेऽपि स्मृतेरेव श्रुतिमूलत्वम्, नाचारस्येति कथमवसीयत इत्यपेक्षायामाह—उभयोरिति। असाम्यमुप-पादयति—सप्रत्ययेति। प्रत्ययशब्देन ज्ञानं विश्वासो वाऽभिधीयते। ऋषित्वाच्च मन्वादेः साक्षात्कृतधर्माण ऋषय इति स्मृतेः, सकलधर्मतत्त्वज्ञानसम्पन्नत्वावसायादाचार्यवचः प्रमाणमिति च श्रुतेर्धर्मप्रवक्तृत्वेनावधारिताचार्यत्वस्य मन्वादेः सत्यवादित्वावगमादप्रतार-कत्वेन विश्वास्यत्वात्तत्प्रणीतायाः स्मृतेर्वेदविरोधेऽपि श्रुतिमूलत्ववारणशक्यत्वस्योपपादि-तत्वादाचारविरोधे का कथेत्याशयः। अर्वाचीनानां तु सकलधर्मतत्त्वज्ञानाभावात्प्रमादादि-सम्भवाच्च तदाचारस्य श्रुतिमूलत्वकल्पने श्रुतिस्मृतिविरोधो विघ्नकारीत्यर्थादुक्तम्, लिङ्गवाक्यवच्च सन्निकर्षविप्रकर्षविशेषादपि स्मृत्याचारयोर्बलाबलविशेषोऽवसीयतइत्याह—आचारात्त्विति। चशब्दार्थे तुशब्दस्मृतेर्वा साक्षाच्छ्रुतिकल्पनत्वद्योतनार्थः।

ननु स्मृतिवदाचारस्यापि साक्षाच्छ्रुतिमूलत्वोपपत्तेः किमन्तरा स्मृतिकल्पनयेत्या-शङ्क्याह—न हीति। अयमाशयः तदानीन्तनानां मन्वादिवत्सकलवेदार्थतत्त्वज्ञानमस्ति यतः तदाचारस्य साक्षाच्छ्रुतिमूलत्वं सम्भाव्यते, एवं सत्यपि यद्येकैव काचिच्छ्रुतिः सर्वाचाराणां मूलभूता स्यात्, ततस्तस्याः कथंचित्तात्पर्यावधारणसम्भवात्साक्षादिदानीन्त-नपुरुषाचारमूलत्वं सम्भाव्येत, न त्वसौ—सम्भवतीत्युक्तम्। यद्यपि सदाचारः प्रमाणमिति स्मृत्यनुरूपैका श्रुतिः कल्प्येत, तथापि तस्याः सिद्धाचारानुवादेन प्रामाण्यप्रतिपादनमात्र-परत्वेनाचारप्रवर्त्तकत्वाभावाम्मूलत्वं न सम्भवतीति दर्शयितुम्—प्रवर्त्तिकेत्युक्तम्। यत्तु यद्वा शिष्टात्मतुष्टीनामित्यादिनाशिष्टानुष्ठानमत्रेणाचारादीनां श्रेयःसाधनत्वान्न विधायक-श्रुत्यपेक्षेत्युक्तम्, तच्छ्रुतिस्मृतिविहितो धर्मः तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठ-वचनपर्यालोचनया, मानवीयस्यापि वेदोऽखिलो धर्ममूलमिति स्मृत्याचारादिष्वनुशक्तस्य धर्ममूलशब्दस्य।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ म० २/१२

इति लक्षणशब्दस्य च प्रमाणपरत्वावसायात्प्रौढिमात्रमित्यवगम्यते । भिन्नानामप्याचारमूलभूतानां श्रुतीनां मिलितानामेकत्र पाठे तात्पर्यावधारणं सम्भाव्यते, तासां तु नानाप्रकरणस्थानां विध्यन्तरशेषत्वेन पठितानां पुरुषधर्माचारविधिपरत्वस्याल्पप्रज्ञैरिदानीन्तनैर्निर्णेतुमशक्यत्वाच्छिष्टाचारपारम्पर्यस्मृत्यैव कस्यचिद् बहुवेदविदः प्रज्ञातिशयसम्पन्नस्याचारमूलश्रुतितात्पर्यावधारणमासीदिति कल्पयित्वेदानीन्तनशिष्टप्रवृत्तिर्भवति स्मृत्या व्यवायः श्रुतिकल्पनस्येति विप्रकीर्णत्वमुपपादयति—नेति । विध्यन्तरशेषत्वेन स्तुतिमात्रत्वेनावभासमानस्यापि सिद्धवत्सङ्कीर्तनान्यथानुपपत्तिप्रापकविध्याक्षेपकत्वकल्पनाक्लेशः कथंचिच्छब्देनोक्तः । आचारमूलश्रुतीनां तात्पर्यावधारणक्लेशप्रदर्शनायैवोदाहरणानि दर्शयन्पात्रधारणपूर्वकभोजनाचारमूलभूतां तावच्छ्रुतिमुदाहरति—तद्यथेति । क्रत्वर्थत्वशङ्कासूचनार्थः प्रकरणोपन्यासः । स्तुतिमात्रशङ्कासूचनार्थं विध्यन्तरशेषत्वोपन्यासः । एकेन परिगृह्येतरेणात्तीति श्रुत्यर्थः । कथं तर्ह्याचारपरविधिपरत्वनिर्णय इत्याशङ्क्य—सत्यपीत्याद्युक्तम् । नन्वन्नस्कन्दनशङ्कापरिहारार्थत्वेन पात्रधारणस्यार्थप्राप्तस्य नुवादोपपत्तेर्नात्र विधिः कल्पनीयः अत आह—न चैतदिति । सम्यक्पात्रप्रतिष्ठापनेनाप्यन्नस्कन्दनशङ्कापरिहारोपपत्तेर्नियमार्थो विधिः सम्भवतीत्याशयः । स्वभावात्प्रयोजनवशाद्वाऽर्थिकी नियता प्राप्तिः स्यात् त्वेतदुभयमप्यत्रास्तीति दर्शयितुं वैषम्यदृष्टान्तद्वयम् ।

दक्षिणहस्तभोजनाचारमूलभूतां श्रुतिमुदाहरति—एवमिति । स्त्रीणां पूर्वं सव्याक्ष्यंजनाचारमूलमुदाहरति—तथेति । शेषिभूतविध्यन्तरोपन्यासस्य प्रयोजनमुक्तम् । स्त्रीणां पत्यन्तरवर्जनाचारस्य मूलमुदाहरति तथेति ।

रजस्वलाचारमुदाहरति—तथेति । विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदिति तै० सं० २।५।१ । प्रकृत्य तस्य वज्रमादाय शीर्षाण्यच्छिनदितीन्द्रस्य त्वाष्ट्रवधनिमित्तब्रह्महत्याप्राप्तिमुक्त्वा, स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रत्यगृहाणेत्यादिपृथिव्यादीनां ब्रह्महत्याविभागमुपक्रम्य स स्त्रीसंसदमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णातेन्द्रप्रार्थितानां स्त्रीणां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्निति ब्रह्महत्यायास्तृतीयस्य विभागस्य प्रतिग्रहम्, तन्निमित्तं च मलवद्वासस्त्वमुक्त्वा न मलवद्वाससा सह संवदेन्नास्या अन्नमद्यादिति, तदुपगमनं निषिध्य, यां मलवद्वाससमभिसम्भवति यतस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै तस्यै स्तेनो यां पराचीम्, तस्यै ह्रीतस्य मुख्यप्रगल्भा इत्युपगमननिषेधशेषभूतां निन्दामुक्त्वा तत्प्रस्तावेनागतानां रजस्वलाव्रतानां या स्नाति, तस्या अप्सुमारुका याभ्यङ्क्ते, तस्यै दुश्चर्मायाप्रलिखते, तस्यै खलति रपमारी याङ्क्ते तस्यै काणो पादतो धावते तस्यै श्यावदन्वा, या नखानि निकृन्तते, तस्यै कुनखी या कृणति, तस्यै क्लीबो या, रज्जुं सृजति, तस्या उद्बन्धको, या खर्वेण पिबति, तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदितिस्नानादिनिन्दाद्वारेणोक्तानामग्निषोमीयपुरोडाशयागविधिशेषत्वेन प्रतीयमानानां प्रकरणा-

विक्रमेण स्त्रीधर्मत्वावधारणमाचारपरम्परास्मृत्या विना न शक्यमित्याशयः। अतो नानाप्रकरणस्थत्वेन पुरुषधर्मविधिपरत्वकल्पनविक्षेपलक्षणाद्विप्रकीर्णत्वाच्छिष्टाचारपारम्पर्यस्मृत्या विनैकार्थे तात्पर्योपसंहारो न सम्भवतीत्युपसंहरति—एवं चेति। ततश्चाचारप्रामाण्यस्य सिद्धान्तस्मृत्यन्तरितत्वमित्याह—तेनेति। सिद्धान्तमुपसंहरति त्रिवृदादिशब्दानां वाक्यशेषवशेनार्थनिर्णयः—तस्मादिति।

लोकवेदगतयोर्वाशब्दार्थप्रसिद्ध्योर्विरोधे साम्यवैषम्यविचारार्थं तेष्वदर्शनादित्यादिसूत्रद्वयमिति वर्णकान्तरमाह—त्रिवृदिति। एकस्यापि वाच्यत्वे साहश्येनेतरत्र प्रतीतेः प्रयोगोपपत्तिशङ्कानिराकरणार्थम्—विलक्षण इत्युक्तम्। एकेति। लौकिक्येव वैदिक्येव वेति पक्षद्वयमुक्तम्। त्रिवृच्छब्दे विप्रतिपत्तिं दर्शयति—लोके तावदिति। स्तोत्रीयागतनवको विवक्षितः। कथं वेदे स्तोत्रीयानवकार्थत्वप्रसिद्धिरित्यपेक्षायामाह—त्रिवृदिति। 'उपास्मै गायता नरो दिवि द्युतत्याः रुचा, पवमानस्य ते के च सा० सं० उ० १-१-२ इति तृचत्रयानुक्रमणन्नवभिः स्तुवन्तीति स्तुत्यन्तरदर्शनात्स्तोत्रियां नवकविषयत्वं त्रिवृच्छब्दस्यावसीयतइत्यर्थः। चरुशब्दे विप्रतिपत्तिं दर्शयति—तथेति। याज्ञिकप्रसिद्धिं दर्शयति—अनवस्रावेतेति। भक्तव्यावृत्त्यर्थमनवस्रावितविशेषणम्। वैशद्यानपेक्षपाकमात्रनिमित्तत्वदर्शनार्थमन्तरूष्मपक्वग्रहणं वेदे प्रसिद्धिं दर्शयति—तथेति। आदित्यं चरुं विधायाज्यस्यैनं चरुमभिपूर्य चतुराज्यभागान्यजति, पथ्यां स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति, अग्निषोमाविष्ट्वा सवितारं यजत्यदितिमोदनेनेति क्रमपरे वाक्ये सिद्धवदनुवादादोदनवाचिता चरुशब्दस्य ज्ञायते। आश्वलावशब्दे विप्रतिपत्तिं दर्शयति—एवमिति। वेदप्रसिद्धिं दर्शयति—एवं हीति। ऐक्षवीशब्देऽप्यादिशब्दोपात्तां विप्रतिपत्तिं दर्शयति—ऐक्षव्याविति।

विषयं दर्शयित्वा साम्यपक्षे तावत्सूत्रं योजयति—एवमादिष्विति। आदिशब्दः स्तोमशब्दाभिप्रायः। भाष्यकृद्व्याख्याने कः पुनरत्र निश्चय इति सिद्धान्तवेलायां प्रश्नदर्शनाद्विप्रतिपत्तिशब्दस्य सन्देहार्थत्वप्रतीतेस्तद्व्यावृत्त्यर्थं विपर्ययार्थत्वे विप्रतिपत्तिशब्दं व्याख्यातुम्—प्रतिपत्तिविपर्ययइत्युक्तम्। हिशब्दः पादपूरणार्थः। तेष्विति सूत्रावयवव्याख्यातुमाशङ्कते—ननु चेति। सूत्रावयवेनाशङ्कां निराकरोति—नैतदिति। अनेन च तेषु पदार्थेषु वाक्यार्थवदतीन्द्रियत्वाभावेन लोकविषयत्वविरोधस्यादर्शनादिति सूत्रावयवो व्याख्यातः। साम्यपक्षमुपसंहरति—तस्मादिति।

लौकिकप्रसिद्धिबलीयस्त्वपूर्वपक्षमप्यनेनैव सूत्रेणाह—यदि चेति। लौकिकप्रसिद्धिबलीयस्त्वहेतुतया (तेष्विति) सूत्रावयवेनोक्तमनुपसञ्जातविरोधित्वं साधयितुम्—पूर्वभावित्वादित्युक्तम्। पूर्वभावित्वमुपपादयति—वेदेति। नन्वेवं सति वेदस्य पदार्थावधारणोपायत्वाभावेन क्वचिदपि वैदिकप्रसिद्ध्यभावाद्विचार एवायं नोपपद्यतेत्याशङ्क्याह—तत्रेति।

अत्रैव सूत्रं योजयति—तेष्विति। तेष्वदर्शनाद्विरोधस्येति सूत्रावयवस्य तेष्वेवादर्शनाद्विरोधस्येत्यभिप्राय इत्यन्वयः। उभयत्राविरोधसाम्यापत्तिशङ्कानिवृत्त्यर्थमवधारणम्।

किमस्मिन्वर्णके तच्छब्देन परामृष्टमित्यपेक्षिते तेष्विति व्याख्यातम् । पूर्वभावित्वं चाविरोधकारणं पूर्वोक्तमभिप्रेतम्, अर्थवादानां चेत्यादिना कारणान्तरमुक्तम् । अर्थवादानां न पदार्थप्रतीत्यङ्गत्वमवसीयत इत्यन्वयः । हेत्वपेक्षायां संज्ञासंज्ञिसम्बन्धस्य कारणे व्युत्पादने च व्यापाराभावादित्युक्तम् । तद्धेतुत्वेनान्यपरत्वेऽभिहिते, किं परतेत्यपेक्षायां प्ररोचनाशेषत्वमुक्तम् । कथं प्ररोचनेत्यपेक्षिते गुणेत्युक्तम् । वायुक्षेपिष्ठादौ श्रुतिप्रवृत्तिसम्भवात्प्रायग्रहणम् । 'आदित्यो यूपो, यजमानः प्रस्तरः, स्वर्ग आहवनीयः, इति वचनत्रयं दृष्टान्तः । एवं तर्हि पदार्थं प्रत्यौदासीन्येन वाक्यशेषेष्वपि विरोधादर्शनादवधारणानर्थक्यमित्याशङ्क्य पदार्थप्रतिपादनपरत्वाश्रयणे विरोधापादनेनावधारणमुपपादयति—**तदाश्रयणे चेति** । विरोधस्यैवेत्यवधारणेन वा शास्त्रस्य प्रसिद्ध्यानुगुण्यमेवानेन सूत्रावयवेनोच्यत इत्याह—**तथेति** । रक्षारम्भकेषु तन्तुषु नवसंख्यासद्भावेऽप्युपवीतारम्भकायारक्षास्त्रैगुण्यविधानार्थं त्रिवृच्छब्दः । अस्मिन्पूर्वपक्षे समशब्दानुपपत्तिमाशङ्क्य काक्वा सिद्धान्तसूत्रं योजयति—**तस्मादिति** ।

## सिद्धान्तः

वैदिकप्रसिद्धिबलीयस्त्वे सिद्धान्तसूत्रं योजयति—**इतीति** । न केवलं श्रेयःसाधनात्मकं धर्मस्वरूपमेव शास्त्रप्रमाणकम्, किं त्वङ्गमपि, फलं च स्वर्गादीति वक्तुम्—**साधनेत्युक्तम्** । यत्त्वर्थवादानामन्यपरत्वात्पदार्थप्रतीत्यनङ्गत्वमुक्तम्, तत्रान्यपरत्वेऽपि विधिस्तुत्योरेकविषयत्वनियमात्स्तुतिविषयस्यार्थस्यान्यथानुपपत्त्या विधिविषयत्वप्रतीतेस्तस्य चोपसंहारगतस्यापि विध्युद्देशेनाऽग्रहणं निरालम्बनत्वेनार्थवादानर्थक्यापत्तेरानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति' न्यायाद् बलीयस्त्वमित्याह—**अर्थवादेति** । अपिशब्देन बहिष्पवमाने च तृचत्रयानुक्रमणस्य स्तोत्रीयाविधानार्थत्वान्नार्थवादतेत्यपि सूचितम् । नन्वर्थवादावगतस्यार्थस्य विध्युद्देशेन ग्रहणे त्रिवृदादिशब्दानां स्तोत्रियानवकादिवाचित्वेन वृद्धव्यवहारादनवगते विधौ गौणत्वं स्यादित्याशङ्क्याह—**गौणो वेति** । प्रमाणाभावेनाऽन्यत्र विधौ गौणत्वं नाश्रीयते, इह तु वेदप्रमाणकत्वाद् गौणत्वमप्यदुष्टमित्याशयः । परमार्थतस्तु त्रिवृदादिशब्दानां स्तोत्रीयानवकादिष्वपि गुणयोगासम्भवान्मुख्यत्वमेवाभिमतम् । नन्वेवमपि तृचत्रयानुक्रमणेन नवभिः स्तुवन्तीति वचनेन बहिष्पवमाने स्तोत्रीयानवकप्राप्तेस्त्रिवृद्ग्रहणमनर्थकमित्याशङ्क्य तृचत्रयानुक्रमेण नवकवचनयोरभावेऽपि 'त्रिवृदग्निष्टोम' इत्यादौ नवकसिद्धिरस्य विचारस्य प्रयोजनमिति दर्शयितुमाह—**त्रिवृच्छब्द इति** ।

## दशमिकाधिकरणार्थनिरूपणम्

एतदेवास्य विचारस्य प्रयोजनं दशमे त्रिवृदग्निष्टोम इत्युदाहृत्य किमग्निष्टोमसाधनमात्रगतसंख्याविकारिकेयं त्रिवृत्संख्या, स्तोमगतसंख्याविकाविकारिका वेति सन्दिह्य, त्रिवृद्रज्जुरित्यादौ लोके त्रिवृच्छब्दस्य त्रैगुण्यमात्रवाचित्वदर्शनाद् बहिष्पवमानवच्च तृचत्रयानुक्रमणादेः स्तोत्रीयानवकावगतिकारणस्यात्राभावात् त्रिवृत्त्वस्य च संख्यात्वसामान्येन संख्यामात्रकार्ये विनियोगप्रतीतेः सर्वसंख्याविकारिका त्रिवृत्संख्येति त्रिवृत्संख्यासर्वसंख्याविकारः स्यादिति सूत्रेण पूर्वपक्षयित्वा, त्रिवृद्बहिष्प-

वमानमित्युक्त्वा स्तोत्रीयानवकाम्नानात्त्रयस्त्रिकपाला:, त्रिवृता स्तोमेन सम्मिता इति च। नवानां कपालानां त्रिवृत्ता, स्तोमेन समानवचनात्त्रिवृच्छब्दस्य स्तोत्रीयानवकवाचित्वप्रतीतेरत्रोभयसम्भवेऽपि वैदिकत्वसामान्येन स्तोत्रीयानवकविषयत्वावधारणात्स्तोमगतैव पञ्चदशत्वादिसंख्या त्रिवृत्संख्यया बाध्यत इति, 'स्तोमस्य वा तल्लिङ्गत्वादितिसूत्रेण सिद्धान्तं वदतोपपादयिष्यते। प्रसङ्गादादिशब्दोपात्तस्य स्तोमशब्दस्य लोकप्रसिद्धसमुदायमात्रवचनत्वाविक्रमेण स्तोत्रीयासमुदायवचनत्वं वेदयाज्ञिक-व्याकरणप्रसिद्धिबलेनाहैवमिति। तथाप्यवश्यमेव त्रिवृदादिषु द्रष्टव्य इत्यध्याहृत्य योज्यम्। लौकिक्याः समुदायमात्रवचनत्वप्रसिद्धेः का गतिरित्यपेक्षायां—लोकेत्युक्तम्। ननु त्रिवृच्छब्दस्य स्तोत्रीयानवकवचनत्वे 'विप्रस्योर्ध्ववृतं त्रिवृते, त्रिवृता ग्रन्थिनैकेनेति' मनुवचनमयुक्तं स्यादित्याशङ्क्य पौरुषेयवाक्येषु लोकवेदप्रसिद्ध्योस्तुल्यबलत्वेन यथासम्भवं प्रसिद्ध्यनुसारोपपत्तेः, इह त्रैगुण्यवाचित्वमाश्रित्य परिहरति—यत्त्विति।

उपवीतारम्भिकाया वा रक्षा नवतन्तुकारभ्यत्वात्तस्या एव च ग्रन्थ्यारम्भकत्वाद्वैदिकप्रसिद्ध्यनुसारेणैव मनुवचनं युज्यत इत्याह—यद्वेति। ननु वेदेऽपि त्रिवृद्भवतीति रशनात्रैगुण्यप्रयोगदर्शनाल्लौकिकी प्रसिद्धिराश्रितेत्याशङ्क्य, तत्रापि प्रौढ्या याज्ञिकप्रसिद्ध्यनादरेण वैदिकप्रसिद्ध्यनुसारान्नवगुणत्वं भविष्यतीत्याह—तथेति। अयं तु पक्षः स्तोत्रीयाव्यतिरेकेणान्यत्र नवकसंख्यायां त्रिवृच्छब्दप्रयोगाभावादयुक्त इति, वेदप्रसिद्धस्तोत्रीयागतनवकसंख्यारूपार्थसम्भवाद्रशनादौ वेदविरोधाभावाल्लोकप्रसिद्धं त्रैगुण्यमेव ग्राह्यमित्याह—यद्वेति। ननु स्तोत्रीयागतनवकवाचित्वेन शोणादिवन्नवकत्वावान्तरजात्यभावादाकृत्यधिकरणविरुद्धं विशिष्टवाचित्वं प्रसज्येतेत्याशङ्क्य—यथैवेत्युक्तम्। यत्र विशेषणमात्रे शक्तौ कलितायां तदविनाभावाद्विशेष्ये प्रतीतिर्युज्यते, तदेवाकृत्यधिकरणस्य विषयः। अविनाभावाभावे तु स्रुवादिशब्दनां पुत्राभार्याभावे यांचादिविशिष्टवाचित्वमिष्यत एव। वृद्धव्यवहारावसये चार्थे अन्वयव्यतिरेकाभ्यां निकृष्टे शक्तिः कल्प्येत, इह तु त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रीयानवकानुक्रमणान्नवसंख्यायास्त्रिवृच्छब्दवाच्यत्वं कल्प्यमानं स्तोत्रीयागताया एव कल्पयितुं शक्यम्, न शुद्धायाः, प्रमाणाभावादित्याशयः। स्तोत्रीयाविशिष्टस्य नवकत्वस्य वाच्यत्वात्तदेकदेशस्य नवकत्वस्य गौणत्वमभिप्रेतम्।

आश्रयबलाबलानादरेण स्वरूपबलाबलवशात्पदार्थनिर्णयमभिप्रेत्य—उत्तरसूत्र इत्युक्तम्। चरुशब्दस्य त्वोदनसम्बन्धेनैव स्थाल्यां प्रयोगोपपत्तेर्लोकप्रसिद्धेऽर्थे शक्तिर्नैव कल्प्येत्याह—तथेति। सौर्यं चरुं निर्वपेदित्यादौ वाक्यशेषाभावेऽप्योदनो वा प्रयुक्तत्वादित्यत्र १०-१-३०। चरुशब्दस्य वेदयाज्ञिकप्रसिद्धिभ्यामोदनमात्रवाचित्वावसायादोदनस्यैव ग्रहणमिति दशमे वक्ष्यमाणं चरुशब्दोऽपीत्यपिशब्देन सूचितम्। अन्यत्राप्योदनविषय एवेत्यर्थः। अस्मिंश्च वर्णके दाशमिकयोस्त्रिवृच्चर्वधिकरणयोः एतदधिकरणप्रयोजनप्रतिपादनार्थत्वान्न पौनरुक्त्यम्। याज्ञिकशब्दस्य पूर्वनिपातेन वेदप्रसिद्धिनिरपेक्षस्य याज्ञिकवृद्धव्यवहारस्य वाच्यवाचकभावावगमे साक्षात्कारणत्वेनाभ्यर्हितत्वं सूचितम्।

आश्ववालैक्षवीशब्दयोस्तु समुदायप्रसिद्धेर्बलीयस्त्वेनापि दुर्बललौकिकावयवप्रसिद्धि-बाधेन काशतन्मूलवाचित्वमेवसीयत इत्याह—आश्ववालेति। ननु दीर्घश्लक्ष्णपत्राणां काशानामश्वकेशैः सादृश्यादश्ववालशब्दस्य काशेषु गौणप्रयोगोपपत्तेर्न समुदायस्य शक्त्यन्तर-कल्पनं युक्तमित्यलब्धात्मिकायाः समुदायप्रसिद्धेः कथं बलीयस्त्वमित्याशङ्क्याभ्युपगम्यापि गौणत्वम्, वेदक्लृप्तत्वाद् बलीयस्त्वमाह—अथापीति। यथा श्येनेन यजेतेति विहिते यागे सामानाधिकरण्याच्छेयननामत्वेन प्रसिद्धेर्नैकशक्तिकल्पनामयाद्वाच्यवाचकभावानभ्युपगमेऽपि यथा वै श्येनो निपत्त्यादत्तएवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यर्थवादावगतनिपत्त्यादान-कत्वसादृश्येन श्येनपक्षिजात्योपमिते गौणत्वद्वारेणावाप्तप्रसिद्धिः। श्येनशब्दः पुनरिषुयागे धर्मातिदेशाय समानमितरच्छ्येनेनेति प्रयुज्यमानो गौणोऽपि वेदक्लृप्तत्वाद्यागाविषयत्वेनै-वाश्रीयते, तथाऽश्ववालशब्दोऽप्याश्ववालः प्रस्तर इत्यत्र वाक्यशेषात्काशविषयत्वेन प्रतीय-मानोऽनेकशक्तिकल्पनाभयात्तद्वाचकत्वानभ्युपगमेऽपि दीर्घश्लक्ष्णत्वादिसादृश्याद् गौणत्वद्वारेण काशेष्वेवाप्तप्रशिद्धिर्वाक्यशेषाभावेऽपि वेदक्लृप्तत्वात् काशविषयत्वेनैवाश्रीयत इत्यर्थः। नन्वश्ववालशब्दस्य गौणत्वाभ्युपगमे गौणतायाः पदान्तरसामानाधिकरण्यसापेक्षत्वेनासामर्थ्या-पत्तेराश्ववाल इति तद्धितानुत्पत्तिप्रसङ्गान्नाश्ववालशब्दस्य गौणत्वं युक्तमित्याशङ्क्य, अभ्युपगमवादमात्रत्वमस्य प्रकटयितुमाह—अथापीति। यद्यपि गौणत्वं न च ते वालाः काशतां प्राप्ता इति काशरूपेणाश्वस्य बालानां परिणामाभिधानात्प्रकृतिविरकारयोश्च सादृश्यसम्भवाच्छब्दावगतप्रकृतिविकारभावमात्रेणोत्प्रेक्षितम्, न वास्तवमिति शब्दग्रहणेन सूचितम्। वेदस्य सम्बन्धिदृष्टमगवतं चेन्न केनापि वार्यते, स्वतन्त्रत्वेनापौरुषेयत्वेन वेदे दोषाशङ्कानुपपत्तेरित्यर्थः।

ननु धर्मातिदेशादिव्यवहारसिद्ध्यर्थं केनचिद् गुणयोगेन श्येनशब्दस्य यागविशेषनाम-त्वाङ्गीकरणमर्थवत्पुरोडाशानलं कुर्वित्यादौ च लाघवार्थं पुरोडाशशब्देन धानादिहविः पञ्चकलक्षणार्थे वेति इति तु मुख्येन काशशब्देनैव प्रस्तरविधिसिद्धेर्गौणलाक्षणिकाश्ववाल-शब्दानर्थक्यापत्तिः। मुखत्वे त्वाश्ववालः प्रस्तरः कार्यः, काशाश्चाश्ववालशब्देनोच्यन्ते इत्यनेकार्थपरत्वापत्तेर्वाक्यभेदः प्रसज्येतेत्याशङ्क्याह—गौणमिति। काशाश्ववालशब्दयोर्वाच्य-वाचकत्वाभावे निरालम्बनवाक्यशेषापत्तेरगत्या वाक्यभेदोऽपि वेदाङ्गीकृत्वान्न दोषमावहति, परमार्थतस्तु विधिस्तुत्येकवाक्यत्वान्यथानुपपत्त्यैवात्र वाच्यवाचकत्वप्रतीतेर्न वाक्य-भेदोऽस्तीति वाशब्देन सूचितम्। ननु वाक्यशेषबलेन त्रिवृदादिशब्दार्थनिर्णये पूर्वोक्त-मेव पौनरुक्त्यं स्यादित्याशङ्क्याह—न चात्रेति। असन्दिग्धत्वमेव विवृणोति—लौकिकीति। एतद्वर्णकसिद्धान्तमुपसंहरति—बाधतइति। सुखग्रहणार्थं वर्णकत्रयसिद्धान्तं सङ्क्षिपति—तस्मादिति। आद्ये वर्णके शास्त्रशब्देन शास्त्रानुसारित्वादार्या विवक्ष्यन्ते। द्वितीये स्मृतिः। तृतीये वेदः। मुक्तकानां नियमशून्यानां म्लेछानामाचारैरित्याद्य-वर्णकेऽर्थः। मुक्तकैरनिबद्धैरितीतरयोः, सदाचाराणां स्मृतिव्यवधानाद्धर्मविप्रकर्षः—इतरेषां त्वसम्बन्धादेव ॥ ८ ॥

भा० प्र०—"तेषु" = यव आदिशब्दों में। "विप्रतिपत्तिः"=अर्थबोधकता, अर्थात् वि=विशिष्ट, प्रतिपत्ति अर्थात् ज्ञान अर्थात् शाब्दज्ञान या अर्थबोध। "समा"=समान रूप, अर्थात् तुल्यबलयोः=समबल, "विरोधस्य"="अदर्शनात्"=यतः क्योंकि विरोध अर्थात् बलाबल नहीं देखा जाता है।

आर्य और म्लेच्छो के मत में यव आदि की विभिन्न अर्थबोधकता है, वह समान है अर्थात् तुल्यवलशाली है, क्योंकि, इन स्थलों में विरोध अर्थात् प्रावल्य या दौर्बल्य का कोई कारण नहीं है।

स्मृति का प्रावल्य और दौर्बल्य के निरूपण प्रसङ्ग में शब्दप्रयोग के विषय में आर्य एवं म्लेच्छ का अर्थात् अपभाषा प्रयोग करने वाले प्राकृत लोगों के वैषम्य का प्रावल्य और दौर्बल्य का विचार किया जा रहा है। यव, वराह, वेतस, पीलु आदि शब्दों का आर्यों ने यथा क्रम में दीर्घ शूक, शूकर, वञ्जुल (वेद) एवं वृक्षविशेष रूप अर्थ में प्रयोग किया है। एवं म्लेच्छ इन शब्दों का प्रियङ्गु, कृष्णपक्षी, जम्बुवृक्ष एवं हस्वी के अर्थ में व्यवहार करते हैं। आर्य म्लेच्छों का इस अर्थ-व्यवहार के विषय में स्मृतिगत विरोध है, इनमें एक को प्रबल और अन्य को दुर्बल कहने का कोई कारण नहीं है, क्योकि, अर्थबोध कराना ही शब्द का प्रयोजन है और यह दोनों के प्रयोग से सिद्ध होता है, अतः, ये दोनों स्मृतियाँ तुल्यवल हैं, अतः इन शब्दों से दोनों अर्थों की अवगति होनी चाहिए। यही पूर्व पक्ष है ॥ ८ ॥

## शास्त्रस्था वा तन्निमित्तत्वात् ॥९॥ सि०

शा० भा०—वाशब्दः पक्षं व्यावर्तयति। यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियङ्गुषु भविष्यति। यदि प्रियङ्गुषु, सादृश्याद् यवेषु। किं सादृश्यम्। पूर्वसस्येषे क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्च, एतत्तयोः सादृश्यम्। कः पुनरत्र निश्चयः ? यः शास्त्रस्थानाम्, स शब्दार्थः। के शास्त्रस्थाः ? शिष्टाः। तेषामविच्छिन्ना स्मृतिः शब्देषु, वेदेषु च। तेन शिष्टा निमित्तं श्रुतिस्मृतिधारणे। ते ह्येवं समामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्तीति दीर्घशूकान् यवान् दर्शयति वेदः' वेदे दर्शनादविच्छिन्नापारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते। तस्मात् प्रियङ्गुषु गौणः। तस्माद् दीर्घशूकानां पुरोडाशः कर्तव्यः। तस्माद्वराहं गावोऽनुधावन्तीति सूकरे वराहशब्दं दर्शयति, अप्सुजो वेतस इति वञ्जुले वेतसशब्दम्। सूकरं हि गावोऽनुधावन्ति। वञ्जुलोऽप्सु जायते। जम्बूवृक्षः स्थले, गिरि नदीषु वा ॥ ९ ॥

इति यववराहाधिकरणम् ॥ ५ ॥

भा० वि०—सिद्धान्तमाह—**शास्त्रस्येति**। एकस्य शब्दस्योभयार्थत्वं तावदयुक्तम्, अनेकशक्तिकल्पनागौरवात्, शब्दादर्थानवधारणप्रसङ्गात्, विकल्पप्रसङ्गाच्च। अतो न विप्रतिपत्त्योस्समबलतेति। वा शब्दं व्याचष्टे—**वा शब्द इति**। एकत्र मुख्यस्यान्यत्र गौणत्वोपपत्तेश्च नोभयार्थता युक्तेत्याह—**यदिति**। दीर्घशूकेषु मुख्य इति शेषः, यदि प्रियङ्गुषु मुख्यः सामान्यात् दीर्घशूकेषु भविष्यतीत्यर्थः, किं तयोः सादृश्यमत आह—**पूर्वसस्य इति**। यद्यपि न प्रियङ्गवः शरत्पक्वा दीर्घशूकपाककालं फाल्गुनं यावदवतिष्ठमाना दृश्यन्ते। तथापि याभिरोषधीभिः - श्यामाकादिरूपाभिः सह वर्षासु मुमुदिरे। तासु प्रक्षीणास्वपि तेषामवस्थानदर्शनात् सादृश्याभिधानमित्यवसेयम्। एवं वा शब्दव्याख्यानेनानेकार्थत्वानुपपत्त्या विप्रतिपत्त्योः समबलत्वं निरस्यावशिष्टं व्याख्यातुं प्रश्नमुत्थापयति—**कः पुनरितिः**। कुत्र तर्हि मुख्यः ? कुत्र वा गौण इत्यर्थः, शास्त्रस्थपदं व्याकुर्वन्नुत्तरमाह—**यश्शास्त्रस्थानमिति**। प्रसिद्ध इति शेषः, शास्त्रस्थशब्देनाशास्त्रस्थार्थव्यावृत्तौ वैयर्थ्यं मन्वानः शङ्कते—**के शास्त्रस्था इति**। नायमार्यान् व्यावर्तयति, किन्तु म्लेच्छान् इति। परिहरति—**शिष्टा इति**। श्रौतस्मार्तकर्मस्वभियुक्ता इत्यर्थः। तदनेन प्रमाणमनुमानं स्यादित्यतोऽनुषक्तप्रमाणपदान्वितं शास्त्रस्थपदं प्रमाणमित्येवं बलीयस्त्वफलवाचकमपि लक्षणया शास्त्रस्थप्रसिद्धिबलीयस्त्वपरं व्याख्यातम्। शिष्टप्रसिद्धेऽर्थे मुख्यत्वमुपपादयति—**तेषामिति**। शिष्टानां या स्मृतिः प्रतिपत्तिः शब्देषु-शब्दार्थसम्बन्धेषु सा लोके वेदे चाविच्छिन्ना अविप्लुता अबाधितेत्यर्थः, एतदुक्तं भवति शिष्टा एव हि धर्माधर्माविप्लुतिसिद्धये शब्दार्थतत्त्वं विविच्य पर्यालोचयन्तो दृश्यन्ते, म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथा कथंचिदपि सिद्धेः नाविप्लुतिसिद्धये प्रयतन्ते, तेनार्याणामेव प्रसिद्धोऽर्थो मुख्यः तथा च तत्प्रसिद्धिरेव बलीयसीति। वेदेऽपि दीर्घशूकादौ यवादिशब्दप्रयोगात् प्रियङ्ग्वादौ चाप्रयोगादार्यप्रसिद्ध एव मुख्य इति **वेदे** चेत्यनेन सूचितम्। शिष्टप्रसिद्धेर्बलीयस्त्वफलमाह—**तेनेति**। निमित्तम्-प्रमाणमित्यर्थः, श्रुतिस्मृत्यवधारणे-श्रुतिस्मृत्यनुकूलपदार्थावधारण इत्यर्थः। **अत्र च** तन्निमित्तत्वादिति सूत्रावयवोऽविप्लुतशास्त्रार्थानुष्ठाननिमित्तत्वात् तेषामित्येव योजनीयः। एवं यवमयादिवाक्येषु यवादिशब्दानामार्यप्रसिद्धिबलेन दीर्घशूकादिविषयत्वनिर्णयमभिधाय वाक्यशेषेणापि तमाह—**ते ह्येवमिति**। ते शिष्टाः करम्भपात्रेषु-यवमयसक्तुपिण्डेषु पात्राकारविनिर्मितेषु वरुणप्रघासप्रकरणे प्रतिपूरुषं करम्भपात्राणि भवन्तीति विहितेष्वित्यर्थः, यत्र यस्मिन् फाल्गुने मासे, अथ तस्मिन् काल इत्यर्थः, एते-यवाः। वाक्यतात्पर्यमाह—**दीर्घशूकानिति**।

ननु वाक्यशेषवशाद्यवशब्दस्य दीर्घशूकविषयत्वेऽपि कथं तत्रैव मुख्यत्वनिर्णय इत्यत आह—**वेददर्शनादिति**। अविच्छिन्नपारम्पर्यत्वं मुख्यत्वम्। दीर्घशूकेषु

मुख्यत्वे प्रियङ्गुषु गौणत्वे च फलितमाह—(**अत**[1] इति) **तस्मादिति**[2]। पुरोडाशशब्दो हविःपरः। वराहवेतसशब्दयोरपि वाक्यशेषाभ्यां सूकरवञ्जुलविषयत्वं दर्शयति—**तथेत्यादिना**। कथमाभ्यां सूकरवञ्जुलविषयत्वनिर्णयस्तत्राह—**सूकरं हीति**। नवायसमनुधावन्त्ययोग्यत्वादित्यर्थः, स्थलं विशिनष्टि–**गिरिष्वित्यादिना**। नदीषु-नदीकूलेष्वित्यर्थः, न च वाक्यशेषादर्थनिर्णये "सन्दिग्धे तु वाक्यशेषात्" इत्यनेन पौनरुक्त्यम्। वाक्यशेषस्य प्रधानहेतुत्वानङ्गीकारादुपोद्बलकत्वेनैव चोपन्यासादित्यवगन्तव्यम्, तस्मादार्यप्रसिद्धिवाक्यशेषाभ्यां यवादिशब्दानां दीर्घशूकाद्यर्थविषयत्वे सिद्धे विकल्पाप्राप्तिरित्यधिकरणार्थं निगमयति—**तस्मादिति** ॥ ९ ॥

त० वा०—अभिधीयते—

शास्त्रस्था तन्निमित्तत्वात्प्रतिपत्तिर्बलीयसी।
लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥ ४०८

नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता।
या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥ ४०९
लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा।
शास्त्रस्था पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥ ४१०

प्रमाणत्वेन मन्तव्या सप्रत्ययतरा हि ते।
शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥ ४११
स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत्।
लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते ॥ ४१२

रसवीर्यविपाकानां भेदाद्वैद्यैर्यवादयः।
निर्धार्याः स्वार्थतत्त्वेन धर्मसिद्ध्यैव याज्ञिकैः ॥ ४१३
यस्माद्ये याज्ञिकैर्येषां वैद्यैर्वाऽर्था निरूपिताः।
तेषां त एव शब्दानामर्था मुख्या हि नेतरे ॥ ४१४

अनवस्थितशब्दार्थसम्बन्धः सति संभवे।
विकल्पाश्चाष्टदोषत्वान्न कथंचन युज्यते ॥ ४१५
अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते।
तत्रत्यनिर्णयात्तस्माल्लोके भवति निर्णयः ॥ ४१६

यवमतीभिरद्भिरौदुम्बर्याः प्रोक्षणे विधीयमाने वाक्यशेषोऽयं **'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति'** इति बह्वीषु शाखासु श्रूयते भाष्य-

---

१. अत इति प्रतीकग्रहणमिति। २. तस्मादिति भा. पा.।

कारेण वारुणपाघासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलब्धो यः स मन्दप्रयोजनत्वात्तथा नामास्तु ।

फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥ ४१७

प्रियङ्गवः शरत्पक्वास्तावद्गच्छन्ति हि क्षयम् ।
यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः ॥ ४१८

तदा नान्यौषधिम्लानिः सर्वासामेव मोदनात् ।

एवं वराहवेतसशब्दा अपि शास्त्रस्थप्रयोगादेव निश्चीयन्ते ।

( वार्तिकमते भाष्यकारोक्तोदाहरणाद्याक्षेपः )

न त्वेतान्युदाहरणानि, लोकप्रसिद्धेरेव व्यवस्थितत्वाद्युक्तानि ।

तथा हि—नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः ।
जम्बूं न वेतसं प्राहुर्वराहं नापि वायसम् ॥ ४१९

अध्यारोप्य विचारेण किं मुधा खिद्यते मनः ।
संदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयः ॥ ४२०

वक्ष्यत्येव न तेनापि पृथक्कार्या विचारणा ।

यद्यपि तत्राभिधेयसंदेहमनुदाहृत्योपादानसंदेहनिर्णयोपायव्याख्यानं करिष्यति । यावद्वाक्यशेषमेव स निर्णयो नान्यत्र । अयं त्वभिधेयनिर्णय एकत्र च कृतः सर्वत्र च कृत एव भविष्यतीत्येव पुनरुक्तत्वमापद्यते ।

तथाऽपि न्यायतुल्यत्वाद्यथा घृतपरिग्रहः ।
वाक्यशेषात्तथैव स्याद्यवाद्यर्थविनिर्णयः ॥ ४२१

तत्सिद्धिसूत्रे च सारूप्यादीनां गौणवृत्तिनिमित्तानामनुक्रमणाद्वेतससदृशजम्बूप्रत्ययसिद्धिरशब्दार्थत्वेऽपि विज्ञायत एवेति नेहोदाहृतेन कार्यम् ।

(आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलचिन्तनम् ।)

### पील्वधिकरणम्

तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् ।
यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगजा ॥ ४२२

तत्र किं तुल्यता युक्ता किमेकैव बलीयसी ।
समा विप्रतिपत्तिः स्यात् दृष्टार्थव्यवहारिणाम् ॥ ४२३

आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु ।
दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥ ४२४

सर्वो हि शब्दोऽर्थप्रत्यायनार्थं प्रयुज्यते। अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते।

तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा।
तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते॥ ४२५

यथैव ह्यार्यगम्येऽर्थे सम्बन्धानादिता मतिः।
म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम्॥ ४२६

न प्रयोगावधिस्तस्य म्लेच्छेष्वपि हि दृश्यते।
अनाद्योरर्थशक्त्योश्च विशेषो गम्यतां कथम्॥ ४२७

यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः।
एवं स्वार्थे प्रयोगात्तैरिष्टः शब्दोऽपि वाचकः॥ ४२८

तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने।
समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः॥ ४२९

इति प्राप्ते।

अभिधीयते—शास्त्रस्था वेति। पूर्ववदेव सकलसूत्रव्याख्या योजनीया।

किञ्च—यथा साध्वनुरूपत्वान्प्रमादाशक्तिजेष्वपि।
जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते॥ ४३०

शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति। ते शास्त्रस्थैरेवाविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुम्। अभियुक्तानभियुक्तज्ञानयोश्चाभियुक्तज्ञानं बलवत् इतरस्य सुलभापवादत्वात्।

अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम्।
या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता॥ ४३१

एतेनाऽऽर्यावर्तनिवासिमध्येऽपि—

अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत्॥ ४३२

### इति वार्तिकमतेन पीलुवर्णकम्

(स्मृत्याचारविरोधे बलाबलविचिन्तनम्।)

### समा विप्रतिपत्तिरितिसूत्रयोजनम्

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि॥ ४३३

यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता।
आचाराणां तथैवेति न विशेषो बलाबले॥ ४३४

**तेष्वदर्शनादिति सूत्रयोजना**

यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात्प्रतीयते ।
फलाद्वियुज्यमानं हि प्रमाणं दुर्बलीभवेत् ॥ ४३५
श्रुतिराचारमूलं या फलस्था सोपलभ्यते ।
यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥ ४३६
तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति ।
प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥ ४३७
तेनाऽऽचारबलीयस्त्वं संमत्वं देह युज्यते ।

इति पूर्वपक्षः ।

**सिद्धान्तः**

स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ॥ ४३८

उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ।
सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ॥ ४३९
तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ।

**स्मृत्याचारयोर्द्व्यन्तरितप्रामाण्यमिति कथनम्**

आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ॥ ४४०
तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ।
न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका ॥ ४४१
भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्तनम् ।
नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः ॥ ४४२
क्वचित्प्रकरणे कश्चित् कथंचिदुपलभ्यते ।

तद्यथाऽग्निप्रकरणे **'यत्सप्तदशवतीमुपदधाति अन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य; पुरुषोऽन्नमत्ति' इति ।** सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसंभवात् । 'विधायिष्यते तु वेदे वचने' (शा० भा०) त्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतोऽर्थतः प्राप्तम्, येन 'तस्मात्प्रजा दश मासान्गर्भं धृत्वा एकादशमनु प्रजायन्ते, तस्मादश्वतर्यः प्रजाः' इतिवत् स्वभावप्राप्तत्वेन, अर्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान्पितोपजीवति' इतिवदनूद्येतेत्यतो' न्यायात्पुरुषधर्मविधिः । एवम् **'अन्नमेव तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति ।** **तथा दीक्षितो नयनं दक्षिणं प्रथमम् भुङ्क्ते, सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै' इति तै० सं० ६।१ ।** तथा यूपैकादशिन्यां 'द्वे द्वे रशने यूपमृच्छतः । **तस्मात्स्त्रियः पुंसोऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते, नैका बहून् पतीन्' इति ।**

तथा दर्शपूर्णमासप्रकरणेऽग्नीषोमीयविधिसम्बन्धलङ्घनेन त्वाष्ट्रवधनिमित्तेन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागतरजस्वलाव्रतानां भूमिशयनास्नानामांसभक्षणानभ्यङ्गानञ्जनाविलेखनाकर्तनादन्तधावनानखच्छेदनारज्जुसंसर्जना - दीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्मत्वावधारणम् ।

एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः ।
स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः ॥ ४४३

तेनाऽऽचारः स्मृतिं यावदनुमातुं प्रवर्तते ।
स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवावधारयेत् ॥ ४४४

तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति ।

( लोकवाक्यशेषयोर्विरोधे बलाबलचिन्तनम् ॥ )

त्रिवृच्चर्वश्वबालादेर्लोकेऽन्योऽर्थः प्रतीयते ।
वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥ ४४५

तत्र किं तुल्यकल्पत्वात्पदार्थे लोकवेदयोः ।
समा विप्रतिपत्तिः स्यादथवैका बलीयसी ॥ ४४६

लोके तावत्त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः ।
त्रिवृद्रज्जुस्त्रिवृद्ग्रन्थिर्वेदे तु नवके स्थितः ॥ ४४७

त्रिवृद्बहिष्पवमानमित्युक्त्वा तृचत्रयमनुक्रान्तमिति स्तोत्रीयङ्नवकवचन एवं त्रिवृच्छब्दो विज्ञायते ।

तथाऽयं चरुशब्दोऽपि लोके स्थालीनिबन्धनः ।
याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति ॥ ४४८

अनवस्रावितान्तरुष्मपक्वौदनवचनो हि याज्ञिकानां चरुशब्दः प्रसिद्धः तथा वेदेऽपि 'आदित्यः प्रायणीयः पयसि चरुः' इति विहिते पश्चादुक्तमदिति**मोदनेनेति**-वचनाच्चौदनवचनत्वं ज्ञातम् ।

एवमाश्वबालः प्रस्तरः, इत्यश्वजातीयबालमयः प्रस्तरो लोकप्रसिद्धया विज्ञायते । वैदिकवाक्यशेषात्तु काशेष्वश्वबालप्रसिद्धिः एवं हि श्रूयते—

**(यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्सोऽपः प्राविशत्)**

**स वालधौ गृहीतः, स वालान्मुक्त्वा विवेश ह ।**
**ते वालाः काशतां प्राप्ताः** कार्योऽतः प्रस्तरस्तु तैः ॥

ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके ।
लोके सिद्धे तथा वेदे काशानामेव मूलके ॥ ४४९

एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये ।
प्रतिप्रत्तेः समानत्वाद्विकल्पो हि प्रसज्यते ॥ ४५०

ननु च लोकप्रसिद्धेर्धर्मं प्रत्यनङ्गत्वाद्वेदप्रसिद्धिरेव ज्यायसी ॥

नैतदेवं पदार्थेषु न हि वेदो विशिष्यते ।
अदृष्टहेतुवाक्यार्थे लोकात्स ह्यतिरिच्यते ॥ ४५१

तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत् ।
यदि वा पूर्वभावित्वाल्लौकिक्येव बलीयसी ॥ ४५२

वेदनिरपेक्षा हि लोकप्रसिद्धिरात्मानं लभते, वैदिकी पुनर्लोकप्रसिद्धपदान्तरसामानाधिकरण्येन सिध्येत् ।

तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते ।
लोकसिद्धिं व्यतिक्रम्य साऽऽत्मानं नैव विन्दति ॥ ४५२

'तेष्वदर्शनाद्विरोधस्य' इति च तेषु लौकिकेषु पदार्थेष्वदर्शनाद्विरोधस्यार्थवादानां चान्यपरत्वेन गुणवादप्रायत्वात् । आदित्ययूपयजमानप्रस्तरस्वर्गाहवनीयादिवचनवत्कथमपि प्ररोचनाशेषत्वात् संज्ञासंज्ञिसम्बन्धकरणव्युत्पादनव्यापाररहितत्वाच्च न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयते । तदाश्रयणे च विधिविरोधप्रसङ्गात् । तेष्वेव वा दर्शनाद्विरोधस्येत्यभिप्रायः । तथा शास्त्रस्थमन्वादिप्रसिद्धिरप्यस्मत्पक्षानुगुणैव ।

तथाऽऽह—'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्[1] ।'
त्रिवृता ग्रन्थिनैकेति[2] ॥ ४५४

तस्मात्समाऽपि तावद्भवत्विति प्राप्ते—

## सिद्धान्तः

अभिधीयते–शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् ।
धर्मस्य तन्निमित्तत्वात्ससाधनफलात्मनः ॥ ४५५

अर्थवादकृताऽप्यर्थप्रतिपत्तिर्बलीयसी ।
तद्ग्राह्यत्वादृते नान्यत्तस्या ह्यस्ति प्रयोजनम् ॥ ४५६

गौणो वा यदि वा मुख्यो वेदेनाऽऽश्रीयते हि यः ।
स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते ॥ ४५७

---

१. 'शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकमेव च' इत्युत्तरार्धम् । मनु० २ अ० श्लो० ४४ ।
२. मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ मनु० अ० २ श्लो० ४३

त्रिवृच्छब्दः प्रयुक्तो यस्स्तोत्रीयानवकं प्रति ।
कस्तं शक्तस्तोऽन्यत्र नेतुं जन्मशतैरपि ॥ ४५८

तेन यत्र त्रिवृदग्निष्टोम इति श्रूयते, तत्र तेनैवार्थेन भवितव्यम् । एवं स्तोम-शब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धः तथाऽपि 'त्रिवृदेव स्तोमो भवति, पञ्चदशस्तोमो भवति' इति वेदे श्रवणात् स्तुतेश्च मानं स्तोम इति याज्ञिकस्मरणात् । तथा 'स्तोमे डविधिः पञ्चदशाद्यार्थं' इति व्याकरणशास्त्रप्रसिद्धेरवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया ।

यत्तु मनुवचनं तदुभयाश्रयत्वात् समत्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात्प्रत्येष्यते तथा रशनात्रिवृत्त्वमपीति । यद्वा यथैवायं नवके दृष्टः तथाऽयं स्तोत्रीयागतेऽपीति यत्रैव तत्संभवः तत्रैव तत्प्रसिद्ध्यनुपाती भवति । यत्र तु संख्येयान्तरविषयत्वम्, तत्र वैदिकोऽर्थो गौणः, गृह्यतां लौकिको वा मुख्य इति तादृशे विषये मुख्यार्थत्वाल्लौकिकप्रसिद्धिरेव ग्रहीतव्येत्युत्तरसूत्रे वक्ष्यामः "चोदितं तु प्रतीयेताविरोधात्" इति ।

तथा चरुशब्दोऽप्यन्याय्यानेकार्थाभिधानप्रतिबद्धशक्तित्वादेकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यामोदनविषय एव भवति । आश्ववालैक्षवीशब्दौ तु यदि तावद्वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीमवयवप्रसिद्धिं जहीतः । ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येनजात्युपमितप्रसिद्धश्येनयागे गौणत्वद्वारा वाऽऽप्तप्रसिद्धिः **'समानमितरच्छ्येनेन'** इत्यादिष्विवाऽऽश्रीयते; तथाऽपि शास्त्रकल्पितत्वाद्धर्मं प्रति बलीयस्त्वम् ।

अथापि शब्दगौणत्वं तथाऽपि बलवत्तरम् ।
स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते ॥ ४५९
गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ ४६०

न चात्र 'सन्दिग्धेषु वाक्यशेषात्' इत्येतेन तुल्यार्थत्वम्, प्रतिपत्तिद्वयस्याप्यसन्दिग्धत्वात् ।

लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता ।
वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात् ॥ ४६१
तस्माच्छास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी ।
न समा मुक्तकाचारैर्विप्रकृष्टैः ससंकरैः ॥ इति ॥ ९ ॥ ४६२

(इति वर्णकचतुष्टयसहितं यववराहाधिकरणम् ॥ ४ ॥)

न्या० सु०—अत्र भाष्याच्छास्त्रस्थम्लेच्छप्रसिद्धयोर्बलाबलचिन्तेति प्रतिभाति । तच्च म्लेच्छाचारप्रामाण्यस्य प्रागव्युत्पादितत्वादयुक्तमाशङ्क्य, शब्दार्थविषये म्लेच्छाचारप्रामाण्याप्रामाण्यचिन्तापरत्वेन सन्देहभाष्यं व्याचष्टे—ये शब्दा इति । म्लेच्छप्रसिद्धार्थाग्रहणेऽपिकादिशब्दानर्थक्यमाशङ्क्य भाष्यकृता धातुतोऽर्थः प्रकल्पयितव्य इत्यभिधानादार्यप्रसिद्धयभावेऽपि म्लेच्छप्रसिद्धार्थो न ग्राह्य इति पूर्वपक्षवचनव्यक्तिः सूचितेत्याशयः । किमत्र सन्देहकारणमित्यपेक्षायामाश्रयस्वरूपबलाबलीविसंवाद सन्देहकारणं दर्शयितुमाह—तथेति । प्रकृतचिन्तासिद्धयर्थम् । एतदपि चिन्त्यते इति तथाशब्दार्थः । निरुक्तव्याक्रियाद्वारेत्यनेन शास्त्रस्थत्वमवयप्रसिद्धित्वं सूचितम् । समुदायप्रसिद्धिर्वा बलीयसीत्यनुषङ्गः । ननु षष्ठे वचनाद्रथकारस्याधानस्य सर्वशेषत्वादि(६-१-४४)त्यत्राधिकरणे समुदायप्रसिद्धेरवयवप्रसिद्धितो बलीयस्त्वस्य वक्ष्यमाणत्वात्समुदायावयवप्रसिद्धयोर्बलाबलचिन्ता पुनरुक्तेत्याशङ्क्य—म्लेच्छस्यैवेत्युक्तम् । शास्त्रस्थप्रसिद्धेर्बलीयस्त्वे समुदायप्रसिद्धिर्म्लेच्छेष्वेव तिष्ठति, नार्यगामिनी भवति नार्यान्प्रत्यात्मानं लभत इत्यर्थः ।

अथ वावयवप्रसिद्धित्वेन तस्या दौर्बल्यात्समुदायप्रसिद्धिराचार्यानपि प्रति भवेदात्मानं लभत इत्यर्थः । समुदायप्रसिद्धेरेवात्र प्रामाण्याप्रामाण्यरूपात्मलाभसदसद्भावसिद्धयर्थं निरुक्तादिद्वारप्रसिद्धिबलाबलविचारः क्रियत इत्याशयः ।

यद्वा किं निरुक्तादिद्वाराप्रसिद्धिः शास्त्रस्थत्वाद् बलीयसी, म्लेच्छस्यैव वा समुदायप्रसिद्धत्वादित्येकं विचारप्रकारमुक्त्वा किं निरुक्तादिद्वारावयवप्रसिद्धिर्वा म्लेच्छस्थत्वादिति प्रकारान्तरसूचनार्थत्वेन वाप्यथवा शब्दो योज्यः ।

यद्वा शास्त्रस्थम्लेच्छप्रसिद्धयोः का बलीयसीत्येवं प्रकारमुक्त्वा, म्लेच्छस्थैव वा किं म्लेच्छस्थत्वाद् दुर्बला, समुदायप्रसिद्धित्वाद् बलीयसीत्येवं विचार्या भवेदिति प्रकारान्तरप्रतिज्ञानार्थोऽथ वा शब्दः । म्लेच्छस्थैव प्रसिद्धिर्विचार्या भवेदित्युक्ते कथं विचार्येत्यपेक्षायां विचारस्वरूपं सोपपत्तिकं दर्शयति—म्लेच्छस्थप्रसिद्धिरिति । पूर्वव्याख्यानयोरप्येतदेव प्रकारान्तरप्रतिज्ञातमेवानेन ग्रन्थेन प्रतिपाद्यत इति विशेषः । निरुक्तादिद्वारैव वा प्रसिद्धिः किं शास्त्रस्थत्वात् बलीयसी अवयवप्रसिद्धित्वाद्वा दुर्बलेति प्रकारान्तरमाह—तथेति । भाष्येऽपि निगमनिरुक्तव्याकरणवशेनेत्यनेनावयवप्रसिसिद्धेः शास्त्रस्थत्वं बलीयस्त्वकारणमुक्तम् । कल्पयितव्य इति कल्पनीयत्वं दौर्बल्यकारणम् । म्लेच्छा इति च समुदायप्रसिद्धेर्म्लेच्छस्थत्वं दौर्बल्यकारणमुक्तम् । आचरन्तीति क्लृप्तत्वं बलीयस्त्वकारणमिति विवेकः ।

शिष्टाचारस्येत्यादिपूर्वपक्षभाष्यं सन्देहभाष्यव्याख्यानोपसंहारपूर्वकं व्याचष्टे—एवमिति । म्लेच्छप्रसिद्धौ प्रयोक्तृदौर्बल्यम्, स्वरूपबलीयस्त्वम् इतरत्र प्रयोक्तृबलीस्त्वम्, स्वरूपपदौर्बल्यमित्युपपत्तिचतुष्टयान्म्लेच्छप्रसिद्धिप्रामाण्याप्रामाण्यसन्देहे सिद्ध इत्यर्थः । पूर्वापवादत्वेनानन्तरसङ्गतिसूचनार्थं सूत्रोपन्यासः । पिकादिशब्दार्थप्रसिद्धेः शास्त्रस्थानामसिद्धत्वात्कथं बलीयस्त्वमित्याशङ्क्य—कल्प्यापीत्युक्तम् । नावक्लृप्तायाः स्वरूपेणवा-

सत्त्वात्कथं बलीयस्त्वमित्याशङ्क्य, साधुमूलबलेनासिद्धाया अपि साधयितुं शक्यत्वादिति परिहरति—**तन्मूलस्येति** ।

ननु समुदायप्रसिद्धयवयवप्रसिद्धिबाधात्कथं प्रामाण्यमित्याशङ्कानिराकरणार्थं नाशिष्टस्मृतेरिति भाष्यावयवं व्याचष्टे—**न सिद्धमपीति** । म्लेच्छप्रसिद्धेऽर्थे वैदिकानां शब्दानां समुदायप्रसिद्धेरात्मलाभासम्भवान्नावयवप्रसिद्धेर्बाधकमस्तीत्याशयः । सिद्धमप्यसन्मूलं न प्रमाणमिति, लुप्तभावप्रत्ययप्रमाणशब्दानुषङ्गेण योज्यम् । ननु शब्दार्थसम्बन्धस्य वृद्धव्यवहारमात्रप्रमाणकत्वान्म्लेच्छव्यवहारस्यापि तत्र प्रामाण्योपपत्तेः कथमाश्रयदोषेण दुष्टत्वमित्याशङ्क्याभ्युपगम्यापि तावन्म्लेच्छव्यवहारस्य शब्दार्थसम्बन्धे प्रामाण्यम्, वैदिकशब्दानां म्लेच्छप्रसिद्धार्थाभिधायित्वं न सम्भवतीत्याह—**कथमिति** । गृहीतसम्बन्धस्य श्रुतस्य शब्दस्यार्थाभिधायकत्वान्म्लेच्छानां च सम्बन्धग्रहणसम्भवेऽपि वैदिकशब्दश्रवणाभावात्तच्छ्राविणां चार्याणां म्लेच्छसम्भाषणनिषेधेन तत्प्रसिद्धार्थसम्बन्धग्रहणासम्भवान्नार्यान्प्रति समुदायप्रसिद्धेरात्मलाभः सम्भवतीत्याशयः । म्लेच्छप्रसिद्धार्थग्रहणे च निगमादीनामानर्थक्यापत्तेस्तद्ग्रहणं न युक्तमिति, प्रतिपादनार्थं निगमादीनां चेति भाष्यम् । म्लेच्छप्रसिद्धार्थाभावे निगमादीनामर्थवत्त्वोपपत्तेरयुक्तमाशङ्क्योपपादयति—**एवं चेति** । म्लेच्छप्रसिद्धेः प्रमाणत्वे सतीत्यर्थः ।

ननु सर्वम्लेच्छदेशान्वेषणेऽपि यस्यार्थस्याऽप्रसिद्धिः, स निगमादीनां विषयो भविष्यतीत्याशङ्क्याह—**अनन्तेति** । शङ्कामेवोपपादयति—**अनन्तेषु हीति** । कोऽर्थः क्व देशे सिद्ध इत्यर्थः । सर्वम्लेच्छदेशान्वेषणे तु बाधशङ्का दुष्परिहरेत्याह—**निगमादिति** । अस्मत्पक्षे त्वार्यावर्त्तदेशस्याल्पत्वेन सर्वान्वेषणसम्भवात्तदप्रसिद्धोऽर्थो निगमादीनां विषयो भविष्यतीत्याह—**म्लेच्छाचारेति** । उपसंहरति—**तस्मादिति** । म्लेच्छव्यवहारस्य शब्दार्थसम्बन्धे प्रामाण्यमभ्युपगम्य वैदिकशब्दार्थावधारणं म्लेच्छव्यवहारान्न—**सिद्ध्यतीत्युक्तम्** । परमार्थतस्त्वनभियुक्तत्वान्म्लेच्छानाम्, न तद्व्यवहारः शब्दार्थसम्बन्धे प्रमाणमिति, प्रतिपादनार्थमनभियोगश्चेत्यादिभाष्यं व्याचष्टे—**धर्मे चेति** । नन्वपभ्रष्टस्य शब्दस्यार्थतत्त्वानवधारणेऽपि संस्कृतस्य शब्दस्य म्लेच्छव्यवहारादप्यर्थतत्त्वावधारणं भविष्यतीत्याशङ्क्याह—**न चेति** । 'न म्लेच्छभाषां शिक्षेतेति' तद्भाषानिषेधसूचनायापभाषणमित्युक्तम् ।

ननु पिकादिशब्दानां वेदतदभियुक्तप्रयुक्तत्वेन संस्कृतानां म्लेच्छभाषायां दृष्टत्वादसत्त्ववचनमयुक्तमित्याशङ्क्याह—**संस्कृतेति** । अविभक्तिकत्वात्संस्कृतसदृशास्तैः प्रयुज्यन्ते । न च सादृश्यमात्रेण शालाशब्दस्येव मालाशब्दार्थवाचकत्वं युक्तमित्यर्थः । यवादिशब्दानामाचारान्तरे प्रयोगान्न म्लेच्छव्यवहारेणाऽर्थतत्त्वाध्यवसाय इति द्योतनायाऽर्थान्तरे—**इत्युक्तम्** । संस्कृतप्रतिरूपेभ्यश्च म्लेच्छप्रयुक्तेभ्यः । संस्कृतशब्दकल्पने अनेकविधोत्प्रेक्षासम्भवान्न व्यवस्थितशब्दार्थावधारणं सम्भवतीत्याह—**आर्याश्चेति** । कथं पदान्तराक्षरोपेतं कल्पयन्तीत्यपेक्षिते कदाचनेति—**प्रकारद्वयमुक्तम्** ।

यन्म्लेच्छैरधिकाक्षरं प्रयुक्तम्, तत्र स्वराद्यधिकमक्षरं प्रक्षिपन्तीत्यर्थः। एतदेव विवृणोति—तद्यथेति। आदिशब्दोऽनुस्वारलोपमत्वर्थीयप्रत्ययाभिप्रायः। स्वरान्तकल्पनामुदाहरति—तद्यथेति। स्वरान्तत्वविभक्त्यन्तत्वकल्पनयोरुदाहरणमाह—पन्थानामिति। स्वरान्तानुस्वारलोपकल्पनयोरुदाहरणमाह—तत्त्वेति। स्त्रीप्रत्ययकल्पनामुदाहरति—एवमिति। मत्वर्थीयप्रत्ययकल्पनामुदाहरति—वैरशब्दं चेति। विशेषतः प्रत्यन्तवासिम्लेच्छभाषायां व्यवस्थितशब्दार्थावधारणं न सम्भवतीत्याह—तद्यदेति। किं शब्दस्वरूपं स्वभाषानुरूपमुत्प्रेक्ष्य किमर्थंरूपं प्रतिपत्स्यन्त इत्यर्थः। उपसंहरति—तस्मादिति। विविधं कल्पप्यत इत्यर्थः। तस्मादित्युपसंहारभाष्यं व्याचष्टे—निरुक्तेति। निरुक्तादिभ्योऽनेकार्थंप्रतिभानेऽप्यक्षादिशब्दवत्प्रकरणादिना विशेषावधारणम्, तदभावेऽप्यसम्भवद्व्युत्पत्तिपदार्थव्यावृत्त्या सम्भवद्व्युत्पत्तिपदार्थविशेषरूपेणावधारणं भविष्यतीत्याशयः।

सूत्रव्याख्यानार्थमेवं प्राप्त इत्यादिसिद्धान्तभाष्यम्। शब्दाविप्लुत्यभावेनार्थविप्लुतिशङ्कानिराकरणाशक्तेरयुक्तमाशङ्क्य, शब्दान्तरेषु विप्लुतिशङ्कानिराकरणाशक्तावपि पिकादिशब्दानां वेदादिशास्त्रप्रयुक्तत्वेनाविभक्तिकम्लेच्छप्रयोगेऽपि प्रातिपदिकाविप्लुतिनिश्चयान्मुख्यार्थान्तराप्रसिद्धेश्च गौणत्वायोगादनादिम्लेच्छव्यवहारान्यथानुपपत्त्या वाचकत्वकल्पनं युक्तमित्याभिप्रायेण व्याचष्टे— एवमिति। पिकादिशब्दस्वरूपस्य शिष्टैरप्यवगतत्वाद्गौणत्वासम्भवप्रतिपादनार्थं शिष्टानवगतिविशेषणानुपपत्तिमाशङ्क्यार्थं इत्युक्तं प्रतीयेतेत्यस्य न्यूनत्वाशङ्कानिराकरणार्थम्—तथैवेत्युक्तम्। विध्यनुवादविवेकार्थौ यत्तच्छब्दौ। अविरोधत इति तसिला यत्प्रमाणेनेति यच्छब्दा यस्मादित्यर्थे व्याख्यातः। तदवे गम्यमानमिति भाष्यावयवं विप्लुतिशङ्कानिराकरणार्थत्वेन व्याख्यातुम्—पिकेत्युक्तम्। यथाभाष्यं सूत्रपादानामन्वयं कृत्वा पदार्थान्व्याचष्टे—चोदितं हीति। हिशब्दोऽलङ्कारार्थः। न तद्धर्मप्रमाणेनेत्यत्र चाकृष्य व्याख्येयः। म्लेच्छप्रयुक्तस्यार्थस्यार्यप्रत्यप्रसिद्धिमाशङ्क्य—अवधृतमित्युक्तम्।

विरोधाभावाभिप्रायेणाविरोधपदं व्याख्यायाधर्मपदवद्विरोधविपरीतानुसाराभिप्रायेण व्याचष्टे—अपि चेति। अस्मिन्व्याख्यानेऽवगम्यमानमित्यवशब्दोऽनेकार्थत्वान्निपातोपसर्गाणामनुशब्दार्थे व्याख्येयः। स्वयमन्यथा द्वेधा सूत्रं योजयति—पिकादाविति। म्लेच्छप्रसिद्धस्यार्थस्यार्यैरपेक्षणे दृष्टान्तमाह—यथैवेति। तेषामप्युदाहरणत्वाददृष्टान्तमाशङ्क्य विशस्तपश्ववयवविभागाविकारेण सामान्यतः पश्ववयवत्वज्ञानाद्विशेषमात्रापेक्षायां निरुक्तादिना निर्धारितविशेषावधारणासम्भवात्। पश्ववयवत्वसामान्यांशेऽथ म्लेच्छप्रसिद्धेः सम्वादाभावादगत्या म्लेच्छप्रसिद्धार्थग्रहणे सिद्धेर्दृष्टान्तत्वमुपपादयितुम् - पश्ववयवा इत्युक्तम्। द्रव्यान्तरमिश्रं हिरण्यं कूटमिति कूटशब्दवाच्यज्ञानेऽपीदं शुद्धमिदं मिश्रमिति विवेकाय तदभियुक्तापेक्षा प्रसिद्धंवेति दृष्टान्तान्तरमाह—यथा चेति।

दार्ष्टान्तिके योजयन्स्वयमेव तृतीयव्याख्याप्रकारमाह—तथेहेति। सूत्रेण म्लेछाचारप्रमाणकसमुदायप्रसिद्धिसद्भावमुपपाद्य शास्त्रस्थप्रसिद्धेर्बलीयस्त्वेन तद्बाधस्य पूर्वपक्षितस्य

निराकरणार्थं यत्तु शिष्टाचार इति भाष्यं व्याचष्टे—यस्त्विति। एवमनुभाष्य स्वयं तावच्छब्दार्थव्यवहारेऽपि पूर्वाधिकरणन्यायेन शास्त्रस्थप्रसिद्धिबलीयस्त्वमङ्गीकृत्य विरोधाभावेनाऽबाधमाह—नेति। नन्वविरोधेऽपि शाक्यादिग्रन्थवच्छिष्टापरिगृहीतत्वान्म्लेच्छव्यवहारस्याप्रामाण्यं भविष्यतीत्याशङ्क्याह—यदेवेति। या वेदबाह्याः स्मृतय इत्यादिना वेदबाह्यस्मृतीनां निष्फलत्वस्मरणाच्छाक्यादिग्रन्थावगतस्य श्रुत्यादिसम्वादिनाऽपि श्रेयःसाधनत्वाभावप्रतीतेरदृष्टार्थेषु वेदबाह्यानां विरोधाभावे—अप्यप्रामाण्यं युक्तम्। दृष्टार्थे तु शब्दार्थव्यवहारे म्लेच्छानामपि प्रतीतिप्रयोगान्यथानुपपत्तिप्रभववाच्यवाचकभावविषयार्थापत्तिज्ञानस्य निराकर्त्तुमशक्यत्वादप्रतिहतं प्रामाण्यमित्याशयः।

एतदेव पूर्वाधिकरणव्युत्पादिताभियुक्ततरार्यप्रसिद्धिबलीयस्त्वेन द्रढयति—अत एवेति। यत एवाविरोधे दुर्बलस्यापि ग्राह्यत्वम्। अत एव वैदिकवाक्यार्थे येऽभियुक्तरा वैद्यास्तेषामितरार्येभ्यो बलीयस्त्वमन्यथा शास्त्रापेक्षया तत्प्रसिद्धेरपि दौर्बल्यादग्राह्यत्वं स्यादित्यर्थः। नन्वार्यान्तरेभ्योऽप्यभियुक्ततरार्याणां बलीयस्त्वे म्लेच्छेभ्यः सुतरां स्यादित्याशङ्क्य—प्रसिद्धाविति। श्लोकं विवृणोति—अष्टकादिषु हीति। अष्टकाद्यर्थेषु मन्वादीनां शाक्यादिभ्यो बलीयस्त्वं पदस्वरूपज्ञानेषु वैयाकरणानामितरेभ्यः, पदार्थज्ञानेषु याज्ञिकानां वैद्यानां च पिकादिषु तु म्लेच्छप्रयोगेभ्योऽर्थनिर्णये सति न किञ्चिद्विरुद्धम्। प्रत्युताकाङ्क्षितं पदार्थज्ञानं सेत्स्यतीत्यन्वयः।

ननु विप्लुतिभूयिष्ठत्वेन म्लेच्छप्रयोगेभ्यः शब्दस्य स्वरूपस्यैवानवगतेः कथंचिद् बाह्यस्वरूपावगमेऽपि स्तोभाक्षरवदवाचकत्वस्यापि सम्भवात् कथं पदार्थज्ञानाकाङ्क्षत्याशङ्क्यार्थेत्युक्तम्। वेदादौ प्रयोगात्स्वरूपावगमः, वाक्यान्वयान्यथानुपपत्त्या च वाचकत्वावगमः, वाच्यविशेषज्ञानमपि तर्हि आर्येभ्य एव भविष्यतीत्याशङ्क्य—वाच्येत्युक्तम्। ननु म्लेच्छप्रयोगान्निर्मूलान्नार्थनिर्णयो युक्त इत्याशङ्क्य—पदवदित्युक्तम्। म्लेच्छानामपि मूलप्रमाणसम्भवो दृष्टग्रहणेनोक्तः। अनादित्वेन दोषनिरासः पदे यथा प्रत्यक्षत्वान्म्लेच्छैरपि लब्धाप्रसिद्धिः। एवं दृष्टो यः कोकिलादिरर्थः। तत्प्रतिपत्त्यर्थो योऽनादिः पिकादिशब्दप्रयोगः तेन लब्धशब्दार्थसम्बन्धविषया प्रसिद्धिर्यैर्म्लेच्छैस्ते तथोक्ताः।

नन्वार्यप्रसिद्ध्यभावेऽपि निगमादिभ्योऽर्थनिर्णये सिद्धेर्म्लेच्छप्रसिद्धिबाधः स्यादित्याशङ्क्याह—निगमेति। ननु निगमादिभिर्निर्धारितरूपार्थविशेषानुदाहरणेऽप्यवयवव्युत्पत्त्या कश्चिदर्थविशेषो ज्ञाप्यते। अत आह—काल्पनिक इति। अनेन च सत्यपि विरोधे समुदायप्रसिद्धेरेव रथकाराधिकरणन्यायेनावयवप्रसिद्धितो बलीयस्त्वादबाध इत्युक्तम्। भाष्यकृता त्वदृष्टार्थेष्वेव शिष्टाचारस्य म्लेच्छाचाराद् बलीयस्त्वं न लौकिकेष्विति तत् प्रत्यक्षानवगतेष्वपि परिहारः कृतः। तद्व्याचष्टे आश्रयाणां चेति। म्लेच्छानामनभियुक्तत्वात्तदाचारस्य शब्दार्थसम्बन्धाप्रामाण्यं पूर्वपक्षोक्तं यत्त्वभियुक्ता इत्यनुभाष्याभियुक्ततरा इति भाष्येण परिहृतम्। तद्व्याचष्टे—तस्मादिति। वाच्यनिर्णये म्लेच्छानां प्रामाण्याभावे

कौशलमात्रस्याप्रयोजकत्वात् दृष्टार्थेषु शिष्टम्लेच्छयोः प्रामाण्येन तुल्यत्वमनन्तरोक्तम् । तस्माच्छशब्देन परामृष्टम् । यत्तु शब्दस्वरूपवन्म्लेच्छप्रसिद्धेऽर्थेऽप्यविश्वास इत्युक्तं तत्परिहरति—शब्देति । शिष्टाचारऽनिबन्धनेनाश्वासः, न स्वरूपयुक्त इत्याशयः । किं च पिकादिशब्दवाच्यानां कोकिलादीनामर्थे देशसद्भावात्पिकादिशब्दवाच्यत्वरूपेणार्याणामप्रसिद्धावपि स्वरूपेण प्रसिद्धिसम्भवान्न तत्स्वरूपज्ञाने म्लेच्छापेक्षा । पत्रोर्णादिशब्दवाच्यानां तु स्वरूपज्ञानेऽपि म्लेच्छापेक्षणादवश्यं तत्प्रसिद्धिरादरणीयेत्याह—पत्रोर्णेति । पत्रोर्णं धौतकौशेयम् । वारमोषधिरसपावनसाधनविशेषः । वाणो वाद्यविशेषः कञ्चुकं वा । तथा चैकमेवेदं वारवाणपदम् । कथंचिच्छब्दार्थे नेमशब्दः । यदपि म्लेच्छप्रसिद्धार्थाङ्गीकरणे निगमाद्यानर्थक्यमुक्तम्, तत्स्वयं तावद्भिन्नविषयत्वेन परिहरति—निरुक्तादेश्चेति । अर्थप्रतिपादनपरत्वाभावे निर्विषयनिमित्तादिमात्रप्रतिपादनानुपपत्तिमाशङ्क्याऽन्यतः सिद्धेऽर्थ इत्युक्तम् । ननूतत्वः पश्यन्न ददर्श वाचमित्यादौ त्वादिशब्दानामेकाद्यपूर्वार्थप्रतिपादनस्य निरुक्ते दर्शनात्कथं निमित्तमात्रे व्यापार उच्यते । व्याकरणे च सर्धिहिंसायामित्यादौ सध्यादेर्हिंसाद्यपूर्वार्थप्रतिपादनदर्शनात्कथं शब्दस्वरूपान्वाख्यानमात्रे व्यापार उच्यत इत्याशङ्क्य स्वरूपत इत्युक्तम् । स्वेनात्मीयेनार्थप्रतिपत्तिशेषत्वेन रूपेणेति व्युत्पत्त्या तात्पर्येणेत्यस्यार्थः । श्लोकं व्याचष्टे—निरुक्तेन तावदिति । भाष्यकृता तु म्लेच्छानामप्यप्रसिद्धेऽर्थे निगमादीनामर्थवत्तेति । यत्तु निगमेत्यादिनानुभाष्येण पूर्वमानर्थक्यं परिहृतम् । तद्व्याचष्टे—यस्य चेति । सर्वं नामधातुजमित्यर्थकल्पनाद्वारं निरुक्ते प्रदर्शितम् । यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमिति व्याकरणे म्लेच्छदेशानन्त्येऽपि देशान्तरगतपुरुषवार्त्तापरम्परया सर्वदेशप्रसिद्ध्यभावनिश्चयः सम्भवतीत्याशयः । काममित्यनेनानावश्यकत्वं दर्शितमुपपादयति—क्लिष्टेति । प्रकृतिप्रत्ययार्थयोरेकत्रानन्वाख्यानाद् बहुरूपत्वं सन्देहहेतुत्वेनोक्तम् । नन्वपूर्वार्थप्रतिपादनपरत्वाभावे निमित्तमात्रप्रतिपादनेन प्रयोजनाभावादनर्थक्यं स्यादित्याशङ्क्याह न चेति । षडङ्गाद्वेदाद्वेदार्थविज्ञानम्, ज्ञानं च तत्पूर्वायाः कर्मणः क्रियाकरणमनुष्ठानं ततो हि फलं भवतीत्यर्थः । निरुक्तजन्यस्य शब्दप्रवृत्तिनिमित्तत्वज्ञानस्य तत्पूर्वकानुष्ठानद्वारेणादृष्टोपयोगित्वे व्यासवचनं सिद्धं दृष्टान्तं तावदाह—यथेति । निर्वचनज्ञानमात्रात्सर्वपापक्षयमसिद्धौ भारताद्यध्ययनतदार्थानुष्ठानानर्थक्यापत्तेः प्रधानफलमेवेदमङ्गस्तुत्यर्थं कीर्तितमित्याशयः । दार्ष्टान्तिके योजयन् श्लोकं व्याचष्टे—एवमिति । वेदमात्रात्कर्मावबोधप्रसिद्धेर्निरुक्ताद्यानर्थक्यमाशङ्क्याव्युत्पन्नरूपे चेत्युक्तम् । निरुक्तादावगतो यो धात्वर्थपूर्वको नामार्थः तज्ज्ञानद्वारा या वाक्यार्थप्रतिपत्तिः ता पूर्वकादनुष्ठानादित्यर्थः ॥ ९ ॥

इति षष्ठं पिकनेमाधिकरणम्

भा० प्र०—प्रदर्शित शङ्का के उत्तर में सिद्धान्तस्वरूप कहा गया है कि आर्यों की प्रसिद्धि ही बलवान् है । क्योंकि लौकिक अर्थ के बोध के लिए ही यदि शब्दप्रयोग होता

तो आर्य और म्लेच्छ दोनों के प्रयोगों से ही इस प्रयोजन की सिद्धि होती, और ऐसी स्थिति में बलाबल अनवधारित रहता। किन्तु धर्म का ज्ञान शब्द का प्रयोजन है, और शब्द से ही धर्मतत्त्व की अवगति हो जाती है, तब शब्द और अर्थ का अल्पविप्लव भी धर्म का प्रतिद्वन्द्वी होगा, अतः आर्यों ने अतिशय सावधानी से निगम निरुक्त आदि के साहाय्यसे यथायथ अर्थ का स्मरण कर निर्णय करते हैं। म्लेच्छों के द्वारा प्रदर्शित अर्थ में वैपरीत्य रहने पर उसके परिहार का कोई साधन न होने से उनके अर्थ में विपर्यय स्वाभाविक है। इसलिए म्लेच्छों से व्यवहृत विपरीत अर्थ की स्मृति की अपेक्षा आर्यों का विप्लव शून्य अर्थ स्मरण ही बलवान् है। एक ही शब्द का अनेक अर्थ मानने पर विकल्प का प्रसङ्ग होगा। विकल्प मानने पर आठ दोषों की स्थिति होती है, अतः यह मानना उचित नहीं है। एक ही शब्द का विभिन्न अर्थ होने पर प्रत्येक अर्थ के प्रति शब्द की वाचकता शक्ति की कल्पना करनी पड़ेगी, इसलिए एक शब्द का अनेक अर्थ मानना उचित नहीं है। हरि शब्द का अनेक अर्थ माना गया है, किन्तु वहाँ तो अन्य उपाय न होने के कारण हरि शब्द को अनेकार्थक मानना पड़ता है, इसलिए यव, पीलु शब्द का अर्थ दीर्घशूक वृक्षविशेष ही समझना चाहिए।

वार्तिककार ने इस प्रसङ्ग में भिन्न रूप में अधिकरण की रचना कर स्मृति और आचार के विरोध में बलाबल का निरूपण किया है। देश भेद से अनेक आचार और स्मृति विरुद्ध मिलते हैं। फिर भी स्मृति और आचार को समान बल मानकर विकल्प होगा या स्मृति के द्वारा आचार का बाध होगा ? इस प्रकार संशय का उत्थापन कर सिद्धान्त में कहा है कि आचार के द्वारा स्मृति का अनुमान एवं स्मृति के द्वारा श्रुति का अनुमान होगा। क्योंकि, स्मृति के समान आचार स्वयं विधायक नहीं है। अतः, श्रुति के साथ आचार का दूर का सम्बन्ध है और स्मृति का श्रुति के साथ सन्निकृष्ट सम्बन्ध स्थित है। इसलिए आचार जितने काल की अपेक्षा कर स्मृति के द्वारा श्रुति की कल्पना कर विधायक होगा, स्मृति उससे कम ही समय में श्रुति की कल्पना कर स्मृति का प्रामाण्य प्रतिष्ठित करेगी। अतः स्मृति और आचार का प्रामाण्य तुल्यबल नहीं है। आचार के प्रामाण्य में स्मृति और श्रुति दो का अन्तर है, और स्मृति के प्रामाण्य में केवल एक श्रुति का ही अन्तर है, अतः दोनों में विकल्प की सम्भावना नहीं है, वरन् स्मृति से आचार का बाध ही होगा, अतः दक्षिण में मातुल (मामा) की कन्या के साथ पाणिग्रहण आदि आचार "मातुलस्य सुतामूढ्वा·······त्यक्त्वा चान्द्रायणं चरेत्" इस स्मृति के विरुद्ध होने से अनादरणीय है। इसी प्रकार पर्युषितान्न भोजन, पति-पत्नी का सहभोजन आदि आचार स्मृति विरुद्ध होने से अप्रमाण है।

इस प्रसङ्ग में न्यायसुधा भाट्टदीपिका भाट्टचिन्तामणि में विस्तृत विचार पूर्वक मातुलकन्या के साथ विवाह का प्रामाण्य स्थापित किया गया है।

शास्त्रस्था = शास्त्र में स्थित या शास्त्र में निर्दिष्ट प्रतिपत्ति (अर्थबोधकता) वा = एव, अवश्य ही (ग्राह्य) है, तन्निमित्तत्वात् = उसका अर्थात् धर्मज्ञान की निमित्तता अर्थात् हेतुता होने से। क्योंकि शास्त्र ही धर्मज्ञान का साधन है, इसलिए आर्यों से परिगृहीत शास्त्रबोधित अर्थ ही ग्राह्य है ॥ ९ ॥

## [५] चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥ सि०

शा० भा०—अथ याञ्छब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते। यथा पिक–नेम–सत–तामरसादिशब्दाः तेषु संदेहः किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति, स शब्दार्थ इति। शिष्टाचारस्य प्रामाण्यमुक्तम्, नाशिष्टस्मृतेः। तस्मान्निगमादिवशेनार्थकल्पना। निगमादीनां चैवमर्थवत्ता भविष्यति। अनभियोगश्च शब्दार्थेष्वशिष्टानाम्, अभियोगश्चेतरेषाम्। तस्माद्धातुतोऽर्थः कल्पयितव्य इत्येवं प्राप्ते।

ब्रूमः। चोदितमशिष्टैरपि शिष्टानवगतं यत् प्रमाणेनाविरुद्धम्, तदवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणमिति, तत् प्रत्यक्षानवगतेऽर्थे। यत्त्वभियुक्ताः शब्दार्थेषु शिष्टा इति। तत्रोच्यते अभियुक्ततराः पक्षिणां पोषणे, बन्धने च म्लेच्छाः।

यत्तु निगमनिरुक्तव्याकरणानामर्थवत्तेति, तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरप्यवगतः शब्दार्थः। अपि च निगमादिभिरर्थे कल्प्यमानेऽव्यवस्थितः शब्दार्थो भवेत्। तत्रानिश्चयः स्यात्। तस्मात् पिक इति कोकिलो ग्राह्यः नेमोऽर्धम्, तामरसं पद्मम्, सत इति दारुमयं पात्रं परिमण्डलं शतच्छिद्रम् ॥१०॥

इति पिकनेमाधिकरणम् ॥ ६ ॥

भा० वि०—एवं तावदार्यप्रसिद्धिविरुद्धाया म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तम्। अथेदानीं किमेषा म्लेच्छप्रसिद्धिरित्येवाप्रमाणमुतप्रमाणमबलत्वादार्यप्रसिद्धिविरुद्धा, अविरुद्धा तु प्रमाणमेवेति विचार्यत इति सङ्गतिमथशब्देन दर्शयन् आर्यप्रसिद्ध्यविरुद्धम्लेच्छप्रसिद्धिरूपविषये दर्शयति—अथेत्यादिना। आचरन्ति= प्रयुञ्जत इत्यर्थः। तत्र सबीजं संशयमाह—तेष्विति। अत्र निगमेत्यादिना धातुतोऽर्थप्रसिद्धेश्शास्त्रस्थत्वं प्राबल्यकारणम्। म्लेच्छेति म्लेच्छप्रसिद्धेः म्लेच्छस्थत्वं दौर्बल्यकारणं च पूर्वपक्षबीजतयोक्तम्—कल्पयितव्य इति। शास्त्रस्थाया दौर्बल्यकारणं कल्पनीयत्वम्। आचरन्तीति च म्लेच्छस्थायाः क्लृप्तत्वं प्राबल्यकारणं सिद्धान्तबीजतयोक्तमिति मन्तव्यम्। अत्र यद्यपि च म्लेच्छप्रसिद्धिः किं प्रामाण्ययोग्या उत नेत्येतावदेव विचार्यम्, तथापि सिद्ध एव तद्योग्यत्वे किं सा

बलवत्या शास्त्रस्थप्रसिद्धया बाध्या उत स्वयमेव बलवतीति तस्या बाधिकेत्ययं विचारस्संभवतीति तमेव योग्यायोग्यत्वविचारं सूचयितुमयमुपक्षिप्त इत्यवगन्तव्यम्। प्रयोजनं तु विचारस्य पिकादिशब्दानां व्यवस्थितार्थविषयत्वं सिद्धं स्वयमेव वक्ष्यति, तत्र पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षमाह—**शिष्टाचारस्थेति**। आचारशब्दः शब्दप्रयोगविषयः। स्मृतिशब्दोऽपि तत्पूर्वप्रयोगपरः, यद्यपि शास्त्रस्थप्रसिद्धिः कल्प्या, तथापि शास्त्रमूलत्वादेव प्रमाणम्। म्लेच्छप्रसिद्धिस्तु क्लृप्तापि निर्मूला न प्रमाणम्, क्लृप्तकल्प्यमूलयोः क्लृप्तमूलाया एव प्राबल्यादिति भावः। म्लेच्छप्रसिद्धेरप्रामाण्ये फलितमाह—**तस्मादिति**। निगमाद्यर्थवत्त्वाय च म्लेच्छप्रयोगस्याप्रामाण्यमाश्रयणीयम्, अन्यथा म्लेच्छदेशानन्त्यात् क्वचिद्देशे कस्मिंश्चिदर्थे कदाचित् केनचित् म्लेच्छेनायमार्यप्रसिद्धः शब्दः प्रयुक्त इति शङ्कायां निगमादिवैयर्थ्यप्रसङ्गादित्याह—**निगमादीनामिति**। अनभियुक्तत्वाच्च म्लेच्छानां न तद्व्यवहारश्शब्दार्थसम्बन्धे प्रमाणम्। किन्तु अभियुक्तानामार्याणामेवेत्याह—**अनभियोगश्चेति**। तस्मान्म्लेच्छप्रसिद्धेः प्रामाण्यायोग्यतया ततोऽर्थावगमासंभवात् आर्यप्रसिद्धानां पिकादिपदानां धातुबलेनैवार्थः कल्पनीय इति निगमयति—**तस्मादिति**।

सिद्धान्तं दर्शयन् सूत्रमवतार्य व्याकरोति—**एवमिति**। यत्पदं म्लेच्छैरर्थविशेषे चोदितं प्रयुक्तम्, तच्छिष्टैरनवगतमगृहीतसम्बन्धमपि प्रतीयेत-आद्रियेत। तस्मिन्नर्थे प्रमाणमिति यावत्। अत्राविरोधादिति हेतुमात्रं व्याचष्टे—**यत्प्रमाणेनेति**। यद्यपि न शास्त्रमूला म्लेच्छप्रसिद्धिः, तथापि शास्त्रस्थप्रसिद्धिविरोधाभावाद्वेदतदङ्गादिषु प्रयुक्तपिकादिपदार्थाकाङ्क्षायां तत्सिद्धकोकिलाद्यर्थपरिग्रहसंभवेनार्थान्तरकल्पना युक्तेति भावः। यद्यपि पूर्वाधिकरणन्यायेन शास्त्रस्थप्रसिद्धेः बलीयस्त्वमिति, तदपि प्रत्यक्षाद्यनवगम्ये धर्मादिविषय एव, न वाच्यवाचकसम्बन्धादिविषय इत्याह—**यस्त्वित्यादिना**। यत्पुनर्वाच्यवाचकादिष्वप्यभियुक्तानां शिष्टानामेव प्रामाण्यम्, न म्लेच्छानामिति, तदनुवदति—**यस्त्वभियुक्ता**.... इति। दूषयति—**अभियुक्ततरा इति**। यथैव सेवागृहनिर्माणादिषु दृष्टार्थेषु म्लेच्छानामधिकं कौशलं तथैवाभ्यस्तकोकिलादिवाच्यस्वरूपाणां वाच्यवाचकभावावगमेऽपीत्यर्थः। निगमाद्यर्थवत्त्वाय म्लेच्छाचारस्याप्रामाण्यमुक्तमनुवदति—**यस्त्विति**। दूषयति—**तत्रैषामिति**। म्लेच्छदेशानन्त्येऽपि विचारावस्थायामपि येषां पदानामर्थविशेषे प्रसिद्धिः म्लेच्छेषु पुरुषपरम्परया न प्राप्ता, तेषां पदानां निगमादिवशेन प्रतिपत्तिः भविष्यतीत्यर्थः। पिकादिपदानां निगमादिवशेनार्थवत्त्वेऽर्थव्यवस्थापि न स्यादित्याह—**अपि चेति**। पिकादिशब्दस्य निगमेन तावदर्थविशेषो न प्रतिपादितः, तथा सति सन्देहाभावप्रसङ्गात् अवयवव्युत्पत्त्या तु निरुक्त्या कश्चिदर्थः कल्पनीयः, तत्र च पिबति पाति पचतीत्यनेकधातुसाधारणत्वादवयवान्वयस्य निरुक्तेनाप्यर्थविशेषासिद्धिरिति भावः।

ननु भवतु अव्यवस्थैव को दोषस्तत्राह—**पिक इति**। कोकिलादीनामेव कर्माङ्गत्वेनाभ्युपगमादिति भावः ॥ १० ॥

त० वा०—ये शब्दा न प्रसिद्धाः स्युरार्यावर्तनिवासिनाम् ।
तेषां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यो नेति विचिन्त्यते ॥ ४६३

तथा—निरुक्तव्याक्रियाद्वारा प्रसिद्धिः किं बलीयसी ।
समुदायप्रसिद्धिर्वा म्लेच्छस्यैवाथ वा भवेत् ॥ ४६४

म्लेच्छप्रसिद्धिर्व्यवहर्तृदौर्बल्येऽपि, समुदायरूढिबलेन स्वरूपगतेन ज्यायसी प्रतिभाति ।

तत्र प्रयोक्तृदौर्बल्य-स्वरूपबलवत्तयोः ।
किन्नु न्याय्यतरं युक्तं ज्ञातुमित्यत्र चिन्त्यते ॥ ४६५

तथा—निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी ।
किं वाऽवयवविक्षेपजननात्सैव दुर्बला ॥ ४६६

एवं नानोपपत्तित्वात्संदेहे तावदुच्यते ।
निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी ॥ ४६७

शास्त्रस्था वेत्यनेनासौ कल्प्याऽपि हि बलीयसी ।
सन्मूलस्य प्रमाणत्वं साध्यस्यापि वरं श्रितम ॥ ४६८

न सिद्धमप्यसन्मूलमाश्रयेण हि दूषितम् ।
कथं वेदगतैः शब्दैर्म्लेच्छस्थोऽर्थः[1] प्रतीयते ॥ ४६९

येषां दर्शनमात्रेऽपि वेद एव न पठ्यते ।
संभाषाऽपि च न म्लेच्छैः सहाऽऽर्यावर्तवासिनाम् ॥ ४७०

तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ।
एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते ॥ ४७१

तस्यापि म्लेच्छदेशेषु सर्वेष्वन्वेष्यतां व्रजेत् ।
ततश्च निगमादीनां न कश्चिद्विषयो भवेत् ॥ ४७२

अनन्तम्लेच्छदेशांश्च कः सर्वोऽनुपलप्स्यते[2] ।
य एव स्यादनन्विष्टस्तत्र शङ्का प्रसज्यते ॥ ४७३

अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम् ।
निगमादिवशाच्चाद्य धातुतोऽर्थः प्रकल्पितः ॥ ४७४

---

१ क. म्लेच्छस्याऽर्थः । २ क. सर्वानूपलप्स्यत इति पाठः ।

द्वित्रेष्वहःसु बाध्येत प्रयोगान्म्लेच्छचोदितात् ।
म्लेच्छाचाराप्रमाणत्वमथ त्वध्यवसीयते ॥ ४७५
आर्यावर्ते ततः शक्या प्रसिद्ध्यन्वेषणक्रिया ।
तस्याश्चाल्पेन कालेन सदसद्भावनिर्णयः ॥ ४७६
ततश्च निगमादीनां सुज्ञातः स्वार्थगोचरः ।
तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता ॥ ४७७
धर्मे चानादरात्तेषां भ्रश्येताऽर्थोऽपि शब्दवत् ।
न चास्ति संस्कृतः शब्दः कश्चिन्म्लेच्छापभाषणे ॥ ४७८
संस्कृतप्रतिरूपा हि तद्भाषाऽर्थान्तरे स्थिता ।
न चावाचकरूपाणां वाचकत्वं कथंचन ॥ ४७९
आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम् ।
पदान्तराक्षरोपेतं कल्पयन्ति कदाचन ॥ ४८०
न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम् ।

तद्यथा [1]द्राविडादिभाषायामेव तावद्व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान्प्रतिपद्यमाना दृश्यन्ते । तद्यथौदनं चोरित्युक्ते चोरपदवाच्यं कल्पयन्ति । पन्थानमतरित्युक्तेऽतर इति कल्पयित्वाऽऽहुः । सत्यं दुस्तरत्वादतर एव पन्था इति । तथा पाप् शब्दं पकारान्तं सर्पवचनमकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति । एवं मालौ शब्दं स्त्रीवचनं माला इति कल्पयित्वा सत्यमित्याहुः । वैरशब्दं च रेफान्तमुदरवचनं वैरिशब्देन प्रत्याम्नायं वदन्ति । सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तते इति । तद्यदा द्राविडादिभाषायामीदृशी स्वच्छन्दकल्पना, तदा पारसीकबर्बरयवनरोमकादिभाषासु किं विकल्प्य, किं प्रतिपत्स्यन्त इति न विद्मः ।

तस्मान्म्लेच्छप्रसिद्धं यत्पदमार्यैर्विकल्प्यते ।
न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः ॥ ४८१
निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगम्यते ।
पिकनेमादिशब्दानां स एवार्थो भविष्यति ॥ ४८२

---

१. चोर्–अतर्–पाप्–माल्–वयर–इत्येतेषां शब्दानां क्रमेण ओदन–मार्ग–सर्प–सत्य–उदररूपेष्वर्थेषु द्राविडानामद्यत्वेऽपि प्रयोगो वर्तते ।

### सिद्धान्तः

एवं प्राप्ते

वदामोऽत्र पदं निपुणदृष्टिभिः ।
विज्ञायेताऽविनष्टं यत्तत्तदर्थं भविष्यति ॥ ४८३

देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम् ।

यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम् ।
म्लेच्छभाषासु तद्रूपमर्थे क्वचन चोदितम् ॥ ४८४

तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः ।
पिकनेमादि तद्ध्येवं निपुणैरवधारितम् ॥ ४८५

चोदितं ह्यपदिष्टं वा प्रयुक्तं वा क्रियागतम् ।
म्लेच्छैरवधृतं पश्चादार्यैर्द्वैभाषिकैः क्वचित् ॥ ४८६

तादृशं तु प्रदीयेत प्रामाण्येनेति निश्चितम् ।
न तद्धर्मप्रमाणेन वेदाख्येन विरुध्यते ॥ ४८७

अपि च—पदार्थपदसम्बन्धज्ञानापेक्षप्रवर्तनात् ।

प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थायाऽनुगम्यते ॥ ४८८
पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम् ।
अविरोधात्प्रमाणेन तद्विद्याद्वेदनोदितम् ॥ ४८९

चोदितं वा प्रमाणेन वेदेनेत्यस्य संगतिः ।
आर्यैः सहाऽविरुद्धत्वात् तस्य तैरप्यपेक्षणात् ॥ ४९०

यथैव क्लोमादयः पश्ववयवा वेदे चोदिताः सन्तोऽध्वर्य्यादिभिः स्वयमज्ञायमानार्थत्वाद्ये नित्यं प्राणिवधाभियुक्ताः, तेभ्य एवावधार्य विनियुज्यन्ते । यथा च निषादेष्ट्यां 'कूटं दक्षिणेति' विहिते य एवैतेन व्यवहरन्ति, तेभ्य एवाऽर्थतत्त्वं ज्ञात्वा दीयते । तथेह पिक-नेम-तामरसादिचोदितं सद्वेदादार्यावर्तनिवासिभ्यश्चाप्रतीयमानं म्लेच्छेभ्योऽपि प्रतीयेत, लोकावगम्यनित्यशब्दार्थाभ्युपगमाविरोधात् स्वेनैव प्रमाणेन प्रतीयेतेति ।

यत्तु शास्त्रबलीयस्त्वादेतदग्रहणमिनि ? तन्न । अविरोधे दुर्बलस्यापि ग्राह्यत्वात् । यदेवात्यन्तं प्रमाणाभासमेव मृगतृष्णाज्ञानवद्भवति, तत् सर्वदैव परिहर्तव्यम्, यत्पुनर्बलवद्विरोधापेक्षमप्रमाणं(न) भवति, तद्विरोधाभावात्प्रमाणमेवेत्यवधारणीयम् । न चैवमादि विरुध्यते, विपरीतार्थप्रसिद्ध्यन्तराभावात् । अत एव वैदिकवाक्यार्थस्वविषयप्रयुक्तपदार्थमात्राभियुक्ततरार्यप्रसिद्धिबलीयस्त्वाश्रयणम् ।

प्रसिद्धौ विद्यमानायां तद्बलीयस्त्वमिष्यते ।
असत्यां तु बलीयस्त्वं बन्ध्यासुतबलोपमम् ॥ ४९१

अष्टकादिषु ह्यदृष्टार्थेषु समूलकेषु स्मर्यमाणेषु गवादिपदस्वरूपतदर्थज्ञानेषु च सत्यमार्याणामाप्ततरत्वाभियुक्ततरत्वे विद्येते । पिकादिषु त्वार्यबलेनैवावगतस्वरूपमात्रवाचकत्वेषु वाच्यविशेषज्ञानरहितत्वेनाऽऽर्येषु निर्व्यापारीभूतेषु पदवद् दृष्टार्थप्रतिपत्त्यर्थानादिशब्दप्रयोगलब्धसम्बन्धप्रसिद्धिम्लेच्छप्रयोगेभ्योऽर्थनिर्णये सति न किंचिद्विरुद्धमाकाङ्क्षितपदार्थज्ञानं च सेत्स्यति । निगमनिरुक्तव्याकरणैरपि न चैवमादीनामर्थान्तरं किंचिदुदाहृतम्, यत्प्राप्य कृतार्थाः सन्त इतरेषां प्रसिद्धिं परित्यजेम ।

कालपनिक्याः प्रसिद्धेश्च या क्लृप्ता सा बलीयसी ।
तस्यां सत्यं हि नाऽऽत्मानमितरा लब्धुमर्हति ॥ ४९२

आश्रयाणां च दौर्बल्यं धर्मं प्रति निरूपितम् ।
दृष्टार्थव्यवहारेषु कृष्यादाविव तुल्यताम् ॥ ४९३

तस्माद्यथैव सेवादौ गृहादिषु च कौशलम् ।
म्लेच्छानामधिकं तद्वदभिधेयार्थनिर्णये ॥ ४९४

शब्दस्वरूपं तावत्तेनाभियुक्तत्वाच्चिरविनष्टाविनष्टत्वेन न विविञ्चीरन् । यस्तु कथमप्यविनष्ट एव शब्दः तेषामपि प्रयोगविषयमापन्नस्तस्य चाऽऽर्यवदेवानादिवृद्धव्यवहारपरम्परयाऽर्थं जानन्ति, तत्किं तेषां निराकर्तुं शक्यते ।

[1]पत्रोर्णवारबाणादि[2] यच्च तद्देशसंभवम् ।
तैरेवाकथितं नाम तच्च को वेदितुं क्षमः ॥ ४९५

तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम् ।

निरुक्तादेश्च सिद्धेऽर्थे तन्निमित्तादिमात्रके ।
व्यापारो न च पूर्वार्धप्रतिपत्तौ स्वरूपतः ॥ ४९६

निरुक्ते न तावल्लोकव्यवहारप्रसिद्धान्येव पदानि तद्गतक्रियानिमित्तशब्दप्रयोगभाक्त्वेन निरुच्यते । व्याकरणेनापि प्रसिद्धार्थानामेवाविनष्टस्वरूपान्वाख्यानमात्रं क्रियते । तत्र प्रासङ्गिकमेव कियदप्यर्थनिरूपणम् । तानि स्वविषयादन्यत्र दुर्बलानामपि न बाधकानि ।

---

१. पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनमित्यमरः ।
२. कञ्चुको वारबाणोऽस्त्रीत्यमरः ।

यस्य चान्विष्यमाणाऽपि प्रसिद्धिर्न भविष्यति ।
कामं प्रदर्शितद्वारा तत्र कल्प्याऽऽश्रयिष्यते ॥ ४९७

विक्षिप्ता बहुरूपा च या संदेहप्रदायिनी ।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते ॥ ४९८

न चार्थप्रत्यायनाङ्गनिरुक्ताद्यप्यनर्थकम् ।
षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात् ॥ ४९९

यथा महाभारतनिर्वचनान्वाख्याने द्वैपायनेनोक्तम् ।

महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ इति ॥ ५००

एवं निरुक्तव्याकरणाद्यङ्गानुगृहीतवेदाध्ययनजनितकर्मावबोधपूर्वकानुष्ठानायत्तत्वात् स्वर्गादिसिद्ध्यर्थापूर्वसिद्धेरव्युत्पन्नरूपे च ज्ञातेऽपि निरुक्तावगतधात्वर्थपूर्वकनामार्थज्ञानद्वारवाक्यार्थप्रतिपत्तिपूर्वकानुष्ठानादेवादृष्टसिद्धिरिति, म्लेच्छसिद्धपिकाद्यर्थग्रहणेऽपि निरुक्तादीनामर्थवत्ता सिद्धेति ॥ १० ॥

इति पञ्चमं पिकनेमाधिकरणम्

न्या० सु०—अत्र भाष्यकृता कल्पसूत्रेषु प्रामाण्याप्रामाण्यसन्देहमुपन्यस्य प्रामाण्यं पूर्वपक्षयित्वा, सिद्धान्ते निराकृतम्, तत्स्मृत्यधिकरणव्युत्पादितसकलविद्यास्थानप्रामाण्यविरुद्धत्वादयुक्तमाशङ्क्य पूर्वपक्षवचनव्यक्तिगतं प्रामाण्यशब्दं स्वतःप्रामाण्याभिप्रायत्वेन द्वेधा व्याचष्टे—कल्पेति । म्लेच्छाचारणामपि केषांचिदानादित्वेन शिष्टाचारतुल्यतया स्वतःप्रामाण्येऽभिहिते, वेदातिरिक्तविद्यास्थानानामप्यध्येतृस्मरणेनाऽनादितया वेदत्वेन वेदतुल्यतया वा स्वतःप्रामाण्योपपत्तेर्न वेदमूलत्वम् । तद्विरोधिनां वा प्रामाण्यं युक्तमित्यनन्तराधिकरणव्युत्पादितस्वतःप्रामाण्योजीवनेन स्मृतिविरोधिकरणद्वयाक्षेपादनन्तरसङ्गतिम्, प्रकृतसङ्गतिं च सूचयितुं सम्प्रतीत्युक्तम् । विचार्यत इति विचारार्थं पूर्वपक्षवचनव्यक्तिर्द्वेधोपन्यस्यत इत्यर्थः ।

ननु मन्वादिस्मृतिवदेषामपि पौरुषेयत्वेन पारतन्त्र्यावगमात्स्वतःप्रामाण्यशङ्का न युक्तेत्याशङ्क्याह—वैदिकेति । मन्वादिस्मृतीनां तिरोहितप्रायवेदार्थनिबन्धनादर्थवत्त्वं कल्पसूत्राणां तु स्पष्टवेदार्थविषयत्वात्प्रणयनानर्थक्यापत्तेरपौरुषेयत्वावगमात्स्वतः प्रामाण्यशङ्का युक्तेत्याशयः । कल्पसूत्रशब्दयोरेकार्थत्वाद् द्वयोरुपादानमनर्थकमिति मन्यमानः पृच्छति—आहेति । कार्यतस्तावद्भेदमाह—सिद्धरूप इति । अवयवव्युत्पत्त्या भेदमाह—कल्पनाद्धीति । स्वरूपतो भेदमाह—कल्पा इति । प्रतिक्रतुप्रयोगाणां प्रतिपादकतया पाठत एव सिद्धा, न तु स्वसंज्ञाभिर्व्याख्यानापेक्षा इत्यर्थः । 'एतत्तीर्थमित्याचक्षते' इत्यादिभिः स्वसंज्ञाभिर्ऋचं पादग्रहणमित्यादिभिः स्वपरिभाषाभिर्यत्सिद्धमित्यतीतसिद्धशब्दनिःकृष्टविपरिणतानुषङ्गेण योज्यम् ।

ये यजामहे, यच्चागूर्याज्यादिरित्याद्युत्सर्गवदनुयाजवर्जमित्याद्यपवादवद्भक्षयेयुरिति गाणगारितत्संस्कारत्वादित्यादिहेतुमत्सम्प्रैषवदादेशान्पशुवत् (निपातानिति यथाध्वर्युः सम्प्रैषं दद्यात्तद्वद्धोता आदेशान् द्रव्यादेशान् कुर्यात् । छागपदेन प्रैषे छागपदेऽनादेशाः । आज्येन चाज्यपदेन भेद उद्धृतं पार्श्वतः श्रोणित इत्यादयः शब्दा पश्ववयववाचिनः निपाता इत्युच्यन्ते । तान् पशुवत्क्रियायां पशुवद् द्वयान्नान्यथेत्यर्थः । यस्मिन् क्रतावग्नीषोमीयस्थाने सवनीयस्थाने वा पश्वेकादशिनी कृता, तत्र शालामुखीये त्वाष्ट्रेण पशुना यजेत । तस्य पर्यग्निकरणान्तं कृत्वोत्सर्गः पूर्वमुक्तः । पर्यग्निकृत्वोत्सृजत्यपुनरायनायेति तस्य तावत्येव समाप्तिः । आज्येन शेषं संस्थापयेदिति वा आज्येन समापने मन्त्रेषु छागशब्देन निगमाः कार्या इत्येकः पक्षः । आज्यस्य प्रतिनिधित्वेन स्थानिवद्भावात् द्रव्यान्तरत्वे त्वाज्यशब्देन निगमाः कार्याः इत्यन्यः पक्षः । तत्र प्रयोगमाह । यदि त्वध्वर्युव आज्येन समाप्नुयुस्तथैव होता कुर्यात्सम्प्रैषवदादेशा पशुवत्) निपात्यादिदृष्टान्तवत् 'पुरस्ताल्लक्षणा पुरोऽनुवाक्ये' इत्यादिलक्ष्यव्यापिलक्षणम्, तत्सूत्रमित्यर्थः । लक्ष्यव्यापिलक्षणं यस्मिन्निति सप्तमी-बहुव्रीहिः । ननु स्वसंज्ञापरिभाषादियोगे पौरुषेयत्वापत्तेः कथं स्मृतिवैलक्षण्यमित्या-शङ्क्याह—तत्रेति । सकलपुरुषप्रत्यक्षवेदप्रतिपाद्यार्थविषयग्रन्थप्रणयनवैयर्थ्यापत्तेरपौरुषेय-त्वावसायात्सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्तीत्यादिवदन्यपरसंज्ञादीनीति पूर्वपक्षी मन्यते इत्याशयः ।

एवं कल्पसूत्राणामपि स्मृत्यधिकरणे वेदमूलत्वं प्रतिपादितमित्यभ्युपेत्य तदाक्षेपेण प्रत्यवस्थानमुपपादितम् । इदानीमशब्दत्वेन तत्र पूर्वपक्षकरणात्कल्पसूत्रेषु च तदसम्भवादेषां स्मृत्यधिकरणविषयत्वाभावादिह विचारो न विरुद्ध इति परिहारान्तरमाह—अप्रामाण्य-मिति । अशक्यत्वमुपपादयति—प्रत्यक्षेति । तत्र स्मृत्यधिकरणपूर्वपक्षेऽपगतशब्दता शब्द-शून्यतोक्ता, सा कल्पसूत्रेष्वशक्या वक्तुमित्यर्थः । न केवलं पूर्वपक्षासम्भवादेषां स्मृत्य-धिकरणाविषयत्वम्, किं तु मूलभूतवेदानुमानेन तत्र सिद्धान्तकरणात्, प्रत्यक्षवेदमूलेषु कल्पसूत्रेष्वनुमानायोगात् सिद्धान्तासम्भवेनाप्येषां स्मृत्यधिकरणविषयत्वं नास्तीत्याह—स्मृत्यधिकरणे चेति ।

यत्र न वैदिकं शब्दमुपलभ्यन्ते इति च सम्भवदशब्दत्वलक्षणपूर्वपक्षहेतुकानामेव तत्रोदाहृतत्वादुदाहरणभाष्यपर्यालोचनयाप्येषां स्मृत्यधिरणाविषयत्वं प्रतीयत इत्याह—एतानि चेति । इदं तु परिहारान्तरमनुपलभ्यमाने मूलस्मृतिप्रामाण्यसाधने प्रत्यक्षमूलानां कल्पसूत्राणामविचारितस्यापि प्रामाण्यस्य तुल्यन्यायसिद्धत्वादन्यथा च विरोधाधिकरणे सर्ववेष्टनस्मृत्युदाहरणानुपपत्तेः शिष्टाकोपाधिकरणे च क्रत्वर्थस्मृत्युदाहरणानुपपत्तेरयुक्त-मित्यपरितोषात्पूर्वमेव परिहारमनुसन्दधाति—न चेति । यद्यप्येषामिहाधिकरणे पूर्वपक्षे प्रामाण्यप्रतिपादनमाभाति, तथापि सिद्धान्ते स्वरानियमवाक्यशेषाभावाभिधानेन वेदवैलक्षण्य-प्रतिपादनात्स्वतःप्रामाण्यनिराकरणप्रतीतेर्न प्रामाण्यं प्रतिपाद्यम्, येनेह तन्निराकरणात्स्मृत्य-धिकरणविरोधः स्यादित्यर्थः ।

परमार्थतस्तु कल्पसूत्राणामपि विप्रकीर्णानेकशाखागतश्रुत्यर्थनिबन्धेन स्मृतितुल्यत्वात्स्मृत्यधिकरणविषयत्वमस्त्येवेत्यपरितोषात्स्वमतेन सर्वेषां वेदातिरिक्तविद्यास्थानानां स्मृत्यधिकरणप्रतिपादितवेदमूलत्वमाक्षिप्येह समाधीयत इति परिहारमाह—यद्वेति। स्वातन्त्र्यलक्षणेनाविशयेन प्रामाण्यम्—अतिप्रामाण्यम्, ननु स्मृतीनां प्रत्यक्षवेदार्थोपनिबन्धनाभावेन वेदवैलक्षण्यात्कथं स्वतःप्रामाण्याशङ्केत्यपेक्षायां पौरुषेयत्वाङ्गीकरणेन प्रामाण्याभ्युपगमे कल्पनागौरवापत्तेस्तत्परिहारायापौरुषेयत्वमेवोचितमिति सन्देहोपपादनाय पूर्वपक्षं सम्भावयति—यदीति।

विषयव्याप्त्यर्थं षडङ्गस्यैतद्विचारविषयत्वमाह—यद्वेति।

न्यायवशात्स्वातन्त्र्यलक्षणप्रयोगशास्त्रत्वसम्भवे वेदशब्दवाच्यत्वस्याभियुक्तप्रयोगाधीनत्वादभावे वेदत्वशङ्कानुपपत्तिमाशङ्क्य—षडङ्गेऽपीत्युक्तम्। एतदेव विवृणोति—मन्त्रेति।

विरोधाधिकरणस्य शाक्यादिग्रन्थविषयत्वे तदाक्षेपसमाधानार्थं तेषामप्येतदधिकरणविषयत्वं सम्भवतीत्याह—यद्वेति। ननु विरोधाधिकरणं विषयान्तरासम्भवादनङ्गीकृतमपि केनचिच्छाक्यादिग्रन्थस्य वेदमूलत्वसम्भावनामात्रेणाशङ्क्य, तन्निराकरणार्थत्वेन व्याख्यातम्, इदं तु विषयान्तरसम्भवात्किमित्यनङ्गीकृतवेदत्वनिराकरणार्थत्वेन व्याख्यायते। अत आह—शाक्यादयोऽपि हीति। कथं वदन्तीत्यपेक्षायामुत्पादाद्वेति शाक्यग्रन्थमुदाहरति—यथेति। उत्पादादिति प्रवाहनित्यत्वमभिप्रेतम्। अनुत्पादादिति कूटस्थनित्यत्वम्। तथागताः=बौद्धाः। धर्मनित्यत्वस्य तत्प्रतिपादकागमनित्यत्वमन्तरेणायोगात्तन्नित्यताप्यनेनोक्तेत्याशयः। एतदेवोपसंहरति ततश्चेति। वाशब्दोऽत्राध्याहार्यः। एवमपि किमर्थं विचार्यमित्यपेक्षायामाह—चोदनेति। ननु शाक्याद्यागमस्य वेदमूलत्वे निराकृतं वेदत्वं वेदतुल्यत्वं वा दूरादेवापास्तम्। कथमत्राशङ्क्यत इत्याशङ्क्य रूपकद्वारेणाशङ्कामुपपादयति—काममिति। शाक्यादिचोरः स्वागमप्रामाण्यग्रामं प्रत्यक्षादिमूलत्वेन, वेदमूलत्वेन वा द्वारेण प्रवेष्टुमुद्यतोऽतीन्द्रियार्थदर्शनासामर्थ्यवेदमार्गबाह्यत्वलक्षणन्यायदण्डपाणिभिर्मीमांसकैर्वारितो वरं न प्रविशेत्सम्प्रति तु मीमांसकानुमतेनापौरुषेयत्वेन महापथेन प्रकटं प्रवेष्टुमिच्छतीत्यर्थः।

सर्वेषामपि विचारविषयत्वं स्वाभिमतं द्योतयितुं भाष्यकारीयोदाहरणस्योपलक्षणार्थतामाह—एवमिति। पूर्वपक्षसूत्रव्याख्यानार्थं प्रयोगस्येति भाष्यं व्याचष्टे—का गतिरिति। पूर्वार्द्धेनेति चेदिति सूत्रावयवो व्याख्यातः। प्रयोगशास्त्रशब्दव्याख्यानार्थं सत्यवाचामिति भाष्यं द्वेधा व्याचष्टे—वेदत्वमिति। पौरुषेयस्य विधायकोपस्थापनमात्रचरितार्थत्वेन साक्षादनुष्ठानविधायकत्वाभावात्प्रयोगशास्त्रशब्देनापौरुषेयत्वलक्षणं स्वातन्त्र्यमुक्तमित्याशयः। भाष्यकृता 'कथमवगम्यत इति' पृष्ट्वा वैदिकैरेषां संवादो भवतीत्युक्तम्। तदपौरुषेयत्वे संवादानपेक्षत्वादयुक्तमाशङ्क्य वेदसंवादेन प्रामाण्यनिश्चयात्पौरुषेयत्वे च

पुरुषतन्मूलप्रमाणत्वेदतन्नित्यत्वकल्पनेन गौरवापत्तेरपौरुषेयत्वेन प्रामाण्योपपादनार्थतया व्याचष्टे—वेदनैवेति ।

ननु माशकादिसमाख्या पौरुषेयावगमात्तेषां वेदत्वम्, वेदतुल्यत्वं वा न युक्तमित्याशङ्कते—ननु चेति । प्रवचनयोगेनापि समाख्योपपत्तेर्न तद्बलेन पौरुषेयत्वसिद्धिरिति परिहरति—नैतेषामिति । वेददृष्टान्तसूचितमर्थं प्रकटयति—माशकादीति । ननु कल्पादिशब्दानां (चरणशब्दोऽध्येतृपुरुषवाची) चरणविशेषवाचित्वाच्चरणानां चानादित्वात्तन्निमित्तादिसमाख्या युक्ता । माशकादिशब्दानां त्वेकपुरुषाभिधायित्वात्तत्समाख्यातग्रन्थनित्यत्वेन युक्तमित्याशङ्क्याह—यथैवेति । मशकादिव्यक्तीनां वेदसमाम्नातान्यथानुपपत्त्या नित्यत्वं भविष्यतीत्याशयः । वेदसमाम्नातेन मशकादिना समाख्यातस्य ग्रन्थस्य नित्यतेत्यर्थः । ननु न समाख्यामात्रेणैषां पौरुषेयत्वं ब्रूमः, किं तु मशकेनेदं कृतमित्यादिदृढविच्छिन्नाध्येतृस्मरणेनेत्याशङ्क्याह—यथा चेति । मशकादीनामृषित्वप्रसिद्धेर्ऋषिगतावित्यस्य धातोरिन्नित्यधिकृत्येगुपधात्किदित्यौणादिके इन्प्रत्यये कृते ऋषिशब्दव्युत्पत्तेर्गमेश्च ज्ञानार्थत्वाद् ऋषिर्दर्शनादिति च स्मरणाद् ऋषिशब्दस्य दर्शननिमित्तत्वप्रतीतेः । करोतेश्चानेकार्थत्वाद्, 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ' इति स्मृतिपर्यालोचनया वा प्रकथनार्थत्वाद्दर्शनाभिप्रायं कथनाभिप्रायं वा मशकादिकर्तृस्मरणमित्याशयः । एतदेव विवृणोति—तथा हीति । प्रयोक्तृग्रहणं दर्शनमप्युपलक्षयति ।

नित्यविधिविषयत्वान्यथानुपपत्त्यापि कल्पसूत्राणां नित्यत्वमित्याह—ब्रह्मयज्ञेति । पुराणेतिहासानामप्येतेनैव सामान्येनापौरुषेयत्वाभ्युपगमान्न तैरनैकान्तिकत्वाशङ्केत्याशयः । पुरुषकृतानामित्यनेनार्षशब्दो नित्याभिप्रायो व्यतिरेकमुखेन व्याख्यातः । ऋषिणा दृष्टं प्रोक्तं वेत्यस्मिन्नर्थे तद्धितोपपत्तेः असतश्च दर्शनप्रवचनायोगात्कालानवच्छेदेन सर्वदा सत्त्वप्रतीतेरार्षशब्दस्य नित्यपर्यायत्वसिद्धिः ।

नन्वर्थवादाद्यभावाद्वेदमुद्रारहितत्वेनैषामवेदत्वं प्रतीयत इत्याशङ्क्याह—अरुणेति । प्रत्युत वेदतुल्यतैवाऽवसीयत इति दर्शयितुम्—सर्वयाज्ञिकैश्चेत्याद्युक्तम् । आर्षत्वप्रसिद्ध्यापि तुल्यकल्पत्वं प्रतीयत इत्याह—आर्षमिति । न केवलं न्यायमात्रेण तुल्यकल्पत्वं प्रतीयते, किं तु सूत्रकारवचनादपीत्याह—लाटेति । सूत्रकाराभ्यामपि ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वमङ्गीकृत्य तत्प्रत्यक्षविहितां त्वितीदमुक्तमित्यन्वयः । कोऽत्रार्षः कल्पो विवक्षित इत्याकाङ्क्षायाम्—माशकमपेक्ष्येत्युक्तम् । ननु ब्राह्मणस्यापि स्वतःप्रामाण्यात्कथं तस्मात्कल्पगरीयस्त्वमित्याशङ्क्य दृढकल्पप्रामाण्यापेक्षयेत्युक्तम् । कल्पप्रामाण्यं निश्चितमभिप्रेत्यातिशयमात्रं गरीयस्त्वाभिधानमित्याशयः ।

कात्यायनेनापि कल्पगरीयस्त्वमङ्गीकृतमित्याह—कात्यायनेन चेति । यज्ञविषयाणां ब्राह्मणगतानां स्तोत्रसाधनसामविशेषापेक्षिणां सामविशेषलक्षणार्थे वाक्यशेषे कर्तव्ये यथा 'माशकं मया लक्षणं करिष्यत' इति कात्यायनवचनस्यार्थः । न केवलं प्रतिज्ञामात्रम्, किं तु कृतमपि तथैवेत्याह—तथा चेति । गवामयनिकस्य प्रथमस्याह्नः प्रायणीयसंज्ञकस्याग्निष्टोम-

स्तोत्रसाधनसामविशेषापेक्षायां यद्ब्राह्मणेनाग्निष्टोमसाधनत्वेन जराबोधीयं विहितम्। तत्कात्यायनेनार्भवपवमानाख्यस्तोत्रान्तरसाधनेषु सप्तसु सामसु लक्ष्यमाणेषु तदीयात्प्रथमाद्गायत्राख्यात्साम्नस्तृतीयत्वेन लक्षितं 'जरासादिति' सूत्रेणेत्यर्थः। कथमनेन सूत्रेण जराबोधीयमार्भवीयगायत्रतृतीयत्वेन लक्षितमित्यपेक्षायामाह—आर्भवीयेति। माध्यन्दिनपवमानेऽपि गायत्रसद्भावात्तद्व्यावृत्त्यर्थमार्भवीयविशेषणं प्रकृतार्भवपवमाने संहितस्य गायत्रान्तरत्वात्तस्यैव सर्वत्र समिति संज्ञा माभूदिति गायत्रेणोपलक्षणं यद्यत्रार्भवपवमाने गायत्रानन्तरं साम, तत्र तस्य समिति संज्ञेत्यर्थः। परशब्देन सादिति पञ्चमीपरयोगेन व्याख्याता। कथं जराशब्दस्य जराबोधीयवाचितेत्यपेक्षायां पदैकदेश इत्युक्तम्। न केवलमन्यत्र विनियोगाद् ब्राह्मणानादरः किं त्वग्निष्टोमसामत्वेनाविनियोगादपीत्याह—ढेशब्देन चेति। अग्निष्टोमसाम्नो ढेयज्ञायज्ञीयमितिसूत्रेण प्रायणीयाग्निष्टोमसामत्वेन यज्ञायज्ञीयमेव नियतमित्यर्थः। नन्वार्भवीयगायत्रतृतीयत्वेन पञ्चविंशब्राह्मणे सामन्तराविधानान्न जराबोधीयस्य तत्र विनियोगे ब्राह्मणविरोधः नाप्यग्निष्टोमसामत्वेन यज्ञायज्ञीयनियमे ब्राह्मणे 'नाप्यथो खल्वाहुर्यज्ञायज्ञीयमेवाग्निष्टोमसाम कार्यमिति' तस्य नियतत्वादित्याशङ्क्याह—यदि चेति। यज्ञायज्ञीयनियमे जराबोधीयविध्यानर्थक्यापत्तेरेवकारस्य च यदेव प्रकृतौ, तदेवात्रापीत्येवं परत्वेनोपपत्तेर्विकल्पपरमेव ब्राह्मणमित्याशयः। एवं तर्हि कात्यायनवचनं प्रत्यक्षविरोधादग्राह्यं स्यादित्याशङ्क्याह—बह्विति। यद्यपि कात्यायनसूत्रं पौरुषेयम्, तथापि तस्य वेदोत्थापिनां न्यायानां मध्येऽयं सम्यङ्न्यायः, अयं न्यायाभास इति विवेककुशलत्वान्नाकुशलैर्मिथ्यावादित्वमध्यवसातुं शक्यमित्यर्थः। परमार्थतस्त्वस्मिन्पूर्वपक्षे सर्वेषामपौरुषेयत्वान्न कस्यचिद् बाध इत्येतावानाशयः। करोतिप्रणमत्यादिप्रयोगास्तु प्रवचनाभिप्रायेण, दर्शनाभिप्रायेण वा व्याख्येया इत्युक्तमेव।

श्रुतिबलादप्येवं वेदतुल्यत्वमवसीयत इति प्रतिपादनार्थमाचार्यवचन इतिभाष्यं व्याचष्टे—आचार्यवचनानां चेति। ननु प्रामाण्यस्य स्वतस्त्वात्तत्प्रतिपादनपरा श्रुतिरनर्थिका स्यादित्याशङ्क्य, स्वतः सिद्धस्यापि प्रामाण्यस्यापवादशङ्कानिरासाय प्रमाणान्तरापेक्षायां तादर्थ्येन प्रामाण्यश्रुतिसाफल्यप्रतिपादनार्थं प्रत्यक्षत इत्यादिभाष्यं व्याचष्टे—तथा चेति। श्लोकाभिप्रायं विवृणोति—यान्यपीति। अनाप्तवाक्येष्वपि सम्वादेनापवादाशङ्का निवर्त्तते, किमुतापौरुषेयेष्वित्याशयः। एतदेवोपसंहरति—सत्यवाचां चेति। तुल्यकल्पत्व एवोपपत्त्यन्तरप्रतिपादनार्थं वेदवाक्यैश्चेति भाष्यं व्याचष्टे—अपि चेति। तुल्यत्वोपपादनार्थैवाऽतिशयोक्तिः।

याज्ञिककर्तृकादरार्थतया व्याख्याय, ब्रह्मयज्ञविधिकृतादरार्थतयैतदेव व्याचष्टे—तुल्यं चेति। सम्प्रदायः अध्ययनम्। तद्विधायकं य एवं विद्वान्स्वाध्यायमधीत इति ब्रह्मयज्ञविधिवाक्यं तद्वेदवाक्यैः सह कल्पसूत्राणां तुल्यमित्यर्थः। अध्येतृकर्तृको वादरोऽनेन भाष्येणोक्त इति तृतीयं व्याख्यानमाह—अथ चेति। यत्नतुल्यत्वमेव दर्शयति—अनुयोगेष्विति। वेदकौशलजिज्ञासार्थं तत्तद्वेदभागचिह्नलेख्यानि घटिकायां कुम्भाख्यायां

निक्षिप्य तत्तद्वेदभागपरीक्षाकाले तान्याकृष्याकृष्टलेख्यचिह्नितं वेदं पठत्यध्येतारो न युञ्जत इति घटिकामार्गवर्तिनोऽनुयोगाः तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति ।

एतमेव न्यायं विद्यास्थानान्तरेष्वतिदिशति—एतेनेति । स्मृतीनां च धर्मशास्त्रव्यपदेशादपि स्वातन्त्र्यलक्षणा प्रयोगशास्त्रतावसीयत इत्याह—धर्मेति । तुल्यवच्च विद्यास्थानत्वव्यपदेशात्सर्वेषां तुल्यतेत्याह—अपि चेति । वैदिकमन्त्रप्रकाश्यप्रकाशकत्वादप्येषां वेदत्वमवसीयत इत्याह—किं चेति । नन्ववेदत्वेऽपि स्मृतीनां वेदमूलत्वेन तत्प्रतिपाद्यानामष्टकादीनां वैदिकत्वाद्वैदिकमत्र प्रकाश्यं च युक्तमित्याशङ्क्याह—एवं चेति । कल्पनागौरवापत्तेर्वेदमूलकत्वकल्पनातो वेदत्वकल्पनैव ज्यायसीत्यर्थः ।

ननु नित्यत्वपक्षे तस्य चाप्रामाण्यस्य च कल्प्यत्वाद्वेदत्वपक्षे च तत्यापि तृतीयस्य कल्प्यत्वाद्गौरवं स्यादित्याशङ्क्याह—सिद्धानामिति । नित्यत्वे सति निर्दोषत्वेनैव प्रामाण्यसिद्धेर्नित्यतैवैका साध्या सा चावश्यस्मरणेनैव सुसाधा । वेदता च वेदार्थ विषयत्वात्प्रकल्प्यत इत्यर्थः । एतदेवोपसंहरति—तस्मादिति । किं तु तान्येवेत्युत्तरश्लोको योज्यः । वेदमूलत्वे च तत्समर्पणक्लेशाधिक्यापत्तेरेषामेव वेदत्वं युक्तमित्याह—मन्वादिभिरिति । मूलसमर्पणक्लेशाङ्गीकरणे अप्येषां प्रति कञ्चुकत्वादग्राह्यत्वं स्यादित्याह—के हीति । प्रतिकञ्चुकानामग्राह्यत्वं दृष्टान्तेनोपपादयति—यथा चेति ।

ननु वेदमूलत्वेऽपि सम्प्रदायविनाशभयेनासमर्पणीयत्वान्न क्लेशापत्तिर्नाप्यग्राह्यत्वापत्तिरित्याशङ्क्याह—सम्प्रदायेति । एतदेव विवृणोति—वेदेति । अवेदत्वे च तद्विज्ञातस्यार्थस्य श्रेयःसाधनत्वाभावापत्तेः शास्त्रप्रणयनवैयर्थ्यं स्यादित्याशङ्क्याह—वेदादेव चेति । नन्वस्तु तर्हि वेदवाक्यानामेव विप्रकीर्णानामेकत्र सन्निवेशस्य मन्वादिभिः कृतत्वात्पौरुषेयतेत्याशङ्क्याह—न चेति । एतदेव विवृणोति—ईदृगिति । ननु मूलान्तराणामेकत्र कल्पना रचना युज्यते सम्प्रदायविनाशापत्तेरिति योज्यम् । उपसंहरति ।

ननु पौरुषेयत्वेऽपि वेदमूलत्वेन धर्मप्रामाण्योपपत्तेः कथं तदभ्युपगमे नित्यत्वापत्तिरित्याशङ्क्याह—चोदनेति । इष्टसाधनत्वमात्रेण धर्मत्वे कृष्यादेरपि धर्मत्वापत्तेर्विध्यनुष्ठापितत्वेन धर्मत्वाद्विधेश्च पौरुषेयेषु पुरुषाभिप्रायप्रतिपादकत्वेनासम्भवाद्धर्मप्रामाण्यासम्भव इत्याशयः । स एव ब्राह्मणस्याप्यवेदत्वे चोदनात्वाभावेऽर्थवादरूपस्य विध्येकवाक्यत्वाभावे धर्मप्रामाण्यं नास्तीति वदता विवृतः । एतदेवोपसंहरति—तेनेति । ननु मूलभूतचोदनाकल्पनेनैषां धर्मप्रामाण्यं भविष्यत्यत आह—वदन्तीति । चोदनाकल्पने तन्मात्रेणोपक्षीणानां धर्मप्रतिपत्तावव्यापारादप्रामाण्यापत्तिरित्याशयः । यावदुक्तं शब्देन विषयीकृतं तावत्येव शब्दः प्रमाणम् । येषां तैरित्यस्मिन्नर्थेऽव्ययीभावगर्भो बहुव्रीहिः । ननूक्तार्थान्यथानुपपत्त्यानुक्तकल्पनमपि युक्तमेवेत्याशङ्क्याह—उक्तमिति । उक्तं धर्मरूपमर्थमादौ परित्यज्यानुक्तं वेदवाक्यं तावत्प्रतीयते कल्प्यते । अनुक्तेन च वेदवाक्येन सपूर्वपरित्यक्तोऽर्थोऽपि पश्चात्प्रती-

यत इति यत्कल्पनम् तत्कथानुपपत्त्येत्यर्थः। विद्यास्थानान्तरेषु पूर्वंपक्षमुक्तमर्थमुपसंहरति—तस्मादिति।

शाक्यादिग्रन्थानां वा नित्यत्वमनेन सूत्रेणोच्यत इत्याह—शाक्यादीति। शाक्यादिग्रन्थनित्यत्वे को न्याय इत्यपेक्षायामाह—येनैवेति। नन्वेवं सत्यासत्वलक्षणाभावात्कथं प्रामाण्यसिद्धिरित्याशङ्क्य, स्वतस्त्वाङ्गीकरणेन परिहरति—बोधकत्वादिति। कथमकृतकमित्यपेक्षायाङ्कर्तृस्मरणवर्जनादित्युक्तम्। ननु सामाख्यानिकं कर्तृस्मरणमस्तीत्याशङ्क्याह—बुद्धेति। यथाक्रमं दृष्टान्तद्वयमनुपलब्धिविरोधादिदूषणमपि वेदवत्परिहर्त्तव्यमित्याह—यावदेवेति। उपसंहरति—तेनेति।

नासन्नियमादिति सिद्धान्तसूत्रं स्वयं तावद्व्याचष्टे—एवमिति। यदेतत्सर्वेषामविशेषेण नित्यत्वं वेदत्वं स्वतःप्रमाणत्वम्, तत्कारणं च कर्तृस्मरणवर्जनाद्युक्तम्। न तस्य किंचिन्नित्यं निबन्धनं नियतं-कारणमागमो न्यायो वाऽस्तीत्यर्थः। अनेन चासन्नियमादिति हेतुर्निबन्धनाभावादित्येवं व्याख्यातः। सर्वसाम्योक्तेरसन्निबन्धनत्वमेवोपपादयितुं चतुर्द्धा वैलक्षण्यमाह—इहेति। वेदतदङ्गधर्मशास्त्र-शाक्यादिग्रन्थरूपेषु तुल्यत्वेनोपन्यस्तेषु अर्थेषु मध्ये वेदेषु या वेदत्वनित्यता बुद्धिः सा वेदस्वरूपदर्शनादेव जायते, बाधकाभावाच्च पारमार्थिकी। तदङ्गेषु तु कल्पसूत्रेषु शिक्षादिषु च वैदिकग्रहेष्टकाद्यर्थंप्रबन्धान् 'षडङ्गमेके' इतिस्मृतेश्च वेदत्वनित्यत्वबुद्धिर्जायमाना दृढकर्तृस्मरणात्, 'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति बहुमतिविरोधाच्च भ्रान्तिर्द्धर्मशास्त्रेषु वैदिकग्रहाद्यर्थनिबन्धलिङ्गाभावाद्वेदत्वास्मरणाच्च वेदत्वनित्यत्वबुद्धिरजायतैव। शाक्यादिग्रन्थेषु त्वतीन्द्रियार्थनिबन्धनेन, 'स्थितैवेयं धर्मनित्यतेत्यादिपर्यालोचनया च वेदत्वनित्यत्वबुद्धिर्जातापि स्वसिद्धान्तविरोधाद् दुष्यतीत्यर्थः। ननु शाक्यादिग्रन्थेषु स्वसिद्धान्तविरोधात्कथं वेदत्वनित्यत्वबुद्धिर्जायते इत्याशङ्क्याह—परेणेति। उक्तिप्रत्युक्तिरूपम्=वाकोवाक्यम्। प्रतिभाने किं कारणमित्यपेक्षायां परवाक्येभ्योऽवगतानां नित्यत्वोपपत्तीनां स्वागमेष्वारोपः। प्रतिमानकारणत्वेनोक्तः। ननु स्वसिद्धान्तज्ञाने परोक्तोपपत्त्याऽऽरोपो न सम्भवतीत्याशङ्क्याह—छायामिति। स्वागमप्रामाण्यप्रतिज्ञाहान्या पराजयात् मुखच्छायां नश्यन्तीं रक्षयितुमित्यर्थः। यद्यप्यात्मीयं सिद्धान्तं जानन्तीत्यध्याहृत्य तथापिशब्दो योज्यः। एतदेवोदाहरणनिष्ठमाह—यथेति। ननु वेदमूलत्वेनापि स्वागमप्रामाण्यसिद्धेर्नित्यत्वाभिधानमनर्थकमित्याशङ्क्याह—प्रद्वेषादिति। ननु स्वानङ्गीकृतनित्यत्वाभिधानादसत्यवादित्वं स्यादित्याशङ्क्याह—तन्मात्रेऽपि चेति। नित्यत्वाभिधानादसत्यवादित्वाभावेऽपि स्वागमप्रामाण्याभिधानविषये सत्यवादिता सेत्स्यतीत्यर्थः। नन्वहिंसादेर्वेदमूलस्याभिधानात्कथं तेषां वेदमूलत्वे प्रद्वेष इत्याशङ्क्याह—भूयसामिति। शाक्यैरप्यहिंसादि वेदवत् स्वातन्त्र्येणैव विधीयते, न वेदादुपलभ्येत्यर्थः। नित्यत्वप्रतिपादने किं तेषां प्रयोजनमित्यपेक्षायामाह—ततश्चेति। वेदनित्यत्ववागाभासैर्विमोह्यते विभ्राम्यते विप्रतिपीक्रियते—निवार्यत इत्यर्थः। ननु तैर्नित्यत्वस्याक्षत्वलक्षवाक्यप्रामाण्य-

कारणगुणाभावापादकत्वेन वेदप्रामाण्यबाधकत्वादभ्युदगन्तव्यं वेदत्वाभिधानेन नित्यत्वाभिधानेन वा स्वागमाप्रामाण्यं विमोह्यत इत्याशङ्क्याह—यादृशेति। यादृशं परेणोक्तं तादृशमविचार्यैव ये मन्यन्ते यादृशतादृशा—अनिपुणाः। तैरप्यतीन्द्रियविषये पुरुषवचनप्रामाण्यस्य निराकर्त्तुं शक्यत्वान्निरुत्तरीकृताः परवाक्यान्यकुर्वन्तः स्वागमनित्यत्वमाहुरित्यन्वयः।

ननु चक्षुरादीनामतीन्द्रियार्थग्रहणासामर्थ्येऽपि भावनादेरतीन्द्रियार्थग्रहणसामर्थ्यस्य तैरुपपादितत्वात्कथं निरुत्तरत्वमपीत्याशङ्क्य—बालेत्याद्युक्तम्। अनेन चोपपत्तिवाक्येन स्वागमप्रामाण्यं साधयामोऽनेन वेति यद्यपि हृदयं व्याकुलयन्ति, तथापि प्रक्षीणकुहेतुवचनजालत्वेन तद्वाक्यानां बालानुकरणवाक्यसदृशत्वान्न स्वपक्षसाधनक्षमताऽस्तीत्यर्थः। ननु नित्यत्वेऽपि वाक्यप्रामाण्यकारणाप्तलक्षणगुणाभावात्प्रामाण्यानुपपत्तेः परवाक्यानुकरणमनर्थकमित्याशङ्क्य—अपौरुषेयत्वेत्युक्तम्। मीमांसकोपपादितस्वतःप्रामाण्यनिराकरणाशक्तेरित्याशयः। परवाक्यानुकरणे मूर्खवरस्य गोत्रप्रश्नविषयमुत्तरं दृष्टान्तः। कीदृशमुत्तरमित्यपेक्षायाम्—यदेवेत्युदाहरणम्। ननु शाक्यादीनामागमनित्यत्वोक्तावपसिद्धान्तापत्तिः स्यादित्याशङ्क्याह—अस्मदीयमिति। आगमनित्यत्वप्रतिपादकं यद्भवतां वाक्यम् तदस्मदीयमिति मीमांसकैरुदिताः शाक्यादयोऽस्माकमेवैतद्वाक्यं मीमांसकैः श्रुत्वा हृतमिति जल्पन्तीत्यर्थः। कथमेवं ते मिथ्या वदन्तीत्याशङ्क्याह—त्यक्तलज्जमिति। क्रियाविशेषणत्वान्नपुंसकनिर्देशः।

एवं शाक्यादिग्रन्थेषु वेदत्वनित्यत्वबुद्धेर्जन्मोपपाद्य दूषणमाह—तन्नेति। कथं क्षणिकवादित्वप्रसिद्धिस्तेषामित्याशङ्क्याह—धर्म इति। केन ग्रन्थेनायं धर्मः शाक्येनोपदिष्ट इत्यपेक्षायां तदीयं ग्रन्थं पठति—क्षणिका इति। सर्वेषां संस्काराणां=संस्कृतानां कृतकानां क्षणिकत्वेनास्थिरत्वात्क्रियाकालं यावत् स्थायित्वाभावान्न क्रियाव्यापारः कुतः सम्भवतीति क्रियापदार्थं निषेधता शाक्येन सर्वस्य संस्कृतस्य कृतकस्यानित्यत्वलक्षणो धर्मोऽभिहित इत्यर्थः। नन्वकृतकानां प्रतिसंख्यानिरोधव्योम्नां शाक्यैर्नित्यत्वाभ्युपगमात् न्यायेन आगमस्यापि नित्यत्वं तेषामभिमतं भविष्यतीत्याशङ्क्याह—बुद्धीति। मुद्गरप्रहाराद्युत्तरकालीनस्य घटाद्यभावस्य प्रतिसंख्यानिरोधाख्यस्य, व्योम्नश्चावरणाभावरूपस्यावस्तुत्वात्कृतकत्वादिधर्मयोगासम्भवेऽप्यागमस्य वस्तुत्वात्कृतकत्वं क्षणिकत्वं च शाक्यानामभिमतमेवेत्याशयः। वस्तुत्वं चार्थक्रियाकारित्वलक्षणं बुद्धेर्ग्राहकशक्तियोगाद् बोध्यस्य च ग्राह्यशक्तियोगान्नेतरस्येति दर्शयितुम्—बुद्धिबोध्यत्वमित्युक्तम्। विशेषतश्च पदाद्यनित्यत्वाभिधानादागमनित्यत्वं शाक्यानामनभिमतमिति ज्ञायत इति तदीयग्रन्थोपन्यासेनैव दर्शयति—तथेति। शब्देनाभिव्यक्तिर्युज्यते सा हीन्द्रियसंस्काराद्वा स्याद्विषयसंस्काराद्वा। द्वेधापि दोषोऽस्ति। कथमित्यपेक्षायां बुद्धेर्नियमादित्युक्तम्। कश्चिदेव शब्दः केनचिदेव युज्यते इति द्विविधो बुद्धिनियमो दृश्यते। स चेन्द्रियसंस्कारपक्षे गोशब्दाभिव्यक्त्यर्थं संस्कृतेन श्रोत्रेण सर्वगतत्वेन तत्समानादेशस्याप्युपलम्भापत्तेः विषयसंस्कारपक्षे सुघ्नसंस्कृतस्य शब्दस्य

पाटलिपुत्रेऽप्युपलम्भापत्तेर्न युज्यते इति शाक्यग्रन्थार्थः। ननु पदाद्यनित्यत्वेऽप्यागमनित्यत्वमवश्यस्मरणादिना सेत्स्यतीत्याशङ्क्याह—यस्त्वन्तूनिति। पदसङ्घातात्मकस्यागमस्य पदाश्रितत्वात्तदनित्यत्वे नित्यत्वं न युज्यत इत्याशयः। आगमनित्यत्वसिद्ध्यर्थं चोपकल्पिते पदादिनित्यत्वे शाक्यैर्निराकृतमागमनित्यत्वमिति रूपकद्वारेणाह—यावदिति। आगमनित्यत्ववेश्मार्थं यावत्पदनित्यत्वादिदारूपकल्पितं तस्मिंश्छाक्योक्तैर्हेत्वाभासाग्निर्निदग्धे तदागमनित्यत्वरूपं वेश्म दुष्करमित्यर्थः।

ननु कूटस्थनित्यत्वासम्भवेऽपि व्यवहारनित्यत्वे प्रवाहनित्यत्वापरपर्यायं भविष्यतीत्याशङ्क्याह—व्यवहारेति। अर्थप्रतिपादनलक्षणक्रियानित्यत्वमिह व्यवहारनित्यत्वं वाच्यम्। न चाश्रयनित्यत्वं विना तदाश्रितक्रियानित्यत्वं युक्तमित्यर्थः। नन्वाश्रयस्य पदादेः कूटस्थनित्यत्वाभावेऽपि प्रवाहनित्यत्वात्तदाश्रितक्रियानित्यत्वं भविष्यतीत्याशङ्क्याह—न चेति। पदावयवभूतानां वर्णानामपि क्षणिकत्वाभ्युपगमाच्च पदार्थनित्यत्वस्यापि जातितो व्यक्तितो वाऽनुपपत्तेर्न पदादेः प्रवाहनित्यतापि शाक्यपक्षे सम्भवतीत्याशयः। अतः स्थितैवैषा धर्मनित्यतेति वचनाच्छाक्यागमे वेदत्वनित्यत्वबुद्धिर्जातापि सर्वक्षणिकसिद्धान्तविरोधाद् दुष्यतीत्युपसंहरति—स्थितैवेति। किं च क्षणिकत्वे पूर्वोपलब्धाया धर्मताया निर्देशकाले विनष्टत्वादेषेति सर्वनामनिर्देश एव तावन्न युक्तः। चिरविनष्टत्वाद्वैषेत्यस्य तदेकवाक्यतात्यन्तमयुक्तेत्याह—एषेति। अत्रैव सूत्रं योजयति—तेनेति। असत्त्वस्य क्षणिकत्वस्य सर्वपदार्थेषु विशेषतश्च पदादिषु नियमानिबद्धत्वादभ्युपगतत्वादागमनित्यत्वानुपपत्तिं प्रतिपाद्यमालोच्य प्रागसतश्च कृतिमस्यातीन्द्रियेऽर्थे स्वातन्त्र्यलक्षणं प्रयोगशास्त्रत्वाभावं प्रतिपाद्यमालोच्यैतत्सूत्रमित्यर्थः। असाधुशब्दाभिप्रायो वायमसच्छब्दो व्याख्येय इत्याह—असाध्विति। पूर्वार्द्धं व्याचष्टे—मागधेति। मागधभाषागता असाधवः शब्दा मागधाः दाक्षिणात्यभाषागता दाक्षिणात्याः। तदुभयापभ्रंशप्रायाश्चासाधवो ये शब्दास्तैर्निबन्धनं येषामागमानामिति विग्रहः। मागधदाक्षिणात्या एव तावदसाधवः शब्दाः तदपभ्रंशास्त्वसाधुतरा इत्याशयः। ममापि भिक्षवः कर्म वर्त्तत एवाशरीरपातादित्याद्यागमार्थः।

उत्क्षिप्ते लोष्टे उत्क्षेपेऽस्ति कारणम् पतेन नास्ति कारणमस्त्युद्भवे च कारणम्। इमे च संस्कृता धर्माः सम्भवन्ति सकारणा-अकारणा विनश्यन्ति। उत्पत्तिमनुकारणमपेक्षन्त इत्याद्यागमान्तरार्थः। उत्तरार्द्धं व्याचष्टे—ततश्चेति। नन्ववश्यस्मरणेऽप्यसाधुशब्दभूयिष्ठत्वादिना शाक्याद्यागमानां कृतकत्वापादने वेदस्यापि पदसङ्घातात्मकत्वादिहेतुना कृतकत्वमापद्येतेत्याशङ्कां निराकुर्वन्निहैका परमार्थेनेतिश्लोकस्य पूर्वार्द्धं व्याचष्टे—वेदेषु हीति।

आदिमात्रदर्शनाद्वेदे पौरुषेयत्वभ्रान्तिर्निवर्त्तते, किमुत समस्तवेददर्शनादित्याह—आदिमात्रमिति। कथमित्यपेक्षिते पौरुषेयवेदेऽप्यवैलक्षण्यं दर्शयितुं पौरुषेयग्रन्थानां तावत्प्रमाणान्तरानुसारिपदवाक्यनिबद्धत्वमाह—दृष्टार्थष्विति। वेदानां तद्वैलक्षण्यात्पौरुषेयत्वासम्भवं दर्शयन्नृग्वेदस्य तावदलौकिकप्रायनियतस्वरकपदनिबद्धत्वात्पौरुषेयत्वासम्भवमाह—प्रपाठकेति।

आदिमात्रदर्शनेनाप्यृग्वेदस्यापौरुषेयत्वन्निश्चीयत इत्याह—अग्निमिति। कथमस्य पौरुषेयत्वं न सम्भवतीत्याशङ्क्याह—किमालोच्येति।

यजुर्वेदस्याप्यादिमात्रदर्शनेनापौरुषेयत्वं निश्चीयत इत्याह—इषे त्वेति। प्रसङ्गादेतन्मन्त्रविनियोजकस्य ब्राह्मणस्यापि विनियोगरूपदर्शनादेवापौरुषेयत्वं निश्चीयत इत्याह—शाखेति। द्वितीयमन्त्रविनियोजकस्याप्यपौरुषेयत्वनिश्चयमाह—एवमिति। ऊर्जंयित्ययमितिवक्तव्ये श्लोकाक्षरातिरेकापत्ति मीत्या ज्ञातारः सन्ति मेत्युक्त्वेति मानवीयश्लोकवदिकारो न युक्तः। तृतीयमन्त्रविनियोजकस्याप्याह—वायवस्थेति। एकशो विनियोगे कानुपपत्तिरित्याशङ्क्याह—वायुशब्देनेति।

सामवेदस्याप्यादिमात्रश्रवणेनापौरुषेयत्वनिश्चय इत्याह—सामवेद इति। कथं पौरुषेयत्वे निरभिप्रायत्वापत्तिरित्याशङ्क्याह—को नामेति। अर्थाभिधानपराणामृगक्षराणामित्यनादरे षष्ठ्यौ। अनवगतपूर्वं विकुर्यादिति क्रियाविशेषणम्। अक्षरान्तरेष्वपि विकारः पौरुषेयत्वेन युज्यत इत्याह—तथेति। वेदे पुरुषप्रदर्शनमात्रेणापौरुषेयत्वनिश्चयमुपसंहरति—तेनेति।

ननु लौकिकवाक्ये विलक्षणरूपदर्शनाद्वेदस्यापौरुषेयत्वे 'सूर्य एकाकी चरतीत्या'दीनां तत्सादृश्यात्पौरुषेयत्वापत्तिरित्याशङ्क्य, तत्रापि स्वरादिनियमाद्वैलक्षण्यमाह—किंचिदिति। अतो निरपवादसिद्धं वेदस्य रूपदर्शनेनापौरुषेयत्वमित्युपसंहरति—एवं चेति। ननु रूपदर्शनमात्रेणापौरुषेयत्वनिश्चये, मीमांसकानां न्यायप्रतिपादनक्लेशोऽनर्थकः स्यादित्याशङ्क्याह—तावता त्विति। सानुभवरूपा दृढा प्रतीतिरनवच्छिन्नप्रतीतिप्रवाहवाचकत्वाद्भावनेत्युच्यते। इतिकरणो हेतौ। बाह्यतार्किकपरामर्शी तच्छब्दः।

शाक्यादिग्रन्थेषु रूपदर्शनमात्रेण पौरुषेयत्वनिश्चयो भवतीति व्यतिरेकमाह—शाक्यादीति। प्रज्ञप्तिविज्ञप्तिशब्दयोर्ज्ञानातेर्णिजन्तत्वाभावे युगागमस्यासाधुत्वम्, णिजन्तत्वे तु ण्यासश्रन्थो युजिति (पा० सू० ३।३।१४) विशेषविहितेन युच्प्रत्ययेन स्त्रियां क्तिन्निति सामान्यविहितस्य क्तिन्प्रत्ययस्य बाधादसाधुत्वम् शिति प्रत्यये परभूते दृशेः पश्यादेशविधानात्पश्यनाशब्दस्यासाधुत्वम्।

ननु भिक्षुशब्दगतस्य क्षकारस्य प्राकृतव्याकरणे स्तुरक्षार इति खकारादेशविधानात्तस्य च शेषादेशयोर्द्वित्वमनादाविति द्वित्वविधानात्कथमत्र दुष्टतरत्वमित्याशङ्क्याह—द्वितीयेति। इदुदम्यां शसणो पा. सू. इति स्मरणाद्भिक्षूनित्यस्य स्थाने भिक्षुणो इति प्राप्ते रेकान्तत्वाप्रयोगाद्भिक्षणं भिक्षुशब्दाद् द्वितीयाबहुवचनस्य शसोण इति णेकारादेशविधानाद्भिक्ष इति भिक्षइति घञन्तं भिक्षशब्दं व्युत्पाद्य भिक्षुं वाति गच्छति प्राप्नोतीत्यस्मिन्नर्थे वा गतिगन्धनयोरित्यस्माद्धातोरातोनुपसर्गे कः पा. सू. ३।२।३ इति कप्रत्ययोत्पादनेनाकारान्तभिक्षुशब्दमभ्युपेत्यैकारान्तम्—दुष्टमित्युक्तम्। आदिशब्दोक्तं शब्दान्तरापभ्रष्टतरत्वं दर्शयति—संस्कृतेति। स्वयमेव च शाक्येनात्र डकारापत्तिर्न्निषिद्धेत्याह—सोऽयमिति। नासन्नियमादिति सूत्रस्यासाधुशब्दनिबन्धनाभिप्रायं व्याख्यानमुपसंहरति—इतीति।

व्याकरणानुगतशब्दनियमाभावादिति तृतीयं व्याख्यानं कर्तुमर्थं तावदाह—**यावांश्चेति**। उक्तेऽर्थे सूत्रं व्याचष्टे—**असन्नियमादिति वेति**। प्रागविद्यमानस्य ग्रन्थस्य निबन्धनादिति चतुर्थं व्याख्यानमाह—**क्षणिकत्वेति**। स्वसिद्धान्तप्रसिद्धसर्वक्षणिकत्वनिराकृतेन स्थितैवेयं धर्मनित्यतेत्युक्तेन धर्मप्रतिपादकागमनित्यत्वेन सिद्धमनित्यत्वं यस्य ग्रन्थस्य, स तथोक्तः। अत एव निबन्धनात्प्रागत्यन्ताविद्यमानस्य निबन्धनाभ्युपगमादित्यभिप्रायेणेति योज्यम्। अविद्यमानानां क्षणभङ्गादीनां निबन्धनादिति पञ्चमं व्याख्यानमाह—**असतो वेति**। असाधुभिर्हेतुभिर्निबन्धनादिति षष्ठं व्याख्यानमाह—**असद्धेतुभिश्चेति**। ननु क्षणभङ्गादीनामविद्यमानानां हेत्वाभासैर्निबन्धनेऽपि धर्माधर्मनिबन्धनानां कथमप्रामाण्यमित्याशङ्क्याह—**तदेककर्तृकेति**।

एवं तावदसाधारणैर्हेतुभिः शाक्याद्यागमानां पौरुषेयत्वमुपपादितम् इदानीं वेदातिरिक्तविद्यास्थानसाधारणेन कर्तृस्मृतिदार्ढ्येनोपपादयति—**कर्त्रिति**। अनेनैव हेतुना वेदातिरिक्तविद्यास्थानानामपि सर्वेषां पौरुषेयत्वमित्याह—**एवमिति**। अनेन चापौरुषेयत्वहेतोः कर्तृस्मरणस्य धर्मशास्त्रेष्वभावाद्वेदत्वबुद्धिर्न जायत इत्यभिधानादजातापि त्वन्येति श्लोकावयवो व्याख्यातः।

ननु कल्पसूत्रेष्वितरेषु च वेदाङ्गेषु च वैदिकार्थप्रबन्धात्षडङ्गमेके इति च स्मृतेर्वेदत्वबुद्धिर्जाता, केन हेतुना बाध्यते इत्याशङ्क्याह—**तेनेति**। अङ्गत्वाविशेषेऽपि कल्पसूत्रेषु वैदिकार्थप्रबन्धाधिक्यात् कल्पसूत्रग्रहणे प्रतीयमानापि स्वतन्त्रता कर्तृस्मरणेन प्रत्याख्यातेति वदताऽन्या भ्रान्तिरिति श्लोकावयवो व्याख्यातः।

ननूभयत्र हेतुसद्भावे कथं पौरुषेयत्वस्यैव निश्चय इत्याशङ्क्याह—**येनेति**। स्मर्तव्यास्मरणमेव दृश्यादर्शनवत्कर्त्रभावे प्रमाणम्। तच्च कल्पसूत्रे नास्ति, वैदिकार्थप्रबन्धस्तु वेदमूलत्वेनाप्युपपत्तेर्न वेदत्वसाधनायालम्। अध्येतॄणां चाङ्गेषु वेदत्वस्मृत्यभावात् 'षडङ्गमेके' इत्यपस्मृतिरित्याशयः।

नन्वीश्वरप्रणीतो वेद इति तार्किकाणां कर्तृस्मरणे सत्यपि वेदस्य नित्यत्वमुक्तम्, तथाङ्गेष्वपि भविष्यतीत्याशङ्क्याह—**यथैव हीति**। अनध्येतृस्मृतेरनभियुक्तगतत्वेनाप्रामाण्यान्न वेदे कर्तृसिद्धिः। कल्पादिषु त्वध्येतॄणामेव कर्तृस्मृतेः पौरुषेयत्वमित्याशयः। अत्रापि प्रागसतां वेदातिरिक्तविद्यास्थानानां निबन्धनादित्येवं सूत्रं योजयति—**ततश्चेति**। नन्वत्र माशकादिसमाख्यानिमित्ताऽध्येतृणां कर्तृस्मृतिर्वाच्या। सा च प्रवचनयोगेनाप्युपपत्तेर्न कर्तृसाधनमित्याशङ्क्याह—**न चेति**। मशकादिशब्दानां च कठादिशब्दवदनादिचरणानभिधायित्वान्नानादिसमाख्याव्युत्पत्तिनिमित्तत्वं सम्भवतीत्याह—**यथा चेति**।

अत्राप्यर्थे माशकादिसमाख्यायाः प्रागविद्यमानग्रन्थविषयत्वादित्येवं सूत्रं योजयति—**अतश्चेति**। स्वसम्वेद्यालौकिकरूपाभावादिति तृतीयं व्याख्यानमाह—**वेदेति**। अनध्यायनियमाभावादिति चतुर्थं व्याख्यानमाह—**कास्विति**। भाष्यकृता तत्सूत्रं स्वरनियमाभावाभिप्रायेण व्याख्यातवदिष्टविघातकारित्वादयुक्तमित्याह—**यत्त्विति**। समा-

धत्ते—तस्मादिति । प्रपाठकचतुःषष्ठीत्यादिना यत्स्वसम्वेद्यमलौकिकं वेदरूपमुक्तम्, तस्य कल्पसूत्रेष्वभावोऽत्र भाष्ये प्रयोगशास्त्रत्वाभावकारणं विवक्षितम् । स्वरग्रहणरूपलक्षणार्थमित्यर्थः ।

अवाक्यशेषात् । अनेन सूत्रेणार्थवादरहितत्वात्कल्पसूत्राणामवेदत्वमुक्तमिति प्रतिभाति, तदप्यरुणपराशरशाखाब्राह्मणस्य, वसन्ताय कपिञ्जलानालभेत इत्यादीनां चार्थवादरहितत्वेनावेदत्वापत्तेरयुक्तमित्याशङ्क्यालौकिकवेदरूपाभावोपलक्षणार्थत्वेन व्याचष्टे—अतश्चेति । तच्छब्देन स्वसम्वेद्यरूपाभावः परामृष्टः वाक्यशेषाणामलौकिकरूपत्वमुपपादयति—बहव इति । श्लोकं व्याचष्टे—बृहस्पतिरिति । नन्वर्थवादानामपि विध्येकवाक्यत्वेनानुष्ठानोपयोगित्वात्प्रणयनमर्थवदित्याशङ्क्याह—नित्यत्वे सतीति । नित्यत्वे पर्यनुयोगासम्भवात्कथंचिद्गतिः कार्या । प्रणयनं तु क्लिष्टार्थस्य मूढतामापादयतीत्यर्थः ।

वाक्यशेषाणामलौकिकरूपत्वमुपपाद्य, कल्पादिषु तदभावान्नापौरुषेयत्वमिति सूत्रार्थसिद्धिमाह—न चेति । भाष्यकृता तु विधानार्थाच्छिषेः शिष्यते विधीयतेऽनेनेत्यस्मिन्नर्थे घञुत्पत्तेर्विधायकवचनं शेषशब्दमङ्गीकृत्य विधायकवाक्यरहितत्वादित्येवं तावत्प्रथमं सूत्रं व्याख्यातम् । तस्य साध्यप्रयोगशास्त्रत्वाभावोपयोगितामाह—विधेति । ननु वर्त्तमानापदेशस्यापि 'समिधो यजती'त्यादेर्विधित्वाङ्गीकरणान्न तेन विध्यभावः शक्यो वक्तुम्, वचनानामित्याशङ्क्य, वाक्यशेषान्वयान्यथानुपपत्त्या तत्र विधिपरत्वं कल्प्यते न तु कल्पादिष्वसावस्तीत्येवं परतया पुनरेतत्सूत्रव्याख्यानार्थं न चात्रेति भाष्यं व्याचष्टे—वर्त्तमानेति । विधित्वेऽङ्गीकृते तत्प्ररोचकत्वेनार्थवादान्वयोपपत्तेस्तदुपपादकत्वेन विधिकल्पनमभिप्रेत्यार्थवादप्ररोचित इत्युक्तम् ।

ननु विध्येकवाक्यत्वं विना लाक्षणिकप्ररोचनार्थत्वं युक्तमिति प्रागेवोपपादितम् । ननु-वसन्ताय कपिञ्जलानालभेत इत्यादौ वाक्यशेषाभावेऽपि वर्त्तमानापदेशस्य विधित्वदर्शनात् कल्पादिष्वपि तथा भविष्यतीत्याशङ्क्याह—पञ्चमेनेति । छन्दसीत्यधिकृत्य, लिङर्थे लेडिति स्मृतेर्नान्यत्र पञ्चमलकारोऽस्तीत्याशयः ।

ननु छन्दःशब्दस्य वेदविषयत्वात्पूर्वपक्षे च कल्पादीनामपि वेदत्वाभ्युपगमात्पञ्चमलकारो युज्यत इवेत्याशङ्क्याह—यद्यपीति । यथैव छन्दःशब्दस्य गायत्र्यादिछन्दोयोगादृङ्मात्रविषयत्वप्रतीतावपि मन्त्रान्तरेषु ब्राह्मणेऽपि छन्दोनिमित्ता यस्य पादादिविधिदर्शनात्तद्विषयताप्यवसीयते, तथैव मन्त्रब्राह्मणव्यतिरेकेण वेदशब्दाभिलप्येऽपि तर्के छन्दोनिमित्तविध्यदर्शनान्मन्त्रब्राह्मणमात्रविषयत्वावसायान्न वेदमात्रविषयश्छन्दःशब्द इत्याशयः ।

एतदेव विवृणोति—यथैव हीति । विधिर्ब्राह्मणम्, विधेयो मन्त्रः । तर्को मीमांसा । यद्यप्यध्येतृभिर्मीमांसायां वेदशब्दाप्रयोगात्तदनपेक्षया चैतया स्मृत्या विध्यादीनां वेदत्वोक्त्या श्रुत्या विध्युद्देशस्यैव विधिशब्दवाच्यत्वे नार्थवादमन्त्रोपनिषदामवेदत्वापत्तेर्विषयत्वतर्कत्वाभ्यां चाग्निहोत्रादिन्यायविस्तरादीनामपि वेदत्वापत्तेर्नानया स्मृत्या तर्कस्य वेदत्व-

मुच्यते, किं तु कश्चिद्वेदभागो विधायकः, कश्चिद्विधेयः, कश्चिच्च स एष नेति नेत्यादिरनित्यशरीरादिव्यतिरेकेण नित्यात्मप्रतिपादनादिरूपतर्कानुरूपत्वात्तर्क इति त्रैविध्यं वेदस्योच्यते, तथापि विध्यादित्रयस्य वेदत्वप्रतिपादनार्थेयं स्मृतिरिति परमताभ्युपगमेनायं दृष्टान्त इति सूचनार्थमेतस्मिन्दर्शने सतीत्युक्तम् ।

भाष्यकृता कल्पसूत्राणां वेदवाक्यैस्तुल्यादरत्वं पूर्वोक्तम् । यश्चादर इत्यनुभाष्य स नान्तरीयकत्वादिति परिहारमुक्त्वा कथं नान्तरीयकत्वमित्यपेक्षायां शाखान्तरगतकर्माङ्गभूतमन्त्ररूपवेदवाक्यमिश्राणां कल्पसूत्राणां पाठान्मन्त्रकौशलार्थे घटिकादिष्वादरे नान्तरीयकः कल्पसूत्रादर इत्युक्तम् । तदतिस्पष्टत्वान्न व्याख्यातम् ।

ब्रह्मयज्ञविधिविषयत्वतुल्यताभिप्रायेण तुल्यादरभाष्यव्याख्याने स्वयमनुभाषणपूर्वकं परिहारमाह—यस्त्विति । कल्पसूत्राण्येवात्रोदाहरणमित्यभिमानेनानैकान्तिकत्वोपन्यासः । अतोऽनैकान्तिकत्वान्न विधेयत्वमात्रेणाकृतकत्वनिश्चय इत्याह—तस्मादिति । प्रवाहनित्यत्वाच्च नित्यानित्यसंयोगविरोधपरिहार इत्याह—वेदार्थेति । ननु प्रवाहनित्यत्वेऽप्यपूर्वस्य ग्रन्थस्य कल्पसंज्ञाकरणान्नित्यसंयोगविरोधः प्रसज्येतेत्याशङ्क्याह—वेदार्थेति । यौगिकेयं संज्ञा, न ग्रन्थव्यक्तिनिबन्धनेत्यर्थः । प्रयोगप्राशुभावोपयोगिकर्मानुसन्धानप्रयोजनत्वाच्चास्य विधेस्तस्य च येन केनचित्प्रयोगकल्पनात्मकेन शब्देनोपपत्तेर्ग्रन्थविशेषस्य विधिविषयत्वाभावान्न नित्यतापत्तिरित्याह—कर्मेति । कर्मणोऽभ्यासेनानुसन्धानं विधिप्रयोजनमित्यर्थः । प्रयोजनवचनोऽर्थशब्दः ।

यद्वा नात्र कल्पाख्यग्रन्थाध्ययनं विधेयम्, किं त्विङ्स्मरण इत्यस्य धातोरधीत इति रूपमङ्गीकृत्य कर्मणो वेदार्थस्याहरहरभ्यासेन स्मरणं विधेयमिति । परिहारान्तरमनेनोच्यते चशब्दो वाशब्दार्थः । ऋङादौ वेदाध्ययन इत्येतद्धातुरूपत्वेनावधारितस्याधीत इत्यस्य कल्पानित्यत्रानुषक्तस्य धात्वन्तररूपत्वायोगादन्वाचयोपपत्तित्वसूचनार्थः । वैदिकार्थप्रबन्धस्य वेदत्वहेतोर्भाष्यकारेणापरिहृतत्वात्स्वयमनुभाषणपूर्वकं परिहारमाह—पुनरिति । अत एव स्वातन्त्र्यमपि न सम्वादात्सिध्यतीत्याह—तदर्थेति । ननु 'षडङ्गमेके' इति कल्पादीनां वेदत्वस्मृतेः किमित्यन्यथा सम्वादो नीयत इत्याह—वेदेति । षडङ्गेऽध्येतृभिर्वेदशब्दाप्रयोगादपस्मृतिरेषेत्यर्थः । ततश्चैतन्न सिद्धान्तभाषितमित्येवं चशब्दो योज्यः ।

यच्च कल्पसूत्राणां वैदिकार्थानुवादत्वं तदर्थानुगमाच्चेत्यनेनोक्तम्,, तदुपपादयति—संवादे चेति । ननु शाखान्तरन्यायेनैषामपि विधित्वमविरुद्धमित्याशङ्क्याह—न चेति ।

एतदेव विवृणोति—सर्वेति । किं च होतुर्वषट्कारे चमसा नीयन्ते उद्गातुर्ब्रह्मणो यजमानस्येति भक्षणार्थं नयनमुक्त्वा केनादौ भक्षणीयमित्यपेक्षायां तेषां होताग्रे भक्षयेदिति प्रतिज्ञाय, तस्य वषट्कारान्वयत्वादित्यादिभिर्वषट्कर्तुः प्रथमभक्ष इत्यादिब्राह्मणोक्तैर्हेतुभिर्व्याख्यानदर्शनात्कल्पसूत्राणां ब्राह्मणोक्तार्थानुवादकतावसीयत इत्याह—विवृण्वन्तश्चेति ।

तथा प्राश्य घृतं शंसेद्य चाह वा इदमनो वा रथो वाऽक्तो वर्त्तत, एवं हैवाक्तो इत्यादिभिर्घृतप्राशनादिविधिशेषभूतैर्ब्राह्मणैर्नाचामेद्विशदिति विवायते देवरथो वा यद्धोता, नाक्षमद्भिः करवाणीत्यादिवाक्यैराचमनाभावादिज्ञापनानुवादकत्वनिश्चय इत्याह—अन्यार्थैरिति। उपसंहरति—अर्थेति।

आचार्यवचःप्रामाण्यं श्रुत्यैवोक्तमिति पूर्वोक्तस्य यत्त्वित्याद्यनुभाषणपूर्वकं परिहारभाष्यं व्याचष्टे—आचार्येति। वेदवचः प्रमाणमित्येवमन्यार्थताभाष्यकृतोदितेत्यर्थः। अव्युत्पन्नो वाऽयमाचार्यशब्दो व्याख्यातृव्यापयितृविषयः, न तु कल्पसूत्रकारविषय इति परिहारान्तरं (यद्वेति) भाष्येणोक्तं तद्व्याचष्टे—व्याचक्षाणस्येति। शिष्याणां स्वप्रत्यये संवादनैरपेक्ष्यप्रदर्शनार्थं स्वयम्प्रमाणतेत्युक्तम्। अयमेव परिहारः स्मृत्यानुगुण्याद्युक्त इत्याह—आचार्येति।

नन्वाप्तवाक्यप्रामाण्यस्य लोकप्रसिद्धत्वाद्वचनमनर्थकमित्याशङ्क्याह—वेदेति। अनेन भाष्येण यत्प्रमाणमाचार्यवचनम्, तदपेक्षेयं श्रुतिरित्युक्त्वा कतरदितिपृष्टे यत्प्रमाणगम्यमित्यभिधानात् व्याख्यातृवचनमव्यापकवचनमपि वा सम्भवन्मूलप्रमाणकमेव सत्यं न सर्वमित्युक्तम्। तदुपपादयति—न चेति। 'अनृतवादिनी वागि'तिश्रुतेः प्रायाभिप्रायत्वेन रूपात्प्रायादित्यत्र व्याख्यातत्वात्प्रायादित्युक्तम्। श्रुत्यन्तरमुदाहरति—अन्यत्रापीति।

यदि च वेदसंवादकल्पसूत्राणां वेदत्वम्, वेदतुल्यत्वं वोच्यते, ततः क्वचिद्विसंवादाद्वैपरीत्यमपि शक्यं वक्तुमित्येतदर्थत्वेन सर्वत्र च प्रयुक्तत्वात्सन्निधानवशाच्चेति सूत्रं 'यच्चोक्तमिति भाष्येणावतारितम्। तदयाचष्टे—वेदादेवेति। यज्ञायज्ञीयमेव प्रयणीयाग्निष्टोमसामकार्यमित्यादेः पञ्चविंशब्राह्मणे जराबोधीययज्ञायज्ञीययोः प्रायणीयाग्निष्टोमसामवैकल्पिकविधानेन साक्षाद्वेदेन विसंवाददर्शनात् अपि वा नानागोत्राः स्युरित्यादेस्तनूनपान्नाराशंसकल्पाद्यवैगुण्याय समानकल्पानामेव सूत्रेष्वधिकार इति, वेदोत्थेन न्यायेन विसंवाददर्शनात्कल्पसूत्रकारवाचां वेदादेवानृतत्वावगतिरित्यर्थः। इह च यच्चोक्तमिति सूत्रावतारणार्थानुभाषणभाष्ये च शब्दप्रयोगात्तुल्यादराचार्यवचः प्रामाण्यश्रुत्योः परिहारौ सर्वत्र चेति सौत्रेण चशब्देन सूचितौ कल्प्येते।

यद्वा पूर्वमेव सूत्रं नञमपनीय व्यवधारणकल्पनया वा अस्मिन्परिहारद्वये योज्यम्। शेषस्य शेषिमिश्रत्वेन लक्षणया वेदवाक्यमिश्रत्वप्रतीतेरर्थवादे च वाक्यशेषशब्दस्य प्रसिद्धत्वाद्द्वयं न वाक्यशेषः स्यादेतच्छङ्काद्वयमिति च व्यवधारणकल्पनयापि व्याख्योपपत्तेर्नोत्सूत्रत्वाशङ्का।

उक्तेऽर्थे सूत्रं योजयति—सर्वत्र चेति। पूर्वेण सूत्रावयवेन विसंवादविषयोदाहरणे, उत्तरेण विसंवादाभिधानमित्यर्थः। अतिशयार्थोऽभ्यासः। अत्र भाष्यकृता सर्वत्र तिथिषु कल्पसूत्रकारैः पौर्णमास्यामावास्याख्यकर्मणः प्रयुक्तत्वादनुष्ठापितत्वादित्येवं सूत्रावयवं व्याचक्षाणेन शुक्लपक्षे यस्यां कस्यांचित्तिथावमावास्याख्यं कर्म कार्यमिति कल्पसूत्रकारवचनत्वेनोदाहृतम्। तद दूषयति—तत्रेति।

यद्वृत्तिकारेणोदाहरणं दत्तं तदनादृत्य इत्यन्वयः। अत्यन्तासिद्धस्याध्यारोपेण कल्पसूत्रकाराणामभिभवः कार्यं इत्यभिप्रायेण युक्तत्वादिति हेतुः। किमत्यन्ताभूतमध्यारोपितमित्यपेक्षायां दर्शेत्युक्तं दर्शपूर्णमासयोश्चरकं गमकं तद्विषयं कल्पसूत्रकारवचनं चेत्यसदेवाध्यारोपितमित्यर्थः। नन्वमावास्यापौर्णमासीशब्दयोर्दर्शनात् कथं तद्विषयस्यासत्त्वमित्याशङ्क्य–पार्वणेत्युक्तम्। गृह्यकारवचनत्वेन श्रवणादिव तद्विषयत्वे हेतुः। गृह्यशब्दस्योपासनाग्न्यधिकरणकर्मविषयत्वेन तत्प्रतिपादनाधिकृतानां वैतानिककर्मप्रतिपादनस्यानुचितत्वादिति भावः। एतदेव दृष्टान्तेनोपपादयति—गृह्येति। प्रदोषान्तो होमकालः, सङ्गवान्तः प्रातः तमतिनीय चतुर्गृहीतमाज्यं जुहुयादित्यग्निहोत्रस्य स्वकालातिक्रमे प्रायश्चित्तस्मरणादपस्मृतेस्तद्विषयत्वाभावनिश्चयाद् दृष्टान्तत्वम्। गृह्यकारवचनत्वेन स्वयंदृष्टत्वाद्भाष्यकारोदाहृतसमानविषयमुदाहरणान्तरमुक्तम्। किं तर्ह्यत्रोदाहरणमित्यपेक्षायामाह—तस्मादिति। सर्वाणि हवींषि पर्यग्निकरोतीति कल्पसूत्रकारैः पर्यग्निकरणस्य सर्वत्र हविःषु प्रयुक्तत्वात्तद्विरुद्धस्य च पुरोडाशं पर्यग्निकरोतीति शास्त्रस्य सन्निधानादित्येवं व्याख्येयमित्यर्थः॥ १०॥

॥ इति षष्ठं कल्पसूत्राधिकरणम् ॥

भा० प्र०—म्लेच्छों की प्रसिद्धि से आर्यों की प्रसिद्धि बलवती है—यह पूर्व सूत्र के व्याख्यान से सिद्ध है। प्रस्तुत प्रसङ्ग में यह आशङ्का होती है कि वेद आदि में पिक, तामरस, नेम, क्लोम, आदि का किसी विशेष अर्थ में प्रयोग प्रसिद्ध नहीं है, किन्तु म्लेच्छों ने क्रमशः कोकिल, पद्म, अर्द्ध, देह के अभ्यन्तर स्थित अवयव विशेष में प्रयोग किया है। म्लेच्छों के द्वारा स्वीकृत इन अर्थों का ग्रहण करना उचित है या नहीं? पूर्वपक्षियों का कहना है कि पूर्व अधिकरण में म्लेच्छों की प्रसिद्धि को अशास्त्रीय माना गया है, अतः उनकी प्रसिद्धि अनादरणीय है, इसलिए प्रदर्शित अर्थ ग्राह्य नहीं हैं।

इसके समाधान में सिद्धान्ती ने कहा है कि आर्यों की प्रसिद्धि के साथ म्लेच्छों का विरोध रहने पर पूर्वोक्त नियम स्वीकार किया गया है। किन्तु, प्रकृत में आर्यों की इन शब्दों के अर्थों की प्रसिद्धि नहीं है, अतः म्लेच्छों की प्रसिद्धि ही आदरणीय है। निरुक्त आदि में इन शब्दों के अन्य अर्थों की कल्पना उचित नहीं है, क्योंकि (१) यौगिक अर्थ की अपेक्षा रूढ़ अर्थात् प्रसिद्ध अर्थ बलवान् होता है। (२) निरुक्त के द्वारा एक ही शब्द के अनेक अर्थों की कल्पना की जा सकती है, ऐसी स्थिति में कौन अर्थ ग्राह्य है, कौन अर्थ ग्राह्य नहीं है—इसकी व्यवस्था सम्भव नहीं है। (३) पशु-पक्षी आदि के पालने में, वृक्ष, पुष्प आदि की वृद्धि में, पशुओं के छेदन-भेदन आदि कार्यों में आर्यों की अपेक्षा म्लेच्छ अधिक पटु हैं, अतः, इन विषयों में उनको ही अभियुक्त मानना होगा, फलतः, पिक, तामरस आदि वैदिक शब्दों का अर्थ उन लोगों की प्रसिद्धि के अनुसार ही मानना होगा। अर्थ प्रसिद्धि के साथ विरोध न होने से इन स्थलों में म्लेच्छों की

प्रसिद्धि बलवान् है। म्लेच्छ का अर्थ अपभ्रंश, प्राकृत आदि भाषा का व्यवहार करने वाला व्यक्ति होता है।

'चोदितम्' म्लेच्छों के द्वारा अर्थ विशेष में प्रयुक्त अर्थात् व्यवहृत शब्द समूह 'तु' किन्तु, 'प्रतीयेत' प्रतीत होता है अर्थात् उस अर्थ के वाचक रूप में अवगत होता है 'अविरोधात् प्रमाणेन' प्रमाण के साथ विरोध नहीं है। इन विशेष शब्दों का आर्यों ने विशेष अर्थ में व्यवहार नहीं किया है, अतः इन शब्दों का म्लेच्छों ने जिस अर्थ में प्रयोग किया है, उन शब्दों का वही अर्थ ग्रहण करना उचित है, क्योंकि म्लेच्छों का व्यवहार आर्यों के व्यवहार का विरोधी नहीं है ॥ १० ॥

### अथ षष्ठं कल्पसूत्राधिकरणम्

## [ ६ ] प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ पू०

**शा० भा०—इह कल्पसूत्राण्युदाहरणम्। माशकम्, हास्तिकम्, कौण्डिन्यकमित्येवं लक्षणकानि किं प्रमाणमप्रमाणं वेति सन्दिग्धानि। किं प्राप्तम्? प्रयोगस्य शास्त्रं प्रमाणमेवं जातीयकमिति ब्रूमः।**

**सत्यवाचामेतानि वचनानि। कथमवगम्यते। वैदिकैरेषां संवादो भवति। य एव हि वेदे ग्रहास्त एवेह, या एव वेदे इष्टकास्ता एवेह। तस्मात्सत्यवाच आचार्याः।**

**आचार्यवचः प्रमाणमिति च श्रुतिः[1]। प्रत्यक्षतः प्रामाण्यमनवगतमिति यद्युच्येत? प्रामाणान्तरेण वचनेनावगतमिति[2] न दोषः। वेदवाक्यैश्चैषां तुल्य आदरः। तस्मात् प्रमाणम् ॥ ११ ॥ इति पूर्वपक्षः।**

भा० वि०—एवं तावत्स्मृत्यधिकरणसिद्धस्यौत्सर्गिकस्याचारप्रामाण्यस्यार्यप्रसिद्धिविरोधे म्लेच्छप्रयोगरूपम् आचारेऽपवादम्, तदविरोधे चोत्सर्गस्थितिमभिधायेदानीं स्मृतीनामपि वेदव्यतिरिक्तविद्यास्थानरूपाणामौत्सर्गिकं श्रुतिमूलत्वेन प्रामाण्यं स्मृत्यधिकरणसिद्धमेवानेनाक्षिप्य समाधीयत इति सङ्गतिः। न चाशब्दमूलत्वेन स्मृत्यधिकणे पूर्वपक्षप्रदर्शनात्। सिद्धान्ते च शब्दानुमानकथनात् कल्पसूत्राणां च प्रत्यक्षवेदमूलत्वात् कथं समस्तविद्यास्थानविषयत्वं स्मृत्यधिकरणन्यायस्येति वाच्यम्, स्मृतीनामपि कासाञ्चिद् उपनयनादिविषयाणां प्रत्यक्षश्रुतिमूलत्वदर्शनात् कल्पसूत्राणामपि नानाशाखाङ्गोपाङ्गोपसङ्ग्राहिणां सर्वेषामेव प्रत्यक्षमूलत्वासम्भवात्, स्वल्पभूयस्त्वेन च विशेषोपपत्तेरिति मन्तव्यम्।

---

१. ब. च श्रुतिप्रत्यक्षवः। २. ब. वचनेन वावगत।

विषयमाह—**इहेति**। कल्पसूत्रशब्दो विद्यास्थानमात्रपरः। अत्र[1] च कल्पशब्द प्रयोगकल्पनात् कल्प इति बोधायनमशकादिप्रणीतग्रन्थविषयः। सूत्रशब्दस्तु प्रयोगसूचनात् सूत्रमिति व्युत्पत्त्या संज्ञापरिभाषादिभिः व्याख्यानापेक्षाश्वलायनादिग्रन्थविषयः। तत्रापौरुषेयत्वपौरुषेयत्वाभ्यां संशयमाह—**किं प्रमाणमिति**। किं वेदमूलत्वेन विना स्वयमेव वेदतया वेदतुल्यतया वा प्रमाणम् किं वा स्वातन्त्र्येण न प्रमाणम्? किन्तु श्रुतिमूलतयेति विमर्शार्थः, विचारप्रयोजनं त्वधीतवेदविस्मरणप्रायश्चित्तवान् कल्पसूत्रादिविस्मरणेऽपि प्रायश्चित्त-प्राप्तिः, सूत्रं व्याकुर्वाणः पूर्वपक्षयति—**प्रयोगस्येति**। यस्मादेवं जातीयकं कल्पादिरूपं प्रयोगस्य धर्मानुष्ठानस्य शास्त्रं शासकम्, तस्मात् स्वयमेव प्रमाणमित्यर्थः। पौरुषेयवाक्यस्यातीन्द्रियधर्मानुष्ठापकत्वाभावेन प्रयोगशास्त्रत्वादेवापौरुषेयत्वनिश्चयादिति भावः। कल्पादीनां स्वयं प्रमाणत्वे हेत्वन्तरमाह—**सत्यवाचामिति**। न गुणवद्वक्तृकत्वं सत्यवादिवचनत्वम्, किन्तु संवादिवचनत्वमभिप्रेतम्। एतदेव प्रश्नपूर्वकमुपपादयति—**कथमित्यादिना**। कल्पादीनां वैदिकार्थविषयत्वेन वेदसंवादित्वमत आह—**य एवेति**। कल्पादीनां वेदैनैकार्थ्ये फलितमाह—**तस्मादिति**। आचार्याः मशकप्रभृतयः।

ननु कल्पादीनाम् "अग्निमीले पुरोहितम्" इत्यादीनामिव रूपदर्शनमात्रेणापौरुषेयत्वानवगमात् कथं संवादित्वेन प्रामाण्यमत आह—**आचार्यवचनमिति**। आचार्यैः मशकादिभिः प्रोच्यमानमाचार्यवचनमित्युच्यते। एतदेव विवृणोति—**प्रत्यक्षत इति**। इतश्चानपेक्षमेतेषां प्रामाण्यमित्याह—**वेदवाक्यैश्चेति**। यादृशो हि मन्त्रब्राह्मणयोः अध्येतृणामादरः अनध्यायपरिवर्जनादिरूपः, तादृश एव कल्पसूत्रेष्वित्यर्थः। उक्तहेतुसिद्धमनपेक्ष्य प्रामाण्यमुपसंहरति—**तस्मादिति** ॥११॥

### षष्ठं कल्पसूत्राधिकरणं

त० वा०—कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते।
किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत् ॥ ५०१
किं वा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम्।
वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥ ५०२

### कल्पसूत्रयोर्भेदवर्णनम्

आह—के पुनः कल्पाः? कानि सूत्राणीति?
उच्यते—सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ॥ ५०३

---

१. कल्पानां सूत्राणाञ्च भेदो वार्तिके प्रतिपादितः। यथा सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते—इति। तदेवात्र व्याख्यात्रा निर्दिश्यते।

ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ।
कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् ॥ ५०४
सूत्रं तु सूचनात्तेषां स्वयं कल्प्यप्रयोजकम् ।
कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु ॥ ५०५
बौधायनीय-वाराह-माशकादिप्रबन्धवत् ।
स्वसंज्ञापरिभाषाभिर्यदुत्सर्गापवादनम् ॥ ५०६
हेतुदृष्टान्तवत्सूत्रं तल्लक्ष्यव्यापि लक्षणम् ।
आश्वलायनकं सूत्रं[1] बैजवापिकृतं तथा ॥ ५०७
द्राह्यायणीयलाटीयकात्यायनकृतानि च ।

तत्र सकलप्रत्यक्षवेदप्रतिपाद्यक्रतूपयोगोपनिबन्धनादन्तर्हितविप्रकीर्णानुमेयप्रायश्रुतिमूलस्मृतिबन्धनेभ्यो महानेव कल्पसूत्राणां विशेषोऽस्तीति, न तत् तद्गतन्यायं व्यवस्थाप्य प्रामाण्यानि विज्ञायन्ते ।

अप्रामाण्यं स्मृतीनां च यदशब्दतयोदितम् ।
पूर्वपक्षे न तद्वक्तुं कल्पसूत्रेषु शक्यते ॥ ५०८
प्रत्यक्षवेदशब्दत्वात्तदुक्ता नापशब्दता ।
न ह्यत्यन्तानृतं वक्तुं शक्यते पूर्वपक्षिणा ॥ ५०९

स्मृत्यधिकरणे चाप्रमाणत्वं मूलानुपपत्त्या पूर्वपक्षेऽभिधाय, सिद्धान्तेऽनुमितश्रुतिमूलत्वेन प्रामाण्यं स्थापितम् । एतानि च न तत्रोदाहृतानि, पूर्वपक्षहेत्वसंभवात् । न चैषामिह प्रामाण्यप्रतिपादनम्[2] । अतिरिक्तप्रामाण्यापवादप्रतिपादार्हत्वादधिकरणस्य ।

यद्वा भवतु नामैषां तस्मिन्नपि विचारणा ।
तेषां चात्रापि सर्वेषामिति प्रामाण्यवारणा ॥ ५१०

यदि धर्मं प्रति स्मृतीनां प्रामाण्यमभ्युपगम्यते । तथा सति ।

तासामपि हि वेदत्वे तैर्वा तुल्यप्रमाणता ।
स्वातन्त्र्याच्छक्यते वक्तुं न तु मूलानुमानतः ॥ ५११
यद्वा प्रयोगशास्त्रत्वमङ्गानामभिधीयते ।
वेदत्वं वा षडङ्गेऽपि वेदत्वस्मृतिरस्ति हि ॥ ५१२

'मन्त्रब्राह्मणयोर्वेद इति नामधेयम्, षडङ्गमेके' इत्याङ्गान्यपि वेदशब्दवाच्यानि स्मर्यन्ते ।

तस्मात्तान्यपि वेदा[3] वा प्रमाणानि स्वतोऽथ वा ।
प्रतिभान्तीति कर्तव्यमन्यथा प्रतिपादनम् ॥ ५१३

---

१. बैजावापि पु० पा० । २. क प्रामाण्याप्रवि । ३. क. वेदो ।

यद्वा शाक्यादिशास्त्राणां स्मृतिशास्त्रत्ववारणात् ।
वेदशाखासमानत्वमाशङ्क्येह निवार्यते ॥ ५१४

शाक्यादयोऽपि ह्येवं वदन्त्येव । यथा 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवेयं धर्मनित्यता' इति ।

ततश्च वेदवन्नित्यास्तेऽपि चेदागमा मताः ।
चोदनालक्षणो धर्मस्तदुक्तोऽपि प्रसज्यते ॥ ५१५
कामं न प्रविशेद् ग्रामं वारितो दण्डपाणिभिः ।
स्पष्टं महापथेनैव संप्रति प्रविविक्षति ॥ ५१६

एवमेतानि चत्वार्यपि विचारस्थानान्येकमार्गपतितानि कल्पसूत्रविचारेणैव गतप्रायाणि भविष्यन्तीति मन्वानेन तदुपन्यासमात्रमेव क्रियते ।

का गतिः कल्पसूत्राणामित्यस्मिन् संशये सति ।
प्रयोगशास्त्रतां तावत् प्राह स्म त्यक्तसंशयम् ॥ ५१७
वेदत्वं कल्पसूत्राणां न मोक्तव्यं मनागपि ।
यदि वा वेदतुल्यत्वं स्वतन्त्राणां प्रतीयताम् ॥ ५१८
वेदेनैवाभ्यनुज्ञाता धर्मे तेषां प्रमाणता ।
वेदत्वमेव वा सिद्धं संवादादिप्रमाणकम् ॥ ५१९

ननु च पौरुषेयत्वादेषामेतदुभयमप्यनुपपन्नम् ।

नैतेषां पौरुषेयत्वं भविष्यति हि वेदवत् ।
माशकादिसमाख्या हि प्रोक्तत्वात्काठकादिवत् ॥ ५२०

यथैव काठादिप्रोक्ताः शाखाः काठकादिसमाख्ययाऽभिधीयन्त इत्यकृत्रिमाः[1] स्थापिताः तथैव वेदसमाम्नातमशकादिसमाख्यातग्रन्थनियतापि प्रत्येतव्या । यथा सामसूक्तानामिदमस्याऽऽर्यमिदमस्येति सत्यामपि तन्निमित्तायां समाख्यायां न नित्यत्वप्रतिघातः । एवं प्रख्यातर्षिप्रणीकल्पसूत्रग्रन्थानामपि ।

तथा हि—

न तावदनृषिः कश्चित्स्मर्यते कल्पसूत्रकृत् ।
कर्तृत्वं यदृषीणां तु तत्सवं मन्त्रकृत्समम् ॥ ५२१

**यथा शैशवं भवति, शिशुर्वा अङ्गिरसो मन्त्रकृतां मन्त्रकृदासीदित्यत्र** मन्त्रकृच्छब्दः प्रयोक्तरि प्रयुक्तः । एवं तस्य तस्य कल्पस्य, सूत्रस्य वा प्रयोक्तारस्तत्कारित्वेन व्यपदेक्ष्यन्ते । ब्रह्मयज्ञविधाने च 'एवं विद्वान् स्वाध्यायमधीयीत' इत्युक्त्वा तत्प्रपञ्चे 'यदृचोऽधीते, यद्यजूंषि, यत्सामानि, यद् ब्राह्मणानि

१. क. त्यकृत्रिमास्थापिता ।

यदितिहासपुराणानि, यत्कल्पान्' इति तज्जप्यमानत्वेन विधानादार्षत्वमेव विज्ञायते। पुरुषकृतानां जपनिमित्तधर्महेतुत्वेन नित्यविधिविषयत्वासम्भवात्। अरुणपराशरशाखाब्राह्मणस्य च कल्परूपत्वात्सर्वयाज्ञिकैश्च स्वशाखाधीतव्यतिरिक्तकल्पसूत्रकारोपन्यस्तपक्षतुल्यबलत्वाध्यवसानात्कल्पजमन्त्राणां चेतरसमाम्नायाधीतवत्क्रतुविनियोगाश्रयणात् तुल्यत्वम्।

आर्षेयवचनं नित्यपर्यायत्वेन गम्यते।
आर्षेयत्वप्रसिद्धिश्च कल्पसूत्रेष्ववस्थिता ॥ ५२२

**उक्तेऽर्थे सूत्रकारवचनम्**

लाटद्राह्यायणसूत्रकाराभ्यामपि च दृढकल्पप्रामाण्यापेक्षयेदं माशकमपेक्ष्य **'तत्प्रत्यक्षविहितं चाऽऽर्षकल्पेन तत्रानुमानं न विद्यते'** इति ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वमङ्गीकृत्योक्तम्।

**उक्तार्थदार्ढ्याय कात्यायनवचनोपन्यासः**

कात्यायनेन च कृतासामविशेषलक्षणसूत्रप्रणयनप्रक्रमेऽभिहितं यज्ञविषयब्राह्मणगतस्तोत्रविधिवाक्यशेषे यथा 'माशकमुपलक्षणं तत्प्रामाण्यात्करिष्यते, न तन्निरपेक्षशुद्धब्राह्मणप्रामाण्यादि'ति। तथा च प्रायणीयाग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह वैकल्पिकं जराबोधीयमग्निष्टोमसाम कार्यमिति पञ्चविंशब्राह्मणेऽभिहितमपि, माशकानुवृत्त्या कात्यायनेनाऽऽर्भवीयगायत्रतृतीयत्वेन जरासादिति लक्षितम्। आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नो हि तेन सामिति संज्ञा कृता। तस्माच्च परत्वेन पदैकदेशप्रयोगेण जराबोधीयमुक्तं **ढेशब्देन** च ज्यौतिष्टोमिकाग्निष्टोमसामसंज्ञाभूतेन यज्ञायज्ञीयमेवाग्निष्टोमसामत्वेन नियतम्। यदि च कल्पाद् ब्राह्मणमतिरिक्तं कात्यायनोऽमंस्यत, ततः प्रत्यक्षब्राह्मणदृष्टं विकल्पमेवावक्ष्यत्।

बहुवेदगतन्यायविवेकज्ञो यदब्रवीत्।
कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः ॥ ५२३
आचार्यवचनानां च प्रामाण्यं श्रूयते श्रुतौ।
अङ्गानां च प्रणेतार आचार्या ऋषयो मताः ॥ ५२४
यथा च सर्वशाखानां संवादात्तुल्यकल्पता।
तथैव कल्पसूत्राणामिति प्रामाण्यतुल्यता ॥ ५२५

यान्यप्यप्रत्ययितपुरुषवचनानि प्रमाणान्तरसङ्गतार्थानि भवन्ति, तान्यपि सत्यत्वेनावधार्यन्ते, किमङ्ग पुनः सत्यवाचां वचनानि ?

सत्यवाचां च वाक्यानि वैदिकैः सङ्गतानि च।
ज्ञातसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ॥ ५२६

अपि च—वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात् ॥ ५२७

तुल्यं च साम्प्रदायिकम्, स्वाध्यायाध्ययनविधिवचनं प्राग्दर्शितम् कल्पग्रहणात् ।

अथ वा संप्रदातॄणामध्येतॄणां च यादृशः ।
मन्त्रब्राह्मणयोर्यत्नः कल्पसूत्रेषु तादृशः ॥ ५२८

[1]अनुयोगेषु वेदानां घटिकामार्गवृत्तिषु ।
न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता ॥ ५२९

तस्मात्कर्मप्रयोगाणां शास्त्रमेतदतिस्फुटम् ।
वेदो वा वेदतुल्यं वा कल्पसूत्राद्यसंशयम् ॥ ५३०

एतेन धर्मशास्त्राणामङ्गानां चापि वेदता[2] ।
तत्तुल्यताऽपि वा वाच्या सर्वेषां सर्वहेतुभिः ॥ ५३१

धर्मशास्त्रपदं येषु सर्वकालं प्रयुज्यते ।
प्रयोगशास्त्रतां तेषां वेदज्ञः को हरिष्यति ॥ ५३२

अपि चाङ्गानि वेदाश्च धर्मशास्त्रं च तुल्यवत् ।
विद्यास्थानानि गण्यन्ते सर्वदा वेदवादिभिः ॥ ५३३

किं च—कर्मणां ब्राह्मणोक्तानां यथा मन्त्राः प्रकाशकाः ।
अष्टकापार्वणादीनां दृश्यन्ते ते तथैव हि ॥ ५३४

तथाऽवकीर्णियागादि कृच्छ्रचान्द्रायणादि वा ।
वेदमन्त्रप्रकाश्यं तत्स्यात् कथमवैदिकम् ॥ ५३५

सिद्धवद्विशिखत्वादि यच्च मन्त्रैरनूद्यते ।
चौलोपनयनप्राप्तं तत्स्यात्कथमवैदिकम् ॥ ५३६

एवं च वेदमूलत्वं किमेषामनुमीयते ।
संभवत्येव वेदत्वे नित्यत्वे चापि तत्समे ॥ ५३७

वेदं हि कल्पयित्वैभ्यः पुनस्तस्यापि नित्यता ।
वक्तव्यैव वरं तेन सा तेष्वेवावधारिता ॥ ५३८

---

१. वेदकौशलजिज्ञासार्थं तत्तद्वेदभागचिह्नलेख्यानि घटिकायां कुम्भाख्यायां निक्षिप्य तत्तद्वेदभागपरीक्षाकाले ताभ्याकृष्य आकृष्टलेख्यचिह्नितं पठन्त्यध्येतारो न युञ्जत इति वटिकामार्गवर्तिनोऽनुयोगाः इति ।

२. (क) देवता ( अयं प्रामादिकः पाठः )

सिद्धानां नित्यतैवैका सुबोधा वेदताऽपि वा ।
असंशयितवेदार्थविषयत्वात्प्रकल्प्यते ।। ५३९
तस्माद्वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः ।
न तत्कृतकतां लब्ध्वा लभते नित्यमूलताम् ।। ५४०

यान्येव धर्मशास्त्राणां मूलवाक्यानि मन्यसे ।
तान्येवैतानि पठ्यन्त इत्येतत्कल्पितं वरम् ।। ५४१

मन्वादिभिरवश्यं च स्वग्रन्थप्रतिपादने ।
तान्युपन्यसनीयानि शिष्याणां वेदवादिनाम् ।। ५४२
तेन तान्येव तैरेभ्यः संप्रत्तानीति गम्यते ।
के हि तेषूपलब्धेषु गृह्णीयुः प्रतिकञ्चुकान् ।। ५४३
यथा च धर्मशास्त्राणां नाद्यत्वे प्रतिकञ्चुकाः ।
ग्राह्यास्तथा पुराऽप्यासन्न वेदप्रतिकञ्चुकाः ।। ५४४
सम्प्रदायविनाशाच्चेद्भीतेस्तदसमर्पणम् ।
मन्वादिष्वनुमीयेत स्वग्रन्थाकरणं तथा ।। ५४५
वेदवाक्यार्पणं येषां खण्डशो नाभिसंमतम् ।
स्वग्रन्थकरणं तेषां वेदस्थाने कथं भवेत् ।। ५४६
वेदादेव च विज्ञातो वेदार्थः साधयेत्फलम् ।
नान्यस्मात्पुरुषग्रन्थान्मन्त्राभासात्स्मृतो यथा ।। ५४७

कृता मन्वादिभिर्यद्वन्न मन्त्रप्रतिकञ्चुकाः ।
न ह्येतेन स्मृतं कर्म सिध्यतीत्यवधारणात् ।। ५४८
तथैव तैर्न कर्तव्या ब्राह्मणप्रतिकञ्चुकाः ।
नावेदविहितं कर्म फलतीति हि निश्चितम् ।। ५४९
न चैर्भिभिन्नदेशस्थवेदवाक्यसमुच्चयः ।
कृत इत्यवगन्तव्यमीदृक् ग्रन्थावधारणात् ।। ५५०
ईदृगेवं क्रमश्चायं वेदग्रन्थ इतीदृशी ।
युज्यते हि मतिः कर्तुं न मूलान्तरकल्पना ।। ५५१
तेन प्रयोगशास्त्रत्वं तदैवाऽऽपतितं बलात् ।
धर्मं प्रत्यप्रमाणत्वं यदैवैषां न संमतम् ।। ५५२
चोदनालक्षणे धर्मे पूर्वमेवावधारिते ।
अवेदस्य प्रमाणत्वं ब्राह्मणस्यापि नेष्यते ।। ५५३
तेनैषां धर्मशास्त्राणां न वा धर्मोपयोगिता ।
वेदता वाऽभ्युपेतव्या गतिर्नास्त्यान्तरालिकी ।। ५५४

वदन्ति धर्ममेतानि चोदना गमयन्ति च ।
अशक्यमीदृशं वक्तुं यावदुक्तप्रमाणकैः ॥ ५५५

उक्तमर्थं परित्यज्य यदनुक्तं प्रतीयते ।
अनुक्तेन च सोऽप्यर्थं इति किं नोपपद्यते ॥ ५५६

तस्माद्धर्मप्रयोगस्य साक्षादुक्तस्य तत्स्वयम् ।
प्रमाणं धर्मशास्त्रं स्यान्न वेदव्यवधानवत्[1] ॥ ५५७

शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते ।

**शाक्यग्रन्थानां वेदवत्स्वातन्त्र्येण प्रमाण्यमितिपक्षः**

धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ॥ ५५९

येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते ।
न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥ ५५९

बोधकत्वात्प्रमाणत्वं स्वतस्तस्यापि लभ्यते ।
न च संदिह्यते बुद्धिर्न विपर्ययते क्वचित् ॥ ५६०

अकर्तृकतया नापि कर्तृदोषेण दुष्यति ।
वेदवद् बुद्धवाक्यादिकर्तृस्मरणवर्जनात् ॥ ५६१

बुद्धवाक्यसमाख्याऽपि प्रवक्तृत्वनिबन्धना ।
तद्द्रष्टृत्वनिमित्ता वा काठकाङ्गिरसादिवत् ॥ ५६२

यावदेवोदितं किंचिद्वेदप्रामाण्यसिद्धये ।
तत्सर्वं बुद्धवाक्यानामतिदेशेन गम्यते ॥ ५६३

तेन प्रयोगशास्त्रत्वं यथा वेदस्य संमतम् ।
तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥ इति ॥ ११ ॥ ५६४

न्या० सु०—अनुमानादित्यादिभाष्यात्स्मृत्याचाराणां किं व्यवस्थया प्रामाण्यमव्यवस्थया वेति चिन्ता प्रतिभाति । तत्र प्रमाणस्य तावदालोकवत्सर्वपुरुषसाधारण्यान्न व्यवस्थाशङ्कोपपत्तिमती । अथ स्मृत्याचारमूलभूता श्रुतिः किं व्यवस्थितविषया सर्वविषया वेत्यभिप्रायः । तथाऽप्यष्टकादिस्मृतीनां प्रदीपाद्याचाराणां च व्यवस्थितविषयमूलाशङ्का निर्बीजैव मूलविशेषविषयचिन्तात्वाच्च स्मृत्यधिकरणानन्तरं सङ्गच्छेत । तस्माद्धोलाकादयः प्राच्यैरेवेत्यादिभाष्यात्त्वधिकारिव्यवस्था सदसद्भावाचिन्ता । सा च प्रमाणेन लक्षणेन सङ्गतेत्याशङ्क्याह—देशधर्मानिति ।

---

१. व्यवधानतः पु० पाठः ।

व्यवस्थिताव्यवस्थितमूलचिन्तैवेयमधिकारव्यवस्था सदसद्भावप्रयोजनेत्याशयः। सा च देशाचारमात्रविषया, न सर्वस्मृत्याचारविषयेति देशधर्मानित्यत्वेनोक्तम्। पूर्वाधिकरणे च स्वातन्त्र्यनिराकरणेन वेदमूलत्वे दृढीकृते तद्विशेषविचार इति सम्प्रतिशब्देनोक्तम्। तत्र किं कल्पकानामाचाराणां व्यवस्थादर्शनात्तदनुसारेण व्यवस्थितिविषयमेव मूलं कल्प्यम्, व्यवस्थितमूलासम्भवाद्वा तदनुसारेणाचाराणां सर्वधर्मता कल्प्येति। कल्प्यकल्पकविप्रतिपत्तेः सन्देहकारणत्वं दर्शयितुमप्रतियोगिभूतवचनव्यक्तिद्वयोपन्यासः।

नन्वनुष्ठेयानामेव भाष्यकृतोदाहृतत्वात्कथमविशेषेण देशधर्माणामुदाहरणत्वमुक्तमित्याशङ्क्योपलक्षणार्थं भाष्यमित्याह—**विध्यर्थेति**। विषयवचनोऽर्थशब्दः। विधिनिषेधयोराचारकल्पकत्वात्के विधिविषयभूताः, के वा निषेधविषयभूता इति कथं ज्ञेयमित्यपेक्षायां क्रियेत्युक्तम्। करणं विधिविषयचिह्नं वर्जनं निषेधविषयचिह्नमित्यर्थः। एतदेव प्रपञ्चयति—**प्राच्या इति**।

नन्वाचाराणामेवोदाहरणत्वे स्मृतेराचाराणां चेति भाष्ये स्मृतिग्रहणमनर्थकं स्यादित्याशङ्क्याह—**आद्येति**। सूत्रान्तराणां देशाचारमात्रविषयत्वात्सर्वसूत्रव्यापिविचारविषयप्रदर्शनार्थं देशधर्मानित्युक्तमित्याशयः। सूत्रशब्दो धर्मशास्त्रविषयः। सर्वेषां गृह्याणां गौतमादिप्रणीतानां च धर्मशास्त्राणां किं व्यवस्था, उत सर्वगामितेत्यर्थः। एतदपि प्रपञ्चयति—**पुराणेति**। प्रामाण्यस्यानुष्ठातृननुष्ठातॄंश्च प्रति साधारण्याद्ग्राह्यत्वाभिप्रायः प्रामाणशब्दः। किं यानि यैः पठ्यन्ते तानि तैरेव ग्राह्याणि, उत सर्वाणि सर्वैरित्यर्थः। इह च नानागृह्यविहितानामपि स्थालीपाकादीनां शाखान्तरन्यायेनाभेदात्तदङ्गानामपि व्यवस्थानुपपत्तेः पूर्वपक्षेऽपि सर्वधर्मत्वावधारणाद्यदेव किंचित्पुरुषधर्मत्वेन गृह्यादौ क्वचिदेव विहितम्, तदेव पूर्वपक्षे व्यवस्थयानुष्ठेयम्। यथा कपालं भगालमिति ब्रूयादिति गौतमीये पूर्वपक्षच्छन्दागतं वाऽनुष्ठेयं सिद्धान्तच्छन्दागतं वा। उपनयनोपाकरणादीनां वेदाध्ययनाङ्गतत्तच्छाखाध्ययनानुग्राहकोपकारभेदसिद्धयर्थेतिकर्त्तव्यताभेदापेक्षोपपत्तेः।

'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥'

इत्यादिवचनानां चात्यन्तानर्थक्यापत्तेः। सिद्धान्तेऽपि सर्वधर्मत्वान्नोदाहरणत्वमनुमानादित्यादिपूर्वपक्षसूत्रव्याख्यानार्थं भाष्यं व्यवस्थितविषयमूलप्रतिपादनपरत्वेन व्याचष्टे—**किं तावदिति**। किं व्यवस्थितमूला इति सन्देहावसरे पूर्वपक्षवचनव्यक्त्युपन्यासात्स्मृत्याचारमूलानां व्यवस्थितविषयत्वेन व्यवस्था पूर्वपक्षार्थः। पाठग्रहणेनाचारोऽप्युपलक्षितः। पाठादाचाराद्वा व्यवस्थिताद्व्यवस्थितविषयैव श्रुतिः कल्प्येतेत्यर्थः। अनेन चानुमापकस्य कल्पकस्य पाठस्याचारस्य वा व्यावस्थानाद्व्यवस्थितविषयोपपदसंयुक्तं मूलप्रमाणं स्यादिति सूत्रं योजितं भवति।

ननु मूलश्रुत्यनुमानेन स्मृत्याचारप्रामाण्याद्येनैव श्रुत्यनुमानेन हेतुना स्मृत्याचाराः प्रमाणं तेनैव व्यवस्थितविषयश्रुत्यनुमानेन हेतुना व्यवस्थितविषयमेव स्मृत्याचार-

प्रामाण्यमिति वदता भाष्यकृता व्यवस्थितविषयमूलत्वस्यैव स्मृत्याचारप्रामाण्यव्यवस्थायां हेतुत्वाभिधानाद्विपरीतहेतुमद्भावाभिधानं भाष्यविरुद्धं स्यादित्याशङ्क्याह—अनुमीयतेऽनेनेति । मूलव्यवस्थायाः कल्पकत्वेन हेतुत्वायोगात्प्रामाण्यस्य च सर्वपुरुषसाधारण्याद् व्यवस्थानुपपत्तेर्नेदं व्यवस्थितमूलत्वेन स्मृत्याचाराणां धर्माधर्मौ प्रति व्यवस्थितप्रामाण्यप्रतिपादनपरं भाष्यं किं तु व्यस्थितत्वाद् व्यवस्थितविषयामेव श्रुतिं प्रति प्रामण्याप्रतिपादनपरमिति भावः । तेनैवं भाष्यं योज्यम् । अनुमापकत्वेन स्मृत्याचाराणां मूलं प्रति प्रामाण्याद्येनैवान्यथानुपपत्तिलक्षणेन हेतुना तेषां मूलश्रुतिं प्रति प्रामाण्यम्, तेनैव व्यवस्थितत्वात्तादृशीमेव प्रति प्रामाण्यमिति । कल्पकाभिप्रायो वार्त्तिके लिङ्गशब्दः । व्यवस्थितस्य स्मृत्याचाररूपस्य कल्पकस्य व्यस्थितविषयश्रुतिकल्पकत्वौचित्यमुक्त्वा दृष्टान्तद्वारेण प्रकृते योजयति—तच्चेति । श्लोकं व्याचष्टे—ग्रन्थेति । न चादृष्टधूमैरिति दृष्टान्ततयोक्तम् । यथा नादृष्टस्य लिङ्गत्वम् । एवमपक्षधर्मस्यापीत्यर्थः । ननु लिङ्गस्य पक्षधर्मत्वेन गमकत्वाद् व्यवस्थितलिङ्गानुमापकत्वं युक्तम् । स्मृत्याचाराणां त्वनुपपत्त्या कल्पकत्वात्तस्याश्च तद्विषयश्रुतिकल्पनमात्रेण परिहारान्नियतकर्तृकल्पना निष्प्रमाणिकेत्याशङ्क्याह—यथेति । यथाग्निहोत्रादीनां नियतकर्तृकाधानोपनयनमन्यानि विद्यासाधनकत्वान्यथानुपपत्त्या नियतविषयत्वं कल्पितम् । तथात्रापि नियतकर्तृविषयश्रुतिकल्पनं विना नियतकर्तृत्वानुपपत्तेर्नियतकर्तृविषयैव श्रुतिः कल्प्येत्याशयः । दृष्टं च केषांचित्स्मृत्याचाराणां नियतकर्तृविषयश्रुतिकल्पकत्वमिति प्रतिपादनार्थं यथेति भाष्यं व्याचष्टे—यथा चेति । जातयो ब्राह्मणाद्याः तद्भेदा गोत्रचरणानि । तदवान्तरभेदाः कुलानि । ननु तत्र जात्यादिवाचकोपपदसम्भवाद् व्यवस्था युक्ता, होलाकाद्यनुष्ठातृवाचकोपपदासम्भवान्नेह व्यवस्था युक्तेत्याशङ्क्याह—यदि स्यादिति । अत्राप्यनुपपत्त्या किंचिदुपपदं कल्प्यमिति भावः ।

एवं व्यवस्थितविषयोपपदरहितश्रुतिकल्पनमात्रेणानुपपत्तेरपरिहारादुपपदमपि कल्प्यमित्युक्तम् । इदानीं सर्वविषयश्रुतिकल्पने प्रमाणमेव नास्तीत्याह—अन्यथेति । श्लोकं व्याचष्टे—यस्मादिति । व्यवस्थितविषयस्य नियतश्रुतिकल्पकत्वं दृष्टान्तेनोपपादयति—तथा चेति । अनुमानशब्दस्य स्मृत्याचारविषयत्वम् प्रमाणशब्दस्य च श्रुतिविषयत्वं दर्शयन्पूर्वपक्षमुपसंहरति—अनुमानेति ।

अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्येति सिद्धान्तसूत्रं व्याचष्टे—अपि चेति । तस्य सर्वधर्मत्वस्योपपादको न्यायो विधेः सर्वविषयत्वं यस्मिन्कल्पे विधाने विधायके वाक्येऽस्ति । तत्तन्न्यायं तस्य भावस्तन्न्यायत्वम् । कथं कल्पके विधायके वाक्ये सर्वविषयविधित्वन्याय इत्यपेक्षायाम्—शक्तेत्युक्तम् । यस्माच्छक्तमात्रं पुरुषं विधायकवाक्यमधिकरोति, नातिरिक्तं विशेषणमपेक्षते । तस्मात्तस्य सर्वविषयविधित्वं न्याय्यमित्यर्थः ।

ननु कर्तृविषयज्ञानं विना नैराकाङ्क्ष्याभावात्कथं विधेः प्रवृत्तिरित्याशङ्क्य साध्यसाधनेतिकर्त्तव्यताविशिष्टभावनाविधानमात्रेण भावनाक्षेपादेव तन्निष्पादनसमर्थकर्त्रवगम-

सिद्धेर्नैराकाङ्क्ष्यं वक्तुं यावता विना नैराकाङ्क्ष्यं न भवति तावद्दर्शयति—इहेति। भावना च नाम विशेषणव्यवच्छिन्नो यागादिधात्वर्थविशेषश्च स्वर्गादिफलं च द्रव्यदेवतादिकारकं च यावद्दृष्टेतिकर्त्तव्यता च। तद्विधायको विधिश्च श्रुतिष्वनुमीयमानास्वनुमीयत इत्यन्वयः। अवश्यमित्येतावतामनुमाने कारणत्वमुक्तम्। तदेव कुत इत्यपेक्षायाम्—कारणानुविधायीत्युक्तम्। कारणात्तथाविधत्वं विना कार्यतथाविधत्वानुपपत्तिः। कार्यानुरूपकारणानुमाने हेतुरित्यर्थः। निषेधे कियता नैराकाङ्क्ष्यमित्यपेक्षायामाह—एवमिति। नन्वेतावत्यनुमितेऽपि निरधिकारयोर्विधिनिषेधयोरप्रवृत्तेरधिकारिविशेषोपादानं विना नैराकाङ्क्ष्यं न सम्भवतीत्याशङ्क्याह—तावता चेति। अशक्यविधानानुपपत्तेरसमर्थव्यावृत्त्यवगमाच्छक्तमात्रस्य कर्तृत्वावधारणात्कर्तृत्वस्य चाधिकारं विनानुपपत्तेः। कर्तृविशेषेणैवाधिकारिविशेषावधारणसिद्धेर्न होलादौ दिग्देशपरिच्छिन्नस्यैव कर्तृविशेषस्याधिकार इति नियता प्रतिपत्तिर्लभ्यत इत्यर्थः।

ननु शक्तस्यापि विधिमन्त्रेणाप्रवृत्तेस्तस्य चात्राचारकल्पकत्वात्तदानुरूप्येण दिग्देशपरिच्छिन्नकर्तृविशेषविषयत्वप्रतीतेः कथं तन्निराकरणमित्यभिप्रायेण पृच्छति—कुत इति। उत्तरमाह—त्रिधैवेति। स्वर्गकामो यजेतेत्यविशेषश्रवणेऽप्यग्निविद्यारहितत्वेनायोग्यस्य शूद्रादेः कर्तृत्वासम्भवाद्योग्यत्वेन त्रैवर्णिकः कर्त्ता विशेषरूपेण ज्ञायते 'पतितषण्ढयोर्द्विजातिकर्मभ्यो हानिरि'ति निषेधात्तद्वर्जितो प्रविषिद्धत्वेन ज्ञायते। 'राजा राजसूयेन यजेतेति विशेषापादकत्वे येन क्षत्रियः कर्त्ता विशेषरूपेण ज्ञायते। न त्विहैषां मध्ये किंचिद्दिग्देशपरिछिन्नकर्तृविशेषज्ञानकारणमस्तीत्याशयः। यत्र योग्यत्वस्य तावदविशिष्टत्वान्न दिग्देशपरिच्छिन्नकर्तृविशेषज्ञानकारणतास्तीत्याह—तविहेति। श्रावयेच्चतुरो वर्णानित्यादिश्रुतिपर्यालोचनया शूद्राणामपि वैदिकमन्त्ररहितेषु स्मृत्याचारप्राप्तेषु कर्मस्वधिकारोऽस्तीति, समस्तशब्देनोक्तम्। सर्वधर्मबहिष्कृतत्वस्मृत्या म्लेच्छानां धर्मानधिकारावगमादार्यवर्त्तनिवासिग्रहणम्। निषेधाधिकारे त्वविशेषात्सर्वाधिकारोपपत्तेराचारकल्प्यत्वाद्विधेयस्याचारस्य यावद्भिर्वर्णैराश्रमिभिर्म्लेच्छादिभिर्वानुष्ठानं दृश्यते, तावतां तस्मिन्नाचारेऽधिकार इति प्रतिपादनायानवक्लृप्तिरुक्ता।

अप्रतिषिद्धत्वस्य कर्तृविशेषज्ञानकारणत्वं पूर्वोपन्यस्तमप्युपपदनिराकरणाधीननिराकरणत्वादुपेक्ष्योपपदं तावन्निराकरोति—न त्वत्रेति। यथा चात्र यः कर्तृविशेषः कल्पः, तद्वाचकत्वेन तदनुसारि यदुपपदमनुमीयते, तन्न सम्भवतीत्यर्थः। प्राच्याद्युपपदशङ्कानिराकरणार्थम्—देशश्चेत्युक्तम्। गृह्यादौ त्वाचारशब्दपाठोपलक्षणार्थमङ्गीकृत्य नात्र गृह्यगौतमीयादौ यथापाठम्, छन्दोगादिकर्तृविशेषानुसार्युपपदं किंचिदुपात्तं यत् तन्मूलभूतायां श्रुतावनुमीयेतेति योज्यम्। प्रतिषेध्यवाच्युपपदासम्भवेनाप्रतिषिद्धत्वमपि कर्तृविशेषज्ञानकारणं नेह सम्भवतीत्याह— येऽपि चेति।

आचारानुरूपकर्तृविशेषवाच्युपपदासम्भवं न तस्याकृतिवचनतेति भाष्योक्तेन मार्गेणोपपादयितुमुपक्रमते—योग्यत्वेनेति। प्रश्नपूर्वकमुपपादयति—कुत इति। श्लोकं

व्याख्यातुमाकृतिवाच्युपपदासम्भवं तावत्प्रपञ्चयति—न तावदिति। व्यक्तिवाच्युपपदासम्भवं प्रपञ्चयति—व्यक्तिवाचि त्विति। एतदेवोपपादयति—न हीति। नन्वनन्तभेदानामपि पुरुषव्यक्तीनां शुक्लो होतेतिवदेकेन केनचिद् गुणेनेष्टव्यो विविक्ते इतिवद्वा कयाचिदेकया क्रिययोपलक्षितानामेकमभिधानमवकल्पिष्यत इत्याशङ्क्याह—एतेनेति। आचारानुरूपविशेषणानुपपत्तिरेतच्छब्देन परामृष्टा। गुणस्य क्रियाया वा विशेषरूपेणानेकपुरुषव्यक्त्युपलक्षणशक्त्यसम्भवाज्जातिग्रहणम्। एतदेवोपपादयति-न हीति। ननु व्यक्त्याकृतिवाच्युपपदासम्भवेऽप्यर्थान्तरवाचि किञ्चिद्भविष्यतीत्याशङ्क्याह–व्यक्तीति। "उक्तेऽर्थे न तस्याकृतिवचनतेति भाष्यं योजयति—एतदेवेति। विधानपरामर्शिनस्तच्छब्दात्परा षष्ठी विधानविशेषणार्थोपपदव्यतिरेकजनितेत्याशयः।

विधानविशेषणार्थस्योपपदस्य व्यक्त्याकृतिवचनत्वासम्भवेनोपपादनार्थं—न चेति भाष्यम्। हि शब्दार्थे च शब्दमङ्गीकृत्य व्याचष्टे—न हीति। व्यक्तिवाचित्वनिराकरणेऽनुष्ठातृविशेषाणां यदेकं सामान्यं साधारणमुपलक्षणं न तन्निमित्तानुष्ठातृविशेषाणां वाचकोऽस्तीति तस्योपलक्षणार्थत्वेन सर्वेषां शब्द इति शब्दव्यतिरेकजनितषष्ठ्यङ्गीकरणेन योज्यम्।

नन्वर्जितपाठान्तरमाकृतिवाच्युपपदासम्भवादयुक्तमाशङ्क्योपन्यासपूर्वकं व्याचष्टे–केषाञ्चित्त्विति। स्वर्गकामो यजेतेत्याख्यातोपात्तभावनाक्षिप्तकर्तृविशेषणोपादेयार्थे स्वर्गकामपदे पुंल्लिङ्गनिर्देशात्स्त्रिया नाधिकार इति पूर्वपक्षं कृत्वा, कर्तृविशेणत्वेनाप्यन्वितस्य स्वर्गकामस्य विध्यन्यथानुपपत्त्या प्राधान्यावगतेरुद्देश्यत्वाद्विशेषणाविवक्षेति षष्ठे सिद्धान्तयितुम्, यथा विशेषणाविवक्षाभिप्रायेण जातिशब्दः प्रयुक्त इति। नैव वयं ब्रूमो जातिवचन इह शब्दोऽधिकारक इति। किं तर्हि। स्वर्गकामशब्देनोभावपि स्त्रीपुंसावधिक्रियेते इत्यविक्षितं पुंल्लिङ्गमिति भाष्ये वक्ष्यते। तथात्रापि विशेषणाविवक्षाभिप्रायेणाकृतिशब्दः प्रयुक्त इत्यर्थः। अस्मिंश्च पाठे ननु दिग्देशपरिच्छिन्नकर्तृविशेषमात्रवर्त्यवान्तरजातिवाच्ये च तर्ह्युपपदं कल्पयिष्यत इत्याशङ्कानिराकरणार्थत्वेन न चेति भाष्यं स्वार्थचशब्दकं योज्यम्।

पूर्वस्मिन्नेव पाठे वैयाकरणगन्धिनो मीमांसकस्य व्याख्यानं दूषयितुमुपन्यस्यति—कश्चित्पुनरिति। शब्दान्तरानाख्येयार्थत्वेनाख्यातशब्दमनेन भाष्येणोपवर्णयन्नेवमाहेत्यन्वयः। किमाहेत्यपेक्षिते भावइति तदीयो ग्रन्थः पठितः। तस्यार्थो भावाख्यो यो लिङ्गाद्यर्थः। सोऽतो लिङ्गादिशब्दजनिताद्धानादन्येन शब्दान्तरजनितेन ज्ञानेनानाख्येयः। तृतीयान्तमन्यदित्यव्ययम्। भावादिशब्दैराख्यातदर्शनाच्छब्दान्तरानाख्येयत्वानुपपत्तिमाशङ्क्य स्वधर्मेण पूर्वापरीभावेन कालत्रयासंसृष्टत्वेन लिङ्गसम्बन्धायोग्यत्वेन च शब्दान्तरेण—नाख्यायत इत्युक्तम्।

यद्वा शब्दान्तरानाख्येयत्वकारणम्—स्वधर्मेणेत्यनेनोक्तम्। शब्दान्तरेण ह्याख्यायमानोऽर्थः सामान्यरूपेण विशेषरूपेण व्याख्यायते। न च लिङ्गाद्यर्थस्य सामान्यरूपता,

विशेषरूपता वा स्वधर्मः। तस्याव्यपदेश्यत्वेनानुवृत्तिव्यावृत्तिप्रत्ययगोचरत्वाभावादित्याशयः। यथा कारकं क्रियायां व्याप्रियमाणत्वरूपेण स्वधर्मेण द्वितीयादिविभक्तितोऽन्येन शब्देन नाख्यायते, यथा भावोऽनाख्यातादन्येन शब्देन स्वधर्मेणाख्यायत इति दृष्टान्तार्थः। नन्वाकृतिवचनत्वस्यात्र न्याय्यत्वाभिधनात्तस्याश्च सत्त्वरूपत्वेन शब्दान्तरैराख्यातुं शक्यत्वान्नेदं भाष्यं शब्दान्तराख्येयत्वनिराकरणसमर्थमित्याशङ्क्येममित्युक्तम्। ननु पूर्वपाठेऽप्युक्तेन प्रकारेणोपपदस्याव्यक्त्याकृतिवाचित्व–निराकरणप्रतीतेर्नाख्यातार्थोपवर्णन–सामर्थ्यमित्या – शङ्क्य—सूत्रेत्युक्तम्। सूत्रगतस्याख्यातावाचिनो विधानशब्दस्य यावच्छ्रुतस्य स्वसम्बन्ध्युपपदप्रतिपादनानपेक्षस्य व्याख्येयत्वेन प्रकृतत्वान्न तस्य विधायकस्याख्यातस्य कर्तृविशेषव्यवस्थापकव्यक्त्याकृतिवचनता न्याय्या। न चान्योऽपि कश्चिच्छब्द; सर्वेषामनुष्ठातॄणां व्यवस्थापकस्य सामान्यस्य वाचकोऽस्तीति भाष्यार्थभ्रान्तिर्जायत इत्यर्थः। सूत्रगतेन यावच्छ्रुतेन विधानशब्देन जनिता भ्रान्तिर्यस्येति विग्रहः। नन्वेववमपि विधायकाख्यातार्थस्य विधेः शब्दान्तरानाख्येयत्वं वाच्यं न भावाशब्दाभिधेयाया भावनाया इत्याशङ्क्य—विधीत्युक्तम्।

ननु भावार्थाधिकरणे 'यज्याद्यर्थश्चातोऽवगम्यते, भावयेदिति चेति' भाष्ये विध्यर्थातिरिक्तभावनाव्युत्पादनादभेदाङ्गीकरणं न युक्तमित्याशङ्क्योभयेत्युक्तम्। क्रियारूपत्वे भावनाया धात्वर्थादभेदापत्तेः कार्यरूपता वाच्या। ततश्च कार्यरूपाद्विधेर्विलक्षणं कीदृशं तस्याः स्वरूपमिति निरूपणीयमित्येवंरूपात्पर्यनुयोगः तेन भावार्थाधिकरणसिद्धान्तो नाशित इत्यर्थः। नन्वेवं सति को लिङाद्यर्थ इति पृष्टे कीदृशमुत्तरं देयमित्याशङ्क्याह — तेनेति। आख्यातशब्दो लिङाद्यभिप्रायः। भावनाशब्दो विध्यभिप्रायः तं प्रति कुर्याच्छब्द उत्तरं दास्यत इत्यन्वयः। यथा कः पिक इति पृष्टे कोकिल इत्युत्तरं दीयते। तथा को विधिरिति पृष्टे कुर्यादित्युत्तरं देयमित्यर्थः। ननु करोतेः क्रियासामान्यवाचित्वात् तदर्थस्य शब्दान्तराख्येयत्वं प्रसज्येतेत्याशङ्क्य लिङादीत्युक्तम्। करोत्युच्चारणं तर्हि किमर्थमित्याशङ्क्य—केवलेत्युक्तम्। ननु धात्वन्तरेण प्रत्ययानुग्रहसिद्धेः करोतिनियमः किमर्थं इत्याशङ्क्य—सर्वेत्युक्तम्। सर्वविधिव्याप्त्यर्थः करोतिप्रयोग इत्याशयः। शब्दान्तरानाख्येयत्वे कोपपत्तिरित्यपेक्षायां भाष्योक्तामेवोपपत्तिमाह—सर्वश्चेति। अत्रैव भाष्यं योजयति—तदेव चेति। किलेत्यपारमार्थिकत्वं द्योतितम्। विधानेत्यादिना भाष्यस्य सामर्थ्यं दर्शितम्।

व्यक्त्याकृतिवचनत्वाभावमुपपादयति—कुर्यादिति। करोतीति कार्यतामात्रं प्रपद्यतेऽङ्गीकरोति, न तु विधेः सामान्यरूपतां, व्यक्तिरूपतां वाऽवगच्छतीत्यर्थः। विध्यतिरिक्तभावनावादिमते तस्या अपि विधायकाख्यातात्कार्यतया च प्रतीतेः, सिद्धरूपत्वाभावेनानुवृत्तिव्यावृत्तिप्रत्ययगोचरत्वासम्भवात्सामान्यविशेषरूपत्वप्रतीत्यसम्भवं दर्शयितुम्–भावनाया वेत्युक्तम्। दूषयति—तदिदमिति। तदिदमन्यार्थमेव सदन्यस्मिन्नेवार्थे योजितमित्यन्वयः। किमर्थमित्यपेक्षायाम् भाष्यकारेत्युक्तम्। अयमेवाभिप्रायः कस्माद्भाष्यकृतोऽभिप्रेतो न

भवतीत्याशङ्कच—असम्बद्धत्वानुपपत्तिकत्वाभ्यामित्युक्तम् । कथं तर्ह्यत्र योजितमित्यपेक्षिते—श्रुतीत्युक्तम् । यथा 'चत्वारि शृङ्गेति मन्त्रो विषुवति होतुराज्ये विनियोगादादित्यरूपेणाग्नेः स्तुत्यर्थोऽन्यत्रापि विनियोगादादित्यरूपेणाग्नेः स्तुत्यर्थोऽन्यत्रापि विनियोगाद्यज्ञमात्रस्तुत्यर्थः ।

वैयाकरणैर्नामाख्यातोपसर्गनिपाताः शब्दा ब्रह्मणः चत्वारि शृङ्गेति । भूतभविष्यद्वर्त्तमानकालवाचिनः प्रत्यया उदात्तानुदात्तस्वरिता वा स्वरास्त्रयः पादाः । वर्ण-नादात्मकौ शब्दौ । प्रकृति-प्रत्ययौ च द्वे शीर्षे । नामिक्यो विभक्तयः सप्त हस्ताः । उरःकण्ठशिराश्च नाभ्युरःकण्ठेषु वा त्रिधा बद्धः स्वर्गादिसाधनकर्मविधानद्वारेण वर्षणाद् वृषभः शब्दात्मकत्वाद्रोरवीति सर्वगतत्वान्महत्सर्वव्यवहारसाधनत्वादेव मनुष्यै रुच्चार्यमाणत्वान्मर्त्यानाविवेशेति नियोगानपेक्षेण श्रुतिसामान्यमात्रेण शब्दप्रतिपादनरूपेऽर्थे योजित इति दृष्टान्तार्थः ।

कथं पूर्वोक्तस्यार्थस्य भाष्यकारानभिप्रेतत्वमित्याशङ्कचाह—देशेति । परव्याख्यानस्यासम्बद्धत्वम्, निरुपपत्तिकत्वं च पूर्वोक्तमुपपादयितुं विवृणोति—यदि त्विति । न प्रकृतेन सूत्रव्याख्यानेन सम्बध्यते । नापि सर्वधर्मत्वोपपत्ति प्रत्युपयुज्यत इत्यसम्बद्धत्वाद् द्वेधा व्याख्यातम् ।

तत्रासम्बद्धत्वं तावदुपपादयति—तथा हीति । एतदेव विवृणोति—यदि नामेति । निरुपपत्तिकत्वं त्वन्यानाख्येयार्थत्वमुक्त्वा, स्वयमेव च लिङाद्यर्थस्य पर्यायान्तरैराख्यानात्स्पष्टीकृतमित्याह—अनाख्येयत्वमिति । एतदेव विवृणोति –विधेति । विध्युपदेशशब्दयोः पर्यायत्वेऽपि कर्त्तव्यताशब्दस्य विधिविषयत्वरूपाभिधायित्वाद्भावनाशब्दस्य च पुंव्यापाराभिधायित्वादत्यन्ताविद्यमानपर्यायत्वारोपाभिधानमतीव स्थापितमित्युपहासः । ननु नानेन ग्रन्थेन भावनाख्यस्य विध्याख्यातार्थस्य व्यक्त्याकृतिरूपेणानभिधानात्सर्वधर्मत्वं साध्यते, किं त्वनेन दृष्टान्तेन कर्त्तुराख्यातार्थत्वेन व्यक्त्याकृतिरूपेणानभिधानाद्वयक्त्याकृतिद्वारकर्तृव्यवस्थाशङ्कानिरासेन सर्वधर्मत्वसिद्धचर्थमन्यानाख्येयत्वोपपत्तिमिषेण व्यक्त्याकृतिवाचित्वदिनिराकरणं नासम्बद्धमित्याशङ्कचाह—यद्यपि तावदिति । व्यक्त्याकृतिरूपेण कर्त्तुराख्यातवाच्यत्वेऽपि कृदन्तयजमानपदोपात्तकर्तृवदुपपदं विना व्यवस्थानुपपत्तेः । कर्त्रधिकरणे चाख्यातवाचित्वनिराकरणात्कर्तृव्यक्त्याकृतिवाचित्वनिराकरणमनुपयोगीति भावः ।

ननु माभूत् कर्तृव्यक्त्याकृतिवाचित्वस्य व्यवस्थानापादकत्वान्निरासः किं तु स्वरूपमात्राभिधाने विशेषाभावेन सर्वधर्मत्वसिद्धचर्थमित्याशङ्कचाह—यदि चेति । ननु राजसूयादीनामप्याख्यातवशात्सर्वधर्मत्वं प्राप्नोति च किन्तूपपदं विशेषणापोदितम् । इह त्वपवादाभावात्तत्सिद्धिरित्याशङ्कते—अथेति । एवमप्यपवादनिरासं विना सर्वधर्मत्वासिद्धेराख्यातार्थनिरूपणं व्यर्थमिति परिहरति—एवं तत्रापीति । अतोऽस्मदीयमेव पाठद्वये व्याख्यानं युक्तमित्युपसंहरति—तच्चेति ।

उत्तरसूत्रसङ्गत्यर्थमपि उपपदनिरासार्थतयैवायं ग्रन्थो व्याख्येय इत्याह—तद्यथा चेति। तन्न्यायत्वादिति सूत्रावयवव्याख्यानार्थं तस्मादिति भाष्यम्। सर्वधर्मत्वस्यैव साध्यत्वाद्धेतुत्वानुपपत्तेरयुक्तमाशङ्क्य सर्वधर्मत्वसाधकसर्वाधिकारन्यायत्वादित्येवं व्याचक्षाणः सर्वधर्मत्वप्रतिज्ञायां योजयति--तस्मादिति ॥ ११ ॥

मा० प्र०—कल्पसूत्र आदि स्वतः प्रमाण है या नहीं अर्थात् ये भी अपौरुषेय हैं, या नहीं ? यज्ञ की पद्धतियाँ यज्ञों के प्रयोग-कौशल बोधक कल्पित करने वाले शास्त्र कल्प कहे जाते हैं। संज्ञा और परिभाषा के द्वारा यज्ञों के प्रयोग के सूचक—सूत्र कहे जाते हैं,—कल्प और सूत्र कल्पसूत्र है।

यह सत्य है कि श्रौतसूत्र, गृह्यसूत्र और धर्मसूत्र को कल्पसूत्र कहा जाता है, किन्तु, प्रकृत में श्रौतसूत्र के अर्थ में कल्पसूत्र कहा गया है। जिस ग्रन्थ में प्रत्यक्ष वेद विधि से बोधित यज्ञ आदि कर्मों की परिपाटी उपदिष्ट होती है—उसको श्रौतसूत्र कहा जाता है। जिसमें अप्रत्यक्ष वेदविधि बोधित अर्थात् वेदमन्त्र आदि के द्वारा अनुमित विधियों के द्वारा बोधित संस्कार आदि कर्मों के प्रयोगों का विवरण रहता है—उसको गृह्यसूत्र कहा जाता है, इससे भिन्न क्रियाप्रतिपादक शास्त्र धर्मसूत्र है। इसी विवरण के अनुसार श्रौतसूत्रों में कथित कर्मों को श्रौत कर्म और इनसे भिन्न कर्मों को स्मार्त्त कर्म कहा जाता है।

कात्यायन, आश्वलायन, शटचायन आदि कल्पसूत्र हैं, इनका वेद के समान ही स्वतन्त्र रूप में प्रमाण है, क्योंकि, वेद को देखे विना ही याज्ञिक केवल कल्पसूत्रों की सहायता से यज्ञादि कर्मों का सम्पादन करते हैं। किन्तु, कल्पसूत्रों को छोड़कर केवल मन्त्र एवं ब्राह्मण के द्वारा यज्ञकर्मों का सम्पादन नहीं किया जा सकता है। 'षडङ्गमेके' इस प्रसिद्धि के अनुसार कल्पसूत्र को वेद कहा जाता है। इसीलिए कल्पसूत्र प्रयोग शास्त्र भी वेद के समान अपौरुषेय एवं अपौरुषेय होने से स्वतन्त्ररूप में प्रमाण है।

'प्रयोगशास्त्रम्'—कल्पसूत्र आदि यज्ञप्रयोग शास्त्र स्वतन्त्र रूप में ही प्रमाण अर्थात् अपौरुषेय हैं, 'इति चेत्'—यदि यह कहा जाय। कतिपय व्यक्ति पूर्वपक्ष कर सकते हैं कि कल्पसूत्र आदि यज्ञप्रयोग शास्त्र अपौरुषेय हैं। यह पूर्वपक्ष है ॥ ११ ॥

## नासन्नियमात्[1] ॥ १२ ॥ सि०

**शा० भा०—नैतदेवम्। असन्नियमात्। नैतत्सम्यङ्निबन्धनम्। स्वराभावात् ॥ १२ ॥ सिद्धान्तः ॥**

---

१. क. संनियमादिति।

भा० वि०—तत्र वेदव्यतिरिक्तविद्यास्थानानामनपेक्षत्वेन वेदत्वं वेदवत् प्रामाण्यं वा न युक्तमिति नञर्थमाह—**नैतदेवमिति**। तत्र हेतुमवतार्य व्याचष्टे—**असन्नियमादित्यादिना**। संशब्दस्सम्यगर्थः नियमशब्दो निबन्धनार्थ इत्यर्थः। असम्यङ्निबन्धत्वे हेतुमाह—**स्वराभावादिति**। स्वराभाव उपलक्षणार्थः। अलौकिकानां चतुष्षष्टिप्रपाठकादिनियतस्वरविशेषवत्, पदानाम्, तदर्थविशेषाणाम्, प्रयोजनविशेषाणां च कल्पादिष्वभावादित्यर्थः। न च प्रयोगशास्त्रत्वेनापौरुषेयतया वेदत्वं वेदरूपाभावाच्च वेदविहितार्थानुवादित्वोपपत्तेश्च प्रयोगशास्त्रत्वासम्प्रतिपत्तेः इति भावः॥ १२॥

त० वा०—एवं प्राप्ते

**वदामोऽत्र तत्रासन्नियमादिति**[1]।
असन्निबन्धनं ह्येतत्पूर्वोक्तं सर्वमीक्ष्यते॥ ५६५

इहैका परमार्थेन बुद्धिरर्थेषु जायते।
अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ५६६

परेण सह केषांचिद्वाकोवाक्यानि जल्पताम्।
उक्तयः प्रातिभासिक्यो जायन्ते परवाक्यतः॥ ६६७

स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम्।
छायां तथाऽपि रक्षन्तो जल्पन्ति प्रतिशब्दकैः॥ ५६८

यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः।
नित्य एवाऽऽगमोऽस्माकमित्याहुः शून्यचेतनम्॥ ५६९

प्रद्वेषाद्वेदपूर्वत्वमनिच्छन्त कथंचन।
तन्मात्रेऽपि च भूयिष्ठामिच्छन्तः सत्यवादिताम्॥ ५७०

भूयसा वेदबाह्यत्वाद् बुद्धादिवचसाममी।
अहिंसाद्यप्यतत्पूर्वमित्याहुस्तर्कमानिनः॥ ५७१

ततश्च पौरुषेयत्वादप्रामाण्यमतीन्द्रिये।
प्रागुक्तैर्वेदनित्यत्वं वागाभासैर्विमोह्यते॥ ५७२

यादृशतादृशमीमांसकैरप्यतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणादपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैर्व्यवलिख्यमानहृदयाः सन्तोऽपि प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत्।

१. ब. न असन्नियमात्।

यदेव भवतां गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥ ५७३

अस्मदीयमिदं वाक्यं भवतामिति चोदिताः ।
जल्पन्त्यस्माकमेवैतच्छ्रुत्वा मीमांसकैर्हृतम् ॥ ५७४

त्यक्तलज्जं ब्रुवाणो हि वाचोयुक्तिमनर्थिकाम् ।
कुर्वन् परातिसंधानमश्रान्तः कोऽवसीदति ॥ ५७५

तत्र शाक्यैः प्रसिद्धाऽपि सर्वक्षणिकवादिता ।
त्यज्यते वेदसिद्धान्ताज्जल्पद्भिर्नित्यमागमम् ॥ ५७६

धर्मस्तेनोपदिष्टोऽयमनित्यं सर्वसंस्कृतम् ।
क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ॥ ५७७

बुद्धिबोध्यं त्रयादन्यत्संस्कृते क्षणिकं च तत् ।

तथा शब्देऽपि बुद्धेर्नियमान्नाभिव्यक्तिर्द्वेधाऽपि दोषादित्येवमादिभिः सर्वदा पदार्थसंबन्धानित्यत्वप्रतिपादनात्तद्विपरीतमागमनित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् ।

तथा हि—यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् ।
पटं कर्तुं समीहेत स हन्याद् व्योम मुष्टिभिः ॥ ५७८

यावदागमनित्यत्ववेश्मदारूपकल्पिते ।
हेत्वाभासाग्निनिर्दग्धे तस्मिंस्तद्वेश्म[1] दुष्करम् ॥ ५७९

व्यवहारनित्यताशब्दश्च क्रियानित्यत्वपर्यायः । तद्यस्य शब्दार्थसंबन्धानामनित्यत्वम्, तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्यतिदुःसंपादम् ।

न च शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम् ।
नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥ ५८०

शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम् ।
स्थितैषा धर्मतेत्येतदर्थशून्यमतो वचः ॥ ५८१

एषेत्यपि न निर्देष्टुं शक्या क्षणविनाशिनी ।
किमुत स्थितया साकं एषेत्यस्यैकवाक्यता ॥ ५८२

तेनाऽनित्यशब्दवादिनामागमनित्यत्वानुपपत्तेरतीन्द्रियविषयस्य च वाक्यस्य प्रयोगशास्त्रत्वाभावान्नासन्नियमादित्युच्यते ।

असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः ।
असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते ॥ ५८३

---

१. तस्मिन्तद्वेश्म ।

मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते। मम[१] वि हि भिक्खवे कम्मवच्चइ वसी सवं। तथा[२] उक्खित्ते लोडम्मि उक्खेवें अत्थि कारणम्। पडणे णत्थि कारणम्। अत्थुम्भवे[३] कारणं इमे संखडा धम्मा संभवन्ति सकारणा अकारणा विणस्संति। उप्पत्तिमणुकारणमित्येवमादयः।

ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता।
दृष्टापभ्रष्टरूपेषु कथं वा स्यादनादिता॥ ५८४

वेदेषु हि तावदेव पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति।

या तद्बहिरवस्थानाद्वेदरूपं न दृश्यते।
ऋक्सामादिस्वरूपे तु दृष्टे भ्रान्तिर्निवर्तते[४]॥ ५८५

आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता।
न शक्याऽध्यवसातुं हि मनागपि सचेतनैः॥ ५८६

दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते॥ ५८७

प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः।
लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं क करिष्यति॥ ५८८

**ऋग्वेदस्यापौरुषेयत्वे युक्तिः**

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातममित्येतन्नृवचः कथम्॥ ५८९

किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम्।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम्॥ ५९०

अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते।
ईळेशब्दप्रयोगश्च क्व दृष्टस्स्तोत्रगोचरः॥ ५९१

देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम्।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते॥ ५९२

न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम्।
होतृत्वमपि यत्तस्य देवताह्वानहेतुकम्॥ ५९३

---

१. ममापि भिक्षवः कर्म वर्तत एवाऽऽशरीरपातात्।

२. तथा, उत्क्षिप्ते लोष्टे उत्क्षेपेऽस्ति कारणं पतने नास्ति कारणम्।

३. अस्त्युद्भवे कारणमिमे संस्कृता धर्माः संभवन्ति सकारणा अकारणा विनश्यन्ति। उत्पत्तिमनुकारणमपेक्षन्ते।

४. दृष्टेर्भ्रान्ति।

रत्नधायितमत्वं च तन्नरैर्ज्ञायते कथम् ।
अविज्ञातगुणानां च कल्पते स्तवनं न तु ॥ ५९४
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।

**यजुर्वेदस्यापौरुषेयत्वे हेतुः**

इषे त्वेत्ययमप्यर्थः पुरुषेणोच्यतां कथम् ॥ ५९५
शाखाच्छेदोपयोगश्च पुंभिरुत्प्रेक्ष्यतां कुतः ।
एवमूर्जेत्ययं मन्त्रः केन शाखानुमार्जने ॥ ५९६
वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणाम् ।
वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ॥ ५२७
एकशो विनियोक्तव्य इति कः कथयिष्यति ।

वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सोऽभिधीयत इति, नैतद् बुद्धिपूर्वकारिणा चिन्तितुं शक्यम् ।

**सामवेदेष्वियं युक्तिः**

सामवेदे यदाग्नाइप्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्नत्वे नाभिप्रायोऽस्ति कश्चन ॥ ५९८

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामृगक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्न इत्यस्य पदस्याकारमाकारेण प्लुतेन विकुर्यात् ।

तथा वीतय इत्यस्मिन्नोकारस्यापि विक्रियाम् ।
तशब्दस्य च तो शब्दं ये शब्दस्यापि रूपताम् ॥ ५९९
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते ॥ ६००
किंचिदेव तु तद्वाक्यं सदृशं लौकिकेन यत् ।
तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ॥ ६०१

एवं च यदाऽध्येतारोऽध्यापयितारः, पार्श्वस्था वा वेद-पद-वाक्य-तदर्थरूपाण्यालोचयन्ति, तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति । तावता तु बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यत इति, तत्तत्प्रतिपादनक्षमवेदोत्थापितन्यायोपनिबन्धनान्मीमांसकैः केवलं यश एव पीतम् ।

शाक्यादिग्रन्थेषु पुनर्यदपि किंचित्साधुशब्दाभिप्रायेणाविनष्टबुद्ध्या प्रयुक्तम्, तत्रापि प्रज्ञप्ति–विज्ञप्ति–पश्यतातिष्ठतादिप्रायप्रयोगात्किंचिदेवाविप्लुतं लभ्यते ।

किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽप्यपभ्रष्टतराणि भिक्खवे इत्येवमादीनि द्वियीयाबहुवचनस्थाने ह्योकारा तं प्राकृतं पदं दृष्टम्, न प्रथमाबहुवचने

सम्बोधनेऽपि । संस्कृतशब्दस्थाने च ककारद्वयसंयोगः, अनुस्वारलोपः, ऋवर्णाकारापत्तिमात्रमेव प्राकृतापभ्रंशेषु दृष्टम्, न डकारापत्तिरपि । सोऽयं संस्कृता धर्म इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धोऽपि विनाशः कृत इत्यसाधुशब्दनिबन्धनत्वादित्यन्तेन हेतुना वेदत्वाकृतकशास्त्रान्तरशङ्कानिवृत्तिः । यासाँश्चाकृतको विनष्टः शब्दराशिः, तस्य व्याकरणमेवैकमुपलक्षणम्, तदुपलक्षितरूपाणि च ।

असन्नियमादित्यस्य त्रेधा व्याख्यानम्

वेदे यथोपलभ्यन्ते नैवं शाक्यादिभाषिते ।
प्रयोगनियमाभवादतोऽप्यस्य न शास्त्रता ॥ ६०२

असन्नियमादिति[1] च व्याकरणोक्तनियमाभावादित्यर्थः ।

क्षणिकत्वनिराकृतनित्यसिद्धानित्यत्वात्यन्ताविद्यमानग्रन्थनियमाभ्युपगमाभिप्रायेण वाऽसन्नियमादित्युक्तम्[2] ।

असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनाम्, असद्धेतुभिर्वा प्रतिपादननियमात्तदेककर्तृकधर्मवचनानामप्यप्रामाण्यम् ।

कर्तृस्मरणदार्ढ्याच्च नैषामकृतता मता ।
तेनाकृतकगम्येऽर्थे स्वातन्त्र्यान्न प्रमाणता ॥ ६०३

एवं समस्तवेदाङ्गधर्मशास्त्रेष्वपीदृशात् ।
कर्तृस्मृतिदृढिम्नः स्यान्न स्वातन्त्र्येण शास्त्रता ॥ ६०४

एतेन कल्पसूत्राणां स्वातन्त्र्येण प्रामाण्यनिरासः

अनेन कल्पसूत्राणां प्रत्याख्याता स्वतन्त्रता ।
कर्तृस्मृत्या दृढं ज्ञाता तेषामप्यसतां क्रिया ॥ ६०५

येन न्यायेन वेदानां साधिताऽनादिता पुरा ।
दृढकर्तृस्मृतेस्तस्य कल्पसूत्रेषु बाधनम् ॥ ६०६

यथैव हि कल्पसूत्रग्रन्थानितराङ्गस्मृतिनिबन्धनानि चाध्येत्रध्यापयितारः स्मरन्ति, तथाऽऽश्वलायनबोधायनापस्तम्बकात्यायनप्रभृतीन्[3] ग्रन्थकारत्वेन ।

ततश्च प्रागवस्थायामसतामेव बन्धनात् ।
कुतः प्रयोगशास्त्रत्वं वेदवद्वेदतैव वा ॥ ६०७

न चैषां समाख्यामात्रबलादेव कर्तृत्वमुच्यते । येन आख्यां प्रवचनादि (१-१-२९) त्युत्तरमुच्यते । पुरुषपरम्परयैव हि स्मृतेषु कर्तृषु समाख्याऽभ्युच्चयहेतुत्वेन ज्ञायते । यथा च कठादिचरणैरनादिभिः प्रोच्यमानानामनादिवेदशाखानामनादिसमाख्या-

---

१ क. असंनियमा । २ क. संनियमा । ३ अ. कात्याय ।

संभवो नैवं नित्यावस्थितमाशकादिगोत्रचरणप्रवचननिमित्तसमाख्योपपत्तिः। माशकबोधायनापस्तम्बादिशब्दा ह्यादिमदेकद्रव्योपदेशिन इति, न तेभ्यः प्रकृतिभूतेभ्योऽनादिग्रन्थविषयसमाख्याव्युत्पादनसंभवः।

अतश्च माशकादिसमाख्याऽप्यविद्यमानग्रन्थनियमनादेव प्रवृत्तेत्यपि हेत्वर्थयोजना। वेदरूपनियमाविद्यमानत्वादिति वाऽत्र हेतुव्याख्या। कामं तु वेदाङ्गनीत्यनध्यायनियमाभावादिति वा योज्यम्।

यत्तु भाष्यकारेण स्वराभावादित्यन्तार्थं[1] व्याख्यानं कृतम्।

तन्मन्त्रेष्वप्यवेदत्वं कल्पाधीतेषु साधयेत्।
तथा गृह्योपदिष्टेषु च्छान्दोग्यब्राह्मणेषु च॥ ६०८
ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते।
छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतस्वरः॥ ६०९
तेन तेष्वप्यवेदत्वं स्वराभावात्प्रसज्यते।
तस्मादुक्तस्वसंवेद्यरूपाभावोऽत्र कारणम्॥ ६१०
स्वरोऽपि त्वस्ति रूपांशे न त्वसावेव केवलः॥ १२॥

न्या० सु०—एतत्सूत्रावतारणार्थमथेत्यनुभाषणभाष्यं व्याचष्टे—यस्त्विति। आर्षेयपञ्चार्षेयगोत्रव्यवस्थया शिखाकल्पव्यवस्थादर्शनाद् गोत्रविशेषवाच्युपपदानुमानेन कर्तृविशेषविनियोगः स्यादित्येवं सूत्रव्याख्यानार्थं गोत्रेति भाष्यं व्याचष्टे—तत्रेति। श्लोकं व्याचष्टे—यथैवेति। वसिष्ठादिगोत्रस्यान्वयतो नाराशंसो। व्यतिरेकः तनूनपादित्युपलक्षणतेत्यर्थः॥ १२॥

भाव० प्र०—प्रस्तुत पूर्वपक्ष के उत्तर में कहा गया है कि कल्पसूत्र आदि अपौरुषेय नहीं है, क्योंकि, कात्यायन आदि महर्षियों ने इसकी रचना की है, इसीलिए कात्यायनीय, शाटचायनीय, आश्वलायनीय आदि संज्ञा सार्थक होती है। कात्यायन के द्वारा प्रणीत इस अर्थ में तद्धित 'छ' प्रत्यय के द्वारा ये पद सिद्ध होते हैं। 'आख्याप्रवचनात्' (जै० सू० १।१।३०) इस सूत्र में मीमांसकों ने जिस प्रकार काठक कालापक आदि संज्ञा को प्रवचन मूलक कहा है। उसी प्रकार यहाँ भी नहीं कहा जा सकता है, क्योंकि, वेद के रचयिता पुरुष अस्मर्य्यमाण होने से काठक आदि स्थलों में प्रवचन ही संज्ञा का कारण है, किन्तु इस स्थल में कात्यायन, शाटचायन आदि महर्षियों के रचयिता होने से उसी रूप में शिष्य का स्मरण करते हैं, इसलिए वेद के समान प्रवचन समाख्या को = संज्ञा नहीं कहा जा सकता है, भाष्यकार ने कहा है वेद में स्वर पाठ लक्षित होता है, किन्तु कल्पसूत्र आदि में स्वर का नियम नहीं है, अतः वह अपौरुषेय नहीं है। वार्तिककार ने कहा है—

---

१ क. दित्यानियमार्थम्।

भाष्यकार का यह कथन सर्वथा समीचीन नहीं है, क्योंकि सामवेद में अनेक स्थलों पर स्वर नियम नहीं है। वार्तिककार ने यह भी कहा है कि जिन युक्तियों के आधार पर वेद को अपौरुषेय कहा गया है, शाक्य आदि की स्मृतियाँ उन युक्तियों के आधार पर अपौरुषेय नहीं कही जा सकती हैं, किन्तु दृढ़तापूर्वक कर्ता का स्मरण रहने से उनका पौरुषेयत्व है, अतः अयोग्य धर्माधर्म में विषय में उनका अप्रमाण्य ही सिद्ध होता है।

न=नहीं, कल्पसूत्र अपौरुषेय नहीं है। असन्नियमात्=असत् का अर्थात् पूर्व में अविद्यमान ग्रन्थ का नियमात् निर्माण या रचना होने से। अथवा असत् अर्थात् पूर्व में अविद्यमान अर्थात् परवर्तिकालीन कात्यायन आदि महर्षियों से नियमित अर्थात् रचित होने से। कल्पसूत्र आदि प्रयोगशास्त्र अपौरुषेय नहीं हैं, क्योंकि, वह रचना से पूर्व में नहीं थे, वरन् कात्यायन आदि महर्षियों ने इनकी बाद में रचना की है। यह सिद्धान्त पक्ष है॥ १२॥

## अवाक्यशेषाच्च[1] ॥ १३ ॥

**शा० भा०—ऋत्विजो वृणीते। वृता यजन्ति। देवयजनमध्यवस्यन्तीति। नात्र विधिर्गम्यते, वर्तमानकालप्रत्ययनिर्देशात्। न चात्र वाक्यशेषः स्तावकोऽस्ति[2]। तस्मादप्रमाणम्। यश्चाऽऽदर उक्तः स नान्तरीयकत्वाद्वेदवाक्यमिश्रसमाम्नानात्। यत्तु श्रुतिरिति[3], नैतत्। अर्थवादत्वात्। कथमर्थवादः? विध्यन्तरं ह्यस्ति, आग्नेयोऽष्टाकपाल इति। अत्राऽऽचार्यो वेदोऽभिप्रेतः। आचिनोत्यस्य बुद्धिमिति [4]यद्वाऽऽचार्यवचनं प्रमाणं तदपेक्षम्। कतरत्तत्? यत् प्रमाणगम्यम्॥ १३॥ इति सिद्धान्तः।**

भा० वि०—इति सूत्रं कल्पाद्यवेदत्वे हेत्वन्तरपरं व्याख्यातुं त्वप्रत्ययपरमध्याहृत्य च शब्दं चावतारयति—**अवाक्यशेषत्वाच्चेति**। तत्र विधानार्थाच्छिषेश्शिष्यते विधीयतेऽनेनेत्यस्मिन्नर्थे व्युत्पत्तेर्विधायकवचनं शेषशब्दमङ्गीकृत्याशेषवाक्यत्वादविधायकवाक्यत्वादिति व्याचष्टे—**ऋत्विजो वृणीत इत्यादिना**। वर्तमानकालप्रत्ययो लट्प्रत्ययः तेन निर्देशादित्यर्थः।

ननु वर्तमानापदेशस्यापि समिधो यजतीत्यादेः विधित्वाङ्गीकरणान्न तेन विध्यभावश्शक्यो वक्तुमित्याशङ्क्य स्तावकवाक्यशेषान्वयान्यथानुपपत्त्या तत्र विधिपरत्वं कल्प्यते न तु कल्पादिषु वाक्यशेषोऽस्तीत्येवं परतयाप्येतदेव सूत्रं व्याचष्टे—**न चात्रेति**। यस्माद्वेदरूपाभावादवेदत्वम्, तस्मान्न स्वयं प्रमाणम्, किन्तु वेदमूलतयेत्युपसंहरति—**तस्मादिति**। मन्त्रब्राह्मणैस्तुल्यादरत्वं निरपेक्ष-

---

१ अ. शेषत्वाच्च। २ अ. कस्तस्मादप्रमाणं। ३ अ. रिति नार्थवादत्वात्।
४. यद्वेति-यल्लोकेऽध्यापयितृवचनं सिद्धप्रमाणम्, तदपेक्षं श्रुतिवाक्यं तदनुवादकमित्यर्थः।

प्रामाण्यकारणं अनूद्य दूषयति—**यश्चेत्यादिना**। वेदवाक्यमिश्राणां कल्पसूत्राणां समाम्नानात् इति नान्तरीयकत्वमुपपादिकम्, आचार्यवचनं प्रमाणमिति श्रुतिर्न मशकादिवचनप्रामाण्यपरा किन्त्वन्यपरेत्याह—**यस्त्वित्यादिना**। विध्यन्वयं विना कथमर्थवादतेति पृच्छति—**कथमिति**। उत्तरम्—**विध्यन्तरं हीति**। तथापि स्वार्थाभिधानद्वारत्वात् स्तुतेराचार्यवचनप्रामाण्यसिद्धिरित्याशङ्क्य श्रुतिसामान्यमात्रत्वान्नैवमित्याह—**अत्रेति**। अस्याधिकारिणः व्युत्पन्नोऽव्युत्पन्नोऽपि चायमाचार्यशब्दो व्याख्यात्रध्यापयितृविषयः, न कल्पसूत्रकारविषय इति, परिहारान्तरमाह—**यद्वेति**। यत्प्रमाणभूतमार्यवचनं तदपेक्ष्येयं श्रुतिरिति योजना। पृच्छति—**कतरदिति**। आचार्यवचनं हि सर्वं प्रमाणमिति भावः। व्याख्यात्रादिवचनमपि संभवन्मूलप्रमाणकमेव सत्यं न सर्वम् इत्युत्तरमाह—**यत्प्रमाणमिति**। तदनेनाचार्यवचनं कथं नामयं श्रोता आद्रियेत ? इत्येवमर्थेयं श्रुतिरिति व्याख्यातम् ॥ १३ ॥

त० वा०—अतश्च वाक्यशेषोऽपि तस्मिन्नेवोपयुज्यते।

बहवो वाक्यशेषा हि येषां लोकेष्वसंभवः ॥ ६११<br>
अबुद्धिपूर्वतासिद्धिस्तेन वेदस्य तैरपि।

'बृहस्पतिर्वै देवानामुदगायात् इन्द्रो वृत्रमहनत्'[1], प्रजापतिर्वपामात्मन उदखिदत्, गावो वा एतत्सत्रमासत, तासां दशसु मास्सु शृङ्गाण्यजायन्तेत्यादयः कथमिव बुद्धिपूर्वकारिणोऽर्थवादाः प्रणीयेरन्।

नित्यत्वे सति येषां हि क्लेशेन विधियोजना।<br>
तान् कृत्वाऽध्यापयन् कर्ता सुसमत्वं व्यजेज्जडैः ॥ ६१२

न च तादृशवाक्यशेषमुद्राऽपि कल्पसूत्रादिग्रन्थेषु काचिदस्ति, यद्बलेनाकृतकत्वमेषामवसीयेत।

विधिशून्यतया चैषां विहिताऽऽख्यातरूपता।<br>
गम्यते न त्वपूर्वार्थप्रतिपादनशक्तता ॥ ६१३<br>
वर्तमानापदेशोऽपि त्वर्थवादप्ररोचितः।<br>
विधित्वं लभतेऽन्यत्र कल्पसूत्रेषु नास्ति सः ॥ ६१४<br>
पञ्चमेन लकारेण विधिर्यश्छन्दसि स्मृतः।<br>
मन्त्रब्राह्मणभिन्नत्वात्सोऽप्येतेषु न युज्यते ॥ ६१५

यद्यपि षडङ्गमेके इत्यनेन कल्पसूत्राणां वेदत्वं भवेत्।

---

१ क. महत्प्रजा।

तथाऽपि तर्कवत्तेषां छन्दस्त्वं नोपपद्यते ।
मन्त्रब्राह्मणयोरेव च्छान्दसा विधयः स्थिताः ॥ ६१६

यथैव "[1]विधिर्विधेयस्तर्कश्च वेदः" (पा गृ. सू. ६।१६) इत्येतस्मिन्दर्शने सति समस्त[2]वैदिकतर्कोपसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवति, न[3] त्वमन्त्रब्राह्मणरूपत्वाच्छन्दोनिबन्धनानि कार्याणि लभते, तथा कल्पसूत्राण्यपीति विधिपर्यायप्रयोगशास्त्रत्वाभावः ।

इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता ।
या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता ॥ ६१७
इतिहासपुराणानि कल्पानिति हि सा श्रुतिः ।
तस्मात्कृत्रिममप्यत्र विद्यास्थानं ग्रहीष्यते ॥ ६१८

वेदार्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वात्, अवश्यं च यावद्वेदम्, यावत्कर्मप्रयोगं च क्रियमाणैरपि विद्यास्थानाशून्यतार्थं कैरपि कल्पसूत्रैर्भवितव्यम् ।

वेदार्थकल्पनात्कल्पो नित्ययैवाऽऽख्ययोच्यते ।
जपे च नित्यकर्तव्ये नित्यमेव विधीयते ॥ ६१९
कर्माभ्यासाभिसंधानं विध्यर्थश्चात्र गम्यते ।
स चार्थो नित्य एवेति नाऽऽपतेद् ग्रन्थनित्यता ॥ ६२०
यः पुनर्वेदसंवादः स तत्पूर्वतयेष्यते ।
तदर्थानुगमाच्चैषां न स्वतन्त्रप्रमाणता ॥ ६२१
वेदशब्दाभिधेयत्वं नैषामध्येतृषु[4] स्थितम् ।
षडङ्गमेक इत्येतन्न च सिद्धान्तभाषितम् ॥ ६२२
संवादत्वानुवादत्वमेकस्यैकान्तनिश्चितम् ।
ऐकान्तिकविधित्वाच्च ब्राह्मणे तन्न युज्यते ॥ ६२३
कल्पादावनुवादत्वमापन्नं परिशेषतः ।
न च शाखान्तरन्यायस्तुल्याध्येतृकतावशात् ॥ ६२४
सर्वशाखाविधित्वं हि सिद्धमध्येतृभेदतः ।
प्रतिशाखं तु ये कल्पास्तदर्थप्रतिपादकाः ॥ ६२५
समानाध्येतृकत्वात्ते न कदाचिद्विधिक्षमाः ।
विवृण्वन्तश्च दृश्यन्ते हेतुभिर्ब्राह्मणोत्थितैः ॥ ६२६

---

१. विधिः—ब्राह्मणम् । विधेयो—मन्त्रः । तर्को मीमांसेति सूत्रार्थः ।
२ क. समवैहिकतर्कासंहा । ३ क. तत्त्वमन्त्रः । ४. क मध्यैतृषु ।

कल्पकारास्ततोऽप्येषां नैव ब्राह्मणतुल्यता ।
अन्यार्थैर्ब्राह्मणैश्चान्याञ्ज्ञापयन्त्यर्थनिर्णयान् ॥ ६२७

तस्मादपि स्वतन्त्रत्वं कल्पानां नोपपद्यते ।
अर्थैकत्वेन केषांचिदक्षराणां च साम्यतः ॥ ६२८

सादृश्याद् ब्राह्मणभ्रान्तिर्जातैवमपनीयते ।

आचार्यवचः प्रमाणमिति श्रुतेरभिप्रायवर्णनम्

आचार्यवचसां यच्च प्रमाणत्वं श्रुतौ श्रुतम् ॥ ६२९

श्रुतिसामान्यमात्रत्वात्तस्याप्यन्यार्थतोदिता ।
व्याचक्षाणस्य वेदार्थान्वेदांश्च वदतः स्वयम् ॥ ६३०
शिष्यान्प्रत्याप्तभावात्स्यादाचार्योक्तिप्रमाणता ।

आचार्यशब्दस्यार्थो मन्वादिभिरेवं व्याख्यातः ।

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते' ॥ इति । ६३१

वेदसंप्रदानकाले च शिष्यास्तद्वचःसु कथं नाम श्रद्दधीरन्नित्येवमर्थमाचार्यवचनं प्रमाणमित्युक्तम् । न कल्पसूत्रकारवचनविषयम् ।

न च पुंवचनं सर्वं सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ॥ ६३२

तथाऽन्यत्राप्युक्तम् 'तस्माद् द्वयं वाचा वदति सत्यं चानृतं च, पाप्मना ह्येषां विद्धेति' (बृ. उ. १-३) ॥ १३ ॥

न्या० सु०—श्यामादिचिह्नविशेषवाच्युपपादानुमानाशङ्कानिरासार्थमेतत्सूत्रमिति प्रतिपादनार्थं वा इदमिति भाष्यं व्याचष्टे—**व्यक्तीति** । एतदेव विवृणोति—**व्यक्तीति** । नित्यस्य-व्यवस्थिताचारान्नियतस्य कर्तुरुपलक्षणभूतस्य लिङ्गस्याभावात्तद्वाच्युपपदानुमानानुपपत्तेः । सर्वधर्मतेति लिङ्गीभूतकर्तृविशेषणनित्यशब्दाङ्गीकरणेन स्वयं सूत्रं व्याचष्टे—**लिङ्गेति** । नियमाभावमुपपादयदन्येऽपीति भाष्यं व्याचष्टे—**यच्चिह्नमिति** । अन्वयव्यभिचारार्थं भाष्यं व्याख्याय नैवं लिङ्गा इति व्यतिरेकव्यभिचारार्थं भाष्यं व्याचष्टे—**दृष्टमिति** । तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ।

ननु नास्ति तन्नित्यमेषां लिङ्गमिति भाष्यान्नित्यशब्दस्य लिङ्गविशेषणत्वप्रतीतेः । कर्तृविशेषणत्वेन व्याख्यानमयुक्तमित्याशङ्क्याह—**यस्त्विति** । नित्यकर्तुरुपलक्षणाशक्तिप्रदर्शनार्थं लिङ्गस्य नित्यत्वं भाष्यकृता निराकृतम् । ननु सौत्रो नित्यशब्दो लिङ्गविशेषणत्वेन व्याख्यात इति मन्यते इति काक्वा सूचितम् । नित्यशब्दसापेक्षत्वाल्लिङ्गशब्दस्या-

भावशब्देन सह—असमासप्रसङ्ग इत्युक्तम् । ननु राजपुरुषः शोभन इति पुरुषशब्दस्य शोभनशब्दसापेक्षस्यापि राजशब्देन सह समासो दृष्ट इत्याशङ्क्य—उपसर्ज्जनीभूतेत्युक्तम् । 'भवति हि प्रधानस्य सापेक्षस्यापि समास' इति स्मृतेः । पुरुषस्य राजानं प्रति प्राधान्याद्युक्तः समासः । लिङ्गस्याभावं प्रत्युपसर्ज्जनत्वात् वृद्धस्य राज्ञः पुरुष इति वदयुक्त इत्याशयः ।

ननु नित्यशब्दस्य प्रतिपाद्यं नियतत्वं लिङ्गशब्दार्थस्य लिङ्गत्वानुपपत्तेर्लिङ्गशब्दार्थेनैव नित्यशब्दार्थाक्षेपाच्छब्दस्यान्यत्र व्यापाराभावेन सामर्थ्याविघातात् उपसर्जनसापेक्षत्वेऽपि देवदत्तस्य गुरुकुलमितिवन्नित्यसापेक्षत्वात्समासाविरोध इत्याशङ्कते—नन्विति । यदि हि सम्बन्ध्यन्तरस्य नित्यशब्दस्यार्थो नियतत्वं लिङ्गशब्दार्थेनैव स्वार्थसम्बन्धितया समभिव्याहारान्यथानुपपत्त्याऽऽक्षिप्येत, ततोऽन्यत्र व्यापृतत्वात्तावत्सम्बन्धाक्षेपेऽसामर्थ्यं स्यात् लिङ्गशब्दार्थेनैव तु हेतुत्वेन नित्यशब्दार्थाक्षेपान्न तेन लिङ्गशब्दस्याभावात् शब्दं प्रति सामर्थ्यं विहन्यत इत्यर्थः । गुरुशब्दस्य सम्बन्धिशब्दत्वाच्छिष्यसम्बन्धिरूपं विना स्वार्थप्रतिपादनाशक्तेस्ताद्रूप्यमन्तरेण स्वार्थाभिधानापर्यवसानादपर्यवसितस्वार्थाभिधान एव शब्दान्तराभिधानसंयोगात्स्वार्थाभिधानवेलायामेव सम्बन्ध्यन्तरशिष्यमात्रप्रतीतौ निर्विशेषसामान्यानुपपत्तेस्तद्विशेषापेक्षायामपि पर्यवसितस्वार्थाभिधानव्यापारस्य शब्दस्य सम्बन्ध्यन्तरान्वयसिद्धौ व्यापारान्तराभावेन सामर्थ्याविघातात्समासो युक्तः । लिङ्गशब्दस्य तु सम्बन्धिशब्दत्वाभावात्सम्बन्ध्यन्तरमनपेक्ष्यैव पर्यवसिते स्वार्थाभिधाने, अर्थापेक्षया प्रतीतस्यापि सम्बन्ध्यन्तरस्याशब्दत्वेनान्वयात्पर्यवसितव्यापारस्यापि शब्दस्यैव सम्बन्ध्यन्तरापेक्षाकल्पनायामभावशब्देन सहैकार्थलक्षणम्, व्यपेक्षालक्षणं वा सामर्थ्यं न सम्भवतीत्यभिप्रायेण परिहरति—नैतदिति ।

सम्बन्धिशब्देषु हि सम्बन्ध्यन्तरापेक्षां विना शब्दप्रवृत्त्यसम्भवाच्छब्दप्रवृत्तिनिमित्तत्वेन सम्बन्ध्यन्तरापेक्षा सम्भवति । इह तु तदभावाच्छब्दकृतापेक्षातोऽपेक्षान्तरेणार्थकृतेन लिङ्गशब्दस्य नित्यशब्देन सह सङ्गतेर्नैतल्लिङ्गशब्दस्य नित्यशब्दसापेक्षत्वम् । अनेन गुरुशब्दस्य देवदत्तशब्दसापेक्षत्वेन तुल्यमित्यर्थः । एतदेवोत्तरार्थत्वेन तूपपादितं लिङ्गत्वं चेन्नित्यत्वमेव प्रति सत्तां लभते यथा भार्या त्वं पतिमेव प्रति, न स्त्री त्वमिव सर्वसाधारणं ततो लिङ्गशब्दः स्वार्थस्य लिङ्गशब्दस्य नित्यापेक्षां विनात्मलाभायोगात्तदपेक्षेत, न त्वेतदस्ति । तथा हि । नित्यशब्दोऽयं नियताभिप्रायो वा स्यात्, तद्धर्मनियतत्वाभिप्रायो वा । तत्राग्न्यादिनियामकमेव प्रतिधूमादेर्लिङ्गत्वदर्शनान्नियतापेक्षा तावदनाशङ्कनीयैव । नियतत्वेन तु विना यद्यपि लिङ्गत्वं नास्ति, तथापि नियतत्वप्रतियोगिकत्वाभावान्न तत्प्रत्येव लिङ्गत्वस्य सत्ता । साधारणसत्तानिबन्धनापेक्षिकत्वाभावेन तत्प्रतिपादकस्य लिङ्गशब्दस्य स्वार्थाभिधानकाले नित्यशब्दप्रतिपाद्यार्थान्तरापेक्षा निरस्ता । तत्पर्यवसितस्वार्थाभिधानव्यापारस्यार्थान्तरान्वयसिद्धेर्व्यापारान्तरापत्तेः सामर्थ्यविघात इत्याशयः ।

दृष्टान्तं तावद्वैधर्म्यपरत्वेन व्याचष्टे—गुरुशब्दस्य हीति। गुरुशब्दार्थस्य गर्भाधानादिपूर्वकवेदाध्यापनस्य शिष्यापेक्षात्मकलाभत्वमुपचाराच्छब्देऽभिहितम्, देवदत्तशब्देन षष्ठ्यन्तेनोपात्तो यः शिष्यसम्बन्धः, सोऽनतिरेकेण स्वार्थसत्तालाभादनाधिक्येनान्तर्णीतो यस्य गुरुशब्दस्य स्वार्थः, स तथोक्तः तस्य भावस्तत्त्वम्। ननु लिङ्गत्वस्यापि गुरुत्ववत्सर्वान्प्रत्यसत्त्वेनासाधारणसत्तानिबन्धनापेक्षिकत्वसद्भावात्तद्वाचकस्य लिङ्गशब्दस्यापि गुरुशब्दवत्सम्बन्धिशब्देन नित्यसापेक्षत्वात्सामर्थ्याविघात इत्याशङ्क्य, अभ्युपगम्य तावत्सम्बन्धिशब्दत्वं लिङ्ग्यपेक्षया, न तु नित्यशब्दार्थापेक्षयेति परिहरति।

ननु नित्यशब्दार्थनियतत्वं विना लिङ्गत्वायोगादस्त्येव तदपेक्षापीति कथमुच्यते? लिङ्ग्यपेक्षयैव लिङ्गत्वं न नित्यापेक्षयेत्याशङ्क्याह—यद्यपि चेति। लिङ्गिनैव प्रतिलिङ्गत्वस्य सत्ता लिङ्गशब्दस्य सम्बन्धिशब्दत्वाय लिङ्गशब्देन विवक्षिता। न च नित्यत्वप्रतियोगिकी लिङ्गत्वस्य सत्ता प्रतीयते। यथा परिणयनं विना भार्यात्वाभावेऽपि न परिणयनं प्रति भार्यात्वस्य सत्ता, किं तु पतिमेव प्रतीत्याशयः। गम्यगमकयोर्नियमलक्षणे सम्बन्धे सतीत्यर्थः।

यद्वाक्षेपकस्यैवाक्षिप्यमाणेन नियतत्वादाक्षेप्याक्षेपकाभिप्रायी गम्यगमकशब्दौ। यथा यद्यपि गुर्वादिशब्दः स्वसम्बन्धिना विना प्रवर्त्तते तथापि शिष्यादिसम्बन्धापेक्षाकृतगुर्वादिशब्दप्रवृत्तिनिमित्ता गुर्वादिशब्दस्य सम्बन्धिशब्दत्वप्रसिद्धिः, तथाऽस्य लिङ्गशब्दस्य न नियमलक्षणसम्बन्धापेक्षाकृतशब्दप्रवृत्तिनिमित्ता सम्बन्धिशब्दत्वप्रसिद्धिरित्यर्थः। ननु सम्बन्धिशब्दत्वाभावेऽपि यौगिकत्वाद्यथा लिङ्गिशब्दस्य शब्दप्रवृत्तिनिमित्तभूतयोगसिद्ध्यर्थं प्रतियोगिलिङ्गापेक्षा, तथा लिङ्गशब्दस्यापि यौगिकत्वाच्छब्दप्रवृत्तिनिमित्तभूतयोगापेक्षेति, तयोर्योगश्च सम्बन्धः। स च लिङ्गत्वौपयिको नियमरूप एवेति नित्यशब्दवाच्यनियमापेक्षासिद्धेः सामर्थ्ये विघात इत्याशङ्क्याह—लिङ्गीति। अयमाशयः यद्यप्यवयवयोगेन प्रवृत्तेरुभयोर्यौगिकत्वं तुल्यम्। तथापि लिङ्गिशब्दस्य तद्धितान्तत्वात्प्रातिपदिकाच्च तद्धितोत्पत्तेः प्रातिपदिकार्थलिङ्गापेक्षा, लिङ्गशब्दस्य तु कृदन्तत्वात्तस्य च धातोरुत्पत्तेर्धात्वर्थलिङ्गेन क्रियायोगनिमित्तत्वाच्छब्दप्रवृत्तिनिमित्तभूतस्य योगस्य प्रतिसम्बन्धिधात्वर्थमात्रेण सिद्धेर्नान्यापेक्षेति॥ ननु लिङ्गशब्दस्य सम्बन्धिशब्दत्वाभावाल्लिङ्गियोगनिमित्तत्वाभावाच्च लिङ्गिनो लिङ्ग्यनपेक्षणे लिङ्गदर्शनमित्यभियुक्तप्रयोगो नोपपद्यत इत्याशङ्क्याह—लिङ्ग्यत इति। सम्बन्धिशब्दानां गुर्वादीनां समुदायशक्त्यैवाध्यापनादिक्रियाजन्याद् व्याप्याद्यवच्छिन्नाध्यापयित्रादिगतातिशयवाचित्वादवयवार्थयोगनिमित्तप्रवृत्तित्वलक्षणयौगिकत्वानुपपत्तिर्लिङ्गेन क्रियायोगनिमित्तत्वेन यौगिकस्य लिङ्गशब्दस्य सम्बन्धिशब्दत्वासम्भवेऽपि, ज्ञानाख्याया लिङ्गनक्रियाया ज्ञेयलिङ्गिनिरूपणाधीननिरूपणत्वाच्छब्दप्रवृत्तिनिमित्तभूतयोगप्रतिसम्बन्धिज्ञानापरपर्यायलिङ्गनाख्यधात्वर्थनिरूपणाय ज्ञेयलिङ्ग्यपेक्षा सदास्तीति सामर्थ्याविघात इत्याशयः। सम्बन्धिशब्दवच्च वाच्यासाधारण्यनिबन्धनापेक्षा नितरां प्रतिसम्बन्धिधात्वर्थनिरूपणवेलायामेव नित्यं तदपेक्षा, नान्यदेति सूचयितुं काममित्युक्तम्। अपिशब्देन क्लेशः सूचितः।

नन्वेवं सति नित्यशब्दाभिधेयस्य नियमलक्षणसम्बन्धस्यापि लिङ्गनक्रियासिद्ध्युपयोगित्वेन तत्कारकतया लिङ्गेनैव नित्यमपेक्षणात्तत्सापेक्षत्वेऽपि सामर्थ्यविघातः स्यादित्याशङ्कयाह—नित्यत्वं पुनरिति। नियमाधीनत्वेऽपि लिङ्गनक्रियायास्तदधीननिरूपणत्वाभावान्नित्यत्वनिरपेक्षेणैव लिङ्गशब्देन स्वार्थे लिङ्गलब्धे लिङ्गत्वस्य नियतत्वं विनाऽनुपपत्तेरर्थेन स्वसिद्धयर्थं नित्यत्वमपेक्षितम्, न शब्देनेत्यर्थः। लब्धेन स्वार्थेन लिङ्गेनापेक्षितमिति विग्रहः। नन्वेवं तर्हि शब्दस्य नैरपेक्ष्यात्सामर्थ्यस्याविघातः स्यादित्याशङ्कयाह—तद्धर्मतयेति। विगृहीतया षष्ठ्या लिङ्गधर्मतया नित्यत्वं लिङ्गस्य समर्थ्यते, लिङ्गेनान्वीयत इत्यन्वयसिद्धयर्थं लिङ्गस्य नित्यत्वे—सम्बन्धापेक्षायामित्युक्तम्। तस्माद्भाष्यकृतोऽपि कर्तृविशेषणम्, अधिकारिविशेषणं वा नित्यशब्दोऽभिमतो, न लिङ्गाविशेषणमित्याह—तस्मादिति। उभयत्रापि सूत्रं योजयति—नियतस्येति। तस्मादित्युपसंहारभाष्यं व्याचष्टे—इतीति॥ १३॥

भा० प्र०—कल्पसूत्रों के अपौरुषेय न होने का कारण निर्देश करते हुए द्वितीय सूत्र की अवतारणा की गई है। कल्पसूत्र अपौरुषेय नहीं है, क्योंकि वेद में विधिवाक्य रहने पर उनकी निन्दा और स्तुति के सूचक वाक्यशेष अर्थात् अर्थवाद वाक्य उपलब्ध होते हैं, किन्तु, कल्पसूत्रों में विधिवाक्य रहने पर भी, उनके कोई अर्थवाद वाक्य उपलब्ध नहीं होते हैं। कल्पसूत्रों में "आर्षेयान् यूनोऽनूचानाम् ऋत्विजो वृणीते सोमेन यक्ष्यमाणः" (शाङ्खायन श्रौ० सू० ५।१।१) 'वृता यजन्ति', "अथोत्तरं देवयजनमध्यवस्यन्ति" (शा० श्रौ० सू० १५।१४।१) इत्यादि विधिवाक्यों में विधि के बोधक लिङ्लकार का प्रयोग न होकर, क्रिया के बोधक लट्लकार का प्रयोग उपलब्ध हो रहा है। प्रकृत में लट्लकार का प्रयोग है और विधि की स्तुति करने वाला वाक्यशेष भी नहीं है। अतः, कल्पसूत्र अपौरुषेय नहीं है, अतः वेद के समान इनका प्रामाण्य नहीं है।

यदि यह कहा जाय कि वेद में जिस प्रकार "यजति" आदि विधिबोधक लेट्लकार का प्रयोग है, वैसे ही प्रकृत में भी विधिबोधक पञ्चम लेट्लकार का प्रयोग है, किन्तु यह नहीं माना जा सकता है, क्योंकि, केवल संहिता और ब्राह्मण में ही लट् के समान आकार लेट्लकार का प्रयोग स्वीकार किया गया है, अन्यत्र नहीं। इसी लिए कहा है—"एषु पञ्चमो लकारश्छन्दोमात्रगोचरः"। कल्पसूत्र न तो मन्त्र है और न ब्राह्मण है। अतः, यहाँ लेट्लकार नहीं माना जा सकता है। 'षडङ्गमेके' इसके आधार पर कल्पसूत्र आदि को भी अपौरुषेय माना है, किन्तु, यह सभी के द्वारा समर्थित सिद्धान्त नहीं है, अतः अनादरणीय है।

"अवाक्यशेषात् च" = वाक्यशेष अर्थात् अर्थवाद वाक्यों की उपलब्धि न होने से कल्पसूत्रादि अपौरुषेय नहीं है।

वार्तिककार इन्हीं तर्कों के आधार पर कहा है कि जिन युक्तियों के आधार पर वेद की अपौरुषेयता सिद्ध होती है, उन्हीं युक्तियों के आधार पर स्मृतियाँ एवं कल्पसूत्र

आदि अपौरुषेय नहीं हो सकते हैं, वरन् कर्ता का स्मरण आदि के आधार पर इनको पौरुषेय मानना उचित है ॥ १३ ॥

**यच्चोक्तं सत्यावाचामेतानि वचनानीति । तन्न**

**सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च[1] ॥ १४ ॥**

**शा० भा–आचार्यवचनं हि भवति 'पूर्वपक्षे[2] सर्वासु तिथिष्वमावास्या" इति। संनिहितं च शास्त्रं 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममा[3]-वस्यया यजेत' इति। तेन श्रुतिविरुद्धवचनान्न सत्यवाचः। तस्मादप्रमाणम् ॥ १४ ॥ इति। षष्ठं कल्पसूत्राऽधिकरणम् ॥**

भा० वि०—यत्पुनः संवादिवचनत्वं कल्पसूत्रकारवचनानामुक्तं तदनुवदति—**यच्चोक्तमिति**। क्वचिद्विसंवादस्यापि दर्शनान्नायं नियम इत्याह—**तन्नेति**। एतदेव सूत्रेणोपपादयितुमादत्ते—**सर्वत्र चेति**। कल्पकारदिवचननिदर्शनार्थतया 'सर्वत्र च प्रयुक्तत्वात्' इतिभागं व्याचष्टे—**आचार्यवचनमिति**। पूर्वपक्षे शुक्लपक्षे तदनेन शुक्लपक्षे कृष्णपक्षे च सर्वत्र तिथिष्वमावास्या पौर्णमास्याख्यस्य कर्मणः कल्पसूत्रकारैः प्रयुक्तत्वाद्विहितत्वादिति सूत्रं व्याख्यातम्, इदानीं तद्वचनस्य विसंवादप्रदर्शनार्थं "सन्निधानशास्त्राच्च" इति व्याचष्टे—**सन्निहितं चेति**। सन्निहितत्वं प्रत्यक्षत्वं तत्प्रत्ययश्चायं कर्मणीत्यनेन दर्शितम्, तेन सर्वासु तिथिषु अमावास्यादिकर्मविधायकस्य कल्पादिवचनस्यामावास्यादिकालविशेषविधायिना प्रत्यक्षवचनेन विरोध इति भावः। विरोधफलमाह—**तेनेति**। विसंवाददर्शनफलमाह—**तस्मादिति**। न स्वत एव कल्पादिवचनं प्रमाणम्, किन्तु श्रुतिमूलतयेत्यर्थः ॥ १४ ॥

त० वा०—वेदादेवानृतत्वं च तद्वाचामवगम्यते।
विसंवादो हि भूयिष्ठस्तन्न्यायेन च दृश्यते ॥ ६३३
सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते।
सन्निधानाच्च शास्त्रस्य विसंवादः स्फुटः स्फुटः ॥ ६३४

तत्र यद् वृत्तिकारेणोदाहरणं 'पार्वणस्थालीपाकविषयगृह्यकारवचनश्रवणाद् दर्शपूर्णमासचरककल्पसूत्रकारवचनाध्यारोपेण दत्तम्, तदत्यन्ताध्यारोपाभिभवाभिप्रायप्रयुक्तमित्यनादृतम्। गृह्यकारवचनं ह्येतदक्षतहोमे तावदा**सायमाहुतेः प्रातराहुतिर्नात्येति, आप्रातराहुतेः सायमाहुतिरिति** अतश्च यथैवैतदग्निहोत्रविषय-

१. ब प्रयुक्तत्वात्। २. ब सर्वासर्वासु। ३. ब. ममायायतेन।

त्वेन न कल्प्यते, तथैवैतदपि **आपौर्णमास्या अमावास्या नात्येति। आमावास्यायाः पौर्णमासीत्येतदपि** दशपूर्णमासविषयं न कल्पनीयमिति। तस्मादन्यदुदाहार्यम् ॥ १४ ॥

(इति षष्ठं कल्पसूत्राधिकरणम् ॥ ६ ॥)

भा० प्र०—प्रत्यक्ष पठित श्रुतियों के साथ कल्पसूत्रों के उपदिष्ट पदार्थों का विरोध होने से कल्पसूत्र को अपौरुषेय नहीं माना जा सकता है। जैसे—कल्पसूत्रकार के मत में सभी तिथियों में दर्शयाग किया जा सकता है।

पूर्व सूत्र की व्याख्या में भाष्यकार ने कहा है कि आचार्य का वचन प्रमाण है। (आचार्यवचः प्रमाणम्) आचार्य के प्रति छात्रों का आदर भाव होना चाहिए क्योंकि विनय सम्पन्न को ही गुरु के लिए छात्र बनाने का नियम है। "पौर्णमास्यां पौर्णमास्या यजेत; अमावास्यायाममावस्यया" अर्थात् पौर्णमासी तिथि में पूर्णमास याग को एवं अमावस्या तिथि में अमावस्या=दर्शयाग करें-इस प्रत्यक्ष श्रुति का विरोध है। कल्पसूत्रों में उपलब्ध इन वचनों के आधार पर पौर्णमासी से पूर्व तक आमावस्या मानी गई है—पौर्णमासेन हविषाऽपरपक्षमभियजेत। स यत्र क्व च पुराऽमावस्यया यजते स्वस्थाने यज इति विद्यात्। आमावस्येन पूर्वपक्षम्। स यत्र क्व च पुरा पौर्णमास्या यजेत स्वस्थाने यज इति विद्यात्। (निदा० सू० २।५)

अमावास्यस्य कालात् पौर्णमासस्य कालो नातीयाद् आपौर्णमासादामावस्यस्य (बौधा० श्रौ० सू० २८।१२)

आमावास्यायाः पौर्णमासं नात्येति, आपौर्णमास्या आमावास्यम्। (गो० गृ० १।९।१३)

इसी प्रकार कल्पसूत्रकार ने कहा है कि सभी हवि के लिए उपस्थापित द्रव्यों में अग्नि के द्वारा संस्कार विशेष अर्थात् पर्यग्निकरण करना चाहिए। किन्तु श्रुति में पुरोडाश का ही पर्यग्निकरण आवश्यक माना गया है—यही उपदिष्ट है। अतः कल्पसूत्र अपोरुषेय न होने के कारण स्वतः प्रमाण नहीं है। श्रुतिमूलकता=वेदमूलकता ही कल्पसूत्र आदि के प्रामाण्य का साधन है, अतः प्रत्यक्ष उपलब्ध श्रुतियों के साथ वेद कल्पसूत्र का विरोध होने पर विरुद्ध कल्पसूत्रादि के विषय की समर्थक श्रुति (वेदवाक्य) जब तक उपलब्ध नहीं होगी तब तक उस स्थल में अननुष्ठापकत्व रूप अप्रमाण्य ही रहेगा।

"सर्वत्र"=कल्पसूत्रों में सभी तिथियों में, 'च'=एवम् "प्रयोगात्"=दर्शयाग के अनुष्ठान का अभिधान होने से, "सन्निधानशास्त्रात् च"=सन्निहित शास्त्र अर्थात् प्रत्यक्ष श्रुति कह रही है कि अमावस्या तिथि में दर्शयाग करना चाहिए, अतः आचार्य का वचन प्रमाण नहीं है।

मीमांसक जी ने भाष्यकार के स्वतः प्रमाण और परतः प्रमाण के विचार परक इस अधिकरण को अपौरुषेय एवं पौरुषेय के रूप के कुमारिल के विचार की आलोचना की है। किन्तु, अपौरुषेयत्व ही स्वतः—प्रमाण्य का सूचक है। अतः शब्द का परिवर्तन अर्थ परिवर्तन का साधन नहीं हो सकता है ॥ १४ ॥

## [७] अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥१५॥ पू०

**शा० भा०—अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते। येनैव हेतुना ते प्रमाणम्, तेनैव[1] व्यवस्थिताः प्रामाण्यमर्हन्ति।**

**तस्माद्[2] होलकादिः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकाद[3]यो दाक्षिणात्यैरेव। उद्वृषभयज्ञादय उदीच्यैरेव। यथा शिखाकल्पो व्यवतिष्ठते। केचित् त्रिशिखाः, केचित् पञ्चशिखा इति। पूर्वपक्षः ॥ १५ ॥**

भा० वि०—एवं श्रुतिमूलत्वेन स्मृत्याचारयोः प्रामाण्यं व्यवस्थाप्य, संप्रति स्मृत्याचारविशेषाणां व्यवस्थाया दर्शनात् किं तन्मूलभूतापि श्रुतिर्व्यवस्थितविषया, किं वा मूलश्रुतेरव्यवस्थितविषयाया एव संभवात् तन्मूलानामपि स्मृत्यादीनामव्यवस्थितत्वमेवेति विचार्यत इति विषयसंशयसङ्गतयः। प्रयोजनं तु विचारस्य—होलाकादीनां शक्तमात्रपुरुषानुष्ठेयत्वसिद्धिः। सूत्रं व्याकुर्वन् पूर्वपक्षमाह—**अनुमानादित्यादिना**। अनुमीयतेऽनेनेत्यनुमानं=लिङ्गं अनुमापकत्वेन हि स्मृतेर्गौतमादिप्रणीतायाः, आचाराणां च होलकादीनां प्रामाण्यं मूलश्रुतिं प्रति त्वयोच्यत इत्यर्थः। ततः किमित्यत आह—**येनैवेति**। येनैवान्यथानुपपत्तिलक्षणेन हेतुना ते स्मृत्यादयो मूलश्रुतिं प्रति प्रमाणम्, तेनैव हेतुना व्यवस्थितामेव मूलभूतां श्रुतिं प्रति ते प्रामाण्यमर्हन्ति, कुतः स्वयं व्यवस्थिता ? यत इति संबन्धः। यथा लिङ्गिनमन्तरेण लिङ्गस्यानुपपत्त्या लिङ्ग्यनुमीयते, तथा व्यवस्थितलिङ्गदर्शनान्यथानुपपत्त्या तादृश एव लिङ्गी युक्तोऽनुमातुमित्याशयः, तदनेनानुमापकस्य व्यवस्थितधर्मनिष्ठत्वात् तेनानुमीयमानमपि प्रमाणं तत्संयुक्तं धर्मिविशेषविषयमेव स्यादिति सूत्रं योजितम्। मूलश्रुतेः व्यवस्थितविषयत्वे फलितमाह—**तस्मादिति**। होलाकादिशब्दाः देशाचारविशेषविषयाः। स्मृत्याचाराणां नियतकर्तृविषयश्रुतिकल्पत्वे दृष्टान्तमाह—**यथेति**। कल्पः=कल्पनपूरणमिति यावत्। व्यवस्थितमेव दर्शयति—**केचिदिति**। यथा व्यस्थितत्रिशिखत्वादिदर्शनात् व्यवस्थितविषयैव मूलश्रुतिः कल्प्यते, तद्वदत्रापीत्यर्थः ॥ १५ ॥

---

१. ब. हेतुव्यवस्थिता एव।

२. ब. तद्धोलाकादयः। क. तस्माद् होलाकादयः। ३. ब. नैबुका दाक्षिणात्यै।

## सप्तमं होलाकाधिकरणम्

त० वा०—देशधर्मानुदाहृत्य संप्रत्येतद्विचार्यते ।
किं व्यवस्थितमूलास्ते किं वैषां सर्वधर्मता ॥ ६३५

विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ।
इह सर्व उदाहार्या विचार्याश्च विभागशः ॥ ६३६

प्राच्या याननुतिष्ठन्ति वर्जयन्ति च साधवः ।
तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते ॥ ६३७

एवं ये दाक्षिणात्यानां प्रतीच्यानां च केचन ।
उदीच्यानां तथाऽऽचारा विचार्याः सर्व एव ते ॥ ६३८

**गृह्यसूत्रादीनामध्ययनेऽपि अयं प्रवर्तनीयः**

आद्यं सूत्रद्वयं यावदिदमप्यत्र चिन्त्यताम् ।
गृह्यगौतमसूत्रादिव्यवस्था-सर्वगामिते ॥ ६३९

पुराणमानवेतिहासव्यतिरिक्तगौतम-वसिष्ठ-शङ्ख-लिखित-हारीतापस्तम्बबौधायनादिप्रणीतधर्मशास्त्राणाम्, गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा-गौतमीयगोलीये छन्दोगैरेव च परिगृहीते । वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इत्येवम् । तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम् किं तानि तेषामेव प्रमाणानि, उत सर्वाणि सर्वेषामिति ।

किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः ।
न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥ ६४०

अनुमीयतेऽनेनेत्यनुमानं लिङ्गमेवोच्यते ।

तच्च व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् ।
विधिर्वा प्रतिषेधो वा न हि सोऽन्यत्र लिङ्ग्यते ॥ ६४१

तत्र ग्रन्थात्मकात्, आचारात्मकाद्वा लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधावनुमीयमानौ तद्विषयावेवानुमातुं शक्येते, नान्यगतौ । कुतः ?

अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत् ।
प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥ ६४२

यथोपनयनं येषामाधानं च विधीयते ।
तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥ ६४३

यथा च जाति-तद्भेदकुलधर्मा व्यवस्थिताः ।
तथैव देशधर्मादिव्यवस्थाऽपि भविष्यति ॥ ६४४

यदि स्यात्सर्वगामित्वं विधानप्रतिषेधयोः ।
आचारोऽपि तथैव स्याद् व्यवस्थाहेत्वसम्भवात् ॥ ६४५

सर्वविषयशास्त्रप्रणीतो ह्याचारः सर्वदेशगतशक्तिमत्पुरुषैरग्निहोत्रवदेवानुष्ठीयेत ।

यस्तु तं विनियोगेन कुरुते तद् व्यवस्थितम् ।
तेन नूनं श्रुतिः काऽपि तेषामेवं विधायिका ॥ ६४६

अन्यथानुपपत्त्या च श्रुतिरत्र प्रतीयते ।
तन्मात्रानुपपत्त्या च सा तत्रैवाऽवधार्यते ॥ ६४७

यस्मादयं देशाचारः, अयं वा गृह्यादिग्रन्थोऽन्यथा नोपपद्यते, यदि श्रुतिमूलकत्वं नास्तीत्यनयोपपत्त्या मूलकल्पना । तस्माद् व्यवस्थितविषयैव साऽध्यवसातव्या । तथा चोक्तम्—( यदि च हेतुरवतिष्ठेत निर्देशादिति १-२-३० ) ।

यद्यन्नकरणं हेतुः शूर्पहोमे विधीयते ।
**तन्मात्रगतमेवासौ दृष्टान्तमपि कल्पयेत् ॥ ६४८**

यदन्नकरणं शूर्पं तेन तेनैव हूयते ।
ततश्चातिप्रसङ्गः स्यान्न दर्विपिठरादिषु ॥ ६४९

एवं व्यवस्थितान् दृष्ट्वा देशाचारान् समन्ततः ।
तन्मात्रविषया युक्ता तन्मूलश्रुतिकल्पना ॥ ६५०

**अनुमानव्यवस्थानाद्देशादिनियमादतः ।**
**तत्संयुक्तं प्रमाणं स्याद्यद्वाक्यमनुमीयते ॥ १५ ॥** ६५१

भा० प्र० – धर्मसूत्र और गृह्यसूत्र एवं देशाचार के विषय में प्रामाण्य के निर्णय की दृष्टि से इस अधिकरण की अवतरणा की गयी है—इसको देशाचारों में श्रुतिकल्पनाधिकरण या होलाकाधिकरण कहा जा जाता है । सामवेदी गौतम धर्मसूत्र एवं गोभिलगृह्यसूत्र, बह्वृच=ऋग्वेदी वशिष्ठस्मृति, वाजसनेयी=शुक्ल यजुर्वेदी आपस्तम्ब और बौधायनप्रणीव स्मृति के अनुसार अपना आचार-व्यवहार करते हैं । इसी प्रकार पूर्व देशों में रहने वाले होलाक=होली करते हैं, दक्षिणात्य के आचार के अनुसार आह्लीनैवुक=करञ्ज, अर्क आदिवृक्षरूप स्थावर देवता की पूजा करते हैं । करञ्जादिपूजनात्मकमाह्लीनैवुकमिति । (मीमांसकौस्तुभ १।३।१५) "स्वस्वकुलागतं करञ्जादिस्थावरदेवतापूजनमाह्लीनैवुकशब्देनोच्यते" 'मीमांसान्यायमालाविस्तरे' । आचार्य उदयन ने कहा

है कि गोबर के द्वारा निर्मित प्रतिमा का दूर्वा आदि से पूजाकर उसके साथ बन्धुत्व की कल्पना ही आह्नीनैबुक है—यह कतिपय व्यक्तियों का मत है। अन्य आचार्यों की दृष्टि में मङ्गलवार को दही के मन्थन को आह्नीनैबुक कहा जाता है। कतिपय आचार्यों ने प्रतिदिन एक मुट्ठी चावल को एक महीने तक पात्र में डालकर उससे घी में एक पूआ बनाकर देवता के पूजन को आह्नीनैबुक माना है (गोमयमयीं देवतां दूर्वादिभिरभ्यर्च्य ज्ञातित्व-कल्पनमाह्नीनैबुकमित्येके मङ्गलवारे दधिमन्थनमित्यन्ये। प्रतिदिनं तण्डुलमुष्टिं मासमेकं भाण्डे निक्षिप्य घृतेन तेनापूपकं देवतापूजनमित्यपरे) [न्यायवात्पर्यपरिशुद्धि पृ० २९२] इस अवसर पर 'उद्वृषभयज्ञ' आदि उदीच्य=उत्तरदेश में रहने वालों के लिए अनुष्ठान के योग्य है।

उत्तरापथ में रहने वाले व्यक्ति ज्येष्ठमास की पूर्णिमा को अनेक वृषभोंका पूजन कर उनकी दौड़ कराते है—इसी को उद्वृषभ कहा जाता है। राजस्थान, विहार आदि स्थानों में दिवाली के बाद गोवर्धन की पूजा के दिन यह प्रचलित है। सम्प्रति इसकी छाया मात्र गोपों एवं ब्राह्मणों के द्वारा सुरक्षित है। कृषक गण वैलों को खिला पिलाकर इस दिन पूजा करते हैं। अनेक रङ्गों से इनकी सींग रंगी जाती है तथा पूजा की जाती है। (ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति सोऽयमुदवृषभयज्ञ इति।) [न्यायमालाविस्तर १।३।१५] इसी प्रकार शिखाकर्म में भी कोई एक शिख कोई दो शिख आदि।

इन शिष्टाचारों या कुलाचारों से श्रुति का अनुमान किया जाता है। मूलीभूत श्रुतियों ने ही इस प्रकार विशेष-विशेष स्थानों में विशेष-विशेष सम्प्रदायों के द्वारा अनुष्ठेय को कर्तव्य मानकर उपदेश किया है। आचार के द्वारा जब श्रुति का अनुमान किया जाता है, आचार ही जब श्रुति के अनुमान के लिए साधन है=हेतु है। ऐसी स्थिति में अनुमेय श्रुति हेतुविशिष्ट होगी, क्योंकि, जहाँ हेतु रहता है, वहाँ साध्य रहता ही है—यही नियम है। जैसे जहाँ धूम रहेगा उस स्थान विशेष में साध्य वह्नि रहेगी, वहाँ वह्नि का अनुमान होगा। इस प्रकार ये आचार विशेष-विशेष स्थान में वहाँ के व्यक्तियों के लिए ही कर्तव्य है—वह अन्य स्थान के व्यक्तियों के लिए कर्तव्य नहीं है। इसी लिए सामवेदी आदि के लिए ही गौतमादि स्मृति के आचार मान्य होंगे अन्य व्यक्तियों के किए मान्य नहीं होंगे। इसी प्रकार होलाकादि आचार पूर्व देशीय से अतिरिक्त के लिए कर्तव्य नहीं है। क्योंकि, मूलीभूत श्रुति में इस प्रकार की विधि ही उचित है। जैसे—राजसूय यज्ञ क्षत्रियों के लिए ही कर्तव्य है, एवं वैश्य स्तोम वैश्य के लिए ही अनुष्ठेय है—यह पूर्व पक्ष है।

"अनुमानव्यवस्थानात्"=जिसके द्वारा अनुमित होता है अर्थात् स्मृति और श्रुति के साधन या कारण स्वरूप शिष्ट जनों के द्वारा स्वीकृत देशाचार की व्वस्था या नियम होने से "प्रमाणम्"=आचार का मूलीभूत अनुमित श्रुतिरूप प्रमाण" तत्संयुक्त=देश

आदि सम्बद्ध, स्यात्=होगा । क्योंकि, देश विशेष से आवद्ध शिष्टाचार के द्वारा ही उसके मूलभूत श्रुतिरूप प्रमाण का अनुमान होता है, इस लिए वह प्रमाण स्वरूप श्रुति भी देश सम्बद्ध ही होगी अर्थात् विशेष-विशेष आचार उस विशेष देश के लिए ही कर्तव्य होगा, अन्यत्र के लिए नहीं ॥ १५ ॥

**अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥१६॥ सि०**

**शा० भा०—अपि वेति पक्षव्यावृत्तिः। एवंजातीयकः सर्वधर्मः स्यात्। कुतः? तन्न्यायत्वाद् विधानस्य। विधीयतेऽनेनेति विधानं शब्दः। सोऽनुमीयते स्मृत्या। न च तस्याकृतिवचनता न्याय्या, न च व्यक्तिवचनता। न च सर्वेषामनुष्ठातॄणां यदेकं सामान्यम्, तस्य वाचकः कश्चिच्छब्दोऽस्ति, योऽनुमीयते। तस्मात् सर्वधर्मता विधेर्न्याय्या। कुतः? पदार्थाः कर्तव्या इति प्रमाणमस्ति, व्यवस्थायां तु न किञ्चित्प्रमाणमस्ति ॥ १६ ॥ अथ[1] यदुक्तं यथा शिखाकल्पो व्यवतिष्ठत[2] इति।**

भा० वि०—एवं छन्दोगबह्वृचादिपरिगृहीतगौतमवसिष्ठादिस्मृतिविहितानां तान् प्रत्येव धर्मत्वं प्राच्याद्यनुष्ठीयमानहोलाकाद्याचाराणां तान्प्रत्येवेति व्यवस्थितत्वे धर्माणां प्राप्ते सिद्धान्तमाह—अपि वेति। व्यवस्थितत्वपक्षव्यावृत्त्यर्थमाह—**अपि वेति**। होलाकादिः सर्वधर्मः स्यादिति सिद्धान्तप्रतिज्ञां विवृणोति—**एवं जातीयक इति**।

ननु व्यवस्थितलिङ्गदर्शनेन तथाविधलिङ्ग्यानुमानात् तदधीनं धर्मत्वमपि व्यवस्थितमेव न्याय्यमिति शङ्कते—**कुत इति**। व्यवस्थितलिङ्गदर्शनेन ह्यनुमीयमाना श्रुतिर्व्यवस्थितकर्तृविशेषणवाच्युपपदयुक्तैवानुमातव्या, न च तत्संभवतीति वक्तुं सूत्रावयवमवतारयति—**तन्न्यायत्वादिति**। तस्य सर्वधर्मत्वस्य न्यायो यस्मिन् विधान इति व्यधिकरणबहुव्रीहिः, तन्न्यायत्वं विधानस्य दर्शयितुं विधानशब्दार्थं तावदाह—**विधीयत इति**। विधीयतेऽनुष्ठीयतेंऽशत्रयविशिष्टा भावनानेनेति वाक्यं विधानशब्दार्थ इत्यर्थः। ततः किमित्याशङ्क्य तन्न्यायत्वं दर्शयति—**सोऽनुमीयत इति**। स्मृत्याचारेण वेत्यर्थः, तथापि कथं सर्वधर्मत्वसाधकन्यायोपेतत्वं विधानस्येत्याशङ्क्य असति कर्तृविशेषोपादने विधिनैव सर्वधर्मत्वसिद्धेः विशेषणस्य चाकृत्यादिरूपस्यासंभवादित्याह—**न तस्येति**। विधानान्तर्गततया प्रकृतस्योपपदस्य तस्येति परामर्शः, व्यक्तिवचनत्वे त्वेकपुरुषव्यक्त्यधिकारमेव होलाकादीति व्यक्त्यन्तरस्याननुष्ठानप्रसङ्ग इति भावः।

---

१. ब. अथ यथा शिखा। २. क. व्यवतिष्ठते।

नन्वस्तु ब्राह्मणत्वाद्याकृतिवाचित्वमुपपदस्येति तत्राह—**न चेति । सर्वेषामनुष्ठातॄणामिति ।** अनुष्ठातॄणामेव तेषां च सर्वेषामित्यर्थः ब्राह्मणत्वादीनां चातथाभावादिति भावः । अधिकारवाच्युपपदाभावे फलितमाह—**तस्मादिति । विधेरिति ।** निरुपपदविध्यनुमानादित्यर्थः, यद्येवं सर्वधर्मत्वं कथं तर्हि व्यवस्थाया अनुष्ठानमिति चोदयति—**कुत इति ।** परिहरति—**पदार्था इति ।** सर्वधर्मतायां प्रमाणसद्भावाद् व्यवस्थितौ तदभावाच्चालस्यं भ्रान्तिर्वानुष्ठानव्यवस्थाकारणमित्यर्थः ।

ननु कथं व्यवस्थितौ प्रमाणभावः ? शिखाकल्पादिवदाचारादिव्यवस्थयापि व्यवस्थितमूलश्रुत्यनुमानादित्युक्तमनुवदति—**अथेति** ॥ १६ ॥

**सिद्धान्तः**

त० वा०—**अपि वा सर्वधर्मः** स्यादित्यत्रोत्तरमुच्यते ।
**तन्न्यायत्वाद्विधानस्य** शक्तमात्राधिकारिणः ॥ ६५२

इह स्मृतीराचारांश्चोपलभ्य मूलश्रुतिष्वनुमीयमानासु कारणानुविधायिकार्यन्यायेनावश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यमिति, भावनानामविशेषव्यवच्छिन्नयागदानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेतिकर्तव्यताविषयस्तावदनुमातव्याः । एवं वर्जनीयेष्वपि देहेन्द्रियमनोद्वारव्यवहारेषु प्रतिषेध्यक्रियाकारकं नरकाद्यनिष्टफलप्रतिषेधकशब्दानुमानमवश्यंभावि । तावता च योग्यत्वमात्रविषयत्वान्न दिग्देशपरिच्छिन्नः कर्तृविशेषाधिकारनियतप्रतिपत्तिलाभः ।

कुतः—त्रिधैव ज्ञायते कर्ता विशेषेण प्रतिक्रियम् ।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः ॥ ६५३

तदिह विहितानुष्ठानयोग्यता तावत्समस्तार्यावर्तनिवासिवर्णाश्रमाणामन्धबधिरजडमूकादिवर्जमविशिष्टा । वर्जनीययोग्यत्वमपि यथोपलभ्यमानं द्वित्रिचतुर्वर्णाश्रममात्रसम्बद्धं वा तदभ्यधिकदर्शनानुमितसमस्तम्लेच्छादिविषयं वा विज्ञायते ।

न त्वत्रोपपदं किञ्चिद्यथाचारानुसारि यत् ।
अनुमीयेत देशस्थदृष्टकर्तृविशेषणम् ॥ ६५४

येऽपि च प्रतिषिध्येरन्देशान्तरनिवासिनः ।
तद्वाच्यपि पदं किञ्चिदनुमातुं न शक्यते ॥ ६५५

योग्यत्वेनाविशेषप्रवृत्तोऽप्यधिकारः केनचित्कर्तृविशेषणपदेन राजा राजसूयेन, वैश्यो वैश्यस्तोमेनेत्यादिवद्विशेष्येत । न चात्र दृश्यमानाचरितृवाचि किंचिदेकमनेकं सम्भावयितुं शक्यम् ।

कुतः—सर्वं नामपदं तावद्व्यक्त्याकृतिनिबन्धनम् ।
यद्यदेवानुमीयेत नैकार्थमपि तद्भवेत् ॥ ६५६

न तावत्प्राच्यत्वदाक्षिणात्यत्वादिजातिः प्रतीच्योदीच्यादिव्यक्तिव्यावृत्ता सर्वप्राच्यादिव्यक्तिष्वनुगता काचिदुपपद्यते । यद्वचनमुपपदं होलाकाद्यधिकारं विशिष्यात् । यास्तु मनुष्यत्व-ब्राह्मणत्वादिजातयः तेषु विद्यन्ते, ताः सर्वदेशवासिव्यक्तिष्वविशिष्टा इति, नाऽऽचारानुरूपविशेषणसमर्थत्वेन ज्ञायन्ते ।

व्यक्तिवाचि तु यन्नाम तदेकत्रैव वर्तते ।
देवदत्तादिवत्तेन न सिध्येत् कर्त्रनेकता ॥ ६५७

न ह्यनन्तभेदानां प्राच्यादिपुरुषव्यक्तीनां व्यस्तसमस्तानां सम्बन्धानुभवासम्भवादेकमभिधानमवकल्पते ।

एतेन गुणक्रियाजातिविशिष्टपुरुषव्यक्तिवचनत्वं प्रत्युक्तम् । न हि काश्चिदपि गुणक्रियाजातिव्यक्तयः प्रतिदेशव्यवस्थितपुरुषव्यक्त्युपलक्षणयोग्याः संभाव्यन्ते । सर्वत्र तत्रापि व्यावृत्त्यविशेषात्[1] ।

व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते ।
यमाश्रित्य प्रवृत्तं स्यादधिकारिविशेषणम् ॥ ६५८

**कस्यचिन्मतस्योपन्यासः**

एतदेव प्रतिपादयन् भाष्यकार आह । शक्तमात्रपुरुषाधिकारप्रवृत्तविधानविशेषणं येनोपपदेनानुमीयमानेन क्रियते '**न तस्याऽऽकृतिवचनता न्याय्या, न व्यक्तिवचनता**'ति । न ह्येते होलाकाद्याः कांचिदाकृतिमनुविधीयन्ते, न व्यक्तिम् । न हि यावत्सु पुरुषेष्वेतेऽवस्थिताः तावतामेकेनापि व्यपदेशेनोपसंग्रहः संभवति । केषांचित्तस्याऽऽकृतिवचनता न्याय्या, न व्यक्तिवचनतेति ग्रन्थस्तेषामाभिप्रायः । यथैव 'जातिं तु बादरायणोऽविशेषात् ६–१–८' इति सूत्रकारः स्वर्गकामपदं यौगिकमप्युद्दिश्यमानपुंस्त्वविशेषणासंभवात्फलार्थिमात्रमनुष्यजातिविषयोपपत्तेश्च सामर्थ्याक्षिप्तजातिमात्राधिकारं वक्ष्यति ।

तथेहापि फलार्थित्वकर्तृशक्त्यावबोधनात् ।
देशधर्मेषु सर्वेषु नरजातेरधिक्रिया ॥ ६५९

कश्चित्पुनराख्यातशब्दार्थमुपवर्णयन्निमं ग्रन्थपाठं दूषयित्वा, अपूर्वमेव समर्थयमानः सूत्रगतयावच्छ्रुतविधानशब्दजनितभ्रान्तिर्विधिभावनयोश्च भेदमपश्यन्नु-

---

१ क. व्यावृत्येति पाठः ॥

भयस्वरूपनिरूपणपर्यनुयोगत्रासाद्भावार्थाधिकरणसिद्धान्तं विनाशयन्नेवमाह भाव इति वाऽनाख्येयः स्वधर्मेणान्यदतः शब्दज्ञानात्कारकत्वदिति । तेन यः कश्चिदाख्यातप्रत्ययार्थतत्त्वं जिज्ञासमानः पृच्छति ? कः पुनरयं भावः भावना चेति ?

तं प्रत्यनन्यशब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्वधात्वर्थसामान्यवचनकरोतिपरलिङाद्युच्चारणमात्रेणैवोत्तरं दास्यते कुर्याच्छब्द इत्यर्थः । सर्वश्चाऽऽख्यायमानोऽर्थ आकृतिरूपेण वाऽऽख्यायेत व्यक्तिरूपेण वा । व्यक्त्याकृतिगोचरातिक्रान्तिश्च किलाऽऽख्यातशब्देनोपायरहितत्वादनाख्येयोऽस्यार्थ इति । तदेव किलानेनापि ग्रन्थेनोक्तं भाष्यकारेण **न तस्याऽऽकृतिवचनता न्याय्या, न व्यक्तिवचनतेति** । विधानशब्दो हि सूत्रे पूर्वं प्रकृतः तमेव तच्छब्देन निर्दिश्य व्यक्त्याकृतिवचनत्वादपनयति ।

कुर्यादित्युच्यमानो हि करोमीति प्रपद्यते ।
न विधेर्भावनाया वा सामान्यव्यक्तिरूपताम् ॥ ६६०

## तन्निराकरणम्

तदिदमसंबद्धमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणान्यार्थमेव सत्रतुःशृङ्गादिमन्त्रवद्भाष्यकाराभिप्रेतार्थत्यागेन स्वप्रज्ञाविलसितं प्रकाशयताऽन्यस्मिन्नेवार्थे योजितम् । देशाचारसर्वधर्मोपपत्तिविचारणार्थोऽयं ग्रन्थः । स यदि पूर्वकृतया व्याख्ययोपपदनिराकरणविषयत्वेन वर्ण्यते, तत एतत्सूत्रव्याख्यानेन न संबध्यते यथोक्तन्यायमार्गेण । यदि तु तत्परित्यागेनाऽऽख्यातप्रत्ययार्थानामनाख्येयत्वापत्तिमेव व्यक्त्याकृतिरहितार्थत्वेन वर्णयेत् ततोऽत्यन्तासंबन्धानुपयुज्यमाननिरुपपत्तिकार्थत्वेन हेय एव स्यात् ।

तथा हि—यस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता ।
तस्मात्तद्विहितं कर्म सर्वार्थमिति विस्मयः ॥ ६६१

यदि नाम लिङादिप्रत्ययो भावनाया विधेर्वा व्यक्तिमाकृतिं वा वदेत् ततो होलाकादयः प्रतिनियतदेशधर्माणो भवेयुः । यतस्तु व्यक्त्याकृतिविनिर्मुक्तोऽव्यपदेश्योऽर्थः तस्मात्तद्विहितधात्वर्थविषयः सर्वपुरुषधर्म इत्येवं नीयमानमसंबद्धोदाहरणे ज्येष्ठमेव स्यात् ।

अनाख्येयत्वमुक्त्वा च पर्यायैः स्वविकल्पितैः ।
अन्वाख्यानं कृतं तच्च पूर्वोक्तेन विरुध्यते ॥ ६६२

विध्युपदेशकर्तव्यताभावनाशब्दानां ह्यत्यन्ताभूतमेव बहुभाषित्वप्रख्यापनापरपर्यायत्वमध्यारोप्याऽऽचक्षाणेन स्वयमनाख्येयत्वमतीव स्थापितम् ।

यद्यपि तावदाख्यातप्रत्ययः कर्तृशक्तिम्, तदाधारद्रव्यमात्रं वा वदेत्, तथापि ब्राह्मणो यजमान इतिवदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न स्वगतव्यक्त्याकृतिवचनत्वविचाराधीनाधिकारित्वनिर्णयः स्यात् किमुत यदा कर्त्रभिधाननिरपेक्षविधिर्भावनादिमात्रवाचित्वमेवावस्थाप्यते ।

यदि चैतावन्मात्रमेव सर्वधर्मत्वकारणं भवेत् । ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमात्मकाख्यातप्रत्ययविधेयत्वाविशेषात्सर्वधर्मत्वप्रसङ्गः । अथ तेषामनिर्देश्यार्थप्रत्ययविहितानामपि राजाद्युपपदवशादसर्वधर्मत्वम् । एवमत्राप्यसर्वधर्मत्ववादिना तदेवोपन्यसनीयम् । सर्वधर्मत्ववादिना च निराकर्तव्यम् । तच्चाऽऽचारानुरूपव्यक्त्याकृतिवचनत्वासंभवात्सामर्थ्यलभ्यमनुष्याकृतिमात्राधिकारप्रतिपत्तेर्वा निराकृतमेव ।

तद्यथा चोत्तरसूत्राणि "लिङ्गाभावाच्च नित्यस्याऽऽख्या हि देशसंयोगात्" इत्येवमादीन्युपपदोपन्यासप्रत्याख्यानार्थानि संगंस्यन्ते । तस्मात्सर्वाधिकारन्यायत्वाद्विधानस्य व्यवस्थितदेशाचार-गृह्यधर्मसूत्रनिबद्धधर्माणामपि सर्वधर्मत्वम् ॥ १६ ॥

भा० प्र० – प्रदर्शित पूर्वपक्ष के समाधान के लिए सिद्धान्त पक्ष की अवतारणा इस सूत्र से की जाती है । होलाकादि आचार देशविशेष से निबद्ध नहीं है वरन् सभी लोग इसे कर सकते हैं क्योंकि श्रुति के द्वारा यह स्थल विशेष में, सम्प्रदाय विशेष में कर्तव्य के रूप में उपदिष्ट है, ऐसी कल्पना या अनुमान नहीं किया जा सकता है । क्योंकि इसकी सर्वधर्मता के अनुकूल न्याय या तर्क उपलब्ध है । जितने भी व्यक्ति हैं वे होलाक आदि के अनुष्ठान करने में समर्थ हैं, जिसके द्वारा विवक्षित अर्थ नीत=प्रकाशित होता है उसको न्याय कहा जाता है जैसे—धूम को देखने के बाद वह्नि का अनुमान होता है । धूम यदि वह्नि से जन्य नहीं होता तो उसका अनुमान हो सकता । इस प्रकार का तर्क अनुमिति का पोषक है, वैसे ही इस स्थल में भी आचार की मूलीभूत जिस श्रुति का अनुमान होता है, वह यदि पूर्व देश आदि विशेषण से विशिष्ट न हो तो कोई हानि नहीं है । इस प्रकार के तर्क के रहने से होलाक आदि आचार्य को विशेषदेश से सम्बद्ध कर श्रुति का अनुमान नहीं किया जा सकता है ।

पूर्वपक्षियों ने यह आशंका की थी कि राजसूय आदि यज्ञों में क्षत्रियत्व आदि जाति अधिकारी का विशेषण होता है, अतः इस प्रकार के दृष्टान्त के अनुसार प्रकृत में भी देश विशेषण का रहना ठीक है, किन्तु उनके द्वारा प्रदर्शित यह दृष्टान्त ठीक नहीं है । क्योंकि प्राच्यत्व दाक्षिणात्यत्व ऐसी कोई जाति नहीं है जो प्रतीच्य और उदीच्य व्यक्ति से पृथक् मानी जा सकती है । किन्तु मनुष्यत्व, ब्राह्मणत्व आदि जो जातियाँ हैं, वह प्राच्य प्रतीच्य आदि सभी स्थलों में समान ही हैं । इस प्रकार प्राच्यत्व आदि व्यक्ति

वाचक होने से वह देवदत्त के समान एक ही व्यक्ति को अवगत करायेगा। उस व्यक्ति को छोड़कर अन्य व्यक्ति की अवगति इससे नहीं हो सकती है। अतः वह अनेक व्यक्तियों के कर्तव्य के रूप में नहीं हो सकता है, अर्थात् अनेक व्यक्ति उसका आचारण नहीं कर सकेंगे। इसी लिए प्राच्यत्व और प्रतीच्यत्व व्यक्ति वाचक या आकृति वाचक नहीं हो सकता है। अतः विधायक शब्द भी तद्विशिष्ट रूप में आचार का विधान नहीं कर सकता है। अर्थात् प्राच्यत्व आदि अधिकारी का विशेषण नहीं हो सकता है। यह सत्य है कि राजसूय और वैश्यस्तोम आदि जगहों में राजत्व=क्षत्रियत्व या वैश्यत्व रूप जाति अधिकारी का विशेषण हो सकता है क्योंकि सभी क्षत्रियों और सभी वैश्यों में अनुगत रूप से क्षत्रियत्व और वैश्यत्व जाति अवस्थित है।

अपि वा=यह पूर्वपक्ष के निरास के लिए है। सर्वधर्म स्यात्=सभी का धर्म अर्थात् कर्तव्य होगा। विधानस्य=विधान का (जिसके द्वारा विहित होता है उसे विधान कहते हैं) विधायक शास्त्र का या मूलीभूत अनुमेय श्रुति का, तन्यायत्वात्=क्योंकि वैसा न्याय अर्थात् प्राची आदि देश विशिष्टता भावरूप तर्क उपलब्ध है, होलाकादि आचार देश विशेष की सीमा से आवद्ध नहीं है, अपि तु वह सभी के लिए अनुष्ठेय है, क्योंकि श्रुति के अनुमान में देश विशिष्टाभाव रूप तर्क वर्तमान है। फलतः यह सभी का कर्तव्य हो सकता है ॥ १६ ॥

## दर्शनाद्विनियोगः स्यात् ॥ १७ ॥

**शा० भा०—गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम् ॥१७॥ उ०॥**

भा० वि०—उत्तरत्वेन सूत्रमवतारयति—**दर्शनादिति**। तत्र दृष्टान्तवैषम्यप्रदर्शनार्थं दर्शनादिति भागं व्याचष्टे—**गोत्रेति**। तत्र हि गोत्रादेरेकैकस्य व्यवस्थापकधर्मस्य दर्शनात् तद्गतस्य त्रिशिखत्वादेरपि व्यवस्थादर्शनं युक्तम्। न चैवमाचरितादीनां किञ्चिद्व्यवस्थापकमस्ति येन होलकादि व्यवतिष्ठेदित्यर्थः। ततश्च तत्र गोत्रादिवाच्युपपदोपेतश्रुत्यनुमानात् कर्तृविशेषविनियोगः स्यात् अत्र तु कर्तृविशेषणासम्भवेन तद्वाच्युपपदासम्भवान्नोपपदयुक्तस्यापि श्रुत्या कर्तृविशेषविनियोगः सिद्ध्येदिति सूत्रशेषो व्याख्येयः ॥ १७ ॥

त० वा०—यत्तु[1] जातिकुलगोत्रधर्मवद्व्यवस्थितविध्यनुमानमिति ?

तत्रैकशब्दवाच्यानां जात्यादीनां व्यवस्थया।
दर्शनाद्विनियोगः स्यात्पञ्चावत्तादिधर्मवत् ॥ ६६२

---

१. यस्तु मु. पु. ४ यस्तु विध्यनुमानमिमिमन्यते इत्यन्वयः।

यः तथैव पञ्चावत्तं तु भृगूणां वसिष्ठशुनकात्रिवध्न्यश्वकाण्वसंकृतिराजन्यानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषामित्यन्वयतो व्यतिरेकतश्चोपलक्षणसंभवाद्व्यवस्थितविध्यवसानम्, तथैव प्रतिजातिगोत्रनियतत्रिशिखैकशिखादिकल्पव्यवस्थितविधिशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ॥ १७ ॥

भा० प्र०—इसी पाद के भाष्य में शिखा कर्म को गोत्र का चिह्न माना गया है (गोत्रचिह्नं शिखाकर्म) पन्द्रहवें सूत्र में भी कोई तीन शिखा कोई पाँच शिखा इसका निर्देश किया है। गोभिलगृह्यसूत्र के २।९।२३ वें सूत्र में 'यथागोत्रकुलकल्पं' के द्वारा गोत्र और कुल के अनुसार शिखा रखने का या सम्पूर्ण मुण्डन कराने का विधान कराने का विधान मिलता है। आपस्तम्बगृह्यसूत्र के सोलह खण्ड के ६।७ में प्रवराध्याय में विहित ऋषि की गणना के अनुसार शिखा जाननी चाहिए (यथर्षिशिखा निदधाति यथा वैषां कुलधर्मः) बोधायन गृह्य सूत्र के अनुसार भी यही अर्थ अवगत होता है। अथैनमेकशिखत्रिशिखपञ्चशिखो वा यथैवैषां कुलधर्मः। यथर्षिशिखां निदधातीत्येके (बोधायन २।४) वशिष्ठ गोत्र वाले दक्षिणभाग में एक शिखा। अत्रि और कश्यपगोत्र वाले उत्तर-दक्षिण दोनों भागों में एक-एक दो शिखा। कुण्डपायी में तीन शिखाएँ अंगिरा और भृगु गोत्र वाले पाँच शिखा। फलतः प्रवर और ऋषि के भेद के अनुसार शिखा की संख्या निर्धारित होती है। पूर्वपक्षियों ने प्रदर्शित शिखा कर्म अर्थात् गोत्र विशेष में पृथक्-पृथक् भाग में निबद्ध शिखाओं के अनुसार इसका भी भिन्न-भिन्न रूप से कर्तव्य का निर्धारण किया है। जैसे शिखा कर्म सभी व्यक्तियों के लिए समान रूप में कर्तव्य नहीं है, वैसे ही होलाक आदि कर्म भी सभी के लिए कर्तव्य नहीं है। जैसे भृगु गोत्रियों के लिए पंच अवदान अर्थात् चक्र आदि विधिविहित संस्कारात्मक खण्डकरण आदि शास्त्रीय कर्म का निर्वाह होता है। किन्तु होलाक आदि के लिए वैसा विनियोग नहीं है। इस लिए यह सभी के लिए कर्तव्य है।

दर्शनात्=शिखा कर्म में शास्त्रीय व्यवस्था देखी गयी है, अतः विनयोगःस्यात्=विशेष नियोग या नियम हो सकता है, किन्तु शिखा भेद के कारण बालक के गोत्र की अवगति और गोत्रानुसार शिखाओं की व्यवस्था है, किन्तु प्रकृत कर्म में न तो कोई ऐसा दृष्ट साधन है और न तो कोई नियमित हेतु है जिससे इन कर्मों को व्यक्ति विशेष के लिए व्यवस्थित किया जा सके ॥ १७ ॥

## लिङ्गाभावाच्च नित्यस्य ॥१८॥

**शा० भा०—इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। कानि तानि पदानि? अथ किमर्थं न लिङ्गाद् व्यवस्था? यथा 'शुक्लो होता' इति। नास्ति तन्नित्य-**

मेषां लिङ्गम् । यद्यथादर्शनमनुवर्तते । येऽपि श्यामा बृहन्तो लोहिताक्षास्तेऽपि न सर्वे आह्नीनैबुकादीन् कुर्वते । अनेवंलिङ्गा अपि चानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति प्रत्यक्षा श्रुतिः ॥ १८ ॥

भा० वि०—स्वपक्षस्थापनस्य परपक्षबीजनिरासस्य च कृतत्वादुत्तरसूत्रानर्थक्यमाशङ्क्याह—**इदमिति** । पदानि-शङ्कापदानि । तेभ्य उत्तरमूर्ध्वमुपरिष्टादित्यर्थः, केभ्यश्चिदित्यनास्थाममृष्यन्नाह—**कानीति** । शङ्कावाक्यं विशदयति—**अथेति** । यद्यप्याकृत्यादीनां कर्तृविशेषणानामसंभवः, तथापि शुक्लत्वलोहिताक्षत्वश्यामत्वादीनां कर्तृलिङ्गभूतानां विशेषणानां व्यवस्थितानां संभवात् तद्वाच्युपपदयुक्तया श्रुत्या विशेषविनियोगः स्यादिति भावः । सूत्रं योजयन्नुत्तरमाह—**नास्ति तन्नित्यमिति** । यल्लिङ्गं येषां होलाकादिधर्मदर्शनम्, तेष्वनुवर्तेत ततोऽन्येभ्यो निवर्तेत च तन्नित्यं नियतं किमपि न संभवतीत्यर्थः, अनेन च नित्यस्य नियतस्य व्यवस्थितस्य कर्तुर्यल्लिङ्गं तन्नियतं तस्याभावादिति सूत्रं योजितम् ।

ननु वर्णसंस्थानादिलिङ्गसंभवो दर्शितः तत्राह—**येऽपीति** । अन्वयव्यभिचारमुक्त्वा व्यतिरेकव्यभिचारमाह—**अनेवं लिङ्ग इति** । तेन वर्णाश्रमव्यवस्थितत्वात्तद्वाच्योपपदयुक्तविधानश्रुतिष्यव्यवस्थेति निगमयति - **तस्मादिति** ॥ १८ ॥

त० वा०—व्यक्त्याकृत्यभिधेयेऽर्थे प्रत्याख्याये विशेषणे ।
लोहिताक्षादिचिह्नानामधुनाऽन्या निराक्रिया ॥ ६६४

जातिव्यक्तिवाच्युपपदाभावेपि, कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवदधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते—

**लिङ्गाभावाच्च नित्यस्य** नास्ति कर्तुर्विशेषणम् ।
नियतेन हि लिङ्गेन नित्यः कर्तोपलक्ष्यते ॥ ६६५

यच्चिह्नं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते ।
अन्येषामपि तद् दृष्टं तदनाचरतामपि ॥ ६६६

दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि ।
तस्माद्व्यवस्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥ ६६७

यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते, तस्योपसर्जनीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात्स्वार्थाक्षिप्तसंबन्ध्यन्तरत्वेन सामर्थ्यविघाताभावाद्भवितव्यमेवेह समासेन, देवदत्तस्य गुरुकुलमिति यथा ।

नैतत्तुल्यमनेनेष्टमपेक्षान्तरसंगतेः ।
नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥ ६६८

गुरुशब्दस्य हि शिष्यापेक्ष एवाऽऽत्मलाभ इति, देवदत्तशब्दोपात्तशिष्य-संबन्धानतिरेकान्तर्णीतस्वार्थत्वान्नाभ्याधिकापेक्षाकृतसामर्थ्यप्रतिवन्धप्रसङ्गः ।

इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया ।
न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥ ६६९

यद्यपि चैष गम्यगमकसंबन्धे सति लिङ्गशब्दः प्रवर्तते, तथाऽपि गुरुशिष्य-पितापुत्रादिसंबन्धवन्नास्य तदपेक्षप्रवृत्तिनिमित्तसंबन्धिशब्दत्वप्रसिद्धिः ।

लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते ।
लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥ ६७०

लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति, न संबन्धि-शब्दत्वेनोच्यते, तथाऽपि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति, कामं 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यत्वं पुनर्लब्ध-स्वार्थलिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपदीयत इति, तत्संबन्धापेक्षायामपरिहा-र्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधि-कारविशेषणं वा नियतस्य कर्तुःनैत्यस्याधिकारस्य वा न प्रतिपादकं किंचिच्चिह्न-मस्तीति, न तदभिधाय्युपपदविशेषितव्यत्रस्थितहोलाकादिविधानोपपत्तिः ॥१८॥

भा० प्र०—इस प्रकार के लक्षण से विशिष्ट व्यक्ति इस कर्म का सम्पादन करते हैं। जैसे श्यामवर्ण वृहत्काय लोहितवर्ण नेत्रों से युक्त व्यक्ति आह्नीनैवुक वादि अनुष्ठान करते हैं, इसी प्रकार होलाकादि आचार को भी देश विशेष से आवद्ध कर दिया जाय। इस पूर्वपक्ष के समाधान में कहा गया है कि—यह सङ्गत नहीं है। क्योंकि, अन्य स्थान में स्थित उन लक्षणों से विशिष्ट व्यक्ति इसका आचरण न करें यह कहने पर लक्षण की अव्याप्ति होगी। एवं जो उन लक्षणों से विशिष्ट नहीं है—इस प्रकार के अनेक व्यक्ति भी स्थान विशेष सम्बद्ध होने के कारण इसका आचरण करेंगे अतः, इस लक्षण की अतिव्याप्ति भी होगी। अतः, पूर्वपक्ष के समर्थन में नियम की व्यवस्था नहीं हो सकेगी।

प्रकृत सूत्र के विश्लेषण में नित्यस्य का लिङ्ग के साथ अन्वय होने से लिङ्गाभावाच्च इसमें समास कैसे हो सकता है? क्योंकि सापेक्ष शब्दों का विशेष प्रमाण रहने पर ही समास होता है। देवदत्तस्य गुरुकुलम् इस पद में यतः गुरु पद नित्य सापेक्ष शब्द है, क्योंकि, किसी का गुरु होगा, अतः, सापेक्ष रहने पर भी समास माना गया है, किन्तु, प्रकृत में ऐसी बात नहीं है। इसलिए वार्तिककार ने इस विषय पर विस्तृत विचार प्रस्तुत किया है।

लिङ्गाभावात् = लिङ्ग अर्थात् चिह्न न होने से च = एवं, नित्यस्य = नित्य अधिकारी का। आशय यह है कि होलाक आदि कर्मों के अधिकारी कर्ता का नियमित पृथक् रूप में निर्द्धारित होने योग्य चिह्न न होने से होलाक आदि देश-विशेष से आबद्ध कर्म नहीं है ॥१८॥

## आख्या हि देशसंयोगात् ॥१९॥

**शा० भा०—अथ कस्मान्न समाख्यया नियमः। ये दाक्षिणात्या इति समाख्याताः ते आह्नीनैबुकादीन् करिष्यन्ति। य उदीच्या इति[1] समाख्याताः ते उद्वृषभयज्ञादीन्, ये प्राच्या इति, ते होलाकादीन्। यथा राजा राजसूयेनेति। नैतदेवम्। देशसंयोगादाख्या भवति। दक्षिणदेशान्निर्गतः प्राक्षु वोदक्षु वाऽवस्थित[2] आह्नीनैकबुकादीन् करोत्येव। उदीच्याश्च[3] देशान्तर उद्वृषभयज्ञादीन्, प्राच्याश्च होलाकादीन्। अन्यदेशश्च देशान्तरगतो न नियोगतः परपदार्थान्[4] करोति। तस्मान्न[5] व्यवस्था। 'राजा राजसूयेनेति तु नियता जातिः ॥ १९ ॥ इति आशङ्कानिरासः।**

भा० वि०—आख्या हि देशसंयोगादित्यपि सूत्रं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कामाह—**अथ कस्मादिति**। प्राच्यादिसमाख्यया कर्तृनियमं विवृणोति—**ये दाक्षिणात्या इतीति**।

ननु प्रागादिदेशसंयोगस्य प्राच्यादिशब्दप्रवृत्तिनिमित्तस्याभावेनासमाख्याभावेऽपि देशान्तरगतानां होलाकाद्यनुष्ठानदर्शनात् देशान्तरादागत्य तद्देशनिवासिनां च सत्यामपि प्राच्यादिसमाख्यायामनुष्ठानादर्शनात् कथं समाख्याया नियम इत्याशङ्क्य—नेयं समाख्या देशसंयोगनिमित्ता, किंतु जात्यादिनिमित्तेत्यभिप्रायेणाह—**यथा राजेति**। एतद् दूषयति—**नैतदेवमिति**। सर्वप्राच्यादिसमाख्यातपुरुषव्यक्तिवर्तिनो तत्समाख्येभ्यश्च व्यावृत्तस्य जात्यादेरदर्शनान्न तन्निमित्तेयं समाख्या किंतु देशसंयोगनिमित्तैवेत्यर्थः। ततः किमत आह—**दक्षिणादेशादित्यादिना**। देशसंयोगाभावेन तन्निमित्तसमाख्याभावेऽपि अनुष्ठानवत्सत्यामपि समाख्यायामनुष्ठानमाह—**अन्यदेशजश्चेति**। तस्मान्न समाख्याधीना

---

१. ब. इति त उद्वृषभ।

२. शिष्टाश्च पौर्णमास्याख्ये काले आह्नीनैबुकसंज्ञकान् स्वस्वकुलोचितान् देवविशेषेभ्यः क्षीरदध्यादिसमर्पणादिकान् धर्मविशेषान् मानुवारादिकालविशेषे समाचरन्ति इति कालनिर्णये माधवः।

३. ब. उदीच्यश्चोद्वृषभ। ४. ब. नियोगतः पदार्थान्। ५. ब. तस्मादव्यवस्था।

कर्तृव्यवस्थेति निगमयति—**तस्मादिति**। राजादिषु तु नियता राजत्वादिजातिरनुभवसिद्धेति विशेषमाह—**राजेति** ॥ १९ ॥

त० वा०- इदानीं तु यदाचारमत्यन्तमनुवर्तते।
तत्प्राच्यादिसमाख्याख्यमुपन्यस्तं विशेषणम् ॥ ६७१

सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते, समाख्यावर्जितेषु च नोपलभ्यन्ते। तस्मात्समाख्याविशिष्टविध्यनुमानात्तत्संयुक्तप्रमाणपक्ष एव ज्यायानिति।

तत्र समाधिः—

आख्या हि देशसंयोगाद्यस्मात्कर्तृषु वर्तते।
आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥ ६७२

देशश्च दिग्विशिष्टः स्याद्दिग्रूपं चानवस्थितम्।
न च तद्देशसंबन्धादनाचारोऽनुवर्तते ॥ ६७३

निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्यदर्शनात्।

समाख्यायास्तावन्न देशादन्यन्निमित्तमस्ति। तद्विशिष्टविधिविहिताश्च-आचाराः केवलमेव तद्देशसंबन्धमनुवर्तेरन्। उभयथाऽपि तु व्यभिचारान्न देशनिमित्तसमाख्याविशिष्टविधानकल्पा घटते ॥ १९ ॥

न्या० सु०—अथेत्यादिभाष्येणेदमपि सूत्रं पदोत्तरत्वेन व्याख्यातम्। प्राच्यादिसमाख्याकर्तृविशेषणत्वेनाशङ्किता तत्र संस्थादिवत्समाख्याया अपि व्यभिचारदर्शनात्केनचिद्विशेषेणोपन्यास इत्याशङ्क्याह—**इदानीमिति**। ननु देशान्तरादागत्य प्राग्देशे वसतां प्राच्यत्वे सत्यपि होलाकाद्यनुष्ठानादर्शनात्प्राग्देशाच्च निर्गत्य देशान्तरे वसतां प्राच्यत्वाभावेऽप्यनुष्ठानदर्शनात्कथं समाख्याया अप्यत्यन्तानुवृत्तिरित्याशङ्क्याह—**सर्वे हीति**। नेयं देशनिमित्ता समाख्या, किं तु जात्यादिनिमित्ता, अभिमानमात्रनिमित्ता वेत्युत्तरसूत्रे वक्ष्यमाणोऽभिप्रायः। एतदेव पूर्वपक्षिणो विशेषणमभिमतमिति सूचयितुमत्रैवार्थे अनुमानव्यवस्थापनादिति पूर्वपक्षसूत्रं योजयति—**तस्मादिति**।

सूत्रव्याख्यानार्थं नैतदेवमिति भाष्यं व्याचष्टे—**तत्रेति**। सर्वप्राच्यादिसमाख्यातपुरुषव्यक्तिवर्तिनस्तदसमाख्येभ्यश्च व्यावृत्तस्य जात्यादेरदर्शनान्निर्मूलस्य चाभिमानस्यायोगादित्याशयः। देशविशेषणत्वे को दोष इत्यपेक्षायां 'नैतदेवमिति भाष्येण सूचितं तावद्दोषमाह—**देशश्चेति**। ननु दिग्रूपानवस्थानेऽपि विन्ध्यापेक्षया निरूढोदीच्यादिदेशव्यवस्थादर्शनान्न देशविषणत्वेऽपि कश्चिद्दोष इत्याशङ्कानिराकरणार्थं दक्षिणादित्यादिभाष्यं व्याचष्टे—**न चेति**। देशविशेषणत्वाभिधानाभिप्रायविवरणपूर्वकं श्लोकं व्याचष्टे—**समाख्यायास्तावदिति**। उभयशब्दोऽन्वयव्यतिरेकाभिप्रायः ॥ १९ ॥

भा० प्र०—यदि यह कहा जाय कि दाक्षिणात्य संज्ञा से अभिहित होने वाला व्यक्ति आह्लीनैबुक आदि का आचरण करे। प्राच्य संज्ञा से परिचित होने वाला व्यक्ति होलाक आदि का अनुष्ठान करे। उदीच्य संज्ञा से अभिहित होने वाला व्यक्ति उद्वृषभ आदि यज्ञों का अनुष्ठान करे—यह निर्णय भी ठीक नहीं है, क्योंकि संज्ञा देश-संयोग-निमित्तक होने से जो व्यक्ति दाक्षिणात्य देश का परित्याग कर उत्तरखण्ड या पूर्व देश में रहता है, वह भी आह्लीनैबुक आदि सम्पादन करता ही है। किन्तु सम्प्रति वह दाक्षिणात्य शब्द से अभिहित नहीं किया जाता है वरन् वह उदीच्य या प्राच्य कहा जाता है। इसी प्रकार उदीच्य देश और प्राच्य देश से जाकर जो व्यक्ति दक्षिण में निवास करता है, वह भी वहाँ जाकर भी होलाक और उद्वृषभ का अनुष्ठान करता है, किन्तु उस समय उनको प्राच्य या उदीच्य नहीं कहा जाता है, अतः होलाक आदि को समाख्या=संज्ञा के द्वारा देश विशेष से आवद्ध करना उचित नहीं है।

आख्या=समाख्या अर्थात् दाक्षिणात्य, प्राच्य, उदीच्य आदि प्रकृति प्रत्यय से निष्पन्न शब्दमूलक संज्ञा। हि=यतः क्योंकि, देशसंयोगात्=देश के सम्बन्ध के अनुसार होती है। दाक्षिणात्य आदि संज्ञायें देश के साथ सम्बन्ध के अनुसार ही होती है, अतः ये संज्ञायें कर्तव्य का विशेषण नहीं हो सकती है॥ १९॥

## न स्याद्देशान्तरेष्विति चेत् ॥२०॥

**शा० भा०—इति चेत् पश्यसि? यदि देशसंयोगादाख्या भवेद् देशान्तरस्थस्य न भवेत्। भवति च देशान्तरस्थस्य माथुर इत्यसंबद्धस्यापि मथुरया। तस्मान्न देशसंयोगादाख्या॥ २०॥ इति आशङ्का।**

भा० वि०—प्राग्देशादिसंयोगस्य व्यभिचारित्वेन प्राच्यादिसमाख्यादिनिमित्तत्वासंभवान्निर्निमित्तत्वासंभवाच्च जात्यादिनिमित्तत्वे सति समाख्यायाः कर्तृविशेषः सिद्ध्येदित्याशङ्कते—**न स्यादिति**। यदि देशसंयोगनिमित्ता समाख्या देशान्तरेषु गतस्य न स्यादिति सूत्रं व्याचष्टे—**इति चेदिति**। असम्बद्धस्यापि मथुरया माथुर इत्याख्यादर्शनान्नेदमिष्टापादनमित्याह—**भवति चेति**। यस्माद्व्यभिचारान्न देशसंयोगनिमित्तेयं समाख्या, तस्माद्व्यवस्थितप्राच्यादिव्यवहारानुपपत्तिकल्पितप्राच्यत्वादिजातिनिमित्तेवेत्युपसंहरति—**तस्मादिति**॥ २०॥

त० वा०—अपरस्त्वनयैवोपपत्त्या लब्धात्मीयपक्षोपपत्तिः प्रत्यवतिष्ठमान आह—**'न स्याद्देशान्तरेष्विति चेत्'** इति।

यदि देशनिमित्तत्वात्समाख्या दूषिता त्वया।
शक्यमन्यनिमित्तत्वं वक्तुमस्या मया पुनः॥ ६७४

सति देशनिमित्तत्वे न स्याद्देशान्तरेष्वियम् ।
तस्मात्किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥ ६७५

अस्तु वा निर्निमित्तैव विशेक्ष्यति तथाऽपि तु ।
लब्धाचारनिमित्तानां किं निमित्तान्तरेण नः ॥ ६७६

तस्मादनिमित्तया समाख्ययैवाधिकारविशेषसिद्धेर्न व्यभिचारिदेशनिमित्तत्वमस्याऽकल्पयितव्यमित्युक्ते ॥ २० ॥

न्या० सु०—इत्याशङ्कासूत्रं पूर्वपक्षानौपयिकत्वेनायुक्तमाशङ्क्य देशनिमित्तायाः समाख्यायाः व्यभिचारित्वेन विशेषणत्वायोगादव्यभिचारिनिमित्तान्तरकल्पनार्थत्वेन पूर्वपक्षोपयोगितां दर्शयन्नवतारयति—अपरस्त्विति । यथैव देशसंयोगव्यभिचारलक्षणयोपात्त्या तन्निमित्तायाः समाख्यायाः व्यभिचारोऽभिहितः, तथैव देशनिमित्तत्वायोगान्न देशव्यभिचारेण समाख्याव्यभिचार इत्यस्ति यस्य, समाख्याविशेषणत्वं पक्षस्योपपत्तिलब्धपूर्वपक्षिणेत्यर्थः । कीदृशं प्रत्यवस्थानमित्यपेक्षायामाह—यदीति । सूत्रव्याख्यानार्थमिति चेदित्यादिभाष्यं व्याचष्टे—सतीति । किं तर्ह्येतन्निमित्तमित्याशङ्क्याह—तस्मादिति । अनौपाधिकसन्तानविशेषव्यवस्थितप्राच्यादिव्यवहारान्यथानुपपत्त्या ब्राह्मण्यादिवत्प्राच्यत्वादिजातिरपि कल्पयितुं शक्यते । तदसम्भवेऽपि वा सन्तानविशेष एव प्राच्यादिशब्दवाच्यो भविष्यतीत्याशयः ।

निमित्तान्तरासम्भवेऽपि प्राच्यादिशब्दप्रयोगपरम्परामूलाभिमानमात्रनिबन्धना भविष्यतीत्याह—अस्तु वेति । ननु शब्दप्रयोगपरम्परैव किं निमित्तेत्याशङ्क्याह—लब्धेति । लब्धं प्राच्यादिसमाख्याख्यमाचारनिमित्तं यैरिति विग्रहः । नोऽस्माकमित्यन्यपदार्थः । सूत्रतात्पर्यप्रदर्शनार्थं तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति । इति सूत्रमाशङ्कानिराकरणार्थत्वेनावतारयति—इत्युक्त इति ॥ २० ॥

भा० प्र०—इस प्रसङ्ग में यह कहा जा सकता है कि दाक्षिणात्य आदि दक्षिणदेशवासी पूर्व देश में निवास करने पर भी प्राच्य संज्ञा से उनका व्यवहार नहीं होता है, वरन् उस स्थान में भी दाक्षिणात्य शब्द से ही विख्यात रहते हैं, अतः यह मानना होगा कि प्राच्य आदि देशों में जाकर निवास करने पर भी वह प्राच्य नहीं होता है। जैसे मथुरा देश में रहने वाला व्यक्ति यदि विहार देश में जाय तब भी वह वहाँ माथुर शब्द से ही व्यवहृत होता है। अतः अन्य देश में निवास करने से उस देश के संयोग से उसकी संज्ञा का परिवर्तन नहीं हो जाता है—यह कथन ठीक नहीं है। इसलिए दाक्षिणात्य, प्राच्य इत्यादि संज्ञा के द्वारा ही होलाक आदि आचार देश विशेष में व्यवस्थित होगा।

न स्यात् = होगा नहीं, देशान्तरेषु = अन्य देश में, इति चेत् = यदि यह कहा जाय ॥ २० ॥

## स्याद्योगाख्या हि माथुरवत् ॥२१॥

शा० भा०—देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा। यत एषा योगाख्या, योगमात्रापेक्षा, न भूतवर्तमानभविष्यत्सम्बन्धापेक्षा। यतो दृश्यते मथुरामभिप्रस्थितो माथुर[1] इति मथुरायां वसन् मथुराया निर्गतश्च[2]। यस्य त्वतोऽन्यतमः[3] सम्बन्धो नास्ति न स माथुरः। तस्मान्न समाख्यया व्यवस्था ॥ २१ ॥ आ० नि०।

भा० वि०—परिहरति—इति, स्यादिति प्रतिज्ञां व्याचष्टे—यत इति। देशसंयोगविशेषव्यभिचारेऽपि तत्संयोगमात्रस्याव्यभिचारेण समाख्यानिमित्तत्वसंभवे प्राच्यत्वादिजातिकल्पना न युक्तेत्यर्थः, माथुरवदिति दृष्टान्तं व्याचष्टे—यतो दृश्यत इति। मथुरामभिप्रस्थित इति तूदाहरणं यद्यपि दूतादिविषयं न च प्राग्देशमभिप्रस्थितो दूतः प्राच्यो होलाकाद्यधिकरोति तथाप्येवमपि प्रत्ययोपपत्तिरित्येतावन्मात्रप्रदर्शनायोदाहृतम्।

नन्वेवं देशसंयोगमात्रनिमित्ता समाख्या होलाकाद्यधिकारं विशिष्यात्तत्राह—यस्य त्विति। चिरनिर्गतपुरुषपुत्रादीनां देशसंयोगमात्रस्याप्यभावे समाख्यादर्शनात् न तन्निमित्तापि समाख्येत्यर्थः। समाख्यायां नियतनिमित्ताभावे फलितमाह—तस्मादिति। श्यामत्वादिकर्तृविशेषणवाच्युपपदासंभवेऽपि कर्माङ्गभूतदेशविशेषणवाचिनः संभवात्तद्युक्ता श्रुतिरनुमेयेति शङ्कते इति ॥ २१ ॥

त० वा०—अभिधीयते—

संबन्धैर्बहुभिर्देशमाख्या हि प्रवर्तते।
निवासभवजातत्वतदागमनहेतुभिः ॥ ६७७

'सोऽस्य निवासः' 'तत्र भवः,' 'तत्र जातः' 'तत आगतः' इत्येवमादिनिमित्तपरित्यागेन न कदाचित्प्राच्यादिसमाख्या वर्तते। न चैषा देशसंयोगं व्यभिचरति। न चैनामाचारोऽनुवर्तते, तन्निवासिनामपि केषांचिदनाचरणाच्चिरनिर्गतपुत्रपौत्रादीनां च देशान्तरेष्वप्याचरणादिति न समाख्यया नियतविधिसिद्धिः।

---

१. ब. माथुरः मथुरायां। २. ब. निर्गतः यस्य। ३. ब. त्वन्यतमः।

## भाष्यमते दूषणम्

यत्तु मधुराममभिप्रस्थितो माथुर इति भाष्यकारेणोक्तं तत् 'तद्गच्छति पथि दूतयोः' इति वा दुतविषयं कल्पयितव्यम्। अप्रत्ययितोक्तत्वाद्वोपेक्षितव्यम्। सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ॥ २१ ॥

न्या० सु०—देशसंयोगनिमित्तायामित्यादिभाष्येण देशसंयोगविशेषव्यभिचारेऽपि देशसंयोगमात्रस्याव्यभिचारान्निमित्तत्वाभिधानार्थत्वेनैतत्सूत्रं व्याख्यातम्। तत्र भूतादिशब्ददर्शनात्कालविशेषावच्छेदेन देशसंयोगस्य विशेषणरूपत्वोक्ता प्रतिभाति। सा च देशसंयोगनिमित्तानां तद्धितानां कालविशेषविषयत्वेनास्मृतेरयुक्तेत्याशङ्क्याह—सम्बन्धैरिति। भूतशब्देन तदागमनहेतुकः सम्बन्धोऽभिप्रेतः। वर्तमानशब्देन निवासहेतुकः। गर्भसम्भवलक्षणभवहेतुकस्य प्रसवलक्षणजातत्वहेतुकस्य चोभयरूपतोक्ता। भविष्यच्छब्देन वहुशब्दः सूचितः प्रस्थानहेतुकोऽभिप्रेतः। श्लोकं व्याचष्टे - सोऽस्येति। नन्वेवं सति देशसंयोगमात्रनिमित्ता समाख्याप्यव्यभिचाराच्छक्नोत्येव कर्तारं विशेष्टुमित्याशङ्क्याह - न चैनामिति। चिरनिर्गतस्य पुरुषस्य पुत्रादीनां पूर्वदेशगर्भसम्भवस्यथाप्ययोगादित्याशयः। अनेन यस्य त्वतोऽन्यतमः सम्बन्धो नास्ति। न स माथुर इति दृष्टान्तभाष्यं सूचितम्। यस्य चिरनिर्गतपुरुषपुत्रादेरतोऽन्यतमः सम्बन्धो नास्ति, न स प्राच्यसमाख्यः। अथ च होलाकादीन्करोतीति समाख्याव्यभिचारप्रतिपादनं विवृतम्। तस्मादित्युपसंहारभाष्यं व्याचष्टे—इतीति।

ननु मथुराभिप्रस्थित इति भाष्यं किमित्युपेक्षितमित्याशङ्क्याह—यत्त्विति। नन्वेवं दूतविषयत्वेन कस्मान्न व्याख्यातमित्याशङ्क्याह—अप्रत्ययितेति। प्राग्देशमभिप्रस्थितो दूतः प्राच्योऽनेन दृष्टान्तेनापाद्येत। न दौत्ये व्यापृतस्य होलाकाद्यनुष्ठानं दृश्यत इत्याशयः ॥ २१ ॥

मा० प्र०—पूर्वोक्त शङ्का के निराकरण प्रसङ्ग में सूत्रकार ने कहा है कि मथुरावासी जब मथुरा में ही निवास करता है, उस समय जिस अर्थ में उसको माथुर कहा जाता है, पूर्व देश में जाकर निवास करने के समय उस अर्थ में उस व्यक्ति के लिए माथुर शब्द का प्रयोग नहीं होता है। क्योंकि उस स्थान में उत्पन्न (तत्र भवः) इस अर्थ में तद्धित प्रत्यय होता है, वैसे ही वहाँ से आया (तत आगतः) इस अर्थ में भी तद्धित प्रत्यय होता है। अतः, प्राच्य देश में निवास के समय उसको मथुरायाः आगतः अर्थात् मथुरा से आया है, इस अर्थ में ही माथुर शब्द का प्रयोग होता है, अतः पूर्व सूत्र से प्रदर्शित आशङ्का समीचीन नहीं है। इसलिए दाक्षिणात्य आदि देश की संज्ञा के आधार पर आचार की देश व्यवस्था नहीं हो सकती है।

स्यात् हि=अवश्य ही होगा, योगाख्या=प्रकृति प्रत्यय से उत्पन्न संज्ञा, माथुरवत्=माथुर शब्द के समान है।

तन्त्रवार्तिक में अनेक सूत्रों के आधार पर इस संज्ञा को प्रदर्शित किया है। यथा

तत्र, जातः (४।३।२५) इस पाणिनि सूत्र से उस स्थान में जन्म ग्रहण करने के अर्थ में अण् प्रत्यय का प्रयोग होता है—माथुरः=मथुरा में उत्पन्न व्यक्ति।

प्रायो भवः (४।३।३९) उस स्थान में प्रायः रहने पर भी अण् प्रत्यय होने से यह प्रयोग हो सकता है, यथा मथुरा में प्रायः अर्थात् अधिक रहने वाले व्यक्ति के लिए माथुरः यह प्रयोग हो सकता है।

सम्भूते (४।३।४१) वहाँ पर होने की सम्भावना में भी अण् प्रत्यय होने से यह प्रयोग हो सकता है। यथा -मथुरा में होने की सम्भावना से=माथुरः।

तत्र भवः (४।३।५३) वहाँ पर विद्यमान इस अर्थ में भी अण् प्रत्यय होने से मथुरा में वर्तमान व्यक्ति के लिए भी माथुरः प्रयोग होता है।

तत आगतः (४।३।७४) वहाँ से आया हुआ इस अर्थ में भी अण् प्रत्यय होने से मथुरा से आए हुए व्यक्ति जो अन्य स्थान में निवास कर रहा है, उसके लिए भी माथुरः प्रयोग होता है।

प्रभवति (४।३।८३) जिस स्थान में प्रथम प्रकट हुआ।

जैसे—हिमवान् से प्रकट गङ्गा के लिए हैमवती गङ्गा प्रयोग होता है।

तद् गच्छति पथिदूतयोः (४।३।८५) उस स्थान में जाने वाले मार्ग और उस स्थान में जाने वाले दूत के अर्थ में भी अण् प्रत्यय होने से यह प्रयोग होता है, जैसे मथुरा की ओर जाने वाला मार्ग या दूत के लिए माथुरः यह प्रयोग होता है।

अभिनिष्क्रामति द्वारम् (४।३।८६) उस तरफ खुलने वाला द्वार या उस ओर निकलने वाले द्वार के अर्थ में भी अण् प्रत्यय होने से इस अर्थ में भी यह प्रयोग होता है। यथा—मथुरा की ओर का द्वार माथुर कहा जाता है।

सोऽस्य निवासः (४।३।८९) जहाँ निवास का स्थान रहता है इस अर्थ में भी अण् प्रत्यय होता है। जैसे मथुरा में जिसका निवास है—वह माथुर है।

अभिजनश्च (४।३।९०) पूर्वजों के निवास के अर्थ में भी अण् प्रत्यय होता है। यथा मथुरा में जिसके पूर्वजों का निवास है; वह भी माथुर है।

भक्ति (४।३।९५) जो स्थान उसका सेवनीय रहता है, इस अर्थ में भी अण् प्रत्यय होने से वह माथुर कहा जाता है।

तस्येदम् (४।३।१२०) उसका यह समान है, इस अर्थ में अण् प्रत्यय होने से यह प्रयोग होता है जैसे—मथुरा का यह पदार्थ माथुर।

इस प्रकार माथुर शब्द से अनेक अर्थों की प्रतीति होने से माथुर शब्द के प्रयोग से केवल उसी अर्थ की प्रतीति सम्भव नहीं है॥ २१॥

**कर्मधर्मो वा प्रवणवत् ।। २२ ।।**

**शा० भा०—अथ कस्मान्न कर्माङ्गं देशः[1] । यः कृष्णमृत्तिकाप्रायः, स आह्नीनैबुकादीनाम् । यथा प्राचीनप्रवणे वैश्वदेवेन यजेत' इति ।। २२ ।। आशङ्का ।।**

भा० वि०—ननु कर्तृविशेषणश्यामत्वादिवद्देशविशेषणप्राक्त्वकृष्णमृत्तिकाप्रायत्वादेरपि व्यभिचाराविशेषात् कथमियमाशङ्केत्याशङ्क्य व्याचष्टे—अथ कस्मादिति । कर्तॄणामानन्त्यादेकविशेषणासंभवेऽपि देशस्यैक्यादेकविशेषणोपपदस्यैव कर्मधर्मता कस्मान्न भवेदित्येतावानेवाभिप्राय इत्यर्थः । किं विशेषणविशिष्टोऽसौ देशः कर्माङ्गमिति तत्राह—**य इति** । यश्च प्राक्त्वादिविशेषणविशिष्टस्य होलाकादीनामित्यादि द्रष्टव्यम् । देशविशेषस्य कर्माङ्गत्वे दृष्टान्तं दर्शयन् प्रवणवदिति व्याचष्टे—**यथेति** ।। २२ ।।

त० वा०—इदानीं कर्तृविशेषणविशिष्टविध्यनुमानात्प्रतिहतः कर्माङ्गभूतप्राग्देशादिविध्यनुमानसंभवं मन्यमान आह—**'कर्मधर्मो वा प्रवणवत्'** इति ।

प्रागुदक्प्रवणो यद्वत्प्राचीनप्रवणोऽपि वा ।
देशो भवति कर्माङ्गं प्राग्देशादिस्तथा भवेत् ।। इति ।। ६७८

न्या० सु०-सूत्रं कर्माङ्गदेशविशेषणवाच्युपपदशङ्कार्थत्वेनाऽथेत्यादिभाष्येण व्याख्यातम् । तथा मन्वादिकर्तृविशेषणवत् कृष्णमृत्तिकाप्रायत्वादेर्देशविशेषणस्यापि व्यभिचारेग निरस्तत्वात्, प्राच्यादिवच्च प्राक्त्वादेरपि निरस्तत्वात्, केन विशेषेणोपन्यस्त इत्याशङ्क्याह—**इदानीमिति** । कर्तॄणामानन्त्यादसम्भवे प्राक्त्वादेरपि देशस्यैक्यादेव विशेषणोपपत्तेरित्येतावानाशयः ।। २२ ।।

भा० प्र०—देश आदि सम्बन्ध के द्वारा कर्ता की विशेष व्यवस्था न होने पर भी देश आदि के संयोग को कर्म का विशेषण मानकर होलाक आदि कर्मों का देश विशेष में आवद्ध कर प्रतिपादन करने के लिए पूर्वपक्षियों ने कहा है कि "प्राचीनप्रवणे देशे वैश्वदेवेन यजेत" जिस स्थान में प्राचीन प्रवण अर्थात् जिस स्थान में पूर्व दिशा में जल गिरता है उस स्थान में वैश्वदेव यज्ञ करें । इत्यादि स्थलों में जैसे प्राक् प्रवण देश आदि को विशेषण मानने से वह कर्म अन्य स्थान में करणीय नहीं होता है, उसी प्रकार जिस देश की मिट्टी प्रायः कृष्ण वर्ण की ही रहती है, उस स्थान के व्यक्ति आह्नीनैवुक आदि यज्ञ का अनुष्ठान करें—इस रूप में देश व्यवस्था की जाय तो ऐसी स्थिति में उस विशेष देश को छोड़कर यह अन्य स्थान में वह करणीय नहीं हो सकता है ।

कर्म्मधर्म=देश विशेष कर्म का धर्म अर्थात् विशेषण, वा=आशङ्का अर्थ में, प्रवणवत्=प्राचीन प्रवण आदि के समान नहीं ।। २२ ।।

---

१. ब. देशः कृष्ण ।

**तुल्यं तु कर्तृधर्मेण ।। २३ ।।**

**शा० भा०—यथा कर्तर्यव्यवस्थितं[1] लिङ्गं श्यामादि न पदार्थैः संवादमुपैति, तद्वद्देशलिङ्गव्यवस्थितम् । कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति । तथाऽन्यलिङ्गेऽपि[2] कुर्वन्ति । तस्मान्न देशतो व्यवस्था । प्राचीनप्रवणं तु श्रुत्या नियतं वैश्वदेवस्य ।। २३ ।।**

इति सप्तमं होलाकाऽधिकरणम् ।। ६ ।।

भा० वि०--देशैकत्वेऽपि तद्विशेषणानामनवस्थितत्वेन श्यामत्वतुल्यत्वं दर्शयितुं 'तुल्यं तु कर्तृधर्मेण' इति सूत्रं व्याचष्टे—**यथेत्यादिना** । यथा श्यामत्वादिकर्तृलिङ्गमव्यवस्थितत्वादाह्लोनैबुकादिभिः पदार्थैः सह संवादमुपैति, न तन्नियतसहभावि भवति, तद्वद्देशविशेषणमपि प्राक्त्वकृष्णमृतिकाप्रायत्वादि न होलाकादिभिस्सह संवादमुपैति अनवस्थितत्वादिति योजना, कृष्णमृत्तिकाप्रायत्वादेरनवस्थितत्वमुपपादयति---**कृष्णमृत्तिकेति** । अन्ये न कुर्वन्तीति । केचन कुर्वन्ति अन्ये न कुर्वन्तीत्यर्थः । देशविशेषणस्याव्यवस्थितत्वे फलितमाह—**तस्मादिति** । न व्यवस्था होलाकादीनामित्यर्थः । यत्तु प्रवणवदिति तत्राह—**प्राचीनेति** । प्राचीनप्रवणत्वादिप्रत्यक्षश्रुत्या वैश्यदेवस्य नियतमित्यर्थः । तेन कर्तृविशेषणस्य कर्माङ्गविशेषणस्य वा व्यवस्थितस्य कस्यचिदभावान्न तद्वाच्युपपदयुक्तयानुमीयमानया श्रुत्या होलाकादीनां व्यवस्थितधर्मत्वसिद्धिरितिभावः ।। २३ ।।

त० वा०---'**तुल्यं तु कर्तृधर्मेण**' तच्चिह्नमनवस्थितम् ।
दिक्कृष्णमृत्तिकाप्रायप्रभृतिव्यभिचारतः ।। ६७९

प्राग्देशो यो हि केषांचित्सोऽन्येषां दक्षिणापथः ।
तथोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ।। ६८०

मृत्तिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम् ।
होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ।। ६८१

पुरुषापेक्षयाऽऽचारस्तस्मिन्नपि न दृश्यते ।
अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणमिति ।। ६८२

इति सप्तमं होलकाधिकरणम् ।। ७ ।।

न्या० सु०--भाष्ये कृष्णमृत्तिकाप्रायग्रहणं प्राक्त्वादेरुपलक्षणार्थम् । प्राचीनप्रवणोदाहरणं च प्रागुदक्प्रवणस्यापीति व्याचष्टे—**प्रागिति** । तुल्यं तु कतृधर्मणेति सूत्रमव्यवस्थिततुल्यत्वाभिप्रायेण व्यभिचारतुल्यत्वाभिप्रायेण व्याचष्टे—**तुल्यं त्विति** दिक् । कृष्णमृत्तिकाप्राय-

---

१. ब. व्यस्थितश्यामा । २. ब. एतद्वाक्यं नास्ति ।

प्रभृति यत्, तस्य देशस्य चिह्नम्, तदाचारानुमेयश्रुतिगतोपपदवाक्यत्वेनाशङ्कितं तदनवस्थितत्वाद् व्यभिचाराच्च कर्तृधर्मेण प्राच्यत्वादिना, श्यामत्वादिना च तुल्यमित्यर्थः। दिशस्तावद्देशविशेषचिह्नत्वासम्भवमुपपादयति—प्राग्देश इति। कृष्णमृत्तिकादेरनवस्थितत्वं यथेत्यादिभाष्योक्तमुपपादयति—मृत्तिकाद्यपीति। तत्र दक्षिणदेशे अन्यत्र च देशान्तरे तत्समभित्यर्थः। व्यभिचारानवस्थितत्वयोरितरेतरनैरपेक्ष्येऽप्युपपादननिराकरणार्थत्वं दर्शयितुं तस्मादित्युपसंहारभाष्यं तावद् व्याचष्टे—होलाकादीति। कृष्णमृत्तिकाप्रायेणापीति व्यभिचार इत्यादिभाष्यं व्याचष्टे—पुरुषापेक्षयेति। अत्राप्युपसंहारभाष्यमावृत्त्या योजयति—तस्मादिति। कर्तृविशेषवद्देशोऽपि होलाकादिव्यवस्थाकारणं न भवतीत्यर्थः ॥ २३ ॥

**॥ इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वर-विरचितायां तन्त्रवार्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां प्रथमाध्यायस्य तृतीयस्मृतिचरणपूर्वार्द्धम् ॥**

भा० प्र० —श्यामवर्ण वृहत्काय लोहित नेत्र वाले व्यक्ति आह्लीनेबुक आदि कर्म करते हैं, यह कहने पर जैसे वह अव्यभिचरित नहीं होता है, उसी प्रकार जिस देश की मृत्तिका प्रायः कृष्णवर्ण की होती है, वहाँ के व्यक्ति आह्लीनेबुक आदि अनुष्ठान करते हैं—यह कथन भी व्यभिचरित है। क्योंकि, जिस स्थान की मिट्टी काली नहीं है, ऐसे स्थानों में भी लोग इस अनुष्ठान को करते हैं। इसी प्रकार जहाँ की मिट्टी प्रायः कृष्णवर्ण की ही है; ऐसे स्थानों में इसका अनुष्ठान लोग नहीं करते हैं। अतः देश आदि को कर्म का विशेषण करना उचित नहीं है। अतः होलाक आदि देश विशेष में ही कर्तव्य है, अन्यत्र करणीय नहीं है—यह कहना उचित नहीं है।

गौतमीय स्मृति केवल सामवेदियों के लिए ही अवलम्बनीय है—यह कहना भी ठीक नहीं है। यह सत्य है कि गौतम सामवेदीय थे एवं उनकी शिष्य परम्परा भी प्रायः सामवेदीय हो सकते हैं—इसलिए, इस प्रकार की किम्वदन्ती प्रचलित हो गई कि गौतमीय स्मृति समवेदीय के लिए ही अनुसरण योग्य है।

वैश्वदेव यज्ञ की प्राचीन प्रवणता का उदाहरण भी इस स्थान में प्रयोज्य नहीं है, क्योंकि, वैश्वदेव् यज्ञ की प्राचीन प्रवणता साक्षात् श्रुति के द्वारा विहित है, प्रकृति में ऐसा नहीं है।

तु=पूर्व आशङ्का के निवारण के लिए है, कर्तृधर्म्मेण तुल्यम्=कर्तृ विशेषण के समान, देश आदि को कर्ता का धर्म कहना एक ही समान है, कारण उसको कर्ता का धर्म मानने पर जो दोष होगा कर्मधर्म मानने पर भी वे ही दोष होंगे।

आशय यह है कि कर्ता में अव्यवस्थित श्मादि चिह्न कर्मों के साथ एकरूपता सिद्ध नहीं हो पाती हैं, क्योंकि, कृष्ण आदि अव्यवस्थित है। ऐसे स्थान पर भी अनुष्ठान होता है और नहीं भी होता है और अन्यत्र भी होता है, वैश्वदेव यज्ञ के समान होलाक

आदि में कोई देश विशेष सम्बद्ध विधान श्रुति में नहीं है। अतः होलाक आदि देश विशेष में ही अनुष्ठेय नहीं है ॥२३॥

अथाऽष्टमं व्याकरणाधिकरणम् ॥

**[८] प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥२४॥ पू०**

**शा० भा०—गौर्गावी[1] गोणी गोपोतलिका इत्येवमादय. शब्दा उदाहरणम्। गोशब्दो[2] यथा सास्नादिमति[3] प्रमाणम्, किं यथा गाव्यादयोऽपि उत नेति सन्देहः। किमत्रैकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी,[4] इतरेऽपभ्रंशाः, उत सर्वेऽनादय.। सर्व इति ब्रूमः। कुत.? प्रत्ययात्। प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः। तस्मादितो वर्षशतेऽप्यस्यार्थस्य सम्बन्ध आसीदेव, तत.[5] ततश्च[6] परतरेणेत्यनादिता। कर्ता चास्य सम्बन्धस्य नास्तीति व्यवस्थितमेव[7]। तस्मात्सर्वे साधवः, सर्वैर्भाषितव्यम्। सर्वे हि साधयन्त्यर्थम्। यथा[8] हस्तः करः पाणिरिति। अर्थाय ह्येत उच्चार्यन्ते[9], नादृष्टाय। न ह्येषामुच्चारणे शास्त्रमस्ति। तस्मान्न व्यवतिष्ठेत कश्चिदेक एव साधुः। इतिरेऽसाधव इति ॥ २४ ॥ इति पूर्वपक्षः ॥**

भा० वि०—अत्र स्मृत्याचारयोः प्रामाण्ये सिद्धे तदन्तर्गताया व्याकरणस्मृतेरपि सामान्यतः स्मृत्यधिकरणसिद्धमपि श्रुतिमूलतया प्रामाण्यं होलाकाधिकरणप्रसङ्गेनैवानन्तसाध्वसाधुशब्दनिष्ठैकगुणजात्यादिवाचकोपपदयुक्तश्रुत्यनुमानासम्भवेन निर्मूलतयाक्षिप्य समाधीयत इति सङ्गतिः विषयमधिकरणस्य दर्शयति—गौरित्यदिना। संशयमाह—किमत्रेति। गोगाव्यादिषु मध्य एक एव गोशब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधाने त्वनादिप्रयुक्तः, इतरे गाव्यादयो गवादिसाधुशब्दोच्चिचारयिषायां तदसामर्थ्यजनिता उतानादय एव सर्व इत्यर्थः। एतदुक्तं भवति—यदि समूलतया व्याकरणस्य प्रामाण्यात् तदनुगतानामेव गोशब्दादीननामनादिवाचकत्वम्, तदा त एव साधवः। अथ निर्मूलतया व्याकरणस्याप्रामाण्यात् तदनुगमविशेषाभावात् सर्व एव गोगाव्यादिशब्दा अनादयः तदा सर्व एवैते साधव इति सदसन्मूलत्वाभ्यां व्याकरणप्रामाण्याप्रामाण्यसन्देहादेव साध्वसाधुत्वसन्देहो युक्त इति। प्रयोजनं तु विचारस्य पुरुषार्थेषु लौकिकं व्यवहारेषु क्रत्वङ्गभूतेषु च व्रीह्यादिपदार्थविषयव्यवहारेषु साधुभिरेव भाषितव्यमितिनियम-

---

१. गौरित्यस्य शब्दस्य गावी, गोणी, गोता, गोपोतलिकेत्येवमादयोऽपभ्रंशा महाभाष्ये पस्पशाह्निके निर्दिष्टाः १–१–१।

२. ब. यथा गोशब्दःसास्नादि। ३. ब. मतः प्रमाणं। ४. ब. र्थाभिधाने।

५. ब. ततश्च। ६. ब. ततःपर। ७. ब. जै० सू० १–१–५ इत्यत्र।

८. ब. एतन्नास्ति वाक्यम्। ९. न धर्माय।

सिद्धिः। इदानीं शब्देषु न व्यवस्था स्यात् इति सूत्रावयवं व्याकुर्वन् पूर्वपक्षमाह—**सर्वइति—ब्रूम इति**। गोगाव्यादयस्सर्व एवानादयः शब्दाः। न तु कश्चिदनादिः, इतरे अपभ्रंशा इति तेषु व्यवस्था संभवतीत्यर्थः। अत्र प्रमाणं पृच्छति—**कुत इति**। अर्थापत्तिं प्रमाणमाह—**प्रत्ययादिति**। एतद्विवृणोति—**प्रतीयत इति**। प्रयोगप्रत्ययान्यथानुपपत्त्या गाव्यादीनामपि सास्नादिमतार्थेन सहाभिसम्बन्धो अनादिरवगम्यत इति भावः।

ननु गाव्यादिशब्दानामशक्तिजत्वेनाभ्रंशत्वेऽपि सादृश्यात् स्वप्रकृतिभूतगोशब्दोपस्थापनद्वारेणान्यथाप्युपपन्नमर्थप्रत्यायकत्वमत आह—**तस्मादिति**। अगृहीतगोशब्दानामपीदानीं गाव्यादिभ्योऽर्थप्रत्ययदर्शनादेषामेव पूर्वमप्यर्थेन सम्बन्ध आसीदिति निश्चीयत इत्यर्थः। अवश्यस्मरणादप्यनादिरेषां सम्बन्ध इत्याह—**ततश्चेत्यादिना**। सम्बन्धकर्तुः सम्बन्धग्रन्थे निराकृतत्वाच्चानादिरयमित्याह—**कर्ता चेति**। अर्थसम्बन्धस्यानादित्वे फलितमाह—**तस्मादिति**। अस्तु सर्वेषां साधुत्वम्, ततः किमित्याशङ्क्य पूर्वपक्षप्रयोजनमाह—**सर्वैरिति**। यस्मात्सर्वे साधयन्त्यर्थम् तस्मात्सर्वैर्भाषितव्यमिति सम्बन्धः।

ननु सर्वेषां दृष्टार्थप्रत्ययसाधनत्वाविशेषेऽप्यदृष्टार्थो गोशब्दप्रयोगनियमो भविष्यतीत्यत आह—**अर्थायेति**। अर्थप्रतिपत्तिप्रयोजनायेत्यर्थः। कुतो न धर्मायेत्याशङ्क्य प्रयोगोत्पत्त्यशास्त्रत्वादिति सूत्रावयवं योजयति—**न ह्येषामिति**। प्रयोगोपपत्तेर्गवादिशब्दोच्चारणनियमस्याशास्त्रत्वाच्छास्त्राविषयत्वादिति सूत्रार्थः। न च व्याकरणविषयतया शास्त्रविषयत्वमाशङ्कनीयं धर्मार्थस्य साधुप्रयोगनियमस्य, प्रयोगस्य वा साधुस्वरूपनियमस्य निष्प्रमाणकत्वेन तद्विषयव्याकरणस्यापि निर्मूलतया प्रामाण्यासम्भवेन साधव एव प्रयोक्तव्या इति प्रयोगनियमस्य गवादय एव साधव इति साधुस्वरूपनियमस्य चाशास्त्रीयत्वादिति भावः, नियमस्याशास्त्रीयत्वे फलितमाह—**तस्मादिति**। एक एव साधुरितरेऽपभ्रंशा इति व्यवस्थायां सत्यामप्ययमेवैक इति न नियन्तुं शक्यमिति सूचयितुं—**क्वचिदित्युक्तम्**॥ २४॥

## अथाष्टमं व्याकरणाधिकरणम्

त० वा०—एकस्मात्पदात्प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यवस्थितशास्त्रप्रयोगबलेनाव्यवस्थिते लौकिकप्रयोगबाधाद् यववराहादिशब्दानामर्थनिर्णयः प्रतिपादितः। एवं पुनरेकस्मिन् गवादावर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते, तत्र वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्रस्थसर्वशब्दप्रयोगाणां च लौकिकशब्दैरविरोधात् पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात्।

तथा हि—लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते ।

अतो न लौकिकेष्वस्मात्साध्वसाधुत्वनिर्णयः ॥ ६८३

वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनाद्बलाबलमानुपूर्व्येणावधृतम् इह न तु, विपरीतक्रमत्वात् ।

लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता ।
वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥ ६८४
ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् ।
संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥ ६८५

तेन भेरीशङ्खादिशब्दा गकारकादयः प्रत्येकम्, तद्वर्गा वाऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थम्, तेभ्योऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति, सत्यप्येकविषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात्साधुत्वेनावधार्यन्ते ।

ततश्चावाचकत्वेन यद्यसाधुत्वमुच्यते ।
तस्य लोकविरुद्धत्वान्न ग्राह्यत्वं प्रतीयते ॥ ६८६
अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता ।
वेदवाक्यैरनिर्दिष्टा न साऽस्त्यन्यप्रमाणिका ॥ ६८७

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते, तत्समुदायगते वा साधुत्वासाधुत्वे । न वाऽननुभूतसम्बन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियाऽपि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूप-तद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किंचित्प्रमाणत्वेन संभवति । साधुत्वासाधुत्वयोरननुष्ठानात्मकत्वाद्विधिप्रतिषेधविषयत्वम् । अभिधानकरणभूतयोर्विधेयत्वसंभव इति चेत् ?

न । प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः ।

यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति ।
विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥ ६८८
अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः ।
न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ॥ ६८९

व्रीह्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वाद्विधिप्रतिषेधगोचरीभवन्ति[1] न तु गवादिगाव्यादीनां जातिरूपेण, व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते ।

---

१. पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्त्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः । वा० रा० कि० का० सर्ग १७ । श्लो० ३७ । अभिधाभावनेति मु० पु० पा०

न तावत्साध्वसाधुत्वे जातिगुणाद्यात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते, यदालम्बनौ द्वावेव विधिप्रतिषेधावनुमीयेयातां—साधुभिर्भाषित, नासाधुभिरिति ।

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः ।
न त्ववान्तरसामान्ये केचिद्वर्गद्वयस्थिते ॥ ६९०

तेन यद्येकैका व्यक्तिर्विधीयेत, प्रतिषेध्येत वा ततो यावत्पदं वाक्यान्यनुमिमानस्त्रैलोक्यपूरणादप्यधिकानि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावतां कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम् । नित्यानुमेयश्रुतिमूलप्रतिषेधात् ।

न च वाचकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवत—सर्वेषां वाचकत्वात् ।

वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते ।
अवाचकनिषेधश्च नाऽप्राप्तेरवकल्पते ॥ ६९१

न ह्युदकं पिबेदग्नि न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिः असाधुप्रतिषेधश्रुतिः उभयं वा संयोगपृथक्त्वात् कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनमात्रमेव सौकर्यादाश्रितम् । यदि ह्यपशब्दप्रतिषेधमूलं व्याकरणम्, ततस्तेषां बहुत्वादव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तुं शक्यत इति 'पञ्च पञ्चनखा भक्ष्या' इति स्मृतिन्यायेनानुगतविपरीतभाषणप्रतिषेधोऽर्थापत्तिसिद्धः स्मर्यते । साधुविधिपक्षे तु त एव स्मर्तव्या । उभयपक्षे तु तदनुगमादेवेतरसिद्धेः प्रतिषेधविषयज्ञानोपपत्तिः । स एष व्याकरणस्य न पक्षत्रयेऽप्येकानुगमनिबन्धनत्वात्कथंचित्संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावक्लृप्तिः, अनन्तवाक्यपाठासंभवात् । इष्टासंभवदर्शनार्थमेव होलाकाधिकरणेऽभिहितम् । न तस्याऽऽकृतिवचनता न्याय्या, न व्यक्तिवचनतेति । तस्मादसंभवन्मूलत्वादपस्मृतिः ।

अथ प्राप्तश्च योऽर्थः स्यान्न स शास्त्रस्य गोचरः ।
सिद्धः शब्दप्रयोगश्च लोकादेवार्थलक्षणः ॥ ६९२

### कात्यायनवार्तिकावलम्बनेन शङ्का

अथार्थलक्षणत्वेऽपि शास्त्रेण धर्माय प्रयोगनियमात्प्रयोगोत्पत्तिशास्त्रत्वं स्यादिति । तदनुपपन्नम् । नियमा[1]विषयासंभवात् ।

यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते ।
नित्यप्राप्तप्रयोगस्तु न शब्दो नियमास्पदम् ॥ ६९३

---

१. क. (टिप्पण्यां) प्रयोगनियमेति पाठः ।

यस्याप्यत्यन्तमप्राप्तिस्ततोऽन्यो न नियम्यते ।
तव चात्यन्तमप्राप्तिर्गाव्यादेः प्राप्तता मम ॥ ६९४

तेन पक्षद्वयेऽपि नियमानुपपत्तिः ।

कीदृशश्चात्र नियमः कल्प्येत—किं साधुभिरेव भाषितव्यम्, उत साधुभिर्भाषितव्यमेवेति ।

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः ।
नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते ॥ ६९५

यदि ह्येकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुः ततः साधुनियमावकाशः स्यात् । त्वन्मते तु पुनः—

अत्यन्तावाचकत्वात्तु नैवासाधुः प्रसज्यते ।
यन्नि[1]वृत्तिफलः साधोर्नियमोऽत्रार्थवान्भवेत् ॥ ६९६

अथ प्रमादाशक्ति[2]कृतप्रसङ्गनिवृत्तिर्नियमं प्रयुञ्जीत । तदसत् ।

न हि शास्त्रशतेनापि प्रमादाशक्तिकारितात् ।
निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते ॥ ६९७

दृष्टोऽपशब्दानामर्थाभिधाने प्रयोग इति चेत् ?

उच्यते—अन्योऽन्यक्षिनिकोचादेः प्रयोगोऽर्थेषु दृश्यते ।
तन्निवृत्तिफलः कश्चिन्नियमो न च दृश्यते ॥ ६९८

न च नियमानां प्रतिपक्षनिवृत्तिः प्रयोजनम् । परिसंख्याप्रयोजनत्वात् ।

न चायं परिसंख्याविषयो युज्यते । युगपत्प्राप्त्यभावात् ।

न वा दृष्टार्थतैवास्य प्रयोगस्योपपद्यते ।
न हि दृष्टनिराकाङ्क्षाददृष्टमपि गम्यते ॥ ६९९

न हि तादृशेष्वदृष्टकल्पनायामर्थापत्तिः प्रभवति । परार्थत्वाच्च फलश्रुतेरर्थवादत्वम् । न चासति फले शक्यमपूर्वं कल्पयितुम् ।

**नियमापूर्वस्य निरासः**

न चेदं नियमापूर्वमाश्रितं क्वेति गम्यते ।
शब्दार्थश्रोतृतद्बुद्धिवक्त्रुच्चारणगोचरे ॥ ७००

शब्दस्य तावदत्यन्तपरार्थदृष्टार्थत्वान्नापूर्वेण कश्चिदुपकारः । सत्यपि चाभिधानकर्मत्वेनार्थस्य प्राधान्ये, दृष्टार्थेषु लोकव्यवहारेषु विनाऽप्यपूर्वेणाङ्गभावादपूर्वोपकारानुपयोगः । श्रोतुः पुनर्नियमविधिसंस्पर्शानन्तर्गतत्वादेवासंस्कार्यत्वम् । बुद्ध्योश्च क्षणिकत्वान्न कालान्तरावस्थाय्यपूर्वाधारत्वोपपत्तिः ।

---

१. क. यस्मिन्वृत्तिफलः । २. शक्तिभूत ।

पक्का तु[1] भाषणे सर्वो गुणभूतो विधीयते ।
न तस्य नियमापूर्वसंस्कार्यत्वनिरूपणम् ॥ ७०१
न प्रधानपदं चात्र विद्यते स्वर्गकामवत् ।
न च षष्ठ्युक्तसम्बन्धात्स्वामित्वेन प्रधानतः[2] ॥ ७०२
यत्तु दिङ्नियमापूर्वं भोजनादिषु कल्पितम् ।
पुरुषार्थक्रियाद्वारं तदर्थं तत्प्रतीयते ॥ ७०३

न चेहोच्चारणमुच्चारयित्रर्थम्, येन भोजनादिसमत्वं प्रतिद्येत। स्वरूपेण पुनर्भङ्गित्वाद् बुद्धिवदेवासंस्कार्यम् ।

एवं चावेदमूलत्वान्न धर्मनियमार्थता ।
युक्ता शब्दस्मृतेर्वक्तुं न चास्याः शास्त्रता स्वयम् ॥ ७०४

तदुक्तं 'प्रयोगशास्त्रमिति चेन्नासन्नियमात्' इति ।

### वेदवत् स्वातन्त्र्येण प्रामाण्यनिरासः

नहि व्याकरणादीनां वेदत्वेन स्वतन्त्रता ।
पुरुषाधीनवृत्तेश्च सापेक्षस्याप्रमाणता ॥ ७०५

सर्वत्र हि 'पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति प्रत्ययः' तेन कर्त्रभिप्रायप्रकाशनमात्रोपयुक्तत्वाद्व्याकरणान्नैव शब्दगतसाध्वसाधुविभागः प्रतीयते ।

न च स्मृत्यन्तरं किंचिद् दृष्टं तत्कार्यगोचरम् ।
दृढं श्रुत्यनुमानं स्याद्येनोपनयनादिवत् ॥ ७०६

### व्याकरणस्मृतेः धर्मशास्त्रैस्तुल्यत्वम्

प्रायेण मनु-गौतम-वसिष्ठादिप्रणीताः समानेष्वर्थेषु धर्मसंहिता वर्तन्ते। तेनाविगानात्ताभ्य एव श्रुतयः स्वनुमानाः। न च व्याकरणस्य ताभिः समानार्थत्वम् ।

### सूत्र-वार्त्तिक-भाष्यकाराणां प्रयोजनविगानेनाप्रामाण्यम्

परस्परेण चाऽऽचार्या विगीतवचनाः स्थिताः ।
सूत्रवार्तिकभाष्येषु किं तत्राध्यवसीयताम् ॥ ७०७
न तावत्सूत्रकारेण किंचिदुक्तं प्रयोजनम् ।
कथं चैतावति ग्रन्थे स्यात्प्रयोजनविस्मृतिः ॥ ७०८

येऽत्रपि तद्ग्रन्थेषु विस्पष्टान्यादित एवाऽऽरभ्य प्रयोजनानि ज्ञायन्ते। न चैषां श्रवण-ग्रहण-धारणेषु महान्खेदस्तेष्वपि जिज्ञासूत्साहार्थं पूर्वं प्रयोजनान्येव

---

१. क. कुभाषणे । २. क. प्रधानता ।

निबध्यन्ते 'धर्मं व्याख्यास्यामः (वै. द. १ १-१'), यज्ञं व्याख्यास्यामः (आप० परि० सू. १-१) इत्येवमादिभिः । इह पुनरत्यन्तकष्टं व्याकरणं प्रणयता सूत्रकारेण धर्मार्थकाममोक्षाणां न कस्यचित्प्रयोजनत्वमाश्रितम् । न च सर्वप्रधाने वस्तुन्यनादरो युक्तः । सुज्ञातत्वं पुनरीदृशम्, येनाद्यापि विवदन्ते ।

धर्मश्च फलसंबद्धं कर्म यागादि वर्ण्यते ।
न च व्याकरणे किंचित्तादृक्कर्मोपदिश्यते ॥ ७०९
धर्मत्वं यच्च विज्ञान-शास्त्रपूर्वप्रयोगयोः ।
यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम् ॥ ७१०

शास्त्रार्थो हि निरूपितरूपो भवति । इह च ज्ञानधर्मत्वमुपन्यस्य, अधर्मप्रसङ्गभीतेन शास्त्रपूर्वप्रयोगेऽभ्युदय इति वार्तिककारेणोक्तम् । भाष्यकार आह— **अथ वा पुनरस्तु ज्ञाने धर्मः** (पस्पशाह्निक. १-१-१) इति । न चैवमनियमेन धर्मत्वावधारणं युक्तम्[१] ।

संबद्धयोश्च धर्मत्वं यदेकस्यावधार्यते ।
तदेतरत्तदर्थत्वान्न धर्मत्वेन गम्यते ॥ ७११

**ज्ञानप्रयोगयोरन्योन्यतरस्यानुनिष्पादितत्वेन उपसंहारः**

तदिह यदि तावज्ज्ञानमेव धर्मत्वेनावधारितम्, ततो लोकप्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सत्यामप्युपकारनिर्वृत्तौ वाजिनादिवत्प्रयोजकत्वाभावः । शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात् । असत्यां प्रयोजनान्तराकाङ्क्षायां यद्यपि काचित्फले श्रुतिर्भवेत् साऽपि 'द्रव्यसंस्कारकर्म'[२] ४-३-१ इत्यनेन न्यायेनऽर्थवादतया ज्ञायते । न हि समानाध्वनोः परस्मिन्फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायत इति वर्णितमेतत् **"योऽश्वमेधेन यजते य उ चैनमेवं वेद"** इति ।

किं च—आदिमत्त्वाच्च धर्मत्वं नैव ज्ञातप्रयोगयोः ।
न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः ॥ ७१२

यन्नाम ज्ञानं नित्येन वेदेनैव क्रियते, तत्र तत्पूर्वकप्रयोगविधानं फलायोपपद्यते । व्याकरणज्ञानं तु पौरुषेयम्, ग्रन्थाधीनत्वान्मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते ।

**व्यवहारनित्यतया कण्ठस्थनित्यतया वेदस्य नित्यत्वनिरासः**

न च व्याकरणं नित्यं कथंचिदवगम्यते ।
कर्तृस्मृतिद्रढिम्ना हि नित्यपक्षनिराक्रिया ॥ ७१३

---

१. क. उक्तम् । २. क. कर्मस्वित्यनेन ।

अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरम्पराऽनादिः कल्प्येत, तथाऽपि **'उक्तं तु शब्दपूर्वत्वम्'** (१-१-२९) इत्यस्य न्यायस्य स्थितत्वात् । अनेकपुरुषकृतमपि सद्व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते ।

न च व्याकरणत्वाख्या जातिः काचिद्व्यवस्थिता ।
अनित्ये वाक्यसंघाते सा जातिः क्वाऽवतिष्ठताम् ॥ ७१४

**पातञ्जलभाष्यानुसारेणाशङ्का-निरासौ**

अथ 'लक्ष्यलक्षणे व्याकरणम्' (प. आ.) इति सत्यपि लक्षणांशकृत्रिमत्वे लक्ष्यांशेन नित्येन विधिरुपपत्स्यत इति ।

तदनुपपन्नम् । कुतः—

अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणादिना ।
नैकमालम्बनं किंचिद्विधेरस्तीत्युदाहृतम् ॥ ७१५

ननु वेद[1] एव व्याकरणनित्यत्वं दृश्यते । यथाऽऽह—**'तस्मादेषा व्याकृता वागुद्यत'** (तै. सं. ६.४.७) इति । नैतदस्ति ।

व्याकृता सम्प्रदायेन वाणी नित्यैव वैदिकी ।
अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः ॥ ७१६

अव्याकृताया हि लौकिक्या वाचः शिष्याचार्यसम्बन्धेन स्वरवर्णमात्राक्रमैरविप्लुतरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते । तस्माच्च मन्त्रब्राह्मणात्मिकायाः कर्मसु, ज्ञाने, प्रयोगे च धर्मोऽस्यैव । यदपि च **एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति** (म. भा. ६.१.८४) इति ।

तदपि स्वाध्यायप्रशंसाशेषभूतमेव । **"अहरहः स्वाध्यायमधीयीत"** इत्यत्र **'अप्येकामृचम्, यजुः, साम वा'** इत्येतदवश्यकर्तव्यतानियमार्थमुक्तम् ।

योऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः ।
तस्य शास्त्रान्वितः शब्द एकोऽपि स्वर्गकामधुक् ॥ ७१७

**शास्त्रान्वित** इति च यथास्वाध्यायमनुगत इत्यर्थः । **सम्यक्प्रयुक्त** इति चोपनयनोपसदनगुरुशुश्रूषादर्भपवित्रपाणित्वादीतिकर्तव्योपपन्नत्वाश्रयणेनोक्तम् । यदपि च **"तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै[2], म्लेच्छो ह वा एष यदपशब्दः"** इति, तत्संप्रदायागतवैदिकशब्दविनाशप्रतिषेधार्थमेव । वैदिकाच्चापेतत्वाल्लौकिकस्यापशब्दत्वं संभवति ।

---

१. क. वेदे । २. क. "नापभाषितवा" इति ।

सुज्ञानं च। न लौकिकादप्यपेतोऽपशब्दो नाम कश्चिदस्ति। गाव्यादीनामपि शब्दानां श्रोत्रग्राह्यत्वेन शब्दशब्दवाच्यत्व-शब्दबुद्धिग्राह्यत्वशब्दत्वानुगम-दर्शनात्। अथाप्यवश्यं लौकिकादप्यपेतोऽपशब्द आश्रयणीयः। अथाऽपि "न म्लेच्छभाषां शिक्षेत" इत्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तराल-कृष्णमृगसंचरणाद्युपलक्षितधर्माधिकृतार्यावर्तनिवासिव्यतिरिक्तबर्बरादिभाषागतस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वज्ञानात्तेन भाषणं प्रतिषिध्यते। युक्तं च तस्याशेषतदीयाचरणवत्परिहरणीयत्वम्, न त्वार्यावर्तनिवासिप्रयुक्तेषु गाव्यादिषु म्लेच्छतिधात्वर्थानुगमः कश्चित्। येन तदनाचारितत्वेनापवृत्तवदपशब्दत्वं निरूप्यते।

यदपि च "आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति तदप्यनृतवादवैदिकशब्दविनाशम्लेच्छभाषाप्रयोगाश्रयमेव वेदितव्यम्, न तु व्याकरणानुगतव्यतिरिक्तशब्दप्रयोगविषयम्। तथा हि—

कथं नामेदृशात्कार्यात्सर्व एवाऽऽहिताग्नयः।
प्रवर्तेरन्कथं[1] चान्यैर्न निन्द्येरन्नशिष्टवत्॥ ७१८

प्रायेण हि शिष्टानां धर्माचारप्रणितचेतसां कश्चिदेव प्रमादादल्पोऽनाचारो भवति। गाव्यादिशब्दप्रयोगेषु पुनर्न केषांचिदप्यनाचारबुद्धिः। न च कलञ्जा-दिभक्षणवद्विचिकित्सा,[2] गर्हा वा दृश्यते न चाऽऽहिताग्निसहस्रेऽप्येकस्त्वदभि-मतसाधुशब्दैरेव व्यवहरमाणो दृश्यते।

## कल्पसूत्रकारादीनामपशब्दप्रयोगवर्णनम्

कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः॥ ७१९

समानमितरच्छ्येनेन' इत्यादितकारान्तप्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तम्, **'समानमितरं ज्योतिष्टोमेन' 'समानमितरं गवा ऐकाहिकेन'** इति सूत्रकारेणाप्यभिहितम्। "अहीने बहिष्पवमानैः सदसि स्तुवीरन्" इति कर्त्रभिप्रायक्रियाफलवर्जितेऽप्यृत्विक्कर्तृके स्तवने 'यजन्ति याजका' इतिवत्परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्याऽऽत्मनेपदं प्रयुक्तम्। तथाऽऽश्वलायनेन "प्रत्यसित्वा प्रायश्चित्तं जुहुयुः" इति समासेऽपि ल्यप्न प्रयुक्तः। आज्येनाक्षिणी आज्य इत्यसमासेऽपि प्रयुक्तः।

---

१. क. प्रवर्त्येरन्। २. क. भक्षणवचचिकित्सा।

तथा शिक्षायां नारदेन "प्रत्युषे ब्रह्म चिन्तयेत्" इति गाव्यादिशब्दतुल्य एव प्रयुक्तः।

तथा मनुनाऽपि "ज्ञातारः सन्ति मेत्युक्त्वा" इत्यत्र सन्ति म इत्युक्त्वेति वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता कृता।

तथा मीमांसायामपि **'गव्यस्य च तदादिषु'** इति गोर्विकारावयवविषयसाधु-प्रयोगयोग्यः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः। तथा **'द्यावोस्तथेति चेत्'** इति द्यावापृथिव्योरिति वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम्।

तथा गृह्यकारेण मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यविषये जिघ्रादेशः प्रयुक्तः। कात्स्न्र्येऽपि व्याकरणस्य[1] निरुक्ते हीनलक्षणाः प्रयोगा बहवो यद्वद् ब्राह्मणो ब्रवणादिति। संवत्सरं शाशयाना[2] इत्येतन्मन्त्रगतमण्डूकविषय-ब्राह्मणशब्दनिर्वचने क्रियमाणे वचनशीलत्वनिमित्ततां दर्शयता। ब्रुवो वचिरिति वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम्।

## इतिहासपुराणयोः अपशब्दप्रदर्शनम्

अन्तो नास्त्यपशब्दानामितिहासपुराणयोः।
तथोभाभ्यादिरूपाणां[3] हस्तिशिक्षादिकारिणाम् ॥ ७२०

युगपदुभाभ्यां दन्ताभ्यां यः प्रहारः स उभाभ्य इति सर्वैः पालकार्यराजपुत्रा-दिभिर्व्याकरणानपेक्षमेव प्रयुक्तम्।

## वेदेऽपि अपशब्दप्रयोगदर्शनम्

वेदेष्वपि प्रयोगास्ते भूयांसोऽध्येतृसंमताः।
सामान्यं छान्दसं वाऽपि येषां नास्त्येव लक्षणम् ॥ ७२१

न हि ते सुप्तिङुपग्रहादिव्यत्ययेन 'नापि कतिपयाधिकारदृष्टेन बहुलं छन्दसि' इत्यनेन सिध्यन्ति। तद्यथा **'मध्यं आपस्य तिष्ठति नीचीन वारं वरुणः कबन्धम्' इति।** न ह्यपामित्यस्य नित्यस्त्रीलिङ्गबहुवचनविषयव्यञ्जनान्तप्रातिपदिकपर-षष्ठ्यन्त्राख्यानादापस्येत्येतद्रूपं लक्षणानुगतं दृश्यते। नापि द्वारशब्दस्य स्थाने लाटभाषातोऽन्यत्र वारशब्दः संभवति। तेनानारभ्य एवायम्, विषय-व्याप्त्यसंभवात्।

शब्दानुगमरूपोऽर्थो यत्र व्याकरणं कृतम्।
येऽपि व्याकरणस्यैव परे पारे प्रतिष्ठिताः ॥ ७२२

---

१ क. व्याकरणस्यापि। २ क. संवत्सरंशयाना। ३ क. तथोभाभ्यो द्विरूपाणां।

## व्याकरणसूत्र-वार्तिक-भाष्येषु अपशब्दवर्णनम्

सुतरां तेऽपि गाव्यादितुल्यानेव प्रयुञ्जते ।
सूत्र-वार्तिक-भाष्येषु दृश्यते चापशब्दनम् ॥ ७२३
अश्वारूढाः कथं चाश्वान्विस्मरेयुः सचेतनाः ।

सूत्रे तावत् 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३०) इत्यत्र हि द्वावपशब्दौ जनिशब्देन हि इक्श्तिपौ धातुनिर्देश इत्यनेन लक्षणेनान्वितो धातुरेव निर्दिश्यते । न च तस्य कर्तुः प्रकृतेरपादानसंज्ञेष्यते । जायमानस्य पुनरर्थस्य जनिशब्दो वाचकतया नैव लक्षणेनानुगतः । तेनायं दरिद्र इवाश्वशब्दो जनिमात्रवाचित्वात्तदर्थं प्रत्ययसाधुरेव विज्ञायते । तथा **'तृजकाभ्यां कर्तरि'** (पा० सू० २।२।१५) **इति** प्रतिषिद्धषष्ठीसमासप्रयोगाद् व्याकरणफलपरित्यागः । एवं **'तत्प्रयोजक.'** (पा० सू० १।४।५५) इति प्रतिषिद्ध एव समासः ।

तथा वार्तिकेऽपि 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्' इति । तथा 'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अत्र क्लेशेन समासं कल्पयित्वा, ततः समाससंज्ञया गुणवचनसंज्ञायां बाधितायां 'गुणवचनब्राह्मणादिभ्यः (पा० सू० ५।१।१२४) इति लक्षणेनासंसृष्ट एव ष्यञ्प्रयुक्तः ।

भाष्येऽप्यविरविकन्यायेनेतिद्वन्द्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः सुपः **'सुपो धातुप्रातिपदिकयो'** (पा० सू० २।४।११) **इति** प्रत्यक्षोपदिष्टोऽपि लुङ् न कृतः । तथा 'अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः' इति । 'अन्यथैवं कथम्' इत्यन्वाख्यातसाधुत्वोऽपि णमुल् न प्रयुक्तः । न चैषां निपातनैः साधुत्वसिद्धिः ।

कुतः—येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः ।
अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः ॥ ७२४

स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।
प्रत्यक्षप्रतिषेधाच्च जनिकर्त्राद्यसाधुता ॥ ७२५

प्रत्यक्षश्रुतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचारभूतादवयवानुगमस्मृतिमनुमाय निपातनात्साधुत्वसिद्धिः । न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मार्थत्वाभावाद्वा लक्षणानुपतिरनादरणीया ।

प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।
देशान्तरस्थितः शब्दो लक्ष्यभूतोऽन्यशब्दवत् ॥ ७२६

तथा च 'कुत्वं कस्मान्न भवति' वृद्धिरादैच् (पा० सू० १।१।१) इति । कोऽयं शब्दः' इत्यादिषु लक्षणानुगमादरः सर्वत्राऽऽश्रितः । यदि च लक्षणशब्देषु लक्षणं

न प्रवर्तेत, ततः सर्वं व्याकरणमपशब्दैरेव निबद्धं स्यात्। अर्धवैशसदर्शनात्तु प्रमाणत्वहानिः।

अथोच्येत यज्ञप्रयोगविषय एव साधुभाषणनियमः, न सूत्रकारव्याख्यानादिक्रियास्विति। तदसत्, **स्वर्गे लोके कामधुगिति** फलवत्त्वोपन्यासात्। सारस्वतीष्टिविधावाहिताग्निग्रहणार्थवत्त्वात्[1]। इतरथा ह्याहिताग्निरेव यज्ञेष्वधिक्रियत इति, तद्गोचरेऽपशब्दप्रयोगे निष्प्रयोजनमेवाऽऽहिताग्निग्रहणं[2] भवेत्।

योऽपि च ज्योतिष्टोमप्रकरणे वाजसनेयिनां **'तस्माद् ब्राह्मणो न म्लेच्छेत्'** इति प्रतिषेधः कर्माङ्गत्वेन ज्ञायते। सोऽपि गुरुसम्प्रदायक्रमागतमन्त्रप्रयोगविनाशविषय एव, म्लेच्छभाषाप्रतिषेधार्थो वेति पूर्ववदेव नेतव्यः।

यदपि च 'केषां शब्दानाम्' इति प्रश्नानन्तरं 'लौकिकानां वैदिकानां च'[3] इति विवेककथनम्, तदपि बहूनां तावत्प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रयसदृशमभिधीयमानं शोभते। न च लौकिकमध्ये गौरश्वः पुरुषो हस्तीत्येवमादयः सर्वे वेदसाधारणाः, वेदादेव वोद्धृत्य लोकेन प्रयुक्ता उदाहर्तुं न्याय्याः। य एव हि भाषायामित्येव स्मर्यन्ते, न च क्वचिदपि वेदे दृष्टपूर्वा इत्येवं संभावयितुं शक्यन्ते, त एवोदाहर्तव्याः। वैदिकोदाहरणेष्वपि च लोकप्रसिद्धा एव शमादय उदाहृताः। न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते। वाक्यानां व्याकरणेनानन्वाख्यानात्। अतश्छान्दसान्येव कानिचित् **'गृभ्णामि' 'दत्वायाथ'** इत्येवमादीन्युदाहर्तुं योग्यानि। न **'शं नो देवी'** इत्यवेमादीनि[4]। छान्दसोदाहरणं च कुतः? 'सिद्धे' 'लोकत'[5] इत्यनेन प्रत्यासन्नेनैव व्याहन्येत। यदि च लौकिकानामन्वाख्यानं क्रियेत्, ततः सुतरां गाव्यादय एवान्वाख्येयाः तेषां व्यवस्थितं लौकिकत्वम्, वेदेऽप्रयोगात्। पुनरध्येतृभिर्वेदादेवोद्धृत्योद्धृत्य[6] प्रयुक्ता इति शक्यं वक्तुम्।

तथा च मनुनाऽप्युक्तम्।

वेदशब्देभ्य एवाऽऽदौ पृथक् संस्था विनिर्मम इति।

दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तद्भाषासमानार्थान्सकलमन्त्रानप्युदाहरन्तः,[7] किमङ्ग पुनः पादान्पदानि वा। न चाऽऽश्रितप्रतिपद-

---

१ क. विधिः।
२ क. निःप्रयोजन।
३. म० भा० पस्प०।
४ क. रित्येव।
५. सिद्धे शब्दार्थसंबन्धे, लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु इति महाभाष्यवार्तिके।
६ क. गवादयः पुनः।
७ क. हरतः।

पाठानां वैदिकानां लक्षणेन कार्यम्। न चैषां गुरुमुखात्साधीयो लक्षणमस्ति 'दृष्टानुविधित्वाच्छन्दसः' इति स्वयमेव लक्षणस्याऽऽम्नानाधीनत्वेन मन्दप्रयोजनत्वमुक्तम्।

यथैव लोकसिद्धत्वात्कृष्यादेर्लक्षणं वृथा।
तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा॥ ७२७

अन्यसिद्धैर्वेदरक्षादिप्रयोजन-निराकरणम्

रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम्।
न तदप्यन्यतः सिद्धेरल्पसिद्धेस्ततोऽपि वा॥

शिष्याचार्यसम्बंधो हि महान्वेदरक्षाहेतुः, व्याकरणानधीयानस्यापि वेदक्रमस्याध्ययनेनैव रक्ष्यमाणत्वात्। तद्विनाशेऽपि च विशिष्टतरदोषप्रसङ्गात्। उक्तं च—

निराकाङ्क्षीभवेल्लक्ष्यं येन तन्नाम लक्षणम्।
शतांशमात्रसिद्धौ तु तेन मन्दं प्रयोजनम्॥ ७२८

समाम्नायप्रसिद्धेऽपि सामवेदेऽस्ति लक्षणम्।
तद्युक्तं कृत्स्नसिद्धित्वात्कर्तव्यार्थेन चार्थवत्॥ ७२९

औच्छिक्ये हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणेनानुगतानि। ततश्च समस्तसामरूपसिद्धेर्निराकाङ्क्षत्वं भवति। ब्राह्मणविधिवशेन च, ऋगन्तरसंचारणायां प्रस्तावादिपञ्चधाविभागेन लक्षणोपयोगः। पदानुगममात्रनिवृत्तव्यापारेण तु व्याकरणेन विशिष्टपदरचनात्मकवाक्यसंघातरूपाणामसंभवत्कर्तव्यपदवाक्यानां मन्दमिव रक्षितव्यं दृश्यते।

लक्षयेद्यः समाम्नायात्पदवाक्यक्रमान् बहून्।
स लक्षयेत्तरामल्पं प्रकृतिप्रत्ययक्रमम्॥ ७३०

वेदरक्षाया इहाध्यार्थिभिरेव सम्भवात् व्याकरणस्य नैष्फल्यम्

किं च—यदि व्याकरणाद्रक्षां मन्वीरन्वेदवादिनः।
वैयाकरणगेहेषु छिन्द्युस्ते वेदसंशयान्॥ ७३१

कक्षावलम्बिनं नित्यं को नाम करकं वहन्।
तमनादृत्य शौचार्थमन्यतः कर्तुमर्हति॥ ७३२

लोके यस्य यदर्थत्वमाप्ता वा यत्र ये मताः।
तेन तेभ्यश्च तद्वस्तु यथावदवगम्यते॥ ७३३

आयुर्वेदं चिकित्सासु प्रायेण विनियुज्यते।
व्याधितत्त्वौषधज्ञानं वैद्येभ्यश्चोपलभ्यते॥ ७३४

न तु वेदाध्यायिनां कदाचिदप्यभियुक्ततरसहाध्यायिव्यतिरेकेण वेदवर्णपदवाक्याज्ञानसन्देहविपर्ययव्यावृत्तौ व्याकरणम्, वैयाकरणा वोपयुज्यन्ते ।

सहाध्यायिभिरेवातो वेदः कार्त्स्न्येन रक्ष्यते ।
स्वराक्षरविनष्टोऽपि द्वेषादन्यैर्न मृष्यते ॥ ७३५

तस्मात्प्रीतैरुपाध्यायैर्द्विष्टैः कारुणिकादिभिः ।
न विनाशयितुं वेदो लभ्यते तेन रक्ष्यते ॥ ७३६

तस्माद्वेदरक्षार्थं तावन्नाध्येयं व्याकरणम् ।

**काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाच्च व्याकरणस्य वैयर्थ्यम्**

लोके तु सर्वभाषाभिरर्था व्याकरणादृते ।
सिध्यन्ति व्यवहारेण काव्यादिष्वप्यसंशयम् ॥ ७३७

यदि तु संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनाटकलक्षणप्राकृतव्याकरणद्विपदी-रासकादिलक्षणन्यायेन संस्कृतकाव्योपयोगार्थं व्याकरणमाश्रीयेत[१] तथाऽपि काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाद्यथेष्टभाषाभिः प्रबन्धकरणसम्भवाच्छब्देषु न व्यवस्था स्यादित्युच्यते ।

काव्यशोभास्वपि त्वेतन्नैवातीवोपयुज्यते ।
वैयाकरणदोषाद्धि कष्टाञ्छब्दान्प्रयुञ्जते ॥ ७३८

न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।
लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ॥ ७३९

तेन लोकेऽपि न कदाचिद् व्याकरणेन शब्दरक्षा ।

**ऊहस्याप्यन्यतस्सिद्धत्वाद् व्याकरणस्यानुपयोगः**

ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् ।
ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभागवत् ॥ ७४०

तथा च—मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥ ७४१

विकारेऽथ निषिद्धोहाः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेऽत्रपूर्वार्थद्वारेणोहं व्रजन्ति नः ॥ ७४२

एतावत्यन्यतो यस्य विना व्याकरणान्मतिः ।
जायेत स कथं तत्र पदं योग्यं न लप्स्यते ॥ ७४३

---

१ क. माश्रियेत ।

वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः ।
शब्दानां तत उद्धृत्य प्रयोगः सम्भविष्यति ॥ ७४४

अथ वा योऽपि गाव्यादिर्लोकेनार्थे प्रयुज्यते ।
सोऽप्यर्थद्वारतः प्राप्तप्रयोगः केन वार्यते ॥ ७४५

देवतापदानि तावत्—'**विधिशब्दस्य मन्त्रत्वे भावः स्यात्**' १०-४-२३ इत्येतेन न्यायेन सर्वानेव साध्वसाधुत्वसम्मतान्पर्यायान्परित्यज्य विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेष-वाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते, तेषु ह्यस्त्येव कर्माभिधानार्थमेव प्रयोगोत्पत्तिशास्त्रत्वम् । यानि तु द्रव्य-तद्गुणादिपदानि सन्निहितार्थपर्युपस्थापितसमस्तरूपाणि प्रयोगवचनगोचरमिच्छन्ति, तेष्वसन्निहितार्थपदनिवृत्तिन्यूनसाकाङ्क्षमन्त्रवाक्यनिराकाङ्क्षीकरणाय स्मृतेऽप्यर्थे प्रयुज्यमानेषु प्रयोगोत्पत्त्यशास्त्रत्वान्न व्यवस्था स्यादित्युच्यते । प्रकृतौ हि मन्त्राणां प्रयोगोत्पत्तिः शास्त्रवती । विकृतौ—पुनरर्थवशाद्भवन्ती न व्याकरणानुगतेष्वेवावतिष्ठते । व्याकरणस्याप्यसम्भाव्यमानमूलशास्त्रस्य कृतकाविधायकेष्ट्युपसंख्यानाद्यावापसूत्रप्रत्याख्यानानवस्थितप्रमाणत्वस्य यथारुचिविकल्पितप्रकृतिप्रत्ययपरिमाणादिदोषग्रस्तस्य निश्चितस्मर्यमाणपाणिन्यादिमतसापेक्षस्य नैवानादियज्ञगतशब्दप्रयोगनियमोत्पत्तिशास्त्रत्वमवकल्पते ।

तेनोहे कर्मकर्माङ्गवाक्यार्थज्ञानकौशलैः ।
लोकवेदप्रयोगाच्च सिद्धे व्याकरणेन किम् ७४६

### मन्त्रेषु व्याकरणेनोहकरणमशक्यमित्यत्र प्रमाणोपन्यासः

अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैष्टीकाकारैरप्युक्तम्—

अङ्गानि ज्ञातिनामान्युपमा चेन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अध्रिगौ[1] विषमं हि तत् ॥ इति । ७४७

### प्रयोजनवत्त्वे प्रमाणत्वेनोपन्यस्तस्यागमस्य निरासः

आगमो यस्तु निर्दिष्टः प्रयोजनविवक्षया ।
कर्मणां नोच्यते तत्र किं वेदाध्ययनं फलम् ॥ ७४८

सर्वस्य हि ह्यनुष्ठातव्यस्याऽऽगमो मूलत्वेनाऽऽख्यायते, न प्रयोजनत्वेन ।

अथैतेनैव युक्तं स्यादागमोक्तं प्रयोजनम् ।
तदप्यसदनाम्नानान्निष्कारणतयाऽपि च ॥ ७४९

---

१. दैव्याः शमितार आरभध्वमित्यादिः पशुविशसनप्रैषमन्त्रोऽध्रिगुशब्दवत्त्वेनाध्रिगुरित्युच्यते ।

निष्कारणषडङ्गवेदाध्ययनोपन्यासेन हि सुतरां व्याकरणस्य निष्प्रयोजनत्वमुक्तम् ।

आगमो वेदवाक्याच्च नान्यः कश्चन विद्यते ।
कथं चाऽऽदिमतां सिध्येद्वेदेनाऽनादिना विधिः ॥ ७५०

तस्मात् 'स्वाध्यायोऽध्येतव्यः' इत्येतत्केवलवेदाध्ययनविधानं शतपथादिषु दृष्टम्, उपपन्नं च, नित्यार्थालम्बनत्वात् । व्याकरणाद्यङ्गाध्ययनविधानं पुनर्न कस्यांचिच्छाखायां श्रूयते । न चाऽऽदिमदर्थविषयं सदनादित्वाधीनं वेदत्वम्, प्रमाणत्वं वा लभते ।

न च वेदाङ्गभावोऽपि कश्चिद् व्याकरणं प्रति ।
तादर्थ्यावयवाभावाद् बुद्धादिवचनेष्विव ॥ ७५१

श्रुतिलिङ्गादिभिस्तावत्तादर्थ्यं नास्य गम्यते ।
अकृत्रिमस्य वा कश्चित्कृत्रिमोऽवयवः कथम् ॥ ७५२

**आगमस्य श्रुत्याद्यङ्गताबोधकप्रमाणपरत्वेन व्याख्यानम्**

तस्मादवयवविषयमेवैतदेवं वर्णयितव्यम् ।

षडङ्गो वेद इत्युक्तं श्रुतिलिङ्गाद्यपेक्षया ।
तैः षड्भिः प्रविभक्तः सन् स हि कर्मविबोधनः ॥ ७५३

ननु बाह्याङ्गानपेक्षत्वे वेदस्वरूपान्तर्गतश्रुत्याद्यपेक्षया विशेषणमनर्थकं प्रसज्यते ।

तथा हि—सम्भवव्यभिचाराभ्यां स्याद्विशेषणसम्भवः ।
श्रुत्याद्यव्यभिचारात्तु तैरङ्गैः किं विशेष्यते ॥ ७५४

उच्यते—यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक् ।
ज्ञात्वाऽधीते स एवाऽस्य विधेरर्थं करोति नः ॥ ७५५

अधिगन्तव्य इत्येतदध्येय इति चोच्यते ।
तेन श्रुत्यादिमान्वेदो वेदितव्यो विधेरतः ॥ ७५६

ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम् ।
श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः ॥ ७५७

ततश्च मीमांसाद्वारा वेदार्थानुचिन्तनविधिरेवायमिति ज्ञायते, न व्याकरणाध्ययनविधिः ।

**वेदागमशिक्षाद्यङ्गपरत्वेन द्वितीयं व्याख्यानम्**

वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः ।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः ॥ ७५८

'तद्दध्नो दधित्वम्' इत्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्त-व्याकरणादीनि । तैः सह विधायको वेदोऽध्येतव्य इति स्मृत्यर्थो भवेत् ।

**प्रातिशाख्यपरत्वेन तृतीयं व्याख्यानम्**

प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते ।
गृह्यमाणतदर्थत्वादङ्गत्वं तेषु वा स्थितम् ॥ ७५९

**व्याकरणस्य प्रयोगशास्त्रत्वमाशंकानिरासौ**

यानि हि वेदव्यापारपराण्येव, तेषु लिङ्गेन शक्यमङ्गत्वमध्यवसातुम् । ननु कतिपयस्पृष्टवेदवाक्योदाहरणच्छद्ममात्रेषु पाणिनिप्रभृतिप्रणीतेषु प्रातिशाख्यानीव प्रयोगशास्त्राणीति चेत् । न । तेषां पदस्वरूपेष्वेव व्यापारात् । पाणिनीयादिषु हि वेदस्वरूपवर्जितानि पदान्येव संस्कृत्य संस्कृत्योत्सृज्यन्ते । प्रातिशाख्यैः पुनर्वेदसंहिताध्ययनानुगतस्वरसन्धिप्रयतिविवृतिपूर्वाङ्गपराङ्गाद्यनुसरणाद्वेदाङ्गत्वमाविष्कृतम् ।

पूर्वोक्तेनानुसंधानमागमस्य च नास्ति ते ।
आगमोऽध्ययनप्रायः प्राक्च शब्दानुशासनम् ॥ ७६०

**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येय'** इति विहिते ज्ञाने धर्मः, शास्त्रपूर्वं प्रयोगेऽभ्युदय इति च व्याहताभिधानम् ।

**व्याकरणस्य शब्दापशब्दज्ञानं प्रयोजनमित्यस्य निरासः**

यदपि च शब्दापशब्दज्ञानलाघवं प्रयोजनत्वेनोपदिष्टम्, तत् निराकृतप्रयोजनान्तरस्य लाघवमात्रमेवावशिष्यते—इति सत्यमेवोक्तम् ।

**गौरवस्यैवोपचारेण लाघवकथनमिति उपहासकथनम्**

यदि वा गौरवस्यैव लघुत्वमुपचर्यते ।
विपर्ययापदेशेन शूरे कातरशब्दवत् ॥ ७६१

लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिरलौकिकसंज्ञा-परिभाषानिबद्धप्रक्रियैरनवस्थितस्थापनाक्षेपसिद्धान्तविचारैः क्लेशेनान्तं गत्वा यथावस्थितानुवादमात्रमेव क्रियते । तत्रापि चोदाहरणव्यतिरिक्तेषु कस्यचिदेव लक्षणयोजनसामर्थ्यं दृश्यते । तेनात्यन्तगुरुः सन्नयमुपायस्तुत्यर्थमेव लघुरित्युपचरितः ।

**भर्तृहरिणा वाक्यपदीयेऽभिहितस्यार्थस्य निरासः**

यदपि केनचिदुक्तम्—

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ इति । ७६२

तद्रूपरसगन्धस्पर्शेष्वपि वक्तव्यमासीत् ।

---

१ म. भा. पस्पशाह्निके ।

को हि प्रत्यक्षगम्येऽर्थे शास्त्रतत्त्वावधारणम् ।
शास्त्रलोकस्वभावज्ञ ईदृशं वक्तुमर्हति ॥ ७६३

अत एवं श्लोकस्योत्तरार्धं वक्तव्यम् ।

तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रियादृते ॥ इति । ७६४

न ह्यत्र कश्चिद्विप्रतिपद्यते, बधिरेष्वेवमदृष्टत्वात् ।

**पञ्चमस्यासन्देहप्रयोजनस्य निरासः**

असन्देहश्च वेदार्थे यदप्युक्तं प्रयोजनम् ।
तदप्यसद्यतो नास्मात्पदवाक्यार्थनिर्णयौ ॥ ७६५

यतः पदार्थसन्देहास्तावद्बहवो वृद्धव्यवहारादेव निवर्तन्ते । शेषाश्च निगम-निरुक्त-कल्पसूत्र-तर्काभियुक्तेभ्यः सर्वेषामर्थप्रतिपादनपरत्वात् । व्याकरणेन पुनरतन्त्रीकृत्यार्थं पदस्वरूपमात्रेऽन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम् । तथा हि—

धातुभ्यः कल्पिते नाम्नि क्रियायोगोऽनुगम्यते ।
न चाभिधानवेलायां तत्प्रतीतिर्मनागपि ॥ ७६६

**'गमेर्डो'** ( उ० सू० २३५ ) इत्येतद्व्युत्पत्त्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यस्येत् । जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितः । यत्र प्रसिद्धस्तत्रान्वाख्यातव्यः ।

तथा च—

कुशलोदारशब्दादेर्यावत्यनुगमस्थितः ।
न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते ॥ ७६७

अश्वकर्णाजिकर्णादौ समासानुगमे सति ।
अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत् ॥ ७६८

एवं राजन्यशब्दादेरयतत्त्वाद्यनादरः ।
व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धितः ॥ ७६९

**वेदविरुद्धार्थे व्याकरणस्याप्रामाण्यमिति प्रतिपादनम्**

तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम् ।
तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते ॥ ७७०

**'कलेर्ढक्'** (पा० सू० ४-२-८-) **'वामदेवाड्ड्यौ'** (पा० सू० ४-२-९) इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिर्वैयाकरणस्य भवति । वेदे तु **'ततो वसु वामं समभवत्, तस्माद्वामदेव्यम्'** । **'यदकालयत्, तत्कालेयस्य कालेयत्वम्'** इत्याद्यर्थव्युत्पत्तिदर्शनं व्याकरणानुसारिणीं प्रतिपत्तिं बाधते ।

तथा कल्पसूत्रकारैः कृष्णशंवासः। कृष्णवलक्षे अजिने इत्येवमादिषु कृष्णदशादिविवरणाश्रयणाद्व्याकरणशतेनाप्यनवगता अर्था वेदार्थवित्परम्पराप्राप्ता वेदवाक्यपौर्वापर्यविगतयूपादिशब्दार्थाश्च व्याख्यायन्ते। यथा चैवमादिषु व्याकरणानपेक्षाणामेव निःसंशयार्थप्रतिपत्तिः तथा स्थूलपृषत्यादिशब्दार्थेष्वपि व्याख्यातृपरम्परैव निर्णयक्षमेति, न व्याकरणमपेक्षितव्यम्।

**वाक्यार्थनिर्णयेऽपि व्याकरणस्यानुपयोगवर्णनम्**

किं च—वाक्यार्थेषु च सन्देहा जायन्ते ये सहस्रशः।
नैषां व्याकरणात्कश्चित्पूर्वपक्षोऽपि गम्यते ॥ ७७१

यदि वेदार्थासंदेहप्रयोजनं व्याकरणं भवेत् ततः किमर्थवादा स्वतन्त्राः कञ्चिदर्थं प्रतिपादयन्ति, अथ विधिशेषभूताः ? तथा किमूर्गवरोधनमौदुम्बरत्वस्य फलम्, उत प्रशंसार्थमुपात्तमिति। तथा हेतुविधि-हेत्वर्थवाद-मन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु, ग्रहैकत्वविवक्षादिषु च सन्देहानपनयेत्। अथैवमादिषु मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासः ततः कल्पसूत्रकारवचनसिद्धकतिपयस्थूलपृषत्याद्यर्थनिर्णयप्रयोजनता सुतरां नाऽऽश्रयणीया।

**व्याख्यानादेव सन्देहनिवृत्तेः नहि संदेहादवेद इति निरूपणम्**

अपि च—लक्षणोत्थेऽपि सन्देहे व्याख्यानादेव निर्णयः।
वेदशब्देष्वपि व्याख्या नैव दण्डैर्निवार्यते ॥ ७७२

'व्याख्यानतो विशेषप्रतिपत्तिः'[1] इत्यनयैव परिभाषया न हि सन्देहादलक्षणमितिवन्न हि सन्देहादवेद इत्यपि शक्यं वक्तुम्।

न चागृहीतशब्दार्थैः कैश्चिद् व्याकरणाश्रयात्।
व्याख्यातुं शक्यते वेदो यतः स्यात्तेन निश्चयः ॥ ७७३
यथैवावस्थितो वेदस्तथा व्याख्याऽपि सर्वदा।

**स्वरादर्थनिश्चय इत्यस्य निरासः**

अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥ ७७४

न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः।
व्यवहाराद्बहिर्भूतात्स्वरान्नातोऽर्थनिश्चयः ॥ ७७५

वृद्धव्यवहाराधीनं शब्दार्थावधारणम्। तत्र च समासान्तोदात्तत्व-पूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावान्न तत्कृतार्थविशेषव्यवस्था।

---

१. महाभाष्य ( प्रत्याहाराह्निके लण्सूत्रे )

यत्र त्वस्ति स्वरज्ञानं वेदवाक्येष्वविश्रुतम् ।
तत्र नैव पदार्थानामवधारणसंभवः ॥ ७७६

तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः ।
तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधा गता ॥ ७७७

तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते ।
सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥ ७७८

व्याकरणानुगमोऽपि चास्य यदि नाम कथंचित्तदुपयोगार्थ एव भवेत् । न तु लौकिकप्रयोगार्थः, अत्यन्ताप्रयुक्तत्वात् ।

न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः ।
शब्दानुशासनं ह्येतद् दृष्टं नाऽर्थानुशासनम् ॥ ७७९

तस्मादसन्देहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाङ्गभूतस्वरविशेषप्रयोगोत्पत्तिशास्त्रम् ।

### आनुषङ्गिकाणां त्रयोदशानां प्रयोजनानां निरासः

यान्यपि च 'इमानि भूयः शब्दानुशासनस्य प्रयोजनानि' इत्येवमुपन्यस्तानि। तेषामपि कानिचित्प्रयोजनत्वयोग्यान्येव न संभवन्ति । कानिचित्प्रयोनाभासानि । कानिचिदप्रमाणकानि ।

अपि च—अर्थवत्त्वं न चेज्जातं मुख्यैर्यस्य प्रयोजनैः ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनी ॥ ७८०

तत्र यस्तावत् तेऽसुरा इत्याद्यसुरपुराकल्पार्थवादप्रक्रमेऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः, स यथावस्थितस्तथोक्तं प्राक् । दुष्टः शब्दः इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः। दुष्टमन्त्रप्रयोगे त्विष्यत एव यजमानस्य प्रत्यवायः, **'यद्धोता जहाति, वाग्घि तद्यजमानं जहाति'** इत्येवमादिभिः सर्वर्त्विक्प्रयोज्यमन्त्रविनाशेषु यजमानगामिदोषदर्शनात्। तथा **'इन्द्रशत्रुर्वर्धस्व'** इति मन्त्रप्रयोगविनाशदोष एवोदाहृतः। यत्तु निरुक्ते **'यदधीतमविज्ञातं निगदेनैव शब्द्यते'**[1]। इत्युक्तम्, तदस्माभिः प्रथमसूत्र एवाऽथशब्दं व्याचक्षाणैः स्नानस्मृतिक्रमकारणत्वेनोपवर्णितम् **'अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम,**[2] **दृष्टो हि तस्यार्थः कर्मावबोधनम्'** इति । ततश्चाव्याख्यातेन वेदेनार्थप्रकाशनाकरणात् **'न तज्ज्वलति कर्हिचित्'** इति । सत्यमेवैतत् । न तु व्याकरणस्य तत्रोपयोगः। कर्मप्रयोगोत्पत्ति प्रत्यशास्त्रत्वात् । शब्दशास्त्रमेतदिति चेत् ? तेष्वपि पूर्वोक्तेन

---

१ क. शक्यते ।    २ क. मनर्थकं कल्पयेम ।

निर्मूलत्वेन न व्यवस्था स्यात् । तस्मात्कल्पसूत्र-निरुक्त-मीमांसानामेवाधीतमन्त्र-ब्राह्मणार्थविज्ञानोपयोगक्षमत्वादेतत्प्रयोजनं युक्तम्, न तु व्याकरणस्य ।

**यस्तु प्रयुङ्क्ते** इत्येतदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते । यथासमाम्नातादन्यथाकरणाच्च **'दुष्यति चापशब्दैः'** इति । स्वाध्यायाध्ययनाध्यापनयजनयाजनगतवेदशब्दविनाशेऽपि **'यदृक्तो यज्ञ आर्तिभियात्'** इति । एतद्वचनादवगतदोषानुवादोऽपीत्यगम्यते । वाग्योगविदिति च बहुलोकव्यवहारदर्शनाद्विदितपदपदार्थसम्बन्धः पुमान्, ब्राह्मणवाक्येषु चोद्दिश्यमानोपादीयमानगुणप्रधानादिनिरूपणावधृतवचनव्यक्तिविशेषो मन्त्रेषु चावगतचोदितस्वार्थपरार्थप्रकाशनार्हत्वानर्हत्वविदेव[1] च वाग्योगविदित्युच्यते, न वैयाकरणः वैयाकरणस्यैवंविधप्रयोगोत्पत्त्यशास्त्रत्वात् ।

**यदप्यविद्वान्स** इति प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनम्, तत्प्लुतस्य त्रिमात्रस्य लोकप्रसिद्धत्वान्मन्वाद्युपदिष्टनामान्त्यप्रयोगसिद्धौ लब्धायां तत्प्रयोगोत्पत्त्यशास्त्रत्वम् । न च तावता मन्वादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादिविभागद्वारेण शब्दापशब्दविवेकज्ञानम्,[2] तदुपयोगो वाऽऽश्रीयते ।

यच्च **प्रजायाः सविभक्तिकाः कर्तव्याः** इति, तद्याज्ञिकोपदेशसिद्धत्वाद् ब्राह्मणे च षड्हविभक्तयः **'अग्निर्वृत्राणि जङ्घनत्' 'अग्निं वो वृत्रहन्तमम्' 'अग्निनाऽग्निः समिध्यते'** इत्येवमादिविभक्तविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणम् । वैभक्तिकमात्रालोचनापि वा स विभक्तिकप्रयाजप्रयोगसिद्धेरशास्त्रं व्याकरणम् ।

**'यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति, स आर्त्विजीनो भवति'**[3] इति सम्यग्वेदाध्याय्येवमभिधीयते ।

तथा **'चत्वारि वाक्परिमिता पदानि'** इति यानि तावदोंकारमहाव्याहृत्यादिचतुष्टयबाहुल्यप्रयोजनानुसरणेन नैरुक्तैरप्यक्षरवर्णसाम्यान्निर्ब्रूयादितिवत्प्रपञ्चितानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमताश्रितम्, तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने **'तुरीयं वाचो मनुष्या वदन्ति'** इत्यसम्बद्धमेव स्यात्, चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात् । तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यसंगतो वर्ण्यते । **'चत्वारि वाक्परिमिता पदानि'** इति यैर्वाक्पद्यते गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्य-

---

१ क. चोदिताचोदित । २ क. (टिप्पण्यां) शब्दविवेकज्ञानमिति पाठः ।

३. महाभाष्ये पस्पशाह्निके ऋ० सं० (१-१६४-४५) ।

भिधीयन्ते। तत्र यानि प्रतीकविधिप्राकृतवैकृतवाक्यसारूप्यदृष्टानुपपद्यमानादि-प्रभवैरनुमानोपमानार्थापत्त्याख्यैस्त्रिभिर्गम्यन्ते, तानि तत्सिद्धत्वादेव नेङ्गयन्ति नोच्चारयन्ति। यस्तु भागस्तैरशक्यः प्रतिपादयितुम्, तं तुरीयं प्रत्यक्षसमधिगम्यमध्येतारो मनुष्या वदन्ति समामनन्तीत्यर्थः। षट्प्रमाणीमध्यान्न प्रमाणद्वयं वाक्पदत्वादपोद्धृतम्। अभावस्तावदभावविषयत्वादेव वाक्पदं न भवति। आगमस्य पुनर्वागात्मकत्वात्पद्यमानवागाश्रितस्य पदत्वाश्रयणमनुपपन्नम्। प्रत्यक्ष-पक्षनिक्षिप्तत्वापृथक्त्वेनानिर्देशः।

चत्वारिश्शृङ्गा इत्यस्य[1] तु विषुवति होतुराज्ये प्रयुक्तस्य योऽर्थः स, मन्त्राधिकरणे व्याख्यातः। न चात्र काचिद् व्याकरणापेक्षा।

यत्तु चत्वारि पदजातानि शृङ्गाणीत्येवमादिसंख्यासामान्यमात्रेण कर्मविनियोगानपेक्षमर्थान्तरं वर्ण्यते, तद्व्याकरणकृतवाक्कौशलमात्रम्। तादृशं च वैशेषिकादिष्वपि तदभियुक्तैः शक्यं योजयितुमित्यनादरणीयम्।

**'उतत्वः पश्यन्'**[2] इत्यपि लोक-निरुक्त-कल्पसूत्र-मीमांसाश्रयोत्पन्नपदार्थ-वाक्यार्थज्ञानप्रशंसार्थ एव मन्त्रो विज्ञायमानो न व्याकरणमाद्रियते।

एवं **'सक्तुमिव तितउना'** इत्येषोऽप्यविप्लुतस्वाध्यायाध्ययननिर्मलवेदाक्षरार्थ-ज्ञानप्रशंसार्थं पूर्ववदेव वर्णनीयः।

**'आहिताग्निरपशब्दं प्रयुज्य'** इति, व्याख्यातमेव तत्।

यदपि नामकरणे, घोषवदाद्यन्तरन्तस्थं[3] द्विचतुरादिवर्णकृदन्तपरिग्रहतद्धित-वर्जनवचनम्, तत्कृत्तद्धितसंज्ञयोर्व्याकरणेऽपि पूर्वप्रसिद्धयोरेवोपादानाद्वर्णपरिमाणस्य च प्रत्यक्षपूर्वकस्मृत्यधीनत्वाद् घोषवत्त्वादीनां च शिक्षाप्रातिशाख्येष्वनुक्रमणात्सर्वैश्च श्रोत्रियैरक्लेशेन नामकरणान्न व्याकरणं नाम प्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयम्।

**'सुदेवो असि वरुण'** इत्यत्र यद्यपि तावत्सप्तविभक्तय एव सप्त सिन्धव इति व्याख्यायन्ते, तथाऽपि तासां विभक्तिसंज्ञामात्रं व्याकरणेन क्रियते, प्रसिद्धमेव वा गृह्यते। यानि तु प्रयोगरूपाणि तानि लोके वेदे च विभागशः प्रत्यक्षाण्येवेति, न व्याकरणापेक्षयैवमभिधीयन्ते[4]। यदा पुनः सप्त सिन्धवो[5] नद्य एव। यज्ञर्त्विग्यजमानप्रशंसापक्षे वा सप्त होत्रागता वाचः। सप्त सामस्वरगतास्तद्भक्तिगता वा परिगृह्यन्ते, तदैतिहासिकयाज्ञिकगोचरापन्नत्वादविषय एव व्याकरणस्य।

---

१. ऋ० सं० (४-५८-३)। २. ऋ० सं० (१०-७१-४)।
३ क. दाद्यन्तरं तस्य। ४ क. मभिधीयते। ५ क. सिन्धवोऽनद्य।

**व्याकरणेन संस्कारो भवतीति पक्षस्य निरासः**

संस्कृतानां च शब्दानां साधुत्वे परिकल्पिते।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः ॥ ७८१

व्याकरणेन शब्देषु संस्क्रियमाणेषु न ज्ञायते किं वस्तु संस्क्रियते, को वा संस्कार उत्पत्तिप्राप्तिविकारापूर्वसाधनसामर्थ्याधानानां क्रियत इति।

न तावदस्ति शब्दत्ववर्णत्वव्यक्तिसंस्क्रिया।
सर्वत्रातिप्रसङ्गेन न व्यवस्था हि सिध्यति ॥ ७८२

शब्दत्वे संस्कृते स्याद्धि ध्वनीनामपि साधुता।
वर्णत्वेऽप्येकवर्णानां गाव्यादीनां च तुल्यता ॥ ७८३

एतेन वर्णव्यक्तिसंस्कारः प्रत्युक्तः।

गवादिषु गकारादिर्यः सकृत्संस्कृतः क्वचित्।
गाव्यादिषु स एवेति साधुरेव प्रसज्यते ॥ ७८४

एवं प्रत्येकसंस्कारे न कस्यचिदसाधुता।
समुदायस्तु नैवास्ति तेषामयुगपच्छ्रुतेः ॥ ७८५

येषां तावद्वर्णव्यक्तयः प्रध्वंसिन्य एव, तेषां विनष्टानुत्पन्नानां संस्कारायोग्यत्वमेव।

वर्तमानाऽपि संस्कारक्षणं नैवावतिष्ठते।
तावदेव विनश्येत्सा यावत्संस्कर्तुमिष्यते ॥ ७८६

न च तां संस्कृतां भूयः कश्चन द्रक्ष्यति क्वचित्।
सक्तूनामिव संस्कारो होमेनैष प्रसज्यते ॥ ७८७

यथैव होमसंस्कृतानां भस्मसाद्भावात्सक्तूनां पुनर्दर्शनविनियोगासंभावाद् द्वितीयाप्रतिपादितसंस्कार्यत्वपरिग्रहे सक्तवो होमस्तद्भावनाविधिरिति सर्वेषामनर्थकत्वं प्रसज्यत इति संस्कारानाश्रयणम्, तथैव क्षणिकशब्दव्यक्तिसंस्कारपक्षे सर्वानर्थकत्वप्रसङ्गः।

**लक्षणं प्रवर्त्यमिति भाष्योक्तस्य अर्थस्य निरासः**

ततश्च योऽप्ययमनियमोऽभिहितः, यद्येव नित्यः शब्दः, अथापि कार्यः 'उभयथाऽपि लक्षणं प्रवर्त्यम्'[1] इति स एवमेव न्यायनिरूपणभयमात्राविष्करणार्थः शिष्यव्यामोहनार्थो वेति न युक्तः परिग्रहीतुम्।

अदूरविप्रकृष्टे च वस्तुन्यनियमो भवेत्।
शीतोष्णानियमं ब्रूयात्को नु वह्नेः सचेतनः ॥ ७८८

---

१ महाभाष्ये पस्पशाह्निके।

उत्पादश्चैव संस्कारं कार्यपक्षे भवेदयम् ।
ततश्च सुतरां प्राप्ता प्रयोगोत्पत्त्यशास्त्रता ॥ ७८९

व्याकरणप्रक्रियानुगृहीतेन वैयाकरणेनोत्पाद्यमानेषु साधुशब्देषु नित्यवेदमूलत्ववेदाङ्गत्वनिराकरणं स्वयमेवाऽऽपादितम् ।

अथ व्याकरणोत्पन्नैः शब्दैर्वेदोऽपि निर्मितः ।
ततो व्याकरणस्येव वेदस्याप्यप्रमाणता ॥ ७९०

शब्दश्चोत्पाद्यमानत्वे क्षणान्न स्यात्क्षणान्तरे ।
तादृशस्य च संस्कारो न शक्यो नोपयुज्यते ॥ ७९१

तस्मादनियमं मुक्त्वा नित्यः संस्क्रियते यदि ।
विक्रियाख्योऽपि संस्कारस्ततो नैवाऽस्य संभवेत् ॥ ७९२

विना व्याकरणादाप्तिः सिद्धा श्रोत्रसमाश्रया ।

**दृष्टार्थेषु शब्देषु अदृष्टार्थनियमस्यासंभवोपपादनम्**

अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते ॥ ७९३

दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् ।
न हीष्टं भोजनार्थानां व्रीहीणां प्रोक्षणात्फलम् ॥ ७९४

कर्मप्रकरणाम्नाता न च व्याकरणक्रिया ।
येनाऽपूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥ ७९५

हन्त्यादिविधिवन्नापि संभवी व्याक्रियाविधिः ।
पौरुषेयं कथं वस्तु विदध्याच्छाश्वतो विधिः ॥ ७९६

तेनानारभ्यवादेऽपि विधिर्नैवास्ति तादृशः ।
अनारभ्य विधित्वे च न कर्मार्थत्वसंभवः ॥ ७९७

ऐकान्तिकं हि संस्कार्यं यत्क्रतौ स्यात्स्रुवादिवत् ।
तद्द्वारेण क्रतुप्राप्तिर्न लोकव्यभिचारिणः ॥ ७९८

लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता ।
अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ॥ ७९९

आकाशेऽवस्थितः शब्दः संस्कर्तुं शक्यते कथम् ।
नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत् ॥ ८००

वर्णसंस्कारमात्रं च यदि व्याकरणाद्भवेत् ।
प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयोजनम् ॥ ८०१

समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति ।
प्रत्येकं च भवेद्यद्वदग्निधर्मः प्रतीष्टकम् ॥ ८०२

न च स्थलवदारम्भो वर्णैः शब्दस्य कस्यचित् ।
येन तत्संस्कृतिः सिध्येत्स हि पूर्वं निराकृतः ॥ ८०३

स्फोटगोशब्दताङ्गत्वप्रभृतौ पदकल्पना ।
गकारादिपदव्याख्याद्वारेणैव निराकृता ॥ ८०४

सर्ववर्णसमूहोऽपि न संस्कार्यः कथंचन ।
न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥ ८०५

अथ त्रिचतुरा वर्णाः संस्क्रियन्ते पदे पदे ।
संख्यामात्रस्य साधुत्वं तच्च स्यादितरेष्वपि ॥ ८०६

संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो न सेष्यते ।
ग्रहणोच्चारणस्थत्वाद् गाव्यादिषु च संभवात् ॥ ८०७

ग्रहणोच्चारणे एव संस्कार्ये यदि मन्यसे ।
कर्मणः कर्मसाध्यत्वमुपरिष्टान्निषेत्स्यते ॥ ८०८

वक्ष्यति हि—**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यादिति** ३-१-१० ।

ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद्भवेत् ।
वैद्योपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥ ८०९

मनो वा पुरुषो वाऽथ संस्कारास्पदमिष्यते ।
शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥ ८१०

शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते ।
शब्दस्याननुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥ ८११

स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते ।

### स्फोटपक्षे संस्कारानुपपत्तिवर्णनम्

असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥ ८१२

वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः ।
नामाख्यातादि[1] संस्कार्यं तेषां शशविषाणवत् ॥ ८१३

अपोद्धारेण संस्कारो यद्यत्राभ्युपगम्यते ।
श्रृङ्गं शशादपोद्धृत्य किं न संस्क्रियते मनाक् ॥ ८१४

अन्यावयवसारूप्यादपोद्धारो यदीष्यते ।
खरश्रृङ्गेण सारूप्याच्छशश्रृङ्गस्य किं न सः ॥ ८१५

---

१ क. नामाख्याता हि ।

गवयादिषु नाङ्गानां सादृश्यं यन्निदर्शितम् ।
सत्यावयवसामान्यात्तदिहापीष्यते तथा ॥ ८१६

वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् ।
तेनापोद्धारसंस्कारकल्पनाऽपि न युज्यते ॥ ८१७

अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् ।
एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥ ८१८

अशिष्यत्वादशास्त्रत्वमेवं तावत्पदं प्रति ।
वाक्यानुशासनं नेव कृतं व्याकरणेन च ॥ ८१९

अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता ।
वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात्[1] ॥ ८२०

ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥ ८२१

इति बहुप्रपञ्चमुक्त्वा केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं निराकृत्य वाक्यान्वाख्यानार्थमेव व्याकरणमपि व्याख्यानं युक्तमासीत् तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारवदेव पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्याप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् ।

अतो विगानभूयिष्ठाद्विरुद्धान्मूलवर्जितात् ।
निष्फलाच्च व्यवस्थानं शब्दानां नानुशासनात् ॥ ८२२

ततश्च—स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु ।
शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥ ८२३

तेन सर्वैर्भाषितव्यम्, सर्वे साधव इति ।

अत्रानुमानप्रयोगाः—

गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः ।
वृद्धैस्तत्र प्रयुक्तत्वाद् गौरुस्रेत्येवमादिवत् ॥ ८२४

एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात् ।
श्रौत्रत्वान्नापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥ ८२५

अनादित्वं च सर्वेषामवध्यनवधारणात् ।
वक्तुर्वक्तुः पुरो वृत्तेः शक्यं वक्तुं गवादिवत् ॥ ८२६

---

[1] क. न्यर्थवज्जनात् ।

साधुभिर्भाषमाणानां नादृष्टफलसम्भवः ।
दृष्टार्थत्वाद्यथा धूमादग्निं देशेऽवगच्छताम् ॥ ८२७

अशास्त्रविहितत्वाच्च बुद्धशब्दाभिधानवत् ।
शास्त्रं नावेदरूपत्वात्प्राकृतव्याक्रियादिवत् ॥ ८२८

वेदमूलतयाऽप्यस्य प्रमाणत्वं न कल्पते ।
अवेदविषयार्थत्वान्नाटकादिनिबन्धवत् ॥ ८२९

शास्त्राङ्गमपि नैवैतदतादर्थ्यात्कथादिवत् ।
अतादर्थ्यं विनाऽप्यस्माद्वेदेनार्थावबोधनात् ॥ ८३०

न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्तनात् ।
यदीदृशमनङ्गं तद् दृष्टं नेत्रानुमानवत् ॥ ८३१

यथा हि चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तज्जनितार्थापत्तिप्रभवं चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञानस्याङ्गम्, एवं लोकवेदसिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्यनङ्गम् ।

तस्मात्पर्यायशब्दत्वाद् गाव्यादेस्तरुवृक्षवत् ।
आचारेण प्रयोज्यत्वं न शास्त्रस्थैर्निवारितम् ॥ ७३२ ॥ २४ ॥

## अथाष्टमव्याकरणाधिकरणम् ॥८॥

न्या० सु०—अत्र भाष्यकृता गोगाव्यादिशब्दानुदाहृत्य किमेते सर्व एव सास्नादिमतोऽर्थस्य वाचकाः सन्तो वाक्यार्थे प्रमाणम्, उत एक एवेति । सास्नादिमतो वा पदार्थस्य कार्यायां वाक्यार्थप्रमायां कारणं किमेते सर्व एव, उत एक एवेति सन्देहमुपन्यस्य प्रयोगभेदेनाविरोधात्सर्वेषां व्रीहियवादिवद्विकल्पेन प्रामाण्योपपत्तेः, सिद्धान्ताभावेन सन्देहानुपपत्तिमाशङ्क्य किमत्रेति भाष्येण शक्त्या विना शब्दस्यार्थप्रत्यायकत्वं सम्भवति, उत नेति सन्देहकारणमुक्त्वा सर्व इत्यादिना भाष्येण पूर्वपक्षः कृतः ।

### यववराहाधिकरणन्यायवर्णनम्

तत्र यववराहाधिकरणे शास्त्रस्थप्रयोगबलेन लौकिकप्रयोगबाधस्योक्तत्वात् पूर्वपक्षानुपपत्तिमाशङ्क्याह— एकस्मादिति । व्यवस्थितशास्त्रस्थप्रयोगबलेनाव्यवस्थितलौकिकप्रयोगबाधमङ्गीकृत्य यवादिशब्दानां दीर्घशूकाद्यर्थनिर्धारणं यत्प्रतिपादितम्, तत् विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाद् गौणमुख्यविभागाश्रयणाच्चेति योज्यम् । एतत्कारणत्रयोपपादनायैकस्मादित्युक्तम् । यवैर्यजेतेत्येकस्माद्यवपदाद्दीर्घशूकैर्वा यष्टव्यम्, प्रियङ्गुभिर्वेत्यनेकार्थप्रतीतेर्विकल्पोऽनेकशक्तिकल्पना ह्येकस्य शब्दस्यापद्येत, एकस्मिंश्चार्थे शब्दस्य शक्तौ क्लृप्तायां गौणत्वेनेतरत्र प्रयोगोपपत्तेर्नानेकशक्तिकल्पनं युक्तम् । इह तु गोशब्दश्रवणात्ततोऽ-

र्थंप्रतीतिर्गावीशब्दश्रवणं तस्मादिति व्यवस्थोपपत्तेर्न तावच्छ्रोतुर्विकल्पापत्तिः। वक्तुरप्ययमेव शब्दः प्रयोज्य इति नियमाभावात्प्रसज्यमानोऽपीच्छया विकल्पेन दोषमावहति। यत्र च कारणात्कार्यंदर्शनं तत्र शक्तेरस्तित्वं सम्प्रतीयत इति न्यायेन शक्तेः कारणाश्रितत्वेन शब्दसमवेतत्वात्तद्भेदे युक्त एव भेदो। गाव्यादीनां चार्थान्तरे मुख्यगौणाभावात्सास्नादिमति गौणत्वायोगात् शब्दसादृश्यमात्रेण शब्दस्य शब्दान्तरार्थंप्रत्यायकत्वे चालाशब्दस्यापि मालाशब्दार्थंप्रत्यायकत्वापत्तेर्मुख्यत्वमवश्यं प्रतीयत इति वैषम्यम्। प्रियङ्गुदीर्घशूकयोश्चैकपदोक्तयोर्विकल्पे तस्यैव यवपदस्य युगपदेकार्थापेक्षया प्रामाण्यम् अर्थान्तरापेक्षया चाप्रामाण्यमित्यत्यन्तविरोधं वक्तुम्—एकस्मादित्युक्तम्। केषांचिद्दीर्घशूकेषु प्रयोगः, अन्येषां प्रियङ्गुष्वित्यनेकार्थप्रतिभानकारणमुक्तम्।

यववराहाधिकरणन्यायमुक्त्वा, तद्वैषम्यमत्रैव दर्शयन् पूर्वपक्षयति—यत्र पुनरित्यादिना। 'साधुत्वेनावधार्यन्त'इत्यन्तेन तत्र सत्यप्येकविषयानेकशब्दत्वेऽर्थसाधनत्वात्साधुत्वेनावधार्यन्त इति वक्ष्यमाणसाध्यालोचनेन शक्तिभेदोपपत्तेरविरोधादिति च पञ्चमीद्वयं योज्यम्। शब्दाश्रितत्वाच्छक्तेः, तद्भेदे शक्तिभेदौचित्यं समवायिशब्देनोक्तम्। अर्थविशेषावच्छिन्नशब्दाश्रितैकशक्तिकल्पनामात्रेणोभयनियमोपपत्तेरनवच्छिन्नशक्तिकल्पने वा शक्तिद्वयकल्पनेऽप्यर्थस्य सर्वशब्दवाच्यत्वापत्तेः, शब्दस्य च सर्वार्थवाचकत्वापत्तेरर्थाश्रितशक्त्यभावात् अर्थैक्येऽप्येकस्यानेकशक्तिकल्पनादोषो नास्तीत्याशयः। यवादिविधेश्च शास्त्रस्थप्रयोगेण दीर्घशूकादिविषयत्वावधारणात्तद्विरुद्धलौकिकप्रयोगावगतप्रियङ्ग्वादिविषयत्ववाचोदाहृतगवादिशब्दप्रयोगमात्रेण गाव्यादिशब्दानामप्रयोगत्वावगमात्सर्वपर्य्यायप्रयोगानियमाच्चाविरोधान्न शास्त्रस्थप्रयोगेण लौकिकप्रयोगबाध इति शास्त्रस्थेत्यस्यार्थः।

अस्यैव पूर्वपक्षहेतुद्वयस्य यववराहाधिकरणन्यायवैषम्यप्रतिपादनार्थत्वप्रदर्शनार्थं सत्यपि विरोधे शास्त्रस्य साध्वसाधुत्वप्रतिपादनव्यापाराभावाच्छास्त्रस्थप्रयोगस्य निर्मूलत्वेन लौकिकप्रयोगाबाधकत्वादपि सर्वे साधुत्वेनावधार्यन्त इति उत्तरोपपत्तिर्वक्ष्यमाणसाध्यव्यवधायकरूपेण पदपूर्वकत्वाच्चेति स्वोपपादकोपन्यासपूर्वमुपन्यस्ता अनेन व्याकरणस्मृत्यप्रामाण्येन पूर्वपक्षकरणाद्विचारस्य पादाध्यायसङ्गतिर्दर्शिते। अनन्तराधिकरणसङ्गतिस्त्वीदृगसम्भवप्रतिपादनार्थमेव वेत्यत्र होलाकाधिकरणोक्तव्यक्त्याकृत्यादिवाच्युपपदासम्भवोपजीवनेनात्र पूर्वपक्षोत्थानात् वक्ष्यते व्याकरणशास्त्रव्यापारस्य पदपूर्वकत्वोपपादनार्थं वाक्यात्मकत्वं विशेषणम्। अनेन च व्याकरणशास्त्रस्य लोकप्रसिद्धपदप्रयोगादुत्पत्तेः। साध्वसाधुव्यवस्थायाः शास्त्रविषयत्वायोगादित्येवम्प्रयोगोत्पत्त्यशास्त्रत्वादिति सूत्रावयवो व्याख्यातः। लोकप्रसिद्धसाधुशब्दवशात् व्याकरणशास्त्रं प्रवर्त्तते तस्माच्च लौकिकशब्दानां साध्वसाधुत्वनिर्णय इतीतरेतराश्रयोपपादनार्थम्—तथा हीत्युक्तम्। शब्दरूपश्चासावर्थश्चेत्येवं वस्तुवचनत्वेनार्थशब्दो व्याख्येयपदार्थज्ञानाय वा शब्दशास्त्रस्य पदरूपशब्दापेक्षाप्रदर्शनार्थोऽर्थशब्दः। नन्वेवमप्यर्थप्रतिपादकत्वेन गोगाव्यादिशब्दानां लोके प्रसिद्धत्वात्साधुत्वम्, भेर्यादिशब्दानां त्वर्थप्रतिपादकत्वाप्रसिद्धेरसाधुतेति व्यवस्थोपपत्तेः, शब्देषु न व्यवस्था

स्यादित्ययुक्तमित्याशङ्क्य—अत इत्युक्तम्। लोकप्रयुक्तेष्वेव गोगाव्यादिषु साध्वसाधुत्वव्यवस्थानिरासार्थमेतदित्याशयः।

नन्वेवं सत्याचारेण स्मृतिबाधः स्यात् स च पूर्वोक्तस्मृतिबलाबलीयस्त्वविरुद्ध इत्याशङ्क्य—वाक्यार्थेषु हीत्युक्तम्। तत्र आचारानपेक्षायाः स्मृतेस्ततो बलीयस्त्वम्। इह तु स्मृतेराचारापेक्षत्वेन विपरीतबलाबलक्रमत्वाल्लोकादेव साध्वसाधुता निर्णेतव्येत्याचारेण स्मृतिबाधो युक्त एवेत्याशयः। ननु लोकस्य सङ्कीर्णव्यवहारित्वात्साध्वसाधुत्वनिर्णायकत्वं न युक्तमित्याशङ्क्य—वाचकेत्युक्तम्। अर्थप्रत्यायको यो गोगाव्यादिशब्दः, स साधुः। अप्रत्यायको भेर्यादिशब्दश्चासाधुरिति व्यवस्था लोकसिद्धैवेत्यर्थः। ध्वनिमात्राणीत्यनेनैतदेव विवृतम्। मात्रिका वर्णसमाम्नायः। ननु वेदादिविद्यास्थानप्रत्युक्तेष्वेव गवादिशब्देषु साधुत्वप्रसिद्धेर्गाव्यादिशब्देषु च तत्राप्रत्युक्तेष्वसाधुत्वप्रसिद्धेर्लोके चैवंविधव्यवस्थोनुपलब्धेः वर्तते निर्णयः सम्भवतीत्याशङ्का, साध्वसाधुशब्दयोरर्थप्रत्ययसाधनत्वासाधनत्वनिमित्तत्वेन रूढित्वाभावाल्लोके च भेर्यादिशब्दानामप्रत्यायकत्वनिश्चयात्। गोगाव्यादिशब्दानां प्रत्यायकत्वनिश्चयात्सिद्धैव व्यवस्थेति—तेनेत्यादिनोक्तम्। अपशब्दत्वमप्यर्थप्रत्ययानवगमनिमित्तत्वाद्भेर्यादिशब्देष्वेव व्यवस्थितमित्यनर्थकत्वादित्यनेनोक्तम्। नन्वेकेनैवार्थप्रत्ययसिद्धेः कथमेकस्मिन्नर्थे अनेकेषां साधुतेत्याशङ्का गवादिदृष्टान्तेन निरस्ता। एवं वाचकशक्तिभेदोपपत्तिरविरोधादिति च पञ्चमीद्वयान्वयायैतावद्ग्रन्थतात्पर्यमेकवाक्यतया व्याख्यातम्।

यद्वा तत्र वाचके शक्तिभेदोपपत्तिप्रतिरोधत्वं पर्यालोच्य यो निर्णयो भवति। सर्वेषां साधुत्वमित्येवंरूपः स्वीकार्यः। न तु शास्त्रस्थप्रयोगबलेन लौकिकप्रयोगबाधं पर्यालोच्येति ल्यब्लोपे पञ्चमीद्वयमङ्गीकृत्य पूर्वफक्किकागतनिर्णयशब्दानुषङ्गेण वैषम्यप्रतिपादनार्थत्वेनाविरोधादित्यन्तं ग्रन्थं व्याख्याय, ननु वाचकशक्तिभेदोपपत्तौ शास्त्रस्थप्रयोगाविरोधे च सत्यपि व्याकरणशास्त्रेण गवादिशब्दानामेव साधुत्वान्वाख्यानेनेतरेषामसाधुत्वप्रतिपादनान्न तद्विरुद्धाचारबलेन सर्वेषां साधुत्वं युक्तमित्याशङ्कानिराकरणार्थं तयोत्तरग्रन्थो व्याख्येयः। अत्र भाष्यकृता 'सर्वं इति ब्रूम' इत्यनेन शब्देषु न व्यावस्था स्यादिति सूत्रावयवं सर्वशब्दानादित्वपूर्वपक्षप्रतिज्ञानर्थत्वेन व्याख्याय, कुत इत्यादिनार्थप्रत्ययान्यथानुपपत्त्या गाव्यादिशब्दानामपि सास्नादिमतार्थेन सह वाच्यवाचकसम्भवं प्रश्नपूर्वकमुपपाद्य, अशक्तिजत्वेनापभ्रंशत्वशङ्कामबाध्य स्मृत्या निराकृत्य, कर्तृस्मृत्या च सामायिकत्वाशङ्कां सम्बन्धग्रन्थे निराकृतामुक्त्वा, तस्मात्सर्वे साधवः इत्युपसंहृत्य सर्वेषामर्थवत्त्वात्सर्वैर्भाषितव्यमिति पूर्वपक्षप्रयोजनमुक्त्वा, तेन सर्वेषां दृष्टार्थसाधनत्वाविशेषेऽप्यदृष्टार्थो गवादिशब्दनियमो भविष्यतीत्याशङ्कानिरासार्थत्वेन प्रयोगोत्पत्तेरुच्चारणनियमस्याशास्त्रीयत्वादित्येवं प्रयोगोत्पत्त्यशास्त्रत्वादितिसूत्रावयवो व्याख्यातः। तत्र भाष्यतात्पर्यविवेकार्थं दृष्टार्थत्वे साधनत्वाद् गाव्यादिशब्दानामसाधुत्वासम्भवमुपपादितमुपसंहरति—

ततश्चेति । न च दृष्टार्थसाधनत्वनिबन्धनत्वात् साधुशब्दस्य, गाव्यादिशब्दानां तदभावात्साध्वसाधुव्यवस्था भविष्यतीत्याशङ्कते—अदृष्टेति । साध्वसाधुव्यवस्थेत्यर्थः ।

यद्वा श्रेयोरूपादृष्टसाधनत्वनिबन्धना साधुता प्रत्यवायरूपादृष्टसाधनत्वनिबन्धनाऽसाधुतेत्यर्थः । साधूनामेवादृष्टसाधनत्वम् अदृष्टसाधनत्वमेव वा साधुत्वमित्युभयथापि व्यवस्था वेदाधीना । न च सा वेदवाक्यैर्निर्दिष्टा । अदृष्टसाधनत्वं वान्यप्रमाणविषय एव न भवतीति निराकरोति—वेदवाक्यैरिति । न च दृष्टसाधनत्वस्य प्रमाणान्तराविषयत्वेऽपि तद्धेतुभूतयोः साध्वसाधुत्वयोः प्रमाणान्तरावगतयोर्वेदेनादृष्टसाधनत्वबोधो भविष्यतीत्याशङ्क्याह—प्रत्यक्षेण तावदिति । उपमानस्य सादृश्यमात्रविषयत्वेनानाशङ्कनीयत्वादर्थप्रत्ययान्यथानुपपत्तेश्चार्थापत्त्या सर्वेषां वाचकत्वप्रतीतेर्व्यवस्थापकत्वस्य दूरनिरस्तत्वादनिराकरणम् ।

ननु प्रमाणान्तरासम्भवेऽपि वेदवाक्यं साधुत्वासाधुत्वाग्राहकं भविष्यतीत्याशङ्क्याह—वेदेति । साध्वसाधुत्वयोः शब्दावान्तरजातिरूपत्वे वस्तुस्वरूपान्वाख्यानपरमेते साधवस्त्वन्य इत्येवं रूपं वाक्यं कल्प्यम् । धर्मान्तरत्वे साधुत्वगुणान्वाख्यानपरम् । असाधुत्वदोषान्वाख्यानपरं तस्य च पुरुषार्थानुबन्धित्वाभावेनानर्थक्यापत्तेरध्ययनविधीनां तात्पर्यानवधारणात्प्रमाण्यं न युक्तमित्याशयः । आत्मस्वरूपप्रतिपादकानां तूपासनादिविध्यपेक्षितार्थाभिधानात्सरस्वतीविनशनादिना वाक्यानां सारस्वतसत्रादिकर्म्मविशेषौपयिकत्वानामानर्थक्यापत्तिरिति वैषम्यसूचनार्थम्—विधीत्युक्तम् । अस्तु तर्हि विधिनिषेधरूपमेव वाक्यं साध्वसाधुत्वप्रतिपादकमित्याशङ्क्याह—न वेति । ननु माभूत्स्वरूपेण विधिनिषेधविषयत्वं 'साधुभिरभिदध्यादसाधुर्भिनं' इत्यभिधानकरणत्वेन तु भविष्यतीत्याशङ्कते—अभिधेति । गोशब्देनाभिदध्यादश्वशब्देनाभिदध्यात्, गावीशब्देनाभिदध्यात्, न गोणीशब्देनाभिदध्यादित्यादिस्वरूपा प्रत्येकं वा विधिनिषेधा कल्प्यन्ते, 'साधुरभिरभिदध्यादसाधुर्भिर्नेति' द्वावेव वा । तत्रानन्त्यापत्तेराद्यं पक्षं तावद् दूषयति—नेति । कथं कल्पनानुपपत्तिरित्यपेक्षायां व्याकरणस्मृतिमूलत्वेन कल्प्यत्वादनन्तानां चाध्येतुमशक्यत्वादनुपपत्तिरित्याह—यो हीति । यो हि व्याकरणप्रणेता तद्गुणतया य एव पदानां प्रतिपत्तौ प्रतिपदं पाठ इति महाभाष्यकारोक्तन्यायेन साधूनां प्रतिपदं पाठान्नाध्यवस्यतीत्यर्थः । स एकैकस्य शब्दस्य गावीगोण्याद्यनेकापशब्ददर्शनात्तेषां विशेषमाह—अपशब्दाश्चेति । कलञ्जादिवदिति वैधर्म्यदृष्टान्तं विवृणोति—व्रीह्यादीनि हीति । कलञ्जादिग्रहणेन तुल्यन्यायतया व्रीह्यादीनां विधेयत्वसम्भवसूचनार्थं व्रीह्यादिग्रहणम् । अनन्तरोक्तव्यतिरेकमुखेन द्वितीयपक्षं निराकरोति—न त्विति । सर्वानुगतैकधर्म्ममात्रोपलक्षणार्थो जातिशब्दः ।

तत्र एकोपलक्षणत्वाभावेनैकविधिनिषेधविषयत्वासम्भवमुपादयति—न तावदिति । अयमाशयः—न तावच्छब्दत्वातिरिक्ता सर्वसाधुशब्दानुयायिन्यसाधुभ्यो व्यावृत्ता विलक्षणैकाकारप्रत्ययवेद्यासाधुत्वजातिसाधुत्वजातिर्वा साधुशब्दानुगता साधुभ्यो व्यावृत्तोपलभ्यते, न वा अन्योऽपि कश्चिद्धर्म्मः साध्वसाधुशब्दाभिधेयः सम्भवति तथा हि न तावच्छब्दव्यति-

रिक्तस्येन्द्रियलिङ्गादेः शब्दस्यापि वा वक्तृज्ञानविवक्षाविषयप्रत्यायकत्वं साधुत्वं कस्यचिदिष्टम् । न च शब्दस्यार्थप्रत्यायकत्वं साधुत्वम्, गाव्यादिशब्देष्वव्याप्तेः । न च शब्दस्य शक्त्यार्थप्रतिपादकत्वं साधुत्वं गङ्गायां घोषोऽग्निर्माणवक इत्यादौ गङ्गाग्निशब्दयोस्तीरमाणवकादिषु शक्त्यभावेऽपि तत्र साधुत्वप्रसिद्धार्थान्तरविषयशक्त्या अर्थान्तरविषयसाधुत्वाभ्युपगमे गोणीशब्दस्याप्यावपनविषयशक्तिसद्भावात् सास्नादिमति साधुत्वापत्तिः । देवदत्तादिशब्दानां च संस्कृतेनार्थप्रदिपादनम् । न च शब्दस्यार्थप्रत्यायकत्वं साधुत्वम्, गाव्यादिशब्देष्वव्याप्तेः । न च शब्दस्य शक्त्या अर्थप्रतिपादकानां शक्त्यभावादसाधुत्वापत्तिः । स्नुषादिशब्दानां पुत्रभार्यादिवाचिता पुत्राद्यनभिधाय तद्विशिष्टभार्याद्यभिधानशक्तेः पुत्रादौ शक्तिसद्भावात्साधुत्वापत्तिः । अर्थविषयानादिप्रयोगत्वे तु साधुत्वलक्षणे गाव्यादिशब्दानामपि सास्नादिमदर्थविषयप्रयोगाव्यस्मरणेनानादित्वावगमात्साधुत्वमशक्यं निराकर्त्तुम्, स्वाभाविकार्थपरत्वमपि प्रतीतिप्रयोगाविशेषाद् गवादिशब्दवद्गाव्यादिशब्देष्वपि तुल्यम् । लक्षणानुगमोऽपि च सिद्धेरुभयानर्थक्यमाशङ्क्य चम्पतीत्यादिशब्देषु वृद्धाप्रयुक्तत्वेनासाधुतयाऽभिमतेषु भावान्न साधुत्वलक्षणमिति न कथंचित् साधुत्वं निरूपयितुं शक्यम् अनेनैव मार्गेणासाधुत्वमपि निराकार्यमिति । एतदेव विवृणोति—**अविभक्ता हीति** । अतश्चैकोपलक्षणाभावात्सामान्यरूपेण साध्वसाधूनां विधिनिषेधविषयत्वानुपपत्तेः । व्यक्तिरूपेण विधिनिषेधविषयत्वानुपपत्तेः । पूर्वोक्तमेव विधिनिषेधानन्त्यप्राप्तमित्युपसंहरति —**तेनेति** । ननूपलक्षणान्तरासम्भवेऽपि स्वाभाविकार्थपरत्वलक्षणसाधुत्वतद्विपर्ययलक्षणासाधुत्वोपलक्षणयोगेन विधिनिषेधविषयत्वं भविष्यतीत्याशङ्क्याह—**न चेति** । अर्थप्रत्यायनोद्देशेन सर्वेषां प्रयोगदर्शनेनार्थप्रत्यायनार्थत्वावसायादर्थप्रत्ययनार्थत्वलक्षणस्य वाचकत्वस्याव्यावर्त्तकत्वात्तद्विपर्ययलक्षणस्य वा वाचकत्वस्यासत्वान्नोपलक्षणत्वं सम्भवतीत्याशयः ।

ननु गाव्यादिशब्दाव्यावर्त्तकत्वेऽपि प्रसिद्धावाचकत्वात्भेर्यादिशब्दव्यावर्तकत्वाद्वाचकत्वस्य विधेयशब्दोपलक्षणत्वोपपत्तेरवाचकत्वस्य निषेध्यभेर्यादिशब्दोपलक्षणतोपपत्तेस्तन्निबन्धनौ विधिनिषेधौ भविष्यत इत्याशङ्क्याह—**वाचकैरिति** । प्राप्ताप्राप्तत्वया विधिनिषेधविषयत्वाभावे दृष्टान्तमाह—**न हीति** । द्रवद्रव्यमात्रोपलक्षणार्थमुदकग्रहणम् ।

ननु विधिनिषेधरूपश्रुतिमूलानपेक्षव्याकरणपरम्परामात्रेण साध्वसाधुविवेकसिद्धे विधिनिषेधनिराकरणमनर्थकं मूलश्रुत्यपेक्षायामपि वा साध्वनुशासनात्मकत्वेन व्याकरणस्य साधुविधिमात्रापेक्षत्वादसाधुनिषेधनिराकरणमनर्थकमित्याशङ्क्याह—**अवश्यं चेति** । निर्मूलत्वे अन्धपम्परान्यायापत्तेर्न साध्वसाधुविवेकसिद्धिरित्याशयः । साधुविधानेन, असाधुवर्जनसिद्धेरसाधुनिषेधेन वा साधुप्रयोगसिद्धेरुभयानर्थक्यमाशङ्क्य-—**संयोगेत्युक्तम्** । विधेयेष्टसंयोगो विधेः फलम्, निषेध्यानिष्टसंयोगो निषेधस्येत्यर्थः । ननु उपलक्षणमूलत्वे निषेधमूलसाध्वनुशासनं न युक्तमित्याशङ्क्याह—**त्रिष्वपि चेति** । साधूनामसाधुभ्योऽल्पत्वाद्व्यवस्थितत्वाच्च सौकर्यम् । एतदेव विवृणोति—**यदीति** । यथा पञ्चनखानामभक्ष्ये पञ्चैव शशादयो भक्ष्या इति नियमे कृते, ततोऽन्येषां श्वादीनामभक्ष्यत्वं गम्यते । तथा

गवादय एव साधव इति नियमे कृते अन्येषामसाधुत्वावगतिरित्यर्थः। एतदेवोपसंहरति—स एष इति। प्रासङ्गिकं व्याकरणस्य त्रिविधश्रुतिमूलत्वेऽपि साध्वनुशासनमात्रात्मकत्वसम्भवमुपसंहृत्य प्रकृतं मूलश्रुत्यनुमानासम्भवमुपसंहरति—नन्विति। मूलासम्भवमेव द्रढयितुं व्यवस्थापकोपपदासम्भवं पूर्वाधिकरणोक्तमत्रापि योजयन्नाह—इद्गुणीति। एवमेकोपलक्षणासम्भवेन विधिनिषेधासम्भवमुक्त्वा, विधिविषयासम्भवादपि विध्यसम्भवमाह—अथ प्राप्तश्चेति। अनेन च शब्दप्रयोगस्य लोकव्यवहारार्थत्वेनैवोत्पत्तेः सिद्धेरशास्त्रविषयत्वादित्येतत्सूत्रावयवो व्याख्यातः।

नन्वत्र महावार्त्तिककारेण सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमो यथा लौकिकवैदिकेष्विति व्यवहारलक्षणेनैवार्थेन साध्वसाधुशब्दप्रयोगे आक्षिप्ते धर्म्मार्थं शास्त्रेण साधुनियमः क्रियते। यथा लोके क्षुत्प्रतीघातार्थे प्राप्ते भक्षणे भक्ष्याभक्ष्यनियमो वेदे वा पयोव्रतं ब्राह्मणस्येत्यादिवदिति नियम इति वदता समाधानमुक्तमित्याशङ्कते—अथेति। धर्म्मजिज्ञासापह्नवेन धर्म्मस्य नियम इति। षष्ठीविग्रहेऽपि सम्बन्धमात्रोत्पन्नायाः षष्ठ्यास्तादर्थ्यलक्षणविशेषनिष्ठत्वसन्दर्शनार्थं धर्मायेति चतुर्थीनिर्द्देशः।

साधूनां नियमविषयत्वासम्भवेनैतन्निराकरोति—तदिति। नित्यप्राप्तस्य नियमविषयत्वासम्भवे हेतुमाह—यस्य हीति। ननु गाव्यादिभ्योऽप्यर्थप्रत्ययसिद्धेस्तत्प्रसक्तौ गवादिशब्दस्य पाक्षिकत्वापत्तेर्गाव्यादिनिवृत्त्यर्थो नियमो भविष्यतीत्याशङ्क्याह—यस्यापीति। गाव्यादिशब्दानां साध्वसाधुत्वपक्षद्वयेऽपि व्यावर्त्यत्वायोगादित्याशयः। एतदेवोपपादयितुं विकल्पयति कीदृशश्चेति। उभयत्र दोषमाह—यदीति। न च साधूनामप्यर्थप्रत्ययहेतुत्वादस्तिप्रसक्तिरित्याशङ्क्याह—यदि हीति। शब्दव्यापारसाध्यमर्थप्रतिपादनं भाषणम्। नार्थप्रतिपादनमात्रं शब्दस्य च मुख्यार्थे साक्षाद्व्यापारो गौणलाक्षणिकयोस्त्वभिधेयसादृश्याविनाभावद्वारा। गाव्यादीनां तु कथंचिद्व्यापारालाघवशब्दव्यापारसाध्यार्थप्रतिपादनात्मके भाषणे हेतुतास्तीत्याशयः।

ननु साधूच्चारणायैव प्रवृत्तस्य प्रमादेन अशक्त्या वा प्रसज्यमानस्यासाधोर्निवृत्त्यर्थो नियमो भविष्यतीत्याशङ्कते—अथेति। प्रमादाशक्तिजानां दोषाणां परिहर्त्तुमशक्यत्वात्तन्निवारणमनर्थकमिति परिहरति—तदसदिति। नन्वव्यग्राणां शक्तानामपि च गाव्यादिशब्दप्रयोगदर्शनादप्रयुक्ताभिधानमयुक्तमित्याशङ्कते—दृष्ट इति। मत्पक्षे गाव्यादिशब्दानामप्यर्थप्रतिपादने व्यापारसद्भावाद्युक्ता प्रसक्तिः। त्वत्पक्षे तु तेषां कथंचिद्व्यापाराभावान्न तावच्छब्दव्यापारसाध्यार्थप्रतिपादनात्मके भाषणे प्रसक्तिः। यथा कथंचिदर्थप्रतिपादने तु प्रसक्तस्य गाव्यादेर्निवृत्त्यर्थं नियमाभ्युपगमे अक्षिनिकोचादेरपि प्रसक्तेः, तन्निवृत्त्यर्थो नियमः कल्प्यः, ततश्च शब्दव्यतिरिक्तसर्वप्रमाणोच्छेदः स्यादित्यभिप्रायेण परिहरति—उच्यत इति। निवृत्त्यर्थत्वे च नियमत्वं व्याहन्येतेत्याह—न चेति। साध्वसाध्वोश्च द्वयोर्नित्यप्राप्त्यभावात्परिसंख्या युक्तेत्याह—नियमेति। किं चादृष्टार्थस्य यागादीष्टसिद्ध्यर्थं

पुरोडाशादिद्रव्यनियमः, तत्प्रकृतित्वादिनियमः। तदपेक्षितावघाताद्युपायनियमश्च युक्तः। शब्दप्रयोगस्य तु परप्रतिपत्त्यर्थत्वेन दृष्टार्थत्वान्न तत्साधनसाधुनियमो युक्त इत्याह--न चेति।

नन्वेकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति शब्दप्रयोगस्य स्वर्गसाधनत्वावगमात्तदन्यथानुपपत्तिरस्त्येवापूर्वकल्पनायां प्रमाणमित्याशङ्क्याह—परार्थत्वाच्चेति।

ननु यथा दृष्टार्थस्यापि भोजनादेः 'आयुष्यं प्राङ्मुखो भुङ्क्त इत्यदृष्टार्थः' प्राङ्मुखत्व नियमः तथा दृष्टार्थस्यापि शब्दप्रयोगस्यादृष्टार्थः साधुनियमो भविष्यतीत्यशङ्क्याह—न चेदमिति। शब्दादीनां विषयाणां गोचरे समुदाये तन्मध्य इत्यर्थः। शब्दस्य तावन्नियमजन्यादृष्टाश्रयत्वस्य सम्भवमुपपादयति—शब्दस्येति। कर्तृत्वेन परार्थस्यापि स्वर्गकामादेः कर्म्मफलभोक्तृत्वेन प्राधान्यस्यापि भावेनापूर्वाश्रयत्वदर्शनात्तद्वैषम्यप्रदर्शनार्थम्—अत्यन्तग्रहणम्। यत्पुनः परार्थस्याप्याहवनीयादेस्सम्मार्गादिजन्यापूर्वाश्रयत्वप्रदर्शनात्—दृष्टार्थग्रहणम्। नन्वर्थस्य भाषणं प्रति प्राधान्यादपूर्वाश्रयत्वं भविष्यतीत्याशङ्क्याह—सत्यपि चेति। क्रत्वङ्गभूतानामप्यर्थानामर्थाक्षिप्तस्याभिधानस्यापि वैधत्वेन केवलदृष्टार्थत्वान्नापूर्वेणोपयोगः इत्याशयः।

ननु श्रोतुरनुष्ठेयादृष्टार्थक्रियाफलभोक्तृत्वयोग्यताधानायाऽपूर्वापेक्षणात्तदाश्रयत्वं भविष्यतीत्याशङ्क्याह—श्रोतुः पुनरिति। शब्दार्थविषययोस्तु श्रोतृबुद्ध्योः क्षणिकत्वान्नापूर्वाश्रयत्वशङ्केत्याह—बुद्ध्योश्चेति। वक्तुरपि बुद्धिवद्गुणभूतत्वान्नापूर्वाश्रयतेत्याह—वक्तेति। ननु कामधुक्शब्देन शब्दप्रयोगस्य फलसाधनत्वावगमात्प्रयोक्तुः फलभाक्त्वात्प्राधान्यं भविष्यतीत्याशङ्क्याह—नेति। स्वर्गकामादिशब्दात्काम्यौपयिकत्वावगतेस्तदनुरोधेन क्रियाफलभाक्त्वावगतिः। इह तु साधुशब्दप्रयोगस्य फलसाधनत्वमात्रं प्रतीयते। तच्चार्थवादमात्रत्वेनोपपत्तेर्न प्रयोक्तुः फलभाक्त्वमाक्षिपतीत्याशयः। यदि वात्र वक्तुः कामधुगिति षष्ठी स्यात्, ततः सप्तदशवैश्यस्येत्यादिवत् षष्ठ्युक्तसम्बन्धसामान्यस्यापेक्षावशात्स्वस्वामिलक्षणविशेषरूपत्वप्रतीतेः प्राधान्यं स्यात् त्वसावस्तीत्याह—न चेति। ननु यथा कर्मिपदाद्यभावेऽपि प्राङ्मुखोऽन्नानि भुञ्जीतेत्याख्याताक्षिप्तस्य भोक्तुर्गुणभूतस्य दिङ्नियमापूर्वाश्रयत्वम्, तथात्रापि साधुशब्दप्रयोगाक्षिप्तस्य प्रयोक्तुः साधुनियमापूर्वाश्रयत्वं भविष्यतीत्याशङ्क्याह—यत्त्विति। कर्मिपदाद्यभावेऽपि भोजनं प्रति भोक्तुर्लोकादेव प्राधान्यावगतेरपूर्वाश्रयत्वं युक्तमिति भावः।

अपूर्वाश्रयत्वमुच्चारणस्यानाशङ्क्यमेवेत्याह—स्वरूपेण पुनरिति। अतो विषयाभावाद् व्यवस्थाभावाददृष्टार्थत्वाभावाच्च नियमानुपपत्तेस्साधुनियमार्थस्य व्याकरणस्य वेदमूलत्वायोगाच्छास्त्रेण धर्म्मनियम इति यन्महावार्तिककारेणोक्तम् तदयुक्तमित्युपसंहरति—एवं चेति। अनेन च साधुशब्दप्रयोगाणामुत्पत्तिरस्मादिति व्युत्पत्त्या व्याकरणं प्रयोगोत्पत्तिशब्देनाभिप्रेत्य तस्याः शास्त्रमूलत्वाच्छब्दव्यवस्थानियमो न प्रयोजनमिति सूत्रं योजितम्। ननु स्वयमेवैतस्य वेदवच्छास्त्रत्वं भविष्यतीत्याशङ्क्याह—न चेति। अत्रापि प्रयोगोत्पत्ते-

व्याकरणस्य शास्त्रत्वाभावादिति योज्यम्, साधितं चास्य स्वातन्त्र्यं कल्पसूत्राधिकरणे इत्याह—तदुक्तमिति । एतदेव विवृणोति—न हीति ।

यद्वा पौरुषेयत्वात् व्याकरणस्य वक्त्रभिप्रायमात्रपर्यवसानेनार्थपरत्वाभावात्साधुप्रयोगनियमं प्रत्यशास्त्रत्वादिति षष्ठेन प्रकारेण योज्यमित्याह—सर्वत्र हीति । स्मृतिशास्त्रान्तरसम्वादाभावादिति सप्तमीं योजनामाह—न चेति । एतदेव विवृणोति—प्रायेणेति । अस्तु तावत्स्मृत्यन्तरेणासम्वादः ।

परस्परमपि व्याख्येयव्याख्यानग्रन्थानां न सम्वादोऽस्तीत्याह—परस्परेण चेति । सूत्रवार्तिकभाष्येषु ये पाणिनिकात्यायनपतञ्जलय आचार्यास्ते विगीतवचना इत्यर्थः । कीदृशं विगानमित्यपेक्षायां निःप्रयोजनं व्याकरणं सूत्रकृतोऽभिप्रेतम् । साधुशब्दप्रयोगद्वारेण धर्मप्रयोजनत्वं वार्तिककृता साधुशब्दज्ञानद्वारेण भाष्यकारस्येति विगानं दर्शयितुमाह—न तावदिति । तेन तस्य प्रयोजनाभावाभिप्रायो लक्ष्यत इति भावः । ननु विस्मृत्याप्यनुक्त्युपपत्तेः, कथं प्रयोजनाभावाभिप्रायो लक्ष्यत इत्याशङ्क्याह—कथं चेति । एतावत्त्वेन बह्वायासत्वमभिप्रेतम् ।

एतदेव विवृणोति—येष्विति । मोक्षाणामिति निर्धारणे षष्ठी । न चानादरेणानुक्त्युपपत्तिरित्याह—न चेति । सुज्ञानत्वेनापि नोपपत्तिरित्याह—सुज्ञानत्वं पुनरिति । यद्यपि वार्तिककृता शास्त्रेण धर्म्मनियम इति धर्म्मप्रयोजनत्वं व्याकरणस्योक्तम् । तद्व्याकरणे धर्म्मस्याप्रतिपाद्यमानत्वादयुक्तमित्याह—धर्म्मश्चेति । ननु न साक्षाद् धर्म्मप्रयोजनत्वं व्याकरणस्याभिप्रेतम्, किं तु तदनुगतशब्दप्रयोगद्वारेण, ज्ञानद्वारेण वेत्याशङ्क्याह—धर्म्मत्वमिति । एतदेव विवृणोति—शास्त्रार्थो हीति । किं पुनः शब्दस्य ज्ञाने धर्म्मः, आहोस्वित्प्रयोग इति सन्दिग्धो वार्तिककृता ज्ञाने धर्म्म इति चेत्तथाधर्म्म इत्यनेन साध्वसाधुविवेककारिणो व्याकरणवत्साधुत्वज्ञानेऽर्थान्तरोपलक्षणरहितानामसाधुत्वाज्ञानापत्तेः, तस्य च न म्लेच्छभाषां शिक्षेतेत्यादिनिषेधपर्यालोचनेनाधर्म्मसाधनत्वाधर्म्मसाधनत्वावसायादधर्म्मः प्रसज्येतेत्युक्त्वा प्रयोगे तर्हि धर्म्मो भविष्यतीत्याशङ्क्य तस्मिन्पक्षे व्याकरणानभिज्ञानामपि साधुशब्दप्रयोगात् धर्म्मोत्पत्तेर्व्याकरणानार्थक्यमिति, प्रयोगे सर्वलोकस्येत्यनेनोक्त्वा दोषद्वयभयाच्छास्त्रपूर्वके प्रयोगेऽभ्युदयः, तस्य च वेदशब्देनेत्यनेन व्याकरणजनितज्ञानपूर्वकसाधुशब्दप्रयोगो धर्म्मसाधनम्, यथा वेदशब्दपूर्वकोऽग्निष्टोमादिजनितज्ञानपूर्वकमनुष्ठितो धर्म्मसाधनम् । यथा वा वेदरूपः शब्दो नियमपूर्वमधीतो धर्म्मसाधनमित्युक्तं भाष्यकृता । तत्सर्वं व्याख्याया, अथ वा 'पुनरस्तु ज्ञाने धर्मं' इत्युक्तम् । न चैवमव्यवस्थितशास्त्रार्थविधारणं युक्तमित्यर्थः ।

ननु सम्यग् ज्ञातः सुप्रयुक्त इत्युभयोर्ज्ञानप्रयोगयोरेकवाक्योपादानात्समुच्चितयोर्धर्म्मित्वं भविष्यतीत्याशङ्क्याह—सम्बद्धयोश्चेति । एकवाक्योपात्तयोरप्याख्याते-नामार्थयोः समुच्चयः, प्रतिपदमपूर्वाणि एकपदे एवापूर्वमित्याधिकरणं यदेकस्मादपूर्वं तदेतरत्तदर्थमित्येतदित्यर्थः प्रतिपदाधिकरणे निराकरिष्यत इत्याशयः । सामान्यन्यायमुक्त्वा प्रकृते योजयति—

तदिहेति । एकस्मिन्वाक्ये साधनद्वयविध्ययोगात्सति ज्ञाने साधुशब्दप्रयोगोऽप्यनुषङ्गान्निष्पद्यत इत्येवं ज्ञानस्तुत्यर्थत्वेन सुप्रयुक्तस्तु शब्दो ज्ञानस्य धर्म्मसाधनत्वपक्षे व्याख्येयः। प्रयोगपक्षे तु ज्ञातमात्रोऽपि साधुशब्दः स्वर्गं साधयति, किमुत प्रयुक्त इति प्रयोगस्तुत्यर्थत्वेन सम्यग्ज्ञानशब्दो व्याख्येयः। ततश्च ज्ञानधर्म्मत्वे, प्रयोगस्य धर्मत्वायोगात् लोकसिद्धस्यैव ज्ञानानुनिष्पादितत्वेन सत्यामपि व्याकरणादुपकारनिर्वृत्तौ व्याकरणं प्रति प्रयोजकत्वाभावान्न भवदभिप्रेतद्वारेण व्याकरणस्य धर्म्मप्रयोजनत्वं युक्तम्। प्रयोगस्य तु धर्म्मत्वे यदैकस्मादपूर्वं तदेतरत्तदर्थमितिन्यायेन ज्ञानस्य प्रयोगाङ्गत्वेन पारार्थ्यज्ञानात्फलश्रुतेः सुप्रयुक्त इतिवत्सम्यग्ज्ञान इत्यनेनाप्यन्वये कल्पमानेऽर्थवादत्वावसायेन ज्ञानस्य धर्म्मत्वायोगात्तद्द्वारेणापि व्याकरणस्य धर्म्मप्रयोजनत्वं न युक्तमित्यर्थः। आदिमध्याद्व्याकरणानुगतशब्दप्रयोगस्यानादिशास्त्रविषयत्वाभावादित्यद्दमीं योजनामाह किं चेति। व्याकरणपूर्वकज्ञानप्रयोगयोरित्यर्थः। एतदेव विवृणोति – **यन्नामेति**। मन्त्रार्थवादगतस्यानित्यसंयोगस्य परिहारो यो न्यायो अनित्यसंयोगविरोधरूपः तेनेत्यर्थः। न च व्याकरणस्यापि नित्यत्वं शङ्कनीयमित्याह—**न चेति**। ननु व्याकरणस्य कूटस्थनित्यत्वाभावेऽपि, प्रवाहनित्यत्वाद्वैदिकविधिविषयत्वं भविष्यतीत्याशङ्क्याह—**अथापीति**। उक्तमौत्पत्तिकसूत्रेऽध्येतॄणामस्मरणादिभिरशब्दपूर्वत्वमिति वेदाधिकरणसिद्धान्तसूत्रोक्तेन न्यायेन सर्वपुरुषेभ्यो वेदस्य प्राथम्यान्न पौरुषेयग्रन्थविषयत्वं युक्तमित्यर्थः। ननु व्याकरणत्वजातेः कूटस्थनित्यत्वाद्वेदविषयत्वं भविष्यतीत्यत आह—**न चेति**।

ननु व्याकरणस्य सूत्रमिति षष्ठ्यर्थस्य भेदं विनानुपपत्तेः सूत्रमात्राच्छब्दाप्रतिपत्तेः, व्याकरणाच्छब्दान्प्रतिपद्यामह इति प्रयोगानुपपत्तेः। न सूत्रस्य व्याकरणत्वं युक्तं 'नापि शब्दस्य' व्याक्रियन्ते शब्दा अनेनेति व्याकरणमिति ल्युडर्थानुपपत्तेर्योगस्य च शब्दवत्त्वाभावाद् व्याकरणे भवो योगो वैयाकरण इति भवतद्धितानुपपत्तेः। शब्दस्य च पाणिन्यादिभिरप्रोक्तत्वेन पाणिनिना प्रोक्तं पाणिनीयमिति प्रोक्ततद्धितानुपपत्तेरिति वार्तिककारेण व्याकरणशब्दस्य सूत्रपरत्वशब्दपरत्वरूपे पक्षद्वये इत्यर्थः। पक्षद्वयेऽपि दूषिते भाष्यकारेण शब्दपक्षे तावद् दोषपरिहारार्थं प्रस्कन्दनं प्रपतनमित्यपादानादिष्वपि दर्शनेन, करणाधिकरणयोरेव ल्युट्प्रत्ययनियमाभावाद्, व्याक्रियत इति व्याकरणमिति कर्मव्युत्पत्त्या ल्युडर्थोपपत्तिमुक्त्वा भवप्रोक्तादितद्धितोपपत्त्यर्थं लक्ष्यलक्षणे व्याकरणमिति लक्ष्यलक्षणयोः शब्दसूत्रयोः समुदितयोर्व्याकरणत्वाभिधानात्सूत्रात्मकस्य व्याकरणस्य कृत्रिमत्वेऽपि शब्दात्मकस्य नित्यत्वाद्वेदविषयत्वं युक्तमित्याशङ्कते—**अथेति**। लक्षणनिरपेक्षाणां शब्दानामानन्त्याद्विधिविषयत्वानुपपत्तिर्न तु गवादिगाव्यादीनां जातिरूपेण, व्यक्तिरूपेण वा विधिप्रतिषेधौ उपपद्येते इत्यादिनोक्तेन परिहरति—**तदिति**।

ननु यथा यदितिहासपुराणानि कल्पानीति ब्रह्मयज्ञविधिविषयत्वान्यथानुपपत्त्या कल्पसूत्राणां कर्तृस्मृतिदाढर्यात्कूटस्थनित्यत्वाभावेऽपि प्रवाहनित्यत्वमुक्तम्, तथात्रापि 'तस्मादेषा व्याकृता वागुद्यत'इति व्याकरणानुगताया अर्थवाचो वदितव्यत्वश्रुतेर्व्या-

करणस्य नित्यत्वं भविष्यतीत्याशङ्कते—ननु वेदेति । तद्ग्रन्थस्याध्येतव्यत्वायोगाद् ग्रन्थनित्यत्वं कल्पितम् । इह तु श्रुतिसामान्यमात्रेणापि व्याकृतशब्दव्याख्यानोपपत्तेर्न ग्रन्थनित्यत्वकल्पने प्रमाणमस्तीति परिहरति—नैतदिति । ननु वैदिक्या वाचः स्वराद्यविप्लुतरूपेणानिरूपिताकारत्वरूपस्य व्याकृतत्वस्य प्राप्तत्वाद्विध्यानर्थक्यमित्याशङ्क्य, कर्मकाले स्वाध्यायकाले वोच्यमाने—इयमनूदितेत्युक्तम् । श्लोकं व्याचष्टे – अव्याकृताया हीति । अस्य च व्याख्यानम् एकः शब्दः इत्येषापि श्रुतिर्वैदिकस्यैव शब्दस्य स्वराद्यविप्लुतिरूपेण ज्ञानप्रयोगयोर्द्धर्मत्वप्रतिपादनार्थतया व्याख्यातुं शक्येति सूचयितुमाह—तस्याश्चेति । नन्वेकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वित इत्यत्र शास्त्रशब्दस्य ग्रन्थविषयत्वाद्व्याकरणग्रन्थस्य वेदविषयत्वप्रतीतेर्नित्यत्वकल्पना भविष्यतीत्याशङ्क्याह—यदपि चेति । प्रशंसार्थत्वमेवोपपादयति—अहरहरिति । शास्त्रशब्दस्तर्हि कथमत आह—शास्त्रेति । लोकव्युत्पत्त्या शिक्षणात्मकशासनवाचिना शास्त्रशब्देन ग्रहणाध्ययनकालीनः स्वस्यात्मीयस्य गुरोरध्यायः शिक्षणार्थः पाठो विवक्षितो ग्रन्थ इत्याशयः । ननु सुप्रयुक्तशब्दस्तर्हि पुनरुक्तः स्यादित्याशङ्क्याह—सम्यगिति । उपनयनम्-आचार्यकर्तृको माणवकसंस्कारः । उपसदन-सुश्रूषे माणवककर्तृके । त्रयं वै तद्ग्रहणाध्ययनकालीनमपि विशिष्टेतिकर्तव्यताकग्रहणम्, संस्कृतस्य तस्यैव वेदस्य ब्रह्मयज्ञोपयोगित्वादुपन्यस्तम् ।

ननु तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द (श० ब्रा० ३-२-१-२४) । इत्येषा श्रुतिर्गाव्याद्यपशब्दनिषेधार्थत्वाच्छब्दापशब्दविवेकस्य च व्याकरणधीनत्वाद्व्याकरणापेक्षा भविष्यतीत्याशङ्क्याह—यदपि चेति । कृत्यार्थे तवैकेन्केन्यत्वन इति कृत्यार्थे छन्दसि तवैप्रत्ययस्मरणात् कृत्यानां च प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्रैषार्थत्वस्मरणादप्राप्तप्रेषणस्य च विधित्वान्नञ्योगेन निषेधार्थतोक्ता । कथं वैदिकविषयत्वावगतिरपशब्दनिषेधस्येत्यपेक्षायां वैदिकशब्दापेतत्वरूपव्युत्पत्तिसम्भवम्, सुज्ञानत्वं च कारणद्वयमाह—वैदिकाच्चेति । सर्वेभ्यः शब्देभ्योऽपेत इति च व्युत्पत्तिः शब्दस्य अशब्दत्वयोगान्न सम्भवतीत्याह—न चेति । ननु नायमभाववचनोऽपेत्युपसर्गः, किं तु वर्जनवचनः, अतो गाव्यादीनां सत्यपि शब्दत्वे, शास्त्रकारैर्वर्जितत्वादपशब्दत्वं भविष्यतीत्याशङ्क्याह—अथापीति । वर्जनेऽर्थे बर्बरादिभाषाशिक्षणस्य स्मृत्या निषिद्धत्वाच्छ्रुतौ चापशब्दत्वस्य म्लेच्छितशब्दसामानाधिकरण्येन निर्देशाद् बर्बरादिभाषागतस्य शब्दस्यापशब्दत्वज्ञानादित्यर्थः । म्लेच्छितत्वशब्देन म्लेच्छि अव्यक्तायां वाचीत्यव्यक्तोच्चारणार्थस्य म्लेच्छोऽव्यक्तोच्चारित इत्यर्थो दर्शितः । किं चान्येषामपि बर्बरादिसम्बन्धिनामाचाराणां निषिद्धत्वाच्छब्दप्रयोगरूपस्याप्याचारस्य तत्सम्बन्धिन एव निषेधोऽवसीयत इत्याह—युक्तं चेति । गाव्यादीनां तु प्रसिद्धम्लेच्छबर्बरादिसम्बन्धित्वेन, अव्यक्तोच्चारणत्वेन वा म्लेच्छतिधात्वर्थानुगमाभावादार्यप्रयुक्तशब्दायत्तत्वाभावाद्वा नापशब्दतेत्याह—न त्विति । यथावृत्तादार्याचारादपेतत्वात्तदप्रवृत्तमित्युच्यते नैवं गाव्यादिष्वार्यप्रयुक्तशब्दापेतत्वमस्ति । तेषामप्यार्यैः प्रयुक्तत्वादिति वैधर्म्यदृष्टान्तार्थम् ।

नन्वाहिताग्निरपशब्दं प्रयुज्येति श्रुतेर्म्लेच्छशब्दसामानाधिकरण्याभावाद् व्याकरणानुगतशब्दापेतत्वनिमित्तलब्धापशब्दव्यपदेश्यत्वगाव्यादिप्रयोगनिमित्तप्रायश्चित्तविधानार्थत्वाद् व्याकरणापेक्षा भविष्यतीत्याशङ्क्याह—यद्यपि चेति। निषिद्धाचरणनिमित्तत्वात्प्रायश्चित्तस्य, गाव्यादीनां च शिष्टावर्जितत्वेनानिषिद्धत्वावसायाद्यथासम्भवमन्यविषयतैवेयं श्रुतिर्भवेदित्याशयः।

व्याकरणानुगतव्यतिरिक्तशब्दविषयत्वासम्भवमुपपादयति—तथा हीति। गाव्यादिशब्दप्रयोगलक्षणस्य कार्यस्य सर्वशिष्टपरिगृहीतत्वेनापरिहरणीयत्वमीदृशशब्देनोक्तम्। श्लोकं विवृणोति—प्रायेण हीति।

ननु सर्वस्यापि व्याकरणानुगतशब्दप्रयोगनियमो न दृश्यत इत्याह—न चेति। एतदेव प्रपञ्चयितुमाह—कल्पेति। कल्पकारस्यापशब्दमुदाहरति—समानमिति। छान्दोग्यसूत्रकारस्योदाहरति—सूत्रेति। बह्वृच्सूत्रकारस्यापशब्दद्वयमुदाहरति—तथेति। कल्पादिग्रहणस्योपलक्षणार्थत्वात् शिक्षाकारस्यापशब्दमुदाहरति—तथेति। स्मृतिकारस्योदाहरति—मनुनापीति। स्मृतिग्रन्थकारेणापि।

साक्षिणः सन्ति मेत्युक्त्वा वदेत्युक्त्वा वदेत्तु यः।

इत्यत्र मेशब्दस्येतीकारे परभूते संहितायामेचोऽयवायाव इत्ययादेशे कृते लोपः शाकल्यस्येति च यकारलोपे कृते म इतीतिव्याकरणानुगतां संहितामनपेक्ष्यान्यथा कृतेत्यर्थः। मीमांसाकारस्यापशब्दद्वयमुदाहरति—तथेति। सम्वत्सरसत्रेषु गावामयनिकविध्यन्तातिदेशप्रतिपादनायाऽष्टमे गवामयनोत्तरकालविहितेष्वादित्यानामयनप्रभृतिषु गवामयनस्य विध्यन्तः प्रवर्तत इति वक्तव्ये 'तस्य विकारावयवे च प्राण्यौषधिवृक्षेभ्य इत्यधिकृत्य गोपयसोर्यदिति विकारावयवयोर्विहितो यत्प्रत्ययोऽर्थवादावगतगोकर्तृकत्वमात्रनिमित्तप्रयुक्तः। न चैवाग्नीषोमीयप्रकरणाधीतः स्यादिति' मासामुमोक्ते तानिति बहुवचनान्तस्यापि मन्त्रस्य प्रातिपदिकार्थसमवायाद् बहुवचनस्य प्रातिपदिकार्थलक्षितावयवबहुत्वाभिधानार्थत्वेनोपपत्तेरनुत्कर्ष इति सिद्धान्तिते, 'द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋद्ध्यासमि'-त्यादीनां दर्शपूर्णमासप्रकरणाधीतानां द्यावापृथिव्याद्यनुमन्त्रणानामपि केनचिद् गुणयोगेन दर्शपूर्णमासदेवताप्रकाशकत्वोपपत्तेरनुत्कर्ष इत्याशङ्कार्थं सूत्रे सरूपाणामेकशेषः' इत्याद्येकशेषलक्षणहीनं द्यावोरित्युक्तमित्यर्थः।

गृह्यकारेणापि जिघ्राणामिति ल्युडन्तजिघ्रादेशः पाघ्रादिसूत्रेण शित्येव प्रत्यये परभूते घ्रातेर्जिघ्रादेशमन्वाख्यातमनपेक्ष्यैव कृत इत्याह—तथेति। व्याकरणसर्वस्वे निरुक्तेऽपि व्याकरणाननुगताः शब्दाः सन्तीत्याह—कात्स्न्यं इति। आर्द्धधातुके परभूते ब्रुवो वच्यादेशस्याभिधानात्तदकरणं हीनलक्षणमित्यर्थः। एतदेव विवृणोति—सम्वत्सरमिति। पुराणेतिहासहस्तिशिक्षादिकारिणस्तु नात्यन्तं व्याकरणमाद्रियन्त इत्याह—अन्त इति। हस्तिशिक्षादिग्रन्थकारिणो ये उमाभ्यादिरूपा अपशब्दास्तेषामन्तो नास्तीत्यर्थः। एतदेव

विवृणोति—युगपदिति । वेदप्रयुक्तानां च शब्दानामपशब्दत्वाशङ्कानुपपत्तेर्निश्चितसाधुत्वानामनन्वाख्यानादव्यापकं लक्षणं स्यादित्याह—वेदेष्वपीति । सामान्यं छन्दसि, भाषायां च साधारणम्, चातुर्वर्ण्यादिवत्स्वार्थे तद्धितः । ननु 'व्यत्ययो बहुलमि'ति बहुलग्रहणेन विकरणवत्सुबादीनामपि व्यत्ययसूचनाद् 'बहुलं छन्दसीति' च लोपाद्यनियमविधानादस्ति सर्वशब्दानां छान्दसं लक्षणमित्याशङ्क्याह—न हीति ।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥'

इति वचनान्नियतविषय एव व्यत्ययविधिः दक्षिणायामिति हि प्राप्ते धुरि दक्षिणाया इति सुपो व्यत्ययः । तक्षन्तीति प्राप्ते ये अश्वयूपाय तक्षतीति तिङः, स्तुवन्तीति प्राप्ते सामगाः स्तुवत इत्युपग्रहस्य, इन्द्रः सोमस्य कामुक इति प्राप्ते कामुकेति लिङ्गस्य, ममृवां आवाह इत्यत्रावाहादिति प्रथमपुरुषप्राप्तौ आवाहा इति पुरुषस्य । अग्निमद्यहोतारन्यमवृणीतेत्यत्राद्यतनकालवाचिनि लकारे प्राप्ते अनद्यतनकालवाचिलङ्प्रयोगात्कालव्यत्ययः, काण्डश्चेत्यत्र कामुके इति प्राप्ते णकारप्रयोगाद्धलव्यत्ययः । अभ्यक्सात इत्यत्रामेत्याकारे प्राप्ते अभ्यगिति संहितादर्शनेनाकारप्रयोगादच्व्यत्ययः । अश्वावतीर्गोमतीरित्यत्रान्तोदात्तत्वे प्राप्तेऽश्वावतीरित्याद्युदात्तत्वात्स्वरव्यत्ययः, कर्तृशब्दस्य कारकोपलक्षणत्वादद्भिर्ददातीत्यत्र सम्प्रदानस्य दातृत्वेन प्रत्युपकारार्थदानकरणत्वाभिधानाद्दद्भ्य इति प्राप्ते ददद्भिरितिव्यत्ययः, यङ्शब्दस्य प्रत्याहारत्वेन योगाद्यङन्तविकरणप्रत्ययग्राहित्वाद् वृत्रं हनतीत्यत्र हन्त्वीतिप्राप्ते हनवीति यङ्व्यत्ययः । बहुलं छन्दसीति च अदिप्रभृतिभ्यः शप इत्याद्यधिकारविशेषेण शबादिविषयमेवावसीयते, न सर्वविषयमित्यर्थः । तत्रोदाहरणद्वयमाह—तद्यथेति । आपस्येत्यत्र तावल्लिङ्गवचनव्यत्ययो न व्यत्ययसूत्रस्य विषयः । तस्य बहुलग्रहणेन नियतलिङ्गवचनविधेयत्वाभावात् । नाप्युपधादीर्घादेशो व्यञ्जनान्तस्य च स्वरागमो बहुलं छन्दसीत्यत्राधिकृतो । येन लक्षणानुगमः स्यादित्याह—न हीति । अबित्यस्य नित्यं स्त्रीलिङ्गस्य बहुवचनविषयमस्य व्यञ्जनान्तस्य प्रातिपदिकस्य षष्ठ्यन्तस्यापामित्यविकृतस्यान्वाख्यानादापस्येत्यस्त्रीलिङ्गमेकविषयमकारान्तं दीर्घोपधं रूपं न केनापि लक्षणेनानुगतमित्यर्थः । द्वारशब्देऽपि दकारलोपो पाकारस्य च वकारादेशो न केनचिल्लक्षणेनानुगत इत्याह—नापीति । बहुलग्रहणस्य दृष्टानुविधानार्थत्वाद् द्वारशब्दस्य भाषायामपि व्यत्ययस्यादर्शनान्न दृष्टानुविधानार्थत्वाद् द्वारशब्दस्य भाषायामपि व्यत्ययस्यादर्शनान्न दृष्टानुविधानमस्तीति दर्शयितुम्—लाटेत्युक्तम् । अतो वैदिकशब्दानामसाधुत्वाशङ्कानुपपत्तेर्लक्षणमेवाव्यापकत्वादुपेक्षणीयमित्युपसंहरति—तेनेति । व्याकरणान्तरयुक्तानामपि तदनुगतशब्दप्रयोगदर्शनान्न व्याकरण प्रामाण्याध्यवसानमित्याह—येऽपीति । प्रमादादिनिमित्तशङ्कानिवृत्त्यर्थं प्रायेणेत्यस्यार्थे—सुतरामित्युक्तम् ।

सन्तु व्याकरणाभियुक्ताः व्याकरणकाराणामेव तदननुगतशब्ददर्शनात्प्रामाण्याध्यवसानं दुर्लभमित्याह-सूत्रेति । न च तेषां विस्मृत्या प्रयोगोपपत्तिरिति दृष्टान्तद्वारेणाह—अश्वेति ।

एकैकस्य द्वे द्वे (अपशब्दोदाहरणे दर्शयति—सूत्रइति । जनिशब्दः, षष्ठीसमासश्च द्वावपशब्दौ जनिशब्दस्य तावद[1]) पशब्दत्वमुपपादयति—जनीति । लक्षणेनाननुगतत्वाज्जनिशब्देन धातुरेव निर्दिश्यत इत्यर्थः । धातुकर्तृप्रकृतेश्चापादानसञ्ज्ञानभ्युपगमान्न धातुरत्र विवक्षित इत्याह—न चेति । यस्य तु जन्माख्यस्य व्यापारस्य जनिशब्दार्थत्वेन विवक्षितस्य कर्तुं-घंटादेः प्रकृतेर्मृत्पिण्डादेरपादानसञ्ज्ञेष्यते, तस्य जायमानसम्बन्धिनो जन्माख्यस्यार्थस्य जनिशब्दो न वाचक इत्याह—जायमानस्येति । व्यधिकरणे षष्ठ्यौ ।

नन्वेवमपि धातौ साधुत्वान्नापशब्दतेत्याशङ्क्याह—तेनेति । क्वचित्साधोरप्यर्थान्तरं प्रत्यसाधुत्वादपशब्दत्वं भवतीत्याशयः । षष्ठीसमासस्यापशब्दत्वमुपपादयति—तथेति । (अकस्य निन्दकहिंसकइत्यादौ तच्छीलाद्यर्थवुञ्प्रत्ययादेशत्वेनानेकार्थत्वात्तद्योगे कर्त्रर्थ-षष्ठयाः प्राप्तेस्तद्योगे एव समासनिषेधार्थम् । आद्यं तृजकाभ्यां कर्त्तरीति सूत्रम् । न तु तृज्योगे कर्त्रर्थषष्ठीसमासनिषेधार्थमिदं सूत्रम् । तृचः कर्त्तर्येव विधानात्तद्योगे कर्त्तुरनभिहि-तत्वाभावेन कर्त्रर्थषष्ठ्याः प्राप्त्यभावात् प्राप्तिपूर्वकत्वाच्च निषेधस्य । अतः तृज्ग्रहणम् उत्तरसूत्रेऽनुवृत्त्यर्थमेव कृतम् । नात्र तस्य प्रयोजनम् । अकस्य तूभयत्रोपयोगः । तामुत्तरसूत्रे तृजकयोरनुवृत्तिं वक्तुमाद्यसूत्रं वार्तिकपठितमित्यर्थः[2] ) । कर्त्तर्येव तृज्विधेस्तत्प्रयोगे कर्तृ-षष्ठ्यभावादकस्य निन्दहिंसक्लिशखादादिधातुविहिततच्छीलादिवाचिवुञ्प्रत्ययादेशत्वेनाने-कार्थत्वात्तद्योगे कर्तृवाचिन्याः षष्ठ्याः समासनिषेधार्थमाद्यसूत्रमुत्तरसूत्रे तृजकाभ्यामित्य-स्यानुवृत्तिप्रतिपादनार्थंपठितम् । कर्तृवाचिभ्यां तृजकाभ्यां योगे कर्त्तरि चेति सूत्रे षष्ठीसमासनिषेधादपशब्दतेत्यर्थः । तृच्प्रत्यययोगनिमित्तनिषिद्धं षष्ठीसमासमुदाहृत्य, अक-प्रत्यययोगनिमित्तनिषिद्धमुदाहरति—एवमिति ।

वार्त्तिककृतोऽप्यकप्रत्यययोगनिमित्तनिषिद्धषष्ठीसमासापशब्दोदाहरणम् तावदाह—तथेति । हलन्ताच्चेति सूत्रेणेक्समीपाद्धलः परो झलादिः सन् किद्भवतीत्युक्ते दम्भेः सनि कृते दम्भ इट् चेति किति सत्यपि नकारेण व्यवधानात् दम्भिधातुसम्बन्धिनो हलो झकारस्य इक्सामीप्याभावात् तत्परस्य झलादेरपि सनः कित्त्वासिद्धौ[3] गुणापत्तेर्धिप्सतीति-रूपं न सिद्ध्येदित्याशङ्क्य हल्ग्रहणस्य जातिवाचकत्वाद्दम्भेर्धातोः परस्य झलादेः सनः—कित्त्वं सिद्धमित्युक्तम् । (अत्र जातिवाचकपदेकऽप्रत्ययान्तस्य षष्ठीसमासोऽपशब्दः[4]) ।

तस्यैवापशब्दान्तरमुदाहरति—तथेति । अइउणिति प्रत्याहारसूत्रगतेन णकारानुबन्ध-केनाकारेण धात्वादिगतस्याकारस्य णकारानुबन्धरहितत्वाद्ग्रहणं न प्राप्नोतीति शङ्कित्वा, भेदाभावाद्धात्वादिष्वस्यापि ग्रहणं सिद्धमिति, परमतेन परिहारमुक्त्वा तन्निराकरणार्थम्—

---

१. अयं पा० २ पु० ना० ।
२. अयं पा० २ पु० ना० ।
३. अनिदितां हल उपधायाः क्ङिङितीत्युक्ते नलोपो न सिद्ध्यतीत्यर्थः । नलोपासिद्धे ।
४. अयं पा० २ पु० ना० ।

वार्त्तिककृतेदमुक्तम् । दण्ड अग्रमिति व्यस्तोच्चारणे दण्डपदान्त्यस्याग्रपदाद्यस्य चाकारस्यान्तरालकालानुपलम्भलक्षणात्कालव्यवायाद्व्यवधानाद्—अन्यत्वमित्युक्तम् । नन्वेकत्वेऽपि व्यञ्जकाभावान्मध्येऽनुपलब्धिर्युज्यत इत्याशङ्क्य—शब्दव्यवायादित्युक्तम् । दण्ड इत्यत्र दकारडकारपरयोरकारयोर्मध्ये व्यञ्जकाभावे णकारडकारयोरप्यनुपलम्भः स्यात् न च व्यञ्जकानां प्रतिनियतविषयत्वम् दीपादौ दृष्टम्, येन णकारडकारयोर्व्यञ्जकसद्भावादुपलब्धिः, अकारस्य तु व्यञ्जकाभावादनुपलब्धिरिति व्यवस्था युज्येतेत्याशयः । अत्र चान्यभाव्यमित्यन्यशब्दः । तथा हि निष्कर्षलक्षणगुणाभिधायी भावशब्दो यदि निष्कर्षणीयान्यशब्दवाच्यगुण्युपसर्जनत्वेन निष्कर्षलक्षणं गुणं ब्रूते, ततो गुणमुक्त्वा गुणिनि वर्तमानत्वेन गुणवचनसंज्ञापत्तेः । पूरणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति षष्ठीसमासनिषेधादपशब्दत्वम्, स्वप्रधानगुणाभिधायित्वाभ्युपगमेन तु षष्ठीसमासकल्पने गुणवचनसंज्ञाबाधाद् गुणवचनसूत्राननुगतष्यञ्प्रयोगायोगादपशब्दतेत्यर्थः ।

कर्म्मधारयस्तु (कर्मण्युपपदे धातोरण्प्रत्ययोक्तेर्नित्यसमासाच्च कुम्भकार इतिवत् हिमवत्भावः इत्यादिप्रयोगमाशङ्क्य, अनभिधानात्तादृशप्रयोगाभावादित्युत्तरे अविरविकेति दृष्टान्तः । भावशब्दस्यान्यत्वगुणविशिष्टगुणिपरत्वेनान्यशब्दसमानार्थत्वात्पर्यायाणां सहप्रयोगाभावाद्वैयर्थ्यमित्यर्थः[1]) भावशब्दस्यानर्थक्यापत्तेरयुक्त इत्याशयः ।

भाष्यकृतापि कर्म्मण्यणिति सूत्रे हिमवन्तं शृणोत्यादित्यं पश्यतीति दृशिशृणोतिभ्यामण्प्रत्ययः कस्मान्न भवतीत्याशङ्क्यानभिधानादिति परिहारमुक्तम् । यथाविकशब्दस्य स्वार्थिककप्रत्ययान्तस्याविशब्दसमानार्थत्वेऽपि तस्य विकार इति विकारतद्धिते लक्षणानुगतेऽप्याविकं मांसमितिप्रयोगदर्शनादविकशब्दादेवोत्पद्यते नाविशब्दात्तथात्रापि प्रयोगाभावेनाभिधानसामर्थ्याभावान्न इण्प्रत्ययोत्पत्तिरित्युपपादनायाविरविकन्यायेनेति दृष्टान्तेऽभिहितेऽपशब्दः प्रयुक्त इत्याह—भाष्येऽवीति । अविश्चाविकश्चाऽव्यविकौ तयोर्न्याय इति द्वन्द्वगर्भस्तत्पुरुषः ।

तस्यैवापशब्दान्तरमुदाहरति—तथेति । ऋलृगित्यत्र सूत्रे वार्त्तिककारेण लृकारस्य स्वातन्त्र्येण क्वचिदप्यप्रयोगात् क्लृपिस्थस्य च यणादिकार्यं प्रत्यसिद्धत्वादुपदेशानर्थक्यमित्याशङ्क्य, यदृच्छाशब्दादिषु (कुमारी ऋतकमिति वाच्ये लृतकमित्यनुकरणशब्दो यदृच्छाशब्दः । तत्र लृकारे परे ईकारस्यानुकार्यं यणादेशः कुमारी लृतकमित्येवं लृकारस्य प्रयोजनमित्यर्थः[2]) यणादिकार्यसिद्धिर्लृकारोपदेशप्रयोजनमुक्त्वा यदृच्छाभावात्तद्विषयाच्च कार्यसिद्धिप्रयोजनत्वासम्भवेऽभिहिते, भाष्यकारेणान्यथाकृत्वा प्रयोजनमुक्तं अन्यथा कृत्वा परिहारः । सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तं न सन्तीति परिहारदूषणमाशङ्कितम्, तत्र अन्यथैवं कथमित्थं सुसिद्धाप्रयोगश्चेदिति सूत्रेणान्यथादिषु चतुर्षूपपदेषु करोतेर्णमुल्विधानादन्यथाकारमिति प्रयोक्तव्ये, अन्यथाकृत्वेति क्त्वाप्रत्ययप्रयोगादपशब्द इत्यर्थः ।

---

१. अयं पाठः सर्वत्र नास्ति । २. अयं पाठः सर्वत्र नास्ति ।

अन्येन प्रयोजनमुक्तमन्येन प्रकारेण परिहार इत्यस्यार्थस्यान्यथाशब्दमात्रेण सिद्धेर्नियमेन प्रयोज्यत्वाभावान्नायं करोति, अन्यथाकृत्वा शिरो भुङ्क्ते इति वदसिद्धप्रयोग इत्याशयः। एतच्च प्रयोजनं परिहारशब्देन निराकार्यतयोपन्यस्तमिति सूचितत्वादाशङ्कामात्रं नाभिमतमिति द्योतनार्थं महाभाष्यगतं प्रयोजनमुक्तमितिपाठं तात्पर्यतो व्याख्यातुं चोदितपदं तत्स्थानेऽप्रयुक्तम्।

नन्वृत्विगादिशब्दवत्सिद्धवत्प्रयोगरूपनिपातानां साधुत्वं सेत्स्यतीत्याशङ्क्याह—न चेति। ननु प्रयोगमूलत्वाद् व्याकरणस्मृतेः, तद्बाधकत्वं न युक्तमित्याशङ्क्य, प्रयोगमूलताऽस्याप्यसिद्धेति मत्वा पूर्वोक्तं स्मृतिबलीयस्त्वमाह—स्मृतीति। अतो नैषां निपातनात्साधुत्वसिद्धिरित्युपसंहरति—प्रत्यक्षेति।

नन्वेवं सत्येकप्रयोगमात्रेणेतरासाधुत्वानिश्चयात्प्रकृतिप्रत्ययान्वाख्यानं विना प्रयोगमात्रेण साध्वसाधुत्वविवेकासिद्धेर्निपातनानर्थक्यं स्यादित्याशङ्क्याह—प्रत्यक्षेति। निपातनानर्थक्यपरिहारायाऽन्वाख्यानमनुमीयत इत्याशयः। ननु लक्षणवाक्यगतानां शब्दानां स्वात्मनि क्रियाविरोधेन तद्वाक्यगतैर्लक्षयितुमशक्यत्वाल्लौकिकवैदिकशब्दलक्षणार्थत्वेन च व्याकरणस्यात्मार्थत्वाभावात्प्रदेशान्तरस्थानामप्यलक्षणीयत्वेनानुगमानादरान्न व्याकरणकाराणां व्याकरणाननुगतशब्दप्रयोगो दोष इत्याशङ्क्याह—न चेति। व्याकरणगतानामपि शब्दानां लोकवेदाधिकरणन्यायेन लौकिकेभ्यो भेदाभावाल्लक्षणीयत्वोपपत्तिं वक्तुम्—लक्ष्यभूत इत्युक्तम्।

अत एव व्याख्यातृभिर्वृद्धिरादैजित्यादिषु वृद्धिरादैजदेङ् गुण इति जस्त्वदर्शनेन पदसञ्ज्ञत्वावगमाच्चोः कुरिति कुत्वेन भवितव्यमित्याशङ्क्य अयस्मयादीनि च्छन्दसीति सूत्रेष्वपि छन्दोवद्भावेन भसञ्ज्ञत्वात्ससुष्टुभा (सऋक्वतेत्यत्र ऋग्युक्तेनेत्यर्थके पदे ऋच्शब्दस्य वतिपरे पदसञ्ज्ञत्वाच्चोः कुरिति कुत्वे ऋक्वतेति सिध्यति। अत्र पदसञ्ज्ञत्वात् झलाञ्जशोऽन्ते इति जश्त्वेन नग्रस्य जकारः कस्य ढकारो वा न भवति। अयस्मयादीनि च्छन्दसीत्युक्तया भसञ्ज्ञया पदसञ्ज्ञाबाधात्। न च पदत्वाभावात्कुत्वमपि न स्यादिति वाच्यम्। प्रयोगानुसारित्वाद्व्याकरणस्य, तेन यथा तत्र मत्वा जश्त्वाभावः। पदत्वाच्च कुत्वमिति सञ्ज्ञाद्वयसमावेशः, तथा प्रकृतेऽपीति भावः। अत्र वृद्धिरादैजित्यादिसहोच्चारणं सिद्धं कृत्वोक्तम् (अन्यदेव तु 'उपदेशेऽजनुनासिक' इतीत्याद्युदाहार्यम्[1])। सऋक्वता गणेनेतिवत्सञ्ज्ञाद्वयाविरोधात्कुत्वाभावोपपत्तिरित्यादिपरिहाराभिधानवत् 'समर्थः पदविधिरि,' त्यत्र च विधिशब्द कर्मसाधनो भावसाधनः करणादिसाधनो वेति पृष्ट्वा विपूर्वाद्धातोः कर्म्मसाधने इकारो विधीयत इति कर्म्मसाधनतया व्याख्यानाल्लक्षणसूत्रेष्वपि लक्षणानुगमादरः कृत इत्याह—तथा चेति। अन्यथा न क्वचिदपि साधुशब्दादरः स्यादित्याह—यदि चेति। न त्वाचारे नियम इत्यत्र वार्त्तिके भाष्यकृता याज्ञे कर्म्मणि

१. अयं पा० २ पु० ना०।

स नियमः, अन्यत्रानियम इत्युक्तत्वान्न व्याकरणे कल्पसूत्रादिषु वाऽपशब्दप्रयोगो दुष्यतीत्याशङ्कते - अथेति। फलवत्त्वेन क्रत्वर्थत्वायोगात्क्रतुविषयत्वानुपपत्तिरिति परिहरति- तदसदिति। आहिताग्निग्रहणानर्थक्यापत्तेश्च न यज्ञविषयतेत्याह —सारस्वतीति।

ननु तस्माद् ब्राह्मणेन 'न म्लेच्छितवै' इत्यपशब्दनिषेधस्य प्रकरणाज्ज्योतिष्टोमाङ्गत्वा-वगतेरन्यत्रानियमोऽवसीयत इत्याशङ्क्याह—योऽपि चेति। आदित एव च व्याकरणे निरुपपत्तिकपूर्वापरविरुद्धाभिधानादनाप्तप्रणीतताऽवसीयत इत्याह—यदपि चेति।

भाष्यकृता हि शास्त्रादावथ शब्दानुशासनमिति शास्त्रस्य विषयमुक्त्वा, केषां शब्दानामिति पृष्ट्वा, लौकिकानां वैदिकानां चेत्युत्तरं दत्तम्। तत्तावद् बहूनां शब्दानां लोकवेदसाधारण्यादयुक्तमित्यर्थः।' उभयत्रापि च साधारणशब्दोदाहरणमत्यन्तमयुक्त-मित्याह—न चेति। ननु वेदादिवाक्योदाहरणत्वेनैषां लौकिकेभ्यो भेदोऽस्तीत्या-शङ्क्याह - न चेति। कानि तर्हि वैदिकत्वेनोदाहार्याणीत्यपेक्षायामाह —अत इति। ननु गाव्यादिपदानामपि नियतस्वरत्वादिना छान्दसत्वाद्युक्तोदाहरणतेत्याशङ्क्याह— छान्दसेति।

एवमपि सिद्धे शब्दार्थसम्बन्ध इति शास्त्रारम्भवार्त्तिकव्याख्यानावसरे कथं पुनर्ज्ञायते ? सिद्धः शब्दोऽर्थः सम्बन्धश्चेत्याशङ्कानिराकरणार्थत्वेन लोकत इति वार्त्तिकावयवस्य यद्व्याख्यानं करिष्यते, तद्व्याहन्येत स्वरनियमादेर्लोकतः सिद्ध्यभावादित्याशयः। गाव्यादिशब्दानन्वाख्यानात्, लौकिकान्वाख्याने प्रतिज्ञा न युक्तेत्याह—यदि चेति। गवादिशब्दानां तु केवलवैदिकत्वस्यापि वक्तुं शक्यत्वात्तदव्याख्यानमात्रेण लौकिकान्वाख्या-नासिद्धिरित्याह—गवादयः पुनरिति। एतदेव च सर्वेषां च स नामानि कर्म्माणि च पृथक्पृथगित्यादिना मनुवचनेनोपपादयति—तथा चेति। ननु लौकिकार्थविवक्षायां वैदिक-शब्दप्रयोगो न युक्त इत्याशङ्क्याह—दृश्यन्ते चेति। वैदिकानां च पाठसिद्धत्वादनर्थकं लक्षणमित्याह - न चेति। दीधीवेवीटामित्येतत्सूत्रदूषणार्थं न दीधीवेव्योश्छन्दोविषय-त्वाद् दृष्टानुविधित्वाच्च छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेध इति वार्तिके दीधीवेव्यौ छन्दोविषयौ, दृष्टानुविधिः छन्दसि भवति। तत्र च होत्रा वृत्तः कृपयन्नदीधेत् अदीधयुर्दाशराज्ञे वृत्तास इति गुणस्य दर्शनादनर्थकः प्रतिषेध इत्येवं व्याचक्षाणेन भाष्यकृता स्वयमेव वैदिकशब्दलक्षणानर्थक्याभिधानाच्छान्दसोदाहरणं व्याहतमित्याह— दृष्टेति। मन्दशब्दो मृदूक्त्यर्थः। आनर्थक्यमेव दृष्टान्तेनोपपादयति —यथैवेति।

न च भाष्यकृतैव कानि पुनरस्य शब्दानुशासनस्य प्रयोजनानीति पृष्ट्वा, 'रक्षोहाग-मलघ्वसन्देहाः प्रयोजनमिति' मुख्यानि च पञ्चप्रयोजनान्यभिधाय, इमानि भूयः, शब्दानु-शासनस्य प्रयोजनानीत्यानुषङ्गिकाणां त्रयोदशानामुक्तत्वात् कथमानर्थक्यमित्याशङ्क्याह रक्षाद्यपीति। वेदरक्षणस्यान्यतः सिद्धिमुपपादयति—शिष्येति। महच्छब्देन व्यापकवोक्ता। तच्च क्रमरक्षानादरणीयेत्याह—तद्विनाशेऽपि चेति। ननु लोपागम-वर्णविकारद्वारा पदरक्षा

व्याकरणाधीनेत्याशङ्कानिराकरणार्थत्वेनाल्पसिद्धेः स्वतोऽपि चेति व्याख्यातुं वृद्धवाक्यमुदाहरति — उक्तं चेति । नन्वाम्नायप्रसिद्धानामपि प्रस्तावोद्गीथप्रतीहारोपद्रवनिधनानां सामपर्वणां लक्षणार्थस्यौच्छिक्यव्याख्यग्रन्थस्येव व्याकरणस्याप्यर्थवत्त्वं भविष्यतीत्याशङ्कते—समाम्नायेति । वैषम्यमाह—तद्युक्तेति । प्रतिकृत्स्नस्य साम्नः सिद्धिर्यस्मात्तत्कृत्स्नसिद्धिः तस्य भावः कृत्स्नसिद्धित्वम् । ननु कृत्स्नसिद्धित्वेऽप्याम्नायसिद्धत्वाल्लक्षणानर्थक्यमित्याशङ्क्य, कर्त्तव्येन ऋगन्तरसञ्चारणी येन प्रस्तावादिनार्थेनार्थवदित्युक्तम् । कृत्स्नसिद्धित्वादिति व्याचष्टे—औच्छिक्ये हीति । कर्त्तव्यार्थेन वेति व्याचष्टे—ब्राह्मणेति । यद् योन्यां गायति, तदुत्तरयोर्गायतीत्यादिब्राह्मणगतविधिवशेन योन्यामप्याम्नातस्य साम्न उत्तर ऋगन्तरे सञ्चारणायामित्यर्थः । व्याकरणे त्वेतद्द्वयमपि नास्तीत्याह—पदेति । विशिष्टपदरचनात्मकानां वाक्यानां संघातो रूपं येषां वेदानामिति व्याकरणसाध्यसंज्ञाभिधानं न सम्भवति । कर्त्तव्यानि पदानि वाक्यानि वा येषु वेदेष्विति कर्त्तव्यार्थत्वाभावाभिधानम् । ननु प्रकृतिप्रत्ययान्वाख्यानरूपस्य पदानुगमस्यान्यतः सिद्धेः कर्त्तव्यत्वान्न कर्त्तव्यार्थत्वाभाव इत्याशङ्क्याह—लक्षयतिति । वेदरक्षार्थत्वं च व्याकरणस्य वैदिकवर्णमात्रादिनिर्णयो वैयाकरणाधीनः प्रसज्येतेत्याह — किं चेति । एतदेव दृष्टान्तेनोपपादयति—कक्षेति । ननु करकवत् वैयाकरणानां सन्निधानाभावादनादरो भविष्यतीत्याशङ्क्याह—लोक इति । यस्य यदर्थत्वमित्यत्रोदाहरणमापादयन्नाह—आयुर्वेदमिति । आज्ञा वेत्यत्रोदाहरणमाह—व्याधितत्वेति । ननु वेदाध्यायिना व्याकरणम्, वैय्याकरणैर्वाद्रियन्त इत्याह—न त्विति । कस्तर्हि वेदरक्षाहेतुरित्यपेक्षायामाह—सहाध्यायिभिरेवेति । एतदेव विवृणोति—तस्मादिति । उपाध्यायग्रहणं सहाध्याय्युपलक्षणार्थं दानभोजनादिषु वेदपरीक्षाधिकारः करणशब्देनाभिप्रेतः, तत्संयुक्ताः कारणिकाः तेषां दयालूनां दोषान्वेषणतात्पर्याभावात्—द्विष्टैरित्युक्तम् । अध्येतॄणामेव वेदरक्षाहेतुत्वेतितात्पर्यार्थः । वेदरक्षाप्रयोजनत्वाभावमुपसंहृति—तस्मादिति ।

एवं वेदरक्षार्थत्वे निराकृते, यदि कश्चिल्लौकिकवाक्यरक्षार्थत्वं ब्रूयात्तं प्रत्याह—लोके त्विति । ननु सुव्यवहारवाक्यरक्षार्थत्वाभावेऽपि काव्यादिरक्षार्थं व्याकरणं भविष्यतीत्याशङ्क्याह—काव्यादिष्वपीति । एतदेव विवृणोति—यदि त्विति । यथा काव्यस्य, नाटकस्य वा लक्षणं प्राकृतभाषायाश्च व्याकरणम्, शुद्धाखण्डा च मात्रादिः सम्पूर्णेति चतुर्विधा द्विपदीकरणाख्येन तालेन परिगीयत इत्यादि च द्विपदीनां लक्षणम् अष्टादशमात्रा विरतिरपि यस्य रासकनामास चतुरंघ्रिर्व्यांकशीत्यादि च व्यसकानां लक्षणम् । आदिशब्दाच्च ध्रुवकादीनां लक्षणम्, संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनामकप्रबन्धार्थत्वेनोपयुक्तम्, तथेदमपि संस्कृतमात्रं काव्यप्रबन्धार्थत्वेनोपयोक्ष्यत इत्याशङ्कार्थः । संस्कृतभाषानियमप्रयोजनाभावाभिप्रायेण परिहारः सूत्रारूढः कृतः । काव्यशोभापि न नियमप्रयोजनं वैपरीत्यापत्तेरित्याह—काव्येति । किं च लोकप्रसिद्धैर्वा शब्दैः काव्यप्रबन्धार्थं लक्षणं स्यात्, अप्रसिद्धैर्वा । नोभयथाऽपि युक्तम् । अप्रसिद्धौ सम्बन्धस्याशास्त्रहेतुत्वादित्यनेन न्यायेन

सत्यपि लक्षणानुगमे वचन्तीत्यादिवल्लौकिकशब्दप्रयोगेऽर्थप्रत्ययाभावापत्तेः। प्रसिद्धौ वानर्थक्यापत्तेरित्याह—न चेति।

ऊहार्थत्वं निराकरोति—ऊहार्थमपीति। यथोह्यानूह्यविभागो मीमांसासिद्धत्वान्न व्याकरणापेक्षः तथोहस्वरूपमपि लोकवेदप्रयोगसिद्धत्वादित्यर्थः। दृष्टान्तं विवृणोति—तथा चेति। इयं गौस्तया क्रीणामि, तस्यै शृतमित्यादौ सोमक्रयार्थैकहायनीप्रकाशनार्थे मन्त्रे क्षीरादिवाचिनां शृतादिशब्दानां विक्रेत्रानमनार्थत्वाद् दृष्टार्थत्वेऽपि क्रयसाधनार्थत्वाच्च स्वार्थत्वेऽपि कालान्तरे चैकहायन्या अपि क्षीरादिसम्भवात्समवेतार्थत्वेऽप्येकहायन्यवस्थाया-मुच्यमानस्य क्षीरादिसम्भवस्य मुख्यत्वाभावादौपचारिकस्य क्षीरादिसम्भवस्य साण्डोत्पाद-यिष्यमाणधेनुद्वारेण साण्डेषूपपत्तेरूहाभावान्मुख्येत्युक्तम्।

पत्नीं सन्नह्येति यजमानपत्नीसन्नहवत्प्रैषार्थे मन्त्रे पत्नीमित्येकवचनस्य विद्यमानार्थत्वेन मुख्यत्वेऽपि सन्नहनीयपत्नीसंख्याप्रकाशनाच्च स्वार्थत्वेऽप्येकत्वस्य चानेकपत्नीकप्रयोगेऽपि पत्नीत्वसामान्यसमवायात्समवेतार्थत्वेऽपि प्रकृतावपूर्वसाधनीभूतपत्नीव्यक्तिपरत्वात्सामान्य-संख्याप्रकाशनस्यादृष्टार्थत्वेनोहाभावाद्—दृष्टार्थतेत्युक्तम्।

इडोपह्वानमन्त्रे यज्ञपतिं वर्द्धानिति यज्ञपतिशब्दस्य यजमाने मुख्यत्वेऽपि तत्प्रोत्साह-नार्थत्वेऽपि, इडास्तुत्यर्थवृद्धिविशेषणत्वाभावेनोहाभावात्स्वार्थ इत्युक्तम्।

इन्द्रागच्छ, हरिव आगच्छेति सुब्रह्मण्यामन्त्रे हरिवशब्दस्य हरिवत्त्वलक्षणे गुणे मुख्यतेति, तस्य चेन्द्राय हरिवते धाना निर्वपेदिति सवनीयहविरादिषु देवतात्वान्तर्गतेर्दृष्टार्थत्वेऽपि यक्ष्यमाणेन्द्रप्रकाशनाच्च स्वार्थत्वेऽपि, वस्तुवृत्त्येन्द्रे हरिवत्त्वासमवायात् समवेतार्थत्वा-भावेनोहाभावात्—समवेतार्थतेत्युक्तम्। सत्यपि मुख्यत्वादिष्वर्थप्रकाशनवच्छब्दस्वरूप-स्याप्यादरे सत्यर्थान्तरयुक्तायां विकृतावैन्द्राग्नवद्गौणत्वोपपत्तेरूहासम्भवात्प्रकृतौ यथोत्पत्ति-वचनमर्थानां तथोत्तरस्यान्ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वादि(९-३-१)त्येतदधिकरणसिद्ध-शब्दस्वरूपानादरसूचनायादिशब्दः।

नवम एव हि तृतीयपादाद्यधिकरणे अग्नये जुष्टन्निर्वपामि, व्रीहीणामेध: सुमनस्यमान इति व्रीह्यग्निशब्दौ द्रव्यदेवतान्तरयुक्तायां विकृतावूह्यावनूह्यौ वेति निर्णयार्थं किमर्थप्रकाशन-वच्छब्दस्वरूपमपि विवक्षितम्, न वेति सन्दिह्य शब्दस्वरूपानादरे समाम्नानार्थक्यापत्ता-वौत्पत्तिकसमाम्नायावगतशब्दस्वरूपमनतिक्रम्यार्थानां वचनमभिधानं प्रकृतान्वयीति कृत्वो-त्तरस्यामपि ततौ विकृतिविस्तारे तथाभूतमविकृतमेव शब्दस्वरूपं प्रयोक्तव्यम् प्रकृतिदृष्ट-स्यैव शब्दस्वरूपस्य प्रकृतिवच्छब्देन विनियुक्तत्वादिति प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादिति सूत्रावयवेन पूर्वपक्षयित्वा, कर्म्मसमवेतार्थप्रकाशनोद्दे-शेन विहितानां मन्त्राणां प्रधानवशवर्त्तित्वेन प्रकृताविति कृत्वा चास्यार्थप्रकाशननिरपेक्ष-स्वरूपादरायोगाद्विकृते च सूर्यनीवाराद्यर्थेऽग्निव्रीह्यादिशब्दानां प्रकाशनाख्यकार्याभावात्त-त्समर्थशब्दोपादानेन विकृतौ मन्त्रोच्चारणं युक्तमिति अर्थे चाकार्यत्वादि(९-६-१)त्युत्तरा-वयवेन सिद्धान्तयिष्यते।

ननु प्रकृतिमन्त्राणां मुख्यत्वादिरूपेण प्रयोगे सत्यपि विकृतावर्थान्तरयुक्तायामतिदेशेन प्राप्तानां तदीयद्रव्यदेवतादिप्रकाशनसामर्थ्येन प्राकृतकार्यार्थत्वायोगादातिदेशिकवचनवशात्कार्यान्तरकल्पनैवोचिता, नोहेन प्राकृतकार्यसामर्थ्यकल्पनेत्याशङ्क्य विकारेषु कार्यातिदेशतो गता—इत्युक्तम् । प्राकृतकार्यनिरपेक्षेण पदार्थातिदेशे, शास्त्रातिदेशे वा कार्यान्तरकल्पना युज्येत । वैकृतभावनाकाङ्क्षावशात्तु करणोपकारलक्षणकार्यद्वारस्यैवातिदेशस्य दशमाद्ये वक्ष्यमाणत्वान्न कार्यान्तरकल्पनेत्याशयः ।

कार्यद्वारातिदेशेऽपि कार्यान्तरार्थे व्रीह्यादौ व्रीहीणां मेधेत्यादिमन्त्रप्रयोगस्यैवाभावात्प्राकृतकार्यार्थत्वेऽप्यर्थान्तरत्वाभावेनाविकृतस्यैव प्रयोगोपपत्तेरूहाभावात्प्राकृतकार्यतापत्तेश्च—अर्थान्तरेष्वित्युक्तम् । कथं कार्यापत्त्यवगतिरित्यपेक्षायाम्—पञ्चधेत्युक्तम् । १ नैवारश्चरुरिति विकारतद्धितेन नीवाराणां चरुप्रकृतित्वाभिधानात्प्रत्यक्षविधिना प्रदेयप्रकृतित्वलक्षणव्रीहिकार्यापत्तिरवसीयते । २ संस्थिते षडहे मध्वाशयेद् घृतं वेति मधुघृताशनयोः षडहाभावे विधानात्प्रत्यक्षविधिना षडहकार्यापत्तिः । ३ सत्रायावगूर्य विश्वजिता यजेतेति वा सत्राभावे, विश्वजितो विधानात्सत्रकार्यापत्तिः । ४ नैवारश्चरुर्नखावपूतानामिति वैतुष्यलक्षणविकारफलकनिर्लुञ्छनापरपर्यायावपनाङ्गत्वेन नखानां विधानाद्विकारेण वैतुष्योत्पादनलक्षणोलूखलमुसलकार्यापत्तिः । ५ परिधौ पशुं नियुञ्जन्तीति परिधेर्नियोजने विधानात्स्वशब्देन विनियोजनलक्षणरूपकार्यापत्तिः । न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयमितीरापदविध्येकवाक्यतया गिरापदस्य निषेधानुवादावगतेरेकार्थत्वाभावे चेरापदेन गिरापदबाधायोगान्निषेधानुवादानुपपत्तेर्निषेधानुवादेन गिरापदकार्यापत्तिरिति पञ्चप्रकारत्वम् । प्रत्यक्षविधिनाऽभावे विधानेन, विकारतः, स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारितेति संग्रहश्लोकः ।

ननु व्रीह्यादिकार्याय तेष्वपि नीवारादिषु व्रीह्यादिप्रकाशनार्थानां मन्त्राणां व्रीह्यादिस्वरूपस्याभावेनाप्राप्तेर्नोहः स्यादित्याशङ्क्य—अपूर्वार्थद्वारेणेत्युक्तम् । स्वरूपप्रयुक्तत्वनिराकरणेनाऽपूर्वप्रयुक्तत्वस्य नवमाद्ये वक्ष्यमाणत्वान्नीवारादिषु व्रीह्यादिस्वरूपाभावेऽपि व्रीह्यादिलक्षितापूर्वार्थत्वसद्भावात्तद्द्वारेणास्ति प्राप्तिरित्याशयः ।

नन्वर्थान्तरेष्वप्यूहेन मन्त्राणां प्रयोगोपपत्तौ याज्यानुवाक्ययोरनुपदेशे गायत्र्यादिना लक्षणेनानुवाक्याकल्पनवचनम्, त्रिष्टुबादिना च लक्षणेन याज्याकल्पनवचनं तादृशलक्षणयोश्चासम्भवेन असञ्ज्ञकयोनिमामश्रृणुधीहवं स्तीर्णं वर्हिरानुषासवेतदित्यनयोरिरागमवचनमनर्थकं स्यादित्याशङ्क्य—अनिषिद्धोहा इत्युक्तम् । पूयति वा एतदृचोऽक्षरम्, यदेतदूह इति तस्मादृचं नोहेदित्यादावूहनिषेधान्न देवतान्तरवत्यां विकृतौ प्राकृतयोर्याज्यानुवाक्ययोः प्राप्तिः सम्भवतीत्याशयः । न माता वर्द्धते, न पितेति तु यज्ञपतिन्यायप्राप्तनिषेधानुवादत्वान्नोदाहरणम् एवम्भूतस्य वोहोपपत्तिकलापस्य मीमांसागम्यत्वादस्माकमेवोहः सिद्ध्यति, न वैयाकरणानामिति—न इत्यनेनोक्तम् । न त्ववघातादिसंस्कारविषयस्य दृढादृढप्रहारादि-

रूपस्योहस्य, सामविषयस्य वोत्तराकृता वृद्धतालव्याश्रितापि भावरूपस्य व्याकरणानपेक्षत्वेऽपि, मन्त्रोहस्य वैयाकरणाधीनत्वेन महाभाष्यकृतोक्तस्य शब्दरूपत्वाद्वैयाकरणापेक्षा भविष्यतीत्याशङ्क्य, व्रीह्यादिसम्बन्धित्वेनावगतानां धर्माणां नीवारादिसम्बन्धित्वापादकरूपवितर्कणात्मकस्योहरूपस्य मन्त्रविषयेऽप्यूहे साम्याद्वितर्कणायाश्च मीमांसाधीनत्वान्न वैयाकरणापेक्षेति—मन्त्रशब्देनोक्तम् ।

ननूह्यानूह्यविभागस्य मीमांसकाधीनत्वेऽप्यूह्यपदस्वरूपज्ञानं वैयाकरणापेक्षं भविष्यतीत्याशङ्क्याह एतावतीति । ननु कथं साध्वसाधुशब्दविवेकानभिज्ञस्य योग्यपदलाभ इत्याशङ्क्याह -- वेद एव हीति । यत्किञ्चिच्छब्दोहेनापि वा मन्त्रवाक्यनैराकाङ्क्ष्यसिद्धेर्न योग्यपदादरो युक्त इत्याह—अथ वेति ।

एतच्च देवतापदव्यतिरिक्तविषयमुक्तम्, तेषां विधिगतपदव्यतिरेकेण साधून प्यप्रयोज्यत्वादिति दर्शयंश्लोकं व्याचष्टे—देवतेति । आग्नेयादियोगाङ्गभूतेष्वावाहनादिषु निगमनस्थानेषु किं येन केनचित्पर्यायेण देवताभिधेया; अथ वा विधिगतेनैव शब्देनेति सन्दिह्य येन केनचिदर्थसिद्धेरनियमे प्राप्ते, देवतायाः प्रतिग्रहादिव्यापाराभावात्स्वरूपेण कर्म्मसमवायानुपपत्तेः शब्देनाग्निमुद्दिश्य हविस्त्यजेदिति विध्यर्थावगमात्केन शब्देनेत्यपेक्षायां बुद्धिस्थाग्निशब्दातिक्रमे कारणाभावादग्निशब्देनैवाग्निमुद्दिशेदिति विधिगतेनैव शब्देन देवतात्वविधानान्मन्त्रकार्ये तस्यैवोच्चारणं कार्यमिति 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदने (१०·४·२३) इति सूत्रोक्तदाशमिकन्यायेन विधिगतप्रयोगानुसारेणैव विकृतौ देवतापदान्यूह्यमानानि प्रयोक्ष्यन्त इत्यर्थः ।

ननु सौर्यं चरुमिति विधौ प्रातिपदिकमात्रश्रवणादग्नये जुष्टमिति चतुर्थ्यन्ताग्निपदस्थाने सूर्यपदं कीदृशं प्रयोज्यमिति व्याकरणं विना न ज्ञायत इत्याशङ्क्य तद्वाक्यशेषेत्युक्तम् । तस्य विधिवाक्यस्य शेषे वाक्यान्तरे वा 'महोदेवाय सूर्याय शंसतेत्यादौ यदधिगतमर्थाभिधानमित्यन्तेनेत्यर्थः ।

नन्वेवं सति शब्दव्यवस्थायामपि प्रयोगोत्पत्तिशास्त्रत्वदर्शनात्कथं तेनाव्यवस्थासिद्धिरित्याशङ्क्य—तेषु हीत्युक्तम् । किं विषयं तर्ह्यव्यवस्थितोह्यपदप्रयोज्यत्वाभिधानमित्यपेक्षिते—यानीत्युक्तम् । पौण्डरीके 'बर्हिषि दर्भैस्तृणोत हरितैः सुपर्णैरित्यतिदेशप्राप्ते मन्त्रे दर्भपदस्थाने पुण्डरीकैरिति द्रव्यपदमादिशब्दात्सुपर्णस्थाने पुण्डरीकावयववाचिपदम् । एवं व्रीहिणां मेधः सुमनस्यमान इत्यादौ यथासम्भवं नीराणामित्यादीनि यथासम्भवं द्रव्यादिपदान्युदाहार्याणि । ननु नीवारादिपदव्यतिरिक्तानां तत्पर्यायाणां साध्वसाधूनां मानाप्राप्तत्वेनाप्रतीतरूपाणां प्रयोगविधिविषयत्वाभावात्प्रयोगानुपपत्तेर्नाव्यवस्था युक्तेत्याशङ्क्य —सन्निहितेत्युक्तम् । सन्निहितेन नीवारादिविधितः प्रतीतेन नीवारादिनार्थेन पर्युपस्थापितानि समस्तानि पर्यायभूतानि साध्वसाधूनि रूपाणि येषामिति विग्रहः । पूर्वमेव तर्हि नीवाराद्यर्थस्य स्मृतत्वान्नीवारादिपदोहोऽनर्थकः स्यादित्याशङ्क्य —असन्निहितेत्युक्तम् ।

असन्निहितार्थस्य व्रीह्यादिपदस्य निवृत्त्या हेतुभूतया न्यूनत्वात्साकाङ्क्षं यदव्रीहीणां मेधेत्यादिमन्त्रवाक्यम्, तस्य निराकाङ्क्षीकरणायेति विग्रहः। द्रव्यादेर्हि श्रुतिसमवायित्वाभावेन विधिगतशब्दप्रयोगनियमाभावात्कर्म्मविधानार्थस्यैव शास्त्रस्य शब्दप्रयोगोत्पत्तिशास्त्रत्वानुपपत्तेर्मन्त्राम्नानरूपेण वा शास्त्रेण प्रयोगोत्पत्तेः शास्त्रवत्त्वं वाच्यम्। व्याकरणाख्येन वा तत्र मन्त्राम्नानं तावद्विकृतौ नास्तीत्याह—प्रकृतौ हीति।

व्याकरणस्य च सम्भाव्यमानमूलशास्त्रत्वात्कृतकत्वादिदोषग्रस्तत्वात्पौरुषेयत्वेन चानादियज्ञगतशब्दविषयत्वायोगान्न प्रयोगोत्पत्तिशास्त्रत्वं युक्तमित्याह—व्याकरणस्यापीति। कृतकत्वस्यानाप्तप्रणीतत्वाशङ्कापादकत्वेन दोषत्वं व्याकरणानुगतशब्दप्रयोगनियामकत्वाभावेन—अविधायकत्वस्योक्तम्। इत्युपसंख्यानानामादिशब्दोपात्तानां च वक्तव्यानाम्, आचार्य्यसूत्राणां च दीधीवेवोटामित्यादीनां प्रत्याख्यानम्, सूत्रवार्तिकभाष्याणां परस्परविरोधे विशेषाग्रहेण इदमेव प्रमाणमित्यनिश्चयादनवस्थितं प्रमाणत्वं विकरणस्य केचित्प्रकृत्यन्तर्भावमिच्छन्ति, अन्ये प्रत्ययान्तर्भावमिति, यथारुचि कल्पितं प्रकृतेः प्रत्ययस्य वा परिमाणं धातुप्रातिपदिकादिलक्षणदूषणान्यादिशब्देनोपात्तानि।

सत्यप्याप्तप्रणीतत्वे नित्यानित्यसंयोगविरोधेनानादियज्ञगतशब्दविषयत्वं निराकृतम्। ऊहस्यान्यतः सिद्धेर्व्याकरणप्रयोजनत्वासम्भवमुपसंहरति—तेनेति। प्रकृतिविकृतिविभागज्ञानम्, कर्म्मज्ञानम्, प्रकृतौ द्रव्यदेवतामन्त्राणां विकृतौ द्रव्यदेवतान्तरस्य, प्राकृतानां च मन्त्राणां ज्ञानं कर्म्माङ्गज्ञानं प्रकृतावपूर्वप्रयुक्तत्वम्, कार्यातिदेशेन च विकृतिगमनं वैकृतानां चाङ्गानां प्राकृतकार्यापत्तिज्ञानम्, वाक्यार्थज्ञानं तेषु कौशलैः कर्तव्यतया लोकवेदप्रयोगाश्च स्वरूपेणोहसिद्धेर्व्याकरणानर्थक्यमित्यर्थः।

व्याकरणतः सिद्धेरप्यूहस्य, तत्प्रयोजनत्वं न युक्तमित्युपपादयितुं व्याकरणपर्यालोचनया कर्त्तव्यत्वेनावगतस्योहस्य मीमांसानुसारेणापवादः कल्पसूत्रव्याख्यातृभिः कृत इत्याह - अपि चेति। देव्याः शमितार आरभध्वम् इत्यादिः पशुविशसनप्रैषमन्त्रः अध्रिगुशब्दवत्त्वेनाध्रिगुरुच्यते तत्र पुराणन्यायादीन्यङ्गानि। अन्वेनं मातेत्यादीनि ज्ञातिनामानि। श्येनमस्येत्याद्या उपमाः। सूर्यं चक्षुरित्यादीनीन्द्रियाणि। यज्ञपतिशब्दवत्पारार्थ्येनैषामन्यैरूहविषयैर्वैषम्यान्नाध्रिगावूह्यते इत्यर्थः।

यथागमः खल्वपीत्युपक्रम्य ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति स्मरणमावश्यकधर्म्मज्ञानार्थम्, षडङ्गवेदाध्ययनविधानार्थं व्याकरणाध्ययनप्रयोजनत्वेनोपन्यस्तम्। तत्प्रयोजनं प्रयोजनिभाववैपरीत्येन दूषयति - आगम इति। यथा वेदाध्ययनं प्रति प्रयोजनभूतानां कर्म्मणां नाध्ययनं प्रयोजनं तथा षडङ्गवेदाध्ययनविधायकमागमं प्रति प्रयोजनभूतस्य व्याकरणाध्ययनस्य नागमप्रयोजनमित्युपालम्भार्थः। न त्वागमप्रयोजनत्वप्रतिपादकं भाष्यमनुष्ठापकत्वाभिप्रायं व्याख्यातृभिर्व्याख्यातं तत्कथं फलपरत्वं प्रयोजनशब्दस्यारोप्य दूषणमुक्तमित्याशङ्कानिकराकरणार्थः फलपदप्रयोगः। रक्षोहाग-

मलध्वसन्देहाः प्रयोजनमिति सकृच्छ्रुतस्य प्रयोजनशब्दस्य रक्षादौ फलपरत्वम्, आगमेऽनुष्ठापकपरत्वं न युक्तमित्याशयः। एतदेव विवृणोति—सर्वस्य हीति। न चागम-प्रयोजनत्वाभिधानेन लक्षणया धर्मज्ञानाख्यमागमोक्तं प्रयोजनमभिमतमित्याशङ्कते—अथेति। षडङ्गवेदाध्ययनवद्धर्मज्ञानस्याप्यनुष्ठेयत्वमनेनागमेनोक्तम्, न प्रयोजनत्वममिति मत्वा परिहरति—तदपीति।

नन्वेकस्मिन्वाक्ये विधिद्वयायोगाद्धर्म्मस्य ज्ञेयत्वाभिधानं प्रयोजनत्वेनैव व्याख्येयमत आह—निष्कारणतयेति। श्रेयःसाधनत्वेन धर्म्मस्य निष्प्रयोजनत्वायोगान्निष्कारणशब्दस्य षडङ्गशब्देनैवान्वयात्पौरुषेयेषु च वाक्यभेदस्यादोषत्वादित्याशयः। एतदेव विवृणोति—निष्कारणेति। कार्यतेऽनुष्ठाप्यतेऽनेनेति व्युत्पत्त्या प्रयोजनवचनोऽयं कारणशब्द इति वक्तुं निष्प्रयोजनत्वशब्दः। अवेदत्वाच्चास्यागमत्वं नास्तीत्याह—आगम इति। नन्व-वेदत्वेऽपि वेदमूलत्वेनागमत्वं भविष्यतीत्याशङ्क्याह—कथं चेति। नन्वेवं तर्हि तस्याः स्मृतेर्वेदमूलत्वाभावे वेदाध्ययनस्यावैधत्वं स्यादित्याशङ्क्याह तस्मादिति। न च केवल-वेदविषयस्य विधेर्नित्यानित्यसंयोगविरोधोऽस्तीस्याह—उपपन्नं चेति। ननु व्याकरणादेरपि प्रवाहनित्यत्वान्नित्यविधिविषयत्वं विरोत्स्यत इत्यत आह—व्याकरणादीति। प्रत्यक्ष-श्रुतिविषयत्वं सति तदन्यथानुपपत्त्या प्रवाहनित्यत्वं कल्प्येत, तदभावेऽप्यपस्मृतित्वेनाप्यु-पपत्तेर्न कल्पनागौरवाश्रयणं युक्तमित्याशयः। न चास्य वेदत्वेन, तत्तुल्यत्वेन वा स्वयमागमत्वं सम्भवति, कल्पसूत्राधिकरणे निरस्तत्वादित्याह—न चेति। किं च प्रधानं च षडङ्गेषु व्याकरणमिति भाष्येण वेदाङ्गत्वाद्व्याकरणस्यैतदागमप्रयोजनत्वमुक्तम्। अङ्गशब्दश्च तादर्थ्यवाची वा स्यात्, अवयववाची वा नोभयथापि व्याकरणस्याऽङ्गतास्ती-त्याह—न चेति। उभयरूपाभावमुपपादयति—श्रुतीति। कस्तर्ह्यस्याः स्मृतेरर्थं इत्यपेक्षा-यामाह—तस्मादिति। लिङ्गादेरशब्दरूपत्वेऽपि तत्कल्प्यानां श्रुतीनां वेदावयवत्वं भविष्यतीति भावः। अभिधानसमर्थानां वा मन्त्राणां लिङ्गत्वम् अङ्गानां सापेक्षवाक्यार्थ-प्रतिपादकवाक्यसमुदायस्य प्रकरणत्वम्। सन्निधिपठितानां वाक्यानां क्रमत्वम्। यौगिकस्य शब्दस्य समाख्यात्वमभिप्रेत्य—अवयवत्वमुक्तम्। एवंविधषडङ्गवेदाध्ययनस्य वान्वय-व्यतिरेकाभ्यां धर्म्मज्ञानहेतुत्वावसायाद्धर्मो ज्ञेय इत्यस्य तत्प्रयोजनत्वाभिधायकत्वोपपत्तेर्ना-नेकविधानं निमित्तवाक्यभेदापत्तिरिति सूचयन्नाह—तैः षड्भिरिति।

नन्वेवं सति वेदाध्ययनेनैव तदवयवाध्ययनसिद्धेः विशेषणानर्थक्यापत्तिं शङ्कते—नन्विति। प्रविभक्तरूपश्रुत्यादिज्ञानार्थत्वेन विशेषणसाधुत्वमाह—उच्यत इति। श्रुतेर्वि-नियोजकत्वे हेतुर्मुख्यम्, गौणं वा सामर्थ्यम्, तेन विना विनियोजकत्वस्यासम्भवाद्वि-नियोजकाक्षरश्रवणरूपं व्यर्थम्। लक्षितेऽपूर्वसाधनांशे विनियोगः फलम्। सामान्य-सम्बन्धाख्यः क्रतुसम्बन्धो लिङ्गस्य विनियोजकत्वे हेतुः। सामर्थ्यं रूपम्, मुख्येऽर्थे विनियोगः फलम्। समभिव्याहारान्यथानुपपत्तिर्वाक्यस्य विनियोजकत्वे हेतुः। सन्निहिता-काङ्क्षितयोग्यपदार्थप्रतिपादकपदसमुदायो रूपम्, पूर्वापरपदाविरोधेन विनियोगः फलम्,

प्रकरणस्य विनियोजकत्वे फलसंयोगाभावो हेतुः। साकाङ्क्षफलवत्सन्निधानं रूपं फलवति विनियोजकत्वे सादृश्यं हेतुः। निराकाङ्क्षफलवत्सन्निधानं रूपं फलवत्याकाङ्क्षोत्थापनेन विनियोगः फलम्, सामान्यतः प्राप्तिः समाख्याया विनियोजकत्वे हेतुः–यौगिकशब्दत्वं रूपं प्रतियोगिनि विनियोगः फलमिति। पृथग्भूतैर्हेतुरूपफलैः प्रविभक्तरूपेण श्रुत्यादिज्ञानं मीमांसानिरपेक्षाद्वेदाध्ययनमात्रान्न सिध्यतीत्याशयः। ज्ञात्वेति च ज्ञास्यामीत्यध्यवसायेत्येवमग्निष्टोमसाम कृत्वेतिवद्व्याख्येयम्। विधेरर्थमित्यनेन षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यागमस्य वेदः पठितव्यः। स च परस्परविविक्तश्रुत्यादिषडङ्गरूपेण ज्ञेय इत्यर्थः। सूचितं मीमांसाधीनत्वं चास्यार्थस्य न इत्यस्मदा सूचितम्।

ननु ज्ञेयशब्दस्य षडङ्गशब्दान्वये धर्मशब्दस्यानन्वयापत्तेर्ननेन श्रुत्यादीनां चोक्तरूपेण ज्ञानं विधीयत इत्याशङ्क्य अध्येयशब्दस्यैवेण् गतावित्येतद्धातुरूपत्वाङ्गीकरणेन ज्ञानविधायकतेति व्याख्यानान्तरमाह—अधीति। अकारप्रश्लेषरहितेन वानेन ध्यानं विधीयत इति तृतीयं व्याख्यानमाह—ध्यायतेरिति। अध्ययनविधित एव नान्तरीयकतयाध्ययनसिद्धेर्विधानानर्थक्यमित्याशङ्क्य श्रुत्याद्युपायार्थप्रतिपादकत्वरूपेण षडङ्गस्य वेदस्य ध्यानं विवक्षितम्, न स्वरूपेण तस्यापि च वेदार्थावधारणकालसिद्धत्वात्पश्चादप्यनुष्ठेयत्वसिद्धयर्थं विधानमिति दर्शयितुमाह—श्रुत्यादीति। एवं च मीमांसाध्ययनानुष्ठापकतैवास्यागमस्यावसीयते, न व्याकरणाध्ययनानुष्ठापकतेत्यनुष्ठापकत्वेनागमस्य व्याकरणप्रयोजनत्वाभिधा ं न युक्तमित्याह—ततश्चेति। अनुष्ठानार्थत्वाद्वा विधिवाक्याध्ययनमात्रेण स्वाध्यायविध्यर्थसिद्धेरर्थवादान्तर्गतव्याकरणाद्यङ्गसहितवेदाध्ययनविधानार्थत्वेनास्यागमस्य न पाणिन्यादिप्रणीतग्रन्थाध्ययनानुष्ठापकतास्तीति चतुर्थी व्याख्या तामाह—वेद इति। श्लोकं व्याचष्टे—तद्दध्न इति। तदेनमधिनोत्तद्दध्नो दधित्वमिति धिनोतेः प्रीणातिकर्मणो दधित्वशब्दनिर्वचनादेतन्निरुक्तोदाहरणम्। तदाहुर्यदन्यो जुहोत्यथ योऽनुवाहयति, तं च कस्मान्न होतेत्याचक्षत इति पृष्टे यद्वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तं देवहोतुर्होतृत्वमिति ह्वयतेः कृतसम्प्रसारणस्यैतद्रूपम् न तृजन्तं जुहोतेरिति प्रकृतिविशेषान्वाख्यानान्न व्याकरणोदाहरणम्।

आदिशब्दोपात्तस्य छन्दोविचित्यादेरष्टाक्षरा गायत्रीत्याद्युदाहरणं यथासम्भवं मृग्यम्। अस्तु वा निरुक्तादिग्रन्थानां षडङ्गाध्ययनस्मृतिविषयत्वम्।

ननु व्याकरणस्य प्रातिशाख्यैः पूरयिष्यत इति पञ्चमीं व्याख्यामाह—प्रातिशाख्यानि वेति। यानि प्रातिशाख्यान्यध्येतारोऽधीयते। तेष्वेव षट्संख्यापूरणार्थं सङ्गतम्, न व्याकरणेष्वित्येवकारार्थे द्वितीयो वाशब्दः। गृह्यमाणं लिङ्गेन स्वाध्यायार्थत्वं ह्येषामिति हेत्वर्थः; वेदसंहिताध्ययनानुगतस्वरसन्ध्याद्यनुसाराभिधानार्थः। स्वाध्यायत्ववदिति वतिः स्वाध्यायानुगतस्वराद्युच्चारणनियामकत्वरूपं प्रयोगशास्त्रत्वं तादर्थ्यग्रहणहेतुतया स्वाध्यायवदित्यनेनोक्तमुपपादयति—यानि हीति। तदुपपादितं गृह्यमाणतदर्थत्वं व्याचष्टे—

तेष्विति । अतस्तेष्वित्यध्याहारेण योज्यम् । एवकारार्थस्य वा शब्दस्य व्यावर्त्यमाह—नन्विति । ननु कतिपयानामपि तावद्वैदिकशब्दानामुच्चारणनियामकत्वात् व्याकरणानामपि प्रयोगशास्त्रताऽस्तीत्याशङ्क्याह—प्रातिशाख्यानीवेति । अन्वाख्यायमानेष्वपि वैदिकशब्देष्वध्ययनानुगतस्वरसन्ध्यादियुक्ते रूपे व्यापाराभावान्नैषां प्रयोगशास्त्रताऽस्तीति नियामकत्वाद्व्याकरणानामपि प्रयोगशास्त्रतास्तीति परिहरति—नेति । प्रातिशाख्यानां वेदस्वरूपे व्यापारं विवृणोति—प्रातिशाख्यैः पुनरिति । उदात्तपौर्वापर्यत्वे तयोर्मध्ये कालः स्वरसन्धिः, सर्वानुदात्तपदसंहृतिः प्रयतिः असंहिता विवृतिः स्वरितस्योदात्तोंऽशः पूर्वाङ्गः, अनुदात्तः पराङ्गः आदिशब्देनाङ्गाद्युक्तम् । एवं तावद्व्यकरणाध्ययनाविधायकत्वान्नास्यागमस्य व्याकरणं प्रत्यनुष्ठापकत्वरूपप्रयोजकत्वान्नास्य किमपि प्रयोजनत्वम् सम्भवतीत्युक्तम् ।

इदानीमस्यागमस्य व्याकरणाध्ययनविधायकत्वेऽपि निष्कारणशब्देनाध्ययनमात्रपर्यवसानावसायादर्थज्ञाननिरपेक्षेणाध्ययनमात्रेण शब्दानामनुशासितुमशक्यत्वाच्छब्दानुशासनस्य रक्षोहागमलब्धसन्देहाः प्रयोजनमिति पूर्वोक्तेन प्रतिज्ञानेन तव प्रयोजनत्वेनाभिमतस्यागमस्यानुसन्धानसंवादो नास्तीत्याह—पूर्वोक्तेनेति । यो ह्ययमागमस्त्वया प्रयोजनत्वेनोपन्यस्तः । सोऽध्ययनं प्रति तन्मात्रे पर्यवस्यति, न शब्दानुशासनपर्यन्तं गच्छति, प्राक्शब्दानुशासनमागमप्रयोजनत्वेन प्रतिज्ञातमित्यध्याहारेण योज्यम् । अस्माच्चागमादध्ययनमात्रे धर्म इति प्रतीतेर्महाभाष्यकृता ज्ञाने धर्म्म इति वक्ष्यते । शास्त्रपूर्वं प्रयोगेपूदय इति च वार्तिककृता । तदुभयमप्यागमविरुद्धं स्यादित्याह—ब्राह्मणेनेति ।

यच्च लाघवार्थं चाध्येयं व्याकरणमित्यादिभाष्येण लघुनोपायेन शब्दज्ञानं व्याकरणस्य प्रयोजनमित्युक्तम् । तत् अत्यन्तक्लिष्टत्वेन व्याकरणस्य लघूपायत्वायोगप्रयोजनातिक्लिष्टव्याकरणाध्ययनमध्येतुर्लाघवं मन्दबुद्धित्वमापादयतीत्यध्येतृलाघवमेवास्य प्रयोजनमित्येवं व्याख्येयमित्युपहसति—यदपि चेति । उपहासान्तरमाह—यदि वेति । श्लोकं व्याचष्टे—लोकप्रसिद्धानामेवेति । धातुशब्देन धातुपाठो विवक्षितः । गणशब्देन गणपाठ उणादिशब्देन दशपादी पञ्चपादी वा । सूत्रशब्देनाष्टाध्यायी । आदिशब्देन वार्त्तिकादीनां तेषां पाठतोऽर्थतश्च क्लिष्टत्वादत्यन्तवैषम्यं विशेषणं क्लिष्टार्थत्वोपपादनायोत्तरवदत्रापि विग्रहद्वयम् । अलौकिकीभिर्वृद्धिरादैजित्यादिभिः संज्ञाभिः, इको गुणवृद्धीत्याद्याभिश्च परिभाषाभिर्निबद्धा प्रक्रिया येषां धात्वादीनामिति प्रथमविग्रहः, द्वितीयस्त्वनवस्थितौ स्थापनाक्षेपौ यस्य सिद्धान्तस्य स सिद्धान्तो यस्य विचारस्य, स विचारो येषु धात्वादिष्विति द्वन्द्वगर्भबहुव्रीहिगर्भो बहुव्रीहिः । तद्यथा सिद्धे शब्दार्थसम्बन्धे इति शास्त्रारम्भवार्त्तिके भाष्यकृता सिद्धे शब्देऽर्थे सम्बन्धे चेति विग्रहं कृत्वा नित्यपर्यायवाचित्वेन सिद्धशब्दं व्याख्याय कं पुनः पदार्थं मत्वैष विग्रहः क्रियत इति विचारमुपक्रम्य, आकृतिमित्याहेत्याकृत्यभिप्रायत्वं प्रतिज्ञायाः, आकृतिर्हि नित्या, द्रव्यमनित्यमिति हेतुमुक्त्वाऽथ वा द्रव्यपदार्थं एष विग्रहो द्रव्यं हि नित्यमाकृतिरनित्येति द्रव्यार्तान्द्रियत्वमुक्त्वा पुनराकृतावपि पदार्थं

एष विग्रहो न्याय्य इत्युक्त्वा नित्याकृतिरेकद्रव्यविनाशेऽपि द्रव्यान्तरे प्रत्यभिज्ञानादिति चाक्षेपं परिहृत्य, कूटस्थनित्यत्वाभावेऽपि वा पट्टकुटीवद्विनष्टा वा अथाकृतेर्द्रव्यान्तरभावेऽयमिति तत्त्वप्रतिज्ञानान्नित्यतेति परिहारान्तरमुक्त्वा अथ वा किं न एतेन इदं नित्यमिदमनित्यमिति यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियत इति पदार्थविचारसिद्धान्तस्थापनाक्षेपानवस्थितहेतूपन्यासेनावस्थितौ कृते एवमत्यन्तविषमैर्धात्वादिभिर्लोकप्रसिद्धानामेव शब्दानां क्लेशेनान्तं गत्वा यथावस्थितानुवादमात्रकरणान्निष्फलश्रमापत्तिरित्यर्थः। तत्र 'अपि चेत्थ'नेन यथावस्थितशब्दज्ञानमपि सर्वप्रतिपत्तॄणां न भवतीत्युक्तम्। स्तुत्यर्थमित्यन्तासम्भाविता स्तुतिरपि न सम्भवतीति सूचितम्। ननु भाष्यकृता न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुमिति लघूपायान्तराभावाभिधानाद् गुरोरप्यस्य प्रतिपदपाठात्मकगुरुतरोपायापेक्षया लघुत्वं भविष्यति एतदेव चान्यैरुपपादितमित्याशङ्क्यानुभाषणपूर्वकमुपसंहरति—यदपीति।

तत्त्वावबोधो रूपादेर्नास्ति व्याकरणादृत इत्याद्यपि वक्तव्यमित्यर्थः। ननु रूपादेः प्रत्यक्षगम्यत्वान्न व्याकरणापेक्षा, तत्साधुशब्दविवेकस्य तु व्याकरणमन्तरेणाज्ञानान्नोपहासो युक्त इत्याशङ्क्यार्थप्रतीतिसाधनत्वात्सर्वेषां गोगाव्यादिशब्दानां साधुत्वे तेषां च श्रोत्रेन्द्रियागम्यत्वान्न व्याकरणपेक्षेत्यभिप्रायेण परिहरति—को हीति। प्रमाणान्तरागोचरार्थविषयत्वं शास्त्रस्य स्वभावः। प्रमाणान्तरगृहीतार्थानुवादित्वं लोकस्य। इति करणार्थवाची इदृशशब्दप्रयोगात्तत्त्वावधारणमिति प्रथमा कीदृशं तह्यर्थप्रवृत्तितत्त्वानां शब्द एव निबन्धनमिति श्लोकस्योत्तरार्द्धं वक्तव्यमित्यपेक्षायामाह—अत इति।

यद्यप्यसन्देहार्थं चाध्येयं व्याकरणमित्यादिभाष्येण वेदार्थगतसन्देहनिवृत्तिप्रयोजनत्वं व्याकरणस्योक्तम्। तदपि दूषयति—असन्देहश्चेति। पदार्थगतस्य चासन्देहस्य निवृत्तिर्व्याकरणस्याप्रयोजनम्, वाक्यार्थमन्तरा वा उभयथाप्यन्यतः सिद्धत्वात् व्याकरणाच्चासिद्धेर्न व्याकरणप्रयोजनमित्यर्थः।

पदार्थसन्देहनिवृत्तेरन्यतः सिद्धिमुपपादयति—पदार्थेति। व्याकरणेन चासिद्धिमुपपादयति—व्याकरणेन पुनरिति। नन्वीदृशं पदमस्मिन्नर्थे साध्वित्यर्थविशेषावच्छिन्नस्यैव पदस्वरूपस्यान्वाख्यानादर्थज्ञानमपि व्याकरणात्सम्भवतीत्याशङ्क्य शब्दान्वाख्यानोपायमात्रके व्याकरणेऽर्थकथनं न तात्पर्येणेति निदर्शयितुमाह—तथा हीति। व्याकरणाद्धि सर्वनाम्नां धातुजत्वेन क्रियायोगनिमित्तता प्रतीयते। न च वृद्धव्यवहारे तथा प्रतीतिरित्यर्थः। अत्रैवोदाहरणमाह—गमेरिति। अनेन सूत्रेण गत्यर्थात् गमेर्धातोरौणादिके डोप्रत्यये विहिते डित्करणाच्च टिलोपे कृते कर्त्तरि कृदिति गन्तरि गोशब्दव्युत्पादनार्थान्वाख्यानादरे लोके सिद्धा जातिवाचिता हीयेत। लोकमूलत्वाच्च व्याकरणस्य नैतद्युक्तमित्यर्थः (उदाहरणान्तरमाह—तथेति। कुशला दातरि कुशलशब्दस्य दातरि च

दारशब्दस्य व्याकरणेऽनुगमः। लोके च प्रवीरा ये कुशलशब्दस्य दातृमहत्त्वयोश्च दारशब्दस्येत्यर्थः[1]।)

अकृदन्तेष्वपि कृदन्तत्वान्वाख्यानाद् व्याकरणस्य लोकविरोधमुक्त्वा, समासाभावेऽपि समासान्वाख्यानात्सर्वविरोधमाह—अश्वेति। अतद्धितान्तेष्वपि तद्धितान्तवद्व्याख्याना-द्विरोधमाह—एवमिति।

वेदविरुद्धार्थान्वाख्यानाद्यङ्गव्याघाताशङ्कापत्तेर्न व्याकरणस्यार्थे तात्पर्यमित्याह—तथेति। अत्रैवोदाहरणद्वयमाह कलेरिति। आपो वा ऋत्वियमार्छन्। तासां वायुः पृष्ठेत्यवर्त्तत ततो वसुत्, तवामं सममवत्तस्मिन्मित्रावरुणौ पर्यपश्यताम्, तावब्रूतां वामं मर्या इदं देवेष्वाजनीति, तस्माद्वामदेव्यमिति वामदेवेष्विति समभिव्याहृतशब्दद्वयोच्चा-रणनिमित्तवामदेव्यशब्दव्युत्पत्तिः। कलनक्रियानिमित्तकालेयशब्दव्युत्पत्तिश्च वैदिकी वैयाकरणीं दर्शननिमित्ततां बाधत इत्यर्थः।

कल्पसूत्रकारैश्च कृष्णशम्वास इति कृष्णशशब्दस्य व्याकरणाननुगतदकारापगमेन कृष्णदशब्दवाचितया व्याख्यानात्कृष्णवलक्षे अजिने इति च वलक्षशब्दस्य लोकव्याकरणा-नवगतशुक्लत्ववाचितया व्याख्यानात्, यूपादिशब्दानां च व्याकरणमनादृत्यैव व्याख्यानान्न व्याकरणस्य पदार्थनिश्चायकत्वमस्तीत्याह—तथेति। नन्वस्तु नाम पदान्तरेषु व्याकरणान-पेक्षोऽर्थनिर्णयः। यत्तु भाष्यकृता स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेत्यत्र किं स्थूला चासौ पृषती चेति कर्मधारयः, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति बहुव्रीहिर्वेति सन्देहनिवृत्तिर्वैयाकरणस्य भवतीत्युक्तम्। तत्र कः परिहार इत्याशङ्क्याह—यथा चेति।

पदार्थसन्देहनिवृत्तेर्व्याकरणप्रयोजनत्वं निराकृत्य वाक्यार्थसन्देहनिवृत्तिरपि निरा-करोति—किं चेति। ननु वाक्यार्थसन्देहनिवृत्तिप्रयोजनत्वं भाष्यकृतानुक्तत्वान्न निराकार्य-मित्याशङ्क्य, प्रसङ्गापादनार्थं तन्निराकरणमित्याह—यदीति। किंचिदित्यक्रियार्थत्व-मभिमतम्। औदुम्बराधिकरणस्य साध्यांशविचारार्थत्वाभावे किमौदुम्बरत्वस्य फलसम-भिव्याहारः साधारणत्वप्रतिपत्त्यर्थः, प्रशंसार्थो वेति व्याख्येयम्। प्रमाणान्तरेणाऽन्नकरण-त्वस्य होमसम्बन्धहेतुत्वमज्ञातं ज्ञाप्यत इत्यज्ञातज्ञापनाभिप्रायो विधिशब्दः हेतुद्वारोऽर्थवाद इति शाकपार्थिववन्मध्यमपदलोपी समासः। दृष्टार्थत्वशब्देनार्थतात्पर्यमात्रं सर्वमन्त्रसा-धारणं मन्त्राधिकरणे व्युत्पादितम्। न स्मारकत्वम्, स्तोत्रशस्त्रादिमन्त्रव्यापकत्वादिति दर्शितं व्याकरणानपेक्षोदाहरणान्युक्त्वैकत्वविवक्षायामेकवचनस्मृतेर्व्याकरणेनैकत्वविवक्षा-प्रतीतेर्विरोधोऽप्यस्तीति दर्शयितुम्—ग्रहेत्युक्तम्। न त्वनन्यलभ्यस्य प्रयोजनवदर्थवाद-त्वादिनिर्णयस्य च मीमांसासिद्धत्वान्न व्याकरणप्रयोजनत्वोपपत्तिरिति स्वयमेवाशङ्क्याह—अथेति। स्थूलपृषत्यादिशब्दार्थस्यापि कल्पकारादिव्याख्यानान्निर्णयः सेत्स्यतीत्याशयः।

१. अयं पा० २ पु० ना०।

ननु मूलप्रमाणानिरपेक्षस्य व्याख्यानमात्रस्य निर्णायकत्वं न युक्तमित्याशङ्क्य, त्वयाऽपि व्याख्यानिर्णायकत्वाभ्युपगमान्नेदं दूषणमित्याह—अपि चेति। लक्षणोत्थसन्देहे व्याख्यानस्य निर्णायकत्वप्रतिपादकं भाष्यं वेदोत्थसन्देहेन योजयितुमाह-व्याख्यानत इति। भाष्यकृता हि शास्त्रारम्भवार्त्तिकगतस्य सिद्धशब्दस्य (एकपरिहारयुक्तानि सार्थत्वमुपपाद्य चतुर्थः परिहारोऽभिहित इत्यन्वयः सिद्धशब्दस्य[1]) कः पदार्थ इति पृष्ट्वा सिद्धा द्यौः सिद्धा पृथिवी सिद्धमाकाशमिति नित्येषु प्रयोगान्नित्यपर्यायवाची सिद्धशब्द इत्युक्त्वा, सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति कार्येष्वपि प्रयोगात्कथं निर्णयः इत्याशङ्क्य, संग्रहे तावत्कार्यप्रतिद्वन्द्विभावप्रसिद्धमिति भाष्येण संग्रहाख्ये वार्त्तिककारकृते ग्रन्थान्तरे किं कार्यः शब्दः सिद्धो वेति कार्यप्रतियोगित्वेन नित्यार्थत्वावसायादिहापि तादर्थ्यंनिर्णय-इत्येकं परिहारमुक्त्वा, अथ वा सन्त्येकपदान्यप्यवधारणानीति भाष्येणाब्भक्षो वायुभक्ष इतिवत्सिद्ध एव न साध्य इत्यवधारणेन नित्यार्थत्वमुपपाद्य, अथ वा पूर्वपदलोपोऽत्र द्रष्टव्यः। अत्यन्तसिद्धः सिद्ध इति तद्यथा देवदत्तो दत्त इति सत्यभामा भामेति भाष्येणात्यन्तत्वविशेषणेन नित्यार्थत्वमुपपाद्याथ वा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्याम इति भाष्येण चतुर्थः परिहारोऽभिहितः। ननु लक्षणोत्थसन्देहनिवृत्तिर्लक्षणकारिपुरुषकृतव्याख्यानपरम्परयोपपद्यते, वेदे तु कर्त्रभावेन तत्कृतस्य व्याख्यानस्य मूलत्वायोगात् व्याकरणं वेदव्याख्यापरम्पराया मूलं भवतीत्याशङ्क्याह—न चेति। कल्पादिभ्यो वेदार्थग्रहणे व्याकरणमात्रेण व्याख्यानाशक्तेः कल्पादीनामेव मूलत्वं युक्तमित्याशयः। वेदवद्व्याख्यानादित्वात् व्याख्यानपरम्परा न मूलान्तरमपेक्षत इत्याह—यथैवेति।

ननु भाष्यकृता यदि पूर्वपदप्रकृतिस्वरत्वम्, ततो बहुव्रीहिः। अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति भाष्येण बहुव्रीहौ प्रकृत्या पूर्वपदमिति बहुव्रीह्याद्यस्य पदस्य प्रकृतित्वाभिमताद्युदात्तस्वरत्वस्मृतेरुदात्ताधिकारे चान्तोवत्या इत्यतोऽन्त इत्यनुवर्त्तमाने समासस्येति सूत्रेण समासविशेषनिर्णयान्तरेणोत्सर्गः अन्तोदात्तत्वस्मृतेरनुदात्तं पदमेकवर्जमिति च विहितस्वरवर्जनमुदात्तत्वस्मृतेर्बहुव्रीहिं विना आद्यपदोदात्तत्वायोगाद्व्याकरणस्य समासविशेषनिर्णयद्वारार्थविशेषनिर्णायकत्वाभिधानाद्व्याकरणस्य निर्णायकत्वाभिधानाद्व्याकरणाधीनादध्येतृप्रसिद्धाद्युदात्तत्वाद् बहुव्रीहित्वेन स्थूलपृषत्यादिशब्दव्याख्येत्याशङ्क्याह—न चेति। श्लोकं व्याचष्टे -वृद्धेति। वेदे तु स्वरविवेके सत्यप्यर्थविशेषेण सह स्वरविशेषस्य सम्बन्धग्रहणाभावान्न स्वरविशेषं कृत्वाऽर्थविशेषव्यवस्था युज्यत इत्याह—यत्र त्विति। ननु वेदे सम्बन्धग्रहणाभावेऽपि लोकतोऽनेकार्थतयाऽवगतस्य पदस्य वेदे श्रवणात्सन्देहे सत्यर्थप्रकरणादिभिर्निर्णयोऽभ्युपगम्यते। तत्र चार्थद्वयसाधारणस्य पदस्यैकत्रैवार्थे कथं वृत्तिरित्यपेक्षायां स्वरविशेषश्रवणात्तत्स्वरयुक्तस्यैव पदस्यासावर्थविशेष-

---

१. अयं पा० २ पु० ना०।

निर्णयोपायत्वं स्वरस्याप्यस्तीत्याशङ्क्याह—तत्रापीति। साधारणस्यापि शब्दरूपस्य लोकावधारितार्थप्रकरणादिनिर्णयोपायवशेनैव एकार्थपरत्वावधारणोपपत्तेर्न लोकानवगतस्य स्वरस्याप्यर्थनिर्णयसामग्रीमध्ये निवेशकल्पना युक्तेत्याशयः।

ननु स्वरस्याभिधानाङ्गत्वेऽनर्थकः पाठः स्यादित्याशङ्क्याह—तेनेति। न कदाचिददृष्टार्थतास्तीति दर्शयितुम् सर्वदेत्युक्तम्। ब्रह्मयज्ञेषु ज्योतिष्टोमादिषु ये जपमन्त्रास्तेऽप्यङ्गमिति निष्कृष्य योज्यम्। जपन्यूङ्खसामव्यतिरेकेण यज्ञकर्मण्येकश्रुत्यस्मृतेश्चकारेण न्यूङ्खसाम्नामुपादानम्। एवं च व्याकरणेन स्वरानुगमो ब्रह्मयज्ञाद्युपयोगित्वेनार्थवानस्तु न त्वर्थनिर्णयार्थतेत्याशङ्क्याह—व्याकरणेति। अलौकिकेऽर्थे सम्बन्धग्रहणासम्भवेनावश्यकत्वाज्ञानात्—लौकिकेत्युक्तम्। न वर्णवद्वाचकत्वेन लोके स्वरः प्रयुक्तो नाप्यानुपूर्व्यादिवद्वाचकसहकारिता—इत्यत्यन्तशब्देनोक्तम्। ननु लोकाप्रयुक्तेष्वप्युणादिशब्देषु वाचकत्वोपलक्षणाल्लोकप्रयोगादेव वाचकत्वज्ञानमिति नियमायोगाद्व्याकरणादपि स्वरविशेषस्यार्थविशेषं प्रति वाचकत्वज्ञानं भविष्यतीत्याशङ्क्याह - न चेति। शास्त्रारम्भभाष्येऽथ शब्दानुशासनमिति शब्दान्वाख्यानार्थत्वाख्याने तात्पर्याभावान्न व्याकरणस्य प्रामाण्यमित्याशयः। अत्रैव सूत्रावयवं योजयन्नसन्देहप्रयोजनत्वासम्भवोपसंहरति—तस्मादिति। रक्षादीनामपि पूर्वोक्तप्रयोजनत्वासम्भवोपसंहारार्थोऽपिशब्दः।

एवं मुख्यानि पञ्चप्रयोजनान्युपन्यासपूर्वकं दूषयित्वा, तेऽसुराः, दुष्टः शब्दः, यदधीतम्, यस्तु प्रयुङ्क्ते, अविद्वांसः, विभक्तिं कुर्वन्ति, यो वा इमाम्, चत्वारि, उत त्वः, सक्तुमिव, सारस्वतीं दशम्यां पुत्रस्य, सुदेवो असि वरुणेत्यानुषङ्गिकाण्यपि त्रयोदशसंक्षेपतस्तावत् दूषयति—यान्यपि चेति।

अम्लेच्छत्वमदुष्टोक्तिर्विज्ञानं फलभागिता।
अस्त्र साम्यं विभक्त्युक्तिः सप्तमं चार्त्विजीनता॥

मनीषिवत् सम्मतत्वं देवेन महताष्टमम्।
वाक्यस्वरूपप्रकटनं लक्ष्म्या वाचि निधापनम्॥

अप्रायश्चित्तभाक्त्वं च द्वादशं पुत्रनाम च।
त्रयोदशं सुदेवत्वमुक्तं भाष्ये प्रयोजनम्॥

प्रथमं च द्वितीयं च सप्तमं चाप्रयोजनम्।
दशमैकादशौ चेति व्याक्रिया न ह्यपेक्ष्यते॥

तृतीयादीनि चत्वारि नवमद्वादशे अपि।
प्रयोजनवदाभान्ति किं तु नान्येन सिद्धितः॥

सुदेव इति मन्त्रस्य चत्वारीति द्वयोरपि।
असामर्थ्यं न चरममष्टमं वा प्रमाणकम्॥

मुख्यप्रयोजनैश्च प्रयोजनवत्त्वासम्भवेन आनुषङ्गिकेष्वाशा युक्तेत्याह—अपि चेति। नद्या वेगेन नीयमानो यस्तीरगतं वृक्षमप्यवष्टभ्य स्थातुं न शक्नोति, तस्य यथा कुशावष्टम्भनं काशावष्टम्भनं चानर्थकम् तथैतदपीत्यर्थः। पूर्वोक्तमेव प्रपञ्चयितुं प्रत्येकमुपन्यस्योपन्यस्य दूषयति—तत्रेति। भाष्यकृता तेऽसुरा हेऽलय हेऽलय इति ब्रुवन्तः पराबभवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै 'म्लेच्छो ह वा एष यदपशब्द' इत्यपशब्दनिषेधवाक्यमुपन्यस्य म्लेच्छा माभूमेत्यध्येयं व्याकरणमिति भाष्येण म्लेच्छरूपापशब्दप्रयोगात्प्रयोक्तुर्म्लेच्छत्वापत्तेरज्ञातस्यापशब्दस्य वर्जनायोगाच्छब्दापशब्दविवेकज्ञानार्थम्—व्याकरणमित्युक्तम्। यस्मादसुरा अरय इति रेफस्थाने लकारप्रयोगेण हैहप्रयोगे हैहेयोरित्येतत्सूत्रविहितप्लुतप्रयोगेण 'प्लुतप्रगृह्या अचीति' च प्रकृतिभावविधानाद्धे अरय इति प्रयोक्तव्ये हेऽलय इति त्रिविधापशब्दभाषणरूपम्लेच्छनात्पराभवं प्राप्ताः तस्माद् ब्राह्मणेन न म्लेच्छितव्यम्, नापभाषितव्यमिति समभिव्याहारेणापशब्दनिषेधस्यापराभवार्थत्वप्रतीतेर्म्लेच्छा माभूमेति म्लेच्छत्वपरिहारस्य प्रयोजनत्वं भाष्यकारोक्तमयुक्तमाशङ्क्य, पराभवाख्यानस्यापभाषणफलप्रदर्शनार्थत्वे प्रतीते म्लेच्छो ह वा एष यदपशब्द इत्यस्यानर्थकत्वापत्तेरपशब्दस्य म्लेच्छशब्दप्रयोक्तुर्म्लेच्छत्वं भवतीत्यपशब्दम्लेच्छत्वाभिधानार्थवादस्य फलपरत्वसूचनायोऽन्यस्यार्थवादतोक्ता, निषेधस्य तु प्रयोजनत्वमागमवत्प्रयोजकत्वेनाक्षेपकत्वेनोक्तम्। स निषेधो यथा गुरुसम्प्रदायागतवैदिकशब्दविषयो म्लेच्छभाषाविषयो वा। न तु गाव्यादिशब्दविषयग्रन्था। यद्यपि च तस्माद् ब्राह्मणेनेत्यादिग्रन्थेन प्रागुक्तमित्यर्थः। ततश्च व्याकरणानपेक्षत्वान्न तत्प्रयोजनत्वयोग्यतेत्याशयः।

यच्च भाष्यकृता—

'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति श्लोकमुपन्यस्य दुष्टाँश्छब्दान्माप्रयुङ्क्ष्महीत्यध्येयं व्यकरणमिति भाष्येण दुष्टशब्दवर्जनं व्याकरणप्रयोजनमुक्तम्। तदपि मन्त्रविनाशविषयत्वस्य च व्याकरणानपेक्षत्वान्न व्याकरणप्रयोजनत्वयोग्यमित्यर्थान्तरन्यासेनाह—दुष्ट इति। अत्रापि पूर्ववद्व्याकरणानपेक्षत्वात्तत्प्रयोजनत्वयोग्यतेत्यपिशब्देन सूचितम्। ननु दुष्टादुष्टशब्दज्ञानस्य व्याकरणाधीनत्वात्कथं तदनपेक्षेत्याशङ्क्य दुष्टः शब्द इति पाठे भवेद् व्याकरणापेक्षा, न त्वीदृशः पाठोऽस्तीति दर्शयितुमाह—वाग्धीति। मन्त्रो हीनः स्वरतो वर्णतो वेति बहुजनप्रसिद्धस्य शिक्षाकारपठितस्य मन्त्रपदस्योद्धारेण पदान्तरप्रक्षेपः स्वपक्षानुरागमात्रेण कृतः, न वस्तुत इत्यर्थः। मन्त्रविनाशविषयत्वे चास्य वाक्यस्य श्रुतिमूलत्वं भविष्यतीत्याह—दुष्टेति। दुष्टपदप्रक्षेपेऽपि मन्त्रदोषविषयत्वे नोपपत्तेर्व्याकरणापेक्षानापादकत्वात्पाठान्तरोत्प्रेक्षानर्थक्यसूचनार्थो दुष्टशब्दः शब्दमात्रदोषविषयत्वेऽस्य वाक्यस्य निर्मूलत्वसूचनार्थस्तु-

शब्दः । उदाहरणपर्यालोचनयापि मन्त्रविनाशविषयतैवास्य श्लोकस्यावसीयत इत्याह—तथा चेति । स यज्ञवशसं कृत्वा प्रासहासोममपिबत् तस्य यदीयशिष्यत तत्त्वष्टाऽऽहवनीयमुपप्रावार्त्तयत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति यदवर्तयत्तद् वृत्रस्य वृत्रत्वं यदब्रवीत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति तस्मादस्येन्द्रःशत्रुरभवदि (तै. सं २.२.२१)त्या याद्युदात्तेन्द्रशत्रुपदप्रयोगेणेन्द्रो यस्य शत्रुरिति बहुव्रीह्यर्थसम्पत्तेस्त्वष्टुः पुत्रस्य वृत्रस्येन्द्रः शातयिता हिंसितो जात इत्याद्युदात्तत्वलक्षणस्वरदोषेण वृत्रशत्रोरिन्द्रस्योद्यत्वादिन्द्रवधसमर्थपुत्रोत्पादनार्थं यागं कुर्वाणस्य त्वष्टुर्यजमानस्याभिप्रेतार्थासिद्धिलक्षणा हिंसा जातेति स्वरापराधलक्षणमन्त्रविनाशनिमित्तयजमानगामिदोषोदाहरणं कृतमित्यर्थः । इन्द्रशत्रुरिति मन्त्रपदं स्वरापराधात् यथा यजमानं हिनस्तीत्युदाहरणार्थः । तस्मादिन्द्रस्य शत्रुर्भूत्वा वर्द्धस्वेति तत्पुरुषार्थविवक्षायां मन्त्रोदाहृतमिदं प्रयोज्यमित्याशयः ।

यश्च नाम भाष्यकृता—

'यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥'

इति श्लोकमुपन्यस्य, तस्मादविज्ञातमनर्थकमाधिगीष्महीत्यध्येयं व्याकरणमिति वेदाध्ययनसाध्यं वेदार्थज्ञानं व्याकरणप्रयोजनत्वेनोक्तम् । तद्व्याकरणप्रयोजनत्वेनाभासमानमप्यन्यतः सिद्धेर्न व्याकरणप्रयोजनमित्याह—यत्त्विति । अध्ययनविधेर्दृष्टार्थत्वाभिधानान्मीमांसाप्रयोजनत्वेनैतद्युक्तं भवतीत्याशयः । ननु मीमांसावद्व्याकरणमपि वेदार्थज्ञानसाधनं भविष्यतीत्याशङ्क्याह—नन्विति । शब्दानुशासनार्थत्वेनार्थपरत्वाभावः सूत्रावयवयोजनया सूचितः । नन्वर्थविशेषविषयशब्दानुशासननान्तरीयकत्वेनार्थानुशासनमपि सेत्स्यतीति, स्वयमेवाशङ्क्योत्तरं सूत्रावयवं परिहारे योजयति—शब्देति । नन्वर्थगतसन्देहविपर्ययनिरासमात्रस्य मीमांसासाध्यत्वाद्वेदार्थस्वरूपज्ञानं व्याकरणाद्भविष्यतीत्याशङ्कां निरस्यन्नुपसंहरति - तस्मादिति ।

यच्च—

'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति फलं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥'

इति श्लोकेन शब्दव्यवहारकालेऽर्थविशेषे सम्यक्शब्दप्रयोगस्य पारलौकिकफलप्राप्तिहेतुत्वाभिधानात्तत्सिद्धिर्व्याकरणस्य प्रयोजनमिति भाष्यकृतोक्तम् । तदप्यन्यथा व्याख्यातुं शक्यत्वात्प्रयोजनाभासमित्याह—यस्त्विति । गुरुसम्प्रदायागते स्वरादिविशेषे कुशलः सन्वेदाध्ययनादिव्यवहारकाले वैदिकांश्शब्दान्प्रयुङ्क्त इति व्याख्येयमित्याशयः । ननु मन्त्रब्राह्मणेष्वपशब्दाभावात्तद्विषयत्वे दुष्यति चापशब्दैरित्ययुक्तं स्यादित्याशङ्क्याह—यथेति । कथं वैदिकशब्दविनाशविषयताऽस्याऽवसीयत इत्यपेक्षायामाह—स्वाध्यायेति ।

पौरुषेयत्वेनास्य प्रमाणान्तरावगतदोषानुवादत्वावसायादुदाहृतेन वचनेन यजनयाजनगत-वेदशब्दविनाशहेतुकदोषावगतेरादिशब्दाच्चेतिकरणसूचितेन च—

'हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुःसाममिर्दग्धो वियोनिमधिगच्छति ॥

इति स्मृत्यनुमितेन वचनेनाध्ययनाध्यापनगतवेदशब्दविनाशहेतुकदोषावगतेस्तद्विषयत्व-नियम इत्याशयः। यद्यप्येषामृगादिशब्दानामुपक्रमानुरोधेन वेदपरत्वं तृतीये वक्ष्यते। तथापि ऋग्वेदादिविहितमन्त्रविषयाया अध्यार्तेर्विनाशाख्यायाः पदार्थान्तरार्तिवत्सामान्य-शब्देनोपपादानादविरोधः ।

ननु प्रकृतिप्रत्ययरूपयोर्वाचोर्योगं सम्बन्धं वेत्तीति व्युत्पत्त्या वाग्योगविच्छब्देन वैयाकरणाभिधानात्तत्समभिव्याहारेणास्य वाक्यस्य व्याकरणानुगतानुगतशब्दप्रयोगविषय-तावगम्यत इत्याशङ्क्य त्रेधा परिहरति—वागिति । वाचः प्रतियोगितयाऽऽक्षिप्तेनाऽर्थेन यो वाचं वेत्तीति प्रथमे परिहारे निगमनिरुक्तादिकुशलो वाग्योगवित् । द्वितीये तु वाचो वचनस्य योगं पदार्थावयवविशेषरूपां व्यक्तिं ब्राह्मणवाक्येषु मन्त्रेषु च वाचो भासनस्य प्रकाशनस्य योग्यं योगमहं वेत्तीति मीमांसकोऽभिधीयते चोदितत्वेनावगतस्य स्वार्थत्वा-त्प्रकाशनार्हत्वम् अनूदितत्वेनावगतस्य परार्थत्वात्प्रकाशनानर्हत्वं वेत्तीति समासार्थः । निर्वापमन्त्रे त्वग्नेश्चोदितत्वेनानुष्ठानाय स्मर्त्तव्यत्वात्प्रकाशनार्हत्वम्, सवित्रादीनां वा चोदितत्वेन निर्वापकस्तुत्यर्थत्वात्प्रकाशनानर्हत्वं प्रसिद्धं विदेर्विचारणार्थत्वसूचनार्थं प्रकाशनानर्हत्वं प्रतियोगितयोक्तं वैयाकरणस्य वाग्योगवित्त्वासम्भवोपपादनायास्य पदस्यान्येनार्थेन प्रकृष्टो योगः स्वाभाविकसम्बन्धोऽस्य वचनस्यैवम्भूतपदान्वयरूपा व्यक्तिरस्य वा मन्त्रस्यायमर्थः प्रकाशनयोग्य इत्येवं विविधप्रयोगोत्पत्तिं प्रति व्याकरणस्याशास्त्रत्वा-दिति त्रेधा सूत्रावयवं तन्त्रेण योजयति—वैयाकरणस्येति ।

यच्च—

'अविद्वांसः प्रत्यभिवादे नाम्नो येन प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥'

इति श्लोकमुपन्यस्य स्त्रीवन्माभूमेत्यध्येयं व्याकरणमिति भाष्येण स्त्रीसाम्यपरिहारो व्याकरणप्रयोजनमित्युक्तम् । तदपि प्रयोजनाभासमित्याह—यदपीति ।

तत्प्लुतस्येति तच्छब्दोऽव्ययम् । यत्रेत्यर्थे तस्मिन् विषये तद्व्याकरणं प्लुतप्रयोगोत्पत्ति पूज्यशास्त्रप्लुतस्वरूपस्य लोकसिद्धत्वान्नामान्ते च प्लुतप्रयोगस्य मन्वाद्युपदिष्टत्वादित्यर्थः । 'ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्येतत्सूत्राधीनत्वं प्लुतस्वरूपज्ञानस्य ह्युपगम्य प्रकृतिप्रत्ययान्वा-ख्यानद्वा शब्दापशब्दविवेकार्थस्य नैकसूत्रमात्रसाध्यं प्रयोजनं युक्तमिति शब्देषु न व्यवस्था स्यादित्युत्तरसूत्रावयवयोजनया दर्शयति—न चेति । शब्दविषया व्यवस्था या व्याकरणेन क्रियते, सा न कर्त्तव्या स्यादित्येवं सूत्रावयवोऽनेन योजितः ।

यच्च विभक्तिं कुर्वन्तीत्युपक्रम्य याज्ञिकाः पठन्ति प्रयाजाः सविभक्तिकाः कर्तव्या इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुमिति भाष्येण विभक्तिज्ञानं व्याकरणप्रयोजनमुक्तम् । तदपि प्रयोजनाभासमित्याह—एवमिति । तदित्यव्ययं तत्रेत्यर्थे, तत्रापि व्याकरणमशास्त्रमित्यपिशब्दाध्याहारेण योज्यम् । कस्मादित्यपेक्षिते सौत्रं प्रयोगोत्पत्तिपदं समासान्निष्कृष्य हेत्वर्थत्वेन त्रिविधोपपत्तिपूर्वकं याज्ञिकेत्यादिना योजितम् । समिधः समिधोऽग्न आज्यस्य व्यन्तु,तनूनपादग्निमग्न आज्यस्य वेतु, इडोऽग्निमग्न आज्यस्य व्यन्तु, बर्हिरग्निरग्न आज्यस्य वेत्विति याज्ञिकदोषोद्देशेन सम्बुद्धिद्वितीयातृतीयाप्रथमानां विभक्तीनां प्रयाजेषु सिद्धत्वात् छान्दोग्यब्राह्मणे च षडहविभक्तिर्नानारूपेत्युपक्रम्याग्न इति प्रथमस्याग्नेः रूपम् अग्निमिति द्वितीयस्य, अग्निनेति तृतीयस्य अग्नेरिति, चतुर्थस्य अग्नेरिति पञ्चमस्याग्नेः इति षष्ठस्येति परस्परविभक्तसम्बुद्धिद्वितीयतृतीयाप्रथमाषष्ठीसम्बुद्ध्याख्यविभक्तिप्रयोगदर्शनान्मन्त्रेषु चाग्निर्वृत्राणीत्यादिषु विभक्तविभक्तिप्रयोगदर्शनाभावेऽपि वा सिद्धशब्दानुक्रमाख्यवैभक्तिकग्रन्थमात्रालोचनेनापि विभक्तिप्रयोगसिद्धेरित्यर्थः ।

यच्च 'यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति, स आर्त्विजीनो भवतीति श्रुतिमुपन्यस्यार्त्विजीनाः स्यामेत्यध्येयं व्याकरणमिति भाष्येणार्त्विज्यार्हत्वं व्याकरणप्रयोजनमुक्तम् । तद् गुरुसम्प्रदायसिद्धत्वाद् व्याकरणप्रयोजनत्वं योग्यमेव न भवतीत्याह—यो इमामिति ।

चत्वारि शृङ्गेत्यृचं महाभाष्यकृता पूर्वोपन्यस्तामपि मन्त्राधिकरणेऽन्यविषयत्वेन व्याख्यातत्वादुपेक्ष्य, अपर आहेत्युपक्रम्य ।

चत्वारि वाक्परिमिता पदानि ।
तानि विदुर्ब्राह्मणा ये मनीषिणः ॥
गुहा त्रीणि निहिता नेङ्गयन्ति ।
तुरीयं वाचो मनुष्या वदन्ति ॥

इत्यृचमुपक्रम्य चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेति भाष्येण ये ब्राह्मणास्तानि विदुस्ते मनीषिण इत्यर्थाश्रयणेन पदचतुष्टयज्ञानसाध्यं मनीषित्वं व्याकरणप्रयोजनमुक्तम् । तत् अस्या ऋचोऽन्यपरत्वादप्रमाणकमित्याह–तथेति । निरुक्ते यान्योङ्कारो भूर्भुवः स्वरिति महाव्याहृतित्रयं वेति चतुष्टयम् । आदिशब्दाद्वेदचतुष्टयम्, मृगपक्षिसरीसृपमनुष्याः वाक्चतुष्टयमनपायिनी पश्यन्ती मध्यमा वैखरीति सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलरूपावस्थाभेदभिन्नवाक्चतुष्टयमिति चतुष्टयबाहुल्यरूपप्रयोजनानुसारेण चत्वारि पदजातानि प्रपञ्चितानि । तत्र व्याकरणस्य व्यापार इत्यर्थः । एतच्च पदनिर्वचनसामर्थ्येऽपि, तद्विषये संचार्यसंख्यामात्रसामान्यादुक्तम्, न प्रामाणिकमित्यर्थः । अप्यक्षरेति निरुक्तकारवचनोपन्यासेन सूचितम् । ननु वैयाकरणाभिमतं नामादिचतुष्टयमपि निरुक्तैरुक्तं तद्व्याकरणापेक्षं भविष्यतीत्याशङ्क्याह—यस्त्विति । परमार्थतस्तूत्तरार्द्धचंविरोधान्नैतद्विषयताप्यस्या ऋचः

सम्भवतीत्याह—एतद्विषयत्वे चेति। कस्तर्ह्यस्या ऋचः पारमार्थिकोऽर्थः पूर्वापरार्द्धयो-र्विरोधीत्यपेक्षायामाह—तस्मादिति। अस्मिन् व्याख्याने वागिति पदं षष्ठ्यन्तत्वेन विपरिणमयितव्यं प्रवो देवायाग्नय इति शंसतीति प्रतीकविधिप्रभवमवयवान्तरानुमानम्। विश्वजिता यजेतेत्यत्राव्यक्तचोदनात्वरूपप्राकृतवाक्यसारूप्यसम्भवं ज्योतिष्टोमवदिति पदोपमानम्, विधिप्रत्ययावगतफलव्यतिरेकेणानुपपद्यमानयागकर्त्तव्यत्वप्रभवा स्वर्गकामपद-कल्पिकार्थापत्तिः। दर्शनेन्द्रियग्रामस्येत्यत्र सारूप्याभावेऽपि सन्निधानमात्रेणाग्निहोत्रवदिति पदोपमानसूचनायादिशब्दः। ननु प्रमाणषट्कस्य प्रथमपादे व्युत्पादितत्वाच्चतुष्ट्वं प्रमाणानां न युक्तमित्याशङ्क्याह—षडिति। अनोद्धारे कारणमाह—अभावस्तावदिति। न चैरं कृत्वोद्गेयमित्यागमाद्यज्ञायज्ञीयस्यैरापदवत्त्वावगतेरागमस्याप्यागमप्रामाण्यमस्तीत्याशङ्क्याह-प्रत्यक्षेति। स्वरूपोपादानेनात्र प्रत्यक्षत्वसम्भवान्नागमगम्यतेत्याशयः।

ननु नामादिपदचतुष्टयविषयत्वे भाष्यकृता पूर्वं—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥

इतीयमृगुपन्यस्ता सा किमित्यपेक्षितेत्याशङ्क्याह-चत्वारीति। ननु भाष्यकृता चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च, त्रयो अस्य पादा भूतभविष्यद् वर्त्तमानाः, द्वे शीर्षे शब्दात्मानौ, नित्यः कार्यश्चेति, सप्त हस्तासो अस्य सप्त विभक्तयः। त्रिधा बद्धो वृषभो रोरवीति त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसीति, वृषभो वर्षणात् रोरवीति शब्दं करोति महोदेवो मर्त्यां आविवेश महान्देवः शब्दः मर्त्यान्मरणधर्माणो मनुष्यानाविवेशेति व्याख्याय, महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणमिति भाष्येण शब्दब्रह्मसाम्यं व्याकरणप्रयोजनमुक्तम्। का तत्रानुपपत्तिरित्याशङ्क्याह—यत्त्विति। विनियोगनिरपेक्षं मन्त्रस्यार्थतात्पर्यावधारणमशक्यमित्याशयः। संख्यासामान्य-मात्रेण च विनियोगनिरपेक्षमन्त्रयोजनायां वैशेषिकादिष्वपि तन्त्रेषु योजयितुं शक्यत्वाद-व्यवस्था स्यादित्याह—तादृशं चेति। पार्थिवाप्यतैजसवायवीयान्यवयविद्रव्याणि चत्वारि शृङ्गाणि। त्रयो अस्य लोकस्य पादा महत् कार्यारम्भकाणि द्व्यणुकानि। द्वे शीर्षे प्रधाना-प्रधानपुरुषौ सप्त हस्ता द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षड्भावरूपाः। सप्तमश्चा-भावः त्रिधा बद्धः समवाय्यसमवायिनिमित्तकारणैर्बद्धः। वृषभो भोगहेतुः रोरवीति शब्दवान्महो देवो द्योतनात् मर्त्यानाविवेश मर्त्यैर्भोग्य इत्येवमादियोजनोपपत्तेरतिप्रसक्तिः स्यादित्याशयः।

यच्च भाष्यकृता—

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा॥

इत्यृचमुपन्यस्याप्येकः पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोत्येनामिति पूर्वार्द्धं चम-विद्वांसमाहार्धमिति भाष्येणाविद्वांसमर्धं पूर्वार्द्धं वा वदतीत्यभिधानादवेदार्थविद्विषयत्वेन

व्याख्याय, उतो त्वस्मै तन्वं विसस्रे तनु विवृणुते। जायेव पत्य उशती सुवासाः तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग्वाग्विदे स्वमात्मानं विवृणुत इत्युत्तरार्द्धं व्याख्याय, वाङ् नो विवृणुयादित्यध्येयं व्याकरणमिति भाष्येण वाक्प्रकाशनं व्याकरणप्रयोजनमुक्तम्। तद् अन्यतः सिद्धेः प्रयोजनाभासमित्याह—उतत्व इति।

यत्तु भाष्यकृता—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

इत्यृचमुपन्यस्य सक्तुः सचतेर्दुर्द्धावो भवति, कसतेर्वा विपरीताद्विकसितो भवतीति तितउ परिपवनं ततवद्वा तुन्नवद्वा धीरा ध्यानवन्तः मनसा प्रज्ञानेन वाचमकृषत अत्र सखायः सन्तः सख्यानि जानते क्व एष दुर्गो मार्गः एकगम्यो वाग्विषयः। के पुनस्ते? वैयाकरणाः। कुतः एतद् भद्रैषां लक्ष्मीर्निहिताधिवाचि भद्रा ह्येषां लक्ष्मीर्निहिता भवति। क्व अधिवाचि लक्ष्मीलंक्षणाल्लाञ्छनाद्वा परिवृढा भवतीति व्याख्यानेन लक्ष्मीनिधानं व्याकरणप्रयोजनमुक्तम्। तद् गुरुसम्प्रदायसिद्धत्वात् व्याकरणप्रयोजनत्वयोग्यं न भवतीत्याह—एवमिति।

यच्च सारस्वतीमित्युपक्रम्य याज्ञिकाः पठन्त्याहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति श्रुतिमुपन्यस्य प्रायश्चित्तीया माभूमेत्यध्येयं व्याकरणमिति भाष्येण प्रायश्चित्ताभाजनत्वं व्याकरणप्रयोजनमुक्तम्। तदपि वैदिकशब्दविनाशविषयत्वात् व्याकरणप्रयोजनत्वयोग्यं न भवतीत्याह—आहिताग्निरिति।

यच्च दशम्यां पुत्रस्येत्युपक्रम्य याज्ञिकाः पठन्ति 'दशम्युत्तरकालं पुत्रस्य जातस्य पिता नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि सुप्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा कृतं कुर्यान्न तद्धितमिति' न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुमिति भाष्येण पुत्रनामज्ञानं व्याकरणप्रयोजनमुक्तम्। तद अन्यतः सिद्धेः प्रयोजनाभासमित्याह—यदपीति। घोषवन्तो वर्गतृतीयाद्या वर्णा आदौ यस्य, तदन्तरं तस्य घोषवदादेरन्तरस्थस्य द्विचतुरादिवर्णस्य कृदन्तस्य नाम्नः परिग्रहः तद्धितस्य वर्ज्जनं वा तयोर्यन्नामकरणे वचनम्। तत्र न व्याकरणं नामप्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयमिति। तत्कृत्तद्धितसञ्ज्ञयोरिति तदित्यव्ययं लुप्तसप्तमीकमङ्गीकृत्य योज्यं तदुपपादनार्थं कृत्तद्धितसञ्ज्ञयोरित्याद्युक्तम्।

यच्च भाष्यकृता—

सुदेवो असि वरुण यस्य ते सप्तसिन्धवः।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

इत्यृचमुपन्यस्य, सुदेवो असि वरुण सत्यदेवो यस्य ते सप्तसिन्धवः, सप्तविभक्तयः अनुक्षरन्ति काकुदं तालुं काकुर्जिह्वा सास्मिन्नुद्यत इति काकुदं सूर्म्यं सुषिरामिव तद्यथा

सूर्य्यं सुषिरागग्निरनुप्रविश्य तदन्तर्गतं मलमपहन्ति एवं सप्तसिन्धवः ताल्वनुक्षरन्ति तेनासि सत्यदेव इति व्याख्याय, सत्यदेवाः स्यामेत्यध्येयं व्याकरणमिति भाष्येण सत्यदेवत्वप्राप्तिर्व्याकरणप्रयोजनमुक्तम् । तत्रास्या ऋचः सङ्ख्यासामान्यमात्रेण विभक्तिविषयत्वमभ्युपगम्याप्यन्यतः सिद्धत्वान्नातीव व्याकरणापेक्षेति तावदाह—सुदेव इति । परमार्थंतस्तु सिन्धुशब्दस्य नदीवाचित्वेन प्रसिद्धत्वान्नद्य एवात्र सप्त विवक्षिताः । अथापि वरुणशब्देन यज्ञमृत्विजं यजमानं वाऽभिप्रेत्य तत्प्रशंसापरेयमृगिष्यते, तथापि होत्रीयाप्रशास्त्रीयाब्राह्मणाच्छंसीयापोत्रीयानेष्ट्रीयाच्छावाकीयाग्नीध्रीयाख्यहोत्रागताः सप्तवाचः, षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाख्यसामस्वरगतां वा प्रस्तावप्रणवोद्गीथहिङ्कारप्रतिहारोपद्रवनिधाख्यसाममक्तिगता वा वाचः सप्तेत्यन्यपरत्वात् व्याकरणप्रयोजनत्वं निष्प्रमाणकमित्याह —यदा पुनरिति । नदीनामैतिहासिकगोचरापन्नत्वादितरासां याज्ञिकगोचरापन्नत्वादित्यर्थः ।

एवं महाभाष्योक्तमुख्यानुषङ्गिकप्रयोजननिराकरणेन न चाश्रितप्रतिपदपाठानां वैदिकानां लक्षणेन कार्यमित्यादिग्रन्थोक्ते व्याकरणस्य निष्प्रयोजनत्वे समर्थिते, यदि कश्चित्तस्मादव्याकृता वागुद्यत इति श्रुतिपर्यालोचनेन व्याकरणसंस्कृतानां शब्दानामदृष्टसाधनत्वलक्षणसाधुत्वावगमात्साधुत्वसिद्धिर्व्याकरणप्रयोजनं वदेत्तं प्रत्याह—संस्कृतानां चेति । श्लोकं व्याचष्टे—व्याकरणेनेति । शब्दत्ववर्णत्वतद्व्यक्तितत्समुदायावयविस्फोटगोशब्दत्वक्रमग्रहणोच्चारणतत्साधनपुरुषाणां मध्ये किं वस्त्विति कस्येत्यस्य व्याख्या ।

उत्पत्त्यादीनां चतुर्णां मध्ये कः संस्कार इति को वेत्यस्य । शब्दत्ववर्णत्वजातिव्यक्तिपक्षेषु तावद्दोषमाह—न तावदिति । जातिपक्षे तावदुभयत्र प्रसङ्गं विवृणोति—शब्दत्व इति । वर्णव्यक्तीनां तु संस्कारः प्रत्येकं वा स्यात् समुदितानां वा । तत्र प्रत्येकपक्षेऽतिप्रसङ्गं विवृणोति —एतेनेति । समुदायाभावात् समुदितानामपि संस्कारो न भवतीत्याह —समुदायस्त्विति । किं च नित्यानां वर्णव्यक्तीनां संस्कारः स्यादनित्यानां वा । तत्रानित्यपक्षे तावद्विनष्टानुत्पन्नानामसंस्कार्यत्वादुत्पन्नानामपि संस्कारक्षणं यावदवस्थानान्न संस्कारः सम्भवतीत्याह येषां तावदिति । संस्कारक्षणं यावदवस्थानाभ्युपगमेऽपि व्यवहारकाले विनष्टत्वेन कार्यानुपयोगित्वात्संस्कारो न तु युक्त इत्याह—न चेति । एतदेव विवृणोति —यथैवेति ।

ननु भाष्यकृता किं पुनर्नित्यः शब्दः आहोस्वित्कार्यं इति पृष्ट्वा सङ्ग्रह एतत्प्राधान्येन परीक्ष्यते नित्यो वा स्यात्कार्यो वेति भाष्येण सङ्ग्रहाख्ये वार्त्तिककारकृते ग्रन्थान्तरे तात्पर्येणैतद्विचार्यते, नात्र तेन विचारेण प्रयोजनमित्युत्तरे दत्ते, कथं तर्ह्यत्र लक्षणप्रवृत्तिरित्याशङ्क्य, यद्यपि नित्योऽथापि कार्यं उभयथापि लक्षणं प्रवर्त्त्यमित्युक्त्वा कथमनित्यपक्षे संस्कारानुपपत्तिरित्याशङ्क्याह—ततश्चेति ।

अत्यन्तविरुद्धत्वाच्च नित्यानित्यत्वयोरनियमाभिधानं न युक्तमित्याह —अदूरेति । कार्यत्वे च शब्दस्योत्पत्तिलक्षणः संस्कारः स्यात्तत्र च नित्यस्य वेदस्यानित्यशब्दव्युत्पत्ति-

विषयत्वायोगेन व्याकरणस्य वेदमूलत्वासम्भादनित्यशब्दोपयुक्तत्वेन च नित्यवेदाङ्गत्वाभावादुभयविधमपि शास्त्रत्वं हीयेतेत्याह—**उत्पादश्चैवेति**। श्लोकं व्याचष्टे—**व्याकरणेति**। वेदोत्पादकत्वेन तु व्याकरणस्य वेदाङ्गत्वे वेदोऽप्यप्रमाणं स्यादित्याह—**अथेति**। कार्यत्वे च शब्दस्य संस्कारोऽशक्योऽनर्थकश्चेति दोषद्वयं पूर्वोक्तमप्यनियमनिरासायाह—**शब्दश्चेति**। नित्यत्वे तु शब्दस्य विक्रियाख्योऽपि शब्दादुत्पत्त्याख्यश्च तावत्संस्कारो न सम्भवतीत्याह - **तस्मादिति**। न च ज्ञानरूपप्राप्तिलक्षणः संस्कारः शब्दस्य व्याकरणेन क्रियते, श्रोत्रजन्मत्वात्तस्येत्याह—**विनेति**। अविहितत्वाच्च व्याकरणस्य नापूर्वसाधनसामर्थ्याधानलक्षणसंस्कारार्थता युक्तेत्याह—**अदृष्टार्थस्त्विति**। शब्दानां च दृष्टार्थत्वेनापूर्वसाधनत्वाभावान्न तत्सामर्थ्याधानलक्षणेन संस्कारेण प्रयोजनमस्तीत्याह—**दृष्टार्थेषु चेति**।

ननु लोकव्यवहारार्थानां शब्दानां दृष्टार्थत्वात्संस्कार्यत्वायोगेऽपि, क्रत्वर्थानां व्रीहियववन्नियमापूर्वार्थत्वात् संस्कार्यत्वं भविष्यतीत्याशङ्क्याह—**कर्मेति**। किं च व्याकरणक्रियायाः पौरुषेयग्रन्थाधीनत्वेऽनादिविधिविषयतैव न युज्यते। प्रकरणाम्नानं दूरनिरस्तमित्याह—**हन्त्याबीति**। ननु 'तस्मादेषा व्याकृता वागुद्यत' इत्यानारभ्याधीतः प्रत्यक्षो विधिः कथमपह्नूयत इत्याशङ्क्याह **तेनेति**। नित्यानित्यसंयोगविरोधप्रसङ्गान्नास्यैतत्परतास्तीति प्रागेवोक्तमित्याशयः। व्याकरणक्रियाविधेयत्वाभ्युपगमेऽपि प्रकरणाभावेन क्रत्वर्थत्वाभावान्न क्रत्वर्थशब्दसंस्कारत्वं युक्तमित्याह—**अनारभ्येति**। नन्वनारभ्याधीतस्यापि खादिरादेर्दर्शपूर्णमासार्थता दृष्टेत्याशङ्क्याह **ऐकान्तिकम् हीति**।

ननु यथाफलकल्पनालाघवायाऽश्वप्रतिग्रहेष्टौ वैदिकाश्वदानविषयत्वं तृतीये वक्ष्यते, तथेहापि वैदिकशब्दविषयत्वं व्याकरणक्रियाया भविष्यतीत्याशङ्क्याह—**लोकेति**। लौकिकवैदिकशब्दानां भेदस्य निराकरिष्यमाणत्वान्न संस्कार्यासंस्कार्यव्यवस्था युक्तेत्याशयः। उपसंहरति—**अत इति**। किं च श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः प्रयोगेणाभिलक्षित: आकाशदेशः शब्द इति वदद्भिर्वैयाकरणैः शब्दस्याकाशाश्रितत्वाभ्युपगमान्नित्याश्च शब्दा इति च नित्यत्वाभ्युपगमादमूर्त्तत्वाच्चाकाशाश्रितविभुत्वदृष्टान्तेन संस्कार्यत्वं वारणीयमित्याह—**आकाश इति**। विभुत्वस्य ज्ञानविषयत्वलक्षणप्राप्तिसम्भवेऽपि गां दोग्धीत्यादौ स्वरूपप्राप्तेः संस्कारत्वेन प्रसिद्धायाः वारणीयत्वेनात्रेष्टत्वान्न साध्यविकलत्वम्। अइउणित्यादिचतुर्दशसूत्रात्कृताणादिसंज्ञात्मकप्रत्याहारमात्रेण वर्णव्यक्तिसंस्कारसिद्धेः शेषग्रन्थानर्थक्यं स्यादित्याह—**वर्णेति**। जातिव्यक्तिसंस्कारपक्षौ दूषयित्वा, समुदायसंस्कापक्षं दूषयति—**समुदायस्त्विति**।

नन्वनेकेषां गकारौकारविसर्जनीयानामेकगोशब्दबुद्धिविषयत्वलक्षणः समुदायो लोकसिद्धत्वान्नापह्नवमर्हतीत्याशङ्क्याह—**प्रत्येकं चेति**। तथा नवमे हिरण्यशकलसहस्ते णाग्नि प्रोक्षतीत्यग्निबुद्धिविषयभूतानामिष्टकानां धर्म्मः प्रोक्षणादिः प्रतीष्टकमावर्त्तनीय

इति पूर्वपक्षे, वक्ष्यते, तथाऽत्रापि गकारादिवर्णसमुदायसंस्कारपक्षे प्रतिवर्णं संस्कारावृत्तिः प्रसज्येतेत्यर्थः ।

ननु पूर्वपक्षस्यास्थायित्वान्न दृष्टान्तता युक्तेत्याशङ्क्याह --न चेति । अयमाशयः—इष्टकाव्यतिरिक्तावयव्यभावेनाग्निशब्दस्येष्टकासमुदायमात्रवाचित्वात्समुदायसंस्कारत्वाभ्युपगमेन पूर्वपक्षिते, स्थण्डिलाख्यस्यावयविनोऽग्निशब्दवाच्यस्येष्टकाभिरारम्भोपपादनेन संस्कार्यद्रव्यैक्यात्संस्कारानावृत्तिरिति पूर्वपक्षन्यायानुपमर्देन सिद्धान्तकरणाद् युक्तं दृष्टान्तत्वम् । न चात्र गकारादिभिः एको गोशब्दाऽवयव्यारभ्यते, येनाग्निधर्म्मसिद्धान्तन्यायो न स्यात् ।

'विच्छिन्नयत्नव्यङ्ग्यैश्चं नित्यैः सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥'

इति श्लोकेन स्फोटवादे निराकृतत्वादिति स्फोट-गोशब्द-गत्वानामप्यवयविवन्निराकृतत्वान्न संस्कार्यत्वं सम्भवतीत्याह स्फोटेति । समुदायसंस्कारपक्षे च सर्ववर्णसमुदायो वा संस्क्रियेत, कतिपयवर्णसमुदायो वा तत्राद्ये पक्षे सर्ववर्णसमुदायस्यार्थाभावादर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इति वार्त्तिकमयुक्तं स्यादित्याह—सर्वेति । कतिपयवर्णसंस्कारपक्षेऽपि केचिदेव वर्णाः संस्क्रियन्ते, नान्य इति व्यवस्थाहेत्वभावेन स्वरूपतः कतिपयत्वायोगात्कतिचिदेवं संस्क्रियन्त इति संख्यातः कतिपयत्वं वाच्यम् । तत्र संख्यां विना वर्णानामसंस्कार्यत्वेनान्वयव्यतिरेकाभ्यां वर्णसंख्यायाः संस्कार्यत्वात्साधुत्वं स्यात् । तच्च गाव्यादिपदेषु अपि समानमित्याह---अथेति । गवादिपदगतेव वर्णसंख्या संस्कार्या, न गाव्यादिपदगतेति व्यवस्थाशङ्कानिरासार्थम्—पदे पदइत्युक्तम् ।

क्रमसंस्कारपक्षं दूषयति संस्क्रियेतेति । शब्दधर्मत्वाभावेन तत्संस्कारेऽपि शब्दस्य साधुत्वं न सिध्यतीत्युक्तम् । ग्रहणोच्चारणद्वारौपचारिकशब्दधर्मत्वाभ्युपगमेऽपि गाव्यादिष्वप्यानुपूर्व्याः सम्भवात्साधुत्वं प्रसज्येतेत्यर्थः । ग्रहणोच्चारणसंस्कारपक्षौ दूषयति—ग्रहणेति । कुतोऽवसितादित्यपेक्षायामाह —वक्ष्यति हीति । यथाभिक्रामं जुहोतीत्यभिक्रमणस्य होमसाधनत्वासम्भवोऽभिक्रमाधिकरणपूर्वपक्षे वक्ष्यते । तथा ग्रहणमुच्चारणं वा प्रतिव्याकरणक्रियायाः साधनत्वं न भवतीत्यर्थः । ननु साक्षात्साधनत्वाभावेऽपि, यथाभिक्रमणस्य कर्तृप्रत्यासत्तिजननद्वारा होमसाधनत्वं सिद्धान्ते वक्ष्यते, तथोच्चारणसाधनताल्वादिसंस्कारद्वारोच्चारणसाधनत्वं ग्रहणसाधनश्रोत्रसंस्कारद्वारा वा ग्रहणसाधनत्वं व्याक्रियाया भविष्यतीत्याशङ्क्याह--ताल्वादीति । अस्तु तर्ह्युच्चारयितुः पुरुषस्य संस्कारद्वारा तन्मनःसंस्कारद्वारा वोच्चारणसाधनत्वं ग्रहीतृपुरुषसंस्कारद्वारा, तन्मनःसंस्कारद्वारा वा ग्रहणसाधनत्वमिति स्वयमेवाशङ्क्याह - मनो वेति । यच्छास्त्रारम्भे भाष्यकृता 'अथ शब्दानुशासनमित्युक्त्वा अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यमिति स्वयमेव व्याख्यातम् तद्व्यर्थं स्यादित्यर्थः । इतश्च शब्दानुशासनं व्यर्थमित्याह—शिष्येति ।

किं च वैयाकरणैः स्फोटात्मकः शब्दोऽभ्युपगतः। तस्य च निरवयवत्वात्प्रकृतिप्रत्ययान्वाख्यानरूपः संस्कारो न युक्त इत्याह—स्फोटेति। स्फोटपक्षे न केवलं वर्णा एवासन्तः किं तु प्रकृतिप्रत्ययावपीत्यर्थः वाक्यस्फोटापेक्षायां च स्वरूपेणापि पदस्फोटस्यासत्त्वात्संस्कार्यत्वं न युक्तमित्याह—वाक्येति।

नन्वसतामेव नामादीनां निष्कृष्य कल्पनया संस्कारो भविष्यतीत्याशङ्क्याह—अपोद्धारेणेति। कल्पनाप्यसतो न सम्भवतीत्याशयः। ननु निरवयवोऽपि पदस्फोटस्तत्तद्ध्वनिसहकृतश्रोत्रवशात्पूर्वं गकारादिरूपेण प्रतीयते, ततस्तदाकारमिथ्याज्ञानसहकृतेन श्रोत्रेण गौरित्येकं पदमिति स्फुटं पदतत्त्वज्ञानम्, रत्नतत्त्वपरीक्षायामिवानेकमिथ्याज्ञानसहकृतेन चक्षुषा स्फुटा रत्नतत्त्वप्रतीतिः। एवं वाक्यस्फोटोऽपि पूर्वं गोपदाकारेण शुक्लपदाकारेण च प्रतीयते। ततः पदाकारमिथ्याज्ञानसहकृतेन श्रोत्रेण गौः शुक्ल इत्येकं वाक्यमिति स्वरूपेण वाक्यस्फोटः प्रतीयते। ततश्च ध्वनयो यत्स्थानकरणवशादेकस्मिन्पदस्फोटे वाक्यस्फोटे वा यद्वार्णाकारम्, यत्पदाकारं वा ज्ञानं जनयन्ति, पदवाक्यस्फोटान्तरेऽपि तत्स्थानकरणवशात्तद्वर्णाकारम्, तत्पदाकारं वा ज्ञानं जनयन्तः सादृश्यनिमित्तभ्रान्तिवशात्स एवायं वर्णः। तदेवेदं पदमिति प्रत्यभिज्ञानं जनयन्तीत्यन्योऽन्यविलक्षणेषु गौः शुक्लो गौः कृष्ण इत्यादिषु सादृश्याध्यवसितैकत्वानां नामादीनामपोद्धारो भविष्यतीत्याशङ्क्याह—अन्येति। अन्यस्य वाक्यस्फोटस्यावयवानामन्यस्य वाक्यस्फोटस्यावयवैः सारूप्यादित्यर्थः। सादृश्यमप्यसतो न सम्भवतीत्याशयः।

ननु—गवये नरसिंहे वाप्येकज्ञानादृते यथा।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते॥'

इत्यादिस्फोटवादिभिरसतामप्यवयवानां सादृश्यसम्भवे निदर्शनमुक्तम्। तत्कथमसत्त्वे सादृश्यानुपपत्तिरित्याशङ्क्याह—गवयादिष्विति। लेख्यादिकृतेषु गवयादिषु येऽवयवाः तेषां मुख्यगवयादिगतैः कर्णखुरादिभिरवयवैः सारूप्यं यन्निदर्शितम्, तत् तेषां सत्यत्वात्स्वावयवसामान्ययोगाच्चोपपन्नम्, तथा इहापि वाक्यस्फोटे तथात्वे अवयवानां सत्यत्वे स्वावयवसामान्ययोगे च सति सारूप्यं स्यात्। ततश्च निरवयवस्फोटसिद्धान्तहानिरित्याशयः। विस्तरेण चैतत्पूर्वं निरस्तमित्याह—वाक्येति। उपसंहरति—तेनेति। नामादीनामपोद्धारेण प्रकृतिप्रत्ययान्वाख्यानरूपस्य संस्कारस्य कल्पनेत्यर्थः। अप्रामाण्यापत्तेश्चासतामपोद्धारो न युक्त इत्याह—अन्वाचक्षीतेति।

यच्च शब्दानुशासकत्वेन शास्त्रत्वं व्याकरणस्योक्तम्, तत्पदविषयं वा स्यात्, वाक्यविषयं वा। तत्रासत्यत्वेन पदानामनुशास्यत्वाद्वाक्यानुशासनस्य च व्याकरणेनाकृतत्वान्नोभयथापि युक्तमित्याह—अशिष्यत्वाविति। युक्तं तु वाक्यस्यैवानुशासनं लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इति वार्त्तिककृतार्थप्रयुक्तानां शब्दानामनुशास्यत्वाभिधानाद्वाक्यस्यैव चार्थप्रयुक्तत्वेनेष्टत्वादित्याह—अर्थेनेति।

ननु सूत्रकारादिभिः पदपदार्थानामनिराकरणात्कथमुच्यते, वाक्यमेवंविधं चेष्टमित्याशङ्क्य, टीकाकृतैवमुक्तमिति दर्शयितुमाह—ब्राह्मणार्थ इति। यथा ब्राह्मणशब्दे ब्रह्मशब्दार्थो नञर्थश्च णकारार्थ एव वा ज्ञानाख्योऽनिरूपाख्यश्च नास्ति। कम्बलशब्दे च कंशब्दार्थो बलशब्दार्थो वा नास्ति, तथा देवदत्तादयः शब्दा वाच्येऽनर्थकाः स्युरिति टीकाकारश्लोकार्थः।

एवमादिना ग्रन्थेन बहुप्रपञ्चमुक्त्वा पदानामर्थव्यभिचाराभिधानादव्यभिचारिणामपि केवलप्रयोगित्वेनार्थपरत्वनिराकरणाद्वाक्यान्वाख्यानार्थत्वेन व्याकरणव्याचिख्यासा टीकाकाराणामवसीयते। पश्चात्तु तदनाश्रयणात्पूर्वापरविरुद्धार्थाभिधानेनाप्रामाण्यं व्याकरणस्य सूचितं भवतीत्यर्थः।

सूत्रकृतो जनिकर्त्तुरित्यादिनिषिद्धसमासकरणात्पूर्वापरविरुद्धाभिधानं द्रष्टव्यमिति। सन्ति यदृच्छाशब्दा न सन्तीत्यादिवार्त्तिककृतः। आकृतिर्नित्या द्रव्यमनित्यम्। द्रव्यं नित्यमाकृतिरनित्येत्यादिभाष्यकृतः। सूत्रकारादिवदेव वाक्यान्वाख्यानानाश्रयणादिति वा योज्यम्। पूर्वपक्षमुपसंहरति - अत इति। आचार्याणां परस्परं विप्रतिपत्तेर्विगानभूयिष्ठत्वम्। स्वयमेव पूर्वापरविरुद्धाभिधानात् विरुद्धत्वम्। एकानेकमूलश्रुतिकल्पनायोगान्निर्मूलत्वम्। मुख्यामुख्यप्रयोजनासम्भवान्निष्फलत्वम्। सर्वैर्भाषितव्यमिति भाष्यात्कर्मस्वाध्यायकालवैदिकशब्दप्रयोगेऽप्यव्यवस्थाशङ्का कस्यचित्स्यात्तन्निवृत्त्यर्थमाह—ततश्चेति।

यस्तूपपादितमर्थं तार्किकत्वाभिमानी साधनप्रयोगमन्तरेण न बुध्यते, तं प्रति साधनप्रयोगा वक्ष्यन्त इत्याह—अत्रेति। सर्वेषामर्थप्रत्यायनशक्तत्वलक्षणे वाचकत्वे तावत्प्रयोगमाह—गावीति। गौणलाक्षणिकानामादिशब्दोपादानाशङ्कानिवृत्त्यर्थं प्रकृतग्राही सर्वशब्दः गोणीशब्दस्यावपनवाचित्वात्सिद्धसाध्यतामाशङ्क्य—गोत्वस्येत्युक्तम्। उस्रादिशब्दैरनैकान्तिकत्वं तत्र शब्देन निरस्तं गाव्यादिशब्दैर्वृद्धशब्देन अर्थप्रत्यायनाङ्गत्वलक्षणे साधुत्वे प्रयोगमाह—एवमिति। अत्रापि गोणीशब्दे सिद्धसाध्यतापरिहारार्थं गोत्वे साधुत्वमिति विशेषणीयं साधनशब्दोक्तस्य प्रत्यायकत्वस्य गाव्यादिशब्दैरनैकान्तिकत्वमाशङ्क्यार्थं यैव साधनादिति मध्यमपदलोपिसमासाभ्युपगमेन मूलशब्दोपस्थापननिरपेक्षार्थप्रत्यायकत्वरूपहेतुसूचनार्थोऽर्थशब्दः। अपभ्रंशरूपापशब्दत्वायोगाच्छब्दत्वाभावरूपमपशब्दत्वं गाव्यादीनां वाच्यमित्यापाद्य, तन्निराकरणे प्रयोगमाह—श्रोत्रत्वादीति।

अत्रापि प्रयोगद्वये दृष्टान्तः स एवेत्याह—पूर्वेति। अनादित्वे प्रयोगमाह—अनादित्वं चेति। अवध्यनवधारणस्य चिरन्तनकूपादिभिरनैकान्तिकत्वादवध्यभावावधारणादिति हेत्वर्थः। तत्सिद्ध्यर्थम्—वक्तुरित्युक्तम्। गवादिशब्दसम्बन्धे सर्वोऽप्यस्मात्प्रपद्यते। महत्तद्व्यवहारित्वादिति सम्बन्धानादित्वन्यायेन सर्वेभ्यो वक्तृभ्यः पूर्वं विद्यमानत्वादित्यर्थः। साधुभाषणस्यादृष्टार्थत्वात्प्रयोगमाह—साधुभिरिति। अत्रैव साध्ये हेतुदृष्टान्तान्तरमाह—अशास्त्रेति। बुद्धोक्तैश्च शब्दैरर्थाभिधानवदित्यर्थः। हेतुसिद्ध्यर्थं संस्कृतव्याकरण-

स्याशास्त्रत्वे प्रयोगमाह—शास्त्रं नेति । संस्कृतव्याकरणत्वमित्यध्याहारः । साक्षाच्छास्त्रत्वाभावेऽपि वेदमूलतया प्रमाण्यात्तद्विहितस्य साधुमापणस्याष्टकादिवददृष्टार्थत्वं भविष्यतीत्याशङ्क्य तदभावे प्रयोगमाह—वेदेति । वेदाङ्गत्वाभावे प्रयोगमाह—शास्त्राङ्गमपीति । हेतुसिद्ध्यर्थमतादर्थ्ये प्रयोगमाह—अतादर्थ्यमिति । कथादिरेव दृष्टान्तः । वेदानङ्गत्वेऽपि शब्दप्रयोगाङ्गत्वात्प्रयोगोत्पत्तिशास्त्रत्वं भविष्यतीत्याशङ्क्य, तदभावे प्रयोगमाह—न चेति । एतदेव व्याचष्टे—यथा हीति । अशास्त्रत्वादिसाधनस्य पूर्वपक्षोपयोगमाह—तस्मादिति । यदाचारेणैषां प्रयोज्यत्वमवगतम्, न तच्छास्त्रस्थैर्वारितमित्यर्थः ॥२४॥

भा० प्र०—एक शब्द का अनेक अर्थ मानना उचित नहीं है। इसका विवरण पूर्व सूत्र में दिया गया है। प्रस्तुत प्रसङ्ग में यह विचारणीय है कि अनेक शब्द एक अर्थ के वाचक हो सकते हैं या नहीं ? इस प्रसङ्ग में व्याकरणशास्त्र की उपेक्षा नहीं की जा सकती है, अतः यह विचारणीय है कि व्याकरण स्मृति है या नहीं ? और यह व्याकरण प्रमाण है या नहीं—इसी का विचार इस सूत्र के द्वारा जैमिनि ने किया है। एक ही अर्थ को कहने वाला गो, गावी, गोणी, गोपोतालिका आदि शब्द हैं, इन शब्दों में सभी शब्द गल कम्बल आदि विशिष्ट प्राणिविशेष अर्थ के बोधन में प्रमाण है या इनमें एक अर्थात् गो शब्द ही कथित अर्थ में प्रमाण है ? इस विषय का निर्णय करने के लिए प्रथम यह स्थिर करना होगा कि गो, गावी आदि शब्दों में क्या गो शब्द ही अनादि रूप में पूर्वोक्त अर्थ का वाचक है और अतिरिक्त उस शब्द का अपभ्रंश है या सभी शब्द अनादि हैं। इस प्रकार सन्देह होने पर पूर्वपक्षियों ने कहा है कि देश भेद एवं शिक्षित और अशिक्षित व्यक्तियों के भेद से गो, गावी आदि सभी शब्दों से सास्नादि-विशिष्ट प्राणिविशेष रूप अर्थ का बोध होता है, सभी शब्द उस अर्थ के वाचक हैं। किस समय से शब्द अर्थ का बोध करा रहे हैं इसका निश्चय न होने से ये सभी शब्द अनादि हैं। क्योंकि, इस समय जिस प्रकार गावी और गोणी शब्द से अर्थ विशेष का बोध हो रहा है, उसी प्रकार अतीत काल में भी इन शब्दों से इस अर्थ का बोध होता था, इसको न मानने का कोई कारण नहीं है। अतः गो शब्द के समान ही गावी आदि शब्द भी हैं, साधु भी हैं, कोई शब्द भी किसी शब्द का अपभ्रंश नहीं है। साधु और असाधु का निरूपण किसी प्रमाण से नहीं हो सकता है, अतः साधु और असाधु का भेद भी समीचीन नहीं है।

यदि यह कहा जाय कि व्याकरण के द्वारा साधु और असाधु अर्थात् शुद्ध और अपभ्रंश का निर्णय होगा ? इस कथन के प्रसङ्ग में यह कहना है कि व्याकरण का प्रामाण्य श्रुति के द्वारा बोधित नहीं है तथा व्याकरण सम्प्रदाय में सूत्रकार, वार्तिककार और भाष्यकार के कथन में साम्य या ऐक्य भी नहीं है। क्योंकि सूत्रकार पाणिनि के मत में सुशब्द निष्पत्ति ही व्याकरण का प्रयोजन है, वार्तिककार कात्यायन के मत में व्याकरण

संस्कृत पद ज्ञानपूर्वक यज्ञादि कर्मों का अनुष्ठान (प्रयोग) करने से ही पारलौकिक स्वर्ग आदि फल उससे होता है। और भाष्यकार पतञ्जलि के मत में व्याकरण से संस्कृत पदों के भलीभाँति=सम्यक् ज्ञान से ही चिन्मय भूमि की प्राप्ति होती है। इस प्रकार सूत्र, वार्तिक और भाष्य के सिद्धान्त में मतभेद है। अतः व्याकरण प्रमाण नहीं है। व्याकरण की मूलीभूत कोई श्रुति भी नहीं है, यह किसी कर्म का विधायक भी नहीं है, अतः इसको स्मृति भी नहीं कहा जा सकता है, अतः स्मृति के रूप में भी व्याकरण प्रमाण नहीं है, अतः गो, गावी, गोणी आदि सभी शब्द यज्ञादि स्थल में प्रयुक्त हो ही सकते हैं, इसमें कोई आपत्ति नहीं है।

प्रयोगोत्पत्त्यशास्त्रत्वात्=प्रयोग की उत्पत्ति की अर्थात् गो शब्द का ही प्रयोग करना चाहिए गावी आदि शब्दों का प्रयोग नहीं करना चाहिए - इस प्रकार साधु शब्दों के प्रयोग के नियम के विषय में कोई वेदवचन न होने से, 'शब्देषु न व्यवस्था'=साधु शब्द एवं अपभ्रंश शब्दों के प्रयोग की कोई व्यवस्था अर्थात् नियम नहीं हो सकता है ॥२४॥

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥ सि०

**शा० भा०—महता प्रयत्नेन शब्दमुच्चरन्ति—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्द्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति। तत्रापारध्येताप्युच्चारयिता। यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृदुपस्प्रक्ष्यामीति द्विरुपस्पृशति। ततोऽपराधात्प्रवृद्धा गाव्यादयो भवेयुर्न नियोगतोऽविच्छिन्नपारम्पर्या एवेति ॥ २५ ॥ सिद्धान्तः ॥**

भा० वि०—नियामकाभावात्सर्व एव साधवः सर्वे च प्रयोक्तव्या इति प्राप्ते प्रत्याह—**शब्द इति**। यदुक्तं सर्वेऽनादयइति नायं नियमः पुरुषापराधादन्यथापि शब्दाभिव्यक्तिसंभवादिति दर्शयितुं सूत्रं व्याचष्टे—**महतेति**। यदायं चेतनो विवक्षति, तदास्य महान् कार्यनिष्पादनक्षमः प्रयत्नो जायते। ततश्शब्दोच्चारणं मनःप्रेरणरूपं व्यापारं करोति। तेन च मनसाभिहतोऽग्निरौदर्यो मारुतं प्रेरयति, स चोत्थाय नाभेरूर्ध्वं गच्छन् उरसि बहुलावकाशे विस्तीर्णं कण्ठे च ल्पावकाशे विपरिवृत्तो भ्रमन् वेगवशान्मूर्धानमाहत्य परावृत्तो वक्त्रे ताल्वादिस्थानवर्ति विचरन् विशेषेण शब्दाभिव्यञ्जकरूपेण वर्तमानो विविधाञ्छब्दानभिव्यनक्तीत्यर्थः, तदनेन प्रयत्नाधीना शब्दाभिव्यक्तिरित्युक्तं भवति, ततः किमत आह—**तत्रेति**। यदि शब्दानां नित्याभिव्यक्तत्वम्, तदा न कस्यचिदपराधः, प्रयत्नाधीनायां तु तस्यां स्यादेव प्रयतमानस्यापराधः, यथा लङ्घनादिषु प्रयत्नसाध्येषु तद्वत इत्यर्थः, तत्र च शब्दे प्रयत्नेन निष्पत्तेर्दर्शनात् प्रयतमानस्यापराधभागित्वम्, ततः किं ? अत आह—**तत्रेति**। अपराधादिति। अपराधकरणत्वादिरूपादित्यर्थः

कथमपराधप्रवृत्तत्वसंभवः ? अर्थप्रत्ययान्यथानुपपत्त्यादिवाचकत्वनिश्चयादत आह—**न नियोगत इति ।** यत्रार्थप्रतिपत्तेरन्यथानुपपत्तिः, तत्र वाचकत्वनिश्चयः, इह तु वक्ष्यमाणन्यायेनान्यथोपपत्तेः न अनादिवाचकत्वकल्पना युक्तेति भावः । एवमपराधप्रवृत्तत्वसंभवप्रतिपादेन सर्वेषां साधुत्वनियमो निराकृतः; इदानीमेक एव साधुरितरेऽपभ्रंशा इति स्वपक्षे युक्तिमाह ॥ २५ ॥

**एवं प्राप्ते सिद्धान्तः**

त० वा०—अभिधीयते—

अनैकान्तिकता तावदर्थापत्तेरिहोच्यते ।
अन्यथाऽप्युपपन्नत्वात्प्रयोगार्थावबोधयोः ॥ ८३३
वाचकत्वादृते यस्तु न कथंचित्प्रयुज्यते ।
प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥ ८३४
संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये ।
इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥ ८३५

दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादातिभाराद्द्वारैकदेशावतारणार्थं संशयोत्थापनामात्रमेव तावद्युक्तम् ।

संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् ।
अपराधप्रसङ्गेन तत्रैषा संशयक्रिया ॥ ८३६

यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते, तादृगेव सर्वेण सर्वदोच्चार्येत । ततो वृद्धव्यवहारपरम्परायां सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधजस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वेषामनादित्वम् । 'प्रयत्ननिष्पत्तेरिति' पूर्वोक्तन्यायावधारितप्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते ।

अपर आह—अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यस्खलितप्रयत्नः शब्दमभिव्यनक्ति, तस्य परम्परागतशब्दोच्चारणमात्रात्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्पत्तिरपि शब्दे संभाव्यते तदा तत्रापराधजरूपान्तरापत्तिप्रसङ्गान्न नियोगतः सर्वशब्दानां समानविधानत्वम्[1] । अथ वा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिः तस्यामपराधः सुनिपुणानामप्यविकलकरणानां दृश्यते, किमुतानिपुणविगुणकरणानाम्—

यश्च प्रयत्ननिष्पत्तावपराधः कृतास्पदः ।
शब्दे स तदभिव्यङ्ग्ये प्रसजन्केन[2] वार्यते ॥ ८३७

---

१. क. (टिप्पण्यां) विषयत्वमिति पा० । २. क. प्रसजत्केन ।

अतश्चानपराधेन व्यज्यमानेषु साधुता ।
सापराधेष्वसाधुत्वं व्यवस्थैवं च तत्कृता ॥ ८३८

लोकेऽपि च –

अविनष्टे विनष्टे च दृश्येते साध्वसाधुते ।
तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः ॥ ८३९

**सत्यत्वं साधुत्वम् असत्यत्वमसाधुत्वमिति पक्षः**

यद्वा सत्यत्वमेवेदं साधुत्वमभिधीयते ।
असत्यवमसाधुत्वं धर्माधर्मोपयोगवत् ॥ ८४०

धर्माधर्मव्यवस्था हि सत्यानृतनिबन्धना ।
विहितप्रतिषिद्धत्वात्तयोश्चेष्टा सशास्त्रता ॥ ८४१

अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव हि ।
शब्दानृतं च हातव्यमर्थानृतवदेव नः ॥ ८४२

एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् ।
प्रयोगोत्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता ॥ ८४३

अथ वा यदुक्तम्—

साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गतः ।
न धर्मनियमोऽस्तीति तत्रेदमभिधीयते ॥ ८४४

अपराधस्य भागित्वादुभयं सावकाशकम् ।
साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥ ८४५

यदि हि साधुः प्रयुज्यमानो न कश्चित्कदाचिदपि विनश्येत् ततस्तस्य नित्यप्राप्तत्वान्निवर्त्यापशब्दाप्राप्तेश्च नियमशास्त्रमनर्थकं भवेत् । यदा त्वपराधभागित्वे सति द्वयोरप्यनियता प्राप्तिः सदा साधुनियमकारिणः शास्त्रस्य न विषयव्याघातः । एक एवायं शब्दः पुरुषाशक्ति-प्रमादकारणादिभेदात्तां तां वर्णन्यूनातिरेकक्रमान्यत्वाद्यवस्थामनुपतंस्तेन तेनापभ्रंशरूपेण गृह्यमाणस्तमेवार्थं प्रतिपादयतीति, न पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः ।

किं च—देवदत्तादिनामानि निःसन्दिग्धानि यानि च ।
बालैस्तत्तादिरूपेण नाश्यन्ते तैश्च संशयः ॥ ८४६

तत्तादिशब्दादपि हि बालप्रयुक्तात्तदनुकारिकठोरबुद्धिप्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्ययमुपलभमानः कथमिव प्रयोगप्रत्ययदर्शकाभ्यामेव वाचकत्वमध्यवस्येत् ?

अपभ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने ।
तेऽपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिता: ॥ ८४७

कतिपुचिदेव गाव्यादिषु चिरापभ्रष्टत्वाद्रूढ्याशङ्कया साधुत्वभ्रान्तिर्भवेत्। ये तु सन्त्येव जडप्रायज्ञानकरणैरभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेण वाऽर्थं प्रत्यापयन्त उपलभ्यन्ते, तेष्वपि प्रयोगप्रत्ययदर्शनमस्तीत्यनैकान्तिकता।

ततश्च त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक्।
अनैकान्तिकतादोषान्न ह्यसौ साधनक्षमः॥ ८४८

अन्यथोच्चार्यमाणश्च शब्दोऽपभ्रश्यते यथा।
तथा हेतुरनैकान्ताद्धेत्वाभासत्वमृच्छति॥ ८४९

तस्माद् दृष्टप्रयोगेऽपि पुनरस्ति विचारणा।
वाचकोऽयं न वेत्येवं सति वाऽन्येन निर्णयः॥ २५॥ ८५०

न्य० सु०—अत्र भाष्यकृता महता प्रयत्नेनेत्यादिना सूत्रं व्याख्यायते—**अपराधादित्यादिना**। गाव्यादिशब्देष्वपराधसम्भावनामात्रे सूत्रस्य तात्पर्यमुक्तम्। तत्सम्भावनामात्रेण सिद्धान्तासिद्धेरयुक्तमाशङ्क्य नेदं सिद्धान्तसूत्रम्, किं तु पूर्वपक्षदूषणार्थमित्याह—**अनैकान्तिकता तावदिति**। निर्णयवचनादेकान्तशब्दात्तस्मै प्रभवति सन्तापादिभ्य इति ठक्प्रत्यये कृतेऽनैकान्तिकशब्दव्युत्पत्तेरनिर्णायकत्वम् अनैकान्तिकता। एवं न कस्यचिच्छब्दस्य वाचकत्वं स्यादित्याशङ्क्याह—**वाचकत्वादिति**। परपक्षसन्देहापादनस्य स्वपक्षनिर्णयानुपयोगित्वादानर्थक्यमाशङ्क्याह—**संशयेति**। एतदेव व्याचष्टे—**दृढेति**। पूर्वं वाचकत्वानिश्चयार्थत्वेनैतत्सूत्रं व्याख्यातम्। इदानीमनादित्वानिश्चयार्थत्वेन व्याचष्टे—**अथ वेति**। श्लोकं व्याचष्टे—**यदि हीति**। ननु विविधांश्छब्दानभिव्यनक्तीति भाष्येण कस्मै न सौत्रो निष्पत्तिशब्दोऽभिव्यक्त्यर्थत्वेन व्याख्यात इत्याशङ्क्य, शब्दाधिकरणे शब्दोत्पत्तेर्निषिद्धत्वादित्याह—**प्रयत्नेति**। यथाभाष्यं द्वेधा सूत्रं व्याख्याय स्वयमकारप्रश्लेषेणाप्रयत्नेनापि निष्पत्तेरिति मध्यमपदलोपिसमासाङ्गीकरणेन तावदन्यथा व्याचष्टे—**अपर इति**। विधानशब्दः प्रकारवचनः निष्पत्तिशब्दस्य चोत्पत्त्यर्थत्वेन षष्ठ्यन्तत्वेन च प्रयत्नस्य निष्पत्तेरिति च षष्ठीसमासाश्रयणेनैतत्सूत्रं व्याख्येयमित्याह—**अथ वेति**। अपराधव्यतिरेकजनितेयं षष्ठीति प्रकटयितुं तस्यामिति सप्तमी। ननु प्रयत्ननिष्पत्तेरपराधभागित्वे शब्दस्य किमायातमित्याशङ्क्य तद्गतस्यापराधस्य शब्दे सञ्चारप्रतिपादनार्थत्वेन **शब्द इति** सूत्रावयवं व्याचष्टे—**यश्चेति**। यद्वैकोपलक्षणाभावात्साध्वसाधूनां विधिनिषेधविषयत्वासम्भवाभिप्रायेण साधुभिर्भाषितासधुभिर्नेति प्रयोगोत्पत्तेरुच्चारणनियमस्याशास्त्रीयत्वादिति यो हेतुरुक्तः, तस्यासिद्धत्वप्रतिपादनार्थमेतत्सूत्रमित्यन्यथा व्याख्यातम्। साध्वसाधुत्वव्यवस्थां तावदाह—**अतश्चेति**।

'ग्रस्तं निरस्तं निहतावलम्बिते अम्बूकृतं ध्मातमथो विकम्पितम्।
संदष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः॥'

इत्यादिस्मृत्यवगतप्रस्तत्वादिदोषवर्जितनियतह्रस्वादिकालाभिव्यङ्ग्ययथालक्षितक्रम-ग्राह्येषु वर्णेष्वनियुक्तो साधुशब्दप्रयोगात्तद्विपरीतेषु चासाधुशब्दप्रयोगादवश्यं तदालम्बनं किंचित् व्यवस्थितं वक्तव्यम् । तत्र च नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् १-१-१८ इति सूत्रे साधुत्वेनाभिमतानां नित्यानां शब्दानामर्थप्रत्यायनाङ्गत्वस्योक्तत्वात् तस्य च ।

फलवद्व्यवहाराङ्गभूतार्थप्रत्यायनाङ्गता ।
निष्फलत्वेन शब्दस्य योग्यत्वादवसीयते ॥

इति वार्त्तिकेनोपपादितत्वादर्थप्रत्यायनाङ्गत्वं साधुत्वमवगम्यते । तच्च वाचकवृत्त्या लक्षणावृत्त्या गौणीवृत्त्या वेति त्रिविधम् । गाव्यादिशब्दानां मुख्यार्थान्तराभावाद् गौणलाक्षणिकत्वे तावदनाशङ्कनीये । वाचकशक्तिकल्पनं त्वन्यथाप्युपपत्तेर्निषिद्धम् । न च प्रकारान्तरेण शब्दस्यार्थप्रत्ययाङ्गत्वं सम्भवतीत्यव्याप्त्यतिव्याप्त्यभावादेतदेव साधुत्वलक्षणं युक्तम् । तच्चानपभ्रष्टेष्वेव शब्देषु, नापभ्रष्टेष्वित्यनपभ्रंशापभ्रंशकृता साध्वसाधुव्यवस्था सेत्स्यतीत्यर्थः ।

दृष्टं चानपभ्रष्टेष्वेव सुवर्णादिषु व्यवहाराङ्गत्वलक्षणं साधुत्वम्, नापभ्रष्टेषु कूटेष्वित्याह लोकेऽपि चेति । इदमेव वाऽनपभ्रष्टत्वं साधुत्वम् अपभ्रष्टत्वं चासाधुत्वम्, तयोश्च सम्यक्त्वासम्यक्त्ववाचिभ्यां सत्यासत्यशब्दाभ्यां वक्तुं शक्यत्वात्सत्यं वदेदनृतं न वदेदिति विधिनिषेधविषयत्वोपपत्तेर्धर्माधर्मोपयोगोऽस्तीत्यन्यथा साध्वसाधुव्यवस्थामाह—यद्वेति । एतदेव विवृणोति—धर्मेति । नन्वर्थतथात्वातथात्वविषयत्वादनयोर्विधिनिषेधयोर्न शब्दतथात्वातथात्वविषयता युक्तेत्याशङ्क्याह अर्थंसत्यमिति । एतच्चार्थे सत्यासत्यत्वयोः सत्त्वासत्त्वरूपत्वाच्छब्दे चानपभ्रष्टापभ्रष्टरूपत्वात्सकृच्छ्रुतयोश्च सत्यानृतशब्दयोरुभयपरत्वायोगात् 'एष ह वै सत्यं वदन् सत्ये जुहोति, योऽस्तमिते सायं जुहोत्युदिते प्रातः-प्रातः प्रातरनृतं ते वदन्ति पुरोदयात् जुह्वति येऽग्निहोत्रमित्यादिश्रुतिपर्यालोचनया वार्थपरत्वावसायाच्छब्दपरत्वानुपपत्तेर्गाव्यादिशब्दस्य च शिष्टैर्गर्हितत्वात्प्रौढिमात्रेणोक्तम् । उक्तेन च प्रकारेण साध्वसाधुत्वयोर्व्यवस्थायां सत्यां विधिनिषेधविषयत्वोपपत्तेः प्रयोगोत्पत्त्यशास्त्रत्वादित्यसिद्धो हेतुरित्याह—एवमिति ।

अपराधभागित्वेन चासाधुत्वेनानियमेनाप्राप्तेरसाधूनां च प्रसक्तेर्नियमनिषेधविषयत्वसम्भवात् प्रयोगोत्पत्त्यशास्त्रत्वादित्यस्य हेतोरसिद्धत्वमनेन सूत्रेणोच्यत इत्यन्यथा व्याचष्टे — अथ वेति । धर्माय नियमो धर्मप्रसक्तये वा नियमो नास्तीत्यर्थः । एतदेव विवृणोति – यदि हीति । नियमशास्त्रशब्देन निषेधशास्त्रमप्युपलक्षितम्, साधुनियमकारिशब्देनाऽसाधुनिषेधकारिणोऽप्युपलक्षणम् । ननु गाव्यादिशब्दस्य सास्नादिमदर्थाप्रतिपादकत्वे प्रसक्त्ययोगात्प्रसक्तिसिद्ध्यर्थमवश्यं सास्नादिपर्यायतुल्यं वाचकशब्दान्तरत्वमेष्टव्यमित्याशङ्क्याह—एक एवेति ।

एवं प्रत्ययादिति पूर्वपक्षभाष्येणार्थापत्तिः सर्वेषां वाचकत्वे प्रमाणमुक्तेत्यभिप्रेत्य, अन्यथाप्युपपत्तिलक्षणदूषणाभिधानार्थत्वेनैतत्सूत्रं व्याख्यातम्। इदानीमनुमानोपन्यासार्थं तद्भाष्यमित्यभिप्रेत्यानैकान्तिकत्वलक्षणहेतुदूषणप्रतिपादनार्थत्वेनैतत्सूत्रं व्याचष्टे—किं चेति। अनेन च देवदत्तादिशब्दे बालैः प्रयुक्तेऽप्यपटुकारणत्वेनाप्रयत्ननिष्पत्तेसत्तादिरूपेण नाशात् कठोरबुद्धिभिरपि बालप्रयुक्तशब्दानुकरणप्रयत्ननिष्पत्तेस्वत्तादिरूपेण नाशादपराधभागित्वं दृष्टम्। ततश्च प्रत्ययादितिभाष्योक्तस्य शब्दश्रवणानन्तरभाव्यार्थप्रत्ययलक्षणस्य वाचकत्वहेतोः, तदुपलक्षितस्य चार्थविषयशब्दप्रयोगलक्षणस्यानैकान्तिकतेति सूत्रं योजितम्। श्लोकं व्याचष्टे—तत्तेति। गाव्यादिशब्दैरप्यनैकान्तिकाविमौ हेतू इत्याह—अपभ्रंशाश्चेति। ननु तेषामपि पक्षत्वान्न विपक्षतेत्याशङ्क्याह—कतिषुचिदेवेति। एवमपराधभागिन्यवाचकेऽपि शब्दे हेतोर्दर्शनादनैकान्तिकत्वभूतमपशब्दापराधप्रतिपादनार्थमेव तत्—सूत्रमित्युक्तम्। हेतोरेव चानेकान्तिकत्वलक्षणापराधभागित्वम् अनेन सूत्रेणोच्यत इत्याह—ततश्चेति। एवमपि सूत्रयोजना सम्भवतीत्यपिशब्दार्थः।

यद्वा यथा शब्दे अन्यथोच्चारणादपभ्रंशलक्षणापराधभागित्वम्, तथा हेतोरनैकान्तिकत्वाद्धेत्वाभासत्वलक्षणापराधभागित्वमित्येवमनैकान्तिकत्वप्रतिपादनार्थतयैतत्सूत्रं योज्यमित्याह—अन्यथेति। एवमपि सूत्रयोजना सम्भवतीति चशब्दार्थः। सन्देहापादनार्थत्वं सूत्रस्योक्तमुपसंहरति—तस्मादिति। नन्वत्र सर्वेषां वा शब्दानां वाचकत्वमेकस्यैव चेति एवं द्वावेव पक्षौ। तत्र सर्ववाचकत्वपक्षे सन्देहापादनेन निरस्ते, पारिशेष्यादेकस्यैव वाचकतेति निर्णयसिद्धेरन्येन निर्णयाभिधानमयुक्तमित्याशङ्क्याह—संशयेति। किन्तदुत्तरसूत्रमित्यपेक्षायाम् ॥२५॥

भा० प्र०—पूर्वपक्षियों ने कहा कि गो शब्द के समान ही गावी, गोणी आदि शब्द भी अनादिवाचक है, ऐसा स्वीकार किये बिना व्यवहार की उपपत्ति नहीं हो सकती है। इसके समाधान में यह कहा गया है कि शब्दों का सर्वथा साधु रूप से उच्चारण करने के लिए विशेष प्रयत्न आवश्यक है, क्योंकि नाभि प्रदेश से उत्थित, वक्षः स्थल में विस्तार प्राप्त नाद (शब्द) का कण्ठ आदि स्थलों के संस्पर्श से विशेष-विशेष आकार में अभिव्यक्त करने के लिए अतिशय प्रयत्न आवश्यक है, उसमें कुछ भी त्रुटि होने पर शब्द दुष्ट हो जाता है अर्थात् जिस रूप में उच्चारण करने की इच्छा रहती है, उससे भिन्न प्रकार में उच्चारण होता है। एक ही शब्द अनादि काल से चला आ रहा है। विशेष वक्ता के उच्चारण के दोष से उसमें विकृति हो जाती है और भिन्न रूप में उसका उच्चारण होता है, उस शब्द को जिसने उसके द्वारा ज्ञान प्राप्त किया है, उसका एवं उस सम्प्रदाय के अन्य लोगों के द्वारा भी उस विकृत रूप में ही प्रयोग चलने लगता है। इस प्रकार की उपपत्ति दृष्टविरुद्ध न होने से अर्थापत्ति प्रमाण के आधार पर सभी शब्दों को साधु मानना यह सङ्गत नहीं है। क्योंकि, अन्यथा उपपत्ति होने पर अर्थापत्ति नहीं मानी जाती है। इसलिए गो, गावी, गोता आदि

शब्दों में एक ही को अनादि मानकर साधु और अन्य शब्दों के अनादि न होने से उनको असाधु या अपभ्रंश माना जाता है।

पतञ्जलि ने महाभाष्य में कहा है कि एक ही शब्द के अनेक अपभ्रंश हैं, जैसे—गावी, गोणी, गोता, गोपोतलिका इत्यादि। प्राचीन आचार्यों की यह उक्ति एवं शब्द और अर्थ का अनादि वाच्यवाचकताविषयक युक्ति के अनुसार यही निश्चित होता है कि एक शब्द साधु है अर वह अनादि है। किसी ने उसका संस्कार कर दिया है—इसलिए वह संस्कृत=साधु हो गया है, ऐसी बात नहीं है। अनादि वाचक एक साधु शब्द ही मनुष्य सुलभ अशक्ति के कारण अनेक आकार में परिवर्तित हो गया है और इन्हीं शब्दों ने प्राकृत आदि भाषाओं में स्थान लाभ किया है। अतः प्राकृत आदि भाषा भी साधु संस्कृत भाषा है, इसलिए इस भाषा की प्राचीनता में यह अकाट्य युक्ति है।

आशय यह है कि धर्म में वेद ही प्रमाण है। शब्द के प्रामाण्य का आप्त से कथित होना ही है। वेद अपौरुषेय है, ऐसी स्थिति में आप्त प्रणीत न होने से अनाप्त वाक्य के समान वे भी अप्रमाण रहेंगे। किन्तु वेद की अपौरुषेयता भी सङ्गत नहीं है, क्योंकि पद और पदार्थ के सम्बन्ध से एवं वाक्य और वाक्यार्थ के सम्बन्ध से वेद की पौरुषेयता ही अनुमित होती है। क्योंकि शब्द और अर्थ का उसकी उत्पत्ति के बाद ही किसी पुरुष के द्वारा–यह शब्द इस अर्थ का वाचक है या यह वस्तु इस शब्द की वाच्य है—इस रूप में सङ्केत की कल्पना करने के बाद शब्द का प्रयोग हो सकता है। क्योंकि सङ्केत-हीन शब्द का प्रयोग नहीं हो सकता है। पद-पदार्थ के सम्बन्ध के समान ही वाक्य और वाक्यार्थ का सम्बन्ध भी स्वाभाविक नहीं है, वह भी पुरुष के द्वारा कल्पित है। क्योंकि पदार्थ ही वाक्यार्थ नहीं है। किसी विशेष अर्थ को व्यक्त करने के लिए ही कतिपय पदसमूहों को परस्पर सम्बद्ध कर प्रयोग किया जाता है। अतः इस अर्थ के पदसमष्टिरूप वाक्य का सम्बन्ध, वह भी पुरुष के द्वारा किया गया, कल्पित ही मानना पड़ेगा, अतः वेद का वाक्य और वाक्यार्थ भी पुरुष के द्वारा निर्मित ही सिद्ध करता है। वेद को आप्तों के द्वारा निर्मित होना मीमांसकों ने स्वीकार नहीं किया है, ऐसी स्थिति में इसे अनाप्त वाक्य ही मानना पड़ेगा।

इसके समाधान में मीमांसकों ने कहा है कि शब्द और अर्थ का सम्बन्ध स्वाभाविक है। 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' (मी० सू० १।१।५) इस सूत्र में औत्पत्तिक शब्द का अर्थ स्वाभाविक होता है, उत्पत्ति शब्द का अर्थ लक्षण के द्वारा स्वभाव होता है। वाचक शब्द और वाच्य अर्थ दोनों ही नित्य है। अतः उसका स्वभाव भी नित्य है। इसलिए इन दोनों का सम्बन्ध भी स्वाभाविक अर्थात् नित्य या अकृत अर्थात् अपौरुषेय है।

शब्द को नित्य नहीं मानने पर अर्थ की प्रतीति उपपन्न नहीं होगी। शब्द का उच्चारण ही अर्थप्रतीति का साधन है, उच्चारण स्वयं फल नहीं है। अतः, अर्थ की

प्रतीति ही शब्द के उच्चारण का प्रधान उद्देश्य है। यह अर्थप्रतीति यदि शब्दोच्चारण के द्वारा सम्पन्न न हो तो शब्द का उच्चारण निरर्थक हो जायगा। अतः प्रधानीभूत अर्थ की प्रतीति में जिससे बाधा न हो इस प्रकार के धर्म की कल्पना ही युक्ति सङ्गत है। नित्यता और अनित्यता शब्द का धर्म है। शब्द यदि अनित्य रहेगा तो अर्थ की प्रतीति सम्भव नहीं है। क्योंकि, सम्बन्ध के ज्ञान के विना केवल शब्द के श्रवणमात्र से अर्थ का बोध नहीं हो सकता है। क्षणिक वस्तु के सम्बन्ध से ही बोध नहीं हो सकता है। क्योंकि अन्वय और व्यतिरेक से ही सम्बन्ध की प्रतीति होती है। दो-तीन बार ज्ञान के विना अन्वय व्यतिरेक सम्भव नहीं है। क्षणिक वस्तु का एक बार से अधिक ग्रहण सम्भव ही नहीं है। विभिन्न शब्दों के ग्रहण से अर्थप्रतीति से सम्बन्ध की प्रतीति हो ही नहीं सकती है। क्योंकि प्रत्येक शब्द भिन्न है, अतः एक के ज्ञान से अन्य का सम्बन्ध ज्ञान कैसे हो सकता है? क्योंकि ऐसा मानने पर गो शब्द से अश्व का बोध भी होने लगेगा। साहश्यनिबन्धन सम्बन्ध के बोध की सम्भावना नहीं है, अनेक अवयवों की एक रूपता को ही साहश्य कहा जाता है। वर्ण निरवयव हैं, अतः उनका साहश्य सम्भव नहीं है। यदि किसी एक शब्द का सम्बन्ध गृहीत होता तो सादृश्यनिबन्धन अर्थबोध हो सकता था, किन्तु सभी शब्द क्षणिक हैं अर्थात् एक क्षण से अधिक काल तक स्थायी नहीं है, ऐसी स्थिति में कोई भी अर्थ किसी को कभी भी ज्ञानगोचर नहीं हो सकता है। जिसका अर्थ किसी भी समय ज्ञान का विषय नहीं होता है उस शब्द को अर्थयुक्त भी नहीं कहा जा सकता है। अतः शब्द को क्षणिक मानने पर सभी शब्द अर्थहीन रहेंगे, ऐसी स्थिति में किसी से भी साहश्य निबन्धन अर्थप्रतीति होती है—यह मानने पर एक ही शब्द का अर्थवत्त्व और निरर्थकत्व, मुख्यत्व, गौणत्व इस प्रकार विरुद्ध भाव की स्थिति माननी पड़ेगी।

शब्द को क्षणिक मानकर साहश्यनिबन्धन अर्थप्रतीति मानने पर शब्दज्ञान अर्थात् शब्द से अर्थ की प्रतीति होती है—इसको भ्रम ही मानना होगा। क्योंकि शाला शब्द का श्रवण कर उसका अर्थ गृह न समझकर साहश्य निबन्धन यदि माला समझा जाय तो वाष्प को धूम समझने के समान यह भी भ्रम ही होगा। यदि यह कहा जाय कि शाला और माला शब्द में भेद होने से पूर्वोक्त अर्थबोध को भ्रम ही मानना पड़ेगा, ऐसी स्थिति में यह कहा जा सकता है कि अभेद में सादृश्य नहीं होता है। साहश्य स्थल में किसी प्रकार का भेद अवश्य ही रहता है। यदि ऐसा न हो तो पूर्व शब्द और पूर्व उच्चारित शब्द के अभिन्न होने पर शब्द नित्य ही रहेगा, यदि यह कहा जाय कि गावी आदि अपभ्रंश शब्द से साहश्यवश जो अर्थ की प्रतीति होती है, उसको भ्रम नहीं कहा जाता है, अतः अन्य स्थल में भी यही होगा। उस स्थल में गो शब्द के उच्चारण की ही इच्छा रहती है, किन्तु प्रथम वक्ता की अशक्ति के कारण विकृति होने से ऐसा उच्चारण होता है, अतः उन स्थलों में भी गो शब्द ही अर्थ का बोधक है। वस्तुतः ऐसे स्थलों में

बाधक ज्ञान के रहने पर भी शब्द की यथार्थवाचकता भ्रान्त रहती है। किन्तु ऐसा होने से सभी शब्दों की भ्रान्तवाचकता नहीं मानी जा सकती है। जहाँ बाधक ज्ञान रहता है, वहीं वाच्य ज्ञान को भ्रम माना जाता है। यथायथ उच्चारित शब्द की वाचकता में बाधक किसी के न रहने एवं सभी व्यक्तियों के सम्मुख एक रूप होने से उसको भ्रम नहीं कहा जा सकता है, एक ही समय शब्द का उच्चारण, ज्ञान एवं अर्थबोध नहीं हो सकता है, क्योंकि यह परम्परा कथन, युक्ति और अनुभव से सिद्ध है—इसलिए भी शब्द क्षणिक नहीं है। यदि यह कहा जाय कि शब्द कुछ समय रहकर विनष्ट हो जाता है, अतः सम्बन्धज्ञानपूर्वक अर्थबोध हो सकता है, किन्तु ऐसी स्थिति में शब्द यदि कुछ देर तक रहता है, तब सदा क्यों नहीं रहेगा ? जिसके विनाश का कारण रहता है, उसकी उत्पत्ति होती है या नहीं—इसका परिज्ञान भले ही न हो किन्तु विनाश तो मानना ही पड़ेगा। जैसे—प्रागभाव उत्पत्तिरहित होने पर भी नाशक कारण होने से उसका ध्वंस प्राप्त होता है। किन्तु शब्द का नाशक कोई कारण नहीं है, अतः शब्द का नाश नहीं माना जाता है, या जिन पदार्थों को उत्पत्ति कारण सापेक्ष होती है, अर्थात् समवायी, असमवायी कारणों के रहने के कारण होती है वहाँ समवायी या असमवायी कारण के विनाश से उसका विनाश भी होता है। जैसे—तन्तु वस्त्र का समवायी कारण है, अतः तन्तु का नाश एवं तन्तुसंयोग के नाश से अर्थात् समवायी कारण वस्त्र का ध्वंस होता है, किन्तु शब्द का समवायी या असमवायी कारण नहीं है—इसीलिए शब्द निरवयव है।

अस्तु, शब्द की अनित्यत्वरूप धर्म की कल्पना करने पर प्रधानीभूत अर्थप्रतीतिरूप फल की बाधा होने से वैसे धर्म की कल्पना अनुचित है, कारण वैसा धर्म ही कल्पनीय है; जो प्रधान में बाधा उत्पन्न नहीं करता है। शब्द के नित्यत्व और विनाशित्व इन दो धर्मों में उसी धर्म को मानना उचित है, जिससे प्रधानभूत अर्थप्रतीतिरूप फल में बाधा न हो। अङ्ग के अङ्गत्व की रक्षा के लिए प्रधानीभूत फल में बाधा करना उचित नहीं है। शब्द अर्थबोध का अङ्ग या साधन है, नित्यता और अनित्यता शब्द का अङ्ग है। शब्द को विनाशी अर्थात् अनित्य कहा जाय तो प्रधान फल का बाध ही होगा। अतः शब्द के नित्य न होने पर प्रधान फल अर्थप्रतीति की अन्यथा उपपत्ति नहीं हो सकती है, अतः शब्द को नित्य ही मानना होगा। अर्थापत्ति प्रमाण के द्वारा शब्द की नित्यता सिद्ध होती है। श्लोकवार्तिक में शब्द की नित्यता का विस्तृत विश्लेषण उपलब्ध है, जिसका विवरण भूमिका के द्वारा प्राप्त करें।

यह आशङ्का की गई है कि गो शब्द के समान गावी, गोणी, आदि शब्द भी अनादि वाचक है, यह मानना पड़ेगा, अन्यथा व्यवहार की उपपत्ति नहीं हो सकती है। इस प्रसङ्ग में यह कहा जा सकता है कि व्यवहार की उपपत्ति अन्यथा भी हो सकती है। शब्द का उचित रूप में सुष्ठु उच्चारण के लिए विशेष प्रयत्न आवश्यक

है, क्योंकि नाभि से उत्थित वक्षःस्थल में विस्तार प्राप्त नाद का कण्ठ आदि स्थलों से संस्पर्श कर विशेष आकार में अभिव्यक्त करने के लिए प्रयत्न आवश्यक है और जिस रूप में उच्चारण करना चाहता है, उससे भिन्न रूप में ही उच्चारण हो जाता है। इसलिए एक ही शब्द अनादिकाल से आ रहा है। किन्तु वक्ता विशेष के उच्चारण के दोष से उसमें विकार आ जाता है और उसका भिन्न रूप में उच्चारण होने लगता है। उस व्यक्ति विशेष के सम्पर्क से उस सम्प्रदाय के अन्य व्यक्ति भी उस विकृत उच्चारण के अनुसार ही प्रयोग करते हैं, और इस प्रकार की उपपत्ति दृष्ट उच्चारण के अनुरूप ही है। अतः दृष्ट विरुद्ध न होने से अर्थापत्ति प्रमाण के आधार पर जो सभी शब्दों को साधु मानने की युक्ति समीचीन नहीं है। अन्यथा उपपन्न होने पर अर्थापत्ति प्रमाण के आधार पर किसी की साधुता का स्वीकार नहीं किया जा सकता है। अतः गो, गावी आदि शब्दों में एक ही अनादि है, और वही साधु है, अतिरिक्त शब्द अनादि न होने से अपभ्रंश या असाधु हैं। अनादि वाचक शब्द ही अशक्ति के कारण अनेक आकारों में परिवर्तित हो गये हैं, और ये ही प्राकृत आदि में प्रयुक्त होते हैं। अतः प्राकृत भाषा के प्रयुक्त शब्द ही साधु एवं संस्कृत की अपेक्षा प्राचीन है—यह कथन युक्तियुक्त नहीं है।

'शब्दे अपराधस्य भागित्वम्' शब्द में अपराधभागिता अर्थात् दुष्टता होती है। 'प्रयत्ननिष्पत्तेः' क्योंकि प्रयत्न के सहयोग से उसका उच्चारण होता है। शब्द का उच्चारण प्रयत्न सापेक्ष है, अतः शब्द में अपराधभागिता अर्थात् दुष्टता सिद्धान्त सिद्ध है।

आशय यह है कि आलस्य, प्रमाद आदि के द्वारा शब्द जिस प्रकार यत्नपूर्वक उच्चारण करना चाहिए, वैसा उच्चारण करने में असमर्थ होने पर गावी आदि उच्चारण होता है और इस उच्चारण से अपभ्रंश की परम्परा के क्रम में एक शब्द के अनेक अपभ्रंश हो जाते हैं ॥ २५ ॥

**अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥**

**शा० भा०—न चैव न्यायो यत्सदृशाः शब्दा एकमर्थमभिनिविशमानाः सर्वे विच्छिन्नपारम्पर्या एवेति प्रत्ययमात्रदर्शनादभ्युपगम्यते, सादृश्यात्साधुशब्देऽप्यवगते, प्रत्ययोऽवकल्प्यते[1]। तस्मादमीषामेकोऽनादिः। अन्येऽपभ्रंशाः। हस्तः करः पाणिरित्येवमादिषु त्वभियुक्तोपदेशादनादिरमीषामर्थेन सम्बन्ध इति ॥ २६ ॥ सिद्धान्ते युक्तिः ॥**

भा० वि०—सूत्रं व्याचष्टे—न चैव न्याय इति। घटः कलशः कुम्भः इत्यादि व्यवच्छेत्तुं सदृशा इत्युक्तं शालामालेत्यादिव्यवच्छेदाय—एकमर्थमिति। कथ-

---

१ ब. वकल्पते।

मिदमन्याय्यमत आह—**प्रत्ययमात्रेति**। अभ्युपगम्येतेति। सर्वेऽविच्छिन्नपारम्पर्या इति इत्यनुषङ्गः, ततः किमत आह–**तत्सादृश्यादिति**। यस्य गाव्यादेरविच्छिन्नपारम्पर्यताभ्युपगम्यते, तत्सादृश्यात् गवादिशब्दे स्मृतेऽपि तत एवार्थप्रत्ययो घटते, तेन यतोऽर्थप्रत्ययस्यैको एवाऽनादिरितरेऽपभ्रंशा इति न सर्वेऽविच्छिन्नपारम्पर्या इत्यर्थः।

नन्वेवं सति हस्तः करः पाणिरित्यादीनामेकमर्थमभिनिविशमानानां सर्वेषामनादिता कथमित्याशङ्क्य शिष्टप्रयोगादित्याह—**हस्त इति**। अभियुक्तोपदेशादित्युपलक्षणम्, सादृश्याभावेन गत्यन्तराभावाच्चेति द्रष्टव्यम् ॥ २६ ॥

त० वा०—संशयापादनात्परपक्षे जितेऽपि स्वपक्षसिद्धिर्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्—**अन्यायश्चानेकशब्दत्वमिति**। कथं पुनरिदमन्याय्यम् ?

तदुच्यते—वाच्यवाचकसामर्थ्यनियमो योऽभिधागतः।
सम्बन्धस्तदनेकत्वे स्वरूपात्सोऽपि हीयते ॥ ८५१

एकात्मकयोरेव हि वाच्यवाचकयोरन्योन्याक्षेपात्परस्परनियमः संभवति अन्यतरस्यापि त्वनेकत्वे सति व्यभिचारान्नियमहानिः।

किं च—सामर्थ्यं सर्वभावानामर्थापत्त्याऽवगम्यते।
एकसामर्थ्यसिद्धेऽर्थे नानेकं तच्च लभ्यते ॥ ८५२

अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथानुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकत्रैव कल्पिता तदनुसार्यपभ्रंशेष्वपि चेदनुगम्यते, को नाम तन्निरपेक्षवाचकशक्त्यन्तरकल्पनां लभेत[२]।

नाम च व्यवहारार्थमर्थस्याभ्युपगम्यते।
तेनैकेनैव सिद्धेऽर्थे द्वितीयादि च निष्फलम् ॥ ८५३

किं च—विकल्पस्याष्टदोषत्वं पुरस्तादेव वर्णितम्।
स चेहानेकशब्दत्वे निश्चयेन प्रसज्यते ॥ ८५४

नामान्तरे श्रुते चार्थस्तद्भिन्नोऽन्यः प्रतीयते
संज्ञा चोत्पत्तिसंयोगात् २-२-८ इत्यत्रैतद्वदिष्यते ॥ ८५५

**दृष्टान्तदार्ष्टान्तिकयोः वैषम्यप्रतिपादनम्**

या तु हस्तः करः पाणिरित्यत्राऽनेकशब्दता।
अनन्यगतिकत्वेन सा दृढस्मरणेन च ॥ ८५६

---

१ क. व कल्प्यते। २ क. (टिप्पण्यां) भजेतेति पा०।

एकशक्त्यनुसारेण यावत्त्वस्ति गतिः क्वचित् ।
उपमानानुमानाभ्यां तावत्सैवानुगम्यते ॥ ८५७

तस्मात्स्वरूपसम्बन्धशब्दार्थत्रनिरूपणे ।
एकैकनियमादेव गतिः स्यान्नान्यगोचरा ॥ ८५८

यथा च प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति । तथा तदशक्तिश्चानुरूपत्वात्[1] इत्यत्र वर्णयिष्यते ।

तेनानेकप्रयोगेऽपि कश्चिदेवार्थसंगतः ।
तदुपस्थापनेनान्ये बोधकास्तदशक्तिजाः ॥ २६ ॥ ८५९

न्या० सु०—अत्र भाष्यकृता न चैष इत्यादिनैकस्यार्थस्यानेकशब्दत्वमयुक्तमित्येवं सूत्रं व्याख्याय, हेत्वपेक्षायां प्रत्ययमात्रेत्याद्युक्तं तदन्यथाप्युपपत्तिमात्रप्रतिपादकत्वेन, पूर्ववत्सन्देहमात्रापादनादनिर्णायकं तत्प्रकारनिरूपणं च 'तदशक्तिश्चे' त्यत्र वक्ष्यमाणत्वात् पुनरुक्तमित्युपेक्ष्य, स्वयं प्रश्नपूर्वं पञ्चहेतूनाह—कथं पुनरिति । कारकयोः साक्षादसम्बन्धात् क्रियासम्बन्धे सत्येकक्रियावशीकारात्परस्परनियमसम्बन्धोऽभिधीयते । यथोक्तम्—

'प्रतिपत्तावुपादानात्साहित्ये च विवक्षिते ।
नियम्येत यदेकस्यां सम्बन्धः सोऽर्थशब्दयोः ॥' इति ।

स च वाच्यवाचकानेकत्वे स्वरूपान्नियमलक्षणाद्धीयत इत्यर्थः । वाच्यवाचकत्वयोः कर्मकरणरूपकात्मकत्वाच्छक्तेरेव कारकत्वमभिप्रेत्य सामर्थ्यशब्दः । क्रियाव्यापृतत्वरूपस्य तु कारकत्वमभिप्रेत्य तद्व्यवस्थासिद्ध्यार्थादृष्टातिशयरूपशक्त्यभ्युपगमे वा वाच्यावच्छिन्नवाचकाश्रितैकशक्तिमात्रेणोभयव्यवस्थोपपत्तेरनवच्छिन्नत्वे वा शक्तित्रयकल्पनेऽपि व्यवस्थानुपपत्तेर्वाच्यावच्छिन्नस्य वाचकाश्रितस्य सामर्थ्यस्याभिधायां नियमो यः सम्बन्धशब्दाभिधेय इति योज्यम् । श्लोकं व्याचष्टे—एकेति । योग्यार्थापत्त्यनुदयादप्यनेकवाचकशक्तिकल्पनमन्याय्यमित्याह—किं चेति । श्लोकं व्याचष्टे—अत्यन्तेति । आनर्थक्यादप्यनेकशब्दत्वमन्याय्यमित्याह—नाम चेति । विकल्पापत्तेरप्यन्याय्यमित्याह—किं चेति । अर्थभेदापत्तेरप्यन्याय्यमित्याह—नामान्तर इति ।

ननु हस्तकरादिष्वनेकशब्दत्वदर्शनात्कथमन्याय्यतेत्याशङ्क्य, हस्त इत्यादिभाष्येणाभियुक्तोपदेशाभावे सत्यन्याय्यतेति परिहृतम्, तद् गाव्यादिष्वपशब्देष्वप्यभियुक्तोपदेशस्य पूर्वपक्षिणेष्टत्वादयुक्तमाशङ्क्य, गत्यन्तराभावसूचनार्थत्वेन व्याचष्टे—यस्त्विति । दृढस्मरणेनेत्यभियुक्तोपदेशोऽनन्यागतिकत्वोपपादनार्थत्वेन व्याख्यातः । तदुपलक्षितमसादृश्यं चकारेण सूचितं सम्प्रत्युपेक्षितं भाष्यं गाव्यादिशब्देषु गत्यन्तरसम्भवसूचनार्थत्वेन व्याचष्टे—

1. जै० सू० (१–३–८) ।

एकेति । गोशब्दोच्चिचारयिषायामशक्त्या केनचिद्गावीत्युच्चारिते, श्रुतगावीशब्दसादृश्यं गोशब्दस्योपमानेनावगम्य, गावीशब्दोच्चारणस्य गोशब्दोच्चिचारयिषामूलत्वानुमानाद् गोशब्दशक्त्यनुसारेण गावीशब्दादप्यर्थप्रत्ययोपपत्तेर्न गावीशब्दस्य शक्त्यन्तरकल्पनमित्यर्थः । अनेकशब्दत्वस्यान्याय्यत्वं पञ्चधोपपादितमुपसंहरति - **तस्मादिति** ।

स्वरूपं नियमरूपतासम्बन्धः सामर्थ्यलक्षणः शब्दो नामार्थो नामान्तरेऽप्यभिन्न इत्येषां चतुष्टयोपसंहारः । निरूपणशब्दव्यवस्थार्थत्वेनावर्त्यं विकल्पप्रसङ्गलक्षणोपपत्त्युपसंहारः । सर्वशब्दमध्ये एकैकस्यैव गवाश्वादिशब्दस्य वाचकत्वनियमादिति वीप्सार्थः । यद्वैकस्यैव शब्दस्य वाचकत्वनियमादेकस्यैव चार्थस्य वाच्यत्वनियमादिति यववराहाधिकरणोक्तो वाच्यैकत्वनियमो दृष्टान्तत्वेन वीप्सयोक्तः । कथं पुनरुपमानानुमानाभ्यामेकशक्त्यनुसारेण गतिसम्भव इत्याशङ्क्याह—यथा चेति । सिद्धान्तमुपसंहरति—तेनेति ॥ २६ ॥

भा० प्र०—इस प्रसङ्ग में यह शङ्का हो सकती है कि एक शब्द को साधु और अन्य शब्द को असाधु मानने का क्या कारण है ? सभी अपरपर्याय शब्दों में एक ही अर्थ के सभी शब्द वाचक होते हैं । अनेक शब्द को एक अर्थ का वाचक मानना उचित नहीं है । एक ही अर्थ की अनेक शब्दों से प्रतीति माननी होगी, किन्तु ऐसा मानने पर शब्द का अप्रामाण्य मानना होगा । अव्युत्पन्न व्यक्ति जब शब्द और अर्थ के सम्बन्ध का ज्ञान करता है, तब यह निर्णय करता है कि यह गो शब्द का वाच्य है; यह अश्व शब्द का वाच्य नहीं है इत्यादि नियम पूर्वक ही व्युत्पत्ति होती है । किन्तु इसके बाद जो यह समझता है कि गोणी गोता आदि सभी शब्दों का वाच्य गौ ही है । तब पूर्व नियम का बाध होता है । पूर्वोक्त नियम का बाध होने पर अव्युत्पन्न व्यक्ति को शब्द से अर्थ का बोध नहीं होगा । 'गामानय' गौ को लाओ इस प्रकार गो शब्द के सुनने के बाद कोई व्यक्ति जब गलकम्बल आदि से विशिष्ट प्राणिविशेष विशेषरूप को लेकर व्यवहार करता है । ऐसी स्थिति में अन्य अव्युत्पन्न व्यक्ति अर्थापत्ति प्रमाण के द्वारा यह अवगत करता है कि गो शब्द में गलकम्बलादि विशिष्ट प्राणिविशेषरूप अर्थ को बोध कराने की शक्ति है । इस प्रकार एक शब्द के सामर्थ्य से एक अर्थ सिद्ध होता है, उसी प्रकार अनेक शक्ति की कल्पना नहीं की जाती है, क्योंकि इसमें अर्थापत्ति बाधित होता है । अनेक शब्दों को एक अर्थ का वाचक मानने पर विकल्प की प्रसक्ति होगी। विकल्प मानने पर सभी के प्रामाण्य को पक्ष में बाधित मानना होगा । अतः सम्भव पक्ष में अन्यथा उपपत्ति होने पर विकल्प मानना उचित नहीं है । कर, हस्त आदि प्रयोगों में एक अर्थ में अनेक शब्द की वाच्यता माननी ही होगी ; क्योंकि दूसरा उपाय नहीं है । इसलिए गो, गावी आदि शब्दों में एक शब्द साधु है और अन्य शब्द असाधु हैं, अपभ्रंश है, वक्ता के उच्चारण के असामर्थ्य के कारण ही ये शब्द प्रयुक्त हुए हैं ।

हस्त, कर, पाणि आदि शब्दों का एक अर्थ में प्रयोग शिष्टाचार के कारण अनादि सम्बन्ध है । वस्तुतः एकार्थक मानने पर भी व्युत्पत्ति के आधार पर इन शब्दों के द्वारा

प्रतीत अर्थ में भेद ही दृष्टिगोचर होता है। क्योंकि हस्त शब्द का अनेक उपयोग होता है। निरुक्त के अनुसार 'हस्तो हन्तेः' (नि० १।६) इस व्युत्पत्ति से प्राप्ति या हिंसा के उपयोग में ही हस्त शब्द का प्रयोग साधु है, कर शब्द कृधातु से करोति इति कर व्युत्पत्ति के अनुसार सामान्य क्रिया अर्थ में साधु है। इसी प्रकार पूजा आदि शुभ कर्म सम्पादन में ही पाणि शब्द का प्रयोग साधु है, क्योंकि पूजार्थक पण् धातु से यह प्रयोग निष्पन्न होता है। 'पाणिः पणायतेः पूजा कर्मणः, प्रगृह्य पाणी देवान् पूजयन्ति' (नि० २।२६) के अनुसार इसी अर्थ की प्रतीति इस शब्द से होती है। अतः कोई भी शब्द अपर पर्याय नहीं है। क्रिया भेद से भिन्न-भिन्न अर्थ के अनुसार शब्द का प्रयोग होता है।

'अन्यायः' = अन्याय या अनुचित है। 'च' = क्योंकि, 'अनेक शब्दत्वम्' = अनेक शब्द वाच्यता। एक ही अर्थ की अनेक शब्द वाच्यता अनुचित अर्थात् एक अर्थ का अनेक शब्द को वाचक मानना उचित नहीं है ॥ २६ ॥

## तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥

**शा० भा०—कथं पुनस्तत्र[1] तत्त्वं शक्यं विज्ञातुम् ? शक्यमित्याह[2]। अर्थिनो ह्यभियुक्ता भवन्ति। दृश्यते चाभियुक्तानां गुणयतामविस्मरणमुपपन्नम्। प्रत्यक्षं चैतद् गुण्यमानं न भ्रश्यत इति। तस्माद् यमभियुक्ता उपदिशन्त्येष एव साधुरिति, साधुरित्यवगन्तव्यः[3] ॥२७॥ आशङ्कानिरासः ॥**

भा० वि०—सूत्रव्यावर्त्यां शङ्कामाह—किं पुनरिति। माभूवन् सर्वेऽनादयः तथाप्ययमेवैकस्साधुरितरेऽसाधव इति, तेषु तत्त्वं न शक्यते ज्ञातुम्, नियामकाभावादित्यर्थः, उत्तरत्वेन सूत्रमवतारयति—**शक्यमित्याहेति**। तद्व्याचष्टे—**अर्थिन इति**। आर्थिनो=दृष्टार्थिनः। तदनेनादृष्टार्थसाधुप्रयोगनियमप्रतिपादकवेददर्शित्वमुक्तम्, अभियोगो=लक्षणात्मकव्याकरणशास्त्राभ्यासः, तद्वन्तोऽभियुक्ताः, तेन च व्याकरणाभ्यासानुगृहीतमयमेव साधुरितरेऽपभ्रंशा इति यत् प्रत्यक्षं तद्तत्त्वमुक्तम्।

ननु यद्यर्थिनोऽभियुक्ता भवन्ति, तथाप्यभियोगस्य प्रमुषितत्वसंभवात् न तत्सहकृतं प्रत्यक्षं साधुत्वादिग्रहणाय पर्याप्तम्। अत्राह—**दृश्यते चेति**। गुणो गुणनमावर्तनं तद्वतामविच्छिन्नाभ्यासानामित्युक्तं भवति, अनेन सौत्रं विशेषपदं व्याख्यातम्, अविच्छिन्नाभ्यासप्रमोषाभावरूपं अविस्मरणमेवोपपन्नं पश्याम इत्यर्थः, प्रत्यक्षं चातिशयेनावर्त्यमानस्य स्वाध्यायादेरविस्मरणमित्याह—**प्रत्यक्षं**

---

१ ब. पुनरत्र। २ ब. इतःपरं 'तस्माद् य' इत्यन्तं नास्ति।
३ ब. साधुरवगन्तव्यः।

चेति। तेन पूर्वपूर्वस्मृत्यनुगृहीतप्रत्यक्षमूलत्वाद्वेदमूलत्वाच्चोत्तरोत्तराभियुक्तस्मृतेः प्रामाण्यात् तद्बलादेव नियमद्वयसिद्धिरित्याशयः। भवतु प्रयोगनियमविषयायाः श्रुतेः श्रुतिमूलत्वेन प्रामाण्यम्, साधुस्वरूपनियमविषयायास्त्वसन्मूलाया विप्रलम्भादिमूलत्वसंभवात् कथं प्रामाण्यमत आह—**दृश्यते चेति**। अभियुक्तत्वम्, यथार्थदर्शित्वम्, गुणवत्त्वं यथादृष्टार्थवादित्वमुपपन्नं प्रमाणमिति यावत्।

ननु प्रमुषितव्याकरणस्य स्मरणमप्रमाणमपि भविष्यति तत्राह—**प्रत्यक्षं चैतदिति**। गुण्यमानमावर्तमानमित्यर्थः, समूलत्वेनोपसंहरति-**तस्मादिति** ॥२७॥

**तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥**

**शा० भा०—अथ यदुक्तम्-अर्थोऽवगम्यते गाव्यादिभ्यः, अत एषामप्यनादिरर्थेन सम्बन्ध इति। तदशक्तिरेषां गम्यते। गोशब्दमुच्चारयितुकामेन केनचिदशक्त्या गावीत्युच्चारितम्। अपरेण ज्ञातं सास्नादिमानस्य विवक्षितः तदर्थं गौरित्युच्चारयितुकामो गावीत्युच्चारयति। ततः शिक्षित्वाऽपरेऽपि सास्नादिमति विवक्षिते गावीत्युच्चारयन्ति। तेन गावादिभ्यः सास्नादिमानवगम्यते। अनुरूपो हि गाव्यादिर्गोशब्दस्य ॥ २८ ॥ उत्तरम्।**

भा० वि०—शङ्कोत्तरत्वेन सूत्रं व्याख्यातुं शङ्कामनुवदति—**अथेति**। गाव्यादिभ्य एवेत्यर्थः। भवतु गृहीतगोशब्दवाचकत्वस्य श्रुतगावीशब्दसादृश्यावगतगोशब्दादेवार्थप्रत्ययः, यस्तु गाव्यादिभ्य एवार्थं प्रत्येति, तं प्रति तेषामेव वाचकत्वमाश्रयणीयमिति भावः। तत्प्रतिपत्तिप्रकारं दर्शयितुं सूत्रावयवं व्याचष्टे-**तदशक्तिरिति**। प्रयोज्यवृद्धस्तावत् उत्तमवृद्धप्रयुक्तगावीशब्दसादृश्यात् गोशब्दमवगम्य तद्विवक्षां चास्यानुमाय देवदत्तपदविवक्षायां तत्तत्पदप्रयोगाद् देवदत्तपदप्रयोगाशक्तिवत् गावीपदप्रयोगात् गोपदप्रयोगाशक्तिमुत्तमवृद्धस्यावगच्छतीत्यर्थः। एतद्विवृणोति—**गोशब्दमिति**। केनचिदुत्तमवृद्धेनोच्चारयतीत्यस्यानन्तरमितिशब्दमध्याहृत्यापरेण मध्यमवृद्धेन ज्ञातमिति सम्बन्धनीयम्। तेन तस्य तावद्विवक्षाविषयत्वेनानुमितात् गोशब्दादेवार्थप्रत्ययः, इति पूर्वोक्तानुवादः, अस्तु गृहीतगोशब्दवाचकत्वस्य मध्यमवृद्धस्यैवम्, इतरेषां तु कथम् ? अत आह—**तत इति**। मध्यमवृद्धाच्छिक्षित्वा व्युत्पद्यते अपरोऽपि बालोऽपीत्यर्थः, यद्यपि मूलशब्दानुसारेणैव सास्नादिमति प्रयोज्यवृद्धप्रत्ययः, तथापि तत्प्रत्ययस्य व्यवहारानुमितस्य गाव्यादिविकारशब्दान्वयव्यतिरेकित्वाद्विकारशब्दाशक्तिजत्वाज्ञानाच्च, तज्जन्यत्वमाकलयन्तो बालास्तत्रैव गाव्यादिशब्दसामर्थ्यं कल्पयन्ति, ततः स्वयमपि प्रयोगसमये सास्नादिमति विवक्षिते गावीत्येवोच्चारयन्ति, एवमन्येऽपीत्यपभ्रष्टैरेव गाव्यादिभिस्सास्नादिमानर्थोऽवगम्यते, न तु वाचकैरेवेत्यर्थः।

नन्वेवमश्वमानयेत्युत्तमवृद्धप्रयुक्तादश्वशब्दादपि गोशब्दमवगम्य सास्नादिमति प्रवृत्तावश्वशब्दस्यापि तत्र व्युत्पत्तिप्रसङ्ग इत्याशङ्क्यानुरूपत्वादिति सूत्रावयवं व्याचष्टे—**अनुरूपो हीति**। न शब्दमात्राद् गोशब्दावगतिः किन्तु सदृशादेव गाव्यादेरित्यर्थः इति भावः ॥ २८ ॥

**एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥**

**शा० भा०—अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति। अश्मकैरागच्छामीत्यश्मकशब्दैकदेश उपलब्धे, अश्मकेभ्य इत्येव शब्दः स्मर्यते। ततोऽश्मकेभ्य इत्येषोऽर्थ[1] उपलभ्यत इति। एवं गाव्यादिदर्शनाद् गोशब्दस्मरणम्[2], ततः सास्नादिमानवगम्यते ॥ २९ ॥ उत्तरे युक्तिः।**

**॥ इत्यष्टमं व्याकरणाधिकरणम् ॥**

**भा० वि०**—गाव्यादिशब्दस्य साधुशब्दस्मारणेनार्थप्रत्यायकत्वं दृष्टान्तेन दर्शयितुं विभक्तिव्यत्यये प्रत्ययः स्यादिति सूत्रावयवं व्याचष्टे—**अत एवेति**। यतस्सदृशशब्ददर्शनात्सदृशान्तरे बुद्धिरूपपन्ना। अत एवेत्यर्थः, क्वैवं भवतीत्यत्राह—**अश्मकैरिति**। कथमश्मकैरित्यस्मादश्मकेभ्य इत्यस्य विरूपस्य स्मरणमित्याशङ्क्यैकदेशादिति सूत्रावयवो व्याख्यातः। अश्मकशब्दैकदेश उपलब्ध इति, इदानीं स्मृताच्छब्दात् तदर्थावगतिमाह–**तत इति**। दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—**एवमिति**। तेन गाव्यादिशब्दस्मृतानां गवादिशब्दानामेव वाचकत्वात्तेषामेव सास्नादिमति साधुत्वम्, न गाव्यादीनामिति युक्ता शब्देषु व्यवस्थेत्याशयः ॥ २९ ॥

त० वा०—तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेत्? अत आह—**तत्र तत्त्वमभियोगविशेषात्स्यादिति**। कः पुनरभियोगः? को वा तद्विशेषः? कथं वा तेन वाचकत्वनिरूपणमिति?

तदुच्यते—लक्षणश्रवणाभ्यासादभियोगः प्रवर्तते।
तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥ ८६०

प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यः तदभावे च लक्षणानुसरणमेवैकमशेषलक्ष्यनिरूपणक्षमत्वेनावधार्यते।

तस्मान्न लोकवेदाभ्यां कश्चिद् व्याकरणादृते।
वाचकाननपभ्रष्टान्यथावज्ज्ञातुमर्हति ॥ ८६१

१ ब. इत्यर्थोवम्यते। २ ब. गाव्यादि शब्ददर्शनाद्गो।

तत्सामस्त्यापरिज्ञाने पारिशेष्यानिरूपणात् ।
अर्थापत्त्याऽपशब्दानां निश्चयो नोपपद्यते ॥ ८६२

लक्षणानुगमाद्यांस्तु बहिरेव प्रयुञ्जते ।
नियतप्रतिपक्षत्वात्तेष्वर्थापत्तिसंभवः ॥ ८६३

तेनोभयज्ञानस्यापि व्याकरणमेवोपाय इति, तद्गताभियोगविशेषाश्रयणम् ।

यत्तु प्रयोगोत्पत्तिशास्त्रत्वादिति लक्षणे तन्मूलासंभवादितरेतराश्रयत्वमुक्तम्, तत् लोकव्यवहारप्रसिद्धप्रतिपादकत्वमात्रेणाऽनिर्णीतपारमार्थिकवाचकत्वैरपि व्याकरणावयवभूतैः पदैः केषांचित्साधुत्वमन्वाख्याय, पुनस्तैरप्यन्वाख्यापकशब्दसाधुत्वनिर्णयात्परिहरिष्यते ।

यदि वाचकतैवाऽऽदौ न स्याद्व्याकरणादृते ।
न विज्ञायेत वा तत्र भवेदन्योऽन्यसंश्रयम् ॥ ८६४

निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात् ।
विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥ ८६५

तेन संकीर्णासंकीर्णवाचकज्ञानोपायत्वाल्लोकव्याकरणयोर्भिन्नविषयत्वेनाऽपुनरुक्तता, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमित चेत् ? न । अकृत्स्नविषयत्वात् ।

केचिद्व्यवस्थिता एव साधवो लोकवेदयोः ।
सर्वशाखागतान्विद्यात्को वा साधारणानपि ॥ ८६६

यथैव लौकिकप्रतिपदपाठस्याशक्यत्वम् एवं वेदेऽपि सर्वशाखागतान्सकृदपि श्रोतुमशक्तिः, किमुताध्येतुम् ।

प्रकृतिप्रत्ययानन्त्याद्यावन्तः पदराशयः ।
लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥ ८६७

एतेन पुरुषार्थक्रत्वर्थादृष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया, तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि ह्येकान्तेन 'तस्मान्न ब्राह्मणेन म्लेच्छितवै' 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति' 'तस्मादेषा व्याकृता वागुद्यते' इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितव्यमिति पौर्वापर्यव्यवस्था भवेत्, तत एवं पर्यनुयोगः प्रसज्येतापि व्याकृतत्वाश्रयो वेदविधिः, वेदविध्याश्रयं च व्याकरणं कथमवकल्पिष्यत इति ? यदा तु किंचिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकाला – भावादन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यातप्रतिषेधवर्जनषट्कस्या-

प्यवगम्यमानवेदविधिमूलत्वादनादित्वे सति, सर्वेषां वेदवेदि[1]यूपाहवनीयाध्वर्युगोदोहनादिस्वरूप-तत्कार्य-तत्साधनविधीनामिव सर्वदाऽनवगतपूर्वापरविभागसम्बन्धेऽत्यन्तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनम्, तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न किंचिदनुपपन्नम् ।

यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुताभावाद्वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वाद् गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधान्न भेर्यादिशब्दमातृकाक्षरपाठप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति ।

तत्राभिधीयते—

संमुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः ।
गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥ ८६८

लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति, तावदेव लोकव्यवहाराद्वाचकत्वज्ञानं जायते, यावद्व्याकरणानुगतत्वं नाभ्युपगम्यते ।

यदा तु तयोर्मार्गभेदेन प्रतिपत्तिः तदा 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् १–३–८' इत्युपन्यस्य 'शास्त्रस्था वा तन्निमित्तत्वात् १–३–९' इत्यनेनैवोत्तरेण व्याकरणाख्यशास्त्रगतप्रतिपत्तिबलीयस्त्वम्, तदभियुक्तपुरुषबलीयस्त्वं वापूर्वमेव स्थापितम् ।

तर्केणावाचकत्वं च वदल्लोकेन बाध्यते ।
स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत् ॥ ८६९

यथैव तुल्यशिरः पाण्याद्याकारेष्वपि संकीर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृसम्बन्धस्मरणादेव वर्णविवेकावधारणं भवति, तथा साधुशब्दावधारणमपीतिलोकविरोधाभावः ।

यथा च तुल्यपाण्यादिरूपत्वाद्वर्णसंकरम् ।
वदतः स्मृतिबाधः स्यात्तथा वाचकसंकरम् ॥ ८७०

आदितश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते ।
साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत् ॥ ८७१

यो नाम स्मृतिप्रतिपादितोऽर्थः कर्मफलसम्बन्धवदनियतकालत्वान्न ज्ञायते, कदा भविष्यतीति, सोऽत्यन्तं प्रत्यक्षाद्यविषयत्वात्केवलशास्त्रमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरणजनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि विचाराभ्यास-

---

१ क. वेदी ।

जनितसंस्कारस्य रागा[1]भ्यासजनितषड्जादिविभागविषयमिव साध्वसाधुशब्दरूपगोचरमुपजायते ।

तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् ।
तस्य प्रत्यक्षबाधोऽपि वर्णसंकरबाधवत् ॥ ८७२

तेनापशब्दगतवाचकत्वापादनस्यैव समस्तप्रमाणविरोधः शक्यो वक्तुम्, न स्मर्यमाणशब्दसाधुत्वपक्षस्येति निरवद्यता । तेनादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाधनत्वकृतमपि साध्वसाधुत्वज्ञानमुपपत्स्यते ।

यस्त्वाह साधुत्वं नेन्द्रियग्राह्यमित्यादिश्लोकम् ।

**भर्तृहरिणा वाक्यपदीयेऽभिहितस्य अर्थस्योपन्यासनिरासौ**

तं प्रत्येवं वक्तव्यम् ।

साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते ।
शास्त्रस्य विषयोऽप्येष प्रयोगोऽप्यस्त्यसंकरः ॥ इति । ८७३

ग्रस्तनिरस्ताम्बूकृतादिदोषवर्जितनियमह्रस्वादिकालाभिव्यङ्ग्ययथालक्षितक्रमग्राह्यवर्णानां स्मर्यमाणाविनष्टवाचकरूपविषयश्रोत्रज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् । तदुत्तरकालप्रवृत्तव्यवहारगतार्थप्रतिपत्तिसहितलक्षणगतप्रकृतिप्रत्ययलोपागमविकारादेशादिलिङ्गमप्यव्यभिचारि विद्यते ।

**साधुनियमप्रयोगनियमयोरभ्युपगमे पूर्वोक्तदोषपरिहारः**

शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकयज्ञोपकारसिद्धिसाधनभावप्रतिपादनार्थस्यार्थानर्थकार्यस्वरूपज्ञानार्थस्य चायमेवंविध एवान्योऽपि विषयः । अविनष्टैः शब्दैर्भाषमाणस्य स्वर्गयज्ञोपकारौ भवतः । याज्ञे च कर्मण्यपशब्दैर्भाषमाणस्यानृतमिव वदतः प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः । यथोक्तं "वाग्योगविद् दुष्यति चापशब्दैः" इति । एतौ द्वावप्यर्थौ न शास्त्रादृतेऽन्येन प्रतिपादयितुं शक्येते इति अतीवशास्त्रविषयः । द्वाभ्यामेव च विधिप्रतिषेधाभ्यासविनष्टैः शब्दैः स्वर्गयज्ञोपकारकामो भाषेत न विनष्टैरिति, न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः ।

**विधि-निषेधशेषतया स्वरूपप्रतिपादनपरस्यादिशास्त्रत्वम्**

न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यम्, न प्रमेयस्वरूपज्ञापनार्थेनेत्येतदीश्वराज्ञासिद्धम् । न हि 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इत्यादि 'चतुस्त्रिंशदाश्वीनानि, सरस्वत्या विनशनप्लाक्षप्रस्रवणे' इत्येवमादि-

---

१. रागाध्याय ।

वाक्यशेषाणाञ्च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते। नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वबाधः[1]।

अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति काचित्परिभाषा। तथाऽप्येवंविधाः साधुशब्दाः प्रत्येतव्या इतीदृशो विधिः संभवत्येव। यो[2] वाक्यान्तरावगतादृष्टफलार्थी यद्यविनष्टैः शब्दैर्भाषितुमिच्छेत्, स चैतानेवंरूपानेतत्क्रममात्रांश्च वर्णानुपाददीत, नाधिकान्न न्यूनांश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति, शास्त्रविषयत्वसिद्धिः। निःसन्दिग्धवृद्धबालप्रयुक्तदेवदत्तदत्तादिशब्दोपमयाऽपि च सर्वशब्दानां विनष्टाविनष्टरूपैरवश्यं भवितव्यमिति शक्यं विज्ञातुम्। एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विधलौकिकाविनष्टत्वोपमानं दर्शयितव्यम्।

## अर्थापत्त्याऽपि साधुत्वसमर्थनम्

तथा लौकिकार्थप्रत्ययोत्थापितवाचकत्वार्थापत्तिलभ्यस्तावदेकः साधुत्वनिश्चयः। ततः संभवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितकेवलसाध्वन्वाख्यानस्यान्यथानुपपद्यमानत्वादपरयाऽप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम्।

अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते।
लक्षणाभावमार्गेण तस्याभावोऽपि निश्चितः॥ इति॥ ८७४

षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये।
व्यापारोऽस्तीति को जल्पेत्साधुत्वं निष्प्रमाणकम्॥ ८७५

यद्यप्यनभियुक्तानां प्रयोगोऽस्ति ससंकरः।
अभियुक्ता विवेक्ष्यन्ते तथाऽपि ब्राह्मणादिवत्॥ ८७६

यथा च पद्मरागादीन्काचस्फटिकमिश्रितान्।
परीक्षका विजानन्ति साधुत्वमपरे तथा॥ ८७७

यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षम्।
तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम्॥ ८७८

पौरुषेयव्याकरणागमपरम्परायामपि च तदनुगतसाधुत्वानन्तरदर्शनात् पूर्वदृष्टविवेकज्ञानमात्रपरत्वाद्वा नान्धपरम्परावचनन्यायप्रसङ्गः। यावानिह दृष्टार्थांशः स वैदिकविधिप्रतिषेधद्वयादेवोपपन्नः। तत्सिद्ध्यर्थाविनिष्टरूपाज्ञानं वेदशिष्टप्रयोगसंवादिव्याकरणान्वाख्यानपारम्पर्येण सद्यः फलत्वात्सुलभमिति न पुरुषकृतत्वनिमित्तदोषप्रसङ्गः।

---

१. क. वाच्यत्वं बाधः। २. क. यद्वाक्यान्तरा।

यत्तु दृष्टार्थत्वात्स्वसामर्थ्यप्राप्तत्वादेव 'अप्राप्ते शास्त्रमर्थवत्' ६-२-४ इति वाचकभाषणविधानमनुपपन्नमिति तत्राधिकरणेनैवोत्तरं 'नियमार्था[1] वा श्रुतिरुच्यते' ४-२-२३ इति ।

यत्त्ववाचकत्वेनापशब्दानामप्रसङ्गाद्व्यावर्त्याभावे नियमानुपपत्तिरिति ।

तत्रोच्यते—नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते ।
नित्यतामात्रकारी तु नियमः किं न लभ्यते ॥ ८७९

सति भाषितव्ये कदाचिदविनष्टेन भाषेत, कदाचित्प्रमादाशक्तिजापभ्रंशेनाप्यक्षिनिकोचनादिना वा शब्दरहितेनैव प्रत्यापयेत् ।

अत्र श्रेयोऽर्थिनोऽवश्यं साधुभाषा नियम्यते ।
नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति ॥ ८८०

यद्यपि च नियमेऽन्यनिवृत्तिरवश्यं कल्पनीया, तथाऽपि साधुशब्दस्मृतिव्यवहितानां कालरूढरूपभ्रान्तिवाचकत्वगृहीतानां चापशब्दानां संभवति[2] प्रयोगप्रसङ्गे साधुनियमेन व्यावृत्तिः ।

अथ वा नैवापशब्दानमपृथक्त्वे केचिदेकक्रियाविषयानेकद्रव्यगुणादिवदभिधायां प्राप्नुवन्ति ये साधुनियमेन व्यावर्त्येरन् ।

किं तु—साधूनेव प्रयुञ्जाना नाशयेयुरयत्नतः ।
मा[3] विनीनशदित्येवं नियमस्तान्नियच्छति ॥ ८८१

तद्यथा 'यो विदग्धः, स नैर्ऋतः' इत्येवमादिदोषनिन्दापूर्वकम् 'अविदहता श्रपयितव्यः' इति नियम्यते, तथा 'दुष्टः शब्दः स्वरतो वर्णतो वा' इत्यादिना निन्दितत्वात्, 'तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति प्रमादादिनिमित्तविनाशेन शब्दकार्यादर्थसाधनादपेतोऽयं म्लेच्छः, 'म्लेच्छ अव्यक्तायां वाचि, इति स्मरणात्स न प्रयोक्तव्य इति प्रतिषेधः । 'तस्मादेषा व्याकृता वागुद्यते' इति च विधिरविनष्टप्रयोगनियमार्थः ।

ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये ।
परिहर्तुमशक्यत्वान्निषेधस्याप्यगोचराः ॥ ८८२

उच्यते—प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च ।
एवमर्थो निषेधोऽयं नाऽऽद्रियेताऽन्यथा ह्यसौ ॥ ८८३

अन्ये सुखमुखारूढा न क्लेशेन विवक्षवः ।
शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः ॥ ८८४

---

१. क. नियमार्था श्रुति ।    २. क. सम्भविनि ।    ३. क. माविनीनश ।

अशक्तैर्नाशिताश्चान्ये दाक्षिण्याद्यनुवर्तनात् ।
जानन्तोऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत् ॥ ८८५
अन्येऽपि प्राकृतालापैरशक्तैर्व्यवहर्तृभिः ।
सह व्यवहरन्तस्तानुपेत्यापि प्रयुञ्जते ॥ ८८६
तत्कथं नाम यत्किंचित्स्यादपभ्रंशकारणम् ।
दूरात्परिहरेयुस्तदिति यत्नो नियम्यते ॥ ८८७

यत्तु दृष्टार्थप्रत्यायननिराकाङ्क्षत्वाददृष्टार्थप्रयोगोत्पत्त्यशास्त्रत्वमिति ।

तत्रोच्यते—दृष्टे सत्यपि सर्वत्र नियमादृष्टमिष्यते ।
क्रत्वर्थं पुरुषार्थं च तत्संयोगपृथक्त्वतः ॥ ८८८

'एकस्य तूभयत्वे संयोगपृथक्त्वं'[1] ४-३-५ तच्चेह प्रकरणानारभ्यवादाभ्यामवगतम् । तत्र—

क्रत्वर्थांशे परार्थत्वादर्थवादः फलश्रुतिः ।
पुरुषार्थे तु निर्देशात्फलमात्रेयदर्शनात् ॥ ८८९

क्रत्वर्थं ह्यनिर्ज्ञातोपायत्वात्सर्वादृष्टोपसंग्रहक्षममिति नियमापूर्वमात्मसात्कुर्वत्पुरुषार्थांशे फलश्रुतिमर्थवादीकरोति । पुरुषार्थस्य नियमस्य त्ववश्यकल्पनीयप्रयोजनत्वादर्थप्रतिपत्तेश्चापभ्रंशेऽप्यक्षिनिकोचादिभ्यो वा सुतरां सिद्धत्वादनाकाङ्क्षितनियमापूर्वोपजीवनसामर्थ्यं नास्तीत्यवश्यमर्थवादोपात्तमेव स्वर्गलोके कामधुगाद्येव फलत्वेनाऽऽश्रयणीयम् ।

यत्तु न ज्ञायते क्वेदं नियमापूर्वमाश्रितमिति, तत्राभिधीयते—

### नियमापूर्वस्याश्रयनिरूपणम्

क्रत्वर्थं तावदङ्गेषु तदर्थेष्वेव संश्रितम् ।
अनङ्गत्वाभिधानार्थं स्यात्क्रत्वर्थं नराश्रितम् ॥ ८९०

'प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो (४-३-१८) द्रव्यवत्' इति हि ज्योतिष्टोमप्रकरणगतब्राह्मणशब्दलक्षिततदपूर्वसाधनयजमानसंस्कारत्वात्साधुभाषणनियमापूर्वस्य । 'याजमानास्तु तत्प्रधानत्वात्कर्मवत्' (३-८-२) इत्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तदाश्रितमेव विज्ञायते । पुरुषार्थवाक्येऽपि सम्यग्ज्ञातसुप्रयुक्तत्वाक्षिप्तज्ञातृप्रयोक्तृपर्युपस्थापनात्क्रियाफलयोश्च तद्गामित्वात्प्रधानयागाद्यपूर्ववदेव ज्ञातृप्रयोक्त्राश्रितं निष्पद्यते ।

### तत्रैव दृष्टान्तप्रदर्शनम्

तृतीयोक्तिक्रियागम्यगुणभावेऽपि वक्तरि ।
संस्कार्यत्वात्प्रधानत्वं स्यात्प्रयाजाज्यशेषवत् ॥ ८९१

---

१. क. पृथक्त्वंकारणं ।

तथैव 'प्रयाजशेषेण हवींष्यभिधारयति' इत्ति सत्यपि शेषस्य तृतीयानिर्देशे, कार्योपयोगित्वात्संस्कार्यत्वावधारणम् । एवं ब्राह्मस्यापीत्यदोषः ।

यदि वा ब्राह्मणेनेति तृतीया यागकारिणि ।
कामधुक्शब्दयोगाच्च बहिःप्राधान्यकल्पना ॥ ८९२
नैव म्लेच्छनकारित्वात्तृतीयेयं प्रतीयते ।
कुर्वता यागमित्येवं ब्राह्मणेनेति योज्यते ॥ ८९३
यागे यो गुणभावश्च संस्कारे सा प्रधानता ।
न ह्यारादुपकारित्वं संयुक्तस्योपयोगिता ॥ ८९४

तच्चोपयोगित्वं प्रकरण-तृतीयाविभक्तिश्रवणाभ्यामवगतं शेषस्वीकरणसमर्थं भवति । बाह्यपुरुषार्थत्वेऽपि कामधुक्शब्दस्य पुरुषोपभोग्यकाम्यमानार्थसाधन-वचनत्वात्पुरुषप्राधान्यप्रतिपत्तिः[1] । यद्यपि च साधुशब्दोच्चारणमुच्चारयित्रर्थम्, क्रत्वर्थं च न भवति, तथाऽपि तद्गतनियमप्रतिषेधयोरेव क्रत्वर्थपुरुषार्थत्वे भविष्यतः । न हि यदर्थे कर्मणि यौ नियमप्रतिषेधौ, तावेव केवलौ तदर्थौ भवतः ।

तथा हि—स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ ८९५
क्रत्वर्थात्खादिराच्चेष्टा वीर्यसिद्धिर्विधानतः ।
भोजनाच्चाप्यतिथ्यर्थादपूर्वं दातृसंश्रितम् ॥ ८९६

अतश्च परार्थोच्चारणाश्रितावपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां संनिहितपुरुषप्रधानौ विज्ञायेते ।

अतश्च वेदमूलत्वे सत्येवं प्रतिपादिते ।
प्रयोगोत्पत्त्यशास्त्रत्वं यदुक्तं तदसत्कृतम् ॥ ८९७
यच्चास्य कृतिमत्त्वेन स्वतः शास्त्रत्वबाधनम् ।
तत्प्रसिद्धिविरुद्धं स्यादचन्द्रशशिवाक्यवत् ॥ ८९८

### शास्त्रशब्दस्य रूढ्या योगेन च व्याकरणस्य ग्रहणम्

शास्त्रशब्दो यदि तावद्रूढः ततश्चतुर्दशसु तावद्विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धः तदन्तर्गतत्वाच्च व्याकरणस्य शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यतेऽनेनेति शास्त्रत्वमन्वर्थमिष्यते, तथाऽपि व्याकरणेन साधुशब्दाः शिष्यन्ते, तदनुगमोपाया वा प्रकृतिप्रत्ययादयः तदभियुक्तशिष्यजनो वेति सर्वथा शास्त्र-शब्दप्रवृत्तिरविहता ।

---

१. क. पुरुषोपयोग्य ।

प्रसिद्धमपि शास्त्रत्वं यस्तु तर्केण वारयेत् ।
वेदस्यापि स नित्यत्वाद् व्योमवद्वारयिष्यति ॥ ८९९

### सदृष्टान्तं व्याकरणस्य शास्त्रत्वनिषेधे परिहारकथनम्

यथैव हि व्याकरणादीनां कृत्रिमकाव्योपनिबन्धसाधर्म्याच्छास्त्रत्वं प्रतिषेद्धुमध्यवसीयते, तथाऽऽकाशदिक्कालात्मनां[1] परमाणुदृष्टान्तबलेन नित्यत्वाद्वेदशास्त्रत्वमप्ययत्नेनैव क्रियेत । यो हि नागरिकभाषाभिज्ञतया ग्रामीणैर्मातापितरावपि शुक्लवचनैरभिदधीत, स केनान्येन वार्येत ।

परत्राविनयं कुर्वन्पितृभ्यां वार्यते सुतः ।
तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥ ९००
तथा बहिरसंबद्धं वदन्वेदेन वार्यते ।
साङ्गेन तं पुनर्निघ्नन्केनान्येन निवार्यते ॥ ९०१

क्रुद्धो यो नाम यं हन्ति स तस्याङ्गानि कृन्तति ।
कृत्ताङ्गस्य[2] ततस्तस्य विनाशः कियता भवेत् ॥ ९०२
तेन त्रयी द्विषन्पूर्वं वेदाङ्गान्येव लुम्पति ।
ततस्तेनैव मार्गेण मूलान्यस्य कृन्तति ॥ ९०३

श्रुतिस्मृतिप्रमाणत्वे हेतुपूर्वं निरूपिते ।
अङ्गानामप्रमाणत्वमशास्त्रत्वं च को वदेत् ॥ ९०४

### व्याकरणस्य स्मृतिभिर्वैषम्येऽपि वेदमूलत्वेन व्याकरणान्तरेण साम्यम्

यत्त्वितरस्मृतीनां प्रायेण सारूप्याद्व्याकरणस्य तद्विलक्षणत्वात्तन्मध्यपातित्वमसंभाव्यमिति । तत्रोच्यते—सर्वधर्मसूत्राणां वर्णाश्रमधर्मोपदेशित्वाद्धर्माणां चैकरूपप्रायत्वात्परसंवादित्वं युक्तम् । व्याकरणस्य त्वन्य एव साधुशब्दतत्त्वनिर्णयरूपो विषयः । तत्रास्य व्याकणान्तरेणैव संगतिः स्यात् न धर्मसूत्रैः । स्मृतित्वं त्वङ्गानाम्, धर्मसूत्राणां चाविशिष्टम् ।

अथापि स्मृतिशब्देन नाङ्गानामभिधेयता ।
तथाऽप्येषां न शास्त्रत्वप्रमाणत्वनिराक्रिया ॥ ९०५

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥ ९०६

इति हि तुल्यवत्प्रामाण्यस्मरणम्—

अपि वा कर्तृसामान्यादुक्तो न्यायश्च यः स्मृतेः ।
प्रमाणत्वे समानोऽसौ वेदाङ्गेष्वपि गम्यते ॥ ९०७

---

१. क. कालात्मनः । २. क. कृन्ताङ्गस्य ।

प्रमाणषट्कमूलत्वं पूर्वं चैषां प्रदर्शितम् ।
दृष्टादृष्टफलत्वेन तस्मान्नास्त्यप्रमाणता ॥ ९०८

एकस्य च यदा युक्त्या समूलत्वं निरूपितम् ।
पौरुषेयान्तरग्रन्थमूलताऽपि तदेष्यते ॥ ९०९

असंभावितमूलं हि पौरुषेयं यदुच्यते ।
मूले तस्याप्रतिष्ठत्वं रूपे जात्यन्धवाक्यवत् ॥ ९१०

इह तु समूलत्वादेकान्तरितप्रामाण्यसिद्धिः ।

### सूत्र-वार्त्तिक-भाष्यकाराणां विगानस्य परिहारः

यत्तु सूत्रवार्तिकभाष्यकाराणामन्योन्यविगीतवचनत्वादप्रमाणत्वमिति ।

तत्राभिधीयते—

स्मृतीनामप्रमाणत्वे विगानं नैव कारणम् ।
श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते ॥ ९११

विगीतवाक्यमूलानां यदि स्यादविगीतता ।
तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्ययात् ॥ ९१२

मूलानुरूप्येण हि स्मृतीनां प्रमाणत्वं तदविगानेन—

परस्परविगीतत्वमतस्तासां न दूषणम् ।
विगानाद्धि विकल्पः स्यान्नैकत्राप्यप्रमाणता ॥ ९१३

धर्मसाधनतांशे च विगानं नैव विद्यते ।
अन्वाख्यानविगानं तु लक्ष्यभेदान्न दुष्यति ॥ ९१४

### सूत्रप्रत्याख्यानस्य समाधानम्

पुनरुक्तत्वादिना हि यत्सूत्रप्रत्याख्यानम्, तस्य च पुनः समाधानम् ।

यस्यावैदिकमूलत्वान्न किंचिदपि दुष्यति ।
ये चापीष्ट्युपसंख्याने ते च स्मृत्यन्तराश्रिते ॥ ९१५

न चाधिकोपसंख्यानान्न्यूनस्यास्त्यप्रमाणता ॥ ९१६

तद्यथा—वाजसनेयिशाखायामाध्वर्यवं चरकशाखासु च बह्वित्येतावता नाल्पविषयप्रमाणीकुर्वन्ति । तस्मादयमपि न दोषः ।

यस्तु सूत्रकारस्य प्रयोजनानभिधानोपालम्भः ।

स श्रुतिस्मृतिसिद्धत्वान्नोपालम्भत्वमर्हति ।
ग्रन्थान्ते च स्वसंवेद्यं सुज्ञानं तत्प्रयोजनम् ॥ ९१७

### सत्यं ब्रूयादित्यास्मृतिविहितस्य सत्यद्वयस्य निर्वचनम्

सत्यवचनं च सर्वश्रुतिस्मृतिषु स्वर्गसाधनत्वेन, यागसाधनत्वेन च नियतम्। सत्यं च द्विविधं शब्दसत्यम्, अर्थसत्यं च। तत्र यथैव यथावस्थिताविप्लुतार्थवचनं श्रेयःसाधनम्, एवं यथावस्थितशब्दसत्यवचनमपि, यथा चार्थसत्यविपर्ययः प्रत्यवायाय एवं विनियोगकालप्रयुक्तशब्दानृतवचनमपि। शब्दसाधुत्वज्ञानं च व्याकरणाभियोगविशेषादित्युक्तम्।

तस्माद्विज्ञायमानत्वान्नोक्तं मूलकृता स्वयम्।
शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥ ९१८

न च व्याकरणप्रयोजनाभिप्रायं प्रति केचिद्विवदन्ते। स त्वभिप्रायः किं न्याय्यः नेत्यर्थान्तरमेतत्।

धर्माय नियमं चाऽऽह वाक्यकारः प्रयोजनम्।
वेदमूलस्तु तत्रैक एको व्याकरणाश्रयः ॥ ९१९

### साधुनियमप्रयोगनियमार्थाय व्याकरणम्

नियमद्वयप्रयुक्तं व्याकरणम्। साधुशब्दज्ञानात्तत्पूर्वप्रयोगाद्वा। स्वर्गयज्ञोपकारसिद्धिरित्येतत्तावद्वेदमूलम्, अनन्यप्रमाणकत्वात्। अतश्चायं तावद्वेदाख्येन शास्त्रेण धर्मनियमः।

तथा व्याकरणाख्येन साधुरूपं नियम्यते।
अविशेषेण सिद्धि स्याद्विना व्याकरणस्मृतेः ॥ ९२०

तेन वेदावगतसम्यग्ज्ञातसाधुशब्दप्रयोगात्मकधर्माङ्गत्वेन व्याकरणप्रक्रियेतिकर्तव्यतया नित्यवाचकशब्दरूपज्ञाननियमः क्रियते।

### वार्त्तिकभाष्यकारयोः परिहारं कृत्वाचिन्तान्यायेन

यच्च कात्यायनेन ज्ञाने धर्म इति चेत्तथाऽधर्म इति तन्त्रेण, प्रसङ्गेन वाऽपशब्दज्ञानादधर्मत्वापत्तिदोषमभिधाय[1], शास्त्रपूर्वप्रयोगेऽभ्युदय इति निःश्रेयससिद्ध्युपायेऽवधारिते, यत्पुनः परावृत्य भाष्यकारेणोक्तम्, 'अथ वा पुनरस्तु ज्ञाने धर्म इत्यभ्युपेत्यवादमात्रम्, तत्–पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थं कृत्वाचिन्तान्यायेनोक्तम्। परमार्थतस्त्वन्यानर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात्फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते। यथा 'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत्, को जातुचिद्बहुद्रव्यव्ययायाससाध्यमश्वमेधं[2] कुर्यात्। तद्विधानं चानर्थकमेव स्यात्। एवं शब्द-

---

१ क. वापशब्दज्ञानादथधर्मत्वापत्ति। २ क. क्षयव्यया।

ज्ञानाच्चेद्धर्मः सिध्येत्, को नामानेकताल्वादिव्यापारायासखेदमनुभवेत्। तस्मात्क्रतुवदेव ज्ञानपूर्वप्रयोगस्यैव फलं कारणे कार्यवदुपचारात्तण्डुले देववर्षणवज्ज्ञाने धर्मवचनमापादिताधर्मपरिहाराभिधानशक्तिमात्रप्रदर्शनार्थमेवोपन्यस्तम्, न फलवत्त्वप्रतिपादनाय। 'द्रव्यसंस्कारकर्मसु परार्थत्वात्' (४-३-१) इत्यनेन न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसम्बन्धासम्भवात्।

### आत्मज्ञानस्याभ्युदय-निःश्रेयसफलकत्वेन अप्रकरणस्थत्वेनार्थवादत्वमितिवर्णनम्

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥ ९२१

आत्मज्ञानं हि संयोगपृथक्त्वात्क्रत्वर्थपुरुषार्थत्वेन ज्ञायते तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसम्भवात्।

तथा 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' तथा 'मन्तव्यो बोद्धव्यः' 'तथाऽऽत्मानमुपासीत' इति कामवाद-लोकवाद-वचनविशेषैर्जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्तस्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदयनिःश्रेयसरूपफलसम्बन्धः, 'स सर्वांश्च लोकानाप्नोति, सर्वांश्च कामानाप्नोति तरति शोकमात्मवित्, तथा स यदि पितृलोककामो भवति, संकल्पादेवास्य पितरः समुत्तिष्ठन्ति, तेन पितृलोकेन संपन्नो महीयते' इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि।

तथा 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते, न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम्। अप्रकरणगतत्वेनानैकान्तिकक्रतुसम्बन्धासम्बन्धाच्च नाञ्जन-खादिर-स्रुव-वाक्यादिफलश्रुतिवदर्थवादत्वम्।

न च ज्ञानविधानेन कर्मसम्बन्धवारणम्।

प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि। न च तेषां भिन्नप्रयोजनत्वाद् भिन्नमार्गत्वाच्च बाध-विकल्प-परस्पराङ्गाङ्गिभावाः संभवन्ति। शब्दज्ञानस्य त्वेकान्तेन प्रयोगाङ्गत्वात्पूर्वतरभावित्वाच्च न पृथक् फलसम्बन्धसम्भव इति ज्ञानपूर्वप्रयोगफलवत्त्वमेव निश्चीयते।

### आदिमद्व्याकरणस्यानादिविधिमूलकत्वं व्यवहारनित्यतामादायोपपत्तिः

यत्त्वादिमद्व्याकरणज्ञानतत्पूर्वकप्रयोगफलसम्बन्धोऽनादिविधिमूलो नावकल्पत इति। तत्र यूपादिकरणवद्व्याकरणपरम्परानादित्वादनुपालम्भः। 'तस्मादेषा व्याकृता' इति च व्याकरणव्यवहारनित्यत्वमुक्तम्।

न चैषा सम्प्रदायेन व्याकृतेत्यभिधीयते ।
तत्र ह्युच्यत इत्येव व्याकृतेति तु निष्फलम् ॥ ९२२

यद्यपि च मनुना पङ्क्तिपावनमध्ये वेदादेवोपलभ्योक्तं 'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्' इति । तेनापि पर्वपश्चादुक्ताधीतवेदत्व-यज्ञमीमांसन-व्यतिरिक्तविषयेण सताऽवश्यमेतदेव व्याकरणज्ञानमाश्रयितव्यमिति तन्नित्यत्व-सिद्धिः ॥ २७-२८-२९ ॥

(इति व्याकरणाधिकरणम् ॥ ८ ॥)

न्या० सु०—भाष्यकृता पदोत्तरत्वेन सूत्रं व्याख्यातुं कथं पुनरित्याशङ्कितम् । तद्व्याचष्टे—तुल्येति । ततश्च पुनरपि अगृह्यमाणविशेषत्वात् सर्वेषां वाचकत्वमापद्येतेतेत्याशयः । शक्यमित्याहेति भाष्येणैवदाशङ्कानिरासार्थत्वेनैतत्सूत्रमवतारितं तद्व्याचष्टे—अत आहेति । अत्रार्थिनोऽभियुक्ता भवन्तीत्यादिभाष्याददृष्टार्थिनामार्याणां शब्दार्थविषयादरविशेषात्तदुपदेशे वाचकतत्त्वावधारणकारणमित्याभाति । तच्च गाव्यादिशब्देष्वप्यार्योपदेशतुल्यत्वादयुक्तमितिमत्वाऽर्थविशेषप्रतिपिपादयिषया पृच्छति—कःपुनरिति । अभियोगतद्विशेषशब्दयोः प्रकृतोपयोगिनमर्थमाह—तदुच्यत इति । शब्दपरोऽभियोग इति निर्देशः । लक्षणस्य व्याकरणस्य यच्छ्रवणम्, तदभ्यासनिमित्तः तं वा विषयीकृत्याभियोगशब्दः प्रवर्त्तते लक्षणश्रवणाभ्यासोऽत्राभियोगशब्देनोक्त इत्यर्थः । यल्लक्ष्यमुदाहरणीकृत्य लक्षणश्रवणमभ्यस्तं तद्व्यतिरिक्तानान्तुल्यन्यायानां लक्ष्याणां तेन लक्षणश्रवणाभ्यासेन ज्ञानमभियोगविशेषः फलेन तद्धेतोरभ्यासातिशयस्य लक्षणाल्लक्षणश्रवणाभ्यासातिशयोऽभियोगविशेष इत्युक्तं भवति । ननु प्रतिपदपाठेनैव वाचकत्वनिरूपणसिद्धेर्न लक्षणश्रवणाभ्यासातिशयापेक्षेत्याशङ्कां निरस्य तृतीयस्य प्रश्नस्योत्तरमाह—प्रतिपदेति ।

ननु प्रतिपदपाठस्याभ्यासत्वेऽपि—

वेदाद्नो वैदिकाः सिद्धाः लोकाच्चैव हि लौकिकाः ।

अनर्थकं व्याकरणमिति न्यायेन लौकिकवैदिकप्रयोगसिद्धत्वाद्वाचकतत्त्वनिरूपणस्य न व्याकरणापेक्षेत्याशङ्क्याह—तस्मादिति । वाचकसामस्त्याज्ञानत्वावाचकत्वनिश्चयोऽपि न सम्भवतीत्याह—तत्सामस्त्येति । ननु वाचकसामस्त्यज्ञानेऽपि कथमवाचकनिश्चयः स्यादित्याशङ्क्याह—लक्षणेति । सूत्रार्थमुपसंहरति—तेनेति ।

सूत्रं व्याख्याय, पूर्वपक्षोक्तानि दूषणानि परिहरिष्यन्पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेरित्यादिनोक्तमितरेतराश्रयमनुभाषणपूर्वकं परिहरति—यत्त्विति । प्रयोगोत्पत्त्यशास्त्रत्वादित्यनेन लक्षणशास्त्रस्य तन्मूलशास्त्रस्य वा लोकप्रसिद्धपदप्रयोगादुत्पत्तेः प्रयोगनियामकत्वासम्भवादितरेतराश्रयत्वं यदुक्तम्, तद्यदि तावन्निर्णीतवाचकत्वैः पदैरन्वाख्यानम्, अन्वाख्यानाच्च वाचकत्वनिर्णय इत्येवं रूपमभिप्रेतम् ततो वाचकत्वानिर्णयेऽपि प्रतिपादकत्वमात्रेणान्वाख्यायकत्वोपपत्तेः सुपरिहरमित्यर्थः ।

ननु च कुत्वं कस्मान्न भवतीत्यादिलक्षणानुगमदर्शनाद्व्याकरणावयवभूतेष्वपि पदेषु साधुत्वनिर्णयेन भाव्यमित्याशङ्क्य—पुनस्तैरपीत्युक्तम् । अथ लक्ष्याणां शब्दानां साधुत्वे सत्यन्वाख्यानमन्वाख्यानाच्च साधुतेतीतरेतराश्रयमभिप्रेतं तत्राह--यदीति । न त्वेतदस्तीति शेषः । ननु व्याकरणात्प्रागेव साधुत्वज्ञाने व्याकरणानर्थक्यं स्यादित्याशङ्क्याह—निर्ज्ञानेति । श्लोकं व्याचष्टे—तेनेति । ननु लौकिकशब्दानां सङ्कीर्णत्वाद्भवत्वन्वाख्यानमर्थवद्वैदिकानां त्वसङ्कीर्णत्वादनर्थकमित्याशङ्कते—वेद इति । अनेन च नवाश्रितप्रतिपदपाठानां लक्षणं न कार्यमित्यादिनोक्तमानर्थक्यं प्रसङ्गात्परिहारायाऽनुभाषितं सर्वसाधुशब्दानां वेदे प्रयोगे सति व्याकरणानर्थक्यं स्यात्कृत्स्नसाधुशब्दविषयत्वाभावात्तु वेदस्य तदनुगतशब्दान्वाख्यानार्थं व्याकरणं भविष्यतीति परिहरति ॥ २७ ॥

न्या० सु०—भाषायामित्यधिकृत्यानुगतानां लोकविषयत्वाच्छन्दसीत्यधिकृत्यानुगतानां च वेदविषयत्वान्न वेदस्य कृत्स्नविषयतेत्युपपादयति—केचिदिति । तेन लोकव्यवस्थितानां तावल्लक्षणमर्थवदित्याशयः । कृत्स्नसाधारणसाधुशब्दविषयत्वस्याप्येकस्यां शाखायामभावात्सर्वशाखागतानां चाध्ययनाशक्तेः शाखान्तरगतसाधारणशब्दानामप्यपभ्रंशेभ्यो विवेकाय लक्षणमर्थवदित्याह—सर्वेति । एतदेव विवृणोति—तथैवेति । अशक्तावानन्त्यं कारणमाह—प्रकृतीति । इत्थं निर्णीतवाचकत्वैः पदैरन्वाख्यानमन्वाख्यानाच्च वाचकत्वनिर्णय इत्येवं रूपे लक्ष्याणां शब्दानां साधुत्वे सत्यन्वाख्यानमन्वाख्यानाच्च साधुतेत्येवं रूपं वा लक्षणगतेऽन्योन्याश्रये परिहृते यदि कश्चिद्व्याकरणमूलभूतो वैदिको विधिर्व्याकरणाश्रयो वेदविद्ध्याश्रयं च व्याकरणमित्येवं रूपम् । तस्मान्न ब्राह्मणेन म्लेच्छितवा इत्यादिलक्षणमूलगतमितरेतराश्रयं ब्रूयात् तत्राह—एतेनेति ।

पुरुषार्थं यत्स्वर्गे लोके कामधुग्भवतीति प्रतिपादितम् अदृष्टं साध्यं क्रत्वर्थं च ब्राह्मणेन न म्लेच्छितवा इतिज्योतिष्टोमप्रकरणाधीतवाक्यकल्पव्याकृता वागुद्यत इत्यनारभ्याधीतवाक्यकल्पं वा, यत्साध्यम्, यच्च साधुशब्दप्रयोगाख्यम्, साधुशब्दज्ञानाख्यं वा साधनं तयोर्यत्साध्यसाधनभावविधायकं वाक्यं तद्गतानां शास्त्रान्वितादिपदानां वा या व्याक्रिया, तस्याश्च या पूर्वप्रसिद्धविधिवाक्यमूलत्वकल्पना त्वयेष्टा, तस्याश्च तद्वाक्यमूलत्वे वेदविधितः प्राक्सिद्धत्वकल्पनापत्तेस्तदाश्रयो वेदविधिः, तस्याश्च तन्मूलत्वकल्पना तदाश्रया सेतीतरेतराश्रयत्वस्य यः प्रसङ्गः शक्यते एतेन प्रासाङ्गिकानर्थक्यपरिहारसमाधानस्याबुद्धिस्थेन लक्षणगतेनेतरेतराश्रयत्वपरिहारन्यायेन प्रत्युक्त इत्यर्थः । एतदेव व्यतिरेकदर्शनपूर्वकं विवृणोति—यदि हीति । अन्वाख्यानं प्रकृत्यादिविभागेनाख्यानम् । अन्वाख्येयाः साधुशब्दाः अन्वाख्यातानां विधिः—व्याकृता वागुद्यत इत्यादिप्रयोगो व्यवहारकाल इति चतुष्टयं साधुशब्दविषयं ब्राह्मणेन न म्लेच्छितवा इत्यन्वाख्यातानां प्रतिषेधः व्यवहारकाले वर्जनम्, चेत्यसाधुविषयं द्वयमिति षट्कस्याप्यनादित्वे सति सर्वेषामन्वाख्यानादीनां सर्वदाऽनवगतपूर्वापरविभागसम्बन्धे सति यदात्यन्तादृष्टार्थत्वमात्रमेषां शास्त्रीयप्रत्ययाधीनं न स्वरूपम्, तदा सर्वकालव्याक्रियमाणत्वेन विद्यमानस्य शब्दस्य यो नियमविधिस्तयेत्यर्थः, निषेधोऽपि विधिशब्देनोपलक्षितः

तयोरनादित्वेऽवगम्यमानश्चासौ वेदविधिश्चेति वेदविधित्वेनावगम्यमानत्वं हेतुः। इतरेषामवगम्यमानो वैदिको विधिर्मूलं येषामित्यवगम्यमानवेदविधिमूलत्वं वैदिकस्य विधेरनादित्वाक्षेपकत्वे वेदादीनां स्वरूपविषयः कार्यविषयः साधनविषयश्च दृष्टान्तिताः।

ध्वनिमात्राण्यसाधूनीत्यादिना गाव्यादीनामवाचकत्वस्य लोकविरुद्धत्वं यदुक्तं तत्परिहारायानुभाषते—यस्त्विति। भेर्यादिशब्दश्च मातृकाक्षपाठश्च प्रसिद्धानि च न्यूनवर्णान्यतिरिक्तवर्णानि विपर्यस्तवर्णानि च यानि पदानि तद्व्यतिरिक्ता ये प्रसिद्धा गाव्यादयः शब्दाः। तेषां मध्य इत्यर्थः। परिहरति—तत्रेति। एकार्थविषयेषु सदृशशब्देष्वेकस्य शक्तौ क्लृप्तायामितरेभ्यस्तदशक्तिजत्वेनापि प्रतीत्युपपत्तेरेकस्यैव शक्तिरिति निर्णीतेऽपि, कस्यैकस्येत्यनिर्णयात्संमुग्धवाचके लोके सत्यविरुद्धो लक्षणाद्वाचकनिर्णयः। यदि तु लक्षणमनादृत्यागृह्यमाणविशेषत्वात्सर्वेषां वाचकत्वं कश्चिद्वदेत्तं प्रति स्मृत्याचारबाधो वाच्य इत्यर्थः। श्लोकं व्याचष्टे—लोकेति। नन्वेवं सत्यवाचकत्वप्रतिज्ञाया लोकविरोधः प्रथमपादे कथमुक्त इत्याशङ्क्याह—तर्केणेति। सम्बन्धग्रहणात्पूर्वं यस्मान्न गमयत्यतः गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथेत्यनुमानस्य लोकेऽपेक्षितवाचकावाचकविवेकहेतुत्वाभावाल्लोकविरोधः। स्मृतेस्तु तदपेक्षितविवेकहेतुत्वादविरोध इत्याशयः। दृष्टान्तं विवृणोति—यथैवेति। वर्णविवेकावधारणस्य प्रत्यक्षत्वेनोक्तत्वात्स्मरणादेवेत्यवधारणं सहकार्यान्तरमात्रनिवृत्त्यर्थं लोकविरोधाभाव इत्यनेन स्मर्यमाणस्य तु वाचकावाचकविवेकस्य ब्राह्मणादिविवेकस्येव न लोकविरोध इति नञध्याहारेणोत्तरार्द्धं योजितम्। विपरीतबाधप्रतिपादकत्वं नाध्याहारं विना स्मर्यमाणेन विरोधो बाध इत्येवमन्यथा व्याचष्टे—यथा चेति। स्मृत्या बाध इति विग्रहः। ननु निर्मूलत्वात् स्मृतेर्न बाधकत्वं युक्तमित्याशङ्क्याह आदितश्चेति। प्रमाणमूलत्वेन स्मृतेर्बाधकत्वोपपादनायादितः—स्मृतेरित्युक्तम्। कुतः सिद्ध इत्यपेक्षिते—प्रत्यक्षेणेत्युक्तम्। नन्ववैयाकरणैरनवगमान्नास्य प्रत्यक्षता युक्तेत्याशङ्क्य—कुशलैरित्युक्तम्। यथा मातापितृसम्बन्धस्मृतिकुशलैर्ब्राह्मणादिभिर्ब्रह्मभेदोऽवगम्यते, तथा प्रकृतिप्रत्ययाख्यानकुशलैः साध्वसाधुविभाग इत्यर्थः। यद्यप्यर्थप्रत्यायनाङ्गत्वलक्षणं साधुत्वं लिङ्गावगम्यम्, तथापि तदाश्रयस्यानपभ्रष्टशब्दरूपस्य प्रत्यक्षताऽभिप्रेता। एवमसाधुत्वमुपन्यस्यापभ्रष्टरूपस्येत्यदोषः।

अर्थबोधानपेक्षा तु नानपभ्रष्टरूपता।
साधुत्वमेकवर्णेऽपि प्रसङ्गादिति वर्णितम्॥

ननु स्मृतीनां शास्त्रमूलत्वस्योक्तत्वात्तद्विरुद्धं व्याकरणस्मृतेः प्रत्यक्षमूलत्वाभिधानमित्याशङ्क्याह—यो नामेति। फलोत्पत्तेरनियतकालत्वात्सम्बन्धस्यानियतकालत्वं साध्वसाधुविवेकस्य तु प्रत्यक्षग्राह्यत्वोपपत्तेः, तदपह्नवे न केवलं स्मृत्या बाधः, किं तु प्रत्यक्षेणापीत्याह—यस्य त्विति। सङ्गीतशास्त्रे स्वरगतरागविवेकप्रकीर्णकप्रबन्धताल-वाद्यनृत्ताख्याः सप्ताध्यायाः।

तत्र—आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः।
देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम्॥
ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपथे चरन्।
नाभिहृत्कण्ठमूर्द्धास्येष्वाविर्भावयति ध्वनिम्॥
नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टापुष्टश्च कृत्रितः।
इति पञ्चाभिधावन्तः पञ्चस्थानस्थितीः क्रमात्॥
व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोऽभिधीयते।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः॥
तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः।
स्यातां निषादगान्धारौ द्विश्रुती धैवतर्षभौ॥
त्रिश्रुती वेदश्रुतयः षड्जमध्यमपञ्चमाः।
मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः॥
गर्दभः सप्तषड्जादिक्रमादुच्चारयन्त्यमी।

इत्यादिलक्षणैःषड्जादीनां विवेके द्वितीयेन रागविवेकसंज्ञकेनाध्यायेन कृते तदभ्याससंस्कृतेन श्रोत्रेण यथा षड्जोऽयमृषभोऽयं गान्धारोऽयं मध्यमोऽयं पञ्चमोऽयं धैवतोऽयं निषादोऽयमिति स्वरविवेकज्ञानं जायते। तथा यस्य व्याकरणस्मृतिजनिते साध्वसाधुविवेके पूर्वं जाते, पश्चाद्व्याकरणश्रवणाभ्याससंस्कृतश्रोत्रस्य साध्वसाधुविवेकविषयं प्रत्यक्षं जायते। तं प्रति साध्वसाधुसङ्करं साधयतः प्रत्यक्षबाधो ब्राह्मणादिवर्णसङ्करसाधनवद्भवतीत्यर्थः। अतस्त्वपक्षस्यैव प्रमाणविरोधः नास्मत्पक्षस्येत्युपसंहरति—तेनेति। प्रत्यक्षग्राह्यत्वे सति तत्पूर्वकस्यानुमानादेरपि सम्भवात्समस्तशब्दः। यच्चादृष्टविषयवच्छब्दानां साध्वसाधुतेत्यादिना साध्वसाधुविवेकस्याप्रामाणिकत्वेन विधिनिषेधविषयत्वायोगान्न धर्माधर्मसाधनत्वरूपापि साध्वसाधुतेत्युक्तम्। तदपि साध्वसाधुविवेकस्य सप्रमाणकत्वाभिधानेन परिहृतं भवतीत्याह—तेनेति।

ननु—
'साधुत्वं नेन्द्रियग्राह्यं लिङ्गं वाऽस्य न विद्यते।
शास्त्रस्यं विषयो नैष प्रयोगेऽप्यस्य सङ्करः॥'

इत्यन्यैरुक्तम्। तस्य कः परिहारः? इत्याशङ्क्याह—यस्त्विति। इन्द्रियग्राह्यत्वं विवृणोति—ग्रस्तेति। ग्रस्तमविभक्तिकोच्चारणं निरस्तं विश्लेषितसंयोगम्, अम्बूकृतं सनिष्ठीवितम्। संवृतकलप्रगीतोपगीतक्ष्विणरोमशादीनामादिशब्देनोपादानम्, दोषवर्जितानां नियतह्रस्वादिमात्रकालाभिव्यङ्ग्यानां यथावृद्धव्यवहारं लक्षितेन क्रमेण ग्राह्याणां वर्णानामिन्द्रियग्राह्यत्वमित्यर्थः।

नन्वेवमप्यर्थप्रत्यायनाङ्गत्वलक्षणस्य साधुत्वस्येन्द्रियग्राह्यत्वं नास्तीत्याशङ्क्य, वाचकत्वस्य साधुत्वस्याविनष्टत्वेन निरूप्यत्वात्तद्विषयस्य ज्ञानस्य श्रोत्रजन्यत्वेनेन्द्रियग्राह्यत्वं नास्तीति वक्तुम्—**अविनष्टेत्युक्तम्**। प्रकृतिप्रत्ययान्वाख्यानस्मृतिसहकृतस्य च श्रोत्रस्याविनष्टरूपविषयज्ञानहेतुत्वादवैय्याकरणस्याज्ञानं युक्तमिति—**स्मर्यमाणशब्देनोक्तम्**। यथोदात्तादिरूपज्ञानश्रोत्रं स्मृतिमपेक्षते तद्वदविनष्टरूपज्ञानेऽपीति दृष्टान्तार्थः।

लिङ्गग्राह्यत्वं विवृणोति—**तदुत्तरेति**। प्रत्यक्षेण साध्वसाधुविवेकग्रहणोत्तरकालं यत्प्रवृत्तं लक्षणम्, तद्गतं प्रकृतिप्रत्ययलोपादिसाधुत्वाव्यभिचारितया लक्षणेनावगतत्वादुदाहृतशब्दे दृष्टान्तेन शब्दान्तरे साधुत्वानुमानाय लिङ्गं भवतीत्यर्थः।

वृद्धप्रयोगगम्यश्च हि शब्दार्थाः सर्व एव न।

इत्यनेन न्यायेन शब्दार्थस्य वृद्धप्रयोगमात्रावसेयत्वावधारणात् भवन्तीत्यादिषु शब्देषु वृद्धाप्रयुक्तत्वेनार्थप्रत्यायकत्वाभावात्साधुत्वरहितेष्वपि प्रकृतिप्रत्ययान्वाख्यानदर्शनात् व्यभिचारमाशङ्क्य, व्यवहारगतार्थप्रतिपत्तिसहितत्वं विशेषणं कृतम्। अस्मादेव विशेषणादर्थप्रत्यायनार्थत्वम् साधुत्वलक्षणं वार्त्तिककृतोऽभिप्रेतमिति ज्ञायते।

शास्त्रविषयत्वं विवृणोति—**शास्त्रस्य चेति**। श्रुतिस्मृतिरूपत्वेन क्रत्वर्थपुरुषार्थसाधनत्वप्रतिपादकत्वरूपेण विधिनिषेधनिबन्धनार्थानर्थज्ञापकत्वरूपेण कार्यस्वरूपज्ञापकत्वरूपेण चेति चतुर्द्धा द्वैविध्यं विवृतम्। साधुत्वमिन्द्रियग्राह्यमिति साधुत्वशब्देनासाधुत्वस्याप्युपलक्षितत्वादनर्थज्ञानार्थनिषेधशास्त्रविषयत्व (मसाधुत्वस्य दर्शितम्। अयं-साध्वसाधुत्वरूपो विषय इत्यर्थः। ननु साध्वसाधुशब्दप्रयोगयोरिष्टानिष्टसाधनत्वज्ञापने साध्यसाधनभावविषयत्वाच्छास्त्रस्य साध्वसाधुविषयत्वं न स्यादित्याशङ्क्यैवंविध एवान्योऽपीत्युक्तम्। अन्योऽपि यागादिरेव विधिरेव विषय इत्यर्थः। द्विविधशास्त्रविषयत्वमेवोपपादयति[1]—**अविनष्टैरिति**।

साधुशब्दप्रयोगस्य स्वर्गसाधनत्वम्। 'एकः शब्द इत्यस्य कामधुक्शब्दयुक्तस्य शास्त्रस्य विषयः' यज्ञोपकारसाधनत्वव्याकृता वागुद्यत इत्यनारभ्याधीतस्याप्यश्वप्रतिग्रहेष्टिन्यायेन व्याकृतत्वस्य लौकिकवैदिकवाग्वदनविषयकत्वे क्रत्वर्थपुरुषार्थत्वलक्षणावैरूप्यापत्ते. लौकिकमात्रविषयत्वेऽपि फलकल्पनागौरवापत्तेर्वैदिके कर्मणि या वागुद्यते, सा व्याकृतेत्यर्थावधारणात् विषयः, अपशब्दभाषणस्य प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यरूपानर्थसाधनत्वं 'ब्राह्मणेन न म्लेच्छितवा' इति निषेधशास्त्रस्य ज्योतिष्टोमप्रकरणाधीतस्य विषयः, अस्य निषेधस्यानृतवदननिषेधवत्प्राकरणिकं क्रत्वर्थत्वं याज्ञे कर्म्मणि स नियमोऽन्यत्रानियम इत्यादिना महाभाष्यकृताऽप्युक्तमिति सूचयितुम्—**याज्ञे कर्मणीत्युक्तम्**। 'वाग्योगविद् दुष्यति चापशब्दैरिति स्मृत्यापि वाचैव हि मनसा च यज्ञो वर्त्तत इत्यादिलिङ्गदर्शनाद्वाग्योगशब्दस्य यज्ञपरत्वावगतेर्वाग्योगविच्छब्दस्यर्त्विग्यजमानविषयतया व्याख्यातुं शक्य-

१. अयं पा० २ पु० ना०

त्वाद्यज्ञविषयत्वम्, अपशब्दनिषेधस्यावसीयत इति सूचयितुम् - यथोक्तमित्युक्तम्। यच्च प्रतिशब्दं विधिनिषेधवाक्यानुमानकल्पनानुपपत्तेर्नं साध्वसाधुतयोर्विधिनिषेधविषयत्वं सम्भवतीत्युक्तम्। तत्परिहरति—द्वाभ्यामेवेति। क्रत्वर्थपुरुषार्थविध्योर्भेदेऽपि विधित्वेनैक्यं मत्वा—द्वाभ्यामित्युक्तम्। ननु वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किञ्चित्प्रमाणत्वेन सम्भवतीत्यनेन वेदस्य स्वरूपपरत्वनिषेधात्कथं स्वरूपज्ञानार्थंशास्त्रविषयता साध्वसाधुत्वयोरुक्तेत्याशङ्क्याह—न चेति। 'यावदेकाहेनाश्वो याति तावदाश्वीनं। ननु तत्राप्यविनाशी वा अरेऽयमात्मा ज्ञातव्य इत्येवंविधिपरस्यैव शास्त्रस्य स्वरूपज्ञानार्थत्वान्न तन्निरपेक्षस्येत्याशङ्क्याह अथापीति। अत्रापि तदर्थं-प्रत्यायनाङ्गत्वविशिष्टलक्षणानुगतत्वरूपैकोपलक्षणोपपत्तेर्येऽर्थप्रत्यायनाङ्गभूताः शब्दा लक्षणानुगताः ते साधवः, अन्ये चासाधवः प्रत्येतव्या इत्येवं ज्ञात्वा शास्त्रावधारितप्रयोजनान् साधुशब्दान्प्रयोक्तुमिच्छेन्नानर्थंप्रत्यायनाङ्गभूताः शब्दा लक्षणेनानुगतास्ते साधवः न वा लक्षणेनाननुगतानित्येवं विधिनिषेधपरयोः शास्त्रयोः साध्वसाधुस्वरूपज्ञानार्थत्वं भविष्यतीत्याशयः। यावद्रूपमित्यनेन द्वयोरेव विधिनिषेधयोरेकेनोपलक्षणेन—सर्वं शब्दापशब्दव्यापित्वमुक्तम्।

शास्त्रस्य विषयोऽप्येष इत्यपिशब्दसूचितमुपमानादिप्रमाणविषयत्वं दर्शयन्नुपमानं तावद् द्विविधमाह—निः सन्दिग्धेति। यो ह्यविनष्टत्वेन निःसन्दिग्धो वृद्धप्रयुक्तो देवदत्तशब्दो, यश्च विनष्टत्वेन निःसन्दिग्धो बालप्रयुक्तस्तत् शब्दस्वत्सादृश्यं यच्च पटुकरणाभिव्यङ्ग्यत्वादिधर्मसामान्यभूतस्वरूपं गोशब्दादेरुपमानेनावगम्य पटुकरणाभिव्यङ्ग्यत्वस्य विनष्टाविनष्टरूपत्वेन देवदत्तादिशब्दे व्याप्तिदर्शनाद् गोशब्दादौ विनष्टाविनष्टरूपत्वेन देवदत्तादिशब्दे व्याप्तिदर्शनाद् गोशब्दादौ विनष्टाविनष्टरूपत्वानुमानं सम्भवतीत्युपमानपूर्वकानुमानविषयत्वं साध्वसाधुत्वयोरुपचारादुपमानविषयत्वेन विवक्षितमिति—शक्यशब्देन सूचितम्। सङ्कीर्णसाधुविषयं चेदमुपमानं लक्षणानुगतवैदिकशब्दसादृश्यं लक्षणानुगतत्वस्याविनष्टत्वेन वैदिकेषु व्याप्तिदर्शनात् लौकिकेष्वविनष्टत्वानुमानमित्येतदप्युपमानपूर्वकमेवानुमानमसङ्कीर्णसाधुत्वविषयमिति दर्शयितव्यमित्यनेन सूचितम्। सङ्कीर्णसाधुत्वविषयां तावदर्थापत्तिमाह—तथेति। लक्षणनैरपेक्ष्याभिप्रायो लौकिकशब्दः। वृद्धव्यवहारनिबन्धनेनार्थप्रत्ययेन योत्थापिता वाचकत्वविषयार्थापत्तिः, तया विनष्टस्य स्वाभाविकार्थाभिधानशक्तत्वरूपवाचकत्वानुपपत्तेरविनष्टरूपं साधुत्वं गाव्यादिशब्दसङ्कीर्णं निश्चीयत इत्यर्थः। असङ्कीर्णसाधुत्वविषयामर्थापत्तिमाह—तत् इति। अन्याशक्तिनिमित्तं तदनासक्तिनिमित्तं स्पृष्टादिकरणवैगुण्यनिमित्तं वा यत्सम्भवत्यपभ्रष्टं रूपम्, तद्वर्जितस्य केवलस्य साधोर्यल्लक्षणेनान्वाख्यानम्, तदन्यथानुपपत्त्या गोशब्दादेरेव साधुतेति सिद्धम्। गवादिशब्दनियतमसङ्कीर्णंसाधुत्वज्ञानमित्यर्थः। गाव्यादिशब्दानां लक्षणाभावस्यासाधुत्वं विनानुपपत्तेरभावपूर्विकयार्थापत्त्या साधुत्वाभावनिश्चयात्तद्द्वारेणाभावस्यापि साध्वसाधुत्वनिर्णयो विषय इत्याह—अपभ्रंशेष्विति।

ननु प्रत्यक्षादित्रयविषयत्वाभिधानमात्रेण परोक्तश्लोकप्रतिकञ्चुकसिद्धेरुपमानादित्रयविषयत्वाभिधानं किमर्थमित्याशङ्क्याह—इतीति। व्यापारशब्देनाभावोपमानयोः साक्षात्साध्वसाधुत्वनिर्णायकत्वाभावेऽपि व्यापारसद्भावात्तद्विषयतेति सूचितम्। प्रयोगेऽप्यस्त्यसङ्कर इत्येतद्विवृणोति—यद्यपीति। मातापितृसम्बन्धकुशलानां ब्राह्मणादिविवेकवत्प्रकृतिप्रत्ययान्वाख्यानकुशलानां साध्वसाधुशब्दविवेकोऽस्तीत्यर्थः। किञ्च साधुत्वं नाम दोषवर्जितत्वम्। तच्चान्यत्रापि परीक्षकगम्यं दृष्टमित्याह—यथा चेति। रत्नतत्त्वपरीक्षका यथा पद्मरागादीनि विवेकेन जानन्ति, तथा परे शब्दनामदोषवर्जितत्वम्, तच्चान्यत्रापि परीक्षकतत्त्वपरीक्षकाः साधुत्वं विवेकेन जानन्तीत्यर्थः। लक्षणस्य च साध्वसाधुविवेकोपायता रत्नपरीक्षायामेव दृष्टेत्याह—यथेति। एवं च साध्वसाधुविवेकस्य प्रत्यक्षादिनावगतिसम्भवे तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियापि सिद्धेति यदुक्तम्, तदपि प्रतिहतं भवतीत्याह पौरुषेयेति।

ननु व्याकरणानुगतसाधुत्वानन्तरं प्रत्यक्षेणासङ्कीर्णसाधुत्वदर्शने माभूदन्धपरम्परान्यायापत्तिः। सङ्कीर्णस्य तु साधुत्वस्य पूर्वदृष्टस्य व्याकरणमात्रात् विवेकज्ञाने तदापत्तिरपरिहार्येत्याशङ्क्याह—यावानिति। अयमाशयः—न तावददृष्टसाधनत्वलक्षणसाधुत्वविवेकेऽन्धपरम्परान्यायापत्तिः विधिनिषेधमूलत्वादविनष्टरूपसाधुविवेकेऽपि न तदापत्तिर्वेदादिविद्यास्थानप्रयोगमूलत्वादिति।

यच्चार्थप्राप्तश्च योऽर्थः स्यादित्यनेनार्थप्राप्तत्वात्साधुविधानानुपपत्तिरित्युक्तम्, तदनुभाषणपूर्वकं परिहरति यत्त्विति। यथा चतुर्थे समे दर्शपूर्णमासाभ्यां यजेत 'पौर्णमास्यां पौर्णमास्या यजेत' दर्शपौर्णमासयोश्चत्वार ऋत्विजः इत्युपात्तानामपि देशादीनामर्थप्राप्तत्वादविधानमिति पूर्वपक्षयित्वा, पक्षप्राप्तानामपि नियमार्थो विधिरिति नियमार्था श्रुतिरुच्येत इति सूत्रेण सिद्धान्तयिष्यते। तथात्रापि नियमार्थो विधिर्भविष्यतीत्याशयः।

यच्चात्यन्तावाचकत्वादित्यनेन व्यावर्त्यासाध्वप्रसक्तेरसाधुनिवृत्त्यर्थस्य नियमस्यानुपपत्तिरित्युक्तं तदप्यनुभाषणपूर्वकं परिहरति—यत्त्विति। यस्त्वयाऽन्यनिवृत्तिफलो विधिर्नियम इत्युक्तः। स नियमः, परिसंख्या वेत्यनेन किं नादौ परस्तान्नियमः किन्तु परिसंख्येत्याशयः। सा चात्यन्तव्यावृत्त्याद्विना नेष्यते, यस्तु परमार्थतो नियमः, स नित्यतामात्रकारीति किमिति व्यावृत्त्याद्विना न लभ्यत इत्यर्थः। ननु भाषणे साधूनां नित्यप्राप्तत्वान्नियमोऽनर्थकः स्यात्, भाषणनियमे तु मौने दोषः प्रसज्येतेत्युक्तं तत्राह—सतीति। द्विधा परस्यार्थः पुरुषेण ज्ञाप्यते स्वाभिप्रायप्रकाशनद्वारेण वा तन्निरपेक्षमुख्यगौणलाक्षाणिकैव त्रैरूप्यादिस्मरणमात्रे वा। तत्र स्वाभिप्रायप्रकाशनद्वारार्थज्ञापनमिह त्रैरूप्यस्मारणादिद्वारार्थप्रकाशनव्यावृत्त्यर्थं भाषितव्यशब्देन लक्षणयोक्तम्। अनेन च पूर्वपक्षोक्तं दूषणद्वयमपि परिहृतम्। शब्दव्यापारद्वारार्थज्ञानरूपे हि भाषणे साधुव्यतिरिक्तोपायाप्रसक्तेः साधुनियमानर्थक्यमपरिहार्यम्। अर्थज्ञापनमात्रे तु साधुनियमे त्रैरूप्याद्युपन्यासः शास्त्र-

काराणां विरुद्धयेत। स्वातन्त्र्येण तु सर्वदा साधुभाषणनियमे मौने दोषोऽपरिहार्यः। स्वाभिप्रायप्रकाशनद्वाराऽर्थज्ञापनं मौनिनाक्षिनिकोचादिना क्रियमाणं न श्रेयःसाधनमित्यक्षिनिकोचादिव्यावृत्त्यभिधानेनैव सूचितम्। अतश्च भोजनादौ मौनविधाने शाकादेर्भाषणनिवारणादि हस्तसंज्ञादिना न कार्यं शिष्टाचारविरोधापरिहारार्थं वा मौनविध्यभावविषयत्वं साधुभाषणनियमस्य कल्पनीयम्, भाषणानुवादेन साधुनियामकत्वं कल्प्यम्। साधुभाषाशब्दस्त्वस्मिन्पक्षे विशेषणाशयः।

नन्वन्यनिवृत्त्या शिष्टाचारविरोधपरिहारार्थं वा मौनविध्यभावं विना नित्यत्वायोगान्नियमेऽप्यन्यनिवृत्तिरवश्यं कल्प्येत्याशङ्क्याह—यद्यपि चेति। साधुस्मृत्या व्यवहितानामसाधूनः तदर्थप्रतिपादकत्वोपपत्तेरपभ्रंशकाले प्रयोगः सम्भवतीति विप्रकर्षाभिधायिकालशब्दोक्तानां स्मर्यमाणावधिदीर्घकालप्रयोगरूपरूढशब्दोक्तम्लेच्छभाषणविलक्षणसाधुसादृश्यरूपात्मककारणद्वय.न्यया भ्रान्त्या वाचकत्वेनार्वाचीनैर्गृहीतानामिदानीन्तनकाले प्रयोगः सम्भवतीत्यर्थः।

गाव्यादिशब्दानामविवेकिलोकप्रसिद्धशब्दान्तरत्वमङ्गीकृत्य प्रसक्तिर्दर्शिता। परमार्थतस्तु तेषां गवादिशब्दापभ्रंशमात्रत्वेन शब्दान्तरत्वाभावाद्विनाशनिवृत्तिमात्रं नियमफलमित्याह—अथ वेति। मा कश्चिद्विनीनशदित्येकवचनान्वयायऽध्याहार्यं विनाशनिवृत्त्यर्थत्वं नियमस्य दृष्टान्तपूर्वकमुपपादयति—तद्यथेति।

तस्माद् ब्राह्मणेनेति प्रतिषेधः, तस्मादेषेति च त्रिविधिरविनष्टप्रयोगनिमयार्थ इत्यन्वयः। म्लेच्छतिधात्वर्थव्याख्यार्थत्वापभाषितत्वादिति महाभाष्यकृत्प्रयुक्तं धात्वन्तरं दर्शितम्। विनाशनिवृत्त्यर्थत्वोपपादनाय दुष्टः शब्द इति स्मृत्युपन्यासः। किंचिद्विनष्टस्यापि भग्नशृङ्गगोन्यायेन शब्दत्वानपायात्कथमपशब्दतेत्याशङ्क्य प्रमादाविनिमित्तेन विनाशेत्याद्युक्तम्ः अयमित्यनेनापशब्दत्वं परामृष्टम्। विनष्टस्यापि गवादिशब्दस्य म्लेच्छैरप्रयोगात् किन्निमित्तो म्लेच्छशब्द इत्याशङ्क्य प्रकृतिप्रत्ययान्वाख्यानरूपव्यक्तत्वभावेनाव्यक्तोच्चारणत्वनिमित्तता स्मरणेन सूचिता। प्रत्यक्षविधिनिषेधोपन्यासेन नात्र साधुभिर्भाषितासाधुभिर्नेति विधिनिषेधौ कल्प्यौ; येनोक्तदोषद्वयापत्तिः स्यादिति सूचितम्।

ननु प्रमादादेरभावे विनाशस्याप्रसक्तेर्भावे वा परिहर्तुमशक्तेर्निषेधो न युक्त इत्याशङ्कते—ननु चेति। विनाशकारणनिषेधद्वारेण विनाशनिषेधो भविष्यतीति परिहरति—उच्यत इति। अशक्तेः प्रागभावरूपायाः स्वभावसिद्धत्वात् निषेधो न शक्य इत्याशङ्क्य—सामर्थ्यायेत्युक्तम्। प्रमादाशक्तभावेऽपि च त्रेधा प्रसक्तिः सम्भवतीत्यन्यथा परिहरति—अन्य इति। उपसंहरति—तत्कथं नामेति।

यत्किंचित्प्रमादाशक्तिरूपक्लेशो वा, दाक्षिण्याद्यनुवर्त्तनं वाऽनभियुक्तसंव्यवहारो वापभ्रंशकारणम्। तत्परिहारार्थमविनष्टशब्दप्रयोगविषयापन्नो नियम्यत इत्यर्थः। यच्च न चादृष्टार्थतापि तस्येत्यनेन दृष्टार्थत्वाच्छब्दप्रयोगस्यादृष्टार्थो—नियमो न युक्त इत्युक्तम्।

तत् क्रियारूपस्य नैराकाङ्क्ष्येऽपि तद्गतस्य नियमस्यादृष्टार्थत्वं विनानर्थक्यापत्तेरयुक्तमित्यभिप्रायेणानुभाषणपूर्वकं परिहरति—यत्त्विति ।

ननु फलसिद्ध्यर्थत्वाद् अपूर्वकल्पनस्यात्र तदभावान्नापूर्वकल्पना युक्तेत्याशङ्क्य क्रतूपकाररूपं पुरुषार्थरूपं च फलं दर्शयितुमाह—क्रत्वर्थमिति । एतदेवोपपादयितुमेकस्य उभयत्वं संयोगपृथक्त्वादिति चातुर्थिकं सूत्रं साध्याहारमुपन्यस्यति—एकस्य त्विति । ननु तत्र दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादिति वाक्यद्वयश्रवणात् तस्माद् गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादि३-१-२२त्यनेन न्यायेन परस्परासङ्गतेरेकेन विहितस्य दध्नः, परेण फलबोधायोगात्परस्परनिरपेक्षवाक्यद्वयेन युक्तोभयरूपता । नन्विह तथाविधं वाक्यद्वयं श्रूयत इत्याशङ्क्याह—तच्चेहेति । ब्राह्मणेन न म्लेच्छितवा इति प्रकारणिकेन निषेधेनासाधुभाषणस्य क्रतुवैगुण्यापादकत्वावगतेरर्थात्साधुभाषणनियमस्य क्रत्वर्थतावसीयते ।

एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग् भवतीति चानारभ्यवादेन शास्त्रशब्दस्य रूढ्या विद्यास्थानवाचित्वात्सम्प्रदायपरतया व्याख्यानानुपपत्तेर्व्याकरणशास्त्रानुगतसाधुशब्दभाषणनियमस्य स्वर्गसाधनत्वावगतेः पुरुषार्थतावसीयत इत्यर्थः ।

ननु भाषणस्यार्थप्रतिपत्त्यर्थत्वेन जुह्वादिवत्पारार्थ्यादपापश्लोकश्रवणवत्स्वर्गे लोके कामधुगिति फलश्रुतेरर्थवादत्वात्पर्णमयीत्वनियमादृष्टवत्साधुनियमादृष्टस्यापि पुरुषार्थता न युक्तेत्याशङ्क्याह—तत्रेति । यदि क्रत्वर्थस्य भाषणस्योपायनियमरूपफलश्रुतिरेषा स्यात्, ततो भवेदर्थवादस्यानारभ्यविहितस्य तु भाषणस्य क्रत्वर्थत्वे प्रमाणाभावाद् दृष्टार्थव्यवहारहेतुत्वेन शुद्धपुरुषार्थत्वावगतेस्तस्य च नियमं विनापि सिद्धेरदृष्टफलाकाङ्क्षिणि नियमे फलनिर्देशात्फलमेवावसीयत इत्यर्थः । एवदुपपादनार्थं फलमात्रेयो निर्देशादिति सूत्रोक्तं चतुर्थन्यायं दर्शयितुम्—आत्रेयेत्युक्तम् । श्लोकं व्याचष्टे क्रत्वर्थं हीति । पुरुषार्थांश इत्यनवधारितक्रत्वर्थत्वमात्राभिप्रायेण नियमस्य पुरुषार्थतोक्ता । अनेन च क्रत्वर्थस्यांश इति क्रत्वर्थशब्दे विग्रहः सूचितः ।

यच्च न चेदं नियमापूर्वमित्याश्रयासम्भवेनेह—अपूर्वकल्पना न युक्तेत्युक्तम् । तदनुभाष्य परिहरति—यत्त्विति । पूर्वार्धेन क्रत्वर्थशब्देन साधुभाषणनियमस्यानृतवदनवर्जनवच्छुद्धक्रतुधर्मत्वाभिधानात्, तस्य च क्रतुसंयुक्तपुरुषधर्मविषयब्राह्मणसंयुक्तवाक्यविषयत्वायोगात्तस्मादेषा व्याकृता वागुद्यत इत्यनेन वाक्येन या वागुद्यते, साव्याकृतेति वाग्वदनानुवादेन व्याकरणानुगतत्वविधिप्रतीतिरनारभ्याधीतस्यापि चैषेति सर्वनाम्नासन्निहितवैदिकवाग्वदनविषयत्वप्रतीतेर्लौकिकविषयत्वे च फलकल्पनागौरवापत्तेर्वैदिककर्माङ्गभूतव्रीह्यादिपदार्थव्यवहारार्थं लौकिकशब्दे प्रयोक्तव्ये व्याकरणानुगतशब्दनियमात्तज्जन्यं यदवघातादिनियमजन्यापूर्ववत् शुद्धक्रत्वर्थमपूर्वं तदङ्गभूतेष्वेव व्रीह्यादिष्वाश्रितम्, यत्तु न

ब्राह्मणेन म्लेच्छितवा इति ज्योतिष्टोमप्रकरणाधीतापशब्दनिषेधसामर्थ्यलभ्याद्यज्ञमध्यगत-मुक्तभाषणविषयात्साधुशब्दनियमादपूर्वं तज्जञ्जभ्यमानन्यायेनापशब्दवर्जनस्य क्रतुयुक्त-पुरुषधर्मत्वावधारणेन क्रतुसाधनीभूतपुरुषाश्रितमित्यर्थः ।

क्रत्वाङ्गभूतानामपि पदार्थानामङ्गत्वरूपेण यदभिधानं तदर्थं तद्विषयम् यन्न भवतीत्यनङ्गत्वाभिधानार्थमित्युक्तम् । अपूर्वहेतोर्नियमस्याभिधानविषयत्वमुपचारेणापूर्वेऽभिहितम् । यद्वाङ्गभूतस्यापि यस्यानङ्गत्वेन प्राप्तत्वेनाभिधानं यस्य स अनङ्गत्वाभिधानो यजमानः, तदर्थमित्यर्थः ।

उत्तरार्द्धं व्याचष्टे—प्रकरणेति । ननु जञ्जभ्यमानाधिकरणन्यायेन क्रतुयुक्तपुरुष-संस्कारत्वसिद्धावपि ऋत्विजामपि संस्कारोपपत्तेः कथं यजमानसंस्कारत्वावधारणेत्याशङ्क्य, न्यायान्तरमुक्तं शुद्धक्रत्वङ्गधर्मत्वेन क्रतुयुक्तपुरुषधर्मत्वेन च क्रत्वर्थस्य साधुभाषण-नियमापूर्वस्याश्रयमुक्त्वा, पुरुषार्थस्याह—पुरुषार्थेति । पुरुषार्थवाक्येऽपि प्रयोक्त्राश्रितं साधुभाषणनियमापूर्वमित्यन्वयः । कथमित्यपेक्षायां सम्यगित्यनेन सन्निधिः प्रमाणत्वेनोक्तः । ज्ञानपूर्वकस्य प्रयोगस्यापूर्वहेतुत्वसूचनाय ज्ञातृग्रहणम् । अपूर्वजनिकायाः साधुभाषणक्रियाया जन्यस्य च स्वर्गस्य फलस्य च तदाश्रितत्वात्तदधीननिरूपणस्यापूर्वस्यापि तदाश्रितत्वं युक्तमिति योग्यतोक्ता । यथा प्रधानयागसाध्यमादिशब्दोपात्तत्वमाराद्‌पकारकाङ्गसाध्यम-पूर्वं प्रयोगक्त्राश्रितमनुष्ठात्राश्रितमिति दृष्टान्तार्थः ।

ननु वक्ता तु भाषणे सर्व इत्यनेन ब्राह्मणेनेति तृतीयया सुप्रयुक्त इति चोक्तिक्रियाया वक्तुर्गुणत्वावगमात्संस्कार्यत्व निषिद्धमत आह—तृतीयेति । दृष्टान्तं विवृणोति—यथैवेति । यथा तृतीयानिर्दिष्टस्यापि शेषस्य भूतोपयोगित्वाद्धविषु क्षारणेन प्रतिपत्ति-रूपः संस्कारः शेषधारणार्थपात्रान्तराप्रयोजकत्वाय चतुर्थे वक्ष्यते । तथेहापि ब्राह्मणस्य ज्योतिष्टोमसाध्यफलोपभोगलक्षणकार्योपयोगित्वाद्वपनादिनेव फलग्रहणयोग्यतारूपः संस्कारो भविष्यतीत्यर्थः ।

यद्वा वर्जनीयाया म्लेच्छनक्रियाया वपनादिवदेव यजमानकर्तृकत्वे सिद्धे तृतीयायाः कर्तृविधानार्थत्वायोगेनाऽनुवादमात्रार्थत्वात्तस्य चान्यतः सिद्ध्यपेक्षत्वात् यागकर्तृत्वस्यैव च प्रकरणसिद्धत्वात्तद्विषयत्वेनेयं तृतीयाङ्गमेत्र प्रतिवक्तुर्गुणत्वं ब्रूते, न म्लेच्छत्वं प्रतीत्याह—यद्वि वेति । पुरुषार्थवाच्ये तु कमिपदादेव स्वर्गकामादिवत्प्राधान्यलाभ इत्याह—कामधुगिति । गोदोहनादिवदधिकृताधिकारशङ्कानिवृत्त्यर्थो वहिःशब्दः ।

पूर्वार्द्धं व्याचष्टे—नैवेति । कथं तर्हि म्लेच्छतिनाऽन्वय इत्याशङ्क्याह—कुर्वतेति । यागगुणत्वं च व्रीह्यादिवत्संस्कार्यत्वस्यानुकूलमेवेत्याह—याग इति । यागोपयोगिना ब्राह्मणेन संयुक्तस्य म्लेच्छनस्याराद्‌पकारित्वायोगात्संस्कारत्वमेव न युक्तमित्यर्थः ।

ननूपयोगित्वेऽपि ब्राह्मणस्य व्रीह्यादिवत्प्राधान्यावेदकद्वितीयाद्यभावात्कथं प्राधान्याव-गतिरित्याशङ्क्याह—तच्चेति । उपयोगितैव शेषस्वीकारसामर्थ्यात्प्राधान्याक्षेपिकेत्याशयः ।

उत्तरार्द्धं व्याचष्टे—बाह्येति । साधुशब्दप्रयोगस्य फलसाधनतैवाऽवगम्यमाना प्रयोक्तुः फलभोक्तृत्वमाक्षिपतीत्याशयः । अनेन वानप्रस्थपदं चात्र विद्यत इति परिहृतम् । यच्च न वेदोच्चारणमुच्चारयितृत्वार्थमित्यनेनोच्चारणस्य पुरुषार्थापूर्वद्वारता न युक्तेत्युक्तम्, तत्परिहरति—यद्यपि चेति । अन्यार्थाश्रितस्य निषेधस्यान्यार्थत्वे तदहर्मांसमैथुने वर्जयेदिति दर्शपूर्णमासप्रकरणाधीतं निषेधमुदाहरति—तथा हीति । नियमस्यान्याश्रितस्यान्यार्थत्वे 'खादिरं वीर्यकामस्य यूपं कुर्यादित्युदाहरणमाह—क्रत्वर्थादिति । ननु संयोगपृथक्त्वान्न क्रत्वर्थत्वेनानुष्ठितस्य खादिरत्वस्य पुरुषार्थनियमाश्रयतास्तीत्याशङ्क्योदाहरणान्तरमाह—भोजनाच्चेति । खादिरत्वरूपेणैक्यमभिप्रेत्य पूर्वोदाहरणं समर्थनीयमुपसंहरति—अतश्चेति । एवं चावेदमूलत्वादित्युपसंहारं दूषयति—अतश्चेति ।

यत्तु न चास्याः शास्त्रता स्वयमित्युक्तम् । तदपि दूषयति—यच्चेति । (नासन्नियमादिति सूत्रोपन्यासेन कृतकत्वमशास्त्रत्वे हेतुरुक्त इत्यभिप्रेत्य—कृत्रिमत्वेनेत्युक्तम् । प्रसिद्धि दर्शयति—शास्त्रेति । यौगिकत्वेऽपि प्रसिद्धिमुपपादयति—अथापीति । किं च शब्दार्थस्य वृद्धप्रयोगैकसमधिगम्यत्वेन तर्कविषयत्वाभावान्न तर्केण शास्त्रत्ववारणं युक्तमिति प्रसङ्गापत्तेरित्याह—प्रसिद्धमपीति । श्लोकं व्याचष्टे—यथैव हीति । वेदातिरिक्तविद्यास्थानानां चाशास्त्रत्वमप्रामाण्यं वोच्यमानमङ्गीकृतप्रामाण्यवेदमूलत्वेन वार्येत वेदस्यैव त्वशास्त्रत्वमप्रामाण्यं वोच्यमानं कथं वार्येतेति सोपहासं दृष्टान्तेन दर्शयितुमाह—यो हीति । शुक्लं निष्ठुरम् ननु पूर्वं व्युत्पादितेनेष्टानिष्टप्राप्तिपरिहारसाधनोपदेशकत्वेन ‹रतः प्रामाण्याचप्रामाण्यकारणनिरासेन च वेदस्याप्रामाण्यं वारयिष्यत इत्याशङ्कानिराकरणं सूचयितुं मातापित्रोर्निष्ठुराभिधायिनोर्वारकान्तराभावेऽपि तावेव वारकौ भविष्यत इत्याशङ्कां निरस्यति—परत्रेति । वेदवदितरविद्यास्थानानामपि प्रामाण्यस्य व्युत्पादितत्वान्न तदनादरेणेदं प्रत्यवस्थानम् । तदवस्थितन्यायानादरे कश्चित्प्रतीकार इत्याशयः । दृष्टान्तेन सूचितमर्थं प्रकटयति–तथेति । व्याकरणस्य वेदाङ्गत्वाद्धर्मशास्त्रादिभ्योऽतिशयं सूचयितुम्—साङ्गेनेत्युक्तम् । ननु व्याकरणमात्रस्याप्रामाण्यं मयोच्यते न वेदस्य तेनायं वृथोपहास इत्याशङ्क्याह—क्रुद्ध इति । न चाङ्गीकृतेतरविद्यास्थानप्रामाण्यो व्याकरणमात्रस्याप्रामाण्यं वक्तुमर्हत्यविशेषादित्याह—श्रुतीति । यच्च न च स्मृत्यन्तरं किंचिदित्यनेन स्मृत्यन्तरसंवादाभावाद् व्याकरणाप्रामाण्यमुक्तं तदनुभाषणपूर्वकं परिहरति—यत्त्विति । ननु वर्णाश्रमधर्मोपदेशित्वाभावे व्याकरणस्य स्मृतित्वाभावान्न तन्न्यायेन प्रामाण्यं स्यादित्याशङ्क्याह—स्मृतित्वं त्विति । पूर्वानुभवपारतन्त्र्यनिमित्तस्मृतिशब्दो न वर्णाश्रमधर्मोपदेशित्वनिमित्त इत्याशयः । स्मृतित्वाभावेऽपि वा तत्तुल्यत्वस्मरणशास्त्रत्वप्रामाण्ययोः सिद्धिरित्याह—अथापीति । न्यायतुल्यत्वादपि तत्सिद्धिरित्याह—अपि चेति । न च मूलासम्भवात्स्मृतिन्यायाभावः मूलस्योपपादितत्वादित्याह– प्रमाणेति । दृष्टार्थप्रत्यायनफलत्वरूपेण सर्वप्रमाणमूलत्वम् । अदृष्टफलत्वरूपेण तु शास्त्रमूलतेति विवेकः । मूलप्रमाणसम्भवे च व्याकरणान्तरमूलतापि न दुष्यतीत्याह—एकस्य चेति । ननु पुंवाक्यमूलत्वेऽन्य-

परम्परान्यायः स्यादित्याह---असम्भावितेति । यच्च परस्परेण चाचार्या इत्यादिनाऽन्योन्यविगानादप्रामाण्यमुक्तं तदप्यनुभाष्य परिहरति---यत्त्विति । श्रुतीनां च विगीतत्वे तन्मूलश्रुतीनामविगानमेवाप्रामाण्यमापादयेदित्याह---विगीतेति । न चान्योऽन्यसंवादः प्रामाण्यकारणं येन तदभावादप्रामाण्यं स्यादित्याह---मूलेति । उपसंहरति परस्परेति । सिद्धे वस्तुनि विकल्पायोगाद्यथासम्भवविषयं विकल्पाभिधानं न सर्वविगीतव्याकरणस्मृतिविषयम् । विगानं च धर्माधर्मसाधनत्वविषयं वा स्यात्, अन्वाख्यानविषयं वा, सूत्रप्रत्याख्यानसमाधानरूपं वा, इष्ट्युपसंख्यानावापरूपम्, तत्र सूत्रकृतोऽपि प्रयोजनाभावाभिप्रायाभावमभिप्रेत्य धर्माधर्मसाधनत्वे तावद्विगानं नास्तीत्याह---धर्मेति ।

यत्तु---

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥

इत्याद्यन्वाख्यानविगानम्, तत्र ब्रूमः पदात्मानः सर्वेष्वेतेषु भिद्यते (श्लो० वा० वा० श्लो० १८२) इति तद्भूताधिकरणोक्तेन न्यायेन लक्ष्याणां सान्तनान्तादिशब्दानां भेदादविरुद्धमित्याह---अन्वाख्यानेति । सूत्रप्रत्याख्यानसमाधानयोश्च तर्कमूलत्वात्, तस्य चोच्चावचपुरुषबुद्धिप्रभवत्वेनानेकत्वरूपत्वोपपत्तेर्न व्याकरणाप्रामाण्यापादकतेत्याह---पुनरुक्तत्वादिना हीति । हिशब्दोऽप्यर्थे वैदिकत्वाच्च मूलत्वे तस्यैकरूपत्वेनानेकरूपप्रत्याख्यानाच्चानुपपत्तिः स्यात्, न त्वेतदस्तीत्यर्थः ।

इष्ट्युपसंख्यानयोरपि व्याकरणान्तरमूलत्वादधिकोपसंख्यानस्य च मूलोपसंख्यानाप्रामाण्यप्रसञ्जकत्वान्न व्याकरणाप्रामाण्यापादकतेत्याह---ये चापीति । अल्पविषयत्वमात्रस्याप्रामाण्यकारणत्वाभावं दृष्टान्तेनोपपादयति---तद्यथेति ।

ननु सूत्रकारस्य प्रयोजनानभिधानात्तद्भावाभिप्रायावगतेः, वार्त्तिककारादिभिश्च प्रयोजनाभिधानाद्विगानमुक्तम् । तस्य कः परिहारः ? इत्याशङ्क्यान्यानुभाषणपूर्वकं परिहारमाह---यस्त्विति । वार्त्तिककृता शास्त्रेण धर्मनियम इति वदता साधुशब्दप्रयोगद्वारा धर्मसिद्धिः परं प्रयोजनमुक्तम् । भाष्यकृता चाथ शब्दानुशासनमिति वदता साधुशब्दज्ञानं साक्षात्प्रयोजनमुक्तम् । तत्र यस्तावद्वार्त्तिककारोक्तप्रयोजनानभिधाननिमित्तः सूत्रकारस्योपालम्भः कृतः, स चोपालम्भनत्वस्यानर्होऽसमर्थः श्रुतिस्मृतिसिद्धत्वनिबन्धनत्वात्प्रयोजनानभिधानस्य, भाष्यकारोक्तस्य च लक्षणश्रवणानन्तरमेव स्वसंवेद्यत्वेन सुज्ञानत्वादित्यर्थः । एकैकसूत्रेण शब्दाज्ञानात्---ग्रन्थान्तर इत्युक्तम् । धर्मसिद्धेः श्रुतिस्मृतिसिद्धत्वं विवृणोति---सत्येति । कामधुगादिश्रुतेर्वर्त्तमानापदेशत्वेन फलपरत्वस्य दुर्ज्ञानत्वात्साधुशब्दप्रयोगविधिपरत्वेनानभिमतापि सत्यवचनविषया श्रुतिः स्मृतिश्चोपरिक्षिप्ता । ननु सत्यशब्दस्य लोकवेदयोरर्थविषयत्वाप्रसिद्धेः शब्दविषयता न युक्तेत्याशङ्क्य, प्रौढिवादेन पूर्वोक्तमेवोभयविषयत्वं स्मारयति---सत्यं चेति । नानृतं वदेदित्यभिधानार्थत्वाद्वदतेरर्थाभिधानकाल एवासाधुभाषणं प्रत्यवायहेतुः, नान्यदेति विनियोगकालविशेषणेनोक्तम् । साधुशब्दज्ञानस्यानुभवसिद्धत्वं

विवृणोति शब्दसाधुत्वेति। उपसंहरति—तस्मादिति। शास्त्रेण सर्वशब्दान्वाख्यानस्य प्रयोजनं यत्स्वयं सूत्रकृता नोक्तम्, तद्विज्ञायमानत्वान्नाभावाभिप्रायादित्यर्थः। नित्यसापेक्षत्वेनान्वाख्यानशब्दस्य समासाविघातः।

यच्च सुज्ञानत्वनिरासाय सुज्ञानत्वं पुनरीदृशम्, येनाद्यापि विवदन्त इत्युक्तं तदसिद्धमित्याह—न चेति। ननु मुख्यामुख्यप्रयोजनासम्भवेन निष्प्रयोजनत्वस्य पूर्वपक्षेऽभिधानाद विवादोऽस्त्येवेत्याशङ्क्याह—स एव स्थिति। प्रयोजनप्रस्तावे तीर्थिकान्तरविप्रतिपत्तावपि सूत्रकाराभिप्रेतत्वे विप्रतिपत्त्यभावान्न सूत्रकारस्य स्वतीर्थिकैः सह विगीतवचनत्वं भवतीत्याशयः।

यच्च धर्मश्च फलसम्बन्धमित्यनेन धर्मस्य वार्त्तिककृता प्रयोजनत्वेनोक्तस्य व्याकरणेऽनुपदेशान्निष्प्रयोजनत्वं व्याकरणस्योक्तम्। तत्परिहरति—धर्मार्थेति। नियमः प्रयोजनत्वेनोक्तः, न धर्मस्वरूपमित्यर्थः। ननु नियमोऽपि धर्मार्थं साधुशब्दा एव प्रयोक्तव्याः त एव वा श्रेयःसाधनमित्येवं रूपो न व्याकरणेन क्रियत इत्याशङ्क्याह—वेदेति। एत एव साधव इत्येवं रूपो नियमो व्याकरणाधीन इत्यर्थः।

नन्वाचारे नियम इत्यादिवार्त्तिकपर्यालोचनया प्रयोगनियमोऽत्र विवक्षितो गम्यते, न स्वरूपनियम इत्याशङ्क्याह—नियमेति। प्रयोगनियमनिरपेक्षस्य स्वरूपनियमस्यानर्थक्यात्तन्निरपेक्षस्य चेतरस्य सिद्धेर्नियमद्वयमपि व्याकरणस्य प्रयोजनमित्यर्थः। तत्राद्यो वेदसिद्धत्वान्न व्याकरणेन क्रियत इत्याह—साध्विति। तदा च शास्त्रेण धर्मनियम इति वार्त्तिककृतः शास्त्रशब्दो वेदविषयतया व्याख्येय इत्याह—अतश्चेति। इतरस्तु व्याकरणाख्येन शास्त्रेण क्रियत इत्याह—तथेति। धर्मशब्दश्चास्मिन् पक्षे श्रेयःसाधनत्वात्साधुशब्दप्रयोगविषय इत्याह—तेनेति। येन कारणेन व्याकरणाद्विना साधुस्वरूपनियमो न सिध्यति, तेन वेदावगतः सम्यग्ज्ञातस्य साधोः शब्दस्य प्रयोगात्मको यो धर्मस्तदर्थत्वेनायमेव नित्यो वाचकः शब्द इति, नियतस्वरूपज्ञानं क्रियत इत्यर्थः। नियमे कारणीभूतस्य शास्त्रस्येतिकर्त्तव्यतापेक्षायां व्याकरणगता प्रकृतिप्रत्ययान्वाख्यानप्रक्रियेति कर्त्तव्यतोक्ता।

यद्वा व्याकरणेन स्वरूपनियमः किमर्थं क्रियते, का वेतिकर्त्तव्यतेत्यपेक्षायामियं फक्किकावतारणीया तदा च तेन व्याकरणेनेत्यर्थः। यदपि धर्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोरित्यादिनाऽनवस्थितशास्त्रार्थाभिधानम्। व्यवस्थिताभिप्रायत्वे च भाष्यवार्त्तिकयोर्विगानमुक्तम्। तदप्यनुभाषणपूर्वकं परिहरति—यच्चेति।

यच्च ज्ञाने धर्म इति, चेदिति वार्त्तिकेन शब्दसाधुत्वज्ञानस्य धर्मत्वपक्षमुपन्यस्य तथाधर्म इत्यनेन दोषमभिधाय, शास्त्रेत्यनेन शास्त्रपूर्वस्य प्रयोगस्य श्रेयःसिद्ध्युपायत्वे कात्यायनेनावधारिते, भाष्यकारेण तदेव व्याख्याय, पुनः परावृत्य, अथ वा पुनरस्तु ज्ञाने धर्म इति तदुक्तम्, तदभ्युपेत्य वादमात्रमुक्तमित्यन्वयः। विगानावस्थिताभिधानयोरप्यनुवादद्योतनार्थं यच्च यत्पुनरिति यच्छब्दद्वयम्। को दोष इत्यपेक्षायामपशब्दानामपि

ज्ञानादधर्मापत्तेर्दोष इति, द्वेषेण वार्त्तिकव्याख्योक्ता । यथा व्याकरणाच्छब्दज्ञानं भवति, एवमपशब्दज्ञानमपीत्यपि शब्दो योज्यः । अधर्म्मत्वापत्तिरिति च शब्दार्थं न विद्मः । शब्दानुशासनार्थाद्व्याकरणात्कथमपशब्दज्ञानमित्याशङ्क्य, साध्वसाधुविवेकार्थत्वे व्याकरणस्य तन्त्रेण साध्वनुशासनभागार्थत्वे—प्रसङ्गेनेत्युक्तम् । किमर्थोऽभ्युपेत्यवाद इत्यपेक्षायाम्—पूर्वोक्तेत्युक्तम् ।

अत्र भाष्यकृता नैष दोषः, शास्त्रप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणं शब्दश्च शब्दज्ञाने धर्म्ममाह, नापशब्दज्ञाने अधर्म्मम् । यच्च पुनरशिष्टाप्रतिषिद्धत्वान्नैव दोषाय भवति, नाभ्युदयाय । तद्यथा हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति । नाभ्युदयायेति भाष्येणापशब्दज्ञानस्यानिषिद्धत्वान्न म्लेच्छभाषां शिक्षेतेति निषेधस्य बर्बरादिभाषाविषयत्वान्नाधर्म्मापत्तिरित्येकं परिहारमुक्त्वा, अथवाभ्युपाय एवापशब्दज्ञानस्येत्यादिभाष्येणासङ्कीर्णशब्दज्ञानस्य प्रतियोग्यपशब्दज्ञानस्येत्यादिभाष्येणासंकीर्णशब्दज्ञानस्य प्रतियोग्यपशब्दज्ञानाधीनत्वात् धर्म्मसाधनतैवेति परिहारान्तरमुक्त्वा, अथ वा कूपखानकवदेतद्भविष्यतीति । तद्यथा कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति । सोऽप्सु सञ्जातासु तत एव तद्गुणमासादयति येन स च दोषो निर्हण्यते, भूयसा चाभ्युदयेन युज्यते । एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्म्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्म्मः, तेन स च दोषो निर्घानिष्यते, भूयसा चाभ्युदयेन योगो भविष्यतीति भाष्येणोत्पन्नस्याप्यधर्म्मस्य साधुशब्दज्ञानजनितधर्म्मेण निर्घाताददोष इति तृतीयपरिहाराभिधानात् । पूर्वोक्तस्य दोषस्य परिहारत्रयसामर्थ्यप्रदर्शनार्थं च ज्ञायत इत्यर्थः ।

ननु परमार्थतः शब्दज्ञानस्य धर्म्मे हेतुत्वाभावात्परिहारत्रयमप्येतदनर्थकमित्याशङ्क्य—कृत्वाचिन्तान्यायेनेत्युक्तम् । नन्वयमपि पक्षोऽभिमतः । कस्मान्न भवतीत्याशङ्क्याह—परमार्थतस्त्विति । ज्ञानमात्रस्य श्रेयोहेतुत्वे तत्पूर्वकस्य प्रयोगस्यानर्थक्यप्रसङ्गेन, ज्ञानस्य च स्वभावतो विज्ञानेन पारार्थ्यनापादितमर्थवादत्वं यस्या फलश्रुतेः, सा तथोक्ता । अर्थवादत्वादिति पाठे त्वापादितार्थवादत्वादिति कर्म्मधारयः ।

सदृष्टान्तमन्यानर्थक्यप्रसङ्गमुपपादयति—यथेति । किं तर्ह्यालम्बनं फलश्रुतेरित्याशङ्कां निराकुर्वन्, प्रकृतमुपसंहरति—तस्मादिति । देवोऽत्र वर्षति तण्डुलानित्यत्र यथावर्षणसाध्यस्य निष्पत्त्यादिकार्यपरम्परागततण्डुलफलत्वं वृष्टावुपचर्यते तथात्रापि प्रयोगफलं तत्कारणे ज्ञान इत्यर्थः । ननु सम्यग्ज्ञात इति प्रथमश्रुतत्वेन ज्ञानस्यैव फलवत् प्रतिपत्तेः सुप्रयुक्तपदस्य च सुष्ठु प्रयोगार्हो यथा सम्यग्ज्ञात इत्येवं सम्यक्त्वव्याख्यानार्थत्वेनाप्युपपत्तेः फलपरत्वाभावादानर्थक्यप्रसङ्गो नास्तीत्याशङ्क्य, कारणान्तरमुपन्यस्तं विवृणोति—द्रव्येति । द्रव्यादित्रयविषयाया एव फलश्रुतेः पारार्थ्यहेतुकार्थवादत्वाभिधानाच्छब्दज्ञानस्य क्वान्तर्गतिः ? संस्कारान्तर्गतावपि कस्य संस्कार इत्याशङ्काद्वयं निराकर्त्तुं ज्ञातुः पुरुषस्य, ज्ञेयस्य वा—शब्दस्य संस्कार इत्युक्तम् ।

शब्दज्ञानस्य संस्कारत्वं पाराथ्र्यं चोपपादयितुमाह—सर्वत्रैव हीति । संस्कारस्यापि चूडाकरणाधानादेः संस्कार्यसाध्यकर्मार्थत्वाभावात्तेन च विना फलश्रुतेरर्थवादत्वाभावात्—पराङ्गं चेत्युक्तम् । पुरुषार्थस्यात्मज्ञानस्य पराङ्गत्वाभावात्—ततोऽन्यत्रेत्युक्तम् । इतिकरणः संस्कारत्वपाराथ्र्यत्वभावत्वपरामर्शार्थः । संस्कारत्वपाराथ्र्यत्वभाव्यावधारणाद्यस्मात्सर्वत्र ज्ञानं संस्कारत्वेन पराङ्गत्वेनाऽवगम्यते । तस्माच्छब्दज्ञानमपि तथेति हिशब्दो योज्यः । ननु सम्बन्धग्रन्थे कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यत इत्यत्र, अर्थवादाधिकरणे च । क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदान्नैराकाङ्क्ष्यमित्यत्रात्मज्ञानस्य क्रत्वर्थाभिधानात् किमित्यत्र वर्जनमित्याशङ्क्याह—आत्मज्ञानं हीति । अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति मात्राशब्देन भूतेन्द्रियधर्माभिधानात् शरीरादिव्यतिरिक्तसंसारिकर्तृभोक्तृनित्यात्मप्रतिपादनपूर्वकस्यात्मा वा अरे द्रष्टव्य इत्यात्मज्ञानविधेः कैमर्थ्याकाङ्क्षायां फलश्रुतेर्दृष्टसम्भवे चादृष्टकल्पनानुपपत्तेर्योग्यतया कर्म्मप्रवृत्तिसिद्ध्यर्थत्वावसायादनारभ्याधीतस्यापि च 'यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवतीति' श्रुत्योपनिषच्छब्दवाच्यस्यात्मविज्ञानस्य क्रत्वर्थत्वं युक्तम् । अत एव—

आत्मा ज्ञातव्य इत्येतन्मोक्षार्थम् । न च चोदितम् ।

इत्येतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव मोक्षार्थत्वनिरासेन कर्मप्रवृत्तिहेतुतोक्ता । असंसारिरूपात्मज्ञानस्य तु कर्म्मप्रवृत्त्यर्थत्वायोगात्पुरुषार्थतैव युक्तैत्याशयः ।

नन्वात्मनो लोकवेदसाधारण्येन क्रत्वव्यभिचाराभावात्कथं तज्ज्ञानस्य क्रत्वर्थत्वावसाय इत्याशङ्क्याह – तेन विनेति । अयमाशयः—लौकिककर्माङ्गत्वव्यावृत्त्यर्थं क्रत्वव्यभिचारोद्धारस्याकाङ्क्षत्वेनादृष्टार्थं लौकिककर्म्मप्रवृत्तेश्च शरीरादिव्यतिरिक्तनित्यात्मज्ञानं विनापि सिद्धेः, साकाङ्क्षान्वयसम्भवे च निराकाङ्क्षान्वयायोगाल्लौकिककर्माङ्गत्वव्यावृत्तिरैकान्तिकद्वाराभावेऽपि सिध्यति । अत एव परलोकफलकर्म्मविध्यन्यथानुपपत्त्या सामान्यसम्बन्धस्य क्लृप्तत्वाल्लौकिकविनियोगाविरोधः ।

यद्वोपकारकत्वमात्राभिप्रायकोऽर्थवादः । अत एव निषिद्धकर्म्मनिवृत्त्यर्थत्वसूचनार्थो निवृत्तिशब्दो घटते निषिद्धकर्माङ्गत्वे त्वात्मज्ञानस्यानात्मज्ञेन कृतं ब्रह्महत्यादिकं वैगुण्यान्न प्रत्यवायं जनयेद् इति । इह तु पुरुषार्थत्वं कर्तृत्वभोक्तृत्वादिसंसारिरूपात्मज्ञानस्योच्यते तस्य च क्रत्वर्थत्वायोगादाकाङ्क्षावशेनार्थवादिकफलकल्पना युक्तैवेति दर्शयितुमाह - तथेति ।

पापजरामृत्युशोकक्षुत्पिपासाराहित्यकाम्यमानफलप्राप्तिप्रयत्नानपेक्षसङ्कल्पमात्राधीन - सिद्धिरूपगुणविशिष्टात्मप्रतिपादनपूर्विकयाऽन्वेष्टव्यः, स विजिज्ञासितव्य इति श्रुत्या वेदान्तवाक्यार्थविचारणात्मजिज्ञासासहितस्य तदवधारितात्मरूपार्थानुचिन्तनाख्यान्वेषणात्मकस्यापहतपाप्मत्वादिगुणविशिष्टात्मज्ञानस्य विधानम् । यच्च मन्तव्यो बोद्धव्य इति श्रुत्या न्यायविमर्शनात्मकमननसहितस्य तन्निर्द्धारितात्मरूपसाक्षात्काराख्यबोधात्मकस्य सगुणात्मज्ञानस्यैव विधानम् । यद्यात्मानमुपासीतेति श्रुत्या केवलनिर्गुणात्मविषयावबोधपर्यन्तस्य

स्वष्टस्यापरोक्षरूपस्यात्मतत्त्वज्ञानस्य विधानम्, तदपेक्षितस्य वाक्यान्तरोपात्तस्य द्विविधस्याभ्युदयरूपस्य निश्रेयसरूपस्य च फलस्य सम्बन्धः कामवाद-लोकवाद-वचनविशेषैर्ज्ञायत इत्येवं क्रत्वर्थं पुरुषार्थत्वेन ज्ञायत इत्येतत्फक्किकागतनदानुषङ्गेण योज्यम्। श्रुतिभेदज्ञापनार्थः पुनस्तथाशब्दः। सगुणात्मज्ञानविध्यपेक्षिताभ्युदयरूपफलं सम्बन्धज्ञापकं कामवादं तावदुदाहरति—स सर्वांश्चेति। लोकादाहेः कामोपभोगार्थत्वेनैकवाक्यत्वायाभिधानात्कामवादोऽयमभिप्रेतः। तद्विषयमेव लोकवादमुदाहरति—तथेति। पितृलोकेन मातृलोकेन भ्रातृलोकेन स्वसृलोकेन सखिलोकेन गन्धमाल्यलोकेन यानलोकेन सङ्गीतवादित्रलोकेन स्त्रीलोकेन सम्पन्नो महीयत इति जनकादिभिः सुखसाधनयोग्यत्वेन लोकशब्दवाक्यैः सम्पत्त्यभिधानात् लोकवादोऽयमभिप्रेतः। एतच्च जनकादिसम्पत्तिवचनं यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठतीत्युपसंहारादष्टगुणैश्वर्यसिद्ध्यभिप्रायम्। न स्वर्गकामादिश्रुतिवन्नियतफलपरमिति दर्शयितुम्—योगजन्येत्युक्तम्। योगबलात्परमाणुवदतिसूक्ष्मता, पर्वतवन्महत्त्वम्, सूर्यरश्म्यवलम्बनादिरूपं लाघवम्। करेण चन्द्रस्पर्शादिरूपप्राप्तिः। अप्स्विव भूमावुन्मज्जनम्मित्यादीच्छाव्यनभिघातः। प्राकाम्यं भूतभौतिकाज्ञापयितृत्वरूपमीशित्वम्। भूतभौतिकानां तदाज्ञपाचरणं वशित्वं अनाज्ञप्तानामेव तदिच्छानुरोधवृत्तित्वं कामावसायितेत्यष्टौ गुणाः।

अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमित्यपि।
ईशित्वं च वशित्वं च यत्र कामावसायिता॥ इति स्मृताः

सगुणात्मज्ञानफलप्रतिपादकं कामवादम्, लोकवादम्, चोदाहृत्य निर्गुणात्मज्ञानविध्यपेक्षितनिःश्रेयसरूपफलप्रतिपादकं वचनविशेषमुदाहरति—तथेति। लोकात्मकब्रह्मप्राप्तिरूपस्य फलस्याक्षयत्वाभिधानाद्वचनविशेषोऽयमभिप्रेत इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवसायस्य फलस्य वचनमित्यनेन सूचितम्। स्थानविशेषात्मकलोकप्राप्तेर्जन्यत्वेनाक्षयत्वानुपपत्तिमाशङ्क्य परमात्मैव ब्रह्मशब्दवाच्यः। परमानन्दोपभोगे हेतुत्वकर्म्मधारयसमासाश्रयणेन लोके विवक्षितः तत्प्राप्तेश्च शरीरसम्बन्धोपाधिककर्तृभोक्तृत्वात्मकसंसारिरूपावस्थापरित्यागेनाकर्तृभोक्तृत्वात्मकासंसारिरूपनिजावस्थात्मकत्वेनाजन्यत्वाद्युक्तमक्षयत्वमिति सूचयितुम्—परमात्मेत्युक्तम्। अनौपाधिकरूपाभिप्रायः परमशब्दः पूर्वंकृताशेषबन्धहेतुकर्म्मक्षयाद्वा संसारिरूपप्राप्तौ कर्तृत्वाभावेन कर्म्मान्तरानुपपत्तेः पुनर्भवासम्भवेनापुनरावृत्तेः प्राप्ताया अनुवादात्तत् फलं तदक्षयत्वरूपार्थद्वयाभिधाननिमित्तवाक्यभेदापत्तिरिति सूचयितुमपुनरावृत्तेर्ब्रह्मप्राप्तितो भेदनिरासायापुनरावृत्त्यात्मकतोक्ता।

कामवादलोकवचनविशेषजिज्ञासामनःसहितेति पाठे त्वेवं व्याचक्षते। कामःसत्यकामत्वं वादः सत्यवादः लोकः सूर्यमण्डलाद्युपासनस्थानं वचनविशेष उपदेष्टृत्वं कामादिभिर्मनःपर्यन्तैः सहितस्यात्मनो ज्ञानमित्यवान्तरसमासार्थः। केन वाक्यान्तरेणाभ्युदयरूपं फलमुपात्तमित्यपेक्षायां वाक्यद्वयमुदाहृतम्। निःश्रेयसरूपं केनोपात्तमित्यपेक्षायां स ब्रह्मोपासको यावदायुषमेवंविधां वृत्तिमाचरन् कुर्वंल्लोकात्मकं ब्रह्माभिसम्पद्यते इति वाक्यमुदाहृतम्।

नन्वासां फलश्रुतीनां पर्णमयीन्यायेनार्थवादत्वस्य सम्बन्धग्रन्थेऽभिहितत्वान्न फलसमर्पकत्वं युक्तमित्याशङ्क्याह—अप्रकरणगतेति। अयमाशयः पारार्थ्ये निर्ज्ञाते फलश्रुतेरर्थवादत्वं भवति प्रकरणाच्च यदाङ्क्ते चक्षुरेव एव भ्रातृव्यस्य अङ्क्त इत्यञ्जनस्य पारार्थ्यं निर्ज्ञातम्। यस्य खादिरः स्रुवा भवति छन्दसामेव रसेनावद्यतीति च क्रत्वर्थव्यभिचारिस्रुवादिद्वारा खादिरत्वादेः। न चात्मज्ञानं प्रकरणगतम्, न चात्मनो द्वारभूतस्यैकान्तिकः स्वाभाविकः क्रतुसम्बन्धोऽस्ति। शरीरसम्बन्धोणाधिकत्वात्कर्तृत्वस्याशरीरिरूपात्मज्ञाने तदभावादिति। न च संसारिरूपात्मज्ञानस्य मोक्षसाधनत्वे तस्मिन्सति कर्म्मसु प्रवृत्त्ययोगात्।

बृहट्टीकायां ननु निःश्रेयसज्ञानात् बन्धहेतोर्न कर्म्मणः।

इत्याशङ्क्य—

नैकस्मादपि तत् किं तु ज्ञानकर्म्मसमुच्चयादित्युक्तम्।

तद्विरुद्ध्येतेत्याशङ्क्याह—न चेति। सत्यपि ज्ञाने नित्यनैमित्तिककर्म्माननुष्ठानं विना पूर्वकृतदुरितक्षयायोगादकरणनिमित्तानागतप्रत्यवायपरिहारायोगाच्च तत्फलोपभोगार्थं बन्धप्रसक्तेर्मोक्षायोगात्कर्म्मनाशार्थत्वेन च (ज्ञानविध्यनुपलब्धेर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेत्यादिस्मृतेश्चौपचारिकत्वेनोपपत्तेः सम्बन्धग्रन्थे ज्ञानस्य कर्मनाशकत्वनिषेधाच्च[1]) ज्ञानस्य मोक्षसाधनतया विधानेन कर्मणो मोक्षसम्बन्धो बार्यते। न चासंसारिरूपात्मज्ञानपरिपाकात् प्राक्कर्तृभोक्तृत्वाभिमानानिवृत्तौ कर्मसु प्रवृत्त्यनुपपत्तिरिति विधानशब्देन सूचितम्। परिपक्वेन ज्ञानेनात्मनः कर्म्मसम्बन्धः कर्तृत्वं बाध्यते। विधानावस्थायाङ्कर्तृत्वाभिमाननिवृत्तौ नियोज्यत्वासम्भवाद्विधानानुपपत्तिरित्याशयः। एतदेव विवृणोति—प्रत्याश्रमेति।

नन्वेवमपि—

'मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः।

नित्यनैमित्तिके कुर्यात्प्रत्ययवायजिहासया॥'

इत्यनेन न्यायेन काम्यनिषिद्धवर्जनात्तत्फलोपभोगार्थं शरीरानुत्पत्तेर्नित्यनैमित्तिकानुष्ठानाच्च तदकरणनिमित्तप्रत्यवायफलोपभोगार्थं शरीरानुत्पत्तेर्ज्ञानवाक्यानां चौपचारिकव्याख्यानोपपत्तेः कर्म्मणा ज्ञानं बाध्यताम्, तुल्यबलत्वाद्वा विकल्पोऽस्तु, विरोधपरिहाराय चाङ्गाङ्गीभावः कल्प्यतां न तु निरपेक्षविहितयोः समुच्चयो युक्त इत्याशङ्क्याह—न चेति। अयमाशयः अवान्तरकार्यैक्ये सति बाधो विकल्पो वा स्यात्, इह तु कर्म्मणा पूर्वकृतपापनाशावश्यविहिताकरणनिमित्तपापपरिहारप्रयोजनत्वान्निर्गुणात्मज्ञानस्य च तत्त्वप्रकाशनप्रयोजनत्वान्नावान्तरकार्यैक्यमस्ति। न च बन्धहेतुकर्म्मक्षयान्मोक्षसिद्धेस्तत्त्वप्रकाशनानर्थक्यं शङ्क्यम्। सत्यपि पूर्वकृतकर्मक्षये कर्तृत्वभोक्तृत्वाभिमानानिवृत्तौ निर्व्या-

१. अयं पा० १ पु० नास्ति।

पारत्वानुपपत्तेरवश्यं कस्यचिद् बन्धहेतोः कर्म्मणः प्रसङ्गात्तं निवृत्त्यर्थं कर्तृत्वभोक्तृत्वाभिमाननिवृत्तेरपेक्षितायास्तत्त्वप्रकाशनं विनानुपपत्तेः। एतदेवाभिप्रेत्य वृहट्टीकायामुक्तम्।

'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयन्॥
वैराग्यात्पक्वविज्ञानः कैवल्यं भजते नरः।' इति।

अतोऽवान्तरकार्यभेदान्न तावद् बाधविकल्पौ जीवानादिनिमित्तवतश्च कर्म्मस्वधिकारात्, मुमुक्षोश्च ज्ञानाधिकारादधिकारिभेदलक्षणाद्भिन्नमार्गत्वान्नाङ्गाङ्गीभावः सम्भवतीति पारिशेष्यात्समुच्चय एव युक्त इति।

नन्वात्मज्ञानवच्छब्दज्ञानस्यापि फलसम्बन्धः कस्मान्नेष्यते अत आह—**शब्देति**। यच्चादिमत्त्वाच्च धर्म्मत्वम्, नैतज्ज्ञानप्रयोगयोरित्यनेनादिमद्व्याकरणाधीनस्य ज्ञानस्य तत्पूर्वकस्य वा प्रयोगस्यानादिना वेदेन फलसाधनत्वं वक्तुं न शक्यमित्युक्तम्। तदप्यनुभाषणपूर्वकं परिहरति—**यत्त्विति**। व्याकरणपरम्परानादित्वं वा अनादिवेदविषयत्वान्यथानुपपत्त्या कर्तृस्मृत्या च पौरुषेयत्वावगतिरवसीयत इत्याह—**तस्मादिति**।

यत्तु व्याकृता सम्प्रदायेन वाणी नित्यैव वैदिकीत्युक्तम्। तन्निराकरोति—**न चेति**। वैदिक्या वाचो ह्युच्चारणार्थत्वाव्यवच्छेदायोद्यत इत्येतावद्वक्तव्यम्। अव्याकृतत्वाप्रसक्तेस्तु व्याकृतत्वोक्तिर्निष्फला स्यादित्यर्थः।

'अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियाश्च यजमानाश्च विज्ञेयाः पङ्क्तिपावनाः॥'

इति च मनुप्रोक्तवेदत्वस्य पूर्वोक्तत्वात्, यश्च मीमांसतेऽध्वरमिति च यज्ञमीमांसनस्य पश्चादुक्तत्वाद्यश्च व्याकुरुते वाचमिति व्याकरणस्य पङ्क्तिपावनत्वापादकत्वाभिधानं प्रकृतिप्रत्ययान्वाख्यानरूपव्याकरणविषयं, न तु स्वरवर्णमात्रा कर्माविप्लुतिरूपवैदिकशब्दव्याकरणविषयम्। नाप्युद्दिश्यमानोपादीयमानगुणप्रधानादिरूपवचनव्यक्तिव्याकरणविषयमित्यवधारणात्। तस्य च वेदपूर्वत्वान्नित्यानित्यसंयोगपरिहाराय नित्यत्वं व्याकरणस्याध्यवसीयत इत्याह—**यदपि चेति**।

तदशक्तिश्चानुरूपत्वादिति सूत्रं भाष्यकृताऽथ यदुक्तमित्यादिभाष्येण गाव्यादिशब्दस्य शक्त्या विना कथमर्थप्रतिपादकतेति शङ्कानिराकरणार्थत्वेन व्याख्यातम्। तच्च यथाप्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतामेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति, तथा तदशक्तिश्चानुरूपत्वादित्यत्र वर्णयिष्यते इत्यनेनैव प्रतिपादनप्रकारविशेषाभिधानार्थतया व्याख्यातत्वान्नेह व्याख्यातम्। एकदेशत्वाच्च विभक्तिव्यत्यये स्यादिति सूत्रान्तरमप्यत एवेत्यादिभाष्येणैवं गाव्यादिशब्ददर्शनादिति दार्ष्टान्तिके योजनाद् गाव्यादिशब्दस्य साधुशब्दानुस्मारणेनार्थप्रतिपादकत्वे दृष्टान्ताभिधानार्थतया व्याख्यातमिति प्रतीतेः स्पष्टत्वान्न व्याख्यातम्॥ २७-२९॥

**॥ इति नवमं व्याकरणाधिकरणम्॥**

भा० प्र०--गावी, गोणी आदि एक अर्थ को कहने वाले अनेक शब्दों में एक साधु है, और अन्य असाधु हैं। इस प्रसङ्ग में यह विचार्य है कि कौन शब्द साधु है एवं कौन शब्द असाधु है—इसकी जानकारी किस प्रकार हो सकती है। इसी आशङ्का के उत्तर में "तत्र तत्त्वम्" इत्यादि कहा गया है। कौन शब्द साधु है और कौन शब्द असाधु है—इसका ज्ञान व्याकरण शास्त्र के अनुशीलनजनित संस्कार विशेष से होता है। सूत्र में अभियोग विशेष से साधु शब्द के ज्ञान का निर्देश किया गया है। अभियोग शब्द का अर्थ पटुत्व और विशेष शब्द का अर्थ लक्षण होता है। शब्द अनन्त है, अतः प्रत्येक शब्द को लेकर साधुत्व और असाधुत्व की अवगति नहीं की जा सकती है। सभी शब्दों के स्वरूप को असन्दिग्ध रूप में जानने का कोई लौकिक साधन भी नहीं है। किन्तु व्याकरणशास्त्र में ऐसे नियमों का उल्लेख किया गया है, जिससे एक पद का ज्ञान होने से उसके समान अनेक पदों का ज्ञान सम्भव होता है। इसलिए व्याकरण शास्त्र के द्वारा सभी शब्दों को अधीन किया जा सकता है, अतः व्याकरण का प्रामाण्य सभी के द्वारा अवश्य ही ग्राह्य है। व्याकरण का प्रामाण्य होने से इस शास्त्र में जिन शब्दों को साधु के रूप में निर्देश किया गया है—वे ही साधु शब्द के रूप में ग्राह्य हैं, अन्य असाधु या अपभ्रंश के रूप में त्याज्य हैं, अर्थात् यज्ञादि में व्यवहार के योग्य नहीं हैं, अतः शब्द का साधुत्व सिद्ध नहीं है यह बात नहीं है।

इस प्रसङ्ग में वार्त्तिककार ने कहा है कि शब्द का साधुत्व प्रत्यक्ष आदि छ प्रमाणों के आधार पर जाना जाता है। व्याकरण न श्रुतिमूलक है और न स्मृति ही है, अतः, व्याकरण प्रमाण नहीं है, किन्तु यह कथन ठीक नहीं है, क्योंकि शब्द के प्रयोग की व्यवस्था करना ही व्याकरण स्मृति का प्रयोजन है। इसीलिए कहा गया है—ब्राह्मण म्लेच्छ शब्द=(अव्यक्त) नहीं कहे, अपशब्द का प्रयोग नहीं करे, यह अपशब्द ही म्लेच्छ= अव्यक्त या असमीचीन उच्चारण है; इस प्रकार अपशब्द के प्रयोग का निषेध किया गया है। "तस्माद् ब्राह्मणो न म्लेच्छितवै नापभाषितवै म्लेच्छोह वा यदेष अपशब्दः"। अथ ते असुराः हेलयो हेलय इति कुर्वन्तः पराबभूदुः" वे असुरगण 'हे अरयः' हे अरिगण इसके स्थान पर "हे अलयः" इस प्रकार का उच्चारण करने से पराजित हुए। इस प्रकार के अर्थवाद वाक्य के रहने से श्रुति ने स्पष्ट ही कहा है कि व्याकरण के अनुसार साधु शब्दों का प्रयोग करना उचित है। "तस्मादियं व्याकृता वागुच्यते" (तै० सं० ६।४।७।३) इसीलिए व्याकृत अर्थात् प्रकृति और प्रत्यय आदि से युक्त पद का प्रयोग कराया गया है—इत्यादि श्रुति में स्पष्ट कहा गया है। अतः, व्याकरण का प्रामाण्य श्रुति से सिद्ध है। व्याकरण साधु शब्द के प्रयोग का विधान करती है-यह स्मृति में भी कहा गया है। सभी स्मृतियों में केवल यज्ञ आदि कर्मों का ही प्रतिपादन रहे—ऐसा कोई नियम नहीं है। इसलिए व्याकरण भी स्मृति है और वेदमूलक है। वेद में व्याकरणावगत साधु शब्द के प्रयोग की सूचना होने से व्याकरण के प्रामाण्य में कोई बाधा नहीं है।

'तत्र' शब्द में। 'तत्त्वम्'="तस्य भाव:" अर्थात् उसका साधुभाव=साधुत्व। "अभियोगविशेषात् स्यात्" अभियोग विशेष निबन्धन ही होना चाहिए। कौन शब्द साधु है, इसका ज्ञान व्याकरणशास्त्र के अनुशीलन से उत्पन्न संस्कार-विशेष से ही उत्पन्न होता है। आशय यह है कि साधु और असाधु शब्दों में वस्तुतः कौन शब्द साधु है और कौन शब्द असाधु है-यह शिष्टों के उपदेश से ही अवगत किया जाता है। इस समय लक्षण सूत्र के आधार पर साधु शब्दों की अवगति सम्भव है। अतः, शिष्टगण ही साधु और असाधु के वस्तुतः निर्णायक हैं। जिसके आधार पर व्याकरण सूत्रों की रचना की गई है ॥ २७ ॥

भा० प्र०—गो शब्द के उच्चारण की इच्छा रहते हुए भी असामर्थ्य के कारण गावी शब्द का उच्चारण हो जाता है। यद्यपि इसके द्वारा सास्नादि गलकम्बलयुक्त अर्थ ही विवक्षित रहता है।

आशय यह है कि शुद्ध शब्द का उच्चारण रहने पर भी सादृश्यवश से अर्थ की प्रतीति होती है। इसीलिए "अश्मकैः आगच्छतानि" इत्यादि वाक्यों के सुनने पर "अश्मकेभ्यः आगच्छामि" अर्थात् अश्मक देश से आया हूँ—यह अर्थ अवगत होता है। "अश्मकेभ्य:" इस पञ्चमी विभक्ति के बहुवचन के स्थान पर 'अश्मकैः' यह तृतीया विभक्ति के बहुवचन का प्रयोग किया गया है। इस स्थल में विभक्ति का व्यतिक्रम होने पर अर्थ का ज्ञान न होना चाहिए, किन्तु सादृश्य के कारण अर्थ का ज्ञान हो जाता है। अतः किसी समय गो शब्द के उच्चारण की इच्छा रहने पर भी असावधानी या असामर्थ्य से गावी शब्द का प्रयोग किया है, किन्तु, अर्थ के ज्ञान में किसी प्रकार की अनुपपत्ति नहीं होती है। अतः, गो शब्द साधु है और अन्य शब्द असाधु है। साधु शब्द का ही प्रयोग करना चाहिए, क्योंकि यज्ञादि में असाधु शब्द का प्रयोग करने पर प्रायश्चित्त का उपदेश दिया गया है।

"एकदेशत्वात्" एकदेशता के कारण अर्थात् किसी प्रकार विकृत होने पर भी अन्य अविकृत अंश का ही एक देश होने से 'च' तथा और "विभक्तिव्यत्यये स्यात्" विभक्ति का व्यत्यय होने पर भी अर्थ का ज्ञान होना है ॥ २८ ॥

भा० प्र० गो शब्द के शुद्ध रूप में उच्चारण का सामर्थ्य न रहने से त्रुटि शब्द की विच्युति से गो शब्द विकृत होकर गावी, गोणी आदि के रूप में शब्द उच्चारित होता है। अतः गो शब्द के अनुरूप होने से चेष्टा आदि के द्वारा गलकम्बल आदि अर्थ का बोध होता है। क्योंकि किसी वृद्ध के कथन के अनुसार गामानय के उच्चारण की जगह पर गावीमानय यह उच्चारण होने पर भी सास्नादियुक्त गौ को लाते हुए देखकर गावी का अर्थ भी गौ ही है—अनुरूप होने से यह अवगत करता है।

'तदशक्तिः'=उसकी अर्थात् गो इस शब्द के उच्चारण की 'अशक्तिः'=असमर्थता, अक्षमता, 'च'=एवम् 'अनुरूपत्वात्'=अनुरूप अर्थात् गो शब्द के अनुरूप होने से गो अर्थ का ही बोधक है ॥ २९ ॥

अथ नवममाकृत्यधिकरणम् ।

[ ९ ] प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥ पू०

शा० भा०—अथ गौरित्येवमादयः शब्दाः किमाकृतेः प्रमाणम्, उत व्यक्तेरिति सन्देहः ।

तदुपोद्घातत्वेन लोकवेदाधिकरणम्

उच्यते—इदं तावत् परीक्ष्यताम् । किं य एव लौकिकाः[1] शब्दाः त एव वैदिका उतान्य इति । यदा त एव, तदाऽपि किं त एवैषामर्था ये लोके, उताऽन्य इति संशयः । तत्रान्ये लौकिकाः[2] शब्दाः अन्ये वैदिका, अन्ये चैषामर्था इति ब्रूमः । कुतः ? व्यपदेशभेदाद्, रूपभेदाच्च ।

इमे लौकिका; इमे वैदिका इति व्यपदेशभेदः[3] । 'अग्निर्वृत्राणि जङ्घनत' इत्यन्यदिदं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वाच्च न त एवार्थाः । अपि च समामनन्ति, 'उत्ताना[4] वै देवगवा वहन्ति' । आप श्रौ. ११।७।६ । इति ।

ये देवानां गावः त उत्ताना वहन्तीत्युक्ते गम्यत एव य उत्ताना वहन्ति, ते गोशब्देनोच्यन्त इति । तस्मादन्यो वैदिकगोशब्दस्यार्थः । तथा देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्' इति, हिरण्यपर्णो[5] वै देवो वनस्पतिर्वेदे । 'एतद् वै दैव्यं मधु, यद् घृतम् इति वेदे घृते मधुशब्दः । तस्मादमीषामन्येऽर्था इति प्राप्ते ।

ब्रूमः । य एव लौकिकाः शब्दा त एव[6] वैदिकाः त एवैषामर्था[7] इति । कुतः ? प्रयोगचोदनाभावात् । एवं प्रयोगचोदना सम्भवति, यदि त एव शब्दाः त एवार्थाः, इतरथा शब्दान्यत्वेऽर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति ।

उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यतामिति ? ततो हेतुरुच्यते । अविभागादिति । न तेषामेषां च विभागमुपलभामहे । अत[8] एवैकशब्दत्वम् । तांश्च[9] तांश्चार्थानवगच्छामः[10] । अतो नान्यत्वं च वदामः ।

यच्चोक्तं य उत्ताना वहन्ति ते देवगवाः, यद् घृतम्, तन्मधु, यो हिरण्यपर्णः, स वनस्पतिरिति । नास्ति[11] वचनं यदुत्तानानां वहतां गोत्वं ब्रूयात् । ये गावस्त

---

१ ब. लौकिकास्त एव वैदिकाः । २ ब. तत्रान्ये लौकिका अन्येचैषामर्था ।
३ ब. इति व्यपदेशः । ४ ब. उत्तानानि
५ क. हिरण्यपर्णो देववनस्पतिः । ६ ब. एव च ।
७ ब. एव चैषा । ८ ब. अत एक शब्दत्वं । ९ ब. तांश्चार्था ।
१० ब. अवगच्छामः यच्चोक्तं । ११ ब. तन्नास्ति ।

उत्ताना वहन्तीत्येवं तत् । यदि चानेन वचनेन गोत्वं विधीयते, उत्ताना वहन्तीत्यनुवादः स्यात् । न चोत्ताना वहन्तः प्रसिद्धाः केचित् । ते नियोगतो विधातव्या । तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम् । भिद्येते हि तथा वाक्यम् । यदि चान्ये वैदिकाः तत उत्तानादीनामर्थो न गम्येत् । तत्र नतरां शक्येताऽविज्ञातलक्षणं गोत्वं विज्ञातुम्[1] । न चोत्तानवहनवचनमप्यनर्थकम्, स्तुत्यर्थेनाऽर्थवद्भविष्यतीति । एवं घृतस्य मधुत्वम्, हिरण्यपर्णता च वनस्पतेः । तस्मात्त एव शब्दाः अर्थाश्च ॥

यदि[2] लौलिकाः त एवार्थाः तदा सन्देहः[3]—किमाकृतिः शब्दार्थः, अथ व्यक्तिरिति । का पुनराकृतिः ? का व्यक्तिरिति ? द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः ।

असाधारणविशेषा व्यक्तिः । कुतः संशयः । गौरित्युक्ते सामान्यप्रत्ययाद्, व्यक्तौ च क्रियासम्बन्धात्[4] । तदुच्यते व्यक्तिः शब्दार्थ इति ।

कुतः ? प्रयोगचोदनाभावात् । आलम्बन-प्रोक्षण-विशसनादीनां प्रयोगचोदना आकृत्यर्थे न सम्भवेयुः । यत्रोच्चारणानर्थक्यम्, तत्र व्यक्त्यर्थः । अतोऽन्यत्राऽऽकृतिवचन इति चेत् ? उक्तम् 'अन्यायश्चानेकाशब्दम्' इति । कथं सामान्यावगतिरिति चेत् ? व्यक्तिपदार्थकस्याऽऽकृतिश्चिह्नभूता भविष्यति—य एवमाकृतिकः[5], स गौरिति[6] । यथा यस्य दण्डोऽस्ति, स दण्डीति । न च दण्डवचनो दण्डिशब्दः, एवमिहापि ॥ ३० ॥

भा० वि०—विषयसंशयौ दर्शयति—**गौरित्येवमादय इति** । आदिशब्देन गुणक्रियाशब्दानां आख्यातानां च सङ्ग्रहः येषु जातिव्यक्तिवाच्यत्वसन्देहः तेषामेव ह्युदाहरणत्वम् । स च जातिगुणक्रियाशब्देष्वेव, नोपसर्गनिपातयोः । यदृच्छासर्वनामशब्दादिषु चेत्यभिप्रायः । अत्र च गौरश्व इत्यादीनां वाचकत्वेन साधुत्वे निरूपिते तेषामेव वाच्यविशेषनिरूपणमनेन क्रियत इति प्रासङ्गिकतया अवान्तरसङ्गतिं सूचयितुं गौरित्येवमादय इत्युक्तम् । प्रमाणम् ज्ञापका वाचका इति यावत् । एवमाकृत्यधिकरणीयं सन्देहमुपन्यस्य, इदानीं तदुपोद्घाततया विचारान्तरमवतारयति—**उच्यत इति** । यत एतत् स्वावसरे वक्ष्यतेऽतस्तिष्ठतु । इदं तावत्परीक्ष्यतामित्यर्थः । परीक्षामभिनयति—**य एवेति** । शब्दाभेदेऽप्यर्थभेदाभेदविषयं विचारमाह—**यदेत्यादिना** । अत्र च व्यपदेशभेदात् प्रत्यभिज्ञानाच्च

---

१ ब. विधातुं । २. यदा ।
३ ब. संशयः । ४ ब. संभवात् ।
५ क. एवमाकृतिः । ६ ब. गौरितियस्यदंडो ।

प्रथमस्संशयः। लिङ्गदर्शनप्रत्यभिज्ञानाभ्यां द्वितीय इति द्रष्टव्यम्। प्रयोजनं तु पूर्वपक्षे लोकवेदयोः पदपदार्थान्यत्वे लौकिकानां पदानां वृद्धव्यवहारोपात्तादर्थवत्त्वेऽपि वैदिकानामव्युत्पन्नत्वेनानर्थक्यात् निर्विषयत्वेनाकृत्यधिकरणानारम्भः। सिद्धान्ते तु लोकवेदयोः पदपदार्थाभेदेऽपि सति वैदिकानां पृथग्व्युत्पत्त्यनपेक्षतयार्थवत्त्वेन सविषयत्वादारम्भः। तत्र पूर्वपक्षमाह—**तत्र लौकिका इति।** प्रश्नपूर्वकं हेतुद्वयमाह—**कुत इत्यादिना।** व्यपदेशभेदं विवृणोति—**इम इति।** केषां शब्दानां वैदिकानां लौकिकानां च इत्यादाविति भावः। रूपभेदं विवृणोति—**अग्निरिति।** नियतस्वरो हि वैदिकोऽग्निशब्दः अनियतस्वरश्च लौकिक इति रूपभेदाद् भेद इत्याशयः।

एवं शब्दान्यत्वे हेतुद्वयमुक्त्वा अर्थान्यत्वे लिङ्गदर्शनमप्याह—**अपि चामनन्तीति।**

ननु कथमस्य वाक्यस्यार्थान्यत्वे लिङ्गत्वम्? लोकसिद्धानां गवां देवसम्बन्धनिमित्तोत्तानवहनप्रतिपादकत्वादस्यात आह—**ये देवानामिति।** यद्यपि स्वरसतो देवगतानामुद्देश्यत्वमुत्तानवहनस्य च विधेयत्वमवगम्यते, तथापि समासान्निष्कृष्य गोमात्रस्योद्देश्यत्वायोगाद्देवगवानां चाप्रसिद्धत्वाविशेषात् 'यद्वृत्तयोगः प्राथम्यं' इति न्यायेन प्रथमोपात्तोत्तानवहनोद्देशेन गोशब्दवाच्यताविधिरवगम्यत इति अर्थान्यत्वे लिङ्गत्वमित्यर्थः। लिङ्गदर्शनफलमाह—**तस्मादिति।** अर्थान्यत्वे लिङ्गन्तरमाह—**तथेति।** वनस्पतेः हिरण्यपर्णेति समानाधिकरणनिर्देशाल्लौकिकस्य च वनस्पतेर्हिरण्यपर्णत्वस्यानुपलब्धिविरोधेन वक्तुमशक्यत्वादलौकिकस्यैव वस्त्वन्तरस्य वनस्पतिशब्दवाच्यत्वमवसीयत इत्यर्थः। लिङ्गान्तरमाह—**तथेति।** ततश्चैषामन्यार्थत्वे सति तन्न्यायेन शब्दान्तराणामप्यन्यार्थत्वे सिद्धिरित्यभिसन्धायोपसंहरति—**तस्मादिति।**

सिद्धान्तमवतार्य प्रतिजानीते—**एवमित्यादिना।** प्रश्नपूर्वकं सौत्रं हेतुभागभवतारयति—**कुत इति।** तमेव हेतुमन्वयमुखेन व्याचष्टे—**एवं हीति।** अनेनैकत्वे सति प्रयोगचोदनाया भावात् संभवादिति सूत्रावयवो व्याख्यातः। सम्प्रत्यकारप्रश्लेषेण तमेव व्याकुर्वन् व्यतिरेकमाह—**इतरथेति।** अस्यैव व्याख्या—**शब्दान्यत्व इति।** भेदे सत्यपूर्वत्वेन सर्ववैदिकपदानामनवगतसम्बन्धत्वेनावबोधकत्वात् क्रियाकारकसंसर्गात्मकः प्रयोगरूपोऽर्थो न प्रतीयेत। अतश्च प्रयोगचोदना अभाव एव स्यादित्यर्थ—**अथैकत्वमिति।** फलपरे सूत्रावयवेऽर्थपदं शब्दस्याप्युपलक्षणार्थमिति व्याचष्टे—**तस्मादिति।** अविभागादिति सूत्रावयवव्यावर्त्याशङ्कामाह—**नन्विति।** अभेद एव वेदप्रामाण्यसिद्धिः न भेदे इत्येवं रूपं प्रयोजनं वेदप्रामाण्यवादिनं प्रत्येव वक्तुं युक्तम् न हैतुकं प्रति। तं प्रति हेतुरेव व्यपदिश्यताम् इत्यर्थः। उत्तरत्वेन सूत्रामादत्ते—**तत इति।** शब्दाभेदे तावद्धेतुं व्याचष्टे—

**न तेषामिति**। स एवायं गोशब्द इति प्रत्यभिज्ञानुरूपस्य प्रत्ययस्य लौकिकवैदिकशब्देषु भावादित्यर्थः। न च व्यपदेशभेदाद् भेदः, व्यपदेशस्य वाक्यतत्समूहविषयत्वेन पदविषयत्वाभावादेव तद्भेदस्य पदभेदकत्वासंभवादिति भावः। प्रत्यभिज्ञाफलमाह—**अत इति**। अर्थाभेदेऽपि योजयति—**तांश्चेति**। शब्दवदर्थेऽप्यैक्यप्रत्यभिज्ञा तुल्येत्यर्थः। चकारेण शब्दैक्यादप्यर्थैक्यमिति सूचितम्। एकत्वावगतिफलमाह—**अत इति**। लिङ्गदर्शनान्यनुवदति—**यच्चेति**। तत्रोत्तानवाक्यं तावन्नोत्तानवहनानुवादेन गोशब्दवाच्यत्वविधिपरम्। अपि तर्हि गवानुवादेन देवसम्बन्धनिमित्तोत्तानवहनात्मकधर्मविशेषविधिपरमिति परिहरति—**नास्तीति**। अथ गोशब्दवाच्यत्वविधिपरत्वे दोषस्तत्राह—**यदि चेति**। भवतु को दोषस्तत्राह—**न चेति**। प्रसिद्धविषयश्चानुवाद इति भावः। अननुवाद्यत्वे फलितमाह—**तत इति**। नियोगतः अवश्यमस्तु तद्धि भयविधमत्राह—**तेष्विति**। अपि च यदि सर्वेषां वैदिकपदार्थानामन्यत्वम्, तत उत्तानादिशब्दानामपि लोकप्रसिद्धार्थासंभवान्न तदनुवादेनाप्रसिद्धं गोशब्दवाच्यत्वं शक्यं विधातुमित्याह—**यदि चान्य इति**। अवगतेऽप्युत्तानादिपदार्थे तस्याननुवाद्यत्वान्न गोशब्दवाच्यत्वं विधेयम् अनवगते तु न तरामित्यर्थः।

ननु उत्तानवहनात्मकधर्मविधानमप्यनर्थकमनुपयोगादिति चोदयति—**नन्विति**। प्रसिद्धानामेव गवां यज्ञार्थतया विनियुक्तत्वेऽपि देवसम्बन्धिनां स्वर्गलोकप्रापकत्वश्रवणादुत्तानवाहकत्वं स्तुत्यर्थतया संकीर्त्यत इति परिहरति—**स्तुत्यर्थेनेति**। लौकिकस्य च घृतस्य देवसंबन्धान्मधुत्वेऽपि रसवीर्यविपाकापादकाद्देवसंबन्धात् पूर्वं मधुत्वाभावेन मधुपर्कसाधनत्वाभावप्रसङ्गाद्वैदिकस्यापि मधुशब्दस्य लौकिक एवार्थ इति स्तुत्यर्थं एव घृते मधुशब्द इत्याह—**एवमिति**। वनस्पतिशब्दस्यापि यज्ञाङ्गवाचिनो लौकिकार्थत्वासंभवाल्लोकसिद्धस्यैव हिरण्यपर्णत्वं स्तुत्यर्थं सङ्कीर्त्यत इत्याह—**हिरण्यपर्णता चेति**। एवं व्यपदेशभेदलिङ्गदर्शनयोरन्यथासिद्धत्वे सिद्धं प्रत्यभिज्ञाबलाच्छब्दार्थैक्यमिति निगमयति—**तस्मादिति**।

एवमुपोद्घाततया लौकिकवैदिकपदतदर्थाभेदं व्युत्पाद्य, प्रकृतमेव विचारं प्रस्तौति—**यदेति**। यदा लोकवेदयोश्शब्दार्थाभेदेने वेदेऽपि लोकव्युत्पन्नाच्छब्दात् व्यक्त्याकृतिरूपोऽर्थः प्रतिपन्नः, तदा किं व्यक्तिर्वाच्या तत्संबन्धादाकृतिप्रत्ययः, अथ वाकृतिर्वाच्या, तत्सम्बन्धाद्व्यक्तिप्रत्यय इति संशय इत्यर्थः। प्रयोजनं तु सामान्यविशेषविशिष्टयोरेकविषयत्वादबाधः पूर्वपक्षे सिद्धान्ते तु बाधक इत्यवधेयम्। विषयावधारणसिध्यर्थं प्रश्नपूर्वमाकृतिव्यक्त्योः स्वरूपं निरूपयति—**का पुनरित्यादिना**। समानानां भावस्सामान्यम् अनुगतं रूपमाकृतिरित्यनेन संस्थानस्याकृतित्वं निराकृतम्। द्रव्यगुणकर्मणां सामान्यमिति सत्ताख्यं

महासामान्यमुक्तम् । द्रव्याणां गुणानां कर्मणां च सामान्यमिति सम्बन्धात् द्रव्यत्वगुणत्वकर्मत्वानि दर्शितानि । मात्रशब्दः एतदवान्तरसकलसामान्यव्यावृत्त्यर्थः । असाधारणा विशेषा यस्यां सा व्यक्तिरिति बहुव्रीहिः । विशेषणशब्देन खण्डमुण्डत्वादयः शाबलेयत्वादयश्च गृह्यन्ते । न च तेषां साधारण्यादसाधारणत्वासंभवः । साधारणरूपाणामेव तेषामेकद्वित्र्यादिभेदेन क्वचित्क्वचिदुपलब्धानामेकत्र च संहतानां किञ्चिदुत्कर्षापकर्षमात्रेण सर्वत्रासाधारण्योपपत्तेरिति भावः । एवं विषयस्वरूपं निरूप्येदानीं व्यक्तेरेव कार्ययोग्यत्वात् कार्यान्वयित एव च पदार्थत्वावसायान्न संशयावकाश इति आक्षिपति—**कुत इति** । यथा कार्यान्वयितया व्यक्तेरेव पदार्थत्वं तथानुवृत्ततया शब्दशक्तिविषयत्वयोग्यत्वादाकृतेरेव पदार्थत्वं प्रतीयत इति तुल्यत्वात् सन्देहोपपत्तिरिति परिहरति—**गौरित्युक्त इति** । यद्वा गौरित्युक्ते व्यक्त्याकृत्योस्सामान्यप्रत्ययात्तुल्यप्रत्ययात् प्रत्ययसाम्यादित्यर्थः, व्यक्तौ चकारादाकृतौ चालम्भनस्पर्शनश्येनसदृशचयनादिक्रियासम्भवेन तुल्यत्वात् संशय इति । एवं सन्देहे पूर्वपक्षं प्रतिजानीते—**तदुच्यत इत्यादिना** । प्रश्नपूर्वकं प्रयोगचोदनाभावादिति सूत्रमावृत्यापि योजयति—**कुत इत्यादिना** । आलम्भप्रोक्षणादीनां प्रयोगः—अनुष्ठानम्, तस्य चोदना तासामाकृत्यर्थत्वेऽभावप्रसङ्गानित्यत्वेनामूर्तत्वेन चाकृतेरालम्भनाद्यगोचरत्वादिति सूत्रार्थोऽनेन दर्शितः अर्थैकत्वमिति सूत्रावयवव्याख्यानाय शङ्कामाह—**यत्रेति** । साधुप्रयोगचोदनासु व्यक्त्यर्थत्वं विनानुष्ठानासम्भवादुच्चारणानर्थक्यम्, तत्र व्यक्त्यर्थः शब्दः । अन्यत्र तु प्रथमप्रतीतेः जातिवचन इत्युभयं वाच्यं कस्मान्नाश्रीयत इत्यर्थः । अन्यायश्चानेकशब्दत्वमिति न्यायेनान्यायश्चानेकार्थत्वमित्यप्युक्तमेव । तत्राप्यनेकादृष्टशक्तिकल्पनाविशेषादतोऽर्थैकत्वमेव युक्तमिति सूत्रावयवं व्यावर्त्यं शङ्कामाह—**कथमिति** । यदि व्यक्तिरेव पदार्थः कथं तर्ह्याकृतिप्रत्यय इत्यर्थः । अत्राविभागाद् व्यक्त्या सह सम्बन्धात् सामान्यप्रत्यय इति सूत्रव्याख्यानरूपो परिहारोऽध्याहर्तव्यः ।

ननु व्यक्तेश्शब्दार्थत्वे कथं व्यक्त्यन्तरे प्रयोग इत्यत्राह—**व्यक्तिपदार्थस्येति** । आकृत्युपलक्षितासु सर्वासु व्यक्तिषु प्रयोगमभिनयति—**य एवमाकृतिक इति** ।

नन्वेवमाकृतेरपि पदार्थोपलक्षणत्वात् पदवाच्यत्वमेवेति, नेत्याह—**यथेति** । यथा दण्डिपदार्थविशेषणभूतोऽपि दण्डो न दण्डिपदाभिधेयः । एवं व्यक्त्युपलक्षणभूताकृतिरपि न व्यक्तिपदाभिधेयेति, व्यक्तेरेव पदार्थत्वमित्यर्थः ।

यद्वा यदि व्यक्तिश्शब्दार्थः, कथं सामान्यावगतिरिति पृष्टः पूर्वपक्षवादी सामान्यविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णाति—**व्यक्तिपदार्थस्येति** । अत्र चाविभागादभिधेयभूतविशिष्टान्तर्गतत्वाद्विशेषणस्य सामान्यस्य प्रत्यय इति सूत्रावयवो योज्यः ।

ननु य एवमाकृतिकस्स गौरिति प्रतीतावाकृतेः पूर्वं भानात्, तस्या एव शब्दार्थत्वम्, न तद्विशिष्टव्यक्तेरित्यत आह— यथेति। न हि सत्यामपि न तद्वचनो गोशब्दः, किन्तु विशिष्टवचन इत्यर्थः। तथा चात्र केवला, विशिष्टा वा व्यक्तिश्शब्दार्थ इति पूर्वपक्षौ द्वावभिमतौ इत्यवधेयम् ॥ ३० ॥

## अथ नवममाकृत्यधिकरणम्

त० वा०—इह नाख्यातोपसर्गनिपातानां मध्यान्नामानि परिगृह्यन्ते। तेषामपि जाति-गुण-क्रिया-द्रव्य-यदृच्छा-सर्वनामशब्दानां मध्याज्जातिशब्दाश्चिन्त्यन्ते। तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते किं पुनरयमाकृतेर्वाचकः, अथ व्यक्तेरिति। ततः।

(लोकवेदाधिकरणम्)

एतत्सांन्यासिकं कृत्वा वक्ष्यमाणं तु सांप्रतम्।
उपायफलसिद्ध्यर्थमिदं तावद्विचार्यते ॥ ९२३

किं य एव लौकिकाः शब्दाः त एव वैदिकाः त एव चैषामर्था उतान्य इति।

आह— (शङ्का)

किं लोकवेदशब्दानामेकत्वप्रतिपादने।
प्रयोजनं यतः पूर्वं तावत्तत्प्रतिपाद्यते ॥ ९२४

उच्यते— (समाधानम्)

फलमस्य विचारस्य वैदिकेषु भविष्यति।
लोके च निर्णयोपायस्तेनैकत्वाय यत्यते ॥ ९२५

यदि शब्दार्थानामनन्यत्वं लोकवेदयोर्भवेत्। तत् एतस्या व्यक्त्याकृत्यभिधानचिन्ताया वृद्धव्यवहारस्थानेकप्रयोगानुसरणद्वारेणाभिधेयानभिधेयत्वनिर्णयः शक्यते कर्तुम्।

प्रयोजनं तु लोकस्य न किंचिदपि सिध्यति।
आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥ ९२६

संमूर्छितानेकार्थसंनिधाने हि शब्द प्रयुक्तः कियत्यप्यर्थजाते प्रत्ययं करोति। तेन चाविविक्ताभिधेयगम्यमानांशेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः।

यद्युच्यमानया कार्यं यदि वा जातिगम्यया।
समस्तं क्रियते व्यक्त्या को विवेकधियो गुणः ॥ ९२७

यद्युच्यतेहापि वेदवत्सामान्यविशेषलक्षणबाधसिद्धिरेव प्रयोजनमिति।

तदुच्यते—

सर्वं हि दधिदानादि लोके कर्मार्थलक्षणम् ।
तद्वशात्क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ॥ ९२८

तेन लोके विचारोऽयं जायते निष्प्रयोजनः ।
स्यात्प्रयोजनवान्वेदे ज्ञानोपायस्तु दुर्लभः ॥ ९२९

तेन शब्दार्थभिन्नत्वे व्यक्त्याकृतिविचारणा ।
वाच्यावाच्यविवेकाय न कर्त्तव्या कथंचन ॥ ९३०

अभेदे सति लोकस्थैः कृतः शब्दार्थनिर्णयः ।
तस्मिन्ननुपयुक्तोऽपि फलं वेदेषु दास्यति ॥ ९३१

तेन लौकिकवैदिकशब्दार्थैकत्वे सत्याकृत्यधिकरणमुपपत्तिमत्त्वात्प्रयोजनवत्त्वाच्चाऽऽरब्धव्यम् । भेदपक्षे त्वनारभ्यमित्यवधृत्य भेदपक्षस्तावत्प्रतिपाद्यते । नियतानियतस्वरच्छान्दसप्रकृतिप्रत्ययलोपागमवर्णविकारसदसद्भावकृतरूपभेदान्, अध्यायानध्ययनोपनीतानुपनीतत्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्यत्वगुरुशुश्रूषाराधितगुरुसंप्रदाययदृच्छाप्रयुक्तवाक्यतदर्थान्यत्ववद्यदि पदपदार्थान्यत्वं लोकवेदयोः, ततो लौकिकानामेव व्यवहारोपनिपातादर्थवत्ता । वेदे त्वानर्थक्यान्न चोदनालक्षणो धर्मः । स्वरेण रूपभेदं मन्यते । अध्यायानध्ययनतया वृत्रहननाद्यर्थयोगेन चाविदग्धवाक्यवदुत्तानवहनवाक्यभङ्गः । सर्वेषां च वैदिकानामन्यत्वान्न ततोऽपि पौर्वापर्येणार्थावगतिः । ग्राह्यत्वादिधर्मभेदनियतानियतपदवाक्यरचनाद्वारा व्यपदेशरूपभेदाभ्यां सर्वशब्दानामर्थानां लौकिकानां वैदिकानां च भेद इति प्राप्ते ।

अभिधीयते—

प्रयोगचोदनाभावादेकत्वं तेषु गम्यते ।
तस्मात्सिद्धिः फलत्वाच्चेदविभागाद्भविष्यति ॥ ९३२

भेदे सत्यपूर्वात्सर्ववैदिकपदानामनवगतसम्बन्धत्वेनार्थशून्यत्वात्क्रियाकारकसंसर्गात्मकप्रयोगचोदनानामभाव एव स्यात् ।

एकत्वे सति सद्भावादिति वा हेतुवर्णना ।
अर्थैकत्वं प्रधानत्वाद्वस्त्वभेदोऽथ वोच्यते ॥ ९३३

शब्दार्थैकत्वमिति वक्तव्येऽर्थैकत्ववचनं फलादेव शब्दैकत्वोक्तिसिद्धिमत्वैवमुक्तम् ।

अथ वा वस्तुमात्रपर्यायत्वादुभयसाधारण्याभिप्रायेणैवार्थैकत्वोक्तिः । प्रयोगचोदनाभावप्रसङ्गः परपक्षे, स्वपक्षे वा तद्भावसिद्धिर्वेदवादिनैव सह विवादेऽव-

कल्पते, नान्येनेत्यत आह—**प्रयोजनमिदं**[1] तत्प्रमाणमभिधीयतामिति । तदुच्यते। प्रत्यभिज्ञारूपप्रत्ययविभागाज्ज्ञायमानोभयप्रमेयरूपाविभागाद्वा वाक्यतत्समूहमात्रनिबन्धनापन्नपदवर्णविषयत्वव्यपदेशाविभागाद्वा, तथोच्चारयितॄणां स्थानकरणप्रयत्नाविभागाद्वा, लक्षणविदां वा बहुतरानुगमनाविभागादिति हेत्वर्थविकल्पाः ।

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
एकशब्दोत्थितज्ञानग्राह्यत्वाच्चैकवाक्यता ॥ ९३४

यथाश्रुतगवादीनां याऽपि वाच्यान्तरे श्रुतिः ।
अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥ ९३५

यथा हि वामना गावो नराश्चिपिटनासिकाः ।
कर्णप्रावरणाश्चाऽन्ये नरार्थत्वाच्च न च्युताः ॥ ९३६

एवं सत्येव गोत्वादौ धर्मो यदि विलक्षणः ।
नैतावताऽर्थभेदोऽस्ति विशेषानभिधानतः ॥ ९३७

न च या एव देवानां गावः ता एवाऽवश्यं सर्वत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरां प्रयुज्यमानत्वात् ।

एवं हिरण्यपर्णत्वं मेरौ यदि वनस्पतेः ।
देवलोके ततः शब्दः किमर्थान्तरवाच्ययम् ॥ ९३८

यच्चैतद्घृतमस्माकं देवानां मध्विदं यदि ।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ॥ ९३९

न च सर्वाप्रसिद्धत्वे गम्येतैकोऽपि कश्चन ।
तेनासिद्धैरसिद्धानां नास्त्यन्यत्वनिरूपणम् ॥ ९४०

अतोऽवश्यमेतेषामेव गवादीनां देवसम्बद्धानामुत्तानवहनप्रतिपादनमिति वक्तव्यम् ।

अथ वा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलक-त्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दृष्टिवशाद्यथैव वयमुपरि देवान्पश्यामः । एवमधो ह्युपरिवर्तनादयमपि लोको देवैरुपरि दृश्यत इति, उत्तानवहनदृष्टिः । तस्माल्लोकवेदयोरभिन्नाः शब्दार्था[2] इति सिद्धे ।

**आकृत्यधिकरणस्य पूर्वपक्षः**

विचार्यते किमाकृतिः शब्दार्थः, अथ व्यक्तिरिति ।

द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि ।

१ क. प्रयोजनमतत्प्रमाण । २. क. व्याकृत्या ।

### अत्र वार्त्तिकमतं

व्याख्यातारस्तथाऽप्यत्र कुर्युः पक्षान्तराण्यपि ॥ ९४१

नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।
सम्बन्धः समुदायो वा विशिष्टा वैकयेतरा ॥ ९४२

एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम् ।
लिङ्ग-कारकसंख्याभिः संहतासंहतात्मभिः ॥ ९४३

पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना ।

प्रथमं तावदष्टपक्ष्येवं दर्शयितव्या—गोशब्दस्यार्थः किमाकृतिरेव, व्यक्तिरेव, उताऽऽकृतिर्वा व्यक्तिर्वा, अथाऽऽकृतिश्च व्यक्तिश्च, किमुभयोः सम्बन्ध, उत समुदायः, किमाकृतिविशिष्टा व्यक्तिः, उत व्यक्तिविशिष्टाऽऽकृतिरिति । तथा किमाकृत्यैव विशिष्टः सम्बन्धः, किं व्यक्त्यैव, आकृत्या वा व्यक्त्या वा, अथ समुदायेनाप्याकृतिविशिष्टया, व्यक्त्या, अथ व्यक्तिविशिष्टयाऽऽकृत्या, अथ परस्परविशिष्टाभ्यां द्वाभ्यामिति । तथा किमाकृत्यैव विशिष्टः समुदाय इत्याद्यपि पूर्ववदेव सम्बन्धविशिष्टसमुदायपक्षमात्रातिरिक्तं योजनीयम् ।

एवं किमाकृत्यैव विशिष्टः सम्बन्ध एव, उत व्यक्त्यैव, अथवाऽऽकृत्या वा, व्यक्त्या वा, अथ समुदायेन किमन्यतरविशिष्टयाऽन्यतरया, अथोभाभ्यामित्येवं समुदायविशेषणत्वपक्षाः पूर्ववदेव योज्याः ।

एवं किं सम्बन्धेनैव विशिष्टाऽऽकृतिः, अथ समुदायेनैवाथ विकल्पमानाभ्यामुत समुच्चिताभ्याम् । तथैतद्विशिष्टा किमाकृतिरेवाथ व्यक्तिरेव, अथ विकल्पिते किं समुच्चिते किमिति । तथा किमाकृतिविशिष्टसम्बन्धविशिष्टा व्यक्तिरेव, अथ व्यक्तिविशिष्टसम्बन्धविशिष्टाऽऽकृतिरेवाथ विकल्प उत समुच्चयः । एवं समुदायेनापि योज्यम् ।

तथा सम्बन्धविशिष्टव्यक्तिविशिष्टाकृतिरेवाथं संबन्धविशिष्टाकृतिविशिष्टा व्यक्तिरेवाथ विकल्पोऽथ समुच्चयः । एवं समुदायविशिष्टपक्षाः कल्पयितव्याः ।

तथा किं जात्यैव विशिष्टेन सम्बन्धेन विशिष्टा व्यक्तिः, अथ व्यक्त्यैव विशिष्टेन सम्बन्धेन विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः । एवं समुदायेनापि विशिष्टता योज्या । तथा किं सम्बन्धेनैव विशिष्टया जात्यैव विशिष्टा व्यक्तिरुतैवंविधया व्यक्त्यैव विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः ।

एवं समुदायेनैव विशिष्टयेत्यपि योजयितव्यम् । एवं जातिलिङ्गयोर्जातिकारकयोर्जातिसंख्ययोश्च प्रत्येकं जातिव्यक्तिपक्षविकल्पितसमुच्चितपक्षोत्थानं दर्शयित्वा व्यक्तेर्लिङ्गादीनां च दर्शयितव्यम् । तथा लिङ्गसंख्या लिङ्गकारक-

संख्या कारकयुगलान्यपि विकल्प्य प्रत्येकद्वित्रिलिङ्गादिसहितैकजातिव्यक्तिविकल्पास्त्रियोगपञ्चयोगाश्रया दर्शयितव्याः।

एवं शब्दस्वरूपस्य पुनर्जात्यादिभिः सह।
एकद्वित्रिचतुष्पञ्चषट्कैः सह विकल्पना ॥ ९४४

एते चात्यन्तनिष्कृष्टाः पक्षा यद्यपि न स्थिताः।
बुद्ध्या तथापि भिद्यन्ते जातिद्रव्यगुणादिवत् ॥ ९४५

सर्वत्रेन्द्रियलिङ्गाभ्यां भेदः स्तोकोऽवगम्यते।
शब्देन तु सुसूक्ष्मोऽपि वस्तुभागो विभज्यते ॥ ९४६

पदात्प्रभृति चैवं या प्रज्ञा ज्ञातुर्विजृम्भते।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥ ९४७

### भाष्योक्तपक्षद्वयस्य समर्थनम्

अत्र चाऽऽकृतिरेवेति दृढः पक्षोऽयमेकतः।
इतरे त्वन्यतः सर्वे व्यक्तिपक्षानुयायिनः ॥ ९४८

व्यक्तौ निराकृतायां च समस्तानां निराक्रिया।
सुलभेति न सर्वेऽमी भाष्यकारेण दर्शिताः ॥ ९४९

न चैतस्मान्न सन्त्येव[1] न चैते निष्प्रयोजनाः।
विकल्पिता हि जिज्ञासोः प्रज्ञाविकसनक्षमाः ॥ ९५०

दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः।
का शब्देनाऽऽकृतिव्यक्त्योरुच्यते काऽनुगम्यते ॥ ९५१

ततश्च—विचारमुखसिद्ध्यर्थं स्वरूपं तावदेतयोः।
प्रश्नपूर्वमुपन्यस्य याथात्म्येन निरूप्यते ॥ ९५२

### पुनरुक्ति-समाधाने

ननु प्रथमपाद एवाऽऽकृतेर्निरूपणादिदानीं प्रश्नोत्तरे मन्दप्रयोजने ?

उच्यते—सत्यमेवाऽऽकृतिः पूर्वं प्रत्यक्षेण निरूपिता।
संस्थानाशङ्कया त्वत्र सामान्यात्मा निरूप्यते ॥ ९५३

### संस्थानाकृत्योर्भेदप्रतिपादनम्

द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति।

---

१ क. सत्येव।

द्रव्यादीनां च सामान्यं परापरविभागवत् ।
वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥ ९५४

पुनर्वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता ।
पृथिवीत्वाद् घटत्वं च तद्व्यक्तिषु समाप्यते ॥ ९५५

वृक्षत्वात्परतश्चेष्टं शिंशपात्वादि केवलम् ।
शरीरत्वाच्च गो-वाजि-हस्ति-पुंस्त्वादि गम्यते[1] ॥ ९५६

वाजिकत्वादि चाश्वत्वात्कर्कादिस्तु गुणो मतः ।
हस्तित्वाद्भद्रमद्रादिदिङ्नागकुलजातयः[2] ॥ ९५७

पुंस्त्वाद् ब्राह्मणकौण्डिन्यकठत्वादिसमाप्यते ।
तथा गुणत्वकर्मत्वरूपता जन्मतादि यत् ॥ ९५८

ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति ।

**शब्दान्तरादिभिः षड्भिः प्रमाणैः कर्मभेदः**

कर्मणामपि यागत्वहोमत्वादिविभागतः ॥ ९५९

अपर्यायस्मृतेरुक्तं धातुभिः प्रविभज्यते ।
पुनर्विधानसंख्याख्या गुणप्रकरणान्तरैः ॥ ९६०

**तार्किकमतजैमिनिमतयोरुपन्यासः**

अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते ।
अपि वाऽव्यतिरेकात्स्याद्देशादेरेकरूपता ॥ ९६१

रूपशब्दाविभागाच्च वक्ष्येतद्धि[3] जैमिनिः ।
एवं प्रपञ्चितं सर्वमर्थसामान्यमाकृतिः ॥ ९६२

न संस्थानं कुतो ह्येतदात्मादिगुणकर्मसु ।

सर्वेषु हि पार्थिवेषु गवादिघटादिषु संस्थानं भवेत् । अग्नितोयवाय्वाकाशादीनां तु पार्थिवद्रव्यपरिग्रहवशादाकारानुवृत्तिः कल्प्येत, न स्वातन्त्र्येण । दिक्कालात्ममनसां तु गुणकर्मणां च न कथंचिदपि संस्थानं संभवति । सामान्यमात्रं तु सर्वास्वविशेषानुवृत्तिरूपं संभाव्यते । तस्मादेतदेवाभिधेयाकृतिलक्षणम्, नावयवरचनासंस्थानाकृतित्वमवकल्पते ।

संस्थानस्य च नाशित्वात्प्रतिव्यक्ति च भेदतः ।
सामान्यव्यवहारित्वं नाऽऽकृतित्वेऽत्रकल्पते ॥ ९६३

---

१ क. ( टिप्पणियां ) कथ्यते । २ क. दिग्नाग ।

३. जै० सू० ( ६–३-४ ) इत्यत्रैवि शेषः ।

अथ संस्थानसामान्यमाकृतित्वेन गृह्यते ।
अश्वादिष्वपि तुल्यत्वाद्भवेदाकृतिसंकरः ॥ ९६४
न चावान्तरसंख्यानं सर्वगोपिण्डवृत्ति यत् ।
अश्वादिभ्यो निवृत्तं च गोशब्दालम्बनं भवेत् ॥ ९६५

तस्य ह्युपलक्षणालोच्यमानं न जातेरन्यल्लभ्यते, ततश्च जातिरेव सामान्यमिति न्यायेनाऽऽपद्यते। तेन प्रथमपादे रुचक-स्वास्तिक-वर्धमानकोदाहरणात्संस्थानाकृत्यभिधानाशङ्काक्षयादर्शनवदासीदित्येताभ्यां प्रश्नोत्तराभ्यां व्यावर्त्यते। अतश्च द्रव्यगुणकर्मणां यावत्किंचित्प्राग्व्यक्तिभ्यः सामान्यम्, तत्सर्वमाकृतिरेवेत्यभिप्रेत्य मात्रशब्दः प्रयुक्तः। **असाधारणविशेषा व्यक्तिरिति।**

केचिदाहुः—असाधारणा विशेषा एव व्यक्तिः। विशेषव्यतिरिक्तव्यक्त्यभावादिति।

**तन्निरासः**

तत्तु नैवं विशेषेभ्यो व्यक्तिरन्यैव हीष्यते ।
खण्डमुण्डादयः सर्वे विशेषत्वेन संमताः ॥ ९६६
ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि ।
शाबलेयादिभेदोऽस्ति तदपत्यान्तरेष्वपि ॥ ९६७

खण्डमुण्डादयस्तावदन्या अपि व्यक्तयो भवन्त्येव, गवयमहिषादिव्यक्तयश्च। शाबलेयोऽपि यथैकः तथाऽन्योऽपि यः शबलापत्यत्वेन गम्यते, स सर्वः शाबलेयः। एतच्चोभयवर्णनिमित्तम्, यादृच्छिकं वा, नामाऽन्यत्रापि विनियोगवशाद्वर्तत एव। तदपत्ये च शाबलेय इत्यसाधारणव्यपदेशानुपपत्तिः। विशेषव्यक्तिशब्दयोर्बहुवचनैकवचनान्तयोः सामानाधिकरण्यप्रयोगवचनभेदाददोषः।

**अत्र शंकासामधाने**

तस्मादसाधारणा विशेषा यस्यां सा व्यक्तिरित्येवं व्याख्येयम्।

**स्वमतोपन्यासः**

ननु पूर्वोक्तेन न्यायेन खण्डादीनामपि बहुव्यक्तिसाधारण्याद्व्यक्तिव्यतिरिक्तानां चान्येषां केवलैकैकव्यक्तिगतानां विशेषाणामसंभवाद्बहुव्रीहिरप्यनुपपन्नः। उच्यते। नैव विशेषाणां प्रत्येकमसाधारणत्वमाश्रित्य व्यक्तिविशेषणत्वेनोपादानम्। कथं तर्हि साधारणरूपाणामप्येकद्वित्रादिभेदेन क्वचिदुपलब्धानाम्, यदेकत्र पिण्डीकृतानां ग्रहणम्, तदपेक्षमसाधारणविशेषत्वाभिधानम्।

प्रविप्रक्ता हि ये दृष्टा दृश्यन्ते संहताः पुनः ।
पिण्डासाधारणत्वेन तैर्व्यक्तिरुपलक्ष्यते ॥ ९६८

न चैकस्यां व्यक्तौ ये समुदिता दृष्टाः त एव व्यक्त्यन्तरेऽप्यन्यूनानतिरिक्ता दृश्यन्ते। य एवादृष्टपूर्वस्तस्मिन्समुदाये संप्रति दृश्यते, स एवासाधारणतामापादयति। अनन्तभेदास्वपि व्यक्तिषु नात्यन्तापूर्वविशेषणोपलक्षणोपादनं किंचिदुत्कर्षापकर्षमात्रेण च सर्वत्रासाधारणोपलक्षणलाभात्परसामान्यापेक्षया च सर्वाण्येवावान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति। संघातावस्थायां च व्यक्तिविशेषणत्वात्तेषु विशेषशब्दः। एतच्च व्यक्तेर्विशेषाणामन्यत्वमुपरिष्टाद्भाष्यकारोऽपि वक्ष्यत्येव, **'योऽर्थः सामान्यस्य विशेषाणां चाऽऽश्रयः, सा व्यक्तिरिति।**

### भर्तृहरिणा वाक्यपदीयेऽभिहितस्यार्थस्यानुवादः

तत्र [1]केचिद् गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यवाचिना शब्देनाऽनाभिधेयत्वाद्यदेव महासामान्यं सत्ता-वस्तु-भावशब्दाभिधेयम्, तदेव शब्दस्वरूपव्यवच्छिन्नं वा गोसत्ताख्यमाकृत्यभिधानपक्षे वाच्यमिति मन्यन्ते।

यथाऽऽहुः—अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ इति ९६९ (वा. का. श्लो.)

### तन्निरासः

तत्तु कक्ष्याविभागेन[2] सामान्यानां निरूपणात्।
अयुक्तं न गवादीनां तत्र वाचकशक्तता ॥ ९७०

प्रतिनियतार्थविषया हि शब्दानां वाचकशक्तिरर्थापत्त्या गम्यते। तत्रानन्तावान्तरसामान्यवचनानां द्रव्य-गुण-कर्मशब्दानामेव तावदसंकीर्णार्थत्वात्सत्तार्थत्वमनुपपन्नम्, किमुत दूरान्तरितार्थगवादिशब्दानाम्।

सत्तामेते वदन्तश्च न शुद्धां सविशेषणाम्।
वदन्तीत्यभिधातुं हि शक्यं द्वेधाऽप्यसंभवात् ॥ ९७१

शुद्धवचनत्वे तावत्सर्वेषामेकार्थप्रत्यायनात्पर्यायत्वप्रसङ्गः। पुनरुक्तत्वाच्चास्तिशब्दप्रयोगानुपपत्तिः।

गौर्नास्तीति प्रयोगश्च विरोधान्नावकल्पते।
न हि सत्तैव नास्तीति कथंचित्संप्रतीयते ॥ ९७२

---

१. कक्ष्याशब्दः कोष्ठवाची, द्रव्यत्वगुणत्वकर्मत्वान्येकस्यां सत्तावान्तरसामान्यकक्ष्यायां पृथिवीत्वादीनि द्रव्यत्वावान्तरसामान्यकक्ष्यायां रूपत्वादीनि गुणत्वावान्तरसामान्यकक्ष्यायां च वर्तन्त इति कक्ष्याविभागो ज्ञेयः।

२. जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति इति निरुक्तोक्ताः षड् भावविकारा ज्ञेयाः। अत्र च योऽस्तिशब्देन द्वितीयो भावविकार उच्यते स एव सत्तेत्येतद्युज्यत इत्यर्थः।

देशकालव्यपेक्षायामपि नैव सत्तायां नास्तित्वमभिधातुं युक्तम्, विभुत्व-नित्यत्वाभ्यां सर्वदेशकालव्यापित्वात् ।

रूढिशब्दश्च नैवायं लोकदृष्ट्या प्रतीयते ।
तेन द्रव्यादिसामान्यं सत्तेत्येतन्न युज्यते ॥ ९७३

य एव ह्यस्तिशब्देन द्वितीयो भावविकार[1] उच्यते । जायमानविपरिणामाद्यवस्थसर्वत्रस्तुषु विनश्यत्तापर्यन्तेषु वस्त्वाकृतिप्रतिपत्तिर्दृश्यते । तेन यदि नाम महासामान्यमभिधेयं प्रतिज्ञायते, ततो वस्त्वर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणमिति कामं वक्तव्यम्, न अस्त्यर्थं इति । न चावयवार्थपरित्यागेन सच्छब्द-सत्ताशब्दौ वर्तेते इति भवच्छब्दवद्देवास्तीति सद्भावः सत्तेति, न तु वैशेषिकपरिभाषया यतो द्रव्यगुणकर्मसु सदिति प्रतीतिः सा वैशेषिकाभिमतसत्तासामान्यस्योपन्यास-निरासौ सत्तेति । एवंलक्षणा जातिः प्रतिपत्तव्या ।

सेयमव्ययशब्देन वस्तुपर्यायवाचिना ।
भवत्साधारणार्थेन प्रसिद्धिरुपपादिता ॥ ९७४

अस्तित्वमस्तितेत्येवं दृश्येते प्रत्ययौ यतः ।
स वस्तुवचनः शब्द आख्यातप्रतिरूपकः ॥ ९७५

अप्रातिपादिकत्वाद्धि नाऽऽख्यातात्त्वतलौ स्मृतौ ।
अस्तिक्षीरा समासश्च तेन सद्वाचिनेष्यते ॥ ९७६

अस्तिक्षीरा गौरिति तिङन्तसमासत्वेनानुपसंख्यानादवश्यंभाविप्रत्ययलक्षणद्वारसुबन्तत्वयोग्याव्ययपदेन सह क्षीराशब्दस्यान्यपदार्थे बहुव्रीहिरभ्युपगन्तव्यः । तत्र चायं सदर्थवचनः, सक्षीरा गौरिति प्रत्ययोत्पादात् । ततश्च वस्तुनि सति च प्रयुज्यमानमस्तिशब्दमुपलभ्य तदर्थानुसरणप्रत्यासन्नं सच्छब्दं च देवात्तलिति च स्वार्थिकं देवतेतितिवत्तलमिहाप्यस्तिधातुवाच्यार्थविशिष्टकर्तृप्रतीतिमनङ्गीकृत्य शुद्धधात्वर्थमात्रवचनादेव सच्छब्दसत्ताशब्दौ गृहीत्वैवं तार्किकैः कल्पितं सच्छब्दवाच्या सत्ता महासामान्यमिति । तदुक्तान्तगमनेऽनादराच्च[2] पदवाक्यविद्भिरप्युपेक्षितं प्रसिद्धमिवेमामवस्थां प्राप्तं गवादिशब्दवाच्यत्वेनापि संभाव्यते ।

---

१. क. गोत्वादिविशेषव्यवच्छिन्नं (इत्यधिकम्)

२. तदुक्तेति—यावद्यावद्विवादाय मुक्तकं दीयते मनः ।
अनवस्थादिदोषेण तावत्तावद्विहन्यते ।
इत्यनेन न्यायेन चिरनिखाततडागादिगतशैवालवच्छुष्कतर्कस्याप्रतिष्ठितत्वेन निराकृतस्यापि पुनःपुनरुद्भवेन समापयितुमशक्यत्वात्तार्किकोक्तस्यान्तगमने—समापने अनादरादभियुक्तैरुपेक्षितत्वात्प्रसिद्धं सदिमां युक्तायुक्तविचारावस्थां प्राप्तमित्यर्थः ।

न त्वर्थाद्गम्यमानस्य वस्तुत्वस्यापि वाच्यता ।
धर्मान्तरत्ववृत्तेस्तु[1] सत्तायाः कुत एव सा ॥ ९७७

वस्तुशब्दो हि रूढित्वाद् व्यक्तिजात्यन्तराश्रितम् ।
सामान्यं यद् ब्रवीत्येतद् गम्यतेऽर्थैर्गवादिभिः ॥ ९७८

शुद्धाभिधानपक्षस्य दुष्टत्वात्तैर्विशेषितम् ।

**वक्ष्यमाणेन निरासहेतुना अस्य पक्षस्य निराकरणम्**

महासामान्यमिष्टं चेद्वाच्यं तदपि दुर्लभम् ॥ ९७९

यदेवाऽऽकृतिविशिष्टव्यक्त्यभिधानपक्षे, व्यक्तिविशिष्टाकृतिपक्षे वा निराकरणकारणम्, तदत्रापि सुलभम्, विशेषणस्य पूर्वतराभिधानप्रसङ्गात् ।

गोसत्तां चापि गोशब्दो यदि नाम ब्रवीत्ययम् ।
गोजात्या वा विशिष्टां तां वदेद् व्यक्तिभिरेव वा ॥ ९८०

तत्र—गोत्वजातिविशिष्टा चेत्सत्ताऽनेनाभिधीयते ।
उक्ताद्विशेषणादेव तत्सिद्धेः सा किमुच्यते ॥ ९८१

विशेषगमनभिधाय तद्विशिष्टविशेष्याभिधानासम्भवाद्विशेषणस्य च विशेष्येणाऽत्यन्तसम्बन्धात्पूर्वतराभिहितविशेषणभूतगोत्वसम्बन्धादेव सत्तावगमसिद्धेर्न तत्राभिधानशक्तिकल्पनायामर्थापत्तिरप्यन्यथाऽप्युपपद्यमानफलत्वप्रतिहता सती न प्रवर्तते ।

तथा व्यक्तिविशिष्टसत्ताभिधानेऽप्येष एव निराकरणहेतुः । अनित्यसम्बन्धज्ञानानन्तशब्दशक्तिव्यक्त्यभिधानपूर्वकैकसत्ताभिधानकल्पनायाश्च केवलव्यक्त्यभिधानपक्षवदनुपपत्तिः ।

**हरिणोक्तस्य दृष्टान्तस्य प्रतिक्षेपः**

यत्तु अपूर्वदेवतास्वर्गैः सममाहुरिति ।

तत्राभिधीयते—

नैवापूर्वादिशब्दानां सत्ता वाच्येत्यवस्थितम् ।
विशेषानेव तेऽप्याहुरर्थापत्त्यादिकल्पितान् ॥ ९८२

केचिच्छ्रुतार्थापत्त्या, केचिद्वाक्यशेषवाक्यान्तरपर्युपस्थापितार्थाविशेषवचना एव सन्तोऽत्यन्ताव्यभिचारिस्वार्थद्वारेण[2] सत्तापदार्थो व्यभिचरतीति, लक्षणयैव तेभ्यः सत्ताप्रतीतिः ।

---

१. धर्मान्तरेति—जात्याख्याद्धर्माद्धर्मान्तरत्वेन—द्वितीयभावविकारत्वेन वर्तमानत्वादित्यर्थः ।

२ क. सत्तां गमयन्तोऽनभिधायकत्वेनावधार्यन्ते न इत्यधिकम् ।

कार्यसामर्थ्यमिन्द्रादिनिर्मिश्रसुखसंगतिः ।
सामान्येनाऽप्यपूर्वादि सत्तातोऽन्यत्तु लभ्यते ॥ ९८३

### अपूर्व-देवतास्वर्गादिशब्दानामर्थान्तरपरत्वम् न सत्तावाचित्वमित्युपपादनम्

सर्वपदार्थानामेव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति, यागादिजनितं च पुंसां फलप्राप्तिसामर्थ्यमपूर्वशब्दवाच्यं यागानुष्ठानात्पूर्वमभूतम्, अनुष्ठानोत्तरकालं चापूर्वं जायत इति यौगिकत्वादेवापूर्वशब्दाभिधानं सर्वत्र लभ्यते। तथा दीव्यन्ति, द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्रतारकादिरूपेण वायवश्च सततगत्या स्तूयन्ते सर्वैर्मन्त्रैरिति देवाः सुज्ञानशब्दसम्बन्धा विशेषरूपैरेवेति, न सत्तागोचरत्वं प्रतिपद्यन्ते । तथा स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिक-याज्ञिकदर्शनेनोच्यते । यथा हि वेदे 'ये हि जना पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्राणि, तथा चैष ज्योतिष्मन्तं पुण्यलोकं जयति' इति । यदि वेतिहासपुराणोपपन्नं मेरुपृष्ठम् ।

अथ वाऽन्वयव्यतिरेकाभ्यां विभक्तं केवलमेव सुखं यत्संवत्सरादिष्वनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितार्थापत्तिसिद्धदेशान्तरानुभवनीयम्। तच्च यद्यपि तादृशमदृष्टपूर्वम्, तथाऽपि मिश्रानुभवादेव विवेकेनोद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयतीति, न तदभिधानमपेक्ष्यते ।

तेनाऽपूर्वादिशब्दार्थाः समाः सत्यं गवादिभिः ।
स्वशब्दाभिहिताः सन्तः सत्तां लक्षयितुं क्षमाः ॥ ९८४

### संशयस्योपसंहारः

अतश्च नैव गोशब्दो गोसत्तामभिधास्यति ।
गोत्वाख्याकृतिवाच्यत्वसन्देहात्तु विचार्यते ॥ ९८५

कुतः संशय इत्येतत्कार्ययोग्यार्थनिर्णयात् ।
व्यक्तिमात्रपदार्थत्वं मन्यमानेन चोद्यते ॥ ९८६

उच्यते कार्ययोगित्वाद् गम्यते व्यक्तिवाच्यता ।
शब्दशक्त्यनुरोधात्तु नाऽऽकृतेर्व्यतिरिच्यते ॥ ९८७

शक्ति-कार्यसंवादादेव शब्दार्थगोचरात् ।
किं समञ्जसमित्येवं नाऽविचार्याऽवधार्यते ॥ ९८८

### पूर्वपक्षः

किं तावत्प्राप्तम्—

प्रयोगचोदनाभावाद् व्यक्तिर्वाच्या न तूभयम् ।
अर्थैकत्वं यतो युक्तमविभागाद् द्वयोर्गतिः ॥ ९८९

नित्यं यथैव शब्दानामाम्नातानां प्रयोजने ।
अर्थप्रत्यायनार्थत्वात्तद्दर्शनाऽवधारणा ॥ ९९०
एवं सर्वपदार्थानां वाक्यार्थप्रत्ययाङ्गता ।
यथा सिध्येत्तथा कार्यं तेषां रूपनिरूपणात् ॥ ९९१
आकृतिर्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः ।
केन चेज्येत न त्याग आकृतेरुपपद्यते ॥ ९९२
अमूर्ता ह्याकृतिर्नित्या नाऽवघातादिभाजनी[1] ।
तद्विधिः प्रतिषेधो वा तेनास्या नावकल्पते ॥ ९९३

'व्रीहीनवहन्ति, पशुं संज्ञपयति, सोममभिषुणोति, पावयति, सोमेन पशुना व्रीहिभिश्च यजते' इति यावन्त एवमादयो विनाशिमूर्तिमद्विषयाः संस्काराः प्रयोजनसिद्ध्यर्था वा तेषां प्रयोगचोदनाया आकृतावभावाद् । व्यक्तौ तु भावात्कार्यंप्रधानत्वाच्च पदार्थप्रतीतेः, विध्यधीनत्वाच्च सर्वपुरुषचेष्टानामवश्यं विधिविषयत्वयोग्यवाक्यार्थपूरणसमर्थपदार्थकल्पनमङ्गीकर्तव्यम् ।

तथा यदपि 'ब्राह्मणो न हन्तव्यः, न कलञ्जं भक्षयितव्यम्' इत्यादिप्रतिषेधविधानम्, तदपि प्राप्तिपूर्वकत्वेन[2] सापेक्षत्वाद् व्यक्तौ च प्राप्तिसम्भवादाकृतेश्चानधिकारात्, असत्यां प्राप्तावनर्थकमेव स्यात् । तस्माद्येन शब्दार्थेन प्रयोगचोदनां भावो भवति, स एवाभ्युपगन्तुं न्याय्यः न तत्त्वज्ञानमात्रदृष्टसिद्ध्यर्थपदार्थकल्पना युक्तेति ।

स्यादेतत्, व्यक्तिसम्भवत्प्रयोगचोदनासु व्यक्त्यर्थः ततोऽन्यत्राऽऽकृत्यर्थ एव भविष्यतीति । तदसत् । न्यायेन हि स्थितमेकस्य शब्दस्यार्थैक्यम्, अनवस्थितसम्बन्धानेकादृष्टवाचकशक्तिकल्पनविकल्पदोषप्रसङ्गात् । सम्बद्धानां चार्थानामन्यतराभिधानेनैवेतरत्र प्रतिपत्तिसिद्धेः । कथं तर्ह्याकृतिप्रत्यय इति चेदत आह—**अविभागात्**[3] **इति** । यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागः तस्माद् व्यक्तिरभिहिता सती शक्नोत्येवाऽऽकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे ।[4] यस्य तु पदस्य योऽर्थोऽभिधेयत्वेनाऽऽश्रितः तस्य तत्परिहारासम्भवादवश्यं तत्रस्थस्यैवार्थान्तरं[5] लाक्षणिकत्वेनाऽभ्युपगन्तव्यमिति । अपि चाऽऽकृतिपदार्थकस्य व्यक्तिषु साधारणानैकान्तिकत्वान्निर्णयो न स्याद् व्यक्तिपदार्थकस्य पुनरत्यन्तान्तर्भूताकृतिनिश्चयसिद्धेर्न शब्दव्यापारकल्पनोपपत्तिः । तस्माद् व्यक्तिरेव शब्दार्थः

१ क. (टिप्पण्यां) भाजनम् । पा० ।
२ क. प्राप्तिपूर्वकत्वम् ।
३ क. विभागादिति ।
४. जै० (१-१-७) ।
५. तत्रस्थस्येति तस्मिन्निवार्थे वर्तमानस्य शब्दस्येत्यर्थः ।

नाऽऽकृतिः। न च विकल्पसमुच्चय-सम्बन्ध-समुदायान्यतरविशिष्टान्यतराभिधान-पक्षाः सम्भवन्ति, अविभागादेव सर्वेषामपि ज्ञानसिद्धेः।

अपि चाद्रव्यशब्दत्वाद् व्यक्तेरेवाभिधेयता।
सामानाधिकरण्यं हि नाऽऽकृत्यर्थ-गुणार्थयोः॥ ९९४ ३०॥

॥ आकृतिशक्त्यधिकरणम् ॥

न्या० सु०—अत्र भाष्यकारेणाथ गौरित्येवमादयः शब्दाः किमाकृतेर्वाचकाः सन्तो वाच्यार्थे प्रमाणमुत व्यक्तेरिति गवादिविशेषणोपादानान्न सर्वशब्दानामेतद्विचारविषयतेति सूचितम्। तत्र केषां शब्दानां व्यावृत्तिविवक्षितेत्यपेक्षायां जातिशब्दानामेवोदाहरणत्वमङ्गीकृत्य, तद्व्यतिरिक्तानां व्यावृत्तिरिति दर्शयितुमाह—इहेति। आख्यातशब्दार्थस्य द्वितीयाद्ये विचारयिष्यमाणत्वान्निपातोपसर्गाणां च स्वतन्त्रार्थाभिधायकत्वाभावान्नामान्येवेहोदाहरणत्वेन गृह्यन्ते। तेषामपि षड्विधानां मध्ये शुक्लादिगुणानाम् एतयैव दिशा वाच्या शुक्लादेरपि नित्यतेत्यादिवार्तिकोक्तन्यायेनावान्तरभेदाभावेन गुणशब्दानां जातिवाचित्वायोगात्, क्रियाणामप्यर्थप्रत्यक्षे नित्य एवेति भाष्येणावान्तरभेदस्य संख्याभावसूत्रे निराकृतत्वेन, यागादिशब्दानामपि जातिवाचित्वायोगात् पाकाद्येकोपाधियोगेन वाऽनेकत्र पाचकत्वाद्येकाकारे प्रत्ययोपपत्तेः। पाचकत्वादिजात्यभावेन तच्छब्दानामपि जातिवाचित्वायोगात्, देवदत्तादिशब्दानां च सङ्केतितार्थविशेषवाचित्वात् सर्वनामशब्दानां च सन्निहितार्थविशेषवाचित्वाज्जातिशब्दानामेवात्रैवमादय इति सादृश्यवचनेनैत्र शब्देनैवोदाहरणत्वं सूचितमित्यर्थः। परमतेन चैतदुक्तम्।

स्वमते तु—

ततः शुक्लादितद्व्यक्तिगुणेषु प्रतितिष्ठति।

इत्यादिना गुणकर्म्मणोरप्यवान्तरभेदाभ्युपगमादाख्यातार्थं विना पौनरुक्त्यस्य चोत्तरप्रस्थाने परिहरिष्यमाणत्वात् गुणक्रियाशब्दानामप्याख्यातानामपि चोदाहरणत्वमस्त्येव। तथा चोपसंहारभाष्यव्याख्याने गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानामन्तर्भावार्थमिति वक्ष्यति।

नन्वेवं सति जातिशब्दा इत्येव स्पष्टत्वादुदाहरणनिर्देशः कार्यः। गोशब्दोदाहरणं तु किमर्थमित्याशङ्क्य, पूर्वाधिकरणे गोशब्दस्य गाव्यादिशब्दव्युदासेन साधुत्वाभिधानात्कस्मिन्नर्थे तस्य साधुतेति प्रासङ्गिकी। सङ्गतिसूचनार्थं तदुदाहरणमिति दर्शयितुमाह—तेषामपीति। गोशब्दमुदाहृत्य यद्विचार्यते तत्पूर्वाधिकरणोदाहरणेन सहैतदधिकरणोदाहरणस्यैकत्वं सङ्गतिसूचनाय दर्शयितुमित्यर्थः। ननु पदार्थाप्रामाण्यस्य शब्दे निराकृतत्वात्किमाकृतेः प्रमाणमित्ययुक्तमित्याशङ्क्याचाचकव्यतिरेकजनिते षष्ठ्या विनैव प्रामाण्यव्यतिरेकजनिते इति व्याख्यातुमाह—किं पुनरिति। किमाकृतेर्वाचकाः सन्तो

वाक्यार्थे प्रमाणम्, अथ व्यक्तेरिति व्याख्या अनेनोक्ता। व्यक्त्याकृतिवाचित्वसन्देहमुपन्यस्योच्यते इत्यादिभाष्येण मध्ये चिन्तान्तरं कृतम्। तत्किमर्थमित्याशङ्क्य प्रकृतचिन्तोपोद्घातार्थत्वमाह—तत इति। न निर्णयार्थं विना कापि चिन्ता कर्तुं शक्या। न च निष्फला प्रतितिष्ठति। लौकिकवैदिकशब्दार्थभेदे च वैदिकशब्दार्थचिन्ता निरुपाया। लौकिकशब्दार्थचिन्ता च निष्फला स्यादित्याशयः।

नन्वेवं सति प्रतिपदाधिकरणादिवत्प्रकृतचिन्तामनुपक्रम्यैवोपोद्घातचिन्ता कस्मान्न कृतेत्याशङ्क्यानन्तराधिकरणासङ्गतिप्रसङ्गादिति दर्शयितुम्—तत इत्युक्तम्। प्रतिपदाधिकरणादौ तु नानन्तरसङ्गत्यपेक्षा, अध्यायादित्वादित्याशयः ततो व्यक्त्याकृतिवाचित्वसन्देहोपन्यासानन्तरं वक्ष्यमाणं पूर्वपक्षादिसान्यासिकं त्यागार्हं कृत्वा सम्प्रतीदं तावद्विचार्यत इत्यन्वयः। त्यागार्थात्सन्न्यासप्रातिपदिकात्तदर्हतीत्यस्मिन्नर्थे ठगुत्पत्तेः सान्यासिकपदव्युत्पत्तिः। अहिताशङ्कानिराकरणार्थस्तुशब्दः।

किं य एवेति शब्दविषयम्। किं त एवेति चार्थविषयं सन्देहभाष्यद्वयं तन्त्रेण व्याख्यातुम्—किं य एवेत्युक्तम्। उपायफलसिद्ध्यर्थत्वं प्रश्नपूर्वं विवृणोति—आहेति। शब्दग्रहणमर्थानामप्युपलक्षणार्थम्। ननु व्यक्त्याकृतिविचारफलोपाययोर्भिन्नविषयत्वेऽपि लौकिकवैदिकशब्दार्थैकत्वे यत्नः किमर्थं इत्यपेक्षायामाह—यदीति। एतस्या व्यक्त्याकृतिसन्निधानचिन्ताया इति हेतौ पञ्चमी। एतच्छब्दो वेदविषयत्वद्योतनार्थः। निर्णयोपायव्याख्यानार्थम्—वृद्धेत्युक्तम्। जातेरभिधेयत्वम्, व्यक्तेरनभिधेयत्वमिति निर्णयः, नान्यथेति शेषः। नन्वन्यत्वेऽपि लोकविषयैषा चिन्ता भविष्यतीत्याशङ्क्याह—प्रयोजनं त्विति। शङ्कानिराकरणार्थस्तुशब्दः प्रयोजनामात्रमुपपादयति सम्मूर्छितेति। आशङ्काभिप्रायमनूद्य निराकरोति—यदीति। नन्वेवं तर्हि वेदविषयैव चिन्ता, अन्यत्वेऽपि यूपादिशब्दनिर्णयोपायसम्भवात्सेत्स्यतीत्याशङ्क्याह—स्यादिति। वृद्धव्यवहारस्थाने क्व प्रयोगानुसरणमेवाकृतिवाचित्वानिर्णयोपायः न यूपादिवचनव्यक्तिविपर्ययाश्रयणादित्याशयः। अतः शब्दार्थान्यत्वे एकाङ्गविकलत्वाच्चिन्तेयमनारभ्या स्यादित्याह—तेनेति।

ननु शब्दार्थानन्यत्वे फलोपाययोर्भिन्नविषयत्वेनैकाङ्गवैकल्याविषयः स्यादित्याशङ्क्याह—अभेदे इति। शब्दार्थान्यानन्यत्वचिन्तायाः प्रकृतचिन्तोपोद्घातत्वोपसंहारपूर्वकं पूर्वपक्षमाह—तेनेति।

अनेन च तत्रान्यपूर्वपक्षप्रतिज्ञाभाष्यं व्याख्यातम्। अत्र व्यपदेशभेदाद्रूपभेदाच्चेति हेतुद्वयं भाष्यकृतोक्तम्। तत्र व्यपदेशभेदस्य भाष्यकृतैव व्याख्यातत्वाद्रूपभेदं व्याचष्टे—नियतेति। वैदिकेषु पदेषु नियतः स्वरः, लौकिकेष्वनियतः। वैदिकेषु च छन्दोविषयतया विहितस्य प्रकृतिप्रत्ययोर्लोपस्य, आगमस्य वा वर्णविकारस्य वा सद्भावः। लौकिकेष्वसद्भावः तत्कृताद्रूपभेदादित्यर्थः।

नन्वेवं सति छान्दोग्यब्राह्मणेषु स्वरनियमाभावाद् गवादिशब्देषु च प्रकृतिलोपाद्यभावान्न भेदः सिद्ध्येदित्याशङ्क्य, धर्मभेदाभिप्रायेण रूपभेदं व्याख्यातुमाह—अध्यायेति।

अधीयतेऽस्यामिति व्युत्पत्त्याध्ययनतिथिः अध्यायो द्वितीयादिः अष्टम्याद्यनध्ययनतिथिः अध्यायः। वेदवाक्यान्यध्याये यज्ञोपवीतेनैव त्रैवर्णिकेनैव च प्रयोज्यानि, लौकिकान्यनध्यायेऽप्यनुपनीतेनापि चातुर्वर्ण्येनापि च प्रयोज्यानि, अप्रयोज्यत्वेनाप्रेष्यत्वेन च हेतुना परिचर्यया प्रसादितो यो गुरुस्तदुच्चारणपूर्वकं वेदवाक्यानि प्रयुक्तानि, यदृच्छया प्रयुक्तानि लौकिकानीति, धर्म्मभेदाद्यथा लौकिकवैदिकवाक्यानामन्यत्वम्। तदन्यत्वाच्च वाक्यार्थान्यत्वं तथा पदानां धर्म्मभेदात्पदार्थानां च पदभेदाद् भेद इति पूर्वपक्षं प्रतिज्ञायाऽन्वयः। धर्म्मभेदमात्रेण कथं पदभेदः ? कथं च पदभेदमात्रेण पदार्थभेद ? इत्याशङ्काद्वयनिराकरणार्थं हेतुगर्भविशेषणसहितदृष्टान्तोपादानम्। शब्दाभेदे धर्मव्यवस्थावैयर्थ्यापत्तेस्तत्साफल्याय शब्दभेदः कल्प्यते। तद्भेदे चौत्सर्गिकोऽर्थभेदः संज्ञा चोत्पत्तिसंयोगादित्यनेन सेत्स्यति पदादृष्टार्थप्रतिपत्त्यर्थस्य शब्दस्यादृष्टार्थेन धर्मेण प्रयोजनाभावादर्थप्रतिपत्त्यर्थमेव धर्मापेक्षेत्यर्थं प्रतिपादनसामाग्र्यतिरेकाद्वाचकभेदो जराराजेति क्रमभेदादिवेत्याशयः।

ननु वैदिकपदानां लौकिकेभ्योऽन्यत्वे सम्बन्धग्रहणाभावेनार्थानवधारणादर्थान्यत्वेन पूर्वपक्षो न युक्त इत्याशङ्क्याह—यदीति। लौकिकार्थासम्भव एवानर्थकत्वेन वेदाप्रामाण्यापादनायाऽन्यत्वमिषेण पूर्वपक्षिणो वक्तुमभिप्रेतः। निर्विषयत्वाच्च प्रकृतचिन्तानारम्भायैव वेदाप्रामाण्योपपादनायोच्यत इत्यविरोध इत्याशयः। अग्निर्वृत्राणि जङ्घनदित्यन्यदिदं रूपमिति भाष्यं न्यूनाधिकक्रमान्यत्वाद्यभावेन रूपभेदानुपलब्धेरयुक्तमाशङ्क्य व्याचष्टे—स्वरेणेति। लौकिकस्यानियतस्वरत्वात्स्वरानपेक्षस्यार्थप्रतिपादकत्वम्, वेदे तु स्वरनियमात्सोऽपि सहकारीति सामग्रीभेदाद् गौगीर् इति वर्णातिरेकवत्स्वरातिरेकात्पदान्यतेत्याशयः।

धर्म्माभिप्रायो वा रूपशब्द इति व्याख्यान्तरमाह—अध्यायेति। कर्म्मव्युत्पन्नावध्यायानध्यायशब्दौ। यदा कदाचिद्येन केनचिद्यथा कथंचिदध्येयः न वैदिक इत्यर्थः।

यद्वा अग्निर्वृत्राणि जङ्घनदिति वैदिकस्याग्निशब्दस्य वृत्रहननसमर्थवस्तुवाचित्वावगमो लौकिकः। व्युत्पन्नाग्निशब्दवाच्यस्य च ज्वलनस्य तदसामर्थ्यात् अर्थान्तरे चाव्युत्पन्नस्यैव शक्त्यान्तरकल्पने गौरवापत्तेः गत्यर्थस्यागिधातोः 'अङ्गेर्नलोपश्चेति' सूत्रेणौणादिके निप्रत्यये कृतेऽग्निशब्दव्युत्पत्त्यवधारणान्न प्रकृतिप्रत्ययान्वाख्यानभेदेनाव्युत्पन्नाल्लौकिकादग्निशब्दाद् व्युत्पन्नस्य वैदिकस्याग्निशब्दस्य रूपान्यताभिप्रेतेति व्याख्यान्तरमाह—वृत्रेति। शब्दान्यत्वाच्चेति पदान्यत्वेन पदार्थान्यत्वप्रतिपादकं भाष्यं स्पष्टत्वान्न व्याख्यातम्।

अपि चेत्यादिभाष्यं लोकसिद्धानामेव गवां देवसम्बन्धनिमित्तोत्तानवहनात्मकधर्मविशेषप्रतिपादकत्वेनास्य वाक्यस्य अन्यार्थत्वलिङ्गत्वाभावादयुक्तमाशङ्कोपपादयितुमाह—विदग्धेति। यथा 'यो विदग्धः स नैर्ऋत' इति स्वरसतो विदग्धोद्देशेन नैर्ऋतत्वविधिः प्रतीयमाना उत्पत्तिशिष्टदेवतावरुद्धे देवतान्तरविध्ययोगाद्यो नैर्ऋतः, स विदग्ध इतिवचनव्यक्त्यन्तराङ्गीकरणेन 'प्रकरणे सम्भवन्नपकर्षो न कल्प्येतेत्यत्र भाष्यकृता मग्नः।

तथात्र 'वषट्कर्त्तुः प्रथमभक्ष' इतिवत् समासान्निष्कृष्य गोमात्रस्योद्देशायोगात् देवगवानां चोत्तानवहनवदसिद्धत्वाविशेषात् कथंचित् सिद्धेश्चोत्तानवहनस्यापि सम्भवाद्यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यनेन न्यायेन प्राथम्योपात्तोत्तानवहनोद्देशप्रतीतेस्तदुद्देशेन गोशब्दवाच्यत्वविध्याश्रयणात्स्वरसतः प्रतीयमानस्य देवगवोद्देशेनोत्तानवहनविधौ भङ्गः कृत इत्यर्थः ।

नन्वेवं सति य उत्ताना वहन्ति ते देवानां गोशब्दवाच्या इति वेदवाक्यगतपदपौर्वापर्यालोचनेनालौकिकस्याप्यर्थस्य यूपादिवत्प्रतीतिसिद्धेर्लौकिकवैदिकशब्दार्थान्यत्वेऽपि व्यक्त्याकृतिचिन्तोपपत्तेरुपोद्घातोऽनर्थकः स्यादित्याशङ्क्याह सर्वेषां चेति । नन्वर्थावगत्यभावे कथमस्यार्थान्यथावेदकतेत्याशङ्क्यापातप्रतिभानेन लिङ्गमेतत्पूर्वपक्षिणोक्तम् । परमार्थस्तु शब्दान्यमेवार्थान्यहेतुरिति दर्शयितुमाह—ग्राह्यत्वादिति । स्वाध्याय एवोपनीतेनैव त्रैवर्णिकेनैव शुश्रूषासाधितगुरुसम्प्रदायेनैव च ग्राह्यत्वं वैदिकानां धर्म्मः । यदाकदाचिद्येन केनचिद्यथा कथंचित् न ग्राह्यत्वं लौकिकमिति धर्म्मभेदः । आदिशब्दो नियतानियतस्वराद्यभिप्रायः । नियतैः पदैर्वाक्यरचना वेदे, लोके त्वनियतैः । तद्द्वारा वैदिकानीमानि पदानि, लौकिकानीति व्यपदेशभेदः । वाक्यभेदनिबन्धनत्वात् व्यपदेशभेदस्य, न पदभेदापादकतेत्याशङ्कानिराकरणार्थम् —नियतेत्युक्तम् । पदरचनात्मकत्वात् वाक्यानां पदभेदं विना तद्भेदायोगाद्वाक्यभेदनिबन्धनत्वे पदभेदस्येतरेतराश्रयत्वापत्तेः स्वरादिनियमानियमकृतपदस्वरूपभेदनिबन्धन एव व्यपदेशभेद इत्याशयः । धर्मभेद-व्यपदेशभेदाभ्यां शब्दानां भेदः तद्भेदाच्चार्थानामित्यर्थः । भिन्नानां वर्णानामेकार्थप्रतिपादननिबन्धनत्वेऽर्थभेदस्येतरेतराश्रयं स्यादित्याशङ्कानिराकरणार्थं पदभेदे कारणान्तरस्य पूर्वोक्तस्योपन्यासः ।

वनस्पते हिरण्यपर्णेति सामानाधिकरण्यनिर्देशे लोकसिद्धस्य वनस्पतेर्हिरण्यपर्णत्वस्यानुपलब्धिविरोधेन वनस्पतिशब्दवाच्यत्वप्रतीतेः, घृतस्य च मधुशब्दवाच्यत्वप्रतीतेर्वाक्यस्वारस्यादेव स्पष्टत्वान्न तत्प्रतिपादकं भाष्यद्वयं व्याख्यातम् । सिद्धान्ते यथाभाष्यं सुयोजमपि सूत्रमाकृत्यधिकरणपूर्वपक्षेऽन्यथा योजयिष्यमाणत्वाद्विवेकार्थं योजयति—प्रयोगेति । तेष्विति । लौकिकवैदिकशब्दार्थेष्वित्यर्थः । अविभागादिति सूत्रावयवावतारणार्थम्—तस्मादित्युक्तम् । य एवेतिभाष्येण प्रयोगचोदनाभावादित्यकारप्रश्लेषं विना व्याख्याय, इतरथेत्यनेनाकारप्रश्लेषेण व्याख्यानान्तरं कृतम् । तत्रैकत्वेऽनेकत्वे चोभयभावप्राप्तावेकत्वे सति पुनर्वचनस्य परिसंख्यार्थत्वापत्तेर्द्वितीयमेव व्याख्यानं सम्मतमिति सूचयितुमादौ व्याचष्टे—भेदे सतीति । आद्यव्याख्यानं व्याचष्टे—एकत्वे सतीति । तस्मादेकशब्दत्वमिति भाष्यम् । सौत्रमर्थपदं शब्दस्याप्युपलक्षणार्थमिति दर्शयितुं द्वेधार्थैकत्वपदं व्याचष्टे—अर्थैकत्वमिति । एतदेव प्रपञ्चयति—शब्देति । ननु प्रयोगचोदनाभावादित्यनेनैव शब्दार्थैकत्वसिद्धेरविभागादित्यनर्थकं हेत्वन्तराभिधानार्थत्वे वा शब्दैक्यमात्रविषयत्वेनाव्यापकतया दौर्बल्याद् बलवति हेतौ प्रयुक्ते दुर्बलोपन्यासः क्लिष्टो भवतीत्यनेन न्यायेन पूर्वमुपन्यस्येवेत्याशङ्क्योच्यत इति भाष्येण पूर्वस्य प्रयोजनाभिधानार्थत्वादेतदेव हेत्वभिधानमित्युक्-

माभाति । तस्मादिष्टापत्तिरूपहेत्वभिधानप्रतीतेरयुक्तमाशङ्क्याह—प्रयोगेति । लिङ्गदर्शनबलेनात्रैको वेदवादी पूर्वपक्षी रूपभेदादिनान्यः शुष्कतार्किकः तत्र पूर्वः शुष्कतार्किकस्य त्विदं प्रत्यवस्थानमित्याशयः । अत इति ल्यब्लोपे पञ्चमी इदमभिप्रेत्याहेत्यर्थः अविभागं पञ्चधा व्याचष्टे—तदुच्यत इति । स एवायं गोशब्द इति प्रत्यभिज्ञानरूपप्रत्ययस्य लौकिकवैदिकशब्देष्वविभागादित्यर्थः । रूपाविभागादित्यनेन विलक्षणरूपाप्रतीतेरित्युक्ते घटपटयोरज्ञायमानत्वावस्थायां वैलक्षण्याप्रतीतावैक्याभावात्तन्मात्रेणैक्यासिद्धिमाशङ्क्य—ज्ञायमानयोःलौकिकवैदिकशब्दयोरित्युक्तम् । सादृश्यनिमित्तभ्रान्त्यध्यवसितैकत्ववशेनापि वैलक्षण्याप्रतीत्युपपत्तिमाशङ्क्य ज्ञायमानयोरर्थयोरवश्यं कथंचिद्वैलक्षण्येन भाव्यं तदभावात्त्विह भेदो नास्तीत्याशयः । वाक्यतत्समूहमात्रनिबन्धनस्य पदवर्णानां तदन्तर्गतत्वादयं न पदवर्णविषयत्वस्यैते लौकिका इमे वैदिका इति व्यपदेशस्य वस्तुतः पदवर्णेषु विभागाभावादित्यर्थः । वस्तुतो वाक्यनिबन्धनस्तत्समूहनिबन्धनो वाऽयं व्यपदेशः तदन्तर्गतनिमित्तया तु भ्रान्त्या पदवर्णविषयत्वमनेनोपात्तमित्यौपाधिकत्वान्नासौ पदवर्णानां भेदमापादयतीत्याशयः । शब्दानां प्रतिनियतविलक्षणाभिव्यञ्जकाभिव्यङ्ग्यत्वनियमात्तदाभावो वात्राभेदहेतुरुक्त इति—तथेत्यनेनोक्तम् । लक्षणेत्यनेन लक्षणाभेदो लक्ष्याभेदे—हेतुरुक्त इत्युक्तम् । छन्दसि भाषायां वेति विशेषणेन भिन्नलक्षणक्षितानां सिद्धान्तिनामपि भेदाभ्युपगमात्तद्व्यावृत्तिसूचनार्थम्—बहुतरेत्युक्तम् । अत इत्युपसंहारभाष्यं व्याचष्टे—प्रत्यक्षेति । तांश्चेति भाष्यं चकारेण शब्दैक्यमर्थैक्ये हेतुं सूचयतीति व्याचष्टे—एकेति । यच्चोक्तमिति भाष्येण लिङ्गदर्शनान्यनुभाष्य नास्तिवचनमित्यादिनोत्तानवहनानुवादेन गोशब्दवाच्यत्वविधित्वमस्य निराकृत्य गवानुवादेनोत्तानवहनविधित्वमुक्तं तद्व्याचष्टे—यथाश्रुतेति । गोमधुवनस्पतिशब्दानां यार्थान्तरद्योतिका श्रुतिरुपन्यास्ता सा न्यायसिद्धार्थैकत्वाविरोधेन प्रयोजनेनोत्तानवहनादिगुणमात्रा नातः परा व्याख्येयेत्यर्थः । अनन्तरोक्तार्थैकत्वसाधकशब्दैकत्वलक्षणन्यायपरामर्शार्थं यथाश्रुतत्वं लोकसिद्धत्वं विशेषणमुक्तम् । न च गुणमात्रान्यत्वेनार्थान्यत्वं भविष्यतीति दृष्टान्तपूर्वकमाह—यथा हीति । अस्तु वा गुणान्यत्वेन देवसम्बन्धिनां गोमधुवनस्पतीनां भेदः तथाप्यगृहीतसम्बन्धत्वेन तेषां वाच्यत्वायोगाद्वैदिकानामपि गवादिशब्दानां लौकिका एवार्था इति मत्वाह—न चेति । दक्षिणादिसाधनत्वेन च विहितानां गवां देवसम्बन्धिनामस्वत्वेन दातुमशक्यत्वान्मनुष्यसम्बन्धितैव निश्चीयत इत्याह—मनुष्येति । देवसम्बन्धिनश्च वनस्पतेर्मेरुगतस्य गुणान्यत्वेन लौकिकवनस्पतितो भेदेऽपि कर्मभूमिगतयज्ञसाधनत्वायोगाद्वैदिकस्यापि वनस्पतिशब्दस्य लौकिक एवार्थ इत्याह—एवमिति । लौकिकस्य च घृतस्य देवसम्बन्धान्मधुत्वेन लौकिकान्मधुतोभेदेऽपि देवसम्बन्धापादितरसवीर्यविपाकात्पूर्वं घृतस्य मधुत्वाभावेन मधुपर्कादिसाधनत्वायोगाद्वैदिकस्यापि मधुशब्दस्य लौकिक एवार्थं इत्याह—अस्त्विति । सर्वेषां च वैदिकशब्दार्थानामन्यत्वे सत्युत्तानादिशब्दार्थानामप्यज्ञानान्न तदनुवादेन गवादिशब्दवाच्यत्वं विधातुं शक्यमिति, प्रतिपादनार्थं 'यदि चान्य' इति भाष्यं व्याचष्टे—न चेति ।

मधुगुणमात्रान्यतापरत्वे कार्योपयोगाभावाद्वाक्यानर्थक्यं स्यादित्याशङ्कानिराकरणार्थं न चेति भाष्येण स्तुत्यर्थत्वमुक्तम् । तत्र निरालम्बनस्तुत्यनुपपत्तिमाशङ्क्यालम्बनमाह—अत इति । लौकिकानामेव गवदीनां यज्ञादौ विनियुक्तानामिह स्वर्गं वै त्वालोकं गमयिष्याम इत्यादिदर्शनेन स्वर्गलोकप्राप्तेर्देवसम्बन्धप्रभावादुत्तानवहनाद्यलौकिकगुणान्तरप्राप्तिर्भविष्यतीत्याशयः । स्वर्गगमनाभावेऽपि वा भूमिगतानामेव गवां 'देवाश्च याभिर्यजते ददाति च' वा ज्योगित्ताभिः स च ते गोपतिः सहेत्यादिदर्शनाद्देवोद्देशेन त्यक्तानां दुःखसागरतारणार्थत्वावगतेरुत्तानवहनत्वादिगततारणगुणयोगेनोत्तानवहनप्रतिपादनमित्यालम्बनान्तरमाह—अथ वेति ।

यद्वोत्तानवहनाभावेऽपि देवानां तथा प्रतीतेस्तदालम्बनमुत्तानवहनप्रतिपादनमित्यालम्बनान्तरमाह—पृथिवीति । दृष्टिवशाद्वोत्तानवहनप्रतिपादनमित्यत्राप्यतीतेनान्वयः । कथं देवानामुत्तानवहनदृष्टिरित्यपेक्षायां—पृथिवीगोलकत्रैलोक्यभ्रमणादिनेत्युक्तम् । पृथिवीगोलकस्य भ्रमणे किं प्रमाणमित्यपेक्षायां—पुराणोक्तेनेत्युक्तम् । ननु सत्यपि भ्रमणे कथमुत्तानवहनदर्शनमित्यपेक्षायामाह—यथैवेति । अधोदेशस्योपरिदर्शनं परिवर्त्तनं विप्रतीपीभावं विना न युक्तमिति भूमेर्विप्रतीपिभावात्तद्गतानां गवामुत्तानवहनदर्शनमुपपन्नमित्यर्थः । तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति ।

यदेति प्रकृतविचारानुसन्धानभाष्यं व्याचष्टे—इतोति । श्रोतृबुद्धिप्रथनाय पक्षान्तराण्यपि दर्शयितुमौचित्यप्रतिज्ञां तावत्करोति—द्वौ चेति । यद्यपीत्यनेन भाष्यकारोऽपि यत्र पदोच्चारणानर्थक्यं तत्र व्यक्तिरर्थः अन्यत्राकृतिरिति भाष्येणोभयपक्षम् अस्तु विशेषणत्वेनाकृतिं वक्ष्यति विशेष्यत्वेन व्यक्तिमित्यनेन चाकृतिविशिष्टायामाकृतौ वर्त्ततेत्यनेन च व्यक्तिविशिष्टाकृतिपक्षं दर्शयिष्यतीति सूचितं तानि दर्शयितुं जातिव्यक्त्योस्तावदष्टपक्षीमुद्दिशते—नियोगेनेति । नियोगशब्देन च नियमम्, विना पक्षद्वयं विशिष्टावेत्यनेन च पक्षद्वयमुक्तम् । एतेषामेवाष्टानां पक्षाणां परस्परव्यतिकरेणापरान् षण्णवतिपक्षान् सूचयितुमाह—एत इति । जातिव्यक्त्योरेवोद्दिष्टानां नियमादिपक्षाणां लिङ्गादिसिद्धित्रियोगेन संहतात्मभिः, असंहतात्मभिश्च सह सम्प्रधारणे विविक्तोद्देशेन, परस्परव्यक्तिकरेण चापरांश्चतुर्दश चतुः शतानि च पक्षान् वक्तुं योजना कार्येत्याह—लिङ्गेति । नियोगेनेति श्लोकं व्याचष्टे प्रथमं तावदिति । एते पक्षा इति श्लोकार्धं व्याख्यातुं षण्णवतिपक्षानाह - तथेति । द्वावाभ्यामित्यनेन विशेषणविशेष्यभावनिरपेक्षाभ्यां व्यक्त्याकृतिभ्यां समुच्चिताभ्यां विशिष्टः सम्बन्धो गोशब्दस्यार्थं इति चतुर्थः पक्षो लाघवायान्ते दर्शित इत्येकाऽष्टपक्षी । किमाकृत्यैव विशिष्टसमुदायः किं व्यक्त्यैवाऽथाऽकृत्या व्यक्त्या वाऽथ सम्बन्धेनाऽथाकृतिविशिष्टया व्यक्त्याऽथ व्यक्तिविशिष्टयाऽकृत्या अथ व्यक्त्याकृतिभ्यां परस्परविशिष्टाभ्यामथ विशेषणविशेष्यत्वनिरपेक्षाभ्यां समुच्चिताभ्यां व्यक्त्याकृतिभ्यां परस्परविशिष्टाभ्यामुत विशेषणविशेष्यत्वनिरपेक्षाभ्यां समुच्चिताभ्यां व्याक्त्याकृतिभ्यामिति द्वितीया । किमाकृत्यैव विशिष्टः सम्बन्ध एव गोशब्दस्यार्थः, अथ समुदाय एव अथ

सम्बन्धो वा, समुदायो वाप्यसम्बन्धश्च समुदायश्च, उत व्यक्त्यैव विशिष्टः, सम्बन्ध एवाप्यसमुदाय एव अथ विकल्पोऽथ समुच्चयविशिष्टयाकृत्या किं व्यक्तिः, अथाकृत्यऽथ वा विशिष्टः सम्बन्ध एव। अथ समुदाय एव, अथ विकल्पोऽथ समुच्चयः। अथ एवं समुदायेन विशिष्टः सम्बन्ध एव अथ सम्बन्धेन विशिष्टः समुदाय एव अथ विकल्पोऽथ समुच्चयः किमाकृतिविशिष्टया व्यक्त्या विशिष्टः सम्बन्ध एव अथ समुदाय एव अथ विकल्पोऽथ समुच्चयः। अथोभाभ्यां परस्परविशिष्टाभ्यां विशिष्टः सम्बन्ध एव अथ समुदाय एव अथ विकल्पोऽथ समुच्चयः। अथोभाभ्यां स्वतन्त्राभ्यां विशिष्टः सम्बन्ध एवाथ समुदाय एवाथ विकल्पोऽथ समुच्चय इति चत्वारोऽष्टपक्ष्यः।

सम्बन्ध एवेत्येवकारेण प्रतियोगिभूतेन समुदायेन सह नियोगविकल्पसमुच्चयरूपपक्ष-चतुष्टयसूचनात् पूर्वोक्ताभ्यां सह षड् भवन्ति सम्बन्धवत्समुदायमपि प्रत्याकृत्यादेर्विशेषण-त्वपक्षः पूर्ववत्सम्बन्धविशिष्टसमुदायपक्षमात्रातिरिक्तत्वेन योज्या इत्यर्थः। किं सम्बन्ध-विशिष्टसमुदायपक्षमात्रातिरिक्तत्वेन योज्या इत्यर्थः। किं सम्बन्धेनैव विशिष्टाकृतिरित्या-कृतिग्रहणस्य व्यक्त्युपलक्षणार्थत्वात्किं सम्बन्धेनैव विशिष्टा व्यक्तिर्गोशब्दार्थोऽथ समुदायेनैव विशिष्टा अथ विकल्पमानाभ्यामुत समुच्चिताभ्यामित्यपरपक्षचतुष्टयीसूचनेन सप्तम्यष्ट-पक्ष्युक्ता। तथैतद्विशिष्टापीत्येतच्छब्देन सम्बन्धसमुदाययोः परामर्शादष्टम्युक्ता किमाकृति-विशिष्टसमुदायविशिष्टा व्यक्तिरेवाथ व्यक्तिविशिष्टसमुदायविशिष्टाकृतिरेवाथ विकल्प उत समुच्चय इति सम्बन्धवत्समुदायमपि व्यक्त्याकृत्योर्विशेषणविशेष्यभावयोजनात् नवम्युक्ता। सम्बन्धवत्समुदायस्यादिविशेषणत्वयोजनाद्दशमी। सम्बन्धवत्समुदायमपि प्रत्यादिविशेषण-योर्व्यक्त्याकृत्योर्नियोगादिपक्षचतुष्टययोजनादेकादशी। विशेष्यविशेषणयोर्व्यक्त्याकृत्योर्नि-योगादिपक्षचतुष्टयकल्पनायाम् आदिविशेषणत्वेन सम्बन्धवत्ससुदायस्यादिविशेषणत्वयोजनाद् द्वादशी इति परस्परव्यतिकरेण षण्णवत्यष्टपक्ष्या सह चतुःशतं पक्षा भवन्ति।

लिङ्गकारकसंख्याभिरित्यनेन सूचितानपरांश्चतुर्दश चतुःशतानि पक्षी संक्षेपेण दर्श-यति – एवं जातिव्यङ्ग्योरिति। किं लिङ्गमेव गोशब्दार्थोऽथ लिङ्गं वाथ जातिर्वाथ लिङ्गं च जातिश्च, अथ जातिलिङ्गयोः सम्बन्धः, अथ समुदायः, अथ लिङ्गविशिष्टा जातिः। अथ जातिविशिष्टं लिङ्गमित्याद्यामष्टपक्षीं दर्शयित्वा, किमाकृत्यैव विशिष्टः सम्बन्धो लिङ्गेनैव वेत्यादिव्यक्तिस्थाने लिङ्गं प्रक्षिप्य परस्परव्यतिकरेण षण्णवतिपक्षयोज-नया चतुःशतं रचयितव्यम्।

कारकस्य जात्या सम्प्रधारणे द्वितीयं चतुः शतम्। संख्यायास्तृतीयम्। लिङ्गस्य व्यक्त्या सह सम्प्रधारणे चतुर्थम् कारकस्य पञ्चमम्, संख्याया षष्ठम्, लिङ्गसंख्याकारकयुग-लस्य जात्या सह सम्प्रधारणात् सप्तमम्, लिङ्गकारकयुगलस्य अष्टमम्, संख्याकारकयुगलस्य व्यक्त्या सह सम्प्रधारणे दशमम्, लिङ्गकारकयुगलस्यैकादशम्। संख्याकारयुगलस्य द्वादशम्, लिङ्गादित्रयस्य जात्या सह सम्प्रधारणे त्रयोदशम्, व्यक्त्या सह चतुर्दशमितिन्यायेन चतुः-शतेन सह पञ्चदश चतुःशतानि, षष्ठाधिकं सार्द्धपक्षसहस्रं भवति। 

ग्रन्थस्त्वेवं योज्यः । जातिव्यक्तिविषयैर्नियोगादिभिरष्टभिः पक्षैर्विकल्पिताः परस्पर-व्यतिकरेण कल्पिता येऽन्ये षण्णवतिः पक्षास्तेषामाद्यैरष्टभिः सह समुच्चितानां प्रत्येकं लिङ्गादीनां जात्या सह सम्प्रधारणायामुत्थानं दर्शयित्वा व्यक्त्या सह दर्शयितव्यम् । तथा लिङ्गसंख्यादियुगलानि व्यतिकरेण कल्पयित्वा लिङ्गादिसहितैकैकजा व्यक्तिविषया-पेक्षया विकल्पा दर्शयितव्याः । लिङ्गादीनां कियतां जात्या, व्यक्त्या वा सम्प्रधारणेत्य-पेक्षायां प्रत्येकमेकैकेन द्वाभ्यां युगलीभूताभ्यां त्रिभिश्च लिङ्गादिभिः सहिताया एकैकस्या जातेर्व्यक्तेश्च—विकल्प्य इत्युक्तम् ।

ननु लिङ्गादीनां प्रत्ययार्थत्वात्प्रातिपदिकवाच्यत्वेन चिन्ता न युक्तेत्याशङ्क्य—त्रियोगेत्युक्तम् । स्त्रियां यत्प्रातिपदिकं वर्त्तत इति व्याख्यादर्शनाद्वैयाकरणैस्तावज्जाति-व्यक्तिवल्लिङ्गस्यापि प्रातिपदिकार्थतेष्टेति त्रिरूप्रातिपदिकार्थवाचित्वात्ते त्रियोगाः । निपा-तोपसर्गवत्प्रत्ययस्यापि द्योतकमात्रत्वेन वाचकत्वाभावात्संख्याकारकयोरपि प्रातिपदिकार्थत्वं येऽभ्युपगच्छन्ति, ते पञ्चरूप्रातिपदिकार्थवाचित्वात्पञ्चयोगाः तन्मताश्रयणेनेमे विकल्पा इत्यर्थः । सम्बन्धसमुदायानपेक्षत्वे वा लिङ्गादित्रयेण सह जातिव्यक्त्योर्योगस्तदपेक्षत्वे पञ्चभिरिति व्यवस्थया विकल्पविषयप्रदर्शनम् । ये तु वैयाकरणाः शब्दस्वरूपस्यापि वाच्यत्वमिच्छन्ति, तन्मतेन तस्यापि जातिव्यक्तिसम्बन्धसमुदायलिङ्गकारकसंख्याभिः-संहतासंहतात्मभिः सह सम्प्रधारणेन त्रिषष्ठ्यष्टपक्षीभिश्चतुरुत्तराणि पञ्चशतानि पक्षान्सूच-यितुमाह – एवमिति ।

षट्कैः सहेति द्वितीयेन सहशब्देन सप्तकसाहित्यं विवक्षितम् । जात्यादिभिः सप्तभिरे-कैकशो द्विकैस्त्रिकैश्चतुष्कैः पञ्चकैः षट्काभ्यां चेत्येतैः सप्तकेन सहितैः सह शब्दस्वरूपस्य विकल्पनेत्यर्थः । किं जातिरेव गोशब्दार्थः, अथ गोशब्दस्वरूपमेव, अथ जातिर्वा शब्द-स्वरूपं वा अथ जातिश्च शब्दस्वरूपं च, अथ सम्बन्धः, अथ समुदायः, अथ जातिविशिष्ट-स्वरूपं स्वरूपविशिष्टा वा जातिरित्येवमेकैकशः सप्ताष्टपक्षीदर्शयित्वा, जाति-व्यक्ति-जाति-सम्बन्ध-जाति-समुदाय-जाति-लिङ्गजातिकारकजातिसंख्याद्विकैः षड्भिर्व्यक्तिसम्बन्धव्यक्ति-समुदायव्यक्तिलिङ्गव्यक्तिकारकव्यक्तिसंख्याद्विकैः पञ्चभिः सम्बन्धसमुदायसम्बन्धलिङ्ग-सम्बन्धकारक–सम्बन्धसंख्या–द्विकैश्चतुर्भिस्समुदायलिङ्गसमुदायकारकसमुदायसंख्याद्विकेनैके-नैकविंशतिरष्टपक्ष्यो दर्शयितव्याः ।

जातिव्यक्तिसम्बन्धजातिसम्बन्धसमुदायजातिसमुदायलिङ्गजातिलिङ्गकारकजातिकार-कसंख्यात्रिकैः पञ्चभिः व्यक्तिसम्बन्धसमुदायव्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गकारकव्यक्ति-कारकसंख्यात्रिकैश्चतुर्भिः सम्बन्धसमुदायलिङ्गसम्बन्धलिङ्गकारकसम्बन्धकारकसंख्यात्रि-कैस्त्रिभिः समुदायलिङ्गकारकसमुदायकारकसंख्यात्रिकाभ्यां द्वाभ्यां लिङ्गकारकसंख्या-त्रिकेनैकेन पञ्चदशजातिव्यक्तिसम्बन्धसमुदायजातिसम्बन्धसमुदायलिङ्गजातिसमुदायलिङ्ग-कारकजातिलिङ्गकारकसंख्याचतुष्कैश्चतुर्भिर्व्यक्तिसम्बन्धसमुदायलिङ्गव्यक्तिसमुदायलिङ्ग -कारकव्यक्तिलिङ्गकारकसंख्याचतुष्कैस्त्रिभिः सम्बन्धसमुदायलिङ्गकारकसम्बन्धलिङ्गका-

रकसंख्याचतुष्काभ्यां द्वाभ्यां समुदायलिङ्गकारकसंख्याचतुष्केनैकेन दश जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसम्बन्धसमुदायलिङ्गकारकजातिसमुदायलिङ्गकारकसंख्यापञ्चकै-स्त्रिभिर्व्यक्तिसम्बन्धसमुदायलिङ्गकारकसंख्यापञ्चकाभ्यां द्वाभ्यां सम्बन्धसमुदायलिङ्ग-कारकसंख्यापञ्चकेनैकेन षट्जातिव्यक्तिसम्बन्धसमुदायलिङ्गकारकजातिसम्बन्धसमुदाय-लिङ्गकारकसंख्याषट्काभ्यां द्वाभ्यां व्यक्तिसम्बन्धसमुदायलिङ्गकारकसंख्याषट्केनैकेन तिस्रः सप्तकेन चैकेति षट्पञ्चाशदष्टपक्ष्यः प्रथमाभिः सप्तभिः सह त्रिषष्टिरष्टपक्ष्यश्चतुरुत्तराणि पञ्चशतानि पक्षाः पूर्वगणितेन षष्ठ्यधिकेन सार्द्धेन पक्षसहस्रेण सह चतुःषष्ठ्यधिकं पक्ष-सहस्रद्वयं भवति। परस्परव्यतिकरादेतेषां बहवोऽपराः सम्भवन्तोऽपि नोच्यन्ते ग्रन्थगौरव-भीतितः।

नन्वेतेषां पक्षाणां विशेषणविशेष्यभावसंहतान्यत्वेऽपि स्वरूपनिष्कर्षाभावेन भेदेनाऽ-भावान्न भेदेनोपन्यासो युक्त इत्याशङ्क्याह—एते चेति। यथा जात्यादीनां निष्कर्षा-भावेऽप्यन्वयव्यतिरेकप्रसूतया भेदबुद्ध्या भेदः तथैषामपि पक्षाणां स्वरूपभेदाभावान्निष्कर्षा-भावेऽपि विशेषणविशेष्यभावाद्यन्वयप्रसूतमाभेदबुद्ध्या भेदो भविष्यतीत्यर्थः। ननु सत्यपि भेदे प्रत्यक्षादि नैतावतां भेदानामग्रहणात्कथं तत्पूर्वकशब्दविषयतैतावतां भेदानां विचार्यते इत्याशङ्क्याह—सर्वत्रेति। प्रत्यक्षेणेन्द्रियसंयुक्तद्रव्यधर्म्मतत्समवेतजातिगुणक्रिया-तत्समवेत-गुणत्वादिसामान्यग्रहणात्, अनुमानेन च स्वव्यापकाग्नितद्गतौष्ण्यभाष्यकरत्वादिग्रहणाद-नेकात्मकवस्तुप्रतीतेर्विवेकाभावात्स्तोकभेदप्रतीतिः। शब्दस्य तु सर्वात्मकवस्तुविषयतायामेके-नैव गोशब्दादिना सर्वात्मकवस्तुप्रतीतिसिद्धेः शुक्लादिशब्दानर्थक्यापातादेकैकांशनिष्कृष्ट-शक्तिकत्वेनांऽशान्तराणां लक्षणात्सिद्धज्ञानत्वादवाच्यत्वावगतेः सूक्ष्मांशविवेचकतया सर्वभेद-बोधकत्वं युक्तमित्याशयः।

ननु सामान्यविशेषबाधादेर्जातिव्यक्तिवाच्यत्वविचारमात्रासिद्धेः पक्षान्तराणि निष्प्रयो-जनत्वान्न कार्याणीत्याशङ्क्याह—पदादिति। शङ्क्यमानसर्ववाच्यान्तरविप्रतिपत्तिनिरासं विना वाच्यतत्त्वानवधारणान्न पदार्थविधारणपूर्वकवाच्यार्थावधारणसिद्धिरित्याशयः। सौकर्यार्थं पूर्वोत्तरपक्षविभागमाह—अत्र चेति। नन्वेतावतां पक्षाणां विद्यमानत्वेन सप्रयोजनत्वेन च भाष्यकारानुपन्यासे किं कारणमित्याशङ्क्याह—व्यक्ताविति। अन्वय-व्यतिरेकावगम्यसामान्यमात्रशक्त्यपर्यालोचननिबन्धनत्वसाम्यात् व्यक्तिपक्षे दर्शिते, सम्बन्धादीनामपि वाच्यत्वं कस्मान्न स्यादित्याशङ्कोत्थानात्तात्पर्यालोचनेन च व्यक्तिपक्षे निराकरणसिद्धेर्न भाष्यकृतोपन्यस्ता इत्यर्थः। नन्वनुपन्यासाद्भाष्यकृतोऽसत्त्वाभिप्रायः निष्प्रयोजनत्वाभिप्रायो वा कस्मान्न कल्प्यत इत्याशङ्क्याह—न चेति। सद्भावप्रयोजन-योरुक्तत्वान्नानयोरभिप्राययोर्मध्ये कश्चित्सम्भवतीत्याशयः। एतस्माद्भाष्यकाराप्रदर्श-नात्कारणादित्यर्थः। नन्वेवं सति व्याख्यातृभिरुपपत्तयोऽपि सर्वेषु पक्षेषु प्रत्येकमुपन्य-स्योपन्यस्य निराकार्या इत्याशङ्क्याह—दर्शितेष्वपीति। शब्दशक्त्यपर्यालोचनस्य पूर्वपक्ष-बीजस्य सर्वेषु तुल्यत्वादित्याशयः।

का पुनरिति भाष्येणाकृतिव्यक्त्योः प्रश्नपूर्वकं स्वरूपनिरूपणं कृतम्। तस्य प्रयोजनमाह—ततश्चेति। विषयावधारणं विचारमुखम्। ननु सम्बन्धादीनामपि विचारविषयत्वात्किमिति स्वरूपं न निरूपितमित्याशङ्क्य-प्राधान्येनाकृतिव्यक्त्योरेव विचारविषयत्वमनन्तरोक्तम् ततश्चेत्यनेन कारणतया परामृष्टम्। अकृतिस्वरूपनिरूणस्य पौनरुक्त्यमाशङ्कते—नन्विति। परिहरति—सत्यमिति। मात्रशब्दं सर्वसामान्यव्याप्त्यर्थंत्वेन व्याख्यातुं भाष्यपाठपूर्वकं सामान्यानि विभजति—द्रव्येति। प्रथमशब्देन परशब्दः कुतश्चिदव्याकृतत्वात्सर्वसामान्योक्तत्वाभिप्रायेण व्याख्यातः। गुणत्वकर्मत्वयोरादिशब्देनोपादानम्। द्रव्यत्वावान्तरसामान्यानि विभजति—पुनरिति। वायुत्वादीनां भिन्नतेत्यर्थः। पृथिवीत्वस्य तद्भेदघटत्वादिसामान्योक्त्या ज्ञातुं शक्यत्वादनुपन्यासः मनोभेदस्य चात्मभेदाधीनत्वादात्मत्वसामान्योक्त्यैव मनस्त्वसामान्यसिद्धेरनुपन्यासः। पृथिवीत्वावान्तरसामान्यावधिभेदेन विभजति—पृथिवीत्वादिति। पृथिवीत्वात्परं पाश्चात्यं घटत्वं घटव्यक्तिषु समाप्य, एतेषु घटत्वं तद्व्यक्तिष्वन्यं सामान्यमित्यर्थः। घटत्वादीन्यन्यानि घटत्वेनैव व्याख्यातानि। वृक्षत्वात्तु पृथिवीत्वावान्तरसामान्यात्परं शिंशपात्वाद्येवाऽन्त्यं सामान्यमित्याह—वृक्षत्वादिति। शरीरत्वात्परं गोत्वादीत्याह—शरीरत्वाच्चेति। मनुष्यत्ववाची पुंस्त्वशब्दः। गोत्वात्परस्य सामान्यस्याभावात् त्यागेनाश्वत्वात्परं वाजिकत्वाद्यन्त्यं सामान्यमित्याह—वाजिकत्वादि चेति। ननु कर्कत्वशोणत्वादेरप्यवान्तरसामान्यस्य भावान्न वाजिकत्वादेरन्त्यतेत्याशङ्क्य—कर्कादिष्विति। अश्वत्वैकार्थसमवायिशुक्लावान्तरसामान्यं कर्कत्वम्। रक्तावान्तरसामान्यं शोणत्वमित्यर्थः। हस्तित्वात्परा भद्रादिजातयोऽन्त्या इत्याह हस्तित्वादिति। आदिशब्देन मृगजात्युपादानं ताश्च दिङ्नागकुलजातास्वेव हस्तिव्यक्तिषु वर्त्तन्त इति दिङ्नागकुलशब्देनोक्तम्। मनुष्यत्वात्परोऽवान्तरसामान्यभेदो ब्राह्मणत्वं ब्राह्मणत्वसामान्यावान्तरभेदात्कौण्डिन्यत्वादौ सामान्ये समाप्यत इत्याह पुंस्त्वादिति। द्रव्यावान्तरसामान्यानि विभज्य गुणकर्मावान्तरसामान्यानि विभज्य, गुणकर्मावान्तरसामान्यानि विभक्तुमाह—तथेति। गुणत्वस्य रूपतादि यदवान्तरसामान्यम्, कर्मत्वस्य च जन्मतादि, ततः परं यच्छुक्लत्वादिरूपावान्तरसामान्यं तच्छुक्लत्वादिसामान्यव्यक्तिभूतेषु भासुरधूसरादिषु गुणेषु प्रतितिष्ठतीति समाप्यते। शुक्लत्वादेः परं सामान्यं नास्तीत्यर्थः।

ये तु शुक्लत्वाद्यवान्तरसामान्यस्य कर्कत्वादेर्व्यक्तिभूता गुणाः तेषु शुक्लत्वादि न प्रतितिष्ठतीति विशेषसूचनार्थस्तच्छब्दः : असिद्धस्य कर्त्तुः स्वात्मलाभफलकव्यापारसामान्यं जन्मत्वम्। सिद्धस्य कर्त्तुरनात्मलाभफलकव्यारसामान्यं—यागत्वादिशब्देनोक्तम्।

कर्मत्वावान्तरसामन्यस्य जन्मत्वस्यावान्तरसामान्याभावात्तत्त्यागेनान्यात्मलाभफलकसिद्धकर्तृव्यापारात्मककर्मावान्तरसामान्यानि यागत्वादीनि विभजति—कर्मणामपीति। कर्म्मावान्तरसामान्यं यागत्वादि यजतिददातीत्यादिभिर्धातुभिर्विभागेनोक्तमित्युक्तेन यजदेवपूजासङ्गतिकरणदानेषु हूदानादनयोर्डुदाञ्दान इति त्रयाणामपि दानवाचित्वेन पर्यायतया

स्मृतत्वात्कथं विभागार्थहेतुतेत्याशङ्क्याऽपर्ययित्युक्तं प्रक्षेपपरस्वत्वापादनवाचित्वेन लोकतोऽर्थभेदावगतेर्व्याकरणस्य शब्दान्वाख्यानमात्रार्थत्वेनार्थतात्पर्याभावात्स्वत्वनिवृत्त्यंशोपलक्षणमात्रार्थत्वेन च यजिजुहोतिस्मृत्योर्दानशब्दोपपत्तेर्दानपर्यायस्मृत्योत्सारणमिव त्यागत्वादेरप्यवान्तरविभागोऽभ्यासादिभिः क्रियत इत्याह—प्रविभज्यत इति । विधानशब्देनासकृद्विधिरभ्यासो—नासकृच्छ्रु तिमात्रमित्युक्तम् । संख्योत्पत्तिगता द्व्यादिका संख्याऽप्यन्यलिङ्गैव । गुणो पूर्वसंयोगार्हः, अनुपादेयसम्बन्धसचिवो सन्निधिः प्रकरणान्तरम् ।

ननु यागत्वादिजात्यभ्युपगमे यजत्यादीनामपि विचारविषयत्वोपपत्तेर्जातिशब्दा एव चिन्त्यत इति किमित्युक्तमित्याशङ्क्याह—अन्ये त्विति । कर्म्मणामेव यागहोमादिरूपेण भेदः, न यागादीनां ज्योतिष्टोमदर्शपूर्णमासादिरूपेणेति येषां मतम्, तदभिप्रायेण जातिशब्दानामेवोदाहरणतोक्तेत्याशयः । किं तेषां यागादिभेदाभावभ्रान्तौ कारणमित्यपेक्षायाम् अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववदिति (६.३.१२) षष्ठाधिकरणसिद्धान्तसूत्रगतमैककर्म्यशब्दं भ्रान्तिकारणं दर्शयितुमाह—अपि चेति । ऐक्यशब्दोक्तस्य प्रत्यभिज्ञानस्य सादृश्यनिमित्तत्वाशङ्कानिवृत्त्यर्थं देवतोद्देशपूर्वकद्रव्यत्यागात्मकरूपाभेदात्तत्प्रतिपादकयज्यादिशब्दाभेदाच्च कर्म्मभेदे प्रमाणाभावान्न सादृश्य—निमित्तता युक्तेत्युक्तम् । द्रव्यान्तरेण नीवारादिना कृतस्य कर्म्मणो व्रीह्यादिद्रव्यकाद्दर्शपूर्णमासादेर्यागाद् भेदापत्तेर्न प्रतिनिध्युपादानं युक्तमिति प्रतिपादनार्थेन 'क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् (६-३-११) इति पूर्वपक्षसूत्रेणोक्तमाश्रयभेदेन भेदं निराकर्त्तुं गोत्ववदिति दृष्टान्तितम् । यथा सत्त्वस्य गोत्वादेः पदार्थस्य गौरित्याद्यभिन्नं नामधेयमभेदापादकम्, तथा प्रतिनिधिनिष्पादितेऽपि कर्म्मणि दर्शपूर्णमासादिनामधेयं याज्ञिकैः प्रयुक्तमभेदापादकमिति युक्त्यन्तरम् । प्रत्यभिज्ञानेनैवैक्ये सिद्धेऽभ्युच्चयमात्रत्वान्नेहोपन्यस्तम् । प्रतिनिधिनिष्पादितकर्मविषयविषयस्याप्यस्य न्यायस्य विध्यन्तरविहितेष्वपि तुल्यत्वं मन्वानानामभिप्रायेणैवमुदाहृतम् । एवं सामान्यानि विभज्य, सर्वव्याप्त्यर्थत्वेन भाष्यं व्याचष्टे—एवमिति । नन्वाकृतिशब्दस्य संस्थानवाचित्वमक्षपादाद्युक्तं परित्यज्य, जातिवाचित्वं किमित्युक्तमित्याशङ्क्यात्मादिषु द्रव्येषु, गुणकर्मसु चाभावादित्याह—नेति ।

क्व पुनः संस्थानमस्ति, क्व वा नेत्यपेक्षायामाह ।

पार्थिवेषु संस्थानं स्वाभाविकम्, जन्मादिषु औपाधिकमिति निरूपणम्—सर्वेषु हीति । पार्थिवेषु स्वाभाविकं संस्थानम् । अग्नेर्ज्वलनादिन्धनसंस्थानानुसारिसंस्थानभेददर्शनात् तोयस्य चाधारभूते पात्रसंस्थानानुसारिसंस्थानभेददर्शनाद्, घटाद्यवच्छिन्नाकाशस्य चावच्छेदकघटादिसंस्थानानुसारिसंस्थानभेददर्शनाद्, वायोश्च घटाद्यवच्छिन्नाकाशसञ्चारिणो घटादिसंस्थानानुसारिसंस्थानभेददर्शनादौपाधिकम् । यद्यपि क्वचिद् वृष्ट्युदकोर्द्ध्वगतज्वालादौ पार्थिवद्रव्यपरिग्रहाभावेऽप्याकारः संस्थानापरपर्यायः प्रतीयते, तथापि विलक्षणाकारस्याप्यग्नितोयव्यक्तिष्वग्नितोयशब्दप्रयोगान्नैकशब्दवाच्यत्वयोग्यः सर्वाग्नितोयव्यक्त्यनुवृत्तैक आकारश्च पद्यरचनात्मकसंस्थानशब्दवाच्यो योऽभिधेयाकृतिलक्षणं स्यादित्यनुवृत्तिशब्देन सूचितम् ।

कल्प्येतेत्यनेनौपाधिकत्वं दर्शितम् । दिगादीनां तु न स्वाभाविकं संस्थानम्, भाव्यौपाधिकमित्यर्थः । नन्वनुगतैकाकारप्रत्ययवेद्यत्वाज्जातिरप्याकाराभावे न सम्भवतीत्याशङ्क्याह—सामान्येति । संस्थानाख्याकाराभावेऽप्येकाकारप्रत्ययवेद्यः सर्वस्वव्यक्त्यनुगतो विजातीयेभ्यो व्यावृत्तो निरालम्बनबुद्ध्ययोगाद् ब्राह्मण्यादिवन्नापह्नोतुं शक्य इत्याशयः ।

सर्वेषु स्वविशेषेष्वनुवृत्तिरेव रूपं यस्येति विग्रहः । उपसंहरति—तस्मादिति ।

नन्वाकृत्यादिषु संस्थानासम्भवेऽपि गवादिषु सद्भावाद् गवादिशब्दानां संस्थानात्मकाकृतिवाचित्वं भवष्यतीत्याशङ्क्याह—संस्थानस्य चेति । नानाव्यक्त्यनुगतनित्यसामान्याभ्युपगमात्संस्थानस्याकृतित्वे सामान्यं वाच्यमिति व्यवहारो न युज्यत इत्यर्थः । संस्थानसामान्यस्य त्वाकृतिलक्षणत्वेन गोत्वाद्याकृतीनां वैलक्षण्यं सिद्ध्येदित्याह—अथेति । नन्ववान्तरसंस्थानसामान्यस्याकृतित्वाभ्युपगमान्न सङ्करापत्तिरित्याशङ्क्याह—न चेति । गोशब्दालम्बनत्वासम्भवे कारणमाह—तस्य हीति । नन्वेवं सति संस्थानस्याकृतित्वशङ्काकारणाभावात् किं तन्निराकरणार्थेन सर्वसामान्यानामाकृतित्वाभिधानेनेत्याशङ्क्याह—तेनेति । येन संस्थानस्याकृतित्वं न युक्तम्, तेन निराकृतमिति । तेनेत्यस्य योजना शङ्कोपोद्वलनाय दृष्टान्ताभिधानम् ।

ननु सामान्यशब्देनैव संस्थानशङ्कानिवृत्तिसिद्धेः सर्वसामान्यव्याप्त्यर्थो मात्रशब्दोऽनर्थक इत्याशङ्क्याह—अतश्चेति । सर्वं सामान्यमाकृतिरित्यभिप्रेत्य यो मात्रशब्दः प्रयुक्तः, सोऽतः शङ्काव्यावर्तनात् कारणाच्छङ्काव्यावृत्त्यर्थमिति, यावदिति योज्यम् । ऊहितशङ्कानिवृत्त्यर्थश्चकारः । व्यक्तौ च सर्वशब्दानां वाच्येहाकृतित्वेन विवक्षिता, न सामान्यान्तराणीति शङ्कान्तरनिराससूचनार्थो वा ।

व्यक्तिस्वरूपनिरूपणार्थस्यासाधारणेति भाष्यस्यान्येषां व्याख्यानं दूषयितुमुपन्यस्यति—असाधारणेति । गौर्गौरित्येकाकारप्रत्ययस्य सामान्याख्यानुवृत्ताकारविषयत्वाच्छाबलेयो बाहुलेय इति अनेकाकारप्रत्ययस्य च विशेषाख्यव्यावृत्ताकारविषयत्वान्न तद्व्यतिरिक्ताकारिभुतवस्तुसद्भावे प्रमाणमस्तीति, व्यक्तिशब्दस्य विशेषसमूहवाचित्वेन, वृक्षा वनमितिवद्वचनभेदे दोषाभावात् वृक्षाणामाश्रयो वनमितिवच्चाश्रय ( विशेषाणामाश्रयो व्यक्तिरिति 'अग्नेरुत्तानाभाष्यस्तु' व्यवहारस्य वृक्षाणामाश्रयो वनमितिवदुपपत्तेरित्यर्थः ) व्यपदेशोपपत्तेः कर्मधारय एव युक्त इत्याशयः ।

'आविर्भावतिरोभावधर्म्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेद् ॥' अ० सू० श्लो० १५२

इत्यनेन न्यायेन प्रत्यक्षसूत्रावयवानुवृत्तव्यावृत्तव्यतिरिक्तस्य धर्म्मिणः साधितत्वात्तदपह्नवो न युक्त इत्यभिप्रायेण दूषयति—तत्त्विति । साधारण्यत्वविशेषाणां नासाधारणव्यक्त्यात्मकत्वं युक्तमित्याह—खण्डेति । एतदेव व्याचष्टे—खण्डेति । अन्योऽपीत्यनेनान्तरशब्दो शाबलेयवर्णेऽपि शबलापत्य इत्येवं व्याख्यातः शबलाशब्देन च तच्छब्दः

वार्त्तिकश्लोकस्थ इत्यर्थः। शाबलेयशब्दप्रकृतिभूतशबलाप्रातिपदिकपरामर्शार्थत्वेन व्याख्यातः। एतच्चेत्यनेनादिशब्दोक्तं शबलाख्यविशेषस्य साधारण्यं व्याख्यातम्। एतदेव शबलेति नामाऽन्यत्रापि व्यक्तौ वर्त्तत इत्यर्थः। कथमित्यपेक्षिते प्रकारद्वयमुक्तं याहच्छिकत्वासिद्धौ—सङ्केतवशादित्युक्तम्। नामशब्देनावास्तवोऽपि वर्णद्वयशून्योऽयं विशेषः प्रोक्तव्य इति सूचितम्। याहच्छिकशबलापत्ये साधारण्यार्थं तदपत्ये वेति पुनर्वचनं शाबलेय इति नाम वर्त्तत इत्याद्यनुषङ्गेण योज्यम्। ननु साधारण्येऽपि व्यक्तिमात्रलक्षणार्थत्वेनादोषो भविष्यतीत्याशङ्कयाह—असाधारणेति। दोषान्तराभिधानार्थं चेदमुक्तम्। दोषान्तरमाह—विशेषेति। व्यक्तिशब्दस्य समुदायवाचित्वाभावान्न वृक्षा वनमित्येतत्तुल्यतेत्याशयः।

स्वमतेन व्याचष्टे—तस्मादिति। दोषसाम्यमाशङ्कते—नन्विति। या व्यक्तिः सौत्रं लक्षणेति लक्षणत्वेनोपादीयमानानां विशेषाणां समुदायेनासाधारण्येन च विशेषणाद्युक्तमसाधारण्यम्। परमते तु विशेषव्यतिरिक्ताय व्यक्तेरभावेनोद्देश्यत्वायोगाद्ये विशेषास्ते व्यक्तिशब्दवाच्या इत्युद्देश्यानां विशेषाणामविशेषेण व्यक्तिविशेषशब्दयोः पर्यायत्वापत्तेस्तन्निवृत्त्यर्थम्, मृष्यामहे हविषा विशेषणमितिवदेकस्मिन् विशेषणे कृतेऽर्थसिद्धेर्विशेषणान्तरस्य विवक्षितुमशक्यत्वाच्छ्रुतेनासाधारण्येन विशेषितानां व्यक्तिशब्देनेत्यर्थः। समुदायेन विशेषणानुपपत्तेः प्रत्येकमेव विशेषाणां व्यक्तिशब्दवाच्यत्वप्रसङ्गाद्वैषम्यमभिप्रेत्य परिहरति—उच्यत इति। ननु विशेषसमुदायाश्रयत्वमात्रेण व्यक्त्युपलक्षणसिद्धेः किमसाधारणविशेषणेनेत्याशङ्कयाह—प्रविभक्ता हीति। पिण्डात्मना समुदायात्मना साधारणत्वेनेत्यर्थः। विशिष्टा व्यक्तिर्गवादिशब्दवाच्यत्वेनाभिमता। नासाधारण्यं विनोपलक्षयितुं शक्येत्याशयः। नन्वेवं सत्यत्यन्तसदृशव्यक्तिगतस्य खण्डादिविशेषसमूहस्यासाधारण्याभावान्नोपलक्षत्वं स्यादित्याशङ्कयाह—न चेति। ननु प्रतिव्यक्त्यपूर्वविशेषाभ्युपगमे विशेषानन्त्यापत्तेरदृष्टकल्पना गौरवं स्यादित्याशङ्कयाह—अनन्तेति। ननु खण्डत्वादीनामनेकव्यक्तिसाधारण्ये कथं विशेषव्यपदेश्यतेत्याशङ्कयाह—परेति। व्यक्तेर्विशेषेभ्योऽन्यत्वं पूर्वोक्तं भाष्यकृद्वचनेन द्रढयति—एतच्चेति। सामान्यस्य व्यक्तिपारतन्त्र्याद् व्यक्तेः सामान्याश्रयत्वं मुख्यम्, समुदाय्याश्रयत्वं तु वृक्षाश्रयो वनमितिवत् समुदायस्य तन्मध्ये समुदायिप्रतीतेरौपचारिकम्। न च सकृच्छ्रुतस्याश्रयशब्दस्योभयरूपता युक्तेत्याशयः।

व्यक्तिभाष्यस्य परव्याख्यादूषणेनाकृतिभाष्यस्य द्रव्याद्यनुगतसत्तासामान्यमेवाकृतिर्न गोत्वाद्यवान्तरसामान्यमिति सत्तावाच्यत्ववादिनां व्याख्यां बुद्धिस्थां दूषयितुं तन्मतं तावदुपन्यस्यति—तत्रेति। उपन्यासार्थस्तत्र शब्दः सर्वशब्दानां पर्यायत्वशङ्कानिवृत्तये शब्दस्वरूपेण गोत्वादिना वा व्यवच्छेदाभिधानम्। अत्रार्थे तदीयं श्लोकं पठति—यथाहुरिति। अस्तीत्येवं रूपः सत्तासामान्यरूपः सर्वशब्दानामर्थं इतीदृशं प्रत्याय्यस्य वाच्यस्य लक्षणमाहुः। तस्य गवादिपदेष्वपूर्वादिपदैः सह तुल्यत्वादित्यर्थः। अपूर्वादीनां हि शब्दैकगोचरत्वात् तेन च विशेषाप्रतीतेरस्ति किंचिदित्येतावन्मात्ररूपेण प्रतीतेरपूर्वादि-

शब्दानां शब्दावाचित्वावधारणात्तद्दृष्टान्तेन गवादिशब्दानामपि सत्तावाचिताऽनुमीयत इत्यर्थः । एतच्च 'सत्त्वप्रधानानि नामानि' प्रातिपदिकार्थः तत्तेत्यादिदर्शनान्नामविषयमेवेति सर्वशब्दस्तद्विषयतया सङ्कोचनीयः ।

दूषयति—तत्त्विति । कक्ष्याशब्दः कोष्ठवाची । द्रव्यत्वगुणत्वकर्मत्वान्येकस्यां सत्तावान्तरसामान्यकक्ष्यायां वर्त्तन्ते । पृथिवीत्वादीनि द्रव्यत्वावान्तरसामान्यकक्ष्यायाम्. रूपत्वादीनि गुणत्वावान्तरसामान्यक्ष्यायामित्येवमादिः कक्ष्याणां विभागः । तत्र द्रव्यशब्देन द्रव्यत्वसत्तयोर्निश्चयं प्रतीतिर्भवति । पृथिवीत्वादिषु सन्दिग्धा प्रतीतिः, गुणत्वादिषु त्वप्रतीतिरेव, गुणशब्दाद् गुणत्वसत्तयोर्निश्चयप्रतीतिः । रूपत्वादिषु सन्दिग्धप्रतीतिः । द्रव्यत्वादिष्वप्रतीतिरेवेत्यादिकक्ष्ययाविभागेन सामान्यानां प्रतिपादनात्सर्वशब्दानां च सत्तावाचित्वे द्रव्यशब्दाद् गुणत्ववद् द्रव्यत्वस्याप्यप्रत्ययापत्तेः । सत्ताद्वारेण वा प्रत्यये पृथिवीत्वादिवत् सन्दिग्धप्रतीतिप्रसङ्गाद् गुणत्वादावपि च तादृक्प्रतीतिप्रसङ्गात् सत्तावान्तरसामान्यविषयाणां द्रव्यादिशब्दानामेव तावद् सत्तावाचित्वमयुक्तम् । तत्रैवं सति दूरान्तरितार्थानां गवादिशब्दानां सुतरां सत्त्वावाचकत्वे शक्तिर्नास्तीत्यर्थः ।

श्लोकं व्याचष्टे—प्रतिनियतेति । ननु द्रव्यादिशब्दानां द्रव्यत्वाद्यवच्छिन्नशब्दवाचित्वाद्व्यवस्था भविष्यतीत्याशङ्कानिराकरणार्थं विशिष्टाभिधानपक्षं निराकरिष्यन्परानभिमतमपि शुद्धाभिधानं विशिष्टाभिधाने निराकृते यदि कश्चिदङ्गीकुर्यात्ततस्तदपि निराकार्यंमिति मत्वा विकल्पयति तावत्सत्तामिति । आद्यं तावत्पक्षं निराकरोति—शुद्धेति । ननु देशाद्यपेक्षया घटादिवत्सत्तायां नास्तित्वाभिधानं न विरोत्स्यते अत आह—देशेति । आ दशब्दो वस्त्वभिप्रायो । यथाकाशस्य कूपपूरणेनोपलम्भप्रतिबन्धात्प्रतीयमानावस्थापेक्षया नास्त्याकाशमित्युच्यते, तथात्रापीत्याशङ्कानिराकरणार्थः । मूर्त्तद्रव्यावष्टम्भो ह्याकाशोपलम्भप्रतिबन्धकोऽन्वयव्यतिरेकाभ्यामवगम्यते । न तु सत्तायाः किञ्चिदुपलम्भप्रतिबन्धकमस्तीत्याशयः ।

व्यक्तिमात्रगतत्वेऽपि जातेराकाशादिव्यक्तीनां विभुत्वात् सत्ताया विभुत्वसिद्धिः । सत्ताशब्दस्य लौकिकव्यवहारे च जातिवाचित्वाभावात्, सर्वशब्दानां महासामन्यवाचित्वेऽपि सत्तावाचित्वाभिधानं न युक्तमित्याह—रूढीति । लोकदृष्टचेत्यनेन गवादिशब्दवत् सत्ताशब्दस्य लौकिकव्यवहारे प्रयोगाभावाज्जातिवाचित्वनिषेधस्य लोकविरोधः परिहृतः ।

किं तर्हि सत्ताशब्दवाच्यं युज्यत इत्यपेक्षायामाह—य एव हीति । योऽस्तिशब्देन द्वितीयो भावविकार उच्चते । स एव सत्तेत्येतद्युज्यत इत्यर्थः । अनेन चास्तिशब्दोऽपि न वस्तुत्वापरपर्यायमहासामान्यवाचीति सूचितम् । द्वितीयभावविकारवाचिनोऽस्तेर्धातोः शत्रन्तात्तलि कृते सत्ताशब्दव्युत्पत्तेरित्याशयः । ननु वस्तुशब्दस्यापि द्वितीयभावविकारवाचित्वात्सत्तास्तिशब्दयोर्वस्तुशब्दपर्यायत्वमविरुद्धमित्याशङ्क्याह—जायमानेति । प्रथमो भावविकारो जायमानत्वम् । विपरिणामस्तृतीयः । आदिशब्देन वृद्धयपक्षयौ चतुर्थपञ्चमावु-

पात्तौ। विनश्यता षष्ठः। सर्वशब्देन भावविकाररहितेष्वपि नित्येष्वाकाशादिषु वस्तुत्वप्रतीतेर्न वस्तुशब्दो भावविकारवाचीति सूचितम्। ततश्चास्तिशब्दोऽपि न वस्तुत्ववाचीति पूर्वसूचितमर्थं प्रकटयन्नस्त्यर्थं इति पाठं दूषयति—तेनेति। लौकिकप्रयोगाभावाच्च समुदायप्रसिद्ध्यात्मलाभाभावे क्लृप्तावयवार्थत्यागेन समुदायस्य शक्त्यान्तरकल्पनं प्रोक्षिण्यादिशब्दवन्न युक्तमित्याह—न चेति। सत्ताशब्दप्रकृतित्वात् सन्शब्दस्योपन्यासः। तस्माद्यौगिक एव सत्ताशब्दे न रूढिरित्युपसंहरति—इतीति। यथा भवतीत्याख्यातस्यार्थे भवन्निति भवच्छब्दो धात्वर्थविशिष्टकर्तृवाचित्वाद्यौगिकः, तथास्तीत्याख्यातस्यार्थे सन्निति शब्दोऽपि। ततश्च सतो भावः इत्यस्मिन्नर्थे सच्छब्दात्तल्प्रत्ययोत्पत्त्या सत्तेति प्रवर्त्तमानो यौगिक एव।

ननु सत्ताशब्देन जातिः प्रतिपत्तव्या, वैशेषिकपरिभाषैव हि तत्प्रति कारणम्। नान्यत्किंचिदित्यर्थः। कीदृशी परिभाषेत्यपेक्षिते काश्यपीयं सूत्रं पठितम्। इतिकरणो बुद्ध्युपलक्षणार्थः। यतो वस्तुत्वान्महासामान्याद् द्रव्यादिषु सदिति बुद्धिर्भवति, सा सत्तेति सूत्रार्थः। परिभाषाशब्ददर्शनात् परिभाषासूत्रत्वशङ्कां निवर्त्तयितुं लक्षणसूत्रमेवेदम्, स्वोत्प्रेक्षितत्वद्योतनार्थन्तु परिभाषात्वाभिधानमिति लक्षणशब्देन सूचितम्। किं पुनर्वैशेषिकाणां सत्ताशब्दस्य जातिवाचित्वप्रसिद्धौ कारणमित्यपेक्षायामाह—सेयमिति। वस्तुपर्यायेण क्रमेण वक्तीति वस्तुपर्यायवाची, वस्तुत्ववाचीत्यर्थः। भवच्छब्देन सह साधारणो द्वितीयभावविकाररूपोऽर्थोऽस्येति भवसाधारणार्थः। घटो भवति इत्यादिपूत्पस्याख्यप्रथमभावविकारवाचित्वेनापि प्रसिद्धस्य भवतेर्भूसत्तायामिति सत्ताख्यद्वितीयभावविकारवाचित्वस्मृतिबलाद्भवत्साधारणार्थत्वमव्ययसंज्ञकस्यास्तिशब्दस्योक्तेः। भवतिधात्वर्थमात्रवाचित्वेऽपि अव्ययास्तिशब्दस्य प्रकृत्यनुग्रहार्थं शतृप्रत्ययोपादानाद्वस्तुत्वद्वितीयं भावविकाररूपार्थद्वयवाचिना अव्ययसंज्ञकेनास्तिशब्देनेयं प्रसिद्धिरुपपादितेत्यर्थः।

क्व पुनरव्ययास्तिशब्दो वस्तुत्ववाची दृष्ट दृष्ट इत्यपेक्षायामाह—अस्तित्वमिति। दिग्योगनिमित्ता पञ्चमी यस्मादस्तिशब्दात्परौ त्वतलौ दृश्येते, स वस्तुत्ववाचीत्यर्थः। आख्यातप्रतिरूपक इत्याख्यातत्वभ्रान्तौ कारणमुक्तम्। नन्वाख्यात (शब्द एवायं कस्मान्न भवतीत्याशङ्क्याह—अप्रातिपदिकत्वाद्धीति। भवत्साधारणार्थत्वमुपपादयन्नामाख्यातत्वे कारणान्तरमाह—अस्तीति। तेनास्ति[1]) शब्देन सह समासाभ्युपगमादनाख्यातत्वम्, तस्य च सन्शब्दवाच्यद्वितीयभावविकारवाचित्वावगमात् भवत्साधारणार्थतेत्यर्थः। एतदेव व्याचष्टे—अस्तीति। अस्तिपदेन सह यो बहुव्रीहिः, सोऽव्ययसंज्ञकेन, नाख्यातसंज्ञकेन। तस्यासुबन्तत्वेन समासायोगादित्युक्तेः। नन्वव्ययस्यापि सुब्लोपान्वाख्यानेन सुबन्तत्वादव्ययीभाववच्चाहत्य बहुव्रीह्यविधानात्कथं समासः स्यादित्याशङ्क्य प्रत्ययलोपे प्रत्ययलक्षणमिति स्मृतेः प्रत्ययलक्षणद्वारेण सुबन्तत्वमुक्तम्।

---

१. अयं पा० २ पु० ना०।

ननु सुबुत्पत्तेः प्रागसुबन्तताऽस्तीत्याशङ्क्यावश्यम्भावित्वेन सुबुत्पत्तेः प्राथम्यमुक्तम्। आवश्यकत्वोपपादनार्थं प्रातिपदिकत्वेन योग्यतोक्ता। ननु यथा पठतितमामिति अप्रातिपदिकादपि तद्धितो जातः तथात्र तिङन्तस्यापि समासो भविष्यतीत्याशङ्क्य तिङन्तेत्युक्तम्। तिङश्चेति सूत्रेणाहृत्य विधानात्तत्र तद्धितो जातः। तिङन्तस्य तु समासत्वेनोपसंख्यानमपि नास्तीत्यर्थः। सदर्थवचन इत्यनेन सद्वाचिनः सच्छब्दस्यार्थपरत्वं व्याख्यातम्। कथमव्ययशब्देनेयं प्रसिद्धिरूपपादितेत्यपेक्षायामाह—ततश्चेति। वस्तुनि महासामान्ये सति च द्वितीये भावविकारे सत्संज्ञकमस्तिशब्दं प्रयुज्यमानमुपलभ्य तदीयद्वितीयं भावविकाराख्यार्थानुसरणेन च कृत्वाव्ययास्तिशब्देन सह प्रत्यासन्नमदूरान्तरार्थं कर्तृप्रतीत्याविनेति द्वितीयभावविकारवाचितयास्त्यर्थं स्वच्छब्दमुपलभ्य, महासामान्यमप्यव्ययास्ति (शब्दवाच्यः सच्छब्दवाच्या सत्तेत्येवं कल्पितमित्यर्थः। नन्वव्ययास्तिशब्दवाच्यस्य द्वितीयभावविकारस्य सच्छब्दवाच्यत्वेऽपि कथं महासामान्यस्य सच्छब्दवाच्यत्वकल्पनमाशङ्क्याव्ययास्तिशब्दवाच्यत्वहेतुना द्वितीयभावविकारदृष्टान्तेन तस्यापि सच्छब्दवाच्यत्वानुमानसूचनार्थं तार्किकैरित्युक्तम्।

नन्वेवमपि तल्प्रत्ययाधिक्यात् सत्ता[1]) शब्दस्य कथं महासामान्यवाचितेत्याशङ्क्य देवात्तलितिस्मृतेर्यथा देवतेति तल्प्रत्ययः स्वार्थिकः तथाऽयमपीत्युक्तम्। ननु द्वितीयभावविकारे कृत्सञ्ज्ञकशतृप्रत्ययोपात्तकर्तृविशेषणतया सच्छब्दवाच्यत्वेन सहाव्ययास्तिशब्दवाच्यत्वेन सहाव्ययास्तिशब्दवाच्यताऽनुमितसामान्यस्य बाधकर्तृकत्वान्न तथानुमानं सम्भवतीति धर्मविशेषविपरीतसाधनात् विरुद्धो हेतुः स्यादित्याशङ्क्य - इहापीत्युक्तम्। यथाऽव्ययास्तिशब्दवाच्ये द्वितीये भावविकारे कर्तृविशेषणत्व प्रतीतिर्नास्ति तथेह सच्छाब्दवाच्ये द्वितीयभावविकारे भवतीमपि कर्तृप्रतीतिं, सक्षीरेति समासोपपत्तये सुबन्तत्वयोग्यप्रातिपदिकत्वयोग्यप्रातिपदिकत्वसिद्ध्यर्थं कृत्सञ्ज्ञकशतृप्रत्ययोच्चारणोपपत्तेरतन्त्रीकृत्य कर्तृनिरपेक्षधात्वर्थमात्रवाची सच्छब्दः तत्समानार्थत्वाच्च सत्ताशब्दोऽपीत्यर्थः। ननु स्मृत्यभावाच्छब्दपरस्य तल्प्रत्ययार्थस्य स्वार्थिकं तत्त्वमविवक्षाहेत्वभावाच्च कर्तृप्रतीतेरतन्त्रीकरणमयुक्तमित्याशङ्क्यापारमार्थिकाभ्युपगममात्रद्योतनार्थम्—गृहीत्वेत्युक्तम्। स्वार्थिकं तलं गृहीत्वा धात्वर्थमात्रवचनौ च स्वच्छब्दसत्ताशब्दौ गृहीत्वेत्यन्वयः।

नन्वनेन न्यायेनाख्यातसञ्ज्ञकस्याप्यस्तिशब्दस्य द्वितीयभावविकारवाचित्वान्महासामान्यवाचितापि प्रसज्येतेत्यनिष्टापत्तिशङ्कानिराकरणायाख्यातप्रत्यययोच्चारणास्यानन्यार्थत्वेन कर्तृसंख्याकालादिप्रतीतेरतन्त्रीकर्त्तुमशक्यत्वात्कर्तृसंख्याकालादिनिरपेक्षशुद्धधात्वर्थमात्रवाचित्वमाख्यातास्तिशब्दस्य नास्तीति सूचयितुमेवकारः। ततश्चाख्यातास्तिशब्दवाच्यद्वितीयभावविकारदृष्टान्तेनाऽव्ययत्वेऽस्तिशब्दवाच्यत्वहेतुना वस्तुत्वस्याख्यातास्तिवाच्यमिहानुमीयमानं कर्तृसंख्यादिविशिष्टत्वेनैवानुमीयेत यदव्ययास्तिशब्दवाच्यम्, तत्

---

१. अयं पा० २ पु० ना०।

कर्तृसंख्यादिविशिष्टत्वेनाख्यातास्तिशब्दवाच्यमित्याख्यातास्तिशब्दवाच्ये द्वितीयभावविकारे व्याप्तिदर्शनादित्याशयः। ननु वस्तुत्वजातेः सच्छब्दवाच्यता तार्किककल्पिता पदवाक्यार्थ-तत्त्वज्ञैर्निराक्रियमाणा कथं प्रसिद्धिं यायादित्याशङ्क्याह—तदुक्तेति।

'यावद्यावद्विवादाय मुक्तकं दीयते मनः।
अनवस्थादिदोषेण तावत्तावद्विहन्यते ॥'

इत्यनेन न्यायेन चिरनिखाततडागादिगतशैवालवच्छुष्कतर्कस्याप्रतिष्ठितत्वेन निराकृतस्यापि पुनः पुनरुद्भवेन समापयितुमशक्यत्वात्तार्किकोक्तस्यान्तगमने समापने अनादरादभियुक्तैरुपेक्षितत्वात्प्रसिद्धं सदिमां युक्तायुक्तत्वविचारावस्थां प्राप्तमित्यर्थः। प्रसिद्ध्याभासं चेदम्, न परमार्थतो नियुक्तानामेवं प्रसिद्धिरस्तीति च शब्देनोक्तम्। किं तदित्यपेक्षायामाह—येनेति। येन सत्ताया वस्तुत्वापरपर्यायमहासामान्यात्मकत्वेन गवादिशब्दवाच्यत्वेनापि संज्ञा सम्भाव्यते। तत्सत्ताया महासामान्यरूपत्वमिमावस्थां प्राप्तमित्यर्थः।

यद्वा युक्तायुक्तत्वविचारस्य कः प्रस्तुतोपयोग इत्यपेक्षायामिदमुक्तम्, येन कारणेन सत्तायाः सामान्यरूपत्वे सति गवादिशब्दवाक्यत्वेनापि न सत्ता सम्भाव्यते, तेन तन्निराकरणार्थं रूढिशब्दश्च नैवायमित्यादिनं न सत्ताशब्दस्य जातिवाचिता निराकृतेत्यर्थः। परमार्थतस्तु वस्तुत्वस्य जातिरूपस्यापि गवादिशब्दवाच्यत्वं नास्ति, किमुत सत्तायाः। जात्याख्याद्धर्माद्धर्मान्तरत्वेन द्वितीयभावविकारत्वेन वर्तमानत्वादित्याह—नन्विति।

ननु वस्तुशब्दस्यापि निवासार्थाद्वसेर्धातोर्वसेस्तुन्निति सूत्रेणौणादिके तुन्प्रत्यये कृते व्युत्पत्तिसम्भवादनेकत्र नितरां प्रत्येकमेकमेव वसति वर्तत इत्यवयवार्थयोगेन सत्तादिषु सामान्यं सामान्यमित्येकाकारप्रत्ययालम्बनस्यानेकेष्वेकस्य प्रत्येकवृत्तित्वलक्षणस्याभिधानादयौगिकत्वेन जातिवाचित्वं न युक्तमित्याशङ्कां निराकुर्वन्नर्थगम्यत्वं विवृणोति—वस्तुशब्दो हीति। व्यक्तेः प्रत्येकवृत्तित्वाभावादेवंविधयोगनिमित्तत्वे वस्तुशब्दस्य व्यक्तौ प्रयोगानुपपत्तिप्रसङ्गाद्यौगिकत्वासम्भवाभिधानार्थं व्यक्त्याश्रितत्वं वस्तुत्वसामान्यस्योक्तम्। जातेर्जात्याश्रितत्वाभावाद्वस्तुशब्दस्य जातिवाचित्वे जातौ प्रयोगानुपपत्तिमाशङ्क्य निःसामान्यानि सामान्यादीनीति वैभाषिकपरिभाषायाः प्रतीतिविरोधेनायुक्तत्वाज्जातेपि जात्याश्रयत्वं सम्भवतीति दर्शयितुं जात्यन्तराश्रितत्वमुक्तम्। नन्वेवं सति वस्तुत्वेऽपि वस्तुत्वप्रतीतेर्जात्यन्तराश्रयणायान्तरशब्दः। यथैव गोत्वरूपेण शाबलेयादौ गवाकारप्रत्ययसिद्ध्यर्थं गोत्वमङ्गीकृतम्, न गोत्वे, तत्र गवाकारप्रत्ययस्य स्वरूपनिबन्धनोपपत्तेः। तथा जात्यन्तरे व्यक्तौ च वस्त्वाकारप्रत्ययसिद्ध्यर्थं वस्तुत्वं जातिरिष्यते, तत्र स्वरूपनिबन्धनत्वेनैव वस्त्वाकारप्रत्ययोपपत्तेर्नापरा वस्तुत्वं जातिरङ्गीकार्येत्याशयः। शुद्धाभिधानपक्षस्य दृष्टत्वोपसंहारपूर्वकम्, विशिष्टाभिधानपक्षस्य दुष्टत्वं प्रविजानाति तावत्—शुद्धेति। दूषयति—यदेवेति। एतदेवं प्रपञ्चयितुं विकल्पयति—गोसत्ता चापीति। आद्ये कल्पे दोषमाह—तत्रेति। एतदेवोपपादयति—विशेषणमिति। गोव्यक्तिविशिष्टसत्ताभिधानेऽप्येतमेव दोषमतिदिशति—तथेति। कल्पनागौरवापत्तेश्च केवलव्यक्त्यभिधानपक्षवद्वि-

शेषणभूतव्यक्त्यभिधानपक्षोऽप्ययुक्त इत्याह—अनित्येति । अनित्यः सम्बन्धः तस्य चान्वयव्यतिरेकाभ्यां विनाऽपि ज्ञानमनन्ताश्च शब्दशक्तयो यस्मिन्व्यक्त्यभिधाने प्रसज्यन्ते तत्तथोक्तम् । दृष्टान्तं साध्यविकलत्वेन दूषयितुमनुभाषते—तस्त्विति । दूषयति श्लोकं-तत्रेति । श्लोकं व्याचष्टे—केचिदिति । श्रुतार्थापत्त्या पर्युपस्थापितस्यार्थविशेषस्य वचना वाचका इति पूर्वपदसमासान्निष्कृष्य योज्यं पर्युपस्थापनस्य नित्यपर्युपस्थापकसापेक्षत्वापर्युपस्थापितशब्दस्य श्रुतार्थापत्तिसापेक्षत्वेऽप्युत्तरपदसमासाविघातः । श्रुतार्थापत्त्या अपूर्वं पर्युपस्थाप्यते । स्वर्गो देवताश्च वाक्यशेषैः अर्थवादैर्वाक्यान्तरैश्च मन्त्रोपनिषदादिभिरुपस्थाप्यन्ते ।

ननु यद्यपि श्रुतस्वर्गयागसाध्यसाधनसम्बन्धान्यथानुपपत्त्या यागजन्यः स्वर्गोत्पादनसामर्थ्यातिशयविशेषः कल्प्यते । तथापि समस्तवैदिकादृष्टार्थकर्मजन्यातिशयानुगतमपूर्वशब्दवाच्यं सामान्यं न सत्तातोऽन्यत् प्रमाणान्तरेण लभ्यते । एवं सवनीयसूक्तादिमहेन्द्रादिदेवताविशेषावगमेऽपि सर्वदेवतानुगतं सामान्यं देवताशब्दवाच्यं न सत्तातोऽन्येन लभ्यते । ये हि जनाः पुण्यकृत इत्यादिवाक्यशेषाच्च नक्षत्रलोकादिस्वर्गविशेषावगमेऽपि न च वै स्वर्गलोका इत्यादिवाक्यशेषेभ्योऽनेकस्वर्गावगतेः सर्वानुयायिस्वर्गशब्दवाच्यं न सत्तातोऽन्येन लभ्यते इति बलात्सत्तैवापूर्वादिशब्दवाच्या स्यादित्याशङ्क्याह—कार्येति । सामान्येनेतीत्थम्भूतलक्षणे तृतीया । सामान्यरूपमप्यपूर्वादिसत्तातोऽन्यदेव लभ्यत इत्येवकारार्थे तुशब्दः । किं तदित्यपेक्षिते सर्वातिशयानुवर्त्तिस्वर्गादिकार्योत्पादनसामर्थ्यसामान्यमपूर्वशब्दवाच्यम्, सर्वेन्द्रादिदेवतानुवर्त्तिदीव्यतिधात्वर्थयोगित्वसामान्यं देवताशब्दवाच्यम्, सर्वस्वर्गानुवर्त्तित्वदुःखमिश्रसुखनिष्ठसुखसङ्गतिसामान्यं स्वर्गशब्दवाच्यमित्युक्तम् ।

श्लोकं व्याख्यातुमपूर्वशब्दस्य तावत्सत्तातिरिक्तसामान्यवाचित्वमुपपादयति--सर्वेति । ननु लौकिकसाधनगतानां सामर्थ्यानां कार्यार्थासत्तिगम्यत्वेऽप्यपूर्वशब्दवाच्यत्वाभावात्, तद्वाक्यानां च वैदिकयागादिजन्यानां सामर्थ्यानां विशेषतः श्रुतार्थापत्तिगम्यत्वेऽपि सर्वकर्मसामान्यविषयभावेन सामान्यतः प्रमाणान्तरेणाऽनवगमात्सम्बन्धग्रहणासम्भवेन कथमपूर्वशब्दाभिधेयतेत्याशङ्क्य - यागादीत्युक्तम् । क्लृप्तावयवसामर्थ्यानुसारेणैवापूर्वशब्दस्य सत्ता वैदिककर्मजन्यातिशयविशेषवत्त्वंवान्तरसामान्याभिधायकत्वोपपत्तेर्न पृथक्सम्बन्धग्रहणापेक्षेति भावः ।

## देवशब्दस्य सत्तावाचित्वनिरासः

देवताशब्दस्य सत्तातिरिक्तसर्वदेवतावत्त्वंवान्तरसामान्यवाचित्वमुपपादयति —तथेति । दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिष्विति सप्तस्वर्थेषु स्मृताद्दीव्यतेर्धातोर्घञि कृते देवशब्दव्युत्पत्तेः । सर्वेन्द्रादिदेवानुगतस्य क्रीडादिदीव्यत्यर्थयोगस्य सामान्यस्य सत्तातिरिक्तस्य सद्भावात्सुज्ञानो देवशब्देन सह देवानां सम्बन्ध इत्यर्थः । सत्ताव्यावृत्त्यर्थो विशेषशब्दोपाधिकत्वाद्वा देवशब्दस्यापूर्वशब्दवदेव जातिवाचित्वनिराकरणार्थः । ननु क्रीडादिदीव्यत्यर्थयोगस्य प्रमाणान्तरेण देवेष्वनवगमात्कथं तद्योगिनिमित्तेन देवशब्देन सह सम्बन्धज्ञानमित्याशङ्क्यार्थान्तरानवगमेऽपि द्युत्यादेर्दीव्यत्यर्थस्य चन्द्रादौ प्रत्यक्षेणोप-

लम्भाद्देवशब्दप्रवृत्तिनिमित्तत्वं भविष्यतीति दर्शयितुम्—द्योतन्ते वेत्युक्तम्। ग्रहशब्देनैव चन्द्रादित्योपादाने सिद्धेऽपि द्युत्यतिशयात्तयोः पृथगुपादानम्। पृथगुपादानं चन्द्रतारकेभ्यो नक्षत्राणां द्युत्यतिशयात्पृथगुपादानम्। रूपेणेतीत्थम्भूतलक्षणे तृतीयायोजना तु दीव्यन्तीति व्युत्पत्त्या क्रीडादिदीव्यत्यर्थयोगात्सर्वे देवाश्चन्द्रादिरूपेण गगने स्थिता द्योतन्त इति दिव्यत्यर्थः। द्युतियोगाद्देवाः वायवः सततगत्या दीव्यत्यर्थगतियोगाद्देवाश्च शब्दोपात्ताश्चेतरे सर्वेऽपि वा स्तूयन्त इति दीव्यत्यर्थस्तुतियोगाद्देवा इति प्रकारवचनमितिकरणम्। निरावर्त्यं कार्या-गत्येत्यत्र तु तृतीयैवेतिकरणार्थस्य लब्धत्वान्नेति करणापेक्षा। आर्थवादिकीनां स्तुतीनां विधिशेषत्वेन देवता स्वरूपपरत्वाभावान्मन्त्रैरित्युक्तम्। अस्य च ग्रन्थस्य क्रमेण श्लोकगतेन्द्रादिपदोपात्तार्थविवरणत्वावगमात्सर्वेन्द्रादिदेवतागतदेवता[1]) त्वसामान्यपरमिन्द्रादिपदमवसीयत इति कृत्वा, तथाऽस्माभिर्व्याख्यातम्।

### स्वर्गशब्दस्य सत्तावाचित्वनिरासः

स्वर्गशब्दस्य सत्तातिरिक्तार्थवाचित्वमुपपादयितुं नक्षत्रदेशो वा, मेरुपृष्ठं वा विशेष एव स्वर्गशब्दवाच्यः न सामान्यमिति प्रकारद्वयं तावदाह—तथेति। वैदिकेन प्रकृष्टेन स्पष्टेन वादेन, तन्मूलेन च पौराणिकानां मातल्यर्ज्जुनसम्वादादिगतेन दर्शनेन याज्ञिकानां धाइ गन्मस्तुवः संज्योतिषाऽभूमेत्यादिप्रोत्साहनमन्त्रार्थानुसन्धानरूपेण दर्शनेनेत्यर्थः। वैदिकप्रवादद्वयं 'यथा वेद' इत्युपक्रम्योदाहृतम्। ननु न च वै स्वर्गलोका इत्यादिदर्शनेनानेकस्वर्गानुगतसामान्यं स्वर्गशब्दवाच्यमङ्गीकार्यम्, न वा तत्सत्तातोऽन्यत्सम्भवतीत्याशङ्कानिराकरणार्थत्वेन निर्मिश्रसुखसङ्गतिरित्येतद्व्याचष्टे—अथ वेति। केवलमेव सुखं स्वर्गशब्देनोच्यत इत्यनुषङ्गः। सुखस्य केवलं दुःखामिश्रत्वमुपपादयितुम्, दुःखाभावेऽप्यलम्पातदुःखासद्भावेऽपि च व्यतिरेकाद्—दुःखाद्विभक्तमित्युक्तम्। नन्वेवं सति कियत्कालं केवलसुखस्येहापि दर्शनात् स्वर्गस्यामुष्मिकत्वं न स्यात् इत्याशङ्क्य—यदित्युक्तम्। सर्वसुखसाधनसम्पन्नस्यापि पिपासादिदुःखाभावे स्वादूदकपानाद्यप्रवृत्तेः कंचित्कालं दुःखस्यापरिहार्यत्वादिदुःखस्य चापरिहार्यत्वाच्चिरकालं केवलसुखोपभोगस्यास्मिन् देशेऽनुपपत्तेः। परलोकभोग्यत्वादल्पकालस्य च केवलसुखस्य स्वर्गशब्दानभिधेयत्वात्पारलौकिकता सिद्धेत्यर्थः। ननु चिरकालोपभोग्यस्य केवलसुखस्य प्रमाणान्तरेणानवगमात्कथं सम्बन्धग्रहणमित्याशङ्कां निराकुर्वन्स्वर्गादिशब्दार्थनिरूपणस्य प्रकृतसत्तावाचित्वनिराकरणोपयोगित्वमुपसंहरति—तच्चेति। यागादिजन्यस्य चिरकालकेवलसुखस्य प्रमाणान्तरेणाऽग्रहणेऽपि लौकिके एव सुखेऽन्वयव्यतिरेकाभ्यां दुःखामिश्रात्सुखान्निष्कृष्टे गृहीतसम्बन्धः स्वर्गशब्दोऽल्पकाले सुखे तद्विना प्रत्यासत्तिजन्यदुःखापरिहारेणामिश्रत्वायोगात्कैवल्येनैव चिरकालताक्षेपाद्विशिष्टमेवालौकिकं प्रतिपादयतीत्याशयः। स्वर्गशब्दस्य सत्तावाचित्वनिराकरणोपसंहारेणेतरयोरपि तुल्यन्यायसिद्धत्वात्पृथगनुक्तिः। अतश्चापूर्वादिशब्दभोग्यं गवादिशब्दानां स्वार्था-

---

१. अयं पा० २ पु० ना०।

मिधानेन मन्त्रागमकतयाऽस्मत्पक्षेऽप्युपपन्नमित्याह—तेनेति । परपक्षनिराकरणमुपसंहरति—अतश्चेति ।

नन्वेवं तर्हि गोत्वादेरश्वादिभ्यो व्यावृत्तत्वेन विशेषरूपत्वादाकृतिवाच्यत्वपक्षोऽनुपपन्नः स्यादित्याशङ्क्याह—गोत्वेति । अश्वादिभ्यो व्यावृत्तत्वेऽपि शाबलेयादिष्वनुवृत्तेः सामान्यरूपताऽप्यस्तीत्याशयः । कुत इति सन्देहे तु प्रश्नभाष्यं द्वयोः प्रतीतेरेकाभिधानेनैवाविनाभावादितरप्रतीतिसिद्धेः सन्देहहेतोः स्पष्टत्वादयुक्तमाशङ्क्य, व्यक्तिपक्षनिश्चयाभिप्रायत्वेन व्याचष्टे—कुत इत । सन्देहहेतुप्रतिपादनार्थं गौरिति भाष्यं प्रत्ययस्य व्यक्त्याकृत्योस्तुल्यत्वादयुक्तमाशङ्क्य, प्रत्ययहेतुशब्दशक्तिलक्षणार्थंप्रत्ययशब्दाङ्गीकरणेन व्याचष्टे—उच्यत इति । प्रत्ययशब्दस्यानार्जवं द्योतयितुं व्युत्क्रमेण व्याख्यातम् । नन्वेवं सति विरुद्धाव्यभिचारित्वापत्तौ केनान्येन निर्णय इत्याशङ्क्याह—शक्तीति । नात्रान्येन निर्णयः, किं त्वनयोरेव बलाबलावधारणेनेति भावः । प्रयोगचोदनाभावादितिसूत्रं लोकवेदाधिकरणसिद्धान्ते अन्यथा योजितत्वाद्विवेकायाकृत्यधिकरणपूर्वपक्षेऽप्यावृत्त्या योजयति—किं तावदिति । लौकिक एवार्थो वेदेऽपीत्युक्तम् कोऽसावित्यपेक्षायां प्रयोगचोदनाभावं पर्यालोच्य यो युक्तः, स इत्येवं व्यक्तिवाच्यत्वप्रतिज्ञावगतेः—व्यक्तिर्वाच्येत्युक्तम् । अर्थैकत्वमिति सूत्रावयवं द्वयोः प्रतीयमानत्वाद् व्यक्तिमात्रवाच्यत्वं न युक्तमित्याशङ्कानिराकरणार्थत्वेन व्याख्यातुम्—नन्वित्युक्तम् । एकस्य वाच्यत्वे द्वयप्रतीतिः कथमित्याशङ्क्य, द्वयप्रतीत्युपपादनार्थत्वेनाविभागादिति सूत्रावयवो व्याख्यातः ।

ननु शक्त्यनुसारेण शब्दानां वाचकत्वाच्छक्तेश्चान्वयव्यतिरेकाभ्यां जातावेव ज्ञातुं शक्यत्वात्कार्ययोगाभावेऽपि तस्या एव वाच्यत्वम्, न व्यक्तेरित्याशङ्क्याह—नित्यमिति । वाक्यार्थप्रतिपादनात्मकप्रयोजनकाले शब्दानामुच्चारितानां वाक्यार्थप्रत्यायनार्थत्वानुसारणैतद्वाक्यार्थप्रतिपादनोपयोगिपदार्थप्रतिपत्तिरेवंविधेन शब्दविभागेन भवतीति ज्ञात्वा, तथाविधशब्दविभागावधारणम् । शब्दविभागसन्देहाभावेऽपि वाक्यार्थविशेषोपयोगिशब्दार्थविशेषावधारणम् । तद्यथा श्वेतो धावतीत्यत्रार्थप्रकरणादिना गौरो निर्णेनेक्ति इत्येवं वाक्यार्थपरत्वावधारणे श्वेत इत्येकपदत्वम्, धावतेश्च निर्णेजनार्थतावधार्यते । अस्माद्देशाच्छीघ्रं गच्छतीत्येतद्वाक्यार्थपरत्वेऽश्वा इति पदद्वित्वं गत्यर्थत्वं च धावतेर्निश्चीयते । एवं यथा येन प्रकारेण जातिवाच्यत्वनिरूपणरूपेण, व्यक्तिवाच्यत्वनिरूपणरूपेण वा पदार्थानां वाक्यार्थप्रत्ययार्थता भवति, तथा पदार्थानां जात्याख्यस्य व्यक्त्याख्यस्य वा रूपस्य निरूपणं कार्यं न शक्त्यनुरोधेन कार्यावसेयत्वेन तस्यास्तदानुगुण्येन कल्प्यत्वादिति भावः ।

प्रयोगचोदनाभावव्याख्यानार्थमालम्भनेति भाष्यं व्याचष्टे—आकृतिरिति । ननु देवतोद्देशपूर्वकत्यागसङ्कल्पमात्रत्वाद्यागस्याकृतावप्युपपत्तिरित्याशङ्क्य—नेत्युक्तम् । निष्क्रियत्वेनाकृतेर्यथेष्टविनियोज्यत्वलक्षणसत्तायोगात्स्वत्वनिवृत्तिरूपत्यागो न सम्भवतीत्याशयः । आदिशब्दोपात्तमवघाताद्ययोग्यत्वमुपपादयितुमाह—अमूर्ता हीति । अवघाताद्युत्तरकालं वा व्रीह्यादेस्त्याज्यत्वादाकृतेश्चावघाताद्ययोग्यत्वात् त्यागानुपपत्त्युपपादनार्थोऽयं ग्रन्थः ।

श्लोकद्वयं व्याचष्टे—व्रीहीनिति । यावन्तोऽवघातादयः संस्कारा विनाशिमूर्त्तिमद्द्रव्यविषयत्वादाकृतौ न युज्यन्ते, ये चावेक्षणादयो विनाशिमूर्त्तिमद्द्रव्यविषयत्वाभावेऽपि यागापूर्वाख्यप्रयोजनसिद्ध्यर्थत्वादाकृतेश्च यागसाधनत्वाभावान्न तत्र युज्यन्ते । तेषां सर्वेषां या प्रयोगचोदना, तस्या आकृतावभावाद्, व्यक्तौ च भावाद्विधिविषयत्वयोग्यो यो व्यक्त्याख्यः पदार्थस्तत्कल्पनमवश्याङ्गीकर्त्तव्यमित्यन्वयः । कथं व्यक्तेर्विधिविषयत्वयोग्यतेत्यपेक्षिते—वाक्यार्थेत्युक्तम् । ननु विधिविषयत्वायोग्यत्वेऽप्याकृतेः सम्बन्धग्रहणवशाद्वाच्यत्वं भविष्यतीत्याशङ्क्य—कार्येत्युक्तम् । कार्योपयोगिन्येवार्थे सम्बन्धग्रहणसम्भवः नेतरत्रेत्याशयः । कथमित्यपेक्षायाम्—विध्यधीनत्वाच्चेत्युक्तम् । शब्दश्रवणानन्तरभाविन्या हि प्रयोज्यवृद्धप्रवृत्त्या तद्विषयज्ञानमनुमाय, तत्कारणत्वं शब्दस्य कल्प्यमानं प्रवृत्तेर्विध्यधीनत्वात्तद्विषयज्ञानकारणत्वमेव कल्पयितुं युक्तमिति भावः । एतच्च पूर्वोक्तमेव विवरीतुं भाष्यव्याख्यावसरेऽभिहितमिति न पौनरुक्त्यम् ।

आकृतेर्निषेधविषयत्वासम्भवमुपपादयति तथेति । उपसंहरति—तस्मादिति । यद्यप्यन्वयव्यतिरेकनिष्कृष्टशक्तिवशेनाकृतेस्तत्त्वतो वाच्यतावधारयितुं शक्या, तथापि कार्यानौपयिकत्वेनास्याः पदार्थकल्पनात्तत्त्वज्ञानमात्राददृष्टसिद्ध्यर्थं स्यात्प्रयोगचोदनाविरोधित्वात्त्वसावयुक्तेत्यर्थः । अर्थैकत्वमिति सूत्रावयवावतारणार्थं यत्रेत्याशङ्काभाष्यं व्याचष्टे—स्यादिति । एतदाशङ्कानिराकरणार्थत्वेन सूत्रावयवव्याख्यानार्थमुक्तमिति भाष्यं व्याचष्टे—तदिति । केन न्यायेनेत्यपेक्षायामन्यायश्चानेकशब्दत्वमितिसूत्रं भाष्यकृताऽन्यायश्चानेकार्थत्वमित्यूहित्वा पठितमिति व्याचक्षाणः सूत्रोक्तं न्यायत्रयमाह—अनवस्थितेति । यववराहाधिकरणोक्तन्यायपरामर्शार्थं वेदं भाष्यमितिव्याख्यानान्तरार्थं तत्र न्यायमाह —सम्बन्धानां चेति । यथैव सदृशानां प्रियङ्गुदीर्घशूकादीनामेकाभिधानेनैवेतरप्रतीतिसिद्धेर्यवादिशब्दानामर्थैक्यं स्थितम् । तथैव सम्बन्धानामप्येकाभिधानेनैवेतरत्र प्रतीतिसिद्धेरन्याय्यानेकार्थतेत्यर्थः । कथमित्याशङ्काभाष्यं व्याचष्टे— कथं तर्हीति । सादृश्यवत्सम्बन्धादप्येकाभिधानेनेतरप्रतीतिसिद्धावुक्तायामपि किमिह सादृश्यादेकाभिधानेनेतरप्रतीतिः, सम्बन्धाद्वेति विशेषजिज्ञासयोरन्वयः प्रश्नपूर्वव्याख्याने तु समञ्जस एव । व्यक्तिपदार्थकस्येत्यादिभाष्यमेतत्प्रश्नासम्बन्धत्वादुपेक्ष्य स्वयमविभागादिति सूत्रावयवमेतत्प्रश्नापाकरणार्थत्वेनाऽवतारयति—अत आहेति । इह च प्रश्नोत्तर एव सम्बन्धाद्भाष्यकृतः शून्यहृदयाभिधानापत्तेरेतदाशङ्कापरिहारासामर्थ्याच्च शुद्धव्यक्त्यभिधानपक्षत्यागादाकृतिविशिष्टव्यक्त्यभिधानपक्षपरिग्रहार्थत्वेनोत्तरभाष्यव्याख्याने प्रतिज्ञासंन्यासाख्यनिग्रहस्थानापत्तेः, विभागादिति च सूत्रावयवेनैव सुपरिहरत्वेनासामर्थ्यायोगात्सूत्रावयवव्याख्योपेक्षाकारणाभावाच्चैतत्सूत्रावयवव्याख्यानार्थं व्यक्तिसम्बन्धादित्युत्तरभाष्यम्, 'कथं व्यक्त्यन्तरेण प्रयोग' इति चाशङ्कान्तरभाष्यं भाष्यकृतोक्तमपि लेखकैः प्रमादान्न लिखितम् । लिखितमपि प्रलीनमिति प्रतिभाति ।

अवतरितं सूत्रावयवं व्याचष्टे—यतस्त्विति । शङ्कानिराकरणार्थस्तुशब्दः । एतच्च यत्र हि शुक्ल इति वा कृष्ण इति वा गुणः प्रतीतो भवति, भवति खल्वसावलङ्गुणवति

प्रत्ययमाधातुमिति तद्भूताधिकरणभाष्येण तुल्यन्यायत्वादुक्तं भवतीत्याह --तदुक्तमिति। नन्वालम्भादिचोदनासु व्यक्तेर्वाच्यत्वं श्येनचितादिचोदनासु त्वाकृतेरेव क्रियार्थंत्वाल्लक्षितायाश्चाशाब्दत्वेन धूमगम्याग्निवच्छाब्दक्रियान्वयायोगात्तस्या एव वाच्यताङ्गीकार्येत्याशङ्क्याह—यस्य त्विति। शङ्कानिराकरणार्थंस्तुशब्दः। गौणलाक्षणिकत्वयोः शब्दस्य शक्त्यभावेऽपि तात्पर्यसद्भावाच्छ्वशुराल्लज्जते स्नुषेत्यादौ च पुत्रविशिष्टभार्यादिवाचिनः स्नुषादिशब्दस्य विशेषणभूतपुत्राद्यनभिधाने विशेष्यभूतभार्याभिधानाशक्तेः स्नुषादिशब्दाभिहितस्यापि पुत्रादेर्लज्जादिक्रियान्वयादर्शनेन तात्पर्यवृत्तेरेव पदार्थान्वयकारणत्वावसायाल्लाक्षणिकाऽप्याकृतिः क्रियात्वं प्रतिपत्तुं शक्तेत्याशयः। तस्य पदस्य तत्रस्थस्य तत्रैवार्थे वर्त्तमानस्येत्यर्थः।

नन्वेवं सति व्यक्तेरपि लाक्षणिक्याः क्रियान्वयोपपत्तेर्जातिवाचितैव कस्मान्नेष्टेत्याशङ्क्याह—इत्यपि चेति। इति करणोऽयमेवशब्दार्थे। एवमपीत्युक्तं भवति। यद्यप्युभयथापि क्रियान्वयो युज्यते, तथाप्याकृतेर्व्यक्तिविशेषनिश्चायकत्वाभावाद्व्यक्तेश्चाकृतिविशेषनिश्चायकत्वसद्भावादाकृतेरेव लाक्षणिकत्वं युक्तम्, न व्यक्तेरित्यर्थः। उपसंहरति—तस्माविति। ननु विकल्पादिपक्षान्तरसम्भवात्राम्नायमुसंहारो युक्त इत्याशङ्क्याह—न चेति॥ ३०॥

भा० प्र०—साधु शब्द के प्रयोग के लिए सूत्र का निर्देश किया गया है, अर्थात् साधु शब्द का प्रयोग ही उचित है और साधुता के ज्ञान के लिए एक मात्र आधार व्याकरण शास्त्र है, व्याकरण के द्वारा ही शब्दों का साधुत्वानुशासन किया जाता है। अब विचारणीय है कि वाचक शब्द का वाच्य क्या है? कारण, शब्द के वाच्य के ज्ञान के विना पद की साधुता या असाधुता का निर्णय नहीं हो सकता है, इसलिए आचार्य कुमारिलभट्ट ने स्पष्ट शब्दों से निर्दिष्ट किया है—"न हि वाच्यमविज्ञाय साधुत्वमवधार्यते" यह भी सत्य है कि शब्द के वाच्य के विषय में आचार्यों का एकमत नहीं है। वैयाकरण ने व्यक्ति को शब्द वाच्य माना है, मीमांसक एवं वेदान्तियों ने स्वीकार किया है कि जाति ही शब्द का वाच्य है और नैयायिकों ने जातिविशिष्ट व्यक्ति को वाच्य माना है। इस प्रकार मतभेद रहने से प्रसङ्गक्रम में यह प्रश्न स्वाभाविक है कि वैदिक शब्द का वाच्य क्या है? इस विषय की विवेचना से पूर्व यह भी अवगत करना होगा कि वैदिक शब्द एवं उसका अर्थ भिन्न है या अभिन्न है? क्योंकि, वैदिक शब्द और उसका अर्थ लौकिक शब्द और अर्थ से भिन्न है तब वाच्य-वाचकता के निरूपण अधिकरण की योजना नहीं हो सकती है, कारण, वैदिक शब्दों का अर्थ अपूर्व है अर्थात् अन्य प्रमाणों से जानने के योग्य नहीं है, तब वैदिक शब्द का वाच्य जाति है अथवा वैदिक शब्दों का अभिधेय व्यक्ति है—इसके निर्णय का कोई साधन नहीं है, यदि लौकिक और वैदिक शब्दों का अर्थ अभिन्न है, तभी इस अधिकरण की योजना सम्भव हो सकती है। क्योंकि

वृद्धों के व्यवहार से शब्दार्थ सम्बन्ध जानकर जाति या व्यक्ति की वाच्यता का निश्चय किया जा सकता है। लौकिक और वैदिक शब्द भिन्न हैं या अभिन्न हैं—इस संशय में पूर्वपक्षी का कहना है कि अभिन्न नहीं हो सकते हैं, क्योंकि लौकिक शब्दों का रूप भिन्न है और वैदिक शब्दों का रूप भिन्न है, जैसे, लोक में देव शब्द का रूप देवैः, ब्राह्मण शब्द का रूप ब्राह्मणाः, आत्मन् शब्द का रूप आत्मना होता है, किन्तु वेद में देवेभिः, ब्राह्मणासः, त्मना आदि रूप होता है। इसलिए लौकिक एवं वैदिक शब्दों का रूप भिन्न होने से वे दोनों अभिन्न नहीं हो सकते हैं। इसी प्रकार अर्थ में भी भेद है। जैसे वेद में कहा गया है—'उत्ताना वै देवगवा वहन्ति' अर्थात् देवलोक की गौएँ उत्तानवाही अर्थात् चित्त होकर चलती हैं। "हिरण्यपर्णो वै देव वनस्पतिः" अर्थात् देवलोक के वृक्ष हिरण्मय पत्र होते हैं। इसी प्रकार "एतद् वै दैव्यं मधु यद् घृतम्" यह घृत देवों का मधु है। इस प्रकार घृत को मधु कहा जाता है। पूर्वोक्त उद्धरणों से लौकिक पद और पदार्थ से वैदिक पद और पदार्थ की भिन्नता ही लक्षित होती है।

इस पूर्वपक्ष के समाधान में सिद्धान्ती का कथन है कि लौकिक और वैदिक शब्द और अर्थ की एकता अर्थात् अभिन्नता ही है। इसीलिए भाष्यकार ने कहा है—"य एव लौकिकाः शब्दास्त एव वैदिकास्त एव एषामर्थाः" जो लौकिक शब्द है, वही वैदिक शब्द है और जो इनका लोकसिद्ध अर्थ है वही वैदिक अर्थ है। क्योंकि, 'प्रयोग-चोदना-भावात्' इसीलिए प्रयोग चोदना अर्थात् कर्मविधि सम्भव होती है या वेदवाक्य का उच्चारण सफल होता है। यदि वैदिक शब्दार्थ भिन्न होता तब उनका सङ्केतग्रह अर्थात् सम्बन्ध ज्ञान नहीं होने से वेद की कर्म विधि व्यर्थ होती और अर्थ के ज्ञान के लिए ही शब्द का उच्चारण किया जाता है, किन्तु वैदिक शब्द एवं अर्थ भिन्न होने पर वह अपूर्व अर्थात् प्रमाणों की सहायता से अज्ञेय होने से उसका अर्थबोध नहीं होता और अर्थ का बोध न होने पर वे अप्रमाण रहते, अतः लोक और वेद का शब्द और अर्थ अभिन्न है। इसीलिए कहा गया है—

'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः'

अर्थात् वृद्धों के व्यवहार से ही शब्द का सामर्थ्य अवगत होता है। लौकिक और वैदिक शब्दों की अभिन्नता के लिए ही कहा गया है 'अविभागात्' यतः प्रत्यभिज्ञा रूप प्रत्यय का विभाग अर्थात् भेद नहीं है।

आशय यह है कि लौकिक और वैदिक शब्द की अभिन्नता दृढ़तर प्रत्यभिज्ञा से सिद्ध है तब उसको परस्पर भिन्न कैसे कहा जा सकता है? अबाधित प्रत्यभिज्ञा रहने पर जैसे वर्णों की अभिन्नता सिद्ध होती है वैसे ही लौकिक और वैदिक शब्दों में भी अबाधित प्रत्यभिज्ञा होने से उनमें भेद नहीं रह सकता है। अतः लौकिक गोशब्द से वैदिक गवादि शब्द भिन्न नहीं है। वेद में जो गउ को उत्तानपादी कहा गया है—वह भी विरुद्ध नहीं है, क्योंकि, उन स्थलों में गोत्व आदि विधेय नहीं है, अपितु लोकप्रसिद्ध

गोत्व आदि का उत्तानवाहित्व ही विहित है। मर्त्यलोक में गउ नाम से जो प्राणी प्रसिद्ध है, वह देवलोक में उत्तानवादी ही है। इसी प्रकार लोक प्रसिद्ध वृक्ष के विषय में स्वर्णमय पत्रत्व विहित है। इस कथन का यह कारण है कि मेरु पर्वत पर यदि वनस्पति हिरण्मयपर्णत्व हो सकता है, तो इसको अर्थान्तरवाची मानने की क्या आवश्यकता है? हम लोगों के लिए जो घृत है वह रस, बल के परिणाम से देवों के लिए उसको मधु मानने में कोई आपत्ति नहीं है। किसी गुणवाद से पृथिवी गोलोक त्रैलोक्य भ्रमणादि से, पुराण के कथन से दर्शन की तरह तथा हम लोग दिव् को ऊपर देखते हैं, इसी प्रकार दिव्लोक के ऊपर होने से उत्तान वहन दृष्टि विरुद्ध नहीं है। सभी के लिए प्रसिद्ध न होने पर जिसके लिए असिद्ध है, उनके लिए असिद्ध होने से अन्यत्व की आशङ्का नहीं है।

एवं हिरण्यपत्रत्वं मेरौ यदि वनस्पतेः।
देवलोके ततः शब्दः किमर्थान्तरवाच्ययम्॥
यच्चैतद्घृतमस्माकं देवानां मध्विदं यदि।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत्॥
न च सर्वाप्रसिद्धत्वे गम्यैकोऽपि कश्चन।
तेनासिद्धैरसिद्धानां नास्त्यन्यत्वनिरूपणम्॥

(त० वा० ९३८–९४०)

वृद्धव्यवहारसिद्ध घृत की आनन्दजनकता के सादृश्य से घृत में मधुत्व आरोपित है। देवेभिः, ब्राह्मणासः, आदि रूप के भेद से शब्द का भेद स्थिर करना भी ठीक नहीं है, क्योंकि एक ही व्यक्ति को विभिन्न काल में विभिन्न परिधान के आधार पर भी भेद मानना पड़ेगा, किन्तु उस स्थल में रूप का भेद होने पर भी व्यक्ति स्वरूप का भेद नहीं होता है। क्योंकि स एवायम् (यह वही है) यह अभेद प्रत्यभिज्ञा रहती है। इसी प्रकार वैदिक शब्दों में भी कहीं किसी प्रकार का भेद रहने पर भी अभेद प्रत्यभिज्ञा होने से वे भिन्न नहीं है—यह मानना पड़ेगा।

शब्दैकत्वम् की जगह पर अर्थैकत्वम्—इस कथन का आशय व्यक्त करते हुए कहा कहा है कि अर्थैकत्व कहने से ही शब्दैकत्व अर्थतः सिद्ध हो जाता है, इसलिए लाघवपक्ष का अवलम्बन कर सूत्रकार ने ऐसा प्रयोग किया है। वार्तिककार ने 'अविभागात्' इस हेतु का पांच हेतु विकल्प प्रदर्शित किया है—(१) प्रत्यभिज्ञा रूप प्रत्यय के अविभाग के कारण। (२) ज्ञायमान वैदिक और लौकिक दोनों प्रमेयों के रूपगत अविभाग के कारण। (३) वाक्य और वाक्य राशि के हेतुस्वरूप पद और वर्ण के विषयत्व व्यवहार के अविभाग के कारण। (४) उच्चारण करने वाले के स्थान एवं इन्द्रिय के प्रयत्न के अविभाग के कारण। (५) बहुतर प्रमेय के अनुगमनविषयक अविभाग के कारण, वैदिक और लौकिक शब्द और उसके अर्थ की अभिन्नता से।

लोकव्यवहार एवं वेदव्यवहार में शब्द और अर्थ अभिन्न हैं—यह अबाधित होने पर जाति में शब्द की शक्ति है या व्यक्ति में शब्द की शक्ति है—यह विषय विचारणीय होता है। पूर्वपक्षियों का कहना है कि व्यक्ति को ही वाच्य मानना उचित है, अन्यथा सभी वेदविधियाँ निरर्थक हो जायेगी—इसी को व्यक्त करते हुए कहा है—"प्रयोग-चोदनाभावात्"। जाति को शब्द का वाच्य मानने पर क्रिया एवं गुण के साथ उसका सम्बन्ध सम्भव नहीं है। क्योंकि गाय चर रही है, गौश्चरति", गौ सफेद है 'गौः शुक्लः' इत्यादि व्यवहार उत्पन्न नहीं होगा। जाति अतीत, वर्तमान एवं भविष्य सभी गो व्यक्तियों के साथ सम्बद्ध होने से उसमें चरणक्रिया सम्भव नहीं है। जाति अमूर्त होने से वह अनाश्रय है, अतः शुक्लत्व आदि गुणों का आश्रय नहीं हो सकती है न और न उससे वह उपरक्त हो सकती है। पूर्वोक्त कारणों से 'व्रीहीन् प्रोक्षति' 'व्रीहि का प्रोक्षण करें', कपिञ्जलान् आलभेत' कपिञ्जल अर्थात् तित्तिर जातीय पक्षिविशेष का यज्ञविशेष में वध करें आदि विधियाँ अनर्थक हो जायेंगी, क्योंकि जाति का बध तो सम्भव नहीं है, अतः जाति शब्द का अभिधेय नहीं हो सकती है। इसलिए, व्यक्ति को शब्द का अभिधेय मानना होगा, क्योंकि व्यक्ति में पूर्वोक्त क्रिया पूर्वोक्त गुण का होना सम्भव है। कोई गाय घूम रही है, कोई गाय बैठी है, कोई काली है, कोई सफेद है इत्यादि व्यक्ति के अभिधेय होने में ही सम्भव है।

यदि यह कहा जाय कि जहाँ जाति के अभिधेय मानने में दोष है वहाँ व्यक्ति को ही वाच्य माना जायेगा, और जहाँ जाति को वाच्य मानने में किसी प्रकार दोष नहीं है, वहाँ जाति को वाच्य माना जायेगा। ऐसा मानने पर शब्द को अनेकार्थक मानना पड़ेगा। एक शब्द की अनेकार्थता उचित नहीं है। इसी आशय से सूत्रकार ने "अर्थै-कत्वम्" शब्द का एक ही अर्थ होना उचित है—यह कहा है।

इस प्रसङ्ग में यह जिज्ञास्य है कि जाति की प्रतीति कैसे होगी? इसके समाधान में "अविभागात्" यह कहा गया है। जाति व्यक्ति से अत्यन्त भिन्न नहीं है। इसलिए, दोनों में भेदाभेद सम्बन्ध होने से व्यक्ति की प्रतीति के समय जाति की भी प्रतीति होगी। नैयायिकों का कथन है कि व्यक्ति में शक्ति मानने पर अनन्त शक्ति की कल्पना माननी पड़ेगी, अतः, जाति विशिष्ट व्यक्ति में शक्ति है।

"प्रयोगचोदनाभावात्" = प्रयोग चोदना का अर्थात् प्रोक्षण आदि उपदिष्ट कर्मों के आभाव से अर्थात् इन विधियों के असम्भव होने से व्यक्ति ही शब्द का वाच्य है। "अर्थैकत्वम्" = केवल व्यक्ति को ही वाच्य मानने पर सर्वत्र अभिधेय = वाच्य की एकता रहने से "अविभागात्"=व्यक्ति का जाति से भेद न होने से व्यक्ति की प्रतीति होने पर जाति की भी प्रतीति होगी। व्यक्ति ही शब्द का वाच्य हो सकती है। जाति शब्द का वाच्य नहीं हो सकती है, क्योंकि, जाति को वाच्य मानने पर विधि-विहित प्रोक्षण आदि कर्म असम्भव हो जायेंगे। व्यक्ति को वाच्य मानने पर सभी स्थलों में अर्थ की

एकता भी रहेगी, जाति व्यक्ति से अभिन्न है, अतः व्यक्ति की प्रतीति होने पर जाति की भी प्रतीति अनायास ही होगी अथवा "प्रयोगचोदनाभावात्" = विधिवाक्य का वाच्य की चोदना अर्थात् उच्चारण जन्य अर्थ प्रतीति का अभाव अर्थात् अप्रामाण्य होने से "अर्थैकत्वम्" = लौकिक एवं वैदिक अर्थ की एकता होने से अर्थात् अभिन्नता ही है, "अविभागात्" = विभाग अर्थात् वैलक्षण्य नहीं है। लौकिक और वैदिक शब्द एवं उनका अर्थ अभिन्न है, क्योंकि, लौकिक एवं वैदिक शब्द की अभिन्नता है, यदि अभिन्नता न मानी जाय तो विधि वाक्य का या वेदवाक्य के उच्चारण का अप्रामाण्य मानना होगा ॥ ३० ॥

***अद्रव्यशब्दत्वात् ॥ ३१ ॥**

**शा० भा०—द्रव्याश्रयस्य शब्दो द्रव्यशब्दः, न तत्र द्रव्याश्रयवचनः शब्दो भवेत्, यद्याकृतिः शब्दार्थो भवेत्। षड[1] देया द्वादश देयाश्चतुर्विंशतिर्देया इति। न ह्याकृतिः षडादिभिः संख्याभिर्युज्यते । तस्मान्नाऽऽकृतिवचनः ॥ ३१ ॥**

**अन्यदर्शनाच्च ॥ ३२ ॥**

**शा० भा०—'यदि पशुरुपाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत' इति। यद्याकृतिवचनः शब्दो भवेत्, अन्यस्याऽऽलम्भो नोपपद्येत। अन्यस्यापि पशुद्रव्यस्य सैवाऽऽकृतिः। तस्माद् व्यक्तिवचन[3] इति ॥ ३२ ॥ पूर्वपक्षः।**

भा० वि०—व्यक्तेश्शब्दार्थत्वे हेत्वन्तरमाह—**अद्रव्यशब्दत्वादिति**। सूत्रं व्याचष्टे—द्रव्याश्रयस्येति, अद्रव्यशब्द इति। अद्रव्यः शब्द इतिच्छेदः, अनेन सौत्रं पदमनूदितम् तच्च गुणशब्द इति व्याख्यातं द्रव्याश्रयस्य शब्द इति, न च जातेरपि द्रव्याश्रयत्वात् कथं द्रव्याश्रयस्य शब्दो गुणशब्द एवेति वाच्यम्; द्रव्यत्वे नञा पर्युदस्ते तदन्यापेक्षायां द्रव्यमात्राश्रयत्वात् नेति; गुण एव द्रव्याश्रयस्य शब्द इत्याशयः, एवं पदार्थमुक्त्वा नञध्याहारेण वाक्यार्थमाह—**न तत्रेति**। गवादिशब्दानामाकृत्यर्थत्वे तत्समानाधिकरणषडादिसङ्ख्यागुणवचनशब्दो न भवेदित्यर्थः, कुत इत्यत आह—**न हीति**। द्रव्यस्यैव गुणवत्त्वनियमादिति भावः। उक्तहेतुफलमाह—**तस्मादिति**। ततश्चाकृतिविशिष्टा वा; केवला वा व्यक्तिश्शब्दार्थ इति भावः ॥ ३१ ॥

भा० वि०—इतश्च व्यक्तिश्शब्दार्थ इत्याह—**अन्यदर्शनाच्चेति**। सूत्रं व्याख्यातुं विषयमाह—**यदीति**। अन्यस्य प्रतिनिधेः विधानदर्शनाद्व्यक्तिश्शब्दार्थ

१ ब. षट्देया। २ ब. संख्यादिभि। ३ ब. सेवतस्मा।

इति सूत्रार्थं व्यतिरेकमुखेन दर्शयति—**यद्याकृतिरित्यादिना**। अन्यत्वासंभवमुपलक्षणं तद्वर्णत्वादेरसंभवस्यापि यस्मादाकृत्यर्थत्वे प्रतिनिध्यनुष्ठानासंभवः, तस्माद् व्यक्तिवचन इत्याह—**तस्मादिति**। इति शब्दः पूर्वपक्षसमाप्त्यर्थः॥ ३२॥

त० वा०—गोशब्दादीनामाकृतिवचनत्वे गौः शुक्लः, 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति' इति 'षड् गावो देयाः' 'एकां गां दक्षिणां दद्यात्, इत्येवमादिषु प्रयोगेषु सर्वेषां जातिगुणमात्रवचनत्वात्सामानाधिकरण्यं न प्राप्नोति।

गोत्वस्य न हि सम्बन्धः शुक्लत्वारुणिमादिभिः।
येन षष्ठ्यपि तावत्स्यात्कुतस्त्वेकार्थवृत्तिता॥ ९९५
न हि गोत्वाकृतिः शुक्ला नारुणा नापि षड्गुणा।
व्यक्तिस्त्वेवंगुणा तस्माद्व्यक्तेरेवाभिधेयता॥ ९९६
मम हि व्यक्तिशब्दत्वात्सिध्यत्येकार्थवृत्तिता।
तव त्वद्रव्यशब्दत्वाद्भवेद्भेदो गवाश्ववत्॥ ९९७

जातिगुणविशिष्टव्यक्तिवचनत्वेन, शुद्धव्यक्तिवचनत्वेन वा प्रत्यक्षे भवति सामानाधिकरण्यम्, तच्च तत्र द्रव्यम्। एवंविधमपि समानद्रव्यशब्दत्वं स्वपक्षे न स्यादिति, नञा तदभावप्रसङ्गं दर्शयति।

यत्तु भाष्यकारो विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगुणलक्षणया नञश्चासमर्थसमासमङ्गीकृत्य **न द्रव्याश्रयवचनः शब्दो भवेत्** आकृतिवादिन इत्याह। तदतिक्लिष्टम्, व्यधिकरणनिर्दिष्टगुणप्रयोगार्हं चेत्युपेक्षितव्यम्। तत्रापि चैवमक्षरार्थमात्रसम्भवयोजना। द्रव्याश्रयस्य गुणस्य यः शब्दोऽद्रव्यशब्दः। स आकृतेर्निर्गुणत्वादेकवाक्यसम्बन्धं गोत्वं शुक्लमित्यादिवन्न प्रतिपद्यते। सामानाधिकरण्यचोद्यं तु स्वपक्षेऽप्यविशेषात्तदानीमप्यनुपपन्नमेवेति पूर्वैव व्याख्या कर्तव्या॥ ३१–३२॥

न्या० सु०—अद्रव्यशब्दत्वादितिसूत्रं स्वयं तावद्व्याचष्टे—**अपि चेति**। पूर्वस्मिन्नेव पक्षेऽयमपि हेतुरित्यपि च शब्दस्यार्थः। जातिपक्षे द्रव्यशब्दत्वाभावापत्तेर्व्यक्तेरेव वाच्यतेत्युक्ते, तदापत्तौ को दोष इत्यपेक्षायाम्—**सामानाधिकरण्यं हीत्युक्तम्**। ततश्चेत्यर्थे हिशब्दः। श्लोकं व्याचष्टे—**गोशब्दादीनामिति**। एतदेवोपपादयति—**गोत्वस्येति**। ननु गोत्वस्य शुक्लादिगुणैः सहैकार्थसमवायलक्षणः सम्बन्धोऽस्तीत्याशङ्क्याह—**न हीति**। व्यक्तिद्वारस्यैकार्थसमवायस्य व्यक्त्यनभिधाने रूपरसादिशब्दवत्सामानाधिकरण्यानापादकत्वात् साक्षात्सम्बन्धेन भाव्यं चासावस्तीति भावः। ननु व्यक्तिपक्षे गोशब्देन जाति-

विशिष्टायाः, तदुपलक्षिताया वा व्यक्तेरभिधानाच्छुक्लशब्देन च गुणविशिष्टायास्तदुपलक्षिताया वाऽभिधानात्तयोश्चैकत्वे प्रमाणाभावात्कथं सामानाधिकरण्यमित्याशङ्क्याह— मम हीति । व्यक्तिपक्षे सर्वव्यक्त्याभिधानाद् गोशब्दस्य शुक्लायामपि गोव्यक्तौ वृत्तेः, शुक्लशब्दस्य च गोजातीयायामपि शुक्लव्यक्तौ वृत्तेरेकार्थासिद्धिः । जातिपक्षे तु व्यक्तेः शब्देनानुक्तत्वाल्लक्ष्यमाणायाश्चैकत्वे प्रमाणाभावाद् गवाश्वशब्दयोरिव भिन्नार्थतेति भावः । (मम हि व्यक्तीति व्यक्तिशब्दः । न तव त्वद्रव्येति द्रव्यशब्दः । उत्तरार्धे पूर्वार्धस्य विपर्ययेणाव्यक्तिशब्दत्वादिति वक्तव्ये द्रव्यशब्दव्यतिकरेण मिश्रणेन गुणशब्दस्य गुणवचनशब्दस्य शुक्लादिशब्दस्य गुणवचनशब्दस्य गुणोपलक्षितद्रव्यवाचित्वमेव न तु गुणवाचित्वमिति व्यक्त्यभिधानपक्षे पूर्वपक्षमते सूचितमित्यन्वयः । व्यक्तिद्रव्यशब्दव्यतिकरेण इति सूचितमित्यन्वयः । मम हि व्यक्तीति व्यक्तिशब्दः न बलत्वद्रव्यशब्देति च द्रव्यशब्दः तयोः झटित्यन्वयव्यतिरेकयोरेकविषयत्वोपस्थित्यै व्यक्तिशब्दस्य, द्रव्यशब्दस्यैव वा उभयत्र प्रयोज्यत्वौचित्येऽपि तयोः व्यतिकरः भिन्नरूपयोः प्रयोगः । तेन गुणशब्दस्य गुणवचनसंज्ञकशब्दस्य गुणव्यक्तिवाचित्वशङ्काया व्यक्तिवाचित्वपक्षे प्रसक्ता सा[1]) गुणशब्दस्य गुणोपलक्षितद्रव्यवाचित्वं न तु गुणव्यक्तिवाचित्वं जातिपक्षोक्तदोषसाम्यादिति सूचितम् ।

श्लोकं व्याचष्टे—जातीति । ननु गोशब्देन कृष्णादिव्यक्तीनामप्यभिधानाच्छुक्लशब्देन चाश्वादिव्यक्तीनामप्यभिधानात्कथं सामानाधिकरण्यमित्याशङ्क्या - तच्चेत्युक्तम् । द्रव्यान्तराभिधानेऽपि तस्यापि तावदभिधानात्सा (मानाधिकरण्यसिद्धिरित्यपिशब्दार्थे च शब्दः । नन्वाकृतिपक्षेऽपि तर्हि जातिगुणाभ्यां लक्षितस्य द्रव्यस्यैकत्वमपि सम्भवतीति पाक्षिकं सा[2]) मानाधिकरण्यं स्यादित्याशङ्क्य – एवंविधमपीत्युक्तम् । व्यक्तिपक्षे भिन्नव्यक्तिवाचित्वेऽप्येकव्यक्तिवाचित्वं नित्यमस्ति । जातिपक्षे तु भिन्नार्थत्वदसङ्कीर्णमप्येकद्रव्यशब्दत्वाभावप्रसङ्गादित्येवं साक्षात्सामानाधिकरण्याभावप्रसङ्गाभिधानपरत्वेन व्याख्यानान्तरमाह—इतीति । ननु द्रव्याश्रयस्येति भाष्येण द्रव्यशब्दस्य लक्षणया गुणपरत्वमुक्त्वा, न भवेदिति नञो भवतिनान्वयः कृतः । तत्किमित्यन्यथा भवता व्याख्यातमित्याशङ्क्याह—यत्त्विति । कथं द्रव्यशब्देन गुणलक्षणेत्यपेक्षायां—तत् द्रव्यमाश्रयोऽस्येत्युक्तम् । भेदाधिष्ठानत्वाच्चाश्रयाश्रयिभावस्य यत्र पदस्य युक्त इति व्यधिकरणत्वेन निर्दिष्टस्य गुणस्य प्रयोगः तदर्हत्वमप्यनेनैवोपपादितम् । अतिक्लिष्टत्वोपपादनार्थमप्रधानभूतगुणविपरीतार्थेन प्रधानभूतार्थेन द्रव्यशब्देन लक्षणा । नञश्च भवत्यर्थसापेक्षस्य द्रव्यो-

१. अयं पा० २ पु० ना० ।
२. अयं पा० २ पु० ना० ।

पसर्जनत्वेनासमर्थस्य द्रव्यशब्देन—समासाङ्गीकरणमुक्तम् । यद्यपि क्रिया न स्यादिति चेदर्थान्तरे विधानं द्रव्यमिति चेदित्यनुभाषणसूत्रगतो द्रव्यशब्दः षडादिशब्दस्य द्रव्यवाचित्वाभावादगत्या गुणलक्षणार्थो व्याख्यायते, तथापीह द्रव्यशब्देनैव गुणस्य वक्तुं शक्यत्वात्तल्लक्षणाश्रयणं युक्तमित्याशयः । किमेवं सत्ययुक्तमिदं भाष्यमित्याशङ्क्याह—तत्रापि चेति । नात्र द्रव्यशब्देन समस्तस्य नञो भवत्यन्वयो विवक्षितः । किं त्वकार-प्रश्लेषेण गुणशब्देनाद्रव्यशब्द एव सौत्रे व्याख्यानायोक्तः । जातिशब्दस्याप्यद्रव्यशब्दत्वो-पपत्तेः कथं गुणशब्दस्यैवाद्रव्यशब्दतेत्याशङ्कानिरकरणार्थं द्रव्यत्वेन न पर्युदस्ते तदन्या-पेक्षायां द्रव्यैकाश्रयत्वाद् गुण एव शीघ्रमुपतिष्ठते । जातिस्त्वनेकद्रव्यगुणकर्माश्रय-त्वान्न शीघ्रमुपतिष्ठत इत्यद्रव्यशब्देन गुणाभिधानाद् गुणशब्द एवाद्रव्यशब्द इति—द्रव्याश्रयस्येत्युक्तम् ।

नन्वेवं सति नकारान्तराभावान्न द्रव्याश्रयवचन इति भाष्यं कथमित्याशङ्क्याध्या-हारेण योजयितुम्—स आकृतेरित्युक्तम् । स्वरूपेण शब्दस्य निषेद्धुमशक्यत्वाद्यस्याकृतिः शब्दार्थ इति चानन्तरमभिधानादाकृतिवाचिशब्दसम्बन्धिनश्चेदित्यर्थलाभं मत्वा—एकवाक्यसम्बन्धमित्युक्तम् । नन्वेवं सत्यन्याय्यलक्षणासमर्थसमासदोषपरिहारादक्षरार्थ-मात्रस्य सम्भवेनैषा योजनेति किमित्युक्तमित्याशङ्क्याह—सामानाधिकरण्येति । षड् गावो देया इति समानाधिकरणनिर्दिष्टगुणशब्दोदाहरणाद् गोशब्दस्याकृतिवाचित्वे तत्सामानाधि-करण्यं षडादिशब्दानां न युज्येतेति पूर्वपक्षिणः सिद्धान्तबोधं प्रतीयते । तच्च भेदाधिष्ठा-नाश्रयाश्रयिभावोक्तेर्निष्कृष्टगुणवचनस्याद्रव्यशब्दत्वावसायात्तस्य च व्यक्तिपक्षेऽपि गुण-व्यक्तिपर्यवसायित्वेन द्रव्यव्यक्तिपरत्वाभावाविशेषात्तदानीमपि क्लेशेनाक्षरार्थयोजनाया-मप्यनुपपन्नमेवेत्यर्थः ।

का तर्हि सूत्रस्य गतिरित्याशङ्क्याह—इतीति । यास्माभिर्व्यक्तिद्रव्यशब्दव्यतिकरेण व्यक्तिपक्षे गुणोपलक्षितद्रव्यव्यक्तिवाचित्वं गुणशब्दानां सूचयित्वा जातिपक्षे द्रव्यशब्दत्वा-भावात्सामानाधिकरण्यं न सम्भवतीति व्याख्या कृता । सैव युक्ता न तु या भाष्यकृता गुणशब्दस्य व्यक्तिपक्षे गुणव्यक्तिवाचित्वमभिप्रेत्य कृता । तस्मिन्व्याख्याने सामानाधि-करण्याभावप्रसङ्गस्योभयवादिसाम्येनाचोद्यत्वापत्तिरित्यर्थं ॥ ३१-३२ ॥

भा० प्र०—जाति को अभिधेय मानने पर गुणवाचक शुक्ल एवं संख्यावाचक षट् आदि शब्दों का अन्वय नहीं होगा । क्योंकि, जाति, गुण आदि का आश्रय नहीं है । व्यक्ति ही गुण, लिङ्ग, संख्या आदि का आश्रय है । अतः "अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति" अर्थात् अरुणवर्ण, पीलीनेत्र एक वर्ष की गौ के द्वारा सोम का क्रयण करना चाहिए, इन स्थलों में अरुण आदि वर्ण, एका देया षड् देया द्वादश

देयाश्चतुर्विंशति देया एक गौ छ गाये दें (कात्या० श्रौ० सू० ४।१०।१२, भा० प्र० श्रौ० सू० ५।२०।१ ) इत्यादि स्थलों की संख्या का, पशुना यजेत इत्यादि स्थलों में पशुगत पुंस्त्व का अन्वय नहीं हो सकता है, अतः जाति वाच्य नहीं है।

"अद्रव्यशब्दत्वात्" = द्रव्यशब्द अर्थात् द्रव्याश्रित गुण आदि शब्दों का अन्वय न होने से जाति अभिधेय नहीं है ॥ ३१ ॥

भा० प्र०—जाति वाच्य नहीं हो सकता है, इस प्रसङ्ग में हेतु का प्रदर्शन करते हुए पूर्वपक्षी ने कहा है कि "यदि पशुरुपाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत" (कात्या० श्रौ० सू० २५।९।१) यदि मन्त्र उच्चारण के साथ कुशा से स्पर्श किया गया पशु भाग जाय तो उसी वर्ण के उसी अवस्था वाले अन्य पशु का आलम्भन यज्ञ में करें। इस वेदवाक्य में अन्य शब्द का स्पष्ट निर्देश मिलता है, जाति को वाच्य मानने पर जाति एक होने से अन्य पशु द्रव्य सम्भव नहीं है, अतः व्यक्ति शब्द का अभिधेय है,—यही युक्तिसङ्गत है।

"अन्यदर्शनात्" = अन्य शब्द का प्रयोग देखा गया है 'च' = और यह पूर्वपक्ष है ॥ ३२ ॥

## आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ सि०

शा० भा०—तुशब्दः पक्षं व्यावर्तयति। आकृतिः शब्दार्थः। कुतः? क्रियार्थत्वात्। श्येनचितं[1] चिन्वीत इति वचनमाकृतौ सम्भवति यद्याकृत्यर्थः श्येनशब्दः। व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं[2] शक्यत इति, अशक्यार्थवचनादनर्थकः। तस्मादाकृतिवचनः।

ननु श्येनव्यक्तिभिश्चयनमनुष्ठास्यते? न साधकतमः श्येनशब्दार्थः, ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते। अतश्चयनेन श्येनो निवर्तयितव्यः।[3] स आकृतिवचनत्वेऽवकल्प्यते।

ननूभयत्र[4] क्रियाया असम्भव एव व्यपदिश्यते। नाऽऽकृतिः शब्दार्थः। कुतः? क्रिया न सम्भवेदाकृतौ शब्दार्थे, व्रीहीन् प्रोक्षति इति। तथा न व्यक्तिः शब्दार्थः, क्रियैव न सम्भवेद् व्यक्तेः[5] शब्दार्थत्वे, श्येनचितं चिन्वीत इति।

---

१. तै० सं० ( -४-११)। २ ब. व्यक्तिरूपमादातुं।

३. अत्र च, इष्टकाभिश्चीयमानं श्येनसदृशं चयनेन सम्पादनेदित्येवं विध्यर्थो भाष्यकाराणामभिप्रेतः। ग तु यथाश्रुतः श्येनाकृतिव्यक्त्योश्चयनेनोत्पादयितुमशक्तेरिति।

४ ग. उभयत्र। ५ ब. व्यक्तौ शब्दार्थे।

यद्युच्येत 'व्रीहीन् प्रोक्षति' इति व्यक्तिलक्षणार्थाऽऽकृतिरिति, शक्यमन्यत्रापि श्येनचितं चिन्वीत इति वदितुमाकृतिलक्षणार्था व्यक्तिरिति।

किं पुनरत्र ज्यायः? आकृतिः शब्दार्थ इति। यदि व्यक्तिः शब्दार्थो[1] भवेद्, व्यक्त्यन्तरे न प्रयुज्येत। अथ व्यक्त्यन्तरे प्रयुज्यते, न तर्हि व्यक्तिः शब्दार्थः। सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते। नैष दोषः। सर्वसामान्यविशेषविनिर्मुक्त एव[2] प्रवर्तिष्यते। यदि व्यक्त्यन्तरे सर्वसामान्यविशेषवियुक्ते[3] प्रवर्तिष्यते, सामान्यमेव तर्हि तत्? नेत्युच्यते। यो ह्यर्थः सामान्यस्य, विशेषाणां चाऽऽश्रयः सा व्यक्तिः, व्यक्तिवचनश्च शब्दो न सामान्ये, न विशेषे वर्तते, तेषां त्वाश्रयमेवाभिदधाति[4]। तेन व्यक्त्यन्तरे वृत्तिरदोषः। न हि तत्सामान्यम्।

यदि व्यक्त्यन्तरेष्वपि भवति, सर्वसामान्यविशेषवियुक्तायामश्वव्यक्तौ गोशब्दः किमिति न वर्तते। आह—येष्वेव प्रयोगो दृष्टः तेषु वर्तिष्यते, न सर्वत्र। न चाश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः। तस्मात्तत्र[5] न वर्तिष्यते। यदि यत्र प्रयोगो दृष्टः तत्र वृत्तिः, अद्य जातायां गवि प्रथमप्रयोगो न प्राप्नोति, तत्रादृष्टत्वात्। सामान्यप्रत्ययश्च न प्राप्नोति, इयमपि गौरिति, इयमपि गौरिति। इयं वा गौरिति, इयं वा[6] गौरिति स्यात्। भवति तु सामान्यप्रत्ययोऽदृष्टपूर्वायामपि गोव्यक्तौ। तस्मान्न प्रयोगापेक्षो गोशब्दो व्यक्तिवचन इति शक्यत आश्रयितुम्।

एवं तर्हि[7] शक्तेः स्वभाव एषः, यत् कस्यांचिद् व्यक्तौ वर्तते, कस्यांचिन्न। यथा—अग्निरुष्णः, उदकं शीतम्, एवमेतद् भविष्यतीति। नैवं सिध्यति। न ह्येतद् गम्यते कस्यांचिद्[8] व्यक्तौ वर्तते, कस्यांचिन्नेति।

सत्यमेतत्। गोत्वं लक्षणं भविष्यतीति। यत्र गोत्वम्, तस्यां व्यक्ताविति। एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत। यदि च विशिष्टा, पूर्वतरं विशेषणमवगम्येत[9]। न ह्यप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्तीति।

---

१ ब. शब्दार्थो व्यक्त्यन्तरे। २ ब. एव वर्तिष्यते।

३ ब. विशेषविनिर्मुक्त एव वर्तिष्यते। यदि सामान्यविशेषवियुक्तं (इत्यधिकम्)।

४ ब. मेवाभिवदति। ५ ब. तस्मान्न तत्र।

६ ब. इयंवेवि स्यात्। ७ ब. तर्हि स्वभाव एव यत्तु।

८ ब. कस्यां व्यक्तावर्तते कस्यां नेति। यत्र गोत्वम्।

९ ब. विशेषोवगम्यते। न ह्यप्रतीतविशेषे।

अस्तु विशेषणत्वेनाऽऽकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिम्। न ह्याकृति-पदार्थकस्य[1] व्यक्तिर्न पदार्थः, व्यक्तिपदार्थकस्य[2] वा नाऽऽकृतिः। उभयमुभयस्य[3] पदार्थः। कस्यचित् प्राधान्येन विवक्षितं भवति, तेनात्राऽऽकृतिर्गुणभावेन, व्यक्तिः प्रधानभावेन विवक्ष्यत[4] इति।

नैतदेवम्। उभयोरुच्यमानयोर्गुणप्रधानभावः स्यात्। यदि चात्राऽऽकृतिः प्रतीयते शब्देन, तदा[5] व्यक्तिरपि पदार्थ इति[6] न शक्यते वदितुम्। कुतः? आकृतिर्हि व्यक्त्या नित्यसम्बद्धा, सम्बन्धिन्यां च तस्यामवगतायां सम्बन्ध्यन्तर-मवगम्यते। तदेतदात्मप्रत्यक्षम्[7], यच्छब्द उच्चरिते[8] व्यक्तिः प्रतीयत इति। किं शब्दात्, उताऽऽकृतेरिति विभागो न प्रत्यक्षः। सोऽन्वयव्यतिरेकाभ्यामव-गम्यते। अन्तरेणापि शब्दं य आकृतिमवबुध्येत, अवबुध्येतैवासौ व्यक्तिम्। यस्तूच्चरितेऽपि[9] शब्दे मानसादपचारात् कदाचिदाकृतिं[10] नोपलभेत, न जातु-चिदसाविमां[11] व्यक्तिमवगच्छेत। ननु व्यक्तिविशिष्टायामाकृतौ वर्तते। व्यक्ति-विशिष्टायां चेद् वर्तेत, व्यक्त्यन्तरविशिष्टा न प्रतीयेत। तस्माच्छब्द आकृति-प्रत्ययस्य निमित्तम्। आकृतिप्रत्ययो व्यक्तिप्रत्ययस्येति।

ननु गुणभूता प्रतीयत इत्युक्तम्। न गुणाभावोऽस्मत्पक्षस्य[12] बाधकः। सर्वथा तावत् प्रतीयते। अर्थाद् गुणभावः, प्रधानभावो वा। स्वार्थं चेदुच्चार्यते, प्रधान-भूता। अथ न स्वार्थम्, परार्थमेव, ततो गुणभूता। न तत्र शब्दव्यापारोऽस्ति।

ननु च दण्डीति, न तावद् दण्डिशब्देन दण्डोऽभिधीयते, अथ च दण्ड-विशिष्टोऽवगम्यते। एवमिहापि न तावदाकृतिरभिधीयते, अथ चाऽऽकृतिविशिष्टा व्यक्तिर्गम्येतेति। नैतत्साधु उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते, न त्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति। अस्ति तु दण्डिशब्दैकदेशभूतो[13] दण्डशब्दः, येन दण्डः प्रत्यायितः। तस्मात् साध्वेतद्यत्[14] प्रतीते विशेषणे[15] विशिष्टः प्रतीयते इति। न[16] तु[17] गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः, अन्यो व्यक्तेः यत उच्येत,

---

१ ब. पदार्थस्य। २ ब. व्यक्तिपदार्थस्य।
३ ब. उभय उभयस्य। ४ ब. भावेनवक्ष्यत।
५ ब. न तदा। ६ ब. इति शक्यं वक्तुं।
७ ब. तदेतत्प्रत्यक्षम्। ८ ब. उच्चारिते।
९ ब. यस्तूच्चारिते। १० ब. कदाचिन्नाकृतिमुप। ११ ब. दसौ व्यक्ति।
१२ ब. प्रत्यक्षस्य। १३ ब. दण्डिशब्दे एकदेशभूतो। १४ ब. साध्येतत् प्रतीयते।
१५ ब. विशेषणविशिष्टं। १६ ब. न गोशब्दावयवः। १७ क. ननु।

तत आकृतिरवगता, न गोशब्द आकृतिवचन इति। न च यथा दण्डशब्दो न दण्डे प्रयुक्तः, एवं गोशब्दो नाऽऽकृतौ। तथैव निर्दशितं केवलाकृत्यभिधानः श्येनशब्द इति। तदेवमन्वयव्यतिरेकाभ्यामसति श्येनव्यक्तिसम्बन्धे श्येनशब्दोच्चारणादाकृतिवचन इति गम्यते। न तु व्रीह्याकृतिसम्बन्धमन्तरेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्टः। तस्मादाकृतिवचनः शब्दः इत्येतज्ज्यायः ॥३३॥ सिद्धान्तः।

भा० वि०—सिद्धान्तमाह—इति। तदक्षराणि व्याचष्टे—**तुशब्द इत्यादिना**। ननु क्रियार्थत्वे नालम्भनप्रोक्षणादिवाक्यं पश्वादिपदानां व्यक्त्यर्थत्वोपपादनात् कथं तेनैव तेषामेवाकृत्यर्थत्वसाधनमित्याशङ्क्य विषयान्तरे तावत्सूत्रं योजयति—**श्येनचितमिति**। यद्ययमाकृतिवचनः श्येनशब्दः स्यात्, तर्ह्येव श्येनचितं चिन्वीतेति विहितं चयनमाकृतौ जात्युपाधौ संभवतीत्युपस्कृत्यान्वयः। अत्र हि मुख्यश्येनाकृतिव्यक्त्योरिष्टकाभिश्चेतुमशक्यत्वादिष्टकासाध्यं श्येनसदृशम् अग्न्याख्यं फलं श्येनशब्दार्थः। तत्र च नियतैकव्यक्तिसादृश्यस्य सम्पादयितुमशक्यत्वात्, यया कया च व्यक्त्या सादृश्यमुपादेयम्, तस्य चाकृतिमात्रप्रयुक्तत्वादाकृतिवचन एव श्येनशब्द इत्याशयः। नियतैकव्यक्तिसादृश्यं कस्मादशक्यसम्पादकमत आह—**व्यक्तिवचने त्विति**। श्येनव्यक्तिरिति तत्सादृश्यं लक्ष्यते। चिन्वीतेति विहितस्येष्टकाचयनस्य नियतैकव्यक्तिसादृश्यसम्पादनाक्षमत्वादिति भावः।

ननु व्यक्तिसादृश्यस्यासम्पाद्यत्वेऽपि व्यक्तिवचनता शब्दस्य कस्मान्न भवेदत आह—**अशक्यार्थेति**। यस्मादानर्थक्यं व्यक्तिवचनत्वे स्यात्, तस्मादित्युपसंहरति—**तस्मादिति**।

ननु मुख्यश्येनव्यक्तेश्चयनोत्पाद्यत्वाभावेऽपि तदुत्पादकत्वेन विधेयत्वात् श्येनैश्चितं श्येनचितमिति व्युत्पत्तिसम्भवात् न सादृश्यार्थतयाकृतिवचनता श्येनशब्दस्याश्रयणीयेति चोदयति—**ननु चेति**। चयनस्यैकव्यक्तिसाध्यत्वाभावात् बहुवचनं श्येनशब्दार्थस्येप्सिततमत्वावगमान्न साधनत्वेन विधिस्संभवतीत्याह—**न साधकतम इति**। हि शब्दः स्मृतिप्रसिद्धिमवद्योतयति कर्मणि हन् इत्यस्मात् कर्मणीत्यधिकृत्य "कर्मण्यग्न्याख्यायाम्" इति सूत्रेण कर्मण्युपपदे कर्मणि च वाच्ये चिनोतेः धातोः क्विप्प्रत्ययस्मरणेन क्विबन्तचिनोत्युपपदस्य श्येनशब्दस्य कर्मवाचित्वात् कर्मणश्चेप्सिततमत्वान्न तदर्थस्य श्येनशब्दस्य साधकतमार्थता युक्तेत्याशयः, यत ईप्सिततमः श्येनः, न साधकतमः। अतः चयनेन श्येनो निवर्तयितव्यः, न श्येनैश्चयनमित्याह—**अत इति**। एवं च श्येन इव चीयत इति

श्येनचित् तं चयनेन भावयेत् इति सादृश्यार्थत्वस्यावश्याश्रयणीयत्वात् आश्रयणीयाकृतिवचनतेत्याह—**स आकृतिवचनत्व इति**। तच्छब्द कर्मभूतश्येनविषयः।

एवं सूत्राक्षरार्थमुक्त्वेदानीं तात्पर्यार्थं दर्शयितुमाक्षिपति—**तावदुभयत्रेति**। असंभव इति च्छेदः। व्यपदेशं विशदयति—**नाकृतिरिति**। व्यक्तिवादिना आकृतौ शब्दार्थे व्रीहीन् प्रोक्षतीत्यत्र क्रियाया असंभवमात्रं व्यपदिश्यते। न तु श्येनचितं चिन्वीतेत्यत्र व्यक्तौ क्रियासंभवोऽपि, आकृतिवादिनापि चिन्वीतेत्यत्र व्यक्तौ क्रियाया असंभवमात्रम्, न तु प्रोक्षतीत्याकृतौ तत्संभवः, तेनोभयपक्षान्निर्णयः इत्यर्थः। सिद्धान्त्यभिमतं स्वपक्षे विशेषमनुवदति—**यदप्युच्येत इति**। सर्वत्राकृतिश्शब्दार्थः। व्रीहीन् प्रोक्षतीत्यत्र क्रियान्वययोग्यव्यक्तिलक्षणेति नाकृतिपक्षे काचिदनुपपत्तिरित्यर्थः, सर्वत्र व्यक्तिरेव शब्दार्थः, चयनवाक्ये तु कार्यान्वययोग्याकृतिलक्षणेति पूर्वपक्षिणा शक्यं वदितुमित्याक्षेप्ता दूषयति—**शक्यस्तत्रापीति**।

ननु तथाप्यन्यतरेणोपपत्तिमन्तरेण भाव्यमित्याशङ्क्य व्यक्तिपक्ष एवोपपत्त्यतिशयं सूचयितुमाह—**किं पुनरिति**। आलम्भनप्रोक्षणादिवाक्यानां बहुत्वाच्चयनवाक्यस्य चैकत्वात् बह्वनुरोधेन चैकत्र लक्षणाश्रयणस्य न्याय्यत्वात् सङ्ख्याकारकान्वयसंभवाच्च व्यक्तिपक्ष एव ज्यायानित्यर्थः।

एवमुपपत्तिमत्तरत्वेनाक्षेप्तृपूर्वपक्षे पर्यवसायिते तुशब्दसूचितमाकृतिपक्षस्यैवोपपत्तिमत्तरत्वमादर्शयन् सिद्धान्ती परिहरति—**आकृतिरिति**। ज्याय इत्यनुषङ्गः गामानयेत्युक्ते प्रथमं सामान्याकारप्रत्ययोदयात् विचित्रव्यक्तिबुद्ध्यनुदयाद् व्यक्तीनां यथारुचि परिग्रहात् संबन्धग्रहणासंभवाच्च सर्वव्यक्त्यर्थत्वासंभवादाकृतिरेव शब्दार्थ इति भावः। अस्तु तर्ह्येकैका व्यक्तिरभिधेयेति तत्राह—**यदीति**। व्यक्त्यन्तरेऽभिधेयरूपस्याभावादिति भावः।

ननु केनचित्सामान्येन व्यक्त्यन्तरे प्रयोगो भविष्यतीत्याशङ्क्याह—**अथेत्यादिना**। कुत इत्यत आह—**सर्वेति**। सर्वसामान्यविशेषेभ्यो वियुक्ता विभक्ता व्यतिरिक्तेति यावत्, असाधारणरूपत्वाद् व्यक्तेरिति भावः।

ननु यथैका व्यक्तिस्सर्वसामान्यविशेषाद् व्यतिरिक्ता, तथा अपरापि, तेन तत एव सादृश्याद् व्यक्त्यन्तरे वर्तिष्यत इति शङ्कते—**नैष दोष इति**। उत्तरम्—**यदीति**। यदि व्यक्त्यन्तरमपि सामान्यविशेषव्यतिरिक्तम्। तदा सामान्यमेवानुवृत्तत्वात् सामान्यविशेषव्यतिरिक्तत्वं नामेति तस्यैवाभिधेयत्वप्रसङ्ग इत्यर्थः। शङ्कते—**नेत्युच्यत इति**। इतिरेवंशब्दपर्यायः। नैव व्यक्त्यन्तरे सामान्यविशेषविनिर्मुक्तत्वं निमित्तीकृत्य शब्दः प्रवर्तते इति एवं मयोच्यत इत्यर्थः। कथं

तर्ह्युच्यत इत्यपेक्षायामाह—**योऽर्थ इति**। सामान्यविशेषाश्रयशब्देन सामान्यविशेषव्यतिरिक्तं लक्ष्यते, तेन सामान्यविशेषव्यतिरिक्तत्वेनोपलक्षणेनोपलक्षितो योऽर्थः, तस्माद् व्यक्तिः, सैव चाभिधेयेति मयोच्यत इत्यर्थः।

ननु व्यक्तेः सामान्यविशेषाश्रयत्वे तयोस्तदन्तर्गतत्वात् कथं सैवाभिधेयेति, तत्राह—**व्यक्तिविषयश्चेति**। सत्यप्याश्रयाश्रयिभावे निष्कृष्याश्रयमेवाभिवदतीत्याह—**तेषान्त्विति**। शङ्कामुपसंहरति—**तेनेति**। सामान्यशब्दो विशेषस्याप्युपलक्षणार्थः। सामान्यविशेषव्यतिरिक्तत्वाद् व्यक्त्यन्तरस्यापीत्यर्थः। परिहरति—**यदीत्यादिना**। सामान्यविशेषव्यतिरिक्तस्योपलक्षणस्य गोव्यक्त्यन्तरवदश्वव्यक्तावपि भावात्तत्रापि वर्तेतैवेत्यर्थः अतिप्रसङ्गं परिहरन्नाशङ्कते—**आहेति**। केवलस्योपलक्षणस्याश्वादिव्यक्तावभावान्नातिप्रसक्तिरित्यर्थः। तर्हि यत्र प्रयोगो न दृष्टः, तस्यां गोव्यक्तौ न वर्तेत। इतरथाश्वव्यक्तावपि वर्तेतेति दूषयति—**यदीत्यादिना**। किंचानुगतैकनिमित्ताभावे गौर्न पदा स्प्रष्टव्या इत्यादिप्रयोगमात्रेण गोव्यक्तिष्वनुगतैकाकारप्रत्ययो न स्यात्। अक्षशब्दप्रयोगमात्रेण विदेवनादिष्वदर्शनात्। किंतु अनियतैकव्यक्तिविषयत्वात् सन्देह एव स्यादिति, अत्राह—**सामान्यप्रत्ययश्चेति**। अपूर्वगोदर्शनेऽपि नेयं पदा स्प्रष्टव्येति प्रत्ययदर्शनान्नेदमिष्टापादकमित्याह—**भवति त्विति**। प्रयोगस्यानियामकत्वे फलितमाह—**तस्मादिति**। अस्तु तर्हि शक्तेः नियामकत्वमिति चोदयति—**एवं तर्हीति**। यस्यां व्यक्तौ शब्दस्य शक्तिः तत्र वर्तते, नेतरत्रेति तस्य स्वभाव इत्यर्थः। शक्तेर्वा कथं प्रतिनियमः इत्याशङ्कायां औष्ण्यादिवत्तदनुभवादित्याह—**यथेति**। नैवमपि प्रयोगप्रवृत्तिव्यवस्था सिद्ध्यतीति परिहरति—**नैवमिति**। कुत इत्याशङ्क्यौष्ण्यादिप्रतिनियमवत् शक्तिप्रतिनियमस्याप्रत्यक्षतया प्रयोगप्रवृत्त्यनुमेयत्वेन प्राक् प्रयोगादेरविज्ञेयस्य प्रयोगव्यवस्थापकत्वानुपपत्तेरित्याह—**न ह्येतदिति**। अस्तु तर्हि जातिनिबन्धना प्रयोगव्यवस्थेति चोदयति—**सांख्यमेतदिति**[1]। अवगन्तुमिति विपरिणतस्यानुषङ्गः। कथमित्याह—**गोत्वमिति**। यत्र गोत्वमुपलक्षणम्, तत्र गोशब्दो वर्तिष्यते, यत्र तन्नास्ति। न तत्राश्वादिव्यक्ताविति शक्यमवगन्तुमित्यर्थः। अपसिद्धान्तापत्त्या दूषयति—**एवं तर्हीति**। व्यक्तिमात्रप्रतीतौ गोत्वोपलक्षितत्वाप्रतीतेरिति भावः। ततः किमत आह—**यदि चेति**। कुत इत्यत आह—**नहीति**। ततश्च पूर्वतरमवगताया आकृतेरेव शब्दार्थत्वापात इति भावः।

एवं केवलव्यक्त्यभिधानपक्षे निरस्ते पूर्ववादी द्वितीयं प्रकृतिविशिष्टव्यक्त्यभिधानपक्षमुपन्यस्यति—**अस्त्विति**। आकृत्यभिधानमात्रमङ्गीकरोति कथमुभया-

१. सत्यमेतदिति मु. भा. यु. पा.।

भिधाने व्यक्त्यभिधानपक्षः? तत्राह—**विशेषणत्वेनेति**। व्यक्तेः प्राधान्यादित्यर्थः। एतदेव विवृणोति—**नहीति**। **उभयमुभयस्येति**। एवं हि सत्युभयप्रतीतिः चयनालम्भनादिक्रियोपपत्तिश्च भविष्यतीत्याशयः। कस्तर्हि विवादस्तत्राह—**कस्यचित्त्विति**। आकृतिवादिनः आकृतिस्वरूपम्, व्यक्तिवादिनस्तु तदित्यर्थः। फलितमाह— **तेनेति**। विवक्ष्यत इति सम्बन्धः। न व्यक्त्यभिधानपक्षक्षतिरिति शेषः। उभयोरुच्यमानत्वे गुणप्रधानभाव एव निष्प्रमाणक इति परिहरति—**नैतदेवमिति**। उभयाभिधानमपि न संभवतीत्याह—**यदि चेति**। विशेषणतयाकृतेः पूर्वमभिधेयत्वे, तत्रैवंशब्दस्योपक्षीणत्वादिति भावः।

ननु जातिप्रतीतेर्विना व्यक्तिमपर्यवसानाद् व्यक्तेश्च कार्यान्वयितया प्रत्येतव्यत्वात् सापि शब्दार्थ एवेत्याक्षिपति—**कुत इति**। अनन्यलभ्यस्य शब्दार्थत्वात् व्यक्तेश्चाकृतिसम्बन्धादपि प्रत्येतुं नास्याः शब्दार्थतेति समाधत्ते—**आकृतिरिति**। आकृत्यवगतेः व्यक्त्यवगतिं विना पर्यवसानाभावाद् सैव व्यक्तेरवगतिः। न चैवं व्यक्तेरपि वाच्यत्वप्रसङ्गः अनिर्धारितरूपाया एव तस्या अवगमान्निर्धारितरूपाया अर्थप्रकरणादिलभ्यत्वादाकृतेस्तु निर्धारितरूपत्वात् सैव शब्दार्थ इति भावः।

ननु शब्दाकृतिप्रत्ययसन्निधाने व्यक्तिप्रत्ययस्य आकृतिप्रत्यय एव हेतुः। न शब्द इति कथं निश्चय इति चोदयति—**तदेतदित्यादिना**। न प्रत्यक्षः न स्फुट इति यावत्। परिहरति—**सोऽन्वयव्यतिरेकाभ्यामिति**। व्यक्तिप्रतीतेराकृतिप्रतीत्यन्वयव्यतिरेकानुविधायित्वाच्छब्दान्वयव्यतिरेकानुविधानाभावाच्च स विभागो लभ्यत इत्यर्थः। तत्राकृतिप्रत्ययान्वये व्यक्तिप्रत्ययान्वयमाह—**अन्तरेणापीति**। प्रत्यक्षादिप्रमाणान्तरेणापीति भावः। अनेनैव शब्दव्यतिरेके व्यतिरेकाभावोऽपि दर्शितः। आकृतिप्रत्ययव्यतिरेके व्यक्तिप्रत्ययव्यतिरेकमपि दर्शयति—**यस्त्विति**। मानसव्यभिचारो अनेकाग्रतादिः। यथा हि कदाचिदाकृतिं स्वतन्त्रामवबुध्यते, शब्दात् नैवमाकृतिमबुद्ध्वा व्यक्तिं कदाचिदपीति भावः।

भवत्वन्वयव्यतिरेकाभ्यामाकृतिप्रत्ययस्यैव व्यक्तिप्रत्ययनिमित्तत्वादाकृतिः शब्दार्थः तथापि व्यक्तिधर्मत्वेन तन्निरपेक्षायाः प्रतीत्ययोगात् व्यक्तिविशिष्टैवाकृतिः शब्दार्थो भविष्यतीति शङ्कते—**ननु व्यक्तीति**। यदि व्यक्तिविशिष्टा जातिरभिधीयेत। तदा व्यक्तिपक्षोक्तदोषो व्यक्त्यन्तरे प्रयोगासिध्यादिरूपः प्राप्नोतीति परिहरति—**व्यक्तिविशिष्टायाश्चेदिति**। व्यक्तिविशिष्टानामपि व्यक्तिवदनेकत्वा-

दितिभावः। यस्मादनुगतस्यैव शब्दशक्तिप्रतियोगित्वं तस्मादाकृतिरेवानुगता शब्दार्थः। व्यक्तिप्रत्ययस्तु तदन्तर्भाविनेति निगमयति—**तस्मादिति**।

यदुक्तम्—आकृतेरनुवृत्तत्वेऽपि विशेषणतया गुणभूतत्वादन्येन केनचित्प्रधानभूतेन भवितव्यमिति प्रधानं व्यक्तिः शब्दार्थः इति, तदनुवदति—**नन्विति**। शब्दात्प्रतीयमानस्य शब्दार्थत्वादाकृतेश्च तथाभावात्सैव शब्दार्थं इति परिहरति—**न गुणभाव इति**।

ननु शब्दात्प्रतीयमानोऽपि गुणभूतैवाकृतिः प्रतीयत इति कथं शब्दार्थोऽत आह—**अर्थादिति**। अर्थः—सामर्थ्यम्। एतदेव विवृणोति स्वार्थश्चेदिति। चयनवाक्ये श्येनशब्दस्याकृत्यर्थत्वादाकृतिः प्रधानभूता। प्रोक्षणवाक्ये तु व्रीहिशब्दस्य व्यक्तिपरतया गुणभूता न गुणत्वप्रधानत्वयोः शब्दस्य व्यापार इत्यर्थः।

एवं व्यक्त्यन्तरे प्रयोगानुपपत्त्या व्यक्त्यर्थत्वनिराकरणेनाकृत्यर्थत्वे समर्थिते परः स्वोक्तमाकृत्युपलक्षितत्वपक्षमुत्थापयति—**नन्विति**। दण्डीत्यत्र तावदिनिप्रत्ययान्तेन दण्डिशब्देन न दण्डोऽभिधीयते। तथापि दण्डविशिष्टः प्रतीयते। एवमिहापि नाकृतिरुपलक्षणभूताभिधीयते। व्यक्तयस्तु तदुपलक्षिताः अभिधीयन्ते इति न व्यक्त्यन्तरे प्रयोगानुपपत्तिरित्यर्थः। आकृतिविशिष्टा आकृत्युपलक्षितेतियावत्। न चाकृतेरुपलक्षणभूताया दण्डो विशेषणभूतः कथं दृष्टान्तस्स्यादिति वाच्यम्; व्यावर्तकत्वसाम्येन विशेषणोपलक्षणयोः दृष्टान्तदार्ष्टान्तिकभावोपपत्तेरित्यवसेयम्। तदेतद् दूषयति—**नैतदित्यादिना**। दृष्टान्तेऽपि किमिति प्रत्ययेनाभिहितोऽपि दण्डो विशेषणमित्युच्यते किं वा अप्रतीतोऽपीति तत्राद्यमङ्गीकरोति—**सत्यमिति**। द्वितीयं प्रत्याह—**न त्विति**। केन तर्हि दण्डः प्रत्यायितस्तत्राह—**अस्ति तत्रेति**। द्वितीयपक्षनिरासफलमाह—**तस्मादिति**। इहापि तर्हि गोशब्दावयवो गोत्वप्रत्यायकोऽस्तु तत्राह—**न त्विति**। यतोऽवयवसद्भावाद् हेतोः ततोऽवयवादाकृतिरवगता न गोशब्द आकृतिवचन इत्युच्येत, सोऽवयवो नास्तीति योजना, तेनास्याखण्डशब्दत्वेनावयवाभावादप्रतीतस्य चाविद्यमानकल्पत्वेनोपलक्षणत्वाभावादनेनैव गोत्वप्रतीतिराश्रयणीयेति भावः।

ननु यथा दण्डिशब्दस्य दण्डे प्रयोगाभावादेव विशिष्टवचनत्वमेवं गोशब्दस्यापि कल्प्यताम्, अत आह - **यथेति**। नाकृतावप्रयुक्तः किं तु प्रयुक्त एवेत्यर्थः। कथमाकृतौ प्रयुक्तस्तत्राह—**तदर्थमेवेति**। सर्वत्राकृतौ प्रयोगप्रतिपादनाय हि श्येनशब्दस्याकृत्यर्थता दर्शितेत्यर्थः। केवलशब्दः प्राधान्याभिप्रायः। श्येनशब्दप्रयोगस्याकृतिप्राधान्यमुक्तमुपजीव्य शब्दानामाकृत्यर्थत्वे हेत्वन्तरमाह—**तदित्या-**

दिना। यथा सत्यन्वयव्यतिरेकाभ्यां चाकृतिवचन इति गम्यत इति सम्बन्धः। तत्र व्यक्त्यन्वयं विनैवाकृत्यन्वये प्रयोगान्वयमुदाहरति—असतीति। व्यक्त्यन्वयेऽप्याकृतिव्यतिरेके प्रयोगव्यतिरेकमाह—न त्विति। व्रीहिशब्दो भावप्रधानः, पूर्वं व्यक्तिप्रतीतेराकृतिप्रत्ययाधीनत्वेऽन्वयव्यतिरेकावुक्तौ। इदानीं चाकृतिप्रत्ययस्य शब्दाधीनत्वम् इति भेदः। सूत्रतात्पर्यार्थमुपसंहरति—तस्मादिति ॥ ३२ ॥

त० वा०—किं च[1] नैवेष्टकाभिराकृतिसम्पादनमभ्युपगतम्, यतः स्वभावात्स्नाय्वाद्यारब्धद्रव्यसमवायित्वेनोपालम्भः स्यात्, पिष्टपिण्डसिंहवत्सादृश्यसंपत्तिः पक्षद्वयेऽपि चोदनार्थः। सा त्वाकृत्यन्तरविलक्षणश्येनाकृत्या स्यात्, न तु व्यक्त्यन्तरविलक्षणश्येनविशेषेणाऽसाधारणेन वा। निर्विकल्पत्वात्सामान्यविशेषानपेक्षं व्यक्तिमात्रसादृश्यमविधेयम्, सर्वद्रव्येषु तुल्यत्वात्। एकव्यक्तिपरिग्रहाच्च व्यक्त्यन्तरेण सादृश्यं न कार्यं स्यात्। तस्माच्छ्येनचित्क्रिया व्यक्तौ शब्दार्थे न सम्भवति। **न साधकतम इति**। न ह्येवं स्मृतिः श्येनैश्चीयत इति श्येनचित्, कर्मण्यग्न्याख्यायाम्' (पा. सू. ३।२।९२) इति हि सा। श्येनं चयनेन साधयेदितीप्सिततमत्वम्। तत्रापि मुख्यासम्भवात्सादृश्यपरिग्रहः असाधारणे[2] शब्दप्रवृत्त्यसम्भवात्, अव्यपदेश्यत्वेन च सर्वत्राविशेषात्, सामान्याकारेण च निरूपणे विकल्पात्, व्यापकापेक्षया, व्याप्यसामान्यस्य नैव[3] विशेषव्याप्यापेक्षयेतरत्राऽऽकृतिः। तत्र विशेषपक्षे सम्बन्धानन्वाख्यान-व्यभिचार-सामान्यबुद्ध्यभाव-प्रत्यर्थशक्तिकल्पनादयो दोषाः। न च यत्र संशयः तत्प्रत्याय्यः भवतीति निर्विषयता शब्दस्य।

एतेन स्वतन्त्रोभयाभिधानमार्गः प्रत्युक्तः। व्यक्तिविशिष्टाकृतिमार्गोऽपि। 'नागृहीतविशेषणा' इति न्यायाद् व्यक्तेः प्रथमग्रहणप्रसङ्गात्। सम्बन्धसमुदाययोरपि स्वरूपप्रत्ययाभावात्सर्वत्र चाविशेषादवश्यं सम्बन्धिसमुदायिविशेषणताऽभ्युपगन्तव्या भवति। तत्रापि शक्तित्रयकल्पना। व्यक्त्यंशे चोक्तदोषप्रसङ्गः। न च व्यक्त्याकृत्योर्भिन्नकार्ययोर्गुणप्रधाननानावस्थयोः समुदायोपगमनं युक्तम्, अनत्यन्तभेदाच्च। भिन्नधर्मौ सम्बन्धसमुदायौ न युक्तौ।

---

१. 'अन्यदर्शनाच्च' इति पूर्वपक्षसूत्रगतं भाष्यं स्वष्टत्वादुपेक्ष्य, 'आकृतिस्तु क्रियार्थत्वात्' इति सिद्धान्तसूत्रगतं 'श्येनचितं चिन्वीत' इति वचनमाकृतौ सम्भवतीति भाष्यं यथाश्रुतार्थमसङ्गतमिव मन्वानो दृष्टत्वेन बुद्धिस्थं दूषयितुमुपक्रमते–किंचेत्यादिना।

२. असाधारणेत्यारभ्येतरत्राऽऽकृतिरित्यन्तो वार्तिकग्रन्थः यथा आकृतिः शब्दार्थः इत्यारभ्य–शक्यत आश्रयितुमित्यन्तभाष्यग्रन्थव्याख्यानार्थस्तथा न्यायसुधायां विस्तारः।

३ क. नैवं।

आकृतिविशिष्टोऽपि व्यक्तिविशेषो नैव प्रतीयते। व्यक्तिविशेषबुद्धयभावाद् व्यक्तिमात्रमिति चेत् ? न तदानीं तस्याऽऽकृतितोऽन्यत्वेनानिरूपणात्। मात्रशब्दो हि सामान्यवाचीत्याकृतिरेवोच्यते। नानाकारेषु च वस्तुषु तद्भेदानुसारित्वाच्छक्तीनामन्वयव्यतिरेकाभ्यां गोत्वाकारनिबन्धनैव गोशब्दवाच्यत्वशक्तिर्गम्यते। तदेकाधारसामान्यान्तरावगतिर्विशेषाकाङ्क्षा वेत्यर्थव्याप्यव्याप्तिभ्याम्।

अनत्यन्तव्यक्तिरेकाच्चाऽऽकृतेरमूर्तत्वाद्याश्रयदोषाप्रसङ्गः। सा हि निष्कृष्टरूपा, क्रियायोगिनी तु व्यक्त्युपेता भवत्येवेति प्रोक्षणावेक्षणादि तु न कथंचिन्न सम्भवति। विशसनाद्यपि तु व्यक्त्यव्यतिरेकापेक्षया सम्भवत्येव। तथा हि—पश्वादिष्वपनीताङ्गेषु विशेषबुद्धयभावात्सामान्यरूपैव विशसनादिविशिष्टा बुद्धिर्दृष्टा।

नन्वेवमनित्याऽऽकृतिः स्यात्, तेनांशेनेष्टैव। आश्रयान्तराविनाशात्तु सर्वैरप्यविनाशोऽवश्यमेवैष्टव्यः। तेन यत्तावन्मात्रमेव तस्य विनाशः अनेकदेशस्य तु न कथंचिद्विनाशः स्यादित्युभयथा व्यवहारः। अत्यन्तव्यतिरेके तु नैष धर्मविधिविषयो व्यवतिष्ठेत। न च पशुत्वममूर्तत्वात्। तदुपलक्षितं तु यद् द्रव्यम्, तद् द्रव्यत्वादृते न ताद्रूप्येण गम्यत इत्येकार्थसमवायादव्यापकत्वाच्च द्रव्यं गमयितव्यम्, तत्राप्यमूर्तत्वे दोषः। आश्रयोपलक्षणाच्च द्रव्यमात्रप्रसङ्गः। विशेषस्तु पशुत्वस्य वा द्रव्यत्वस्य वाऽव्यापकत्वादगम्यः। न वाऽप्रतीतं विधिना संबध्यते। न च यत्र संशयः तत्प्रतीतम्। न चान्यत्रोक्तो धर्मस्तत्रासंभवादन्यत्र कार्यः। तस्मान्न सामान्यकृतो विशेषेषु युक्तः, विशेषा अपि व्यपदेशात्सामान्यमेवेत्यमूर्तता। असाधारणेन तु नैव व्यवहारस्तस्मादनिरूप्यो धर्मविधिविषयः।

सामानाधिकरण्यादि च प्रसिद्धिविपरीतं लक्षणया कल्प्यम्। भाष्यकारेण तु व्यतिरेकाभ्युपगमेनाऽऽश्रयमात्रगतिरुक्ता। विशेषरूपा न कदाचिद् व्यक्तिः प्रतीयते। योऽप्याश्रयिभावः, सोऽप्यौपचारिकः। सामान्याच्च विशेषलक्षणं तत्र नाऽऽश्रयितव्यम्। आक्षेपमात्रभावात्, अथ वैतद्विषय एवायं प्रपञ्चः।

किं शब्देनाऽऽकृत्या वेति। अन्वयव्यतिरेकाभ्यां चाऽऽकृत्येति निर्णयः। यो हि धूमादग्निमत्त्वं प्रतिपद्यते, तस्य तैक्ष्ण्येऽप्याकाङ्क्षा सिद्धा। **मानसादपचरादिति**। यो हि जाड्यात्सामान्यवाचितां हित्वा, कंचिदेव विशेषं यत्र सम्बन्धानुभवः तं वाच्यं मन्यते, तस्य सामान्याप्रतीतेर्न विशेषान्तरापेक्षा भवति।

अथ वा यथा शब्दात्स्वतन्त्रामाकृतिं बुध्यते, नेवं कदाचिदाकृतिमबुद्ध्वा व्यक्तिमिति। केन तर्हि गोत्वगोशब्दयोर्विशेषः ? व्यतिरेकांशस्यैकत्र विवक्षा।

गोत्ववानिति तु स्फुटं प्रत्ययेन जातिमदभिधानम् । विभागोपपत्तेः । सामान्यस्य वोपलक्षणत्वान्न भेदपक्षदोषः । भेदानामेव चायं प्रत्येकं सर्वेषां वाचकः । यस्तूपादीयमानत्वे संशयः, स संख्याधारविषयः । उद्दिश्यमानेषु निर्णय एव । गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानामन्तर्भावार्थम् । प्रयोजनं सामान्यविशेषशब्दयोरेकविषयत्वात्सामान्यशिष्टस्य विशेषशिष्टेनाबाधः पूर्वपक्षे ।

**परमतेनाधिकरणं व्याख्याय स्वमतेन नामाख्यातयोरर्थनिर्णयः इति निरूपणम्**

एवं वा—गौरित्येवंविधाः शब्दाः साधुत्वेन निरूपिताः ।
तेषामेवाभिधेयेऽर्थे व्यापारः क्वेति चिन्त्यते ॥ ९९८
चतुर्विधे[1] पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥ ९९९
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥ १०००
वाचकत्वेऽपि पाश्चात्यमनुयात्येवमादिषु ।
प्रतीयते विशेषो यः संशयेन स नाऽऽप्यते ॥ १००१
यदि ह्यर्थद्वये बुद्धिर्निपातोच्चारणाद्भवेत् ।
ततो विचारो जायेत न सामान्यधिया विना ॥ १००२

**आख्यातार्थविचारस्य भावार्थाधिकरणे कृतत्वात् अत्र प्रकृत्यर्थविचारः**

आख्यातस्यापि नन्वत्र न युक्ताऽर्थविचारणा ।
द्वितीयादावियं यस्माद्विस्तरेण करिष्यते ॥ १००३
**कः पुनर्भाव**[2] इत्यादौ विवेकेनार्थनिर्णयः ।
आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥ १००४
प्रत्ययार्थस्य भावस्य वाच्यता प्रतिपादिता ।
प्रकृत्यर्थविवेकार्थं विचारः क्रियतेऽधुना ॥ १००५
प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते ।
सामान्यं वा विशेषो वा किं वाक्यमिति चिन्त्यते ॥ १००६

**अत्र सिद्धस्यैव तत्र व्यवहारो भाष्यकृतः**

या चोक्ता भाष्यकारेण यागादेरभिधेयता ।
सिद्धा सेह विवेकार्थं तत्र भावस्य भाषिता ॥ १००७

---

१. नामाख्यातोपसर्गनिपातरूप इत्यर्थः ।
२. जै० सू० २-१-१ इत्यत्र भाष्यकारेण ।

यज्याद्यर्थेऽपि वा वाच्ये किं सामान्यविशेषयोः ।
अभिधेयमिति प्राप्ता चिन्ता कर्तुं क्रियापदे ॥ १००८

**अपूर्वं कस्मादिति प्रधानविचारे न पुनरुक्तिशंका**

अपूर्वं भावशब्देभ्यो द्रव्यादिभ्यः किमिष्यते ।
एषा तत्र च चिन्तोक्ता शेषा प्रासङ्गिकी कथा ॥ १००९
नामाख्यातपदे तेन कस्यार्थस्याभिधायके ।
किमाकृतेरुत व्यक्तेरिति चिन्ता प्रवर्तते ॥ १०१०
प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्छब्दलक्षणे ।
व्यक्तिपक्षाभिधानाच्च संशयः प्रतिभाति नः ॥ १०११

**संगतिसंशययोरुपपादनम्**

कथं लक्षणसंबन्धश्चिन्तायाः प्रकृतेन वा ।
स्मृतिमूलविचारेण वक्तव्यं त्विदमादितः ॥ १०१२
इयं प्रासङ्गिकी चिन्ता साधुशब्दे निरूपिते ।
उदाहृतस्य तस्यैव क्रियतेऽर्थविनिश्चयः ॥ १०१३
वक्तव्यः पूर्वमर्थश्चेच्छब्दरूपनिरूपणात् ।
न हि वाच्यमविज्ञाय साधुत्वमवधार्यते ॥ १०१४
अनिश्चितेऽपि वाच्यत्वे व्यक्त्याकृत्योर्विवेकतः ।
साधुत्वं शक्यते ज्ञातुं तेन वाच्यमिहोच्यते ॥ १०१५
वाच्यमात्रे हि साधुत्वमविज्ञाते न लभ्यते ।
न चाऽऽकृत्या न च व्यक्त्या विना तन्नोपपद्यते ॥ १०१६

**प्रकारान्तरेण संगत्युत्पादनम्**

अथ वोक्तेन मार्गेण सर्वा व्याकरणस्मृतिः ।
प्रयाणमिति सिद्धस्य किंचिदत्र विचार्यते ॥ १०१७
व्यक्तिर्वाच्येति विज्ञानं न सन्मूलमसंभवात् ।
तेन व्याचरणेऽपीदृग् न प्रमाणं स्मृतिर्मता ॥ १०१८
स्मृतेस्तेनापवादोऽयं प्रामाण्यस्य क्वचित्कृतः ।
युक्तो लक्षणपादाभ्यां पूर्वया चापि चिन्तया ॥ १०१९

**आकृतिपक्षेऽपि क्रियाया उपपत्तिर्व्यक्तिमादायैव वाच्येति फलवैफल्याभावशंका-समाधाने**

ननु चाऽऽकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये ।
शब्दार्थे संभवात्तेन किमर्थैषा विचारणा ॥ १०२०

यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् ।
दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥ १०२१
व्यक्तिपक्षे विकल्पः स्यात्कौण्डिन्ये दधितक्रयोः ।
सामान्यवाक्यदौर्बल्यात्तक्रमेवेतरत्र तु ॥ १०२२
वेदेऽपि च विशेषोऽस्ति व्रीहिप्रोक्षणचोदके ।
दध्नेत्यादिषु भेदश्च जायते होमचोदके ॥ १०२३
प्रोक्षणं पूर्वपक्षेऽपि कर्तव्यं लौकिकेष्वपि ।
व्रीहिषु श्रुतिसामर्थ्याद्बाधित्वा संनिधिक्रमम् ॥ १०२४
प्रकृतेष्वेव सिद्धान्ते श्रुतिसंनिध्यनुग्रहात् ।
तत्रापि कृत्स्नमस्त्येव व्रीहित्वं हि श्रुतीरितम् ॥ १०२५
एवं होमेऽपि दध्यादौ प्रकृतेऽप्रकृतेऽथ वा ।
प्रकृते श्रुतिवाच्यस्य होमत्वस्यापि संभवात् ॥ १०२६
सोपपत्तिकमन्यच्च वक्तव्यमनया दिशा ।
कर्तव्या तेन यत्नेन चिन्तेयं सप्रयोजना ॥ १०२७
ननु गौरितिशब्दादौ सर्वमेतद्विचारितम् ।[1]
तेन तेन गतार्थत्वात्पुनश्चिन्ता न युज्यते ॥ १०२८

**आकृतिश्शब्दार्थ इत्यत्र हेतूपन्यासार्थमिति कथनम्**

आकृतेरभिधेयत्वप्रतिज्ञा केवला कृता ।
तत्रेदानीं सहेतुत्वं तस्या एवाभिधीयते ॥ १०२९
यथा वाऽऽकृतिरित्यादौ भाष्यकारेण चोदितम् ।
पुनरस्याः प्रतिज्ञाया हेतुरप्यभिधास्यते ॥ १०३०

**आकृतेश्शब्दार्थत्वं पूर्वसिद्धं व्यक्तेर्वाच्यावाच्यत्वचिन्ता**

यद्वोक्तस्तत्र सद्भावः शब्दार्थत्वमिहोच्यते ।
या तु शब्दार्थता प्रोक्ता सेह सिद्धा न चिन्तिता ॥ १०३१
उक्ते वाऽप्यभिधेयत्वे जातेः सद्भावसिद्धये ।
व्यक्तिर्वाच्या न वेत्येतदगतार्थं विचार्यते ॥ १०३२
एतच्चिन्ताप्रसिद्ध्यर्थमिदं तावद्विचार्यते ।
शब्दार्थौ लौकिकौ वेदे किमन्याविति संशयः ॥ १०३३

---

१. जै० सू० ( १–१–५ ) इत्यत्र वृत्तिकारमतानुवादे शब्दार्थसम्बन्धाक्षेपपरिहारग्रन्थे भाष्यकारैरिति शेषः ।

एकत्वे सति कर्तव्यो विचारः शब्दवाच्ययोः ।
भेदे तु संशयाभावान्न चिन्तावसरो यतः ॥ १०३४
शब्दार्थेन न कार्यं हि व्यवहारेऽर्थलक्षणे ।
लौकिकव्यवहारार्थं तेनेदं न विचार्यते ॥ १०३५
वेदे तु प्रत्यभिज्ञाने शब्दार्थविषये सति ।
विवेकः शक्यते ज्ञातुं प्रतीतेर्वाच्यगम्ययोः ॥ १०३६
अलौकिके च शब्दार्थे वाच्यवाचकरूपयोः ।
अज्ञातयोर्न जायेत सन्देहो वाच्यवस्तुनि ॥ १०३७
तेन प्रतीतशब्दार्थे निर्णयार्थमिदं पुरा ।

**शब्दनित्यत्वाधिकरणे लौकिकशब्दानामभेदो विचारितः । अत्र लौकिकानां वैदिकानां शब्दानां भेदाभेदविचार इति प्रकारान्तरम्**

एकत्वं विद्यते नेति चिन्त्यं शब्दाभिधेययोः ॥ १०३८
संख्याभावादिति[1] ह्येतन्ननु स्पष्टं निरूपितम् ।
शब्दस्य प्रत्यभिज्ञानान्नान्यतोच्चारणान्तरे ॥ १०३९
अभेदकारणं चात्र प्रत्यभिज्ञानमेव ते ।
अन्यत्तूपचयत्वेन तेन चिन्ता न युज्यते ॥ १०४०
लौकिकेष्वेव शब्देषु तत्राभेदः प्रसाधितः ।
वैदिकानामभेदार्थं चिन्तनीयमिदं पुनः ॥ १०४१
व्यपदेशादिभेदाच्च कथं भेदो न जायते ।
तवानुक्तमिदं वक्तुं विचारोऽयं प्रवर्तितः ॥ १०४२

**लौकिकवैदिकानां शब्दानामर्थभेदाभेदविचारः**

एकत्वेऽपि च शब्दस्य सिद्धे तत्रेह चिन्त्यते ।
किमर्थो भिद्यते नेति तेनाप्यपुनरुक्तता ॥ १०४३
अर्थभेदे च चिन्तेयं शब्दाभेदे तु सत्यपि ।
घटते कस्य वाच्यत्वं व्यक्त्याकृत्योर्द्वयोरपि ॥ १०४४
व्यपदेशादिभेदेन शब्दे च प्रत्यभिज्ञया ।
भेदाभेदनिमित्ताभ्यां क्रियते संशयोद्भवः ।

**पूर्वपक्षः**

किं प्राप्तमुच्यते भिन्नौ शब्दार्थौ लोकवेदयोः ॥ १०४५

---

१. जै० सू० ( १-१-६ ) ।

व्यपदेशस्य भिन्नत्वादाख्याया लक्षणस्य च ।
स्वरोच्चारणभेदाच्च लोपव्यत्ययदर्शनात् ॥ १०४६
स्वरुयूपादिशब्दैश्च स्पष्टभेदैः सह श्रुतेः ।
अनध्यायादिभेदाच्च शूद्रोच्चारणवर्जनात् ॥ १०४७
अश्वबालादिशब्दानां स्पष्टार्थान्तरदर्शनात् ।
अग्न्यादीनां च भिन्नत्वं भाष्ये यदभिधीयते ॥ १०४८
तदयुक्तं क्रियाभेदे कर्तृभेदे[1] हि नेष्यते ।
हन्ति कर्तृत्वमग्नेश्च पदार्थेभ्यः प्रतीयते ॥ १०४९
अशाब्दं वह्निशब्दस्य तद्वाच्यं कथमुच्यते ।
हननं किं कृतं नेति प्रमाणं चात्र नास्ति नः ॥ १०५०
असता कथमन्यत्वं कर्मणाऽतः प्रतीयते ।
अपूर्वे वृत्रशब्दार्थे क्रियाशब्देऽप्यलौकिके ॥ १०५१
हन्तिकर्तरि वह्नित्वं कथमध्यवसीयते ।
स्तुतिमात्रपरत्वाच्च न वह्नित्वं विधीयते ॥ १०५२
अक्रियत्वाच्च भाष्योक्तैर्वाक्यैरित्यभिधास्यते ।
तेनोक्तस्यैव शब्दस्य त्रिवृदादेर्नवादिषु ॥ १०५३
वृत्तिरर्थेष्वपूर्वेषु वक्तव्या भेदसिद्धये ।

**भेदपक्षे हेत्वन्तरोपन्यासः**

यच्चान्यदिदमित्याह[2] रूपभेदं क्रियाश्रुतेः ॥ १०५४
तदसत्यं न शब्दस्य भेदोऽर्थगुणकारितः ।
तेन स्वरादिभेदेन वक्तव्या भिन्नरूपता ॥ १०५५
पूर्वोक्तेनैव मार्गेण नार्थभेदनिबन्धना ।
तस्माच्छब्दार्थयोर्भेदः स्पष्ट इत्यवधारिते ॥ १०५६
तावेव वेदे शब्दार्थौ लोके याविति भाष्यते ।
वेदस्यैव प्रसज्येत सकलस्याप्रमाणता ॥ १०५७
अविज्ञातार्थसंयोगात्स्थितप्रामाण्यबाधया ।
प्रयोगस्याग्निहोत्रादेश्चोदनायाश्च जायते ॥ १०५८

१ क. कर्तृभेदो ।
२. लोकवेदयोः शब्दार्थानामनन्यत्वनिरूपणावसरे भाष्यकार इति शेषः ।

अभावः प्रत्ययार्थस्य विधेरप्रतिपादनात् ।
अर्थान्तरे च शब्दस्य न प्रयोगो विधीयते । १०५९
वेदेनाशास्त्रहेतुत्वात्सम्वन्धस्येति हि स्थितम्[१] ।

### सिद्धान्तः

किं चाविभक्तरूपत्वं प्रत्यभिज्ञायते स्फुटम् ॥ १०६०
वैदिकेष्वपि शब्देषु प्रत्यक्षेण पुनः पुनः ।
यद्वा विभागशब्देन शब्दस्योच्चारणे सति ॥ १०६१
गोत्वबुद्धेः समानत्वान्न भेद इति कीर्त्यते ।
लक्षणस्याविभक्तत्वं शब्दानां वेदमुच्यते ॥ १०६२
सर्वथा शक्यते भेदो न वक्तुं शब्दवाच्ययोः ।
एकत्वे याज्ञिकानां च प्रसिद्धिरनुगृह्यते ॥ १०६३
मीमांसा चापि वेदार्थतत्त्वनिर्णयकारणम् ।
व्यपदेशादिभेदैश्च न भेदोऽत्रानुमीयते ॥ १०६४
प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देऽन्यरूपता ।
व्यपदेशादिभेदश्च स्वरभेदादिकारितः ॥ १०६५
स्वरादयश्च भिद्यन्ते वेदत्वात्किमिहोच्यते ।
स्वरुयूपादिशब्दानामन्यत्वेनेतरत्र[२] च ॥ १०६६
नान्यत्वं युज्यते बाधात्प्रत्यक्षप्रत्यभिज्ञया ।
वचनाद्धर्मभेदस्तु शूद्रवर्जितताऽपि वा ॥ १०६७
धर्मावुच्चारणस्यैतौ न शब्दस्य स्वरश्च यः ।
अश्वबालादिशब्दार्थभेदे वचनकारिते ॥ १०६८
न च भिन्नत्वमन्येषु प्रज्ञातार्थेषु युज्यते ।
उत्तानानां च केषांचिद्वहतां न विधीयते ॥ १०६९
गोत्वं तेषामसिद्धत्वात्पदार्थाग्रहणादपि ।
विधेरन्यस्य शेषत्वात्स्तुतिरेषाऽवगम्यते ॥ १०७०
उत्तानेत्यादिका तेन नातो भेदः प्रतीयते ।
तस्माद्यावेव शब्दार्थौ लोके पूर्वं निरूपितौ ॥ १०७१

---

१. जै० सू० ( ३-२-२ ) इत्यत्र ।
२ ब. स्वर ।

वेदे तावेव विज्ञेयाविति सिद्धं प्रमाणवत् ।

**प्रकारान्तरोपन्यासेन प्रकृतस्यानुसन्धानम्**

यद्वा चैवं यदा युक्ता चिन्तेयं क्रियतेऽधुना ॥ १०७२
किमाकृतेः पदार्थत्वं किं व्यक्तेः किं द्वयोरिति ।
बहवः प्रतिभान्त्यत्र पक्षाः प्रतिपदं च ये ॥ १०७३
ते च सर्वेऽभिधीयन्ते व्यामोहविनिवृत्तये ।
गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः ॥ १०७४
जातिर्व्यक्तिश्च सम्बन्धः समूहो लिङ्गकारके ।
संख्या च सप्तमी तेषामष्टपक्षी द्वयोर्द्वयोः ॥ १०७५
किं जातिरेव शब्दार्थो व्यक्तिरेवाथ वोभयम् ।
किं विकल्पोऽथ सम्बन्धः समुदायो निरूप्यताम् ॥ १०७६
जातिर्व्यक्तिविशिष्टा वा व्यक्तिर्जातिविशेषिता ।
जातिसम्बन्धयोरेवं सामान्यसमुदाययोः ॥ १०७७
जातिकारकयोश्चैवं संख्यासामान्ययोरपि ।
लिङ्गसामान्ययोरेवमेकैकस्येतरैः सह ॥ १०७८
अष्टौ पक्षा नियोक्तव्याः षड्भिः प्रत्येकमुक्तवत्
एवमानन्त्यमेतेषां पक्षाणामिह गम्यते ॥ १०७९

**पक्षाणामानन्त्येऽपि भाष्यमतेन पक्षचतुष्टयवर्णनम् ।**

पूर्वपक्षेऽपि चत्वारो भाष्ये चैते प्रदर्शिताः ।
व्यक्तेरेवाभिधेयत्वं द्वयोर्वा स्वप्रधानयोः ॥ १०८०
व्यक्तेर्जातिविशिष्टाया विपरीतमथापि वा ।
उपन्यासेन चैतेषां ज्ञेयाः सर्वे प्रपञ्चिताः ॥ १०८१
निराकरणयुक्त्या च निषिद्धा इति नोदिताः ।

तेनाऽऽद्यौ द्वावेव पक्षौ विचार्येते किमाकृतिः शब्दार्थो व्यक्तिरिति ।

भाष्यकारेण च संशयकारणमुक्तं **सामान्यप्रत्ययाद्व्यक्तौ च क्रियासंभवादिति** । एतदयुक्तम् ! व्यक्तेरपि प्रतीयमानत्वात्कथं जातेरेव प्रतीतिरुपन्यस्यते ? यदि च व्यक्तिर्न संप्रतीयेत, ततः संशय एव न स्यात्किमभिधीयतेऽनेनेति । न च क्रियासंभवोऽभिधेयत्वे कारणं व्यञ्जकत्यन्तराणामपि प्रसङ्गात् । तेन पूर्वोक्तमेव संशयकारणं मन्तव्यम् । प्रयोजनप्रतीत्योः साधारणत्वात् शास्त्रान्तरे व्यक्तिपक्षाभ्युपगमात्संशयः ।

यद्वा शब्द उच्चारिते सामान्यप्रत्ययाद् व्यक्त्याकृत्योः सामान्यात्तुल्यात्प्रत्ययात् व्यक्तौ च शब्दादाकृतावालम्भनस्पर्शनश्येनसदृशचयनादिक्रियासंभवात्सामान्ये व्यक्तौ च प्रत्ययात्क्रियासंभवादिति चोक्तम्।

**का पुनराकृतिः, का व्यक्तिरिति।** कथं पुनरयं प्रश्नो यदा गौरित्येतस्य शब्दस्य कोऽर्थ इत्यत्र जातिर्निरूपिता। नैष दोषः। येनैतन्न ज्ञातमसौ पृच्छति का पुनराकृतिः? का व्यक्तिरिति? संदेहाद्वाऽत्र पुनरुभयस्मिन्प्रतीयमाने का व्यक्तिः? कियती वा जातिरिति। वैपरीत्येनैव कश्चित्पृच्छति यदा शाबलेयादिपिण्डान्न किंचिद् व्यक्तं वस्त्वन्तरं भिन्नमुपलभ्यते, तदा कुतोऽयं विवेको व्यक्तिरियम्, जातिरियमिति।

अथ वा व्यवहारार्थं सर्वैव चिन्ता क्रियते जातेश्च पदार्थत्वेऽपि व्यक्तौ क्रियासंभवान्निष्प्रयोजना चिन्ता। यतस्त्वसौ प्रयत्नेनैतद्विचारयति। तेन नूनं काऽप्यस्य पिण्डादत्यन्तभिन्नव्यवहारयोग्या जातिरभिप्रेतेत्यभिप्रायः। तत्राऽऽह। **द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति।** यौ तावदज्ञानसंशयवादिनौ, तयोः स्वरूपकथनमात्रेणैव निराकरणं वक्तव्यम्।

यस्तु विपरीतवादी तस्यैव निराकरणमभिधीयते। यद्यपि जातिर्व्यक्तेरत्यन्तभिन्ना नोपलभ्यते, तथाऽपि शबलाकारे तस्मिन्नुपलभ्यमाने सामान्यबुद्धेरालम्बनं प्रथमपादोक्तेन न्यायेनाऽऽकृतिः। इतरा व्यक्तिः। न चानेन ग्रन्थेन जातेः सद्भावः, प्रमाणं वा प्रतिपाद्यते। व्यक्तेर्विवेकः केवलं कथ्यते। तेनैवाभिप्रायेण मात्रशब्दप्रयोगः अन्यथा तस्य गतार्थतैव भवेत् यदप्युक्तं नूनं काऽप्यत्यन्तभिन्ना जातिरभिप्रेतेति। तस्याप्युत्तरं द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरभिप्रेता, नात्यन्तव्यतिरिक्तेति। द्रव्यादीनां च सर्वेषां यत्सामान्यं सत्तारूपं तदनेन निर्दिश्यते, तन्निर्देशेनावान्तरसामान्यानामपि निर्देशसिद्धिः।

यद्वा सामान्यशब्दस्य प्रत्येकसंबन्धाद् द्रव्यत्वादीनि त्रीणि सामान्यानि निर्दिश्यन्ते, सत्तया व्यवहाराभावात्।

अथ वा मात्रशब्दप्रयोगाद् द्रव्यादिषु यावन्त्यवान्तरसामान्यानि, महासामान्यं च तत्सर्वमभिधीयते। **असाधारणविशेषा व्यक्तिरिति** बहुव्रीहिः। असाधारणविशेषा यस्यां व्यक्तौ, सेयमसाधारणविशेषा, न त्वसाधारणाश्च ते विशेषाश्चेति सामाधिकरण्यं संभवति, उपरिष्टाद्विशेषाधारस्य व्यक्तित्वाभिधानात्। स्मृतेश्च[1]। तेन सम्यगभिहितं किमाकृतिर्वा व्यक्तिरिति।

---

१. नित्यद्रव्यवृत्तयो विशेषा इति स्मृतिः।

तत्र पूर्वपक्षः

किं प्राप्तम् । आलम्भन-प्रोक्षण-विशसनादिप्रयोगचोदनाया व्यक्तिपक्षे भावात्, अकृतिपक्षे चाभावात्, 'ब्राह्मणो न हन्तव्यः' 'सुरा न पातव्या' इत्यादिप्रतिषेधचोदनायाश्च व्यक्तिपक्ष एव संभवाद्देवदत्त गामभ्याजेत्येवमादिलौकिकव्यवहारचोदनायाश्चोपपत्तेर्व्यक्तिः शब्दार्थं इति निश्चीयते । संख्याकारकोपपत्तेश्च । यदि हि व्यक्तिः शब्दर्थो भवति, ततो वृक्षौ वृक्षाभ्यामिति प्रातिपदिकाभिहितासु व्यक्तिषु प्रत्ययाभिहितद्वित्वादिसंख्या, करणादिकारकं वोभयमुपपद्यते, इतरत्र तु जातेरसंख्येयत्वादकारकत्वाच्चोभयमप्यनुपपन्नम्[1] । लाक्षणिकव्यक्त्याश्रयणं चाऽऽपद्येताम् । तथा च सर्ववैदिकवाक्यार्थानां लाक्षणिकत्वं स्यात् । व्यक्तिपक्षे च पुरुषो देवदत्त इति मुख्यशब्दसामानाधिकरण्योपपत्तिः । जातिपक्षे लाक्षणिकद्वारं सामानाधिकरण्यं कल्पयितव्यं भवेत् । तेनापि व्यक्तेः पादर्थत्वमवसीयते । 'पशुमालभेत' इति च श्रुतेर्हृदयजिह्वादिभिर्व्यक्त्यवयवैरुपरिष्टाद् व्यवहारो दृश्यते, न जात्या । कर्मभिश्च द्रव्यस्यापेक्षितत्वाद् व्यक्तिपक्षेऽपेक्षिताभिधानम्, नेतरत्र । सिद्धस्वरूपायाश्च व्यक्तेरभिधेयत्वं युक्तम्, नाप्रसिद्धाया जातेः । अतो व्यक्तिः शब्दार्थः ।

किमित्युभयं वाच्यं नाऽऽश्रीयते, प्रयोगप्रतीतिक्रियोपपत्तेरिति चेत् ? न । अनेकशक्तिकल्पनाप्रसङ्गादेकाभिधानेनैव संबन्धादिरत्र प्रतीतेरुपपन्नत्वाद् व्यक्तेरेवाभिधेयत्वम् । सामान्यप्रत्ययः कथमिति चेद् ? व्यक्तिसंबन्धादुपपत्स्यते । यत्रैव क्रियानुपपत्तिः, तत्रैव वाऽर्थापत्त्या व्यक्तिवचनत्वं युक्तम्, अन्यत्र तु पूर्वं प्रतीतेर्जातिवचनत्वमेव न्याय्यमिति चेत् ? न । उक्तमार्गेणानेकशक्तिकल्पनादिदोषप्रसङ्गात् । अनवस्थितशब्दार्थसंबन्धापत्तेः, संशयापत्तेश्च । व्यक्तिवादिनः कथं निर्निमित्तता व्यक्त्यन्तरे शब्दस्य प्रवृत्तिरिति चेत् ? तदाकृतिचिह्ननिमित्तत्वाद् व्यक्त्यन्तरे प्रयोगस्याविरोधः ।

भाष्यकारस्तु **कथं सामान्यावगतिरित्युपन्यस्याऽऽकृतिश्चिह्नभूता भविष्यती**त्युत्तरं ददाति, तदसंबद्धम् । कथं सामान्यप्रत्ययकारणे[2] पृष्टे व्यक्त्यन्तरप्रयोगनिमित्तं कथ्यते । तेनाध्याहारेणैतद् व्याख्येयम् । कथं सामान्यावगतिरिति चेत् ? व्यक्तिसंबन्धात् । कथं व्यक्त्यन्तरे प्रयोगः ? चिह्नत्वादाकृतेरित्येवम् ।

यद्वा कथं सामान्यावगतिरिति चेदित्युपन्यस्ते, पूर्वपक्षवादी सामान्यावगतिमपह्नोतुमशक्नुवन्नाकृतिविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णात्याकृतिश्चिह्नभूता-

---

१. ब. संख्येयत्वाद् कारकत्वाच्चो । २. क. सामान्याप्रत्ययः कारणे ।

विशेषणभूताऽभिधेया भविष्यति। अतश्च तत्प्रतीतिरचोद्या। तेन केवला, विशिष्टा वा व्यक्तिः शब्दार्थः। तथा च 'षड् देया' इत्येवमादिषु षडादिका संख्योपपत्स्यते अन्यं तद्वर्णमिति[1] च व्यक्त्यन्तरेऽन्यशब्दोपपत्तिस्तद्धर्मता च भविष्यति। अन्यथा व्यक्त्यन्तरानयनेऽपि जातेरन्यत्वादगुणत्वाच्चोभयमनुपपन्नम्। तस्माद् व्यक्तिः शब्दार्थ इति प्राप्ते।

**सिद्धान्तः**

अभिधीयते। नैतत् शब्दवाच्येति; किं त्वाकृतिः पदार्थ इति विज्ञायते, 'श्येनचितं चिन्वीत' इति श्रवणात्। अत्र हि श्येनव्यक्तिं चयनेन कुर्यादाकृतिं वेति वाक्यार्थौ स्याताम्। यावदिष्टकाभिः[2] श्येनव्यक्तेः कर्तुमशक्यत्वात्, स्नाय्वादिभिरप्यनिर्वृत्तेरिष्टकाबाधाच्छ्येनव्यक्तेः प्रयोजनकल्पनाच्चिनोतेरमुख्यार्थत्वात् 'कर्मण्यग्न्याख्यायाम्[3] इति स्मृतिपरित्यागप्रसङ्गाच्च। चयनेन श्येनव्यक्तिं कुर्यादित्येवं तावन्नोपपद्यते। तथाऽऽकृतेरपीष्टकाभिः कर्तुमशक्यत्वात् दैवनिर्मितत्वात्, प्रयोजनकल्पनाच्चिनोतेरयथार्थत्वप्रसङ्गात्स्मृतिबाधाच्चाऽऽकृतिं कुर्यादित्यपि नोपपद्यते। परिशेषाच्छ्येनमिव चितमग्निस्थलं चयनेन निर्वर्तयेदिति वाक्यार्थः। ततश्च यथा कयाचिच्छ्येनव्यक्त्या सदृशस्याग्नेश्चेतुमशक्यत्वात्। सर्वव्यक्तिसादृश्यासंभवात्, अतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतिसादृश्यसंपत्तिसंभवाच्चाकृतिः शब्दार्थ इति निश्चीयते।

अथ कस्माच्छ्येनव्यक्तिभिश्चयनचोदनेयं नाऽऽश्रीमते 'श्येनचितं चिन्वीत' इति। तत्र भाष्यकारेणोत्तरं दत्तम् **'ईप्सिततमो ह्यसौ[4] श्येनशब्देन निर्दिश्यते'** इति। तदयुक्तम्। न ह्यत्र श्येनशब्दः स्वार्थः; न च सकलश्येनचिच्छब्दोत्तरकालं श्रुतत्वाद् द्वितीयायास्तदन्तो[5], येनेप्सिततमार्थप्रतिपादकः स्यात्। तेन कर्मण्यग्न्याख्यायामिति स्मृतेः श्येनशब्दार्थस्य करणत्वं निषेद्धव्यम्। कर्मणि हि कारके चिनोतेः क्विप्प्रत्ययः स्मर्यते। यदि चिनोतिरग्न्याख्या भवति। न च चिनोतेः केवलस्याग्निवचनत्वं संभवति। तेन क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्याग्निवचनत्वं निश्चीयते, न श्येनशब्दस्य पृथगर्थता। तेन न श्येनशब्दार्थः करणतया विज्ञायते। यदि वासौ करणं स्यात्ततो लक्षणाभावात्तृतीयासमासवचनानुपपत्तिर्भवेत्। तृतीया चाश्रुता कल्पनीया। श्रुतकरणत्वे इष्टकापरित्यागश्च

१. क. तद्वर्ण्यामिति। २. क. दिष्टकादिः।
३. पा० सू० ( ३-२-९२ )। ४. क. न ह्यसौ।
५. नच श्येनशब्दो द्वितीयान्त इत्यर्थः।

स्यात् । सत्यां च गतौ प्रतिषिद्धाऽनेकश्येनव्यक्तिहिंसा जायते, तेन करणत्वानुपपत्तेः **श्येनमिव चितमग्निं चिन्वीतेति** वाक्यार्थः । अतश्चोक्तेन न्यायेनाऽस्य वाक्यस्याऽऽकृतिपक्षे संभवादाकृतिः पदार्थं इति ।

नैतदेवम् । न हि चयनक्रियासंभवमात्रेणाऽऽकृतेरभिधेयत्वं लभ्यते, व्यक्तिपक्षेऽप्युपलम्भनादिक्रियासंभवात् । बहुत्वाद्यालम्भनादिवाक्यानां तदन्यथानुपपत्त्या व्यक्तेरेव पदार्थत्वमवसीयते । अथाकृतिपक्षेऽपि व्यक्तिलक्षणया तान्युपपत्स्यन्त इत्युच्यते, तदैतदपि[1] शक्यमेव वक्तुं श्येनवाक्ये व्यक्तिराकृतिलक्षणार्थेति । युक्ता चैकत्र लक्षणा, नेतरेषु बहुषु । अगत्या वा तृतीयासमासाश्रयणं श्येनवाक्ये करिष्यते । संख्याकारकाद्युपपत्तिश्च व्यक्तिपक्षे तेन व्यक्तिः शब्दार्थ इति स्थिते अभिधीयते जातिरभिधेयेति ।

कुतः—पूर्वं सामान्यविज्ञानाच्चित्रबुद्धेरनुद्भवात् ।
गामानयेतिवाक्याच्च यथारुचिपरिग्रहात् ॥ १०८२

गोशब्दोच्चारणे हि पूर्वमेवागृहीतासु व्यक्तिषु सामान्यं प्रतीयते तदाकारज्ञानोत्पत्तेः पश्चाद् व्यक्तयः प्रतीयन्ते अतश्चाऽऽकृतिप्रत्ययस्य निमित्तान्तराभावाद् व्यक्तिप्रत्यये च पूर्वप्रतीतसामान्यनिमित्तत्वादाकृतिः शब्दार्थ इति विज्ञायते । यदि च व्यक्तयोऽभिधेया भवेयुः ततः तासां चित्रखण्डमुण्डादिविशेषस्वरूपग्रहणाद्विचित्रा शब्दोच्चारणे बुद्धिः स्यात् । एकाकारा तूत्पद्यते । तेनाप्याकृतिः शब्दार्थं इति निश्चीयते ।

### सामान्यस्य वाच्यत्वसमर्थनम्

गामानयेति चोदितेऽर्थप्रकरणाभावे यां कांचित्सामान्ययुक्तां व्यक्तिमानयति, न सर्वाम्, न विशिष्टाम् । यदि च व्यक्तेरभिधेयत्वम्, ततः सर्वासां युगपदभिहितत्वादशेषानयनं स्यात् । या वाऽभिधेया सैवैकाऽऽनीयेत, यतस्त्वविशेषेण जातिमात्रयुक्ताऽऽनीयते । तेनापि सामान्यस्य पदार्थत्वं विज्ञायते ।

### व्यक्तेर्वाच्यत्वेऽनुपपत्तिप्रदर्शनम्

व्यक्तिपक्षे च सर्वा वा स्वतन्त्रा व्यक्तयोऽभिधीयेरन्, व्यक्तिविशिष्टो वा समुदायः, काचिद्वैका व्यक्तिरिति । तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम् । अनेकवाचकशक्तिकल्पनाप्रसङ्गादनित्यशब्दार्थसम्बन्धापत्तेरशेषव्यक्तिग्रहणाशक्तेश्च सम्बन्धाग्रहणे सति व्यवहारानुपपत्तेः । नित्यवद् गोशब्दस्याष्टशब्दवद् बहुविषयत्वादेक-

१. क. तदेतदपि ।

वचनद्विवचनश्रुत्यसम्भवाद् गोशब्दाभिहितासु च सर्वव्यक्तिषु शुक्लगुणाभावे गौः शुक्ल इति सामानाधिकरण्यासम्भवात्। 'पशुना यजेत' इति च पशुशब्दोपात्ताभिः सर्वव्यक्तिभिर्यागस्य कर्तुमशक्यत्वात्ततश्च वेदप्रामाण्यप्रसक्तिः।

### समुदायस्य वाच्यत्वनिरासः

एवं समुदायपक्षोऽपि न संभवति। तत्रापि हि विशेषणत्वेन व्यक्तयोऽभिधातव्याः ततश्चोक्तदोषप्रसङ्गः। व्यक्तिव्यतिरिक्तसमुदायकल्पना, तेन च व्यवहाराभावादभिधानानर्थक्यम्, समुदायिविनाशे च तस्याप्यनित्यत्वादनित्यशब्दार्थसम्बन्धप्रसङ्गः। समुदायस्य चैकत्वाद् द्विवचनबहुवचनानुपपत्तिः सामानाधिकरण्यासम्भवश्च चामूर्तेन यागाद्यसम्भवाद्वेदस्याप्रामाण्यम्।

अथैका व्यक्तिरभिधीयत इत्युच्यते ? तत्रापि सम्बन्धानित्यत्वम्। काऽसावभिधीयत इत्यज्ञानाद्व्यवहाराणामसम्भवः। सामान्यप्रत्ययानुपपत्तिर्द्विवचनबहुवचनाभावप्रसङ्गः। प्राक् चाभिधेयव्यक्त्युत्पत्तेरुत्तरकालं च प्रयोगासम्भवः। समाने च गोत्वे प्रतीतौ चेयभिधीयते, नेयमिति विशेषकारणं नास्ति।

### एतावता वार्तिकेन व्यक्तिसमुदायपक्षौ दूषयित्वा जातिपक्षः समर्थितः अपरभाष्यव्याख्यायाम्

अतः परं भाष्यार्थः। यदि चैका व्यक्तिरभिधेया भवेत्, व्यक्त्यन्तरे प्रयोगो न स्यात् अभिधेयव्यक्तेस्तत्राभावादत्यन्तविलक्षणत्वाच्च। सामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते। न च सामान्यविशेषौ मुक्त्वा व्यक्त्यन्तरेऽन्यदस्ति, येन शब्दप्रयोगः स्यात्। ननु च यथैवैका सामान्यविशेषविनिर्मुक्ता, तथा द्वितीया, यतश्च यथैवैकस्यां सामान्यविशेषविनिर्मुक्तायां शब्दस्य प्रवृत्तिः एवमविशेषादितरत्रापि भविष्यति। यदि सामान्यरूपम्, विशेषरूपं वा व्यक्त्यन्तरं स्यात् ततो विलक्षणत्वाच्छब्दो न प्रवर्तते यदा तु तदप्युभयविनिर्मुक्तं रूपम्, तदा तुल्यरूपत्वादयुक्ता शब्दस्य प्रवृत्तिरिति। यद्येवं सामान्यविशेषविनिर्मुक्तत्वादेकत्रेतरत्र च शब्दो वर्तते; हन्त तर्हि सामान्यविशेषविनिर्मुक्तत्वमेव सामान्यं शब्दस्याभिधेयं स्यादिति सिद्धो नः पक्षः। तस्याऽऽकृतिशब्दवाच्यत्वे केवलं भवतः प्रद्वेष इति।

पूर्वपक्षवाद्याह नैवं मयोच्यते सामान्यविशेषविनिर्मुक्तत्वाद् व्यक्तौ शब्दो वर्तते व्यक्त्यन्तरे वेति, किन्तु सामान्यविशेषव्यतिरेकेणान्यापोहवद्व्यक्तिः कथ्यते। तत्र कथं सामान्यमेव तर्हि वाच्यमित्युच्यते। यो ह्यर्थः सामान्यस्य

विशेषाणां चाऽऽश्रयः, सा व्यक्तिः न सामान्यविशेषौ ततश्च यथैवैकस्यां सामान्यविशेषव्यतिरिक्तायां व्यक्तौ शब्दस्य वृत्तिः यथाऽन्यस्यापि भविष्यति ।

सिद्धान्तवाद्याह—यदि तावत्सामान्यविशेषविनिर्मुक्तत्वाच्छब्दो वर्तते, ततः सामान्यमेव वाच्यम् । अथ समानं निमित्तं नास्ति, तदा व्यक्त्यन्तरे वृत्तिर्न प्राप्नोति । तदभावेऽपि चेद्वर्तेत, ततोऽश्वव्यक्तावपि वृत्तिप्रसक्तेरतिप्रसङ्गः स्यादिति । नैवम् । सामान्यनिरपेक्षायामेव शब्दप्रवृत्तौ प्रयोगकृतव्यवस्थाश्रयणान्नाऽतिप्रसङ्गो भविष्यति । यद्येवं प्रयोगवशेन शब्दो वर्तेत, ततोऽद्य जातायां गवि न दृष्ट इति शब्दो न प्रवर्तेत । तेन प्रयोगकृता चेद् व्यवस्था, क्वचिदप्रसङ्गः न चेदतिप्रसङ्ग इति ।

यत्तु भिन्नासु व्यक्तिषु सामान्यप्रत्ययो न प्राप्नोत्ययमपि गौः, अयमपीति तदिहातिप्रसङ्गापादनेन न संबध्यत इति व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीत्यस्मिन्नवसरे वक्तव्यम् । शक्त्या तर्हि व्यवस्था भविष्यति । यत्र शक्तः शब्दः तत्र वर्तिष्यते प्रयोक्ष्यते च, यत्र तु शक्तिर्नास्ति, तत्र प्रयोगप्रवृत्ती न भविष्यतः ततश्च गोव्यक्तिष्वेव शक्तेः प्रयोगव्यवस्था भविष्यति ।

नैवमपि व्यवस्था लभ्यते । प्राक् प्रयोगाच्छब्दशक्तेरविज्ञानात्प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानम् । तत्कथमिवाऽनुत्पन्नं प्रयोगकालेन व्यवस्थाकारणत्वेनाऽऽश्रयितुं युक्तम् । यद्यपि प्रयोगाच्छक्तिं जानाति, तथाऽपि प्रयोक्त्रा कथं ज्ञातं गोव्यक्तावयं शक्तः शब्दः नाश्वव्यक्ताविति, तेनाश्वव्यक्तावपि प्रयोगः प्राप्नोति ।

जात्या किमिति व्यवस्था नाऽऽश्रीयते यत्र गोत्वमुपलक्षणम्, तत्र शब्दो वर्तिष्यते, यत्र तन्नास्ति, तत्राश्वव्यक्त्यादौ वृत्तिर्न भविष्यति ततश्च व्यवस्थासिद्धिरिति । सत्यमेवं सिध्यति, किं त्वापन्नो भवानस्मत्पक्षमाकृतिर्वाच्येति । न ह्यनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोगव्यवस्था लभ्यते, तच्चेदमभिहितं सिद्धमाकृतिशब्दार्थत्वमिति ।

पूर्वपक्षवादी तु द्वितीयं पूर्वपक्षमुपन्यस्यति सत्यमाकृतिरभिधीयते, किं तु गुणत्वेन स्थिता, व्यक्तिः प्राधान्येन शब्दार्थः । न चाऽऽवयोरुभयं नाभिधीयत इति प्रतिज्ञा । कस्यचित्प्राधान्येन किंचिदभिधेयतया विवक्षितम्, किंचिद् गुणत्वेन, तदुक्तं **व्यक्तिः प्राधान्येनाभिधेयेति** । एवं सति प्रयोगव्यवस्थोभयप्रतीतिश्च तथाऽऽलम्भनादिक्रियोपपत्तिश्च भविष्यति ।

इतरस्त्वाह---नैवं लभ्यते। जातिश्चेत्पूर्वमभिधेयत्वेनाभ्युपगताऽत्रैव शब्दस्योपक्षीणशक्तित्वान्न व्यक्तिवचनता लभ्यते। न चाऽऽकृतिसंवेदनेनापि व्यक्तिप्रतीतेरन्यथाऽप्युपपन्नत्वात्सत्यां गतावनेकार्थता युज्यतेऽभ्युपगन्तुम्। अर्थापत्त्या च शब्दस्य वाचकशक्तिः कल्प्यते। सा च यदा व्यक्तिप्रतीतेरन्यथाऽप्युपपन्नत्वात् क्षीणा, तदा वाचकशक्तिकल्पनायां प्रमाणं नास्ति। न च सामान्यविशेषवचनत्वं शब्दस्य दृष्टम्, अक्षादिशब्दानामनेकसामान्यवचनत्वात्। अन्वयव्यतिरेकाभ्यां च व्यक्तेरशब्दार्थत्वं निश्चीयते। अनुच्चरितेऽपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेः श्रुतशब्दस्य चाऽगृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्तेनाऽऽकृतिरेव शब्दार्थ इति।

साम्प्रतं पक्षान्तरमुपन्यस्यति अथ व्यक्तिविशिष्टायामाकृतौ किमिति न वर्तते। तदेतत् प्रयोगप्रतीतिक्रियासंभवत्वेन वा पक्षान्तरमुपन्यस्तम्। यद्वा व्यक्तेरेव शब्दार्थत्वं साधयितुमिदमुच्यते। अनेनाभिप्रायेण कदाचित्सिद्धान्तवाद्याकृतेः शब्दार्थत्वमनेनाभ्युपगतमेवाऽऽलम्भनादिक्रियासंभवश्च भविष्यतीत्यनेनाभिप्रायेण व्यक्तेरपि गुणत्वेनाभिधानमिच्छति। ततोऽहं पूर्वं तावद्विशेषणे वर्तितुमर्हतीति व्यक्तिवचनत्वमेव साधयिष्यामीति।

इतरस्तु—तदभिप्रायं ज्ञात्वोत्तरं वदति व्यक्त्यन्तरविशिष्टायां प्रयोगो न प्राप्नोति। यदि हि व्यक्तिविशिष्टा जातिरभिधीयते, ततो व्यक्त्यभिधानपक्षोक्तदोषप्रसङ्गः, अनेकशक्तिकल्पनादिरूपो व्यक्त्यन्तरे प्रयोगश्च न प्राप्नोति, विशेषणस्यान्यत्वादिति, तेन जातिरेव शब्दार्थः।

ननु गुणभूता प्रतीयते, अतश्चान्येन प्रधानेनाभिधेयेन भवितव्यमिति। नैवं शब्देन तावत्सैवाऽभिधीयते। यदि विवक्षावशेनार्थाद् गुणत्वम्, प्राधान्यं वा भवति, भवतु नाम। न तावता शब्दाभिधेयत्वं व्याहन्यते। यदा चासौ शब्देनाभिधीयते, तदा गुणत्वं नैव प्रतीयते। तेनार्थाद् गुणत्वप्रतीतिरदोषः। ननु पूर्वपक्षोक्तैः कारणैर्व्यक्तेरेव शब्दार्थत्वं युक्तम्, व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीति चेत्? आकृतिचिह्नभूता भविष्यति। यथाऽनभिधीयमानमपि काकनिलयनं देवदत्तगृहशब्दस्य स्वार्थमभिदधतश्चिह्नभूततां प्रतिपद्यते, तद्वदाकृतिश्चिह्नं व्यक्त्यभिधाने भविष्यति।

भाष्यकारेण तु दण्डिशब्दो दृष्टान्तत्वेनोपात्तः। यथा तेन न नाम किल दण्डोऽभिधीयते। अथ च दण्डविशिष्टः पुरुषः प्रत्याय्यते, तद्वदाकृतावपीति। ननु दण्डिशब्दे प्रकृत्या दण्डोऽभिधीयत एव। कथमुच्यते न च तावद्दण्डोऽभिधीयत

इति ? कथं चोपलक्षणत्वेनाऽऽकृतावुपन्यस्तायां विशिष्टः प्रत्याय्यत इति विशेषणं दृष्टान्ततयोपन्यस्तामिति ? नायं दोषः। विशेष्याभिधायकप्रत्ययाभिप्रायत्वाद्दण्डानभिधानस्य, यथा प्रत्ययेन, न च तावद् दण्डोऽभिधीयते। अथ च तद्विशिष्टः पुरुषः प्रत्याय्यत, तथेहापि भविष्यतीत्यभिप्रायः। यत्तूपलक्षणोपन्यासे विशेषणस्य दृष्टान्तता न युक्तेति। तदुपलक्षणस्यापि विशेषकत्वान्न चोद्यम्। यद्वा केनचित्सामान्येन दृष्टान्तता भविष्यत्यनभिधेयत्वेन विशेषकत्वेन चेत्यदुष्टम्, ततश्च सम्यगभिहितं यथा दण्डिशब्दे, तद्वदत्रापि भविष्यतीति। एवं चाप्रसङ्गातिप्रसङ्गौ न भविष्यत इति।

तदेतन्न युज्यते। युक्तं देवदत्तगृहस्य, पुरुषस्य च केवलस्याभिधानम्, विशिष्टप्रतीतावपि काकनिलयन-दण्डयोः प्रत्यक्षदण्डशब्दावगतयोर्विशेषणत्वोपपत्तेः। न तु गोत्वस्यासंनिहितस्येहोपलक्षणत्वं युज्यते। अप्रतीतविशेषणं विशेष्याप्रतीतेर्न च दण्डिशब्दवत्तदवयवेन गोत्वाभिधानं प्रतीमः, येन द्वितीयावयवेन व्यक्तेरेवाभिधानं स्यात्। अतश्च यदि तावद्गोत्वमभिधीयते, ततस्तदेवोक्तेन न्यायेन वाच्यं भवेत्। अप्रतीतस्य विशेणत्वासंभवात्। उक्तवदतिप्रसङ्गः शब्दप्रयोगस्य प्राप्नोति। न च यथा दण्डिशब्दः केवले दण्डे न प्रयुज्यत इति विशिष्टवचनोऽवधार्यते, तद्वदाकृतौ प्रयोगाभावाद्विशिष्टवचनोऽवधारयितुं शक्यते। श्येनचित्यादावाकृतौ प्रयोगदर्शनादन्वयव्यतिरेकाभ्यां च जातिरेव वाच्येत्यवधार्यते। श्येनचिद्वाक्ये केवलायामाकृतौ प्रयुक्तत्वात्। क्वचिदपि चाऽऽकृत्या विना व्यक्तिमात्रे प्रयोगादर्शनात्। एवं येऽपि सम्बन्धसमुदायादयः पूर्वपक्षाः। तेऽप्युक्तेन न्यायेन निराकृताः। तेनाऽऽकृतिरेव शब्दार्थ इति ॥ ३३ ॥

न्या० सु०—अन्यदर्शनाच्चेति पूर्वपक्षसूत्रान्तरगतभाष्यं स्पष्टत्वादुपेक्ष्य, आकृतिस्तु क्रियार्थत्वादिति सिद्धान्तसूत्रव्याख्यानार्थं वचनमाकृतौ सम्भवतीति भाष्यं दुष्टत्वसामान्येन बुद्धिस्थमपठित्वैव दूषयति—किं चेति। न केवलमेतदेव भाष्यमुपेक्षितव्यं किं त्वन्यदपीति किं च शब्दार्थः यद्वा कस्मै देवाय हविषा विधेमेत्येकशब्दार्थे किमो व्याख्यानात्, एकशब्दस्य चापो भूयिष्ठा इत्येको अब्रवीदित्यन्यार्थदर्शनादन्यच्च भाष्यमुपेक्षितव्यमित्यर्थलाभः। किमित्युपेक्षितव्यमित्यपेक्षायाम् नैवेत्युक्तम्। नैवाकृतिस्तु क्रियार्थत्वादिति वदता सूत्रकृतेष्टकाभिराकृतिसम्पादनमभ्युपगतम्, येन च यत्र साऽऽकृतौ सम्भवतीत्येवं सूत्रव्याख्या युज्येतेत्यर्थः। किमिति नाभ्युपगतमित्याशङ्क्याह—यत इति। स्वरूपेण जातेर्नित्यत्वात्स्वव्यक्तिभूतद्रव्यसमवायित्वेन सम्पादनं वाच्यम्। तदपि नित्येष्वात्मादिषु नित्यसिद्धत्वान्न सम्पादनमपेक्षते। कृतकेष्वप्यारम्भकहेतुस्वभावादेव ब्दारब्धे द्रव्ये जातिसम-

वायाच्छ्येनत्वजातीयव्यक्त्यनारम्भिकाभिरिष्टकाभिः श्येनत्वजातिसम्पादनमयुक्तमित्येवंरूपस्योपालम्भस्य दोषस्येष्टकाभिः श्येनत्वाकृतिसम्पादनाभ्युपगमे प्रसङ्गान्नेदमभ्युपगतमित्यर्थः।

कस्तर्हि श्येनवचनचोदनार्थ इत्याशङ्क्याह—पिष्टेति। अमी पिष्टपिण्डाः सिंहाः कार्या इत्युक्ते पिष्टपिण्डेन सिंहाकृतिव्यक्त्योः सम्पादनाशक्तेर्यथा पिष्टपिण्डानामेव सिंहाकृतिसादृश्यसम्पादनं चोदनार्थः तथात्रापीत्यर्थः। प्रयोज्यव्यापारवाचिना सम्पत्तिशब्देन प्रयोजकव्यापारः सम्पादनं लक्ष्यते। नन्वाकृतेर्नित्यत्वे सम्पाद्यत्वाभावात्तद्वाचित्वे श्येनशब्दस्य सादृश्यपरत्वेन गौणत्वापत्तेस्तत्परिहाराय व्यक्तिपक्ष एवात्राश्रीयते। श्येनव्यक्तेश्च यत्नेनानुत्पाद्यत्वेऽपि श्येनस्त्रीपुंसयोगेनोत्पादयितुं शक्यत्वात्प्रथमश्रुतश्येनशब्दानुरोधेन च पश्चाच्छ्रुतस्य चिनोतेस्तल्लक्षणार्थतया व्याख्यातुं शक्यत्वादित्याशङ्क्य—पक्षद्वयेऽपीत्युक्तम्। श्येनस्त्रीपुंसयोगेनोत्पादिताया अपि श्येनव्यक्तेरग्न्याधारत्वायोगेनाग्न्याधारानुपपत्तेः। 'कर्मण्यग्न्याख्यायामिति स्मृतिबाधप्रसङ्गाददृष्टार्थत्वापत्तेश्च तत्परिहाराय गौणत्वाश्रयणमप्युचितमित्याशयः। नन्वेवं सति व्यक्तिसादृश्यस्यापि सम्पादयितुं शक्यत्वात्कथमस्य श्येनशब्दस्याकृतिवाचित्वेन निश्चय इत्याशङ्क्याह—सा त्विति। सा सादृश्यसम्पत्तिः श्येनाकृत्यास्या आकृत्यन्तरमात्रविलक्षणत्वात्, तस्य च कतिपयविशेषोपादानेन सम्पादयितुं शक्यत्वात् सकलव्यक्त्यन्तरविलक्षणेन श्येनविशेषेण व्यक्तिशब्दाभिलप्येन सादृश्यसम्पादनं सकलविशेषोपादानेन स्यान्न चेष्टकाभिरत्यन्तकुशलेनापि सम्पादयितुं शक्यमिति भावः।

अथ सामान्यविशेषाश्रयभूतमसाधारणं व्यक्तिशब्देनाभिप्रेतम्, ततस्त्वस्यैवंविधमिति निरूपणरूपविकल्पगोचरत्वाभावाज्ञानेन सह विकल्पगोचरस्य सादृश्यसम्पादनं कथंचिच्छक्यमित्यर्थः। ननु यद्यपि सामान्यविशेषाश्रयस्य व्यक्त्याख्यस्यासाधारणस्य रूपेणैवंविधमिति विकल्पागोचरत्वात्सादृश्यप्रतियोगित्वं न सम्भवतीति विशेषावच्छिन्नेन च तेन सादृश्यमिष्टकाभिरशक्यसम्पादं सामान्यावच्छिन्नेन च सादृश्यमुच्यमानं विशेषणे पूर्वनिपातात्सामान्येनैवोक्तं स्यात् तथापि सामान्यविशेषाभ्यामन्यदित्येवंरूपविकल्पगोचरत्वोपपत्तेरसाधारणशब्दाभिलप्यया व्यक्त्या सह सादृश्यं सम्पादयिष्यत इत्याशङ्क्यानिर्धारितविशेषया यया कयाचिद्व्यक्त्या सादृश्यं (विधीयेत निर्धारितविशेषया वा यया कयाचिदिति विकल्प्याद्यपक्षे तावद् दूषणमाह—सामान्येति। सामान्यविशेषावच्छेदकत्वेन यन्नापेक्षते सादृश्यं[1]) तत्तथोक्तम्। तच्च व्यतिमात्रेऽपि नित्यप्राप्तं सर्वस्य येन केनचित्सादृश्यावश्यंभावादित्यर्थः। श्येनव्यक्त्या यया कयाचिदपि तु विशेषणे श्येनत्वाकृतिव्यतिरिक्तस्य

१. अयं पा० २ पु० ना०।

श्येनव्यक्तिमात्रस्याभावाच्छ्येनत्वाकृतिसादृश्यमेवोत्पद्यते इति भावः। द्वितीयपक्षे तु यद्वयक्तिसादृश्यं विहितम्, तद्दर्शिभिस्तत्सादृश्यस्याशक्यसम्पाद्यत्वाद्वयक्त्यन्तरसादृश्यस्य चाविहितत्वात्सर्वपुरुषविषयत्वं शास्त्रस्य व्याहन्येतेत्याह—एकेति। सूत्रार्थमुपसंहरति—तस्मादिति।

ननु चेति भाष्येण श्येनव्यक्तेश्चयनोत्पाद्यत्वायोगेऽपि चयनोत्पादकत्वेन विधिः सम्भवति, एकव्यक्त्यनुत्पाद्यत्वेऽपि चयनस्य बह्वीभिरुत्पादयितुं शक्यत्वादित्याशङ्क्य न साधकतम इत्यनेन श्येनशब्दार्थस्येप्सिततमत्वावगतेः साधनत्वेन विधिर्न सम्भवतीत्युक्तम्। तदुपपादयति—न हीति। यद्यप्ययं कर्मशब्दः क्विप्प्रत्ययवाच्यविशेषणत्वान्नोपपदविशेषणम्, तथापि कर्मणि हन इत्यतः सूत्रादनुवर्त्तमानस्य कर्मशब्दस्योपपदविशेषणत्वान्न शब्दार्थस्य कर्मतावसीयत इत्याशयः। अतश्चयनेनेति विध्यर्थप्रतिपादकं भाष्यं व्याचष्टे—श्येनमिति। ननु श्येनाकृतिव्यक्त्योश्चयनेनोत्पादयितुमशक्यत्वात्कथमेष विध्यर्थः स्यादित्याशङ्क्योक्तमेव सादृश्यलक्षणार्थत्वं भाष्यकाराभिप्रेतत्वप्रदर्शनार्थं पुनराह—तत्रापीति। श्येनसदृशं चीयमामिष्टकासमूहं चयनेन भावयेदिति विध्यर्थोऽनेन दर्शितः। चयनमाकृतौ सम्भवतीत्याद्यस्यापि भाष्यस्य सादृश्यविषयत्वेन समर्थनोपपत्तेर्यथाश्रुतस्यैव पूर्वोक्तं दूषणं दर्शितम्। उभयत्रेत्यादिना क्रियार्थत्वस्योभयत्र साम्येनानिश्चायकत्वमाशङ्क्य, किं पुनरत्रेत्यनेन पूर्वपक्षहेतोरनिश्चायकत्वापादनायैवाकृतेः क्रियार्थत्वमुक्तम्, नाकृतिवाच्यत्वनिश्चयायेति सूचितम्। तत्स्पष्टत्वादव्याख्याय कथं तर्ह्याकृतिवाच्यत्वनिश्चय इत्यपेक्षायामाकृतिस्त्विति तुशब्दसूचितोपपत्तिप्रदर्शनार्थमाकृतिरित्यादिभाष्यमाकृतिवाच्यत्वं प्रतिज्ञाय व्यक्तिवाच्यत्वपारिशेष्यादनिराकरणाद् युक्तमाशङ्क्य संक्षेपेण व्याचष्टे—असाधारण इति। व्यक्त्याकृत्योर्मध्ये का वाच्येति विचारणायां व्यक्तिवाच्यत्वे निराकृते पारिशेष्यादाकृतिवाच्यत्वं निश्चीयत इति भावः।

ग्रन्थस्त्वेवं योज्यः असाधारणे व्यक्त्याख्ये यदा शब्दप्रवृत्तिर्न सम्भवति, तदा पारिशेष्यादाकृतिः शब्दार्थ इति परिग्रह इति पूर्वग्रन्थगतं परिग्रहपदमनुवक्तव्यं शब्दार्थपदं चाध्याहार्यं कथं व्यक्तौ शब्दस्य प्रवृत्त्यसम्भव इत्याशङ्कानिराकरणार्थत्वेन यदितिभाष्यं व्याख्यातुमसाधारणे वाच्येऽङ्गीक्रियमाणे शब्दस्य प्रभूतेष्वनेकेष्वर्थेषु वृत्त्यसम्भवादित्येतदेवावृत्त्या योज्यम्। असाधारणत्वाच्च व्यक्तेरेकस्यामपि शब्दप्रवृत्तिर्न सम्भवतीति भाष्यसूचितार्थप्रदर्शनायासाधारणशब्दः। सर्वसामान्यविशेषैर्मुक्ता हीत्यनेनैकापि व्यक्तिर्न शब्दार्थ इत्युक्तमिति व्याख्यानार्थत्वेन चैतद्योज्यम्। किंचिद्धि सामान्यरूपं किंचिद्धि विशेषरूपं वावलम्ब्य शब्देन प्रवर्त्तितव्यं तद्वियुक्ते रूपं कथं प्रवर्त्ततेत्याशयः। ननु सामान्यविशेषरूपशब्दप्रवृत्तिनिमित्ताभावेऽपि तदुभयरूपरहितत्वमेव निमित्तं भविष्यति। न च तदेव सामान्यम् वस्तुरूपत्वादिति 'नैष दोष इत्यादिना न हि तत्सामान्यमित्यन्तेन

भाष्येणाशङ्क्य सामान्यविशेषरूपरहितत्वस्य तदाश्रयाव्यपदेश्यत्वापरपर्यायस्याश्वादिव्यक्तिष्वपि भावाद् गोशब्दप्रवृत्तिः प्रसज्येतेति प्रतिपादनार्थं यदीति भाष्यं व्याख्यातुम्—अव्यपदेश्यत्वेन चेत्युक्तम्। ननु सामान्यविशेषविमुक्तत्वाविशेषेऽप्यगादिशब्दवत्प्रयोगतो व्यवस्था भविष्यतीत्याहेतिभाष्येणाशङ्क्य तथा सत्यद्यजातायाङ्गव्यदृष्टप्रयोगत्वात्प्रथमः प्रयोगो न स्यादिति यदीत्यनेन दूषणमुक्त्वा कथंचित्प्रयोगसम्भवेऽपि व्यवहारकालीनस्य प्रयोगस्य निर्द्धारितैकव्यक्तिविषयत्वेनानेकव्यक्तिसाधारण्याभावाद् गौर्न पदा स्पृष्टव्येत्यादौ शाबलेया बाहुलेया वेति विकल्पबुद्धिः स्यान्न गोमात्रमिति सामान्यबुद्धिरित्येतदर्थं प्रतिपादकं सामान्यप्रत्ययश्चेति भाष्यं व्याख्यातुम्—सामान्याकारेण वेत्युक्तम्। गौर्न पदा स्पृष्टव्येत्यादौ यत्र सामान्याकारेण व्यक्तिविशेषमनाश्रित्य शब्दः प्रयुज्यते, तत्र विकल्पः प्रसज्येतेत्यर्थः। ननु व्यक्तिवाचिनोऽपि शब्दादभिधेयाविनाभावेन सामान्यप्रत्ययोपपत्तिरित्याशङ्क्य—व्यापकेत्युक्तम्। गोत्वैकार्थसमवायिनां शाबलेयत्वाद्यवान्तरसामान्यरूपाणां विशेषाणां गोत्वव्याप्यत्वाश्वव्यापकगोत्वापेक्षामात्रेणेतरत्र तदाश्रयभूतमसाधारणं व्यक्तिशब्दाभिलप्यं नैव गोत्वापेक्षं भवति। इतरेति पाठे त्वसाधारणशब्देनोक्तत्वात् व्यक्तिः परामृश्यते। ननु विशेषाणां गोत्वापेक्षत्वे तदाश्रयस्यासाधारणस्याप्यव्यभिचाराद् गोत्वापेक्षाबलादापद्येतेत्याशङ्क्य व्याप्यस्य धूमत्वसामान्यस्य व्यापकाग्न्यपेक्षत्वेऽपि तदाश्रयस्यासाधारणस्याग्न्यपेक्षा नास्ति। वाक्यादिभावेन सन्दिग्धे धूमे असाधारणनिश्चयेऽप्यनिश्चयादिति प्रतिपादयितुम् व्याप्यसामान्यस्य नैवं विशेषव्याप्यापेक्षयेत्युक्तम्। नन्वसाधारणरूपेण व्यक्तेः शब्दार्थत्वासम्भवेऽपि शाबलेयत्वाद्यवान्तरसामान्यात्मकविशेषावच्छिन्नत्वरूपेण शब्दार्थत्वोपपत्तेः कथं पारिशेष्यादाकृतेः शब्दार्थत्वावधारणेत्याशङ्क्याह—तत्रेति। तत्रैवं साधारणरूपेण शब्दप्रवृत्त्यसम्भवे सति विशेषावच्छिन्नत्वरूपेण व्यक्तेरभिधेयं वाच्यम्, तस्मिंश्च पक्षे सम्बन्धकथनासम्भवादयो दोषाः स्युरित्यर्थः। वाच्यवाचकनियमहानिः, सम्बन्धानित्यत्वापत्तिः विकल्पप्रसङ्गः, शेषव्यक्त्यानयनापत्तिः। नित्यबहुवचनप्रसङ्गशुक्लादिशब्दसामानाधिकरण्यासम्भवश्चादिशब्देनोपात्ताः। एते च व्यक्त्यभिधानपक्षे, सर्वव्यक्त्यभिधानपक्षे च यथासम्भवं योज्याः। अनिश्चीयमानत्वादपि न विशेषाणां वाच्यतेत्याह—न चेति।

नन्वेवमपि विकल्पसमुच्चयाद्यनेकपक्षसम्भवान्नाकृतेः परिशेषसिद्धिरित्याशङ्क्य स्वतन्त्रयोर्विशेषणविशेष्यभावरहितयोस्तावद्व्यक्त्याकृत्योर्विकल्पेन, समुच्चयेन वाभिधाननिरासेनैव निरस्तमित्याह एतेनेति। व्यक्तिविशिष्टाकृतिपक्षोऽपि व्यक्तेर्विशेषणत्वेन पूर्वाभिधानापत्तेस्तन्निरासेनैव निरस्त इत्याह—व्यक्तीति। एतेन प्रयुक्त इत्यनुषङ्गः। आकृतिरिति पाठे प्रयुक्तेति विपरिणतानुषङ्गः सम्बन्धसमुदायाभिधानपक्षौ निराकर्तुमाह—सम्बन्धेति। सम्बन्धसमुदाययोरपि वाच्यत्वाभ्युपगमेऽवश्यवाच्यभूतसम्बन्धिसमुदायिविशेषणताऽभ्युपगन्तव्या भवतीत्यन्वयः। कस्मादित्यपेक्षिते—स्वरूपेत्युक्तम्। सम्बन्धोऽयम्, समुदायोऽयमिति स्वतन्त्ररूपेणाप्रतीतेः सम्बन्धिसमुदायिनिरपेक्षस्य सम्बन्धसमुदायनिरूपण-

स्यादावविभागेन सर्वशब्दानां पर्यायत्वापत्तेरित्यर्थः। तथा सति को दोष इत्यपेक्षायामाह—तत्रापीति। व्यक्त्यंशे च व्यक्त्यभिधानपक्षोक्ताः सर्वे दोषाः स्युरित्याह—व्यक्त्यंशे चेति। समुदायस्य यस्य स्पर्द्धमानैककार्यपरार्थविषयत्वात्साक्षात् क्रियानिष्पत्तिः क्रियासाधनविशेषणात्मकभिन्नकार्ययोर्विशेषणत्वेन विशेष्यत्वेन वा स्पर्द्धमानयोर्व्यक्त्याकृत्योर्नास्त्येवेत्याह—न चेति। जातिव्यक्त्योश्चात्यन्तभेदाभावादुभावपि न स्त इत्याह—अनत्यन्तेति। आकृतिविशिष्टव्यक्तिपक्षेऽपि व्यक्तिविशिष्टो वा, आकृतिविशिष्टो वा व्यक्तिमात्रं वा विकल्प्य आद्यपक्षं तावद् दूषयति—आकृतीति। द्वितीयपक्षे त्वाकृतिव्यतिरिक्ततद्विशिष्टव्यक्तिमात्राव्यक्त्यभावात्सिद्धान्तापत्तिरिति स्वयमेवाशङ्क्याह—व्यक्तीति। एवमाकृतिव्यतिरिक्तायास्सप्तपक्ष्या निरस्तत्वात्। तन्निरासेनैव च व्यतिकीर्णपक्षनिराससिद्धेर्लिङ्गकारकसंख्यानां च प्रत्ययार्थत्वेन प्रातिपदिकवाच्यत्वासिद्धेः शब्दस्वरूपस्य च प्रत्यक्षसिद्धत्वेनाऽवाच्यत्वस्य।

नात्मानमभिधत्ते हि शब्दः कश्चित्कदाचनेति शून्यवादवार्त्तिकपाठनिरस्तत्वात्पारिशेष्यादाकृतिवाच्यत्वसिद्धिरित्युक्तम्—इदानीम्।

'तत्र प्रयोगबाहुल्यात्तद्विशेषेषु सत्स्वपि।
प्रयोगात्परसामान्ये सति वाऽप्यप्रयोगतः॥
सास्नाद्येकार्थसम्बन्धिगोत्वमात्रस्य वाचकः।
गोशब्द इति विज्ञानमन्वयव्यतिरेकजम्॥'

इत्यनेन न्यायेनान्वयव्यतिरेकाभ्यामपि गोत्वस्यैव गोशब्दवाच्यताऽवसीयत इत्याह—नानेति। गोत्वाकारविषयैव गोशब्दस्य वाच्येन सह सम्बन्धे वाचकत्वरूपे शक्तिरन्वयव्यतिरेकाभ्यां गम्यत इत्यर्थः।

कृत्तद्धितसमासैः सम्बन्धाभिधानं भावप्रत्ययेनेति स्मृतेः। सम्बन्धवाची वाच्यत्वशब्दः। शब्दशक्तिजन्यज्ञानकर्म्मत्वमेव वा शक्तिशब्देनाभिप्रेत्य, गोत्वाकाराश्रितैव गोशब्दं प्रति वाच्यत्वरूपा शक्तिरिति योज्यम्।

ननु वृद्धव्यवहारावसेयत्वाच्छक्तेः, तस्य च सन् द्विष्ठवस्तुविषयत्वात् कथं निष्कृष्टैकाकारविधया शक्तिरवसीयत इत्याशङ्क्य तद्भेदेत्युक्तम्। सर्वात्मकवस्तुविषयत्वे शब्दशक्तेरेकेनैव गोशब्दादिना सर्वात्मकवस्तुप्रतीतिसिद्धेः शुक्लादिशब्दानर्थक्यप्रसङ्गात् तदभेदाद्वस्तुगतान् भिन्नाकारांश्छब्दशक्तयोऽनुसरन्तीत्यर्थ। भिद्यन्त इति भेदा इति व्युत्पत्त्या वस्तुगता भेदा इति विग्रहीतव्यं वस्तुगतभिन्नाकारानुसाराभावेनैकशब्दव्यक्त्यानर्थक्यप्रसङ्गाद् बहुवचनेन सूचितः। निरंशवस्तुवादिनं निराकर्त्तुं—नानाकारेष्वित्युक्तम्। नानेकाकारेष्विति पाठे व्यावृत्तानुवृत्ताकारेष्वित्यर्थः।

ननु गोमात्रविषयत्वे गोशब्दशक्तेः कथं गोशब्दात्पशुत्व-प्राणित्व-पार्थिवत्व-द्रव्यत्व-सत्त्वावगतिः। एकार्थसमवायमात्रेण तन्निश्चयाभ्युपगमे शाबलेयत्वादीनामपि निश्चयः

स्यादित्याशङ्क्याह—तदेकेति । सामान्यान्तरावगतिनिश्चयस्तैः सामान्यान्तरैर्गोशब्दार्थस्य गोत्वस्य व्याप्तेर्विशेषैश्च साहचर्ये सत्यप्यव्याप्तेस्तेषां सन्देहनिवृत्तयेऽन्यतोऽवधारणाकाङ्क्षेत्यर्थः ।

एवं सिद्धान्तमुपपाद्य, पूर्वोक्तान् दोषान्परिहर्त्तुमाह—अनत्यन्तेति । आदिशब्ददानित्यत्वम् । ननु वस्तुतोऽत्यन्तव्यतिरेकाभावेऽपि शब्दान्निकृष्टावगतेः कथं दोषप्रसङ्गाभावोऽत आह—सा हीति । कैवल्याभिप्रायो निकृष्टशब्दो न स्वनिष्ठत्वाभिप्रायः । यद्यप्याकृतिः शब्दाच्छुद्धा प्रतीयते, तथापि क्रियान्वयस्यापि प्रतीतेस्तदन्यथानुपपत्त्या व्यक्तितादात्म्यावगमात्सम्भवत्येव क्रियान्वय इत्यर्थः । प्रोक्षणादि तु व्यतिरेकेऽपि सम्भवतीत्याह—प्रोक्षणेति । क्षरणार्थसिञ्चतिधात्वर्थवाचित्वादुक्षतेः क्षार्यस्य चोदकादेरूर्ध्वाधोदेशविभागसंयोगमात्रेण सिद्धेराभिमुख्यमात्रेण क्षरणसिद्धिराभिमुख्यमात्रेण च जातेरपि द्रव्यवत्कर्म्मत्वोपपत्तेः । सिच्यमानस्योदकादेः कर्मीभूतव्रीह्यादिसंयोगानपेक्षणात्पुञ्जीकृतेषु च व्रीह्युपरिस्थितव्रीहितिरोहितानामधःस्थितानां व्रीहीणां सिच्यमानोदकसंयोगाभावेऽपि शास्त्रार्थनिष्पत्तिप्रसिद्धेः व्रीह्यादिसंयोगापेक्षायामनुपपत्तेः प्रोक्षणमाकृतेः स्वतोऽपि सम्भवति । अवेक्षणं चाकृतेश्चक्षुःसंयुक्तद्रव्यसमवायात्प्रसिद्धमेव । आदिशब्देन ध्यानोपादानम् । किमर्थं तर्ह्यव्यतिरेकोपन्यास इत्याशङ्क्याह—विशसनादीति । प्रतीतिसिद्धत्वादाकृतेर्विशसनादियोगो न स्वमनीषिकामात्रकल्पित इत्याह—तथा हीति । पश्वादिष्वपनीताङ्गेषु विच्छिन्नावयवेषु या विशसनादिविशिष्टा बुद्धिः सामान्यविषयैव विभक्तैरवयवैः सामान्यमात्रानुमानोपपत्तेः । न तु व्यक्तिविषया व्यक्तिविशेषानुमानासम्भवे तत्तद्बुद्ध्यभावादित्यर्थः ।

नन्वाकृतेर्विशसनादियोगे सत्यत्वप्रसङ्गादनिष्टापत्तिः स्यादित्याशङ्कते—नन्विति । विनष्टव्यक्त्यात्मकरूपेणाकृतेरपि विनाशाभ्युपगमान्नानिष्टापत्तिरिति परिहरति—तेनेति । नन्वेवं सत्याकृतिपक्षेऽपि सम्बन्धनित्यत्वं न सिद्ध्येदित्याशङ्क्याह—आश्रयान्तरेति । अत्यन्तव्यतिरेकवादिनाप्यन्तरालेऽनुपलम्भात् स्वपिण्डमात्राश्रिताकृतिरेष्टव्या । तस्याश्चाश्रयविनाशे स्थातुमशक्तेरन्यत्र च गमनायोगादवश्याङ्गीकरणापत्तेराश्रयान्तराविनाशादेव नित्यत्वमेष्टव्यमिति—सर्वैरित्यनेनोक्तम् । एतदेव विवृणोति—तेनेति । नन्वत्यन्तव्यतिरेकेऽप्याकृतिलक्षितव्यक्तिद्वारेण प्रयोगचोदनोपपत्तेरित्यन्तक्लिष्टभेदाभेदपक्षाश्रयणमित्याशङ्क्याह—अत्यन्तेति ।

अव्यवस्थामुपपादयितुमाह—न चेति । ननु पशुनोपलक्षितं द्रव्यं पशुं विशास्तीत्यादिधर्म्मविधीनां विषयो भविष्यत्यत आह—तदुपलक्षितं त्विति । द्रव्यरूपताया द्रव्यत्वाप्रतिपादनं विना प्रतिपादयितुं शक्तेस्तदेव प्रतिपाद्यं स्यात् तत्र स स एव दोष इत्यर्थः । ननु द्रव्यत्वप्रतिपादनद्वाराप्याश्रयोपलक्षणोपपत्तेर्नामूर्त्तत्वदोषापत्तिरित्याशङ्क्याह—आश्रयेति । ननु पशुत्वेन स्वाश्रयोपलक्षणाद्वाक्छलमात्रेण द्रव्यत्ववदाश्रयपक्षदोषात्तत्त्वनिर्णयफलवादेन युक्तमित्याशङ्क्य, पशुत्वाश्रयमात्रोपलक्षणे तस्य पश्वाकृतितोऽन्यत्वेनानिरूपणादाकृतेरेव बलाद्धर्माविषयत्वापत्तेराश्रयविशेषस्योपलक्षणं वाच्यम् । तत्त्वव्याप्ते न सम्भवतीत्याह—

**विशेषस्त्विति ।** परानभ्युपगतत्वादनाशङ्क्यत्वाच्च द्रव्यत्वस्येति दृष्टान्ततया व्याख्येयम् । अगम्यः ज्ञातुमशक्य इत्यर्थः । आगमगम्य इति पाठस्त्वव्यापकत्वेन लक्षयितुं शक्यत्वाद्यदि परमागमगम्यः स्यात् चासावस्तीत्युपहासार्थत्वेन व्याख्येयः । ननु निर्विशेषसामान्यानुपपत्तेः कस्यचिद्विशेषस्यावसायाद्धर्म्मविधिविषयत्वं भविष्यत्यत आह—**न वेति ।** प्रत्येकरूपेण निर्द्धारितरूपेणानवगतं विधिना न सम्बध्यत इत्यर्थः ।

ननु पशुत्वाश्रयो यो विशेष इत्येवं निर्द्धारणाद्विधिविषयतोपपत्स्यत इत्याशङ्क्याह—**न चेति ।** पशुत्वाश्रयाणामनेकत्वात्सर्वेषां चोपादानाशक्तेरयं वोपादेयः, अयं वेति सन्देहानिवृत्तेर्न निर्धारणोपपत्तिरित्याशयः । ननु सामान्यमात्रे पर्यवसितेऽपि शास्त्रेऽनुष्ठानवेलायां विशसनादेस्तत्रासम्भवात्तदाश्रयविशेषे प्रत्यक्षोपनयनेन निर्धारिते अनुष्ठानं भविष्यतीत्याशङ्क्याह—**न चेति ।** यस्मादन्यत्रोक्तो धर्म्मस्तत्रासम्भवमात्रेणान्यत्र न कार्यतया शास्त्रेणानुज्ञातः तस्मान्न सामान्ये कृतो विहितो विशेषेषु कर्त्तुं युक्त इत्यर्थः । किं च प्रत्यक्षैकसमधिगम्यस्यासाधरणस्य शब्दव्यवहाराविषयत्वाच्छुक्लादिरूपो विशेषो वाच्यः यस्तस्य चामूर्त्तत्वात्पशुत्ववदेव विधिविषयत्वासम्भव इत्याह—**विशेषा इति ।** उपसंहरति—**तस्मादिति ।**

अत्यन्तव्यतिरेकपक्षे च गौः शुक्ल इति सामानाधिकरण्यं पशुनेति लिङ्गकारकसंख्यान्वयश्च लक्षणया स्यात् सा च लोके मुख्यत्वप्रसिद्धेरयुक्तेत्याह—**सामानाधिकरण्यादि चेति ।** ननु यदि पशुं विशस्तीत्यादावन्यत्सव्यतिरेकपक्षे धर्म्मविधिविषयत्वयोग्या व्यक्तिर्न प्रतीयते, कथं तर्हि भाष्यकृताऽऽकृतिर्व्यक्त्या नित्यसम्बद्धा सम्बन्धिन्यां च तस्यामवगतायां सम्बन्ध्यन्तरमवगम्यत इति, व्यतिरेकमभ्युपगम्य तदेतदात्मप्रत्यक्षं शब्द उच्चरिते व्यक्तिः प्रतीयत इति वदत आकृतिवाचिशब्दोच्चारणे व्यक्तिप्रतीतिरुक्तेत्याशङ्क्याह—**भाष्येति ।** व्यतिरेकाभ्युपगमेऽनया व्यक्तेर्गतिः प्रतीतिरुक्ता साश्रयत्वमात्रेण, न विशेषरूपेण । न हि विशेषरूपा व्यक्तिः शब्दात्प्रतीयत इत्यर्थः । अभ्युपगमशब्देन परमताभ्युपगममात्रेण व्यतिरेकोऽभिहितः न स्वमताभिप्रायेणेति सूचितम् । ननु व्यतिरेकस्यानभिमतत्वे योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिरित्याश्रयाश्रयिभावोक्तिर्न युज्येतेत्याशङ्क्याह—**योऽपीति ।** नन्वाकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेक्ष्यतीति भाष्याद्विशेषलक्षणप्रतीतेः कथमाश्रयमाश्रयमात्रगति सक्तेत्युक्तम । शङ्क्याह—**सामान्याच्चेति ।** सामान्याद्विशेषस्य लक्षणं यद्भाष्यकृतोक्तम्, तत्राश्रयितव्यम् । आश्रयणमादरणं न कर्त्तव्यमिति भावे कृत्यं व्युत्पाद्य व्याख्येयम् । लक्षणाऽनाश्रयितव्येति पाठे साऽनादर्त्तव्या, आक्षेपमात्रस्य भावाद्विशेषस्य त्वाक्षेप्यस्य गम्यस्याव्यभिचारिलिङ्गाभावेनाभावादित्यर्थः ।

यद्वा यच्छब्द उच्चरिते व्यक्तिः प्रतीयत इत्ययं प्रपञ्चो न व्यक्तिप्रतीतिसद्भावविषयः किं तु किं शब्दात्, आकृतेर्वेत्येतद्विचारविषयत्वेन यथा सिद्धव्यक्तिप्रतीत्यनुवादोऽयमित्याह—**अथ वेति ।** प्रसङ्गादादितः सोऽन्वयव्यतिरेकाभ्यामिति भाष्यं व्याचष्टे—**अन्वयेति ।** शब्दव्यतिरेकेऽप्याकृत्यन्वये व्यक्तिप्रत्ययान्वयप्रतिपादनार्थमन्तरेणापीति भाष्यमुदाहरणनिष्ठतया

व्याचष्टे—यो हीति । आकङ्क्षाशब्देन निर्विशेषसामान्यायोगात् कश्चिदत्र तीक्ष्णमन्दादिरग्निविशेषः स्यादिति प्रमाणतो विशेषनिर्धारणाकाङ्क्षा भवतीत्येवम्परत्वेनाबुद्ध्येतैवाऽसौ व्यक्तिमिति भाष्यं व्याख्यातम् । शब्दान्वयेऽप्याकृतिव्यतिरेके व्यक्तिप्रत्ययव्यतिरेकप्रतिपादनार्थं 'यस्त्विति' भाष्यं मनो वै यग्न्योच्छब्दार्थसम्बन्धास्मृतौ सहकार्यभावाच्छब्दस्यापि व्यतिरेकापत्तेः । स्मृतौ वा मनो वै अग्न्याभावादाकृतेरप्यन्वयापत्तेरयुक्तमाशङ्क्य द्वेधा व्याचष्टे—मानसादिति । निष्कृष्टाकृतिवाचित्वनिश्चयात्सामर्थ्यात्मकजाड्यरूपेणापचारेण सम्बन्धस्मृतावप्याकृत्यप्रतीतिः शीघ्राप्रतीतिर्वा विवृक्षितेति भावः ।

ननु यदि गोशब्दात्स्वतन्त्राकृतिः प्रतीयते ततः केन हेतुना गोशब्दस्य शावलेयादिशब्दसामाधिकरण्यं प्रतीयते, न गोत्वशब्दस्येत्याशङ्कते—केनेति । गोत्वमित्यत्र प्रातिपदिकवाच्याया जातेर्भावप्रत्ययेन व्यतिरेकांशस्य विवक्षितत्वात्सामानाधिकरण्याप्रतीतिः । गोरित्यत्रान्वयव्यतिरेकांशस्य विवक्षितत्वात्सामानाधिकरण्यप्रतीतिरिति विशेषहेतुमाह—व्यतिरेकांशस्येति । ननु भावप्रत्ययेन व्यतिरेकांशस्य विवक्षायां गोत्ववांश्छावलेय इत्यपि सामानाधिकरण्यं न स्यादित्यशाङ्क्याह—गोत्ववानिति । यद्यप्यत्र स्फुटो व्यतिरेको विवक्षितः तथापि प्रकृतिप्रत्ययविभागोपपत्तेर्मतुप् प्रत्ययेन जातिमदभिधानात्तद्वाचिना शावलेयादिशब्दस्य सामाधिकरण्यं युक्तमिति भावः । स्फुटमितिपाठे स्फुटमिति क्रियाविशेषणं स्फुटं निष्कृष्टत्वेन गोत्ववाचिनि गोत्वशब्दे यत्र परतो मतुप्प्रत्ययो भवति, तत्र तेन जातिमदभिधानमित्यर्थः । ननु मतुप्प्रत्ययेनापि व्यक्त्यभिधाने व्यक्त्यभिधानपक्षोक्ताः सम्बन्धानाख्यातादयो दोषाः प्रसज्येरन्नित्याशङ्क्याह—सामान्यस्य वेति । जातिमदभिधाने प्रमेयान्तर्गतत्वेन व्यावर्त्तकत्वाज्जातेर्विशेषणत्वेऽपि विशिष्टवाचिना प्रत्ययेनानुपादानादुपलक्षणत्वोक्तिः । ननु गौरित्यत्राव्यतिरेकांशविवक्षायां जातिव्यक्त्योरभेदात् व्यक्तेर्वा गोशब्दो वाचको जातेर्वेति चिन्ता न युज्येतेत्याशङ्क्याह—भेदानामिति । अयं विचार्यत्वेन प्रकृतो गोशब्दः पक्षद्वये भेदानां व्यक्तीनामेव वाचकः । सामानाधिकरण्याद्यन्यथानुपपत्तेरिष्यते । स्वरूपेण व्यक्तिर्वाच्या नान्यात्मना वेत्येतावांस्तु विचारार्थः । व्यक्तिवाचित्वेऽपि व्यक्त्यन्तरे प्रयोगोपपादनार्थम्—सर्वेषामित्युक्तम् । नन्वेवं सत्यानन्त्यात्सम्बन्धग्रहणानुपपत्तिरित्याशङ्क्य—प्रत्येकमित्युक्तम् । समुदितानां वाच्यत्वे सम्बन्धग्रहणासम्भवः स्यात् नान्योन्यनिरपेक्षाणां वाच्यत्वे जात्यात्मना चैकेन नित्येन रूपेण वाच्यत्वान्न शक्त्यानन्त्याद्यापत्तिरिति भावः । ननु गोशब्दोच्चारणे व्यक्तिविशेषानिर्धारणान्न व्यक्तेर्वाच्यत्वं युक्तमित्याशङ्क्याह – यस्त्विति । व्रीहीन्प्रोक्षतीत्यादावुद्दिश्यमानेषु व्रीह्यादिषु प्रकृतापूर्वसाधनव्यक्तिविशेषनिर्णयान्न सन्देहाशङ्का व्रीहिभिर्यजेतेत्यादावुपादीयमानत्वेऽप्यन्यजातीयव्यक्तिभ्यो व्रीहिजातीयानां व्यावृत्तिप्रतीतेर्व्रीहिजातीयैव व्यक्तिरित्यस्त्येव निर्णयः । सर्वासां तूपादानायोगात्कियतीनामुपादेयतेति संख्याश्रयमात्ररूपसन्देहः न व्यक्तिरूप इत्यर्थः ।

अधिकरणोपक्रमे जातिशब्दा एवाऽत्र विद्यन्त इति यदुक्तम् तत्परमतेनेति द्योतयितुं तस्माद् गौरश्व इत्येवमादय इत्युपसंहारभाष्यं स्वमतेन नामाख्यातरूपद्विविधपदविषयत्वेन

व्याचष्टे—गवादीति । गुणक्रियाशब्दोपसंग्रहार्थः सर्वशब्दः विचारप्रयोजनमाह—प्रयोजनमिति । पूर्वपक्षविशेषणसामर्थ्यात् सिद्धान्ते बाध इत्युक्तं भवति । वर्णान्तरत्वाभावेऽपि पूर्वव्याख्याप्रकारे केनचिद्व्याक्षेपदोषेणाप्रसन्नाभिधानाच्छिष्यक्लेशापत्तेः । सुखप्रतिपत्त्यर्थं प्रकारान्तरमारभते—एवं वेति । प्रासङ्गिकत्वेन तावत्सङ्गतिमाह—गौरिति । विचारविषयं बोधयति—चतुर्विध इति । संशयोत्पत्तेरित्यनेन यावकादिद्रव्यशब्दानां देवदत्तादियदृच्छाशब्दानां सर्वादीनां च सर्वनामशब्दानां व्यक्तिवाचित्वेन निश्चयात्संशयानुत्पत्तेर्निपातोपसर्गवद्विचारविषयत्वमस्तीति सूचितम् निपातोपसर्गयोर्जातिव्यक्तिवाचित्वसंशयानुत्पत्तौ हेतुमाह—तयोरिति । अभ्युपगम्यापि वाचकत्वमन्वित्यादिपूपसर्गेषु पश्चादित्यादिषु च निपातेषु पदान्तरान्वयात् पूर्वं कस्यचिद्वाऽर्थस्याऽप्रतीतेः पदान्तरान्वये च विशेषस्यैव प्रतीतेः । सन्देहानुत्पत्तिमाह—वाचकत्वेऽपीति । पाश्चात्यशब्दान्तर्गतः पश्चाच्छब्दोऽत्रोदाहरणं संशयेन ज्ञाप्यते न विषयीक्रियत इत्यर्थः । एतदेव विवृणोति—यदीति । ननु पौनरुक्त्यापत्तेर्नेहाख्यातं विचार्यमित्याशङ्कते—आख्यातस्यापीति ।

### अत्र प्रकृत्यर्थः तत्र प्रत्ययार्थं इति पुनरुक्ति-परिहारः

ननु द्वितीयाध्यायाद्येऽधिकरणे द्रव्यादिशब्देभ्योऽपूर्वं भावशब्देभ्यो वेति विचारान्नाख्यातार्थविचारणेत्याशङ्क्याह—कः पुनरिति । अन्यार्थेऽप्यधिकरणप्रसङ्गाद्भाष्यकृतार्थनिरूपणात्पौनरुक्त्यं भवतीत्याशयः । तत्र प्रत्ययार्थचिन्तेव प्रकृत्यर्थचिन्तेति परिहरति—प्रत्ययार्थस्येति । आश्रयं तु प्रत्ययार्थविचारे पौनरुक्त्यं परिहर्तुमशक्नुवतां परिहारे इत्यपरितोषादन्यथा स्वमतेन परिहरति—प्रकृत्यर्थेति । प्रत्ययार्थस्य प्रकृत्यर्थाद्विवेकायेह सिद्ध एव प्रकृत्यर्थस्तत्र वक्ष्यत इत्यर्थः । ते च यागदानहोमसम्बद्धा इत्यादिना प्रकृत्यर्थस्य यागस्य भाष्यकृता स्पष्टीकृतत्वात् भाष्यकारेणेत्युक्तम् । ननु सूत्रकारानुक्तिसूचनार्थं तेनापि कर्म्मशब्दपदेन प्रकृत्यर्थस्योक्तत्वात् । अयमपि विषयभेदं वक्तुमशक्नुवतां परिहार इत्यपरितोषात्स्वमतेनान्यथा परिहरति—यज्याद्यर्थेऽपि वेति । सामान्यविशेषयोर्मध्ये इति निर्धारणे षष्ठी प्राप्तेतीहावसरप्राप्त्युक्त्या तत्रासङ्गतत्वात्सामान्यविशेषविचाराभावः सूचितः ।

प्रासङ्गिककथया चैतत्पौनरुक्त्यं परिहृतम् । प्रधानचिन्तया तु पौनरुक्त्यशङ्कैव नास्तीत्याह—अपूर्वमिति । अतोऽत्र युक्ता द्विविधस्य पदस्यार्थचिन्तेत्युपसंहरति—नामेति । गोसदृशो गवयः इति जातौ गोशब्दप्रयोगाद् गौरानय इति च व्यक्तौ प्रयोगात्न गोशब्दोच्चारणाच्चोभयप्रतीतेर्वृद्धव्यवहारस्योभयत्र तुल्यत्वं शब्दलक्षणे महाभाष्यकारेण किं पुनराकृतिः पदार्थः, आहोस्विद् द्रव्यमिति पृष्ट्वोभयमित्याहेत्याकृतिपक्षवद्व्यक्तिपक्षस्याप्यभिधानान्न शास्त्रस्याप्युभयत्र तुल्यतेति, द्वेधा सन्देहहेतुमाह—प्रयोगस्येति । भाष्योक्तसन्देहहेतुनिरासार्थमस्माद्धेतुद्वयादेव—संशयो न प्रतिभातीत्युक्तम् । ननु यदि सामान्यप्रत्ययाद्व्यक्तौ च क्रियासम्भवात्सन्देहः स्याद्, ततः प्रतीयमानाया आकृतेरक्रियार्थत्वात् क्रियार्थायाश्च व्यक्तेरप्रतीतेर्वाक्यार्थौपयिकपदार्थासम्भवाद्व्यक्तिवाच्यत्वपूर्वपक्षस्याकृतिवाच्य-

त्वासम्भवप्रतिपादनमात्रपरत्वात्पूर्वपक्षे वेदाप्रामाण्यम्, सिद्धान्ते चाकृतेरपि क्रियार्थत्वाद्वाक्यार्थौपयिकत्वोपपत्तेर्वेदप्रामाण्यमिति प्रामाण्याप्रामाण्यफलत्वात्प्रमाणलक्षणसङ्गतेयं चिन्ता स्यात्। व्यक्त्याकृत्योस्तु प्रतीतिप्रयोगतुल्यत्वे पक्षद्वयेऽपि प्रामाण्याविशेषात्कथं तल्लक्षणसङ्गतिः। प्रतीतिप्रयोगतुल्यत्वेनैव च व्यक्तिवाच्यत्वस्मृतेरपि समूलत्वोपपत्तेरेतत्पादगतेन स्मृतिमूलविचारेणापि कथं सङ्गतिः स्यादित्याशङ्क्ते—कथमिति। पादानामैकार्थ्यनियमाभावान्नावश्यं सर्वत्र पादसङ्गतिरपेक्षणीया एकप्रकरणगतानां त्वधिकरणानां प्रकरणप्रतिपाद्यैकार्थ्यान्वयाय प्रकरणसङ्गतिरवश्यापेक्षणीयेति मत्वा—प्रकृते न वेत्युक्तम्। स्मृतिमूलविचारो ह्यस्मिन्पादे प्रकरणार्थः। तथा हि—

स्मृतीनां श्रुतिमूलत्वं विरोधे भ्रान्तिमूलता।
उक्तोपवीतस्मृत्यादावविरोधं निरूप्य च॥
आर्यैर्विरोधे म्लेच्छानां शब्दार्थविषयस्मृतेः।
भ्रान्तिर्मूलमसत्त्वेऽस्य पिकादौ लोकमूलता॥
मूलापेक्षां च कल्पादेरव्यवस्थितगोचरम्।

होलाकादिस्मृतेर्मूलमुक्तं शब्दस्मृतेरपि तत्प्रामाण्यमूलत्वप्रासङ्गिकत्वेनाऽस्याश्चिन्तायाः पूर्वचिन्ताया लक्षणप्रकरणप्रसङ्गस्यैवास्या अपि तद्द्वारेण सङ्गतिलाभान्न पृथक्सङ्गत्यपेक्षेति परिहरति—द्वयमिति। ननु यदि कस्मिन्नर्थे गोशब्दस्य साधुत्वेत्यनेन प्रसङ्गेनास्य विचारस्यावान्तरस्तुतेरर्थनिरपेक्षस्य साधुत्वस्य निरूपयितुमशक्यत्वाद्व्यक्त्याकृतिचिन्तैव पूर्वं प्रसज्येतेत्याशङ्क्ते - वक्तव्य इति। सास्नादिना शब्दस्य साधुत्वाच्ये इत्येतावति ज्ञाते व्यक्त्याकृतिविवेकाज्ञानेऽपि साधुत्वं निरूपयितुं शक्यमिति परिहरति—अनिश्चितेऽपीति। एतदेव विवृणोति—वाच्येति। पूर्वापवादत्वेन चास्य सङ्गतिरिति परिहारान्तरसापेक्षत्वेऽपि किं विचार्यत इत्यपेक्षायामाह—व्यक्तिरिति। अस्मिंश्च पक्षे त्रिविधापि सङ्गतिः साक्षादेवेत्याह—स्मृतेरिति।

प्रयोजनाभावेनाधिकरणानारम्भमाशङ्क्ते—ननु चेति। शब्दार्थशब्देनाकृतिर्विवक्षिता, प्रोक्षणादेः क्रिया, ब्रह्महत्यादेश्चाक्रिया पक्षद्वयेऽप्याकृतावसम्भवाद्व्यक्तावेवेत्यर्थः। वेदे प्रयोजनाभावेऽपि, लोके प्रयोजनं भविष्यतीति तावत्परिहरति—यद्यपीति। किं फलमित्यपेक्षायामाह—व्यक्तीति। लोकव्यवहारस्य प्रमाणान्तरानुसारित्वात्तदर्थं शब्दार्थतत्त्वचिन्तानर्थक्यापत्तेर्वेदार्थनिर्णयानौपयिकत्वाच्च शास्त्रसङ्गत्यभावापत्तेरपरितोषात्स्वमतेन प्रयोजनमाह—वेदेऽपि चेति। हेत्वपेक्षायामुदाहरणद्वयमाह—व्रीहीति। भेदो-विशेषः। आद्योदाहरणे विशेषं विवृणोति—प्रोक्षणमिति। सन्निधिरूपं क्रमं बाधित्वेत्यर्थः। द्वितीयोदाहरणं विवृणोति—एवमिति। 'यदाहवनीये जुहोति, पदे जुहोतीत्यादिसामान्यविशेषशास्त्रयोः पूर्वपक्षे विकल्पः, सिद्धान्ते सामान्यशास्त्रस्य विशेषशास्त्रेण बाध इत्याद्यपि प्रयोजनमित्याह—सोपपत्तिकमिति। उपसंहरति—कर्तव्येति।

पौनरुक्त्यमाशङ्कते—नन्विति । गौरिति शब्द आदिर्यस्य, तस्य गौरित्यस्य शब्दस्य कोऽर्थं इत्यस्य भाष्यस्य, तस्मिन्नित्यर्थः । आद्यपादस्थे भाष्ये विचारितमित्यर्थः । तत्र प्रतिज्ञायामिहानुपपत्तिरिति तावत्परिहरति आकृतेरिति । यथा चाकृतिशब्दार्थः तथाकृतिस्तु क्रियार्थत्वादित्यत्र निपुणतरमुपपादयिष्याम इत्याकृतिवादान्ते भाष्यकृताप्येवमेवोदितमित्याह—यथा चेति । विषयप्रदर्शनार्थत्वात्प्रतिज्ञाया हेतुं विनानर्थक्यापत्तेरिहापि चाकृतिः शब्दार्थं इति प्रतिज्ञायाः पौनरुक्त्यापत्तेरेतत्परिहारेष्वपरितोषात्स्वमतेनान्यथा परिहरति—यद्वेति ।

नन्वेवं सत्याकृतेः शब्दार्थत्वोक्तिस्तत्रत्या कथमित्याशङ्क्य सद्भावप्रतिपादनायैव । प्रकृतानुपयोगप्रसङ्गान्न साक्षाद्वाच्यत्वोपक्रमस्तत्रेत्याह—या त्विति । चिन्ताविषयत्वेन नोक्तेत्यर्थः । प्रतिज्ञामात्रेणाकृतिवाच्यत्वासिद्धेरनभिमतमपि परिहारान्तरं विभवार्थमाह—उक्ते वापीति । व्यक्त्याकृतिचिन्तामुपक्रम्य भाष्यकृता लौकिकवैदिकशब्दार्थभेदाभेदचिन्ता कृता । तस्याः प्रकृतोपाद्घातार्थत्वेन सङ्गतिमाह—एतदिति । ननु संख्याभावादित्यनेन न्यायेनाभेदस्य सिद्धत्वात्पुनः कोऽयं विचारः स्यादित्याशङ्क्य, लौकिकशब्दाभेदेऽपि, वैदिकानां रूपभेदाद्व्यपदेशभेदाच्च भेदशङ्कोपपत्तेस्तन्निराकरणार्थोऽयमारम्भ इति । संशय्यते अस्मिन्नित्यधिकरणव्युत्पत्त्या संशयविपर्ययप्रतिपादकेन—संशयशब्देनोक्तम् । उपोद्घातत्वमेव विवृणोति - एकत्वे सतीति । लौकिकवैदिकयोः शब्दयोर्वाच्ययोश्चैकत्वे सति लोकव्युत्पन्नाद्वैदिकाद् गोशब्दाद् व्यक्त्याकृतिरूपत्वादिपदार्थप्रत्ययोत्पत्तौ कोऽर्थो वाच्यः, को वा गम्य इति सन्देहाद्विचारः कार्यः । भेदे व्युत्पत्त्यभावेन वैदिकाच्छब्दादर्थाप्रतीतेः सन्देहाभावान्न चिन्तावसर इत्यर्थः ।

ननु लोके सन्देहसम्भवाच्चिन्ता भविष्यतीत्याशङ्क्याह—शब्दार्थेनेति । वेदे तु शब्दविषये, अर्थविषये च 'य एव लौकिकः शब्दोऽर्थश्च स एवायमिति प्रत्यभिज्ञाने सति लोकव्युत्पन्नाद्वैदिकाच्छब्दादर्थप्रतीतेः कोऽर्थो वाच्यः, को वा गम्य' इति विवेक्तुं शक्यम् । अलौकिके तु वैदिके शब्देऽर्थे वाचकरूपाज्ञानाद्वाच्यविषयः सन्देह एव न स्यादिति पूर्वोक्तमेव विवृणोति—वेदे त्विति । उपसंहरति—तेनेति ।

संशयशब्दसूचितं पौनरुक्त्यपरिहारं वक्तुमाशङ्कते—तावत्संख्येति । न हेत्वन्तराभिधित्सया पुनरारम्भस्तस्यानुक्तत्वादित्याह—अभेदेति । ननु न 'प्रयोगचोदनाभावादिति हेत्वन्तरमप्युक्तमित्याशङ्क्याह—अन्यस्त्विति । शङ्कामुपसंहरति - तेनेति । परिहरति — लौकिकेष्वेवेति । ननु वैदिकेषु काऽधिका शङ्केत्यपेक्षायामाह—व्यपदेशादीति । रूपभेदो लिङ्गं चादिशब्देनोपात्तम् । अर्थभेदाभेदचिन्तायास्तु पौनरुक्त्याशङ्कैव नास्तीत्याह - एकत्वेऽपि चेति । न च शब्दैक्यमात्रेण प्रकृतचिन्तासिद्धिर्येनार्थैक्यमचिन्त्यं स्यादित्याह—अर्थेति । शब्दाभेदे सत्यपि यद्यर्थभेदः स्यात् ततो व्यक्त्याकृत्योर्द्वयोर्मध्ये कस्य वाच्यतेतीयं चिन्ता घटते, न शब्दैक्यमात्रेणेत्यर्थः । सन्देहहेतुमाह—व्यपदेशादीति । उभयविषय-

प्रतिज्ञापूर्वकं शब्दभेदाभावहेतूनाह—**किं प्राप्तमिति**। आख्यायाः शब्दस्य यल्लक्षणम्, तस्य भाषायाम्, दन्दसीति चोपबन्धेन भिन्नत्वादित्यर्थः। अर्थभेदे हेतुमाह—**अश्व-बालादिति**।

नन्वग्निर्वृत्राणीति भाष्ये वृत्रहननादिक्रियाभेदो हेतुः प्रतीयते, स किमित्युपेक्षित इत्यपेक्षायामर्थभेदे हेतुत्वं तावन्न सम्भवतीत्याह—**अग्न्यादीनां चेति**। नन्वग्निस्वरूपा-भेदेऽपि वृत्रहन्तृत्वविशिष्टस्य वैदिकाग्निपदवाच्यत्वादर्थभेदो भविष्यतीत्याशङ्क्याह—**हन्तीति**। वृत्रहन्तृत्ववैशिष्ट्यस्य वाक्यार्थत्वेनाऽशब्दवाच्यत्वान्न वैदिकाग्निशब्दवाच्यता युक्तेत्यर्थः। हन्तृत्वे च प्रमाणाभावान्न तेनापि रूपेणान्यत्वं युक्तमित्याह—**हननमिति**। न च यो वृत्रहन्ता, सोऽग्निरिति वचनव्यक्त्यार्थान्यत्वसिद्धिर्वृत्रशब्दार्थस्य जङ्घनदिति च क्रियाशब्दस्यालौकिकत्वेनैवंविधवचनव्यक्त्यसम्भवादित्याह—**अपूर्वं इति**। देवतायाश्च विग्रहाभावस्य नवमे वक्ष्यमाणत्वेन क्रियया वृत्रहननायोगान्मन्त्रस्य स्तुतिमात्रार्थत्वावगतेर्न वृत्रहन्तृत्वानुवादेनाग्निशब्दवाच्यत्वविधिर्युक्त इत्याह—**स्तुतीति**। कथमक्रियेत्यपेक्षायाम्—भाष्योक्तैरित्युक्तम्। कानि तानि वाक्यानीत्यपेक्षायां नावमिकदेवताधिकरणोक्त—युक्तिपरामर्शार्थमितीत्युक्तम्। अतोऽश्वबालादिशब्दानां स्पष्टार्थानन्तरदर्शनादित्येषैवार्था-न्यत्वे युक्तिरित्युपसंहरति—**तेनेति**। शब्दभेदहेतुत्वं तु क्रियाभेदहेतुत्वेऽप्यनाशङ्क्य-मेवेत्याह **यच्चेति**। अथ भेदकारितोऽपि शब्दभेदो न भवति, किमुत तद्गुणभेदकारित इत्यर्थः भाष्यस्य तर्हि का गतिरित्यपेक्षायां भाष्योक्तं रूपान्यत्वं स्वरादिभेदाभिप्रायं व्याख्येयमित्याह—**तेनेति**। पूर्वपक्षोपसंहारपूर्वकं सिद्धान्तप्रतिज्ञां करोति **तस्मादिति**। प्रतिज्ञाक्षिप्तमेव तावद्धेतुमाह—**वेदस्यैवेति**। प्रसज्यतामित्येवं वादिनम्—**प्रति प्रसज्यतेत्युक्तम्**।

प्रयोगचोदनाभावादिति सौत्रं हेतुं प्रयोगस्य, चोदनायाश्चाभावादित्येवं व्याचष्टे—**प्रयोगस्येति**। चोदनायाः कथमभाव इत्यपेक्षायाम्—**प्रत्ययार्थस्येत्युक्तम्**। अर्थान्तरे शब्दप्रयोगविषयायाश्चोदनाया विधेरभावादित्येवमन्यथा व्याचष्टे—**अर्थान्तरे चेति** कस्माद्वेदे-नाऽर्थान्तरे शब्दप्रयोगो न विधीयते इत्यपेक्षायां, गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्र-हेतुत्वादि ३-२-४त्यैन्द्रयाधिकरणसूत्रावयवोऽर्थः पठितः। वचनान्वयार्थमैन्द्री स्यादिति सूत्रेणैन्द्रया गार्हपत्यमुपतिष्ठत इति श्रुतिबलेनैन्द्रया गार्हपत्योपस्थानाङ्गत्वे विहिते श्रुत्या-प्यशक्तविनियोगासम्भवात्कथमिन्द्रशब्देन गार्हपत्याविधानमित्यपेक्षायां **गुणयोगेनेति** पूर्वावयवेनोक्तम्। नन्विन्द्रशब्दस्य गार्हपत्याभिधानशक्तिप्रदर्शनार्थमेवैतद्वचनं कस्मान्न भवतीत्याशङ्क्य, शब्दार्थसम्बन्धस्य वृद्धव्यवहारावसेयत्वेन शास्त्रहेतुकत्वाभावादित्यने-नोक्तम्।

अविभागादिति सूत्रावयवो न तेषामेषां विभागमुपलभामह इति भाष्येण शब्दप्रत्यभिज्ञा-भिधानार्थत्वेन तांश्चार्थानवगच्छाम इत्यनेन चार्थप्रत्यभिज्ञानाधानार्थत्वेन व्याख्यातः। तदु-भयमपि यथाक्रममनुसन्धत्ते—**किं चेति**। शब्दलक्षणाविभागादित्येवं स्वयमन्यथा व्याचष्टे—

लक्षणस्येति । ननु कतिपयलक्षणाविभागेऽपि भाषायां छन्दसीत्युपबन्धेनोक्तानां लक्षणानां भेदात्कथं सर्वशब्दैक्यसिद्धिरित्याशङ्क्याह—सर्वथेति । भिन्नलक्षणकानां शब्दानाम्, अश्वबालाद्यर्थानां च भेदस्य सिद्धान्तिनाऽपीष्टत्वादितरशब्दार्थानामैक्यं साध्यम्, तेषां चोक्तैर्हेतुभिर्न भेदः शक्यो वक्तुमित्यर्थः । याज्ञिकानां च गवादिविधौ लौकिकैरेव सास्नादिमदाद्यर्थैर्व्यवहारान्मीमांसायां च लोकव्युत्पत्त्यनुसारेण वेदार्थनिर्णयादुभयानुग्रहार्थं लौकिकवैदिकशब्दार्थानामैक्यमाश्रयणीयमित्याह—एकत्वेति । मीमांसा चानुगृह्यत इत्यनुषङ्गः । अविभागशब्देनोक्तं प्रत्यभिज्ञानमेव पूर्वपक्षोक्तानां हेतूनां कालात्ययापदिष्टत्वलक्षणदोषाभिधानार्थत्वेन व्याचष्टे—व्यपदेशादीति । आदिशब्देनाख्यालक्षणस्वरोपादानम् । ननु व्यपदेशादिभेदेन तदवच्छिन्नात्मनां भेदस्यावश्यम्भावात्कथं न भेदानुमानमित्याशङ्क्यान्यरूपतेत्युक्तम् । रूपिणः स्वरूपतोऽन्यता, रूपान्यता । अत्र भेदानुभेदे विचारे यो व्यपदेशादिभेदैरैक्यरूपतालक्षणो भेदोऽनमीयते स तु न युक्तः वैदिकशब्दे प्रत्यक्षप्रत्यभिज्ञानादित्यर्थः । भेदादेरिति पाठे द्वितीयेनादिशब्देन लोपागमव्यत्ययोपादानम् । अन्यनिबन्धनत्वादपि व्यपदेशभेदो रूपभेदो वा न भेदानुमानायालमित्याह व्यपदेशादीति ।

नन्वेवमपि पदावधारणोपायत्वट्कृतिनिछन्दतिसूरयः ।

क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुती ॥

इत्यनेन न्यायेनाऽऽचारादिभेदेन च भेदो भविष्यतीत्याशङ्क्य आह—स्वरादयश्चेति । अभिधानाङ्गभूतस्वरादिभेदोऽभिधायकपदभेदहेतुत्वेन तत्रोक्तः । अग्निर्वृत्राणि जङ्घनदित्यादिषु तु स्वरनियमस्य, व्योमन्नित्यादिषु च वर्णलोपस्य, देवास इत्यादिषु आगमस्य, अगृभ्णन्नित्यादिषु विकारस्य, स्वाध्यायविध्यपेक्षितवेदत्वसिद्ध्यर्थं त्वदृष्टार्थोपयोगितयाऽभिधानाङ्गत्वाभावान्नाभिधायकभेदावधारणोपायताऽस्तीत्यर्थः ।

यत्तु स्वरुयूपादिस्पष्टभेदशब्दसाहचर्यं गवादिशब्दे भेदहेतुत्वेनोपन्यस्तम्, तन्निराकरणार्थं विभागशब्दोक्तशब्दप्रत्यभिज्ञानं योजयति—स्वर्वेति । अनध्यायादिधर्मभेदस्य शूद्रोच्चरणवर्जनस्य च वाचनिकत्वेनाऽप्युपपत्तेर्न भेदहेतुतेत्याह—वचनादिति । उच्चारणधर्मत्वादप्येषां न भेदहेतुतेत्याह—धर्माविति । यत्त्वाश्वबालादिशब्दानां स्पष्टार्थान्तरदर्शनाद् गवादिशब्दानामपि भिन्नार्थतेत्युक्तम्, तन्निराकरणेऽप्यविभागशब्दोक्तमर्थप्रत्यभिज्ञानं योजयति—अश्वबालादीति । वाक्यशेषात्मकवचनवशात्तत्रार्थभेदे जातेऽपि प्रत्यभिज्ञायमानार्थेषु गवादिशब्देष्वर्थान्यत्वत्वद्योतकत्वाभावान्नार्थान्यता युक्तेत्यर्थः ।

नन्विहाप्युत्तानवहनादिवचनकारितोऽर्थभेदो भविष्यतीत्याशङ्क्याह—उत्तानानां चेति । उत्तानवहनासिद्धेस्तदनुवादेन गोशब्दवाच्यत्वविध्ययोगात्सर्वेषां च वैदिकानामन्यत्वे सम्बन्धज्ञानाभावेनैकस्यापि पदार्थस्याऽग्रहणाद्वाक्यार्थानवगतेर्नातो वाक्यादर्थान्यत्वावसाय इत्यर्थः । किमर्थं तर्ह्युत्तानवाक्यम् इत्यपेक्षायामाह—विधेरिति । सिद्धान्तमुपसंहरति—तस्मादिति ।

प्रकृतिविचारमनुसन्धत्ते—यद्वा चेति । अतोऽधुना क्रियत इत्यध्याहारेण योज्यम् । पक्षान्तराणामप्यभिधानं प्रतिजानाति—बहव इति । अभिनवे पक्षे केनचिदुपन्यस्ते निराकरणोपपत्त्या ज्ञानाच्छिष्याणां व्यामोहापत्तेः तन्निवृत्त्यर्थं सर्वेऽभिधेया इत्यर्थः । बहुपक्षप्रतिभाने कारणमाह—गौरिति । शब्दस्वरूपस्य प्रत्यक्षग्राह्यत्वेन तद्विषयाभिधानशक्तिकल्पनानुपपत्तेर्नव्यानभिधानो हि शब्दः कश्चित्कदाचनेति शून्यवादे बृहट्टीकायां स्वरूपाभिधानस्य निरस्तत्वाच्छब्दवाच्यत्वशङ्कानुपपत्ति—सूचनार्थं तइत्युक्तम् । सद्यवस्तुप्रतिभानेऽपि कथं बहुपक्षप्रतिभानमित्याह—तेषामिति ।

पक्षानुद्दिशति—किं जातिरेवेति ।जातिव्यक्त्योः सामानाधिकरण्यबुद्धिहेतुभूतस्य ।

'आश्रयी येन भिन्नोऽपि सम्बन्धेनाऽश्रये धियम् ।
स्वानुरूपां सदा कुर्यात्समवायः स कीर्त्यते ॥'

इत्येवं लक्षणसमवायाख्यस्य सम्बन्धस्य जात्या साहाधाराधेयसम्बन्धसद्भावाज्जातिसम्बन्धयोः सच्छब्दवच्चः सम्बन्धः शब्दार्थं इत्यस्यापि पक्षस्योपपत्तेर्वस्तुगतस्य जात्याख्याया अनुवृत्ताकारस्य, व्यावृत्ताकारस्य च व्यक्तित्वेनाभिप्रेतस्यैव वस्तुगतत्वादेकदेशस्थवृक्षवच्चः समुदायस्तस्याकारद्वयाकारद्वयाधारे धर्म्मिभूते वस्तुनि प्रतीतेः तदाश्रितया जात्या सहैकवस्तुगतत्वादेव समुदायोपपत्तेः । सर्वत्राऽष्टपक्षीसम्भवः ।

यथा जातेर्व्यक्त्यादिभि षड्भिः सह प्रत्येकमष्टौ पक्षाः कृताः । तथा व्यक्त्यादेरप्येकैकस्येतरैः सह कार्या इत्याह—एवमेकैकस्येति । ननु व्यक्त्यादिभिः सह सम्प्रधारितया जात्या सह व्यक्त्यादेः सम्प्रधारणे पक्षभेदो नास्तीत्याशङ्क्य—उक्तवदित्युक्तम् । (एकाद्वित्रिचतुःपञ्चषट्कैः सह विकल्पने) त्युक्तद्विकादिप्रकारभेदात्पक्षाविवेक इत्याशयः । ततश्च व्यक्तिसम्बन्धः व्यक्तिसमुदाययोर्व्यक्तिलिङ्गयोः, व्यक्तिकारकयोः, व्यक्तिसंख्ययोः, सम्बन्धसमुदाययोः, सम्बन्धलिङ्गयोः, सम्बन्धकारकयोः, सम्बन्धसंख्ययोः, समुदायलिङ्गयोः, समुदायकारकयोः, समुदायसंख्योर्लिङ्गकारकयोः, लिङ्गसंख्ययोः, कारकसंख्ययोः, पञ्चदशाऽष्टपक्षीः पूर्वाभिः षड्भिः सहैकविंशतिं कृत्वा ।

१. जातेर्व्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिलिङ्गव्यक्तिकारकव्यक्तिसङ्ख्यासम्बन्धसमुदायसम्बन्धलिङ्गसम्बन्धकारकसम्बन्धसंख्यासमुदायलिङ्गसमुदायकारकसमुदायसंख्यालिङ्गकारकलिङ्गसंख्याकारकसंख्याद्विकैः पञ्चदश ।

व्यक्तेर्जाति–सम्बन्ध–जातिसमुदाय–जातिलिङ्ग–जातिकारक-जातिसंख्या-सम्बन्धसमुदायसम्बन्धलिङ्गसम्बन्धकारकसम्बन्धसंख्यासमुदायलिङ्गसमुदायकारकसमुदायसंख्यालिङ्ग–संख्याकारकसंख्याद्विकैः पञ्चदशसम्बन्धस्य जातिव्यक्तिजातिसमुदाय–जातिलिङ्गजातिकारक-जातिसंख्याव्यक्तिसमुदायव्यक्तिलिङ्गव्यक्तिकारक-व्यक्तिसंख्यासमुदायलिङ्गसमुदायकारकसमुदायसंख्यालिङ्गकारकलिङ्गसंख्याकारकसंख्याद्विकैः पञ्चदश ।

समुदायस्य जातिव्यक्तिजातिसम्बन्धजातिलिङ्गजातिकारकजातिसंख्याव्यक्तिसम्बन्धव्यक्तिलिङ्गव्यक्तिकारकव्यक्तिसंख्यासम्बन्धलिङ्गसम्बन्धकारकसम्बन्धसंख्यालिङ्गसंख्याद्विकैः पञ्चदश ।

लिङ्गस्य जातिव्यक्तिजातिसम्बन्धजातिसमुदायजातिकारकजातिसंख्याव्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिकारकव्यक्तिसंख्यासम्बन्धसमुदायसम्बन्धकारकसम्बन्धसंख्यासमुदायकारकसमुदायसंख्याकारकसंख्यायुगलैः पञ्चदश ।

कारकस्य जातिव्यक्तिजातिसम्बन्धजातिसमुदायजातिलिङ्गजातिसंख्याव्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिलिङ्गव्यक्तिसंख्यासम्बन्धसमुदायलिङ्गसम्बन्धसंख्यासमुदायलिङ्गसमुदायसंख्यालिङ्गसंख्याद्विकैः पञ्चदश ।

संख्याया जातिव्यक्तिजातिसम्बन्धजातिसमुदायजातिलिङ्गजातिकारकव्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिलिङ्गव्यक्तिकारकसम्बन्धसमुदायसम्बन्धलिङ्गसम्बन्धकारकसमुदायलिङ्गकारकद्विकैः पञ्चदश ।

२. जातेर्व्यक्तिसम्बन्धसमुदायव्यक्तिसमुदायलिङ्गकारकव्यक्तिकारकसंख्यासम्बन्धसमुदायलिङ्गसम्बन्धलिङ्गकारसंख्यासमुदायलिङ्गकारकसमुदायकारकसंख्यालिङ्गकारकसंख्यात्रिकैर्दश ।

व्यक्तेर्जातिसम्बन्धसमुदायसंख्याजातिसमुदायलिङ्गजातिलिङ्गकारकजातिकारकसंख्यासम्बन्धसमुदायलिङ्गसम्बन्धलिङ्गकारकसम्बन्धकारकसंख्यासमुदायलिङ्गकारकसमुदायकारकसंख्यात्रिकैर्दश ।

सम्बन्धस्य जातिव्यक्तिसमुदायजातिसमुदायलिङ्गजातिलिङ्गकारकजातिकारकसंख्याव्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गकारकव्यक्तिकारकसंख्यासमुदायलिङ्गकारकसमुदायकारकसंख्यालिङ्गकारकसंख्यात्रिकैर्दश ।

समुदायस्य जातिव्यक्तिसम्बन्धजातिसम्बन्धलिङ्गजातिलिङ्गकारकजातिकारकसंख्याव्यक्तिसम्बन्धलिङ्गव्यक्तिलिङ्गकारकव्यक्तिकारकसंख्यासम्बन्धलिङ्गकारकसम्बन्धकारकसंख्यात्रिकैर्दश ।

लिङ्गस्य जातिव्यक्तिसम्बन्धजातिसम्बन्धसमुदायजातिसमुदायकारकजातिकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकव्यक्तिकारकसंख्यासम्बन्धसमुदायकारकसम्बन्धकारकसंख्यासमुदायकारकसंख्यात्रिकैर्दश ।

३. कारकस्य जातिव्यक्तिसम्बन्धजातिसम्बन्धसमुदायजातिसमुदायलिङ्गजातिलिङ्गसंख्याव्यक्तिसम्बन्धसमुदायव्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गसंख्यासम्बन्धसमुदायलिङ्गकारकव्यक्तिसम्बन्धसमुदायव्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गकारकसम्बन्धसमुदायलिङ्गसन्बन्धलिङ्गकारकसम्बन्धलिङ्गकारकसंख्यासमुदायलिङ्गकारकसंख्याचतुष्कैः षट् । व्यक्तेः जातिसम्बन्धसमुदायलिङ्गजातिसमुदायलिङ्गकारकजातिलिङ्गकारकसंख्यासम्बन्धसमुदायलिङ्गकारकसम्बन्धलिङ्गकारकसंख्यासमुदायलिङ्गकारकसंख्याचतुष्कैः षट् । सम्बन्धस्य जातिव्यक्ति-

समुदायलिङ्गजातिसमुदायलिङ्गकारकजातिलिङ्गकारकसंख्याव्यक्तिसमुदायलिङ्गकारक - संख्यासमुदायलिङ्गकारकसंख्याचतुष्कैः षट्। समुदायस्य जातिव्यक्तिसम्बन्धलिङ्गजातिसम्बन्धलिङ्गकारकजातिव्यक्तिसम्बन्धसमुदायजातिसम्बन्धसमुदायकारकजातिसमुदायकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकव्यक्तिसमुदायकारकसंख्यासम्बन्धसमुदायकारकसंख्याचतुष्कैः षट्। कारकस्य जातिव्यक्तिसम्बन्धसमुदायजातिसम्बन्धसमुदायलिङ्गजातिसमुदायलिङ्गसंख्याव्यक्तिसम्बन्धसमुदायलिङ्गव्यक्तिसमुदायलिङ्गसंख्यासम्बन्धसमुदायलिङ्गसंख्याचतुष्कैः षट्। संख्याया जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसमुदायजातिसमुदायलिङ्गकारकव्यक्तिसम्बन्धसमुदायलिङ्गव्यक्तिसमुदायलिङ्गकारकसंख्यासमुदायलिङ्गकारकचतुष्कैः षट्।

४. जातेः व्यक्तिसम्बन्धसमुदायलिङ्गकारकव्यक्तिसमुदायलिङ्गकारकसंख्यासम्बन्धसमुदायलिङ्गकारकसंख्यापञ्चकस्तिस्रः। व्यक्तेर्जातिसम्बन्धसमुदायलिङ्गकारकजातिसमुदायलिङ्गकारकसंख्यासमु ायलिङ्गकारकसंख्यापञ्चकैस्तिस्रः, सम्बन्धस्य जातिव्यक्तिसमुदायलिङ्गकारकसंख्याव्यक्तिसमुदायलिङ्गकारकसंख्यापञ्चकैस्तिस्रः, समुदायस्य जातिव्यक्तिसम्बन्धलिङ्गकारकजातिसम्बन्धलिङ्गकारकसङ्ख्याव्यक्तिसम्बन्धलिङ्गकारकसंख्यापञ्चकैस्तिस्रः। लिङ्गस्य जातिव्यक्तिसम्बन्धसमुदायकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकजातिसम्बन्धसमुदायकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकसंख्यापञ्चकैस्तिस्रः। कारकस्य जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसम्बन्धसमुदायलिङ्गसंख्याव्यक्तिसम्बन्धसमुदायलिङ्गजातिपञ्चकैस्तिस्रः।

५. संख्यायाः जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसम्बन्धसमुदायलिङ्गकारकव्यक्तिसम्बन्धसमुदायलिङ्गकारकपञ्चकैस्तिस्रः। जातेर्व्यक्तिसम्बन्धसमुदायलिङ्गकारकसंख्याषट्केणैका, व्यक्तेर्जातिसम्बन्धसमुदायलिङ्गकारकसंख्याषट्केणैका, सम्बन्धस्य जातिव्यक्तिसमुदायलिङ्गकारकसंख्याषट्केणैका, समुदायस्य जातिव्यक्तिसम्बन्धलिङ्गकारकसंख्याषट्केणैका, लिङ्गस्य जातिव्यक्तिसम्बन्धसमुदायकारकषट्केणैकेति, पञ्चचत्वारिंशदधिकं शतद्वयमष्टपक्ष्यः पूर्वैर्यैकविंशत्या पष्ठ्यधिकं शतद्वयं कार्या इत्यर्थः। विपूर्वस्य युजेर्दधातिसमानार्थत्वाद्विपूर्वस्य दधातेः करोत्यर्थे प्रयोगदर्शनान्नियोक्तव्यशब्देन कार्य्यतोक्ता। एवं चैतेषां षट्षष्ठ्यधिकाष्टपक्षीशतद्वयगतानामष्टाविंशतिसहितशताधिकसहस्रद्वयसंख्याकानां पक्षाणां पूर्वप्रस्थानोक्तप्रकार एव परस्परव्यतिकरेणैकैकस्या अष्टपक्ष्याश्चतुःशतपक्षोत्पत्तेश्चतुःषष्ठिःहितषट्शताधिकसप्तविंशतिसहस्रपक्षसम्पत्त्या तावतां झटिति सङ्कलनाशक्तेरानन्त्यं भवतीत्याह—एवमिति।

इह पक्षसहस्राणां मिलिताः सप्तविंशतिः।
शतानि षट् चतुःषष्ठिश्चापरा वस्तुसप्तके॥
शीघ्रसङ्कलनाशक्तेरुपचारात्तथापि तु।
आनन्त्यवचनं यद्वा लिङ्गाद्याधिक्यकारितात्॥

विशेषणविशेष्यत्वप्रकाराधिक्यतोऽधिकाः ।
पक्षाश्चतुःशतात्पूर्वं गणितादित्यनन्तता ॥

ननु 'भाष्ये किमाकृतिः शब्दार्थो व्यक्तिरिति' पक्षद्वयस्यैवोपन्यासाद् व्याख्यातॄणामेतावत्पक्षोपन्यासो न युक्त इत्याशङ्क्याह—पूर्वपक्षेऽपीति । यत्रोच्चारणार्थक्यम्, तत्र व्यक्तिरर्थाः, अन्यत्राकृतिवचन इति भाष्ये पूर्वपक्षवेलायां द्वयवाच्यत्वपक्षस्यापि व्यक्तिपक्षवदुपन्यासादपिशब्दाच्च सिद्धान्तवेलायामथ किं विशेषणत्वेनाकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिमित्याकृतिविशिष्टव्यक्तिपक्षोपन्यासात्, ननु व्यक्तिविशिष्टायामाकृतौ वर्तेत इति च व्यक्तिविशिष्टाकृतिपक्षोपन्यासादुपलक्षणार्थः । सन्देहवेलायां पक्षद्वयोपन्यास इत्याशयः । नन्वेवं सति सर्वेषामेवोपन्यासनिराकरणे कस्मान्न कृत इत्याशङ्क्याह—उपन्यासेन चेति । सन्देहवेलायामपि पक्षद्वयोपन्यासोऽत एवेत्याह—तेनेति । भाष्योक्तसन्देहहेतुमुपन्यासपूर्वकं दूषयति—भाष्यकारेण चेति ।

अतः प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्छब्दलक्षणे व्यक्तिपक्षाभिधानाच्चेत्यस्मदुक्त एव द्वेधा सन्देहहेतुरित्याह—तेनेति । का पुनराकृतिरिति प्रश्नभाष्यं प्रथमपादेन त्वाकृतिः साध्यास्ति वा न वेत्याशङ्क्य; न प्रत्यक्षा सती साध्या भवितुमर्हतीत्यादिना रुचकादिद्वयात्मकवस्तूदाहरणेनाकृतिसद्भावस्य निरूपितत्वाद्युक्तमित्याशङ्क्ते—का पुनरिति । तदश्राविणो ज्ञानाभिप्रायेण तावत्प्रश्नमुपपादयति—नैव बोध इति । प्रथमपादाश्राविणस्तृतीयपादश्रवणेऽनधिकारज्ञानाभिप्रायायोगादुक्तेऽपि द्व्याकारे वस्तुनि को व्यक्त्याकारः, को वाऽऽकृत्याकार इत्यविवेकात्सन्देहाभिप्रायेणोपपादयति—सन्देहाद्वेति । श्येनादिमय्याशङ्कानिराकरणेनानुगताकारस्याकृतित्वनिश्चयात् सन्देहानुपपत्तेरुक्ताप्याकृतिर्व्यक्तिव्यतिरेकेणानुपलम्भान्न सम्भवतीति विपर्ययाभिप्रायेणोपपादयति—वैपरीत्येन वेति ।

युक्तिविशेषस्योत्तरेऽनभिधानेनोक्ताक्षेपाभिप्रायेण प्रश्नायोगात्स्वमतानुगताकारस्य व्यक्तितोऽत्यन्तभेदाभावेनाविचार्यत्वान्नातोऽत्यन्तभिन्नाकृतिर्वाच्या । न चासावस्तीत्येवं विपर्ययाभिप्रायेणोपपादयति—अथ वेति । द्रव्येत्युत्तरभाष्यमज्ञानसन्देहनिरासार्थत्वेन तावदवतारणपूर्वकं व्याचष्टे—तत्राहेति । अत्यन्तभेदे सति व्यतिरेकानुपलम्भादभावः स्यात् । भिन्नाभिन्नयोस्तु न भेदानुपलम्भमात्रेणाऽभावो भवतीत्युक्ताक्षेपनिरासार्थत्वेन व्याचष्टे यस्त्विति । ननु प्रथमपादोक्तन्यायेनैवाकृतिसिद्धावयं ग्रन्थोऽनर्थकः स्यादित्याशङ्क्याह—न चेति । एतदेवोपपादयति—तेनैवेति । विवेककथनार्थत्वाभावे स्वरूपकथनस्य सामान्यमित्येतावतैव सिद्धेर्मात्रशब्दोऽनर्थकः स्यादित्यर्थः ।

अत्यन्तभेदाभावेऽपि कथंचिद् भेदाद्विचार्यत्वं भवतीति द्वितीयविपर्ययाभिप्रायनिरासार्थत्वेन व्याचष्टे—यदपीति । यथा चायं मात्रशब्दोऽत्यन्तभेदनिरासार्थः । तथा सर्वसामान्यव्याप्त्यर्थोऽपीति दर्शयितुं, तदभावे सत्तामात्रमेव, द्रव्यत्वादित्रयमात्रमेव वा निर्दिष्टः स्यादिति पक्षद्वयं तावदाह—द्रव्यादीनां चेति । एतत्पक्षद्वयनिरासे मात्रशब्दं योजयितुमाह—अथ वेति ।

असाधारणविशेषेतिसमासं पराभिमतकर्मधारयत्वनिरासेन बहुव्रीहितया व्याचष्टे—असाधारणेति । कस्मादित्यपेक्षायां योऽर्थः सामान्यस्य विशेषाणां चाश्रयः, सा व्यक्तिरित्युपरिष्टादभिधानाद् 'द्रव्यगुणकर्मणां सामान्यविशेषवत्त्वं साधर्म्यमि'ति च वैशेषिकतन्त्रे द्रव्यगुणकर्म्मव्यक्तीनां सामान्यविशेषाधारत्वस्मृतेश्चेत्याह—उपरिष्टादिति । अन्त्यविशेषाणां वा नित्यद्रव्य-वृत्तित्वस्मृत्या सामान्यतो विशेषाणां द्रव्यवृत्तित्वं स्मृतं न भवतीति मत्वा—स्मृतेश्चेत्युक्तम् । कुतः प्रश्नपूर्वकस्य व्यक्त्याकृतिविवेकाभिधानस्य प्रस्तुतोपयोग इत्याशङ्क्य, व्यक्त्याकृतिवाच्यत्वविचारानुपपत्तिशङ्कानिरासार्थत्वं सूचयितुमाह—तेनेति ।

प्रयोगचोदनाभावादितिसूत्रमावृत्त्यैतद्विचारपूर्वपक्षेऽपि योजयति – किं प्राप्तमिति । अनेनैव सूत्रावयवेनाक्षिप्तानि हेत्वन्तराण्याह —संख्येति । एतदेव विवृणोति —यदि हीति । प्रयोगचोदनादिसिद्ध्यर्थं व्यक्तिलक्षणायां लक्षणैव दोषः स्यादित्याह—लाक्षणिकेति । ननु लक्षणापि शब्दवृत्तिप्रकारत्वान्न दोषमित्याशङ्क्याह—तथा चेति । ततश्च श्रुतिलक्षणाविवेको न स्यादिति भावः । मुख्यसामानाधिकरण्यसिद्ध्यर्थमपि व्यक्तेरेव शब्दार्थतेत्याह —व्यक्तीति । पशुचोदनाक्षिप्तहृदयादिव्यवहारसिद्ध्यर्थमपि व्यक्तेरेव शब्दार्थतेत्याह—पशुमिति । अपेक्षितविधिसिद्ध्यर्थमपि सैव शब्दार्थ इत्याह--कर्मभिश्चेति । सर्ववादिसिद्धत्वाच्च सैव वाच्येत्याह—सिद्धेति ।

अर्थैकत्वमिति सूत्रावयवमवतारयितुं शङ्कते—किमितीति । प्रयोगप्रतीत्युपपत्तेर्जातिर्वाच्या, क्रियोपपत्तेश्च व्यक्तिरित्यर्थः । सूत्रावयवेनेमां शङ्कां निराकरोति—नेति । अविभागादिति सूत्रावयवावतारणाय शङ्कते--सामान्येति । एतदाशङ्कानिराकरणार्थत्वेन सूत्रावयवं व्याचष्टे—व्यक्तीति । अर्थैकत्वमिति सूत्रावयवावतारणार्थं यत्रेति शङ्काभाष्यं निरुपपत्तिकमाशङ्क्योपपादयति—यत्रैवेति । सूत्रावयवव्याख्यानार्थत्वमुक्तमिति भाष्यमुपपादयति—नेति । आदिशब्देन विकल्पोपादानं गौरिति एकपदोच्चारणे क्रियाविशेषानवधारणेन तत्सम्भवासम्भवसन्देहादुच्चारणानर्थक्यसन्देहे संशयोत्पत्तिः कथमिति प्रश्नभाष्यं व्यक्तिपदार्थकस्येत्युत्तराननुरूपत्वादुपेक्ष्योत्तरानुरूपं स्वयं प्रश्नान्तरं करोति—व्यक्तीति । एतत्प्रश्नापाकरणार्थत्वेनोत्तरभाष्यं व्याचष्टे—आकृतीति । ननु कथं सामान्यावगतिरित्येतत्प्रश्नत्तोरभाष्यस्य प्रश्नान्तरापाकरणार्थत्वेन व्याख्या न युक्तेत्याशङ्क्य, यथाश्रुतस्य दूषणमाह—भाष्यकारस्त्विति । का तर्हि भाष्यस्य गतिरित्यपेक्षायामाह—तेनेति । अविभागादिति सूत्रावयवावतरणार्थोऽयं प्रश्न इति भावः । एवं भाष्यकृतः शून्यहृदयतापत्तेरन्यथा व्याचष्टे— यद्वेति । ननु विशिष्टाभिधाने पूर्वपक्षिणोऽभिमते कथं सामान्यावगतिरितिप्रश्नानुपपत्तिः, शुद्धाभिधाने तु पक्षान्तरपरिग्रहे प्रतिज्ञान्तराणां निग्रहस्थानं स्यादित्याशङ्क्य व्यक्तिः शब्दार्थ इति पूर्वपक्षप्रतिज्ञाया द्वैविध्यं दर्शयितुमाह—तेनेति । अद्रव्यशब्दत्वादिति सूत्रं सङ्क्षेपेण व्याचष्टे—तथा चेति । तस्मान्नाकृतिवचन इति उपसंहारभाष्यं व्यक्तिः शब्दार्थ इति प्रतिज्ञानुरोधात् व्यतिरेकमुखेन व्यक्त्यभिधानोपसंहारार्थमेवेति सूत्रयितुं तथा चेत्युक्तम् । अन्यदर्शनाच्चेतिसूत्रमन्वयमुखेन

तावत्स्वयं व्याचष्टे—अन्यथेति । यद्याकृतिवचन इति व्यतिरेकमुखेन भाष्यकारीयव्याख्यानमनुसन्धत्ते—अन्यथेति । पूर्वपक्षमुपसंहरति । तस्मादिति ।

आकृतिस्तु क्रियार्थत्वादिति सिद्धान्तसूत्रमुभयत्र क्रियासम्भवादुभयाभिधानप्रतिपादनार्थम् कस्यचिद् भ्रान्तिः स्यात्, तन्निवृत्त्यर्थं जातिमात्राभिधानप्रतिपादनार्थत्वेन व्याचष्टे—इतीति ।

नन्वाकृतेरपि व्यक्तिवच्चयनेनानुत्पाद्यत्वात्कथमाख्याश्रवणादाकृतेः पदार्थत्वविज्ञानमित्याशङ्क्याह—अत्र हीति । अत्र हि श्येनमिव चितं चयनेन निवर्त्तयेदिति वाक्यार्थं इत्यन्वयः । श्येन इव चीयत इति श्येनचिच्छब्दस्य कर्मव्युत्पत्तिप्रदर्शनार्थः । स्थलशब्दः क्विप्प्रत्ययस्याग्न्याख्यात्वौपाधिकत्वप्रदर्शनार्थः अग्निशब्दसादृश्यवाचिशब्दाश्रवणात् कथं सादृश्यलाभ इत्याशङ्क्य—परिशेषादित्युक्तम् । ननु श्येनव्यक्तिभिः स्थलस्य चेतुं शक्यत्वात् कथं सादृश्यलाभ इत्याशङ्क्य, श्येनशब्दार्थकरणत्वस्य निषेध्यमानत्वात्कर्म्मतैव वाच्येति दर्शयितुम्—वाक्यार्थद्वयमुक्तम् । नन्वेवमपि न सादृश्यलाभ इत्याशङ्क्यैतद्वाक्यार्थद्वयदूषणार्थं—यावदित्याद्युक्तम् । चयनेन श्येनव्यक्तिं कुर्यादित्येतद्यावन्नोपपद्यते, तथाकृतिं कुर्यादित्येतदपि यावन्नोपपद्यते तावत्परिशेषात्सादृश्यलाभ इति । यस्मादर्थं यावच्छब्दावृत्तिः । तस्मादर्थं तावच्छब्दोत्कर्षेण योज्यम् । चयनेन श्येनव्यक्तिं कुर्यादित्येतत्कस्मान्नोपपद्यत इत्यपेक्षायाम्—इष्टकाभिरित्युक्तम् । स्नाय्वादिभिस्तर्हि श्येनव्यक्त्यन्तरादुद्भूतैः क्रियतामित्याशङ्क्य स्नाय्वादिभिः—अपीति हेतुद्वयमुक्तम् ।

ननु स्त्रीपुंसमैथुनेन तर्हि क्रियतामित्याशङ्क्य, तेन निष्पन्नाया अपि श्येनव्यक्तेरग्निशक्तत्वात्तादर्थ्यासम्भवेन प्रयोजनान्तरकल्पनापत्तेः, मैथुने च चाग्न्याख्यानुपपत्तेरग्न्याख्यानिमित्तक्विप्प्रत्ययस्मृतिपरित्यागापत्तेश्चेत्युक्तम् । इष्टकाबाधश्चात्रापि तुल्यः । चयनेनाकृतिं कुर्यादिति वाक्यार्थानुपपादनार्थम्—आकृतेरपीत्युक्तम् । ननु सादृश्यमपि श्येनव्यक्त्या सह करिष्यते, अत आह—ततश्चेति । एकया वा श्येनव्यक्त्यन्तरविलक्षणया श्येनव्यक्त्या सहाग्न्याख्यस्थलस्य सादृश्यं सम्पद्येत, सर्वाभिर्वा । तत्रानिर्द्धारितरूपैकव्यक्तिसादृश्यस्य व्यक्तिनिरपेक्षजातिसादृश्यासम्भवेन जातिसादृश्यव्यतिरेकापत्तेर्निर्द्धारितरूपव्यक्त्यन्तरविलक्षणैकव्यक्तिसादृश्यं वाच्यम् । न चेष्टकाभिस्तत्सुसम्पादम् । सर्वव्यक्तिसादृश्यं तु तासां परस्परवैलक्षण्यादतीतानागतानां चाग्रहणेन तत्सादृश्याग्रहणादनाशङ्क्यमेवेत्याशयः ।

ननु चेत्याशङ्काभाष्यं व्याचष्टे—अथेति । न साधकतम इत्युत्तरभाष्यमनुवादपूर्वकमाक्षिपति—तत्रेति । यद्यपि सिंहं देवदत्तमानयेति सिंहशब्दवच्छ्येनं चितमिति द्वितीयान्तः श्येनशब्दः स्यात् तथापि तावत्सादृश्यविशेषणार्थत्वेन मुख्यार्थत्वाभावात्, मुख्यार्थत्वेऽपि वा श्येनमानयेति गोशब्दवत्परविशेषणार्थत्वेन स्वप्रधानभूतार्थप्रतिपादकत्वाभावान्न मुख्यश्येनशब्दार्थस्य करणत्वेनाशङ्कितस्येप्सिततमत्वाभिधानायाऽलम् । अयं च द्वितीयान्तवत् भवति । तस्याः श्येनशब्दानन्तर्याभावादित्यर्थः । क्विप्प्रत्ययान्तः शब्दोऽत्रेप्सिततमत्वनिर्देशकोऽभिमतः । न द्वितीयेतिभाष्यं समाधत्ते—तेनेति । स्मृतिपर्यालोच्येति ल्यब्लोपे

पञ्चमी, कथमेतत्स्मृतिपर्यालोचनया श्येनशब्दार्थस्य करणत्वनिषेधः अत आह— कर्म्मणि हीति। नन्वेवमपि प्रत्ययार्थमात्रस्य कर्मत्वावगतेर्नोपपदार्थस्य कर्मत्वं सिद्ध्येदित्याशङ्कयाह—यदीति। नन्वेवमप्युपपदस्य किमायातमित्याशङ्कयाह—न चेति। निरुपपदस्य चिनोतेरग्नौ प्रयोगादर्शनेनाग्न्याख्यात्वाभावात्प्रसिद्धचग्न्याख्यानिमित्तत्वाच्च क्विप्प्रत्ययस्मृतेः सोपपदस्यैव चिनोतेरग्न्याख्यात्वं गम्यत इत्यर्थः।

ननु कर्म्मणीति वाच्यसप्तम्या चिच्छब्दमात्रस्य कर्मवाचित्वावगतेरुपपदस्य कर्मवाचित्वनियमाभावात् कथं सकलस्यैकार्थत्वमित्याशङ्कयाह—तेनेति। केवलस्य चिनोतेरग्न्याख्यानुपपदापेक्षया 'कर्मणि हन' इत्येतत्सूत्रगतस्योपपदविशेषणस्य कर्मशब्दस्यावश्यानुवर्तनीयत्वादुपपदस्यापि कर्मवाचित्वावगतेर्न श्येनशब्दस्य कर्मवाचिना चिच्छब्देन सह वैय्यधिकरण्यमित्यर्थः। उपसंहरति—ततश्चेति। 'तृतीया तत्कृतार्थेन गुणवचनेने' (पा० सू०) त्यादितृतीयासमासलक्षणाभावादपि न श्येनशब्दार्थः करणमित्याह—यदि चेति। यद्यसौ करणं स्यात्, ततस्तृतीयासमासो वाच्यः। स चानुपपन्नः, लक्षणाभावादित्यर्थः।

नन्वश्रुततृतीयाकल्पनं चास्मिन्पक्षे स्यादित्याह—तृतीया चेति। काम्यत्वेन च श्रुताभिः श्येनव्यक्तिभिर्नित्यानामिष्टकानां बाधोऽस्मिन्पक्षे स्यान्न चाबाधपक्षसम्भवो बाधपक्षव्याप्य इत्याह—श्रुतेति। विश्वजिति तत्परत्वान्निषिद्धानुष्ठानं प्रसज्येतेत्याह—सत्यां चेति। अत इत्याशङ्कानिराकरणोपसंहारभाष्यं व्याचष्टे—तेनेति।

तथाकृतिवचनत्वे विकल्प इति पुनरुक्तं भाष्यं चयनमाकृतौ सम्भवतीत्यनेन पुनरुक्तं भासमानं सूत्रार्थोपसंहारार्थत्वेन व्याख्यातुमाह—अतश्चेति। उभयत्रेत्याक्षेपभाष्यस्य तात्पर्यमाह—नैतदिति। व्यतिरेकमुखेन तात्पर्यं तु योगसाध्यं भाष्यकारोक्तं द्रढयितुमन्वयमुखेन स्वयमुक्तं पर्यनुयोगं सामान्येऽपि व्यक्तिपक्षस्य ज्यायस्त्वसिद्ध्यर्थम्—बहुत्वाच्चेत्युक्तम्। परिहारसाम्यप्रतिपादनार्थं यदप्युच्यत इति भाष्यं व्याचष्टे—अथेति। परिहारसाम्येऽपि व्यक्तिपक्षस्य ज्यायस्त्वसिद्ध्यर्थं विशेषमाह—युक्ता चेति। व्यक्तेरेव वाचकरूपत्वेन क्रियायोगसिद्ध्यर्थमनन्वाख्यातोऽपि तृतीयासमासोऽङ्गीकरिष्यत इत्याह—अगत्या चेति। व्यक्तिपक्षेऽन्योऽपि विशेषोऽस्तीत्याह—संख्येति।

किं पुनरत्र ज्याय इति कास्वा सुचितमाक्षेपतात्पर्यं व्याचष्टे—तेनेति। आकृतिः शब्दार्थ इति समाधानभाष्यसूचिताः पर्यनुयोगपरिहारसाम्येऽप्याकृतिपक्षस्य ज्यायस्त्वसाधिका युक्तीर्वक्तुं स्वरूपतस्तावत् व्याचष्टे इतीति। प्रश्नपूर्वकं युक्तीराह—कुत इति। आद्यां युक्तिं व्याचष्टे—गोशब्दोच्चारणे हीति। गौरित्युक्ते सजातीयव्यक्तयन्तराव्यवच्छेदेन विजातीयव्यक्तिमात्रव्यवच्छेदप्रतीत्या सामान्यप्रतीतेः पूर्वभावमुपपादयितुम्—तदाकारेत्युक्तम्। एवमपि कथं जातिवाचित्वनिश्चयोऽत आह—अतश्चेति। द्वियीयां व्याचष्टे—यदीति। तृतीयां व्याचष्टे—गामिति।

ननु व्यक्तिपक्षज्यायस्त्वे युक्तीनामुपन्यस्तत्वात्कथमन्यतरपक्षावधारणेत्याशङ्कय, व्यक्तिपक्षं दूषयितुं त्रेधा विकल्पयति—व्यक्तीति। सर्वव्यक्त्यभिधानपक्षे तावत्कल्पना गौरव-

सम्बन्धानित्यत्वापत्तिव्यवहारद्व्येकवचनशुक्लादिसामानाधिकरण्यानुष्ठानासम्भवरूपदोषषट्-कमाह—तत्रेति ।

व्यक्तिसमुदायाभिधानपक्षेऽप्येतानेव दोषानतिदिशति—एवमिति । अतिदेशमुपपादयति—तत्रापि हीति । विशेष्यांशेऽपि व्यक्तिव्यतिरिक्तसमुदायकल्पनाभिधानानर्थक्यसम्बन्धानित्यत्वप्रसङ्गद्विवचनबहुवचनसामानाधिकरण्यानुष्ठानासम्भवरूपदोषषट्कमाह —व्यक्तीति । एकव्यक्त्यभिधानपक्षेऽपि सम्बन्धानित्यत्वव्यवहारसामान्यधीद्विवचनबहुवचनप्रत्युत्तरकालप्रयोगासम्भवविशेषहेत्वभावरूपं दोषषट्कमाह - अथेति । भाष्योक्ता युक्ताव्याख्यातुं प्रतिजानाति—अत इति । वक्ष्यत इति शेषः । यदीति भाष्यं व्याचष्टे—यदि चेति । एकव्यक्त्यभिधानविषयत्वं भाष्योक्तं दोषाणां द्योतयितुम् एकेत्युक्तम् । सर्वसामान्यविशेषविनिर्मुक्ता हीति कस्मिन्नर्थे हेतुरित्यपेक्षायां केनचित्साम्येन व्यक्त्यन्तरे प्रयोगो भविष्यतीत्याशङ्कानिराकरणहेतोरत्यन्तवैलक्षण्यस्योपपादनार्थेऽयं हेतुरिति दर्शयितुमाह—अत्यन्तेति । गोत्वादिना हि सामान्येन, खण्डमुण्डादिना च विशेषेण व्यक्तेर्व्यक्त्यन्तरेण साम्यं स्यात्, व्यक्तेः सामान्यरूपता विशेषरूपता वास्तीत्यर्थः । ननु एषां तर्हि साम्यं न भविष्यतीत्याशङ्क्याह—न चेति । नैष दोष इत्याद्याशङ्काभाष्यं व्याचष्टे—ननु चेति । यदीति परिहारभाष्यं व्याचष्टे—यद्येवमिति । न इत्युच्यत इत्याशङ्काभाष्यं व्याचष्टे—पूर्वपक्षेति । नेत्युच्यत इतीतिकरणकव्याख्यानार्थैवं शब्दः । व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्त एव वर्तिष्यत इत्यनेन सामान्यविशेषविनिर्मुक्तत्वं निमित्तीकृत्य व्यक्त्यन्तरे वर्तत इति नोच्यत इत्येवं भाष्यं व्याख्यातुम् —सामान्यविशेषविनिर्मुक्तत्वादित्युक्तम् । यस्यैकस्यां व्यक्तौ सामान्यविशेषविनिर्मुक्तत्वं निमित्तीकृत्य वर्तते, तथैव व्यक्त्यन्तरे इत्येवकारसूचितार्थकथनार्थं—व्यक्तावित्युक्तम् । किं तर्हि उच्यत इत्यपेक्षायां योऽर्थं इति भाष्यवाच्यव्यक्त्युपलक्षणत्वेन सामान्यविशेषविनिर्मुक्ततोच्यत इत्येतदर्थप्रतिपादनार्थतया व्याख्यातुमाह—किं त्विति । नन्वन्यापोहवती सामान्यविशेषाभावोपलक्षिता चेद्व्यक्तिर्वाच्यत्वेन कथ्यते; ततस्तदाश्रयत्वोक्तिर्विरुद्ध्येतेत्याशङ्क्य, सामान्यविशेषव्यतिरिक्तत्वं सामान्यविशेषरूपत्वाभाववाचिना विनिर्मुक्तशब्देनोच्यते नाश्रयत्वाभाव इति—व्यतिरेकशब्देनोक्तम् । तृतीयेत्थम्भूतलक्षणा । सामान्यविशेषनिर्मुक्त इत्युक्तम् इति नेयं निमित्तसप्तमी, किं तु व्यक्त्यन्तर इतिवदियमपि विषयसप्तमीत्याशयः । निमित्तत्वोक्तिनिराकरणस्य सिद्धान्त्युक्तानिष्टापत्तिपरिहारोपयोगितां दर्शयितुमाह—तत्रेति । व्याख्यातेऽर्थे भाष्यं योजयितुमाह—यो ह्यर्थ इति । तेनेत्याशङ्कोपसंहारभाष्यं व्याचष्टे—ततश्चेति । अनेन च तेनापशब्दलक्षितेन व्यतिरिक्तत्वेनोपलक्षणेन व्यक्त्यन्तरे वृत्तिर्युक्ता । न चैतावता सामान्याभिधानापत्तिर्दोषो व्यक्त्यन्तरस्य सामान्यरूपत्वाभावादित्येवं भाष्यं व्याख्यातम् । यदीति परिहारभाष्यं गोत्वशाबलेयत्वादिसामान्यविशेषाश्रयत्वैकार्थसमवायिनः सामान्यविशेषविनिर्मुक्तत्वस्योपलक्षणत्वाभ्युपगमाच्छुद्धस्यापि चोपलक्षणत्वेऽपि पिङ्गाक्षत्वाद्युपलक्षितस्य देवदत्तशब्दवाच्यत्वोक्तावपि सर्वस्मिंस्तदुपलक्षिते प्रयोगादर्शनेनोपलक्षणसद्भावे

सर्वत्र प्रयोगनियमाभावादयुक्तमाशङ्क्य यदि व्यक्त्यन्तरेष्वपि सर्वसामान्यविशेषविनिर्मुक्तत्वं निमित्तीकृत्य, गोशब्दो भवति, ततः शब्दप्रकृतिनिमित्तत्वात्सामान्यमेव वाच्यमापद्येतेति । यदि सामान्यविशेषविनिर्मुक्तत्वाद् व्यक्त्यन्तरं शब्दप्रवृत्तिविषयः तर्हि सामान्यरूपमेव तद्व्यक्त्यन्तरं वाच्यं स्यादित्यनेनैवोक्तम् । यदि तु सर्वसामान्यविशेषनिनिर्मुक्तत्वरूपं सामान्यं निमित्तं न भवति, तदोपलक्षणमात्रस्यानेकत्र शब्दप्रवृत्तिहेतुत्वाभावाद् व्यक्त्यन्तरे वृत्तिरदोषो न भवति, किं तु दोष एव । यदि तु निमित्ताभावेऽपि व्यक्त्यन्तरेषु शब्दो भवति, ततोऽश्वव्यक्तावपि वर्तेत इत्यनुषङ्गेण, अवृत्त्या वा योजयितुमाह—सिद्धान्तेति ।

आहेत्याशङ्काभाष्यं व्याचष्टे—नैवमिति । यदीति परिहारभाष्यं व्याचष्टे—यद्येवमिति । सामान्यप्रत्ययश्चेति भाष्यं प्रकृतासङ्गतत्वादपकृष्य यदि व्यक्तिः शब्दार्थः, व्यक्त्यन्तरे न प्रयुज्येतेत्येतस्मादनन्तरं व्याख्येयमित्याह यस्त्विति । भाष्यकृता त्वेकनिमित्तशून्येऽक्षशब्दस्यानेकत्र प्रयोगेऽक्षत्रयानुगतैकसामान्यप्रत्ययादर्शनादिहाप्येकनिमित्ताभावे प्रयोगमात्रेणानुगतैकाकारप्रत्ययो न स्यादिति सङ्गतिं मत्वा प्रोक्तम् । एवं तर्हीत्याशङ्काभाष्यं व्याचष्टे—शक्त्या तर्हीति । नैवमिति परिहारभाष्यं व्याचष्टे—नैवमपीति । गोत्वमित्याशङ्काभाष्यं व्याचष्टे—जात्येति । एवं तर्हीति परिहारभाष्यं गोत्वविशिष्टा व्यक्तिर्गोशब्दवाच्यतया प्रतीयेतेत्यस्य सिद्धान्तिनोऽप्यनिष्टत्वादयुक्तमाशङ्क्याकृत्यभिधानापादनार्थत्वेन व्याचष्टे —सत्यमिति । अस्तीत्याशङ्काभाष्यं प्रतिज्ञान्तराख्यनिग्रहस्थानापत्तेरयुक्तमाशङ्क्य पूर्वपक्षान्तरपरिग्रहार्थत्वेन व्याचष्टे—पूर्वपक्षेति ।

नैतदेवमिति परिहारभाष्यं व्याचष्टे—इतर इति । नन्वक्षादिशब्देष्वनेकार्थप्रत्ययस्यानेकशक्तिकल्पनाहेतुतया क्लृप्तस्येहापि भावादस्त्यनेकशक्तिकल्पनायां प्रमाणमित्याशङ्क्याह—न चेति । परस्परासम्बन्धार्थत्वेनागत्या तत्रानेकशक्तिकल्पनासामान्यविशेषयोस्तु परस्परान्वयादेकाभिधानेनेतरप्रतीतिसिद्धेरस्ति गतिरित्याशयः । तदेतदिति भाष्येण शब्दादाकृतिप्रत्ययसन्निधाने व्यक्तिप्रत्ययस्याकृतिप्रत्यय एव हेतुः नशब्द इति कथं निश्चय इत्याशङ्क्यान्वय-व्यतिरेकाभ्यां निश्चय उक्तः । तद्व्याचष्टे—अन्वयेति । अनन्तरकरिष्यमाणपक्षान्तरशङ्कोत्थापनार्थं सिद्धान्तमुपसंहरति—तेनेति ।

ननु भवत्वाकृतिः शब्दार्थः, तथापि व्यक्तिधर्मत्वेन तस्यास्तन्निरपेक्षायाः प्रतीत्ययोगाद्व्यक्तिविशिष्टैवाकृतिः शब्दार्थो भविष्यतीति पक्षान्तरशङ्कार्थं 'तस्माच्छब्द आकृति-प्रत्ययस्य निमित्तमित्यन्वव्यतिरेकसाधितविभागोसंहारस्य ननु गुणभूतेति चाकृतिविशिष्टव्यक्त्यभिधानशङ्काशेषनिराकरणस्य च वक्ष्यमाणत्वात्पूर्वोपन्यस्तपक्षापर्यवसानावगतेर्मध्ये पक्षान्तरोपन्यासस्यासङ्गतत्वादयुक्तमाशङ्क्य समर्थयते—साम्प्रतमिति । तस्माच्छब्द इत्यस्य व्यक्तिविशिष्टाकृतिपक्षनिराकरणोपसंहारार्थत्वेनापि व्याख्यातुं शक्यत्वात् । ननु गुणभूतेत्याशङ्कायाश्चोभयसाधारण्योपपत्तेः पक्षान्तरोपन्यासान्यथानुपपत्त्यैव पूर्वोपन्यस्तपक्षपर्यवसाननिश्चयात्पक्षान्तरोपन्यासावसरोपपत्तिसूचनार्थम्—सम्प्रत्युक्तम् । इति साम्प्रतमितीतिकरणोपक्रमो वायं ग्रन्थः । यस्मात्पूर्वोपक्रान्तः पक्षः, समाप्तः तस्मात्साम्प्रतं

पक्षान्तरोपन्यासो युक्त इतीतिकरणो हेत्वर्थः। पूर्वं ग्रन्थशेषत्वेऽनुसमाप्त्यर्थः। पक्षान्तरकरणबीजमाह—लदेतदिति। आदावेव वाशब्दप्रयोगेणाऽस्य व्याख्यानस्य परमतत्वं सूचितम्। व्यक्तिविशिष्टाकृतिपक्षनिरासस्य विस्तरोक्त्यभावेनोपसंहारानर्थक्यात्तस्माच्छब्द इत्यस्य वाञ्जस्येन तदर्थाप्रतीतेः।

नन्नु गुणभूतेत्यस्य चाकृतिर्गुणभावेन विवक्षितेत्येवदनुभाषणार्थत्वावगतेः साधारण्यायोगात्सिद्धान्तोपसंहारं च विनास्य पक्षस्यानवतारादश्रुतोपसंहारापत्तेरिति स्वमतेन व्याचष्टे—यद्वेति। व्यक्तिधर्मत्वेनाकृतेः ततः प्राक् प्रतीत्ययोगादन्वयव्यतिरेकाक्षेपार्थत्वेन सङ्गतिरित्याशयः। ननु व्यक्तिविशिष्टाकृतिपक्षोपन्यासात् कथं शुद्धाया व्यक्तेः शब्दार्थत्वं सिद्धयेदित्याशङ्क्याह—अनेनेति। आकृतेः शब्दार्थत्वं मदभिमतमनेन पूर्वपक्षिणाभ्युपगतमेव क्रियासम्भवश्च व्यक्तिविशेषणाद्भविष्यतीत्यभिप्रायेण सिद्धान्ते व्यक्तेरपि गुणत्वेनाभिधानमिच्छति, ततोऽहं पूर्वं शुद्धव्यक्त्यभिधानं साधयिष्यामीत्यनेनाभिप्रायेणेदमुच्यत इत्यन्वयः। व्यक्तिविशिष्टायां तदिति परिहारभाष्यं व्याचष्टे—इतरस्त्विति। व्यक्त्यभिधानपक्षोक्तसर्वदोषोपलक्षणार्थत्वमस्य दर्शयितुमाह—यदीति। तस्मादिति ग्रन्थे पूर्वोक्तान्वयव्यतिरेकसाधितव्यक्तिप्रत्ययनिमित्तविभागोपसंहारार्थत्वेन स्पष्टत्वादव्याख्यायाऽत्र ग्रन्थपातनिकार्थं शुद्धाकृतिपक्षं सिद्धान्त्युक्तमुपसंहरति—तेनेति।

पूर्वव्याख्यानेन शब्दः शुद्धाकृतिप्रत्ययस्य निमित्तं व्यक्तिप्रत्ययस्य एवेत्युपसंहारभाष्यव्याख्यानार्थोऽयं ग्रन्थः। नन्वाकृतेर्व्यक्तिधर्मत्वाच्छुद्धाया वाच्यत्वं न युक्तमित्याशङ्कार्थं नन्विति भाष्यं व्याचष्टे—नन्विति। न तु गुणीभाव इति परिहारभाष्यं व्याचष्टे—नैवमिति। वस्तुतो व्यक्तिधर्मत्वेऽप्याकृतेः शब्दतः स्वरूपमात्रेण प्रतीतेः शुद्धाभिधानाविरोध इत्याशयः। व्यक्त्यभिधानेऽप्याकृतेरुपलक्षणत्वाद्व्यक्त्यन्तरप्रयोगः, व्यवस्था वोपपन्नेति पूर्वपक्षिणोक्ते यत्सिद्धान्विते एवं तर्हीत्यादिनोपलक्षणत्वे सत्याकृतेरपि विशेषणत्वेनाभिधानम्—प्रसज्येतेत्युक्तम्।

तदाक्षेपार्थं ननु चेत्याशङ्काभाष्यं व्याचष्टे—नन्विति। भाष्यकारीयदण्डशब्दोदाहरणमाक्षेप्तुमुपन्यस्यति—भाष्येति। द्वेधाऽक्षिपति—नन्विति। आद्यमाक्षेपं परिहरति—यत्त्विति। विशेषणोपलक्षणशब्दयोर्व्यावर्त्तकत्वापरपर्यायविशेषणत्वात्स्वतन्त्रस्यैव व्यावर्त्तकस्योपलक्षणत्वादस्त्येव भेद इत्याशङ्क्य परिहारान्तरमाह—यद्वेति। किं तत्सामान्यमित्यपेक्षिते यथा दण्डो विशिष्टवाचिना प्रत्ययेनानभिधेयः तथाकृतिरपि तदुपलक्षितव्यक्तिवाचिना गोशब्देनेत्यनभिधेयैव। यथा दण्डो व्यावर्त्तकस्तथाकृतिरपीति विशेषवत्त्वेन वेति सामान्यद्वयमुक्तम्। आकृतिविशिष्टेति वास्मिन्परिहारे तदुपलक्षिताभिप्रायमुपचाराद् व्याख्येयम्। समाधानमुपसंहरति—ततश्चेति। ननूपलक्षणत्वेऽप्याकृतेः सामान्यप्रत्ययश्च न प्राप्नोतीति दूषणं परिहर्त्तुमशक्यम्। उपलक्षणस्योपलक्ष्ये स्वानुरक्तप्रत्ययजनकत्वादर्शनात्। न ह्येकापवरकस्याक्षत्रयस्य यदिदानीमस्मिन्नपरवरकेऽस्ति, तदक्षशब्दवाच्यमित्येकापवरकत्वमुपलक्षणीकृत्य केनचित्सम्बन्धकथने कृतेऽपि, व्यवहारकालेऽक्षशब्दोच्चारणादेकापवर-

कस्थत्वाकारेण नाक्षः प्रतीयते, किं त्वक्षमात्रम् । तेनोपलक्षणत्वेऽपि गवाकारप्रतीत्ययोगात्सामान्यप्रत्ययो न स्यादेवेत्यनर्थकमुपलक्षणत्वाङ्गीकरणमित्याशङ्क्याह—एवं चेति । एतद्दोषापरिहारोत्तरदोषपरिहारार्थोपलक्षणत्वोक्तिरित्याशयः । नैतदितिपरिहारभाष्यं व्याचष्टे—तदेतदिति । यथोपलक्षणाभावेऽश्वव्यक्तावपि गोशब्दो वर्तेत इत्यतिप्रसक्तिरुक्ता तथा चातोऽप्युपलक्षणस्याप्रतीतस्याविशेषकत्वात्प्राप्नोतीत्यर्थः ।

नन्वेवं सति मत्वर्थीयेभ्योऽपि विशेषणांशाभिधानद्वारेण तदविनाभावाद्विशिष्टा प्रत्ययोपपत्तिः तेषामपि न विशिष्टवाचिता स्यादित्याशङ्कानिराकरणार्थं न च यथेति भाष्यं व्याचष्टे—न चेति । प्रकृत्यर्थस्य दण्डस्य प्रत्ययेन विशेषणत्वोक्तौ विशेषणत्वान्यथानुपपत्त्या विशिष्टप्रतीतिसम्भवेऽपि मत्वर्थीयप्रत्ययस्य विशेषणे प्रयोगाभावाद्विशिष्टवाचितेष्टा, तद्वज्जातिशब्दानामप्याकृतौ प्रयोगाभवे सति विशिष्टवाचिता स्यात् न चासावस्ति श्येनचिच्छब्दे जातिशब्दस्याकृतौ प्रयोगदर्शनादित्यर्थः । यदा च केवलाकृत्यभिधायिश्येनशब्दो दृष्टः तदान्वयव्यतिरेकाभ्यामप्याकृतिवाचिता निश्चीयते । व्यक्तिसम्बन्धाभावेऽप्याकृतौ प्रयोगादाकृतिसम्बन्धं विना क्वचिदपि व्यक्तावप्रयोगादिति प्रतिपादनार्थं तदेवमिति भाष्यं व्याचष्टे—अन्वयेति । व्यक्तेरशाब्दत्वेऽन्वयव्यतिरेकौ पूर्वमुक्तौ शब्दस्याकृतिवाचितायामधुनेति विवेकः ॥ ३३ ॥

भा० प्र० — इस सूत्र में तु शब्द का प्रयोग पूर्वपक्ष के निराकरण के लिए किया गया है । मीमांसादर्शन में आकृति ही शब्द की वाच्य अर्थ है, किन्तु नैयायिक की आकृति से मीमांसकों की आकृति भिन्न है, नैयायिकों ने अवयव-सन्निवेश को आकृति माना है । किन्तु कुमारिल ने जाति को ही आकृति माना है, क्योंकि, उसी के द्वारा व्यक्ति अर्थ निरूपित होता है ।

इस प्रसङ्ग में भगवान् भाष्यकार ने कहा है कि व्यक्ति को वाच्य मानने पर इष्टका के चयन से श्येन व्यक्ति का उत्पादन सम्भव नहीं है । इस असम्भव अर्थ को कहने से यह वचन सर्वथा अनर्थक होगा । इसलिए शब्द का जाति अर्थ वाच्य है । यदि यह कहा जाय कि श्येन व्यक्तियों के चयन से अनुष्ठान किया जायगा । प्रस्तुत प्रसङ्ग में श्येन शब्दार्थ साधकतम करण नहीं है । अपितु यह 'श्येनचितम्' ईप्सिततम है । आशय यह है कि श्येनचित् शब्द की सिद्धि कर्मण्यग्न्याख्यायाम् (पा० सू० ३।२।९२) से होती है । अर्थात् अग्नि की संज्ञा प्रतीति होने पर कर्म के उपपद रहने पर चयन अर्थ को कहने वाले चिञ् धातु से कर्मकारक में क्विप् प्रत्यय का विधान होता है । अतः श्येन शब्द ईप्सिततम कर्म है, साधकतम नहीं है । अतः श्येन व्यक्ति की उत्पत्ति न होकर श्येन आकृति का ही उत्पादन सम्भव होने से यह आकृति का वाचक है ।

"व्रीहीन् प्रोक्षति" व्रीहिका प्रोक्षण करता है । इस उदाहरण का अवलोकन करने पर यह अवगत होता है कि व्यक्ति शब्द का अर्थ है, क्योंकि, आकृति को शब्दार्थ

मानने पर प्रोक्षण क्रिया ही सम्भव यहीं है। 'व्रीहीन् प्रोक्षति' में व्रीहि व्यक्ति लक्ष्य है, आकृति स्वरूप शक्य है। एवं आकृति लक्ष्य अर्थ और व्यक्ति शक्य है।

आशय यह है कि पूर्व सूत्र के द्वारा व्यक्ति को शब्द का अभिधेय माना गया है। इस सूत्र के तु शब्द के प्रयोग से पूर्वपक्ष का निरास कर आकृति को वाच्य माना है, क्योंकि, क्रिया आकृति को शब्दार्थ मानने पर ही सम्भव है।

नैयायिकों ने अवयव संस्थान अर्थ अर्थात् अवयव सन्निवेश अर्थ में आकृति शब्द का प्रयोग किया है, किन्तु, मीमांसक सिद्धान्त में इस अर्थ में आकृति शब्द का प्रयोग नहीं माना है। श्लोकवार्तिक में स्पष्ट शब्दों में लिखा है—जाति को ही आचार्यों ने आकृति शब्द से कहा है। क्योंकि, इसी के द्वारा व्यक्ति निरूपित होता है।

"जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥"

(श्लो॰ वा॰ आ॰ ३ पृ॰ ३८५)।

अवयव संस्थान आकृति नहीं है, इसका प्रतिपादन इस प्रसङ्ग में किया गया है, अतः, आकृति का अर्थ जाति है, अवयव संस्थान नहीं है। व्यक्ति को शब्द का शक्य मानने पर श्येनचितं चिनोति (तै॰ सं॰ ५।४।११) इत्यादि वचन अनर्थक होने लगेंगे। क्योंकि, श्रुतियों में कहा है कि चयनक्रिया अर्थात् अग्नि स्थापन रूप वैदिक क्रिया-विशेष से इष्टका के द्वारा चीयमान श्येन सदृश होमादि-वेदि-विशेष का सम्पादन करें। प्रकृत स्थल में श्येन सदृश अर्थ होता है। यदि व्यक्ति का ही सादृश्य अथ वा किसी एक व्यक्ति का सादृश्य या सभी श्येन व्यक्ति का सादृश्य गृहीत होगा। प्रकृत में सभी श्येन व्यक्तियों का सादृश्य एक स्थान में नहीं हो सकता है, अतः, किसी एक श्येन व्यक्ति का सादृश्य ही गृहीत होगा। किसी एक श्येन व्यक्ति का सादृश्य ग्रहण करने पर अर्थात् किसी एक श्येन व्यक्ति के सादृश्य को वेद वचन के तात्पर्य का विषय मानने पर उस कर्म काल में सादृश्य के लिए गृहीत श्येन का नाश होने पर इस चयन क्रिया का लोप ही होने लगेगा, क्योंकि, व्यक्ति ही शब्द का अधिधेय है और उस एक व्यक्ति का सादृश्य जब "श्येनचितं चिन्वीत्" इस वेद वचन के तात्पर्य का विषय है तब उसका नाश हो जाने पर अन्य श्येन व्यक्ति का सादृश्य तो ग्रहण के योग्य नहीं है। जाति को शब्द का वाच्य होने पर श्येनत्व जाति का आश्रय श्येन का सादृश्य ही विवक्षित है, ऐसी स्थिति में श्येन का नाश होने पर भी अन्य श्येन के सादृश्य से क्रिया का निर्वाह हो सकता है, क्योंकि सभी श्येन व्यक्ति श्येनत्व जाति का आश्रय है। अत एव व्यक्ति को अभिधेय मानने पर वेदविहित क्रिया का लोप होने से व्यक्ति शब्द का वाच्य नहीं है अपि तु आकृति अर्थात् जाति ही शब्द का वाच्य अर्थ है।

इस प्रसङ्ग में व्यक्ति को वाच्य मानने वालों का कहना है कि आकृति के अभिधेय होने पर "व्रीहीन् प्रोक्षति" इत्यादि विधि उपपन्न नहीं हो सकती है, क्योंकि आकृति

का प्रोक्षण आदि संस्कार नहीं हो सकता है। इसके समाधान में कहा जा सकता है कि आकृति के वाच्य होने पर भी उसके द्वारा लक्षणावृत्ति के द्वारा व्यक्ति की उपस्थिति हो जायगी। अतः, व्रीहि आदि का प्रोक्षण हो सकता है।

इस प्रसङ्ग में पूर्वपक्षी का यह कथन है कि व्यक्ति में शक्ति मानने वालों के मत में भी व्यक्ति में शब्द की वाच्यता होने पर भी उसके उपलक्षण के रूप में जाति की भी प्रतीति होती है। उपलक्षण अर्थात् अनन्वयी विशेषण अर्थात् जो विशेषण विशेष्य के साथ अन्वित न होकर भी विशेष्य की स्वतन्त्रता का बोध कराता है—उसको उपलक्षण कहा जाता है। वह जो लाल कपड़ा पहने हुआ है वह देवदत्त है। इसी प्रकार जिस घर से काक उड़ रहा है—वह देवदत्त का घर है। यहाँ रक्तवस्त्र एवं काक उपलक्षण है। इन स्थलों में रक्तवस्त्र या काक देवदत्त या गृह की स्वतन्त्रता का निर्देशक होने पर भी वे वाक्य के तात्पर्य के अन्तर्गत नहीं हैं शुद्ध देवदत्त या घर ही शब्द के द्वारा अभिहित होता है। वैसे ही प्रकृत में उपलक्षण रूप में जाति का बोध होने पर भी जाति शब्द का वाच्य नहीं है, वरन् शुद्ध व्यक्ति ही शब्द का वाच्य है। अतः, व्यक्ति के अभिधेय होने पर भी जाति का उपलक्षण रूप में भान होता है। इस प्रकार जाति में शक्ति मानने वालों के मत में जाति अभिधेय और व्यक्ति की उपलक्षण के रूप में प्रतीति होती है और व्यक्ति में शक्ति मानने पर व्यक्ति वाच्य एवं जाति की उपलक्षण के रूप में प्रतीति होती है। इन दो मतों में कौन मत समीचीन है? इसके उत्तर में जाति को अभिधेय मानना ही उचित है। क्योंकि, आकृति को अभिधेय मानने में लाघव है, यदि व्यक्ति को वाच्य माना जाय तो अनन्त व्यक्ति में अनन्त शक्ति की कल्पना माननी पड़ेगी, अतः, कल्पना गौरव होगा। इसलिए, लाघव की दृष्टि से जाति को शब्द का अभिधेय मानना उचित है। व्यक्ति में शक्ति मानने पर दूसरी आपत्ति यह भी है कि व्युत्पत्ति के समय जिस व्यक्ति में शक्ति गृहीत होगी, उस व्यक्ति को छोड़कर अन्य में शक्ति गृहीत नहीं हो सकती है; क्योंकि जो सामान्य एवं विशेष से रहित है, उसी को व्यक्ति कहा जाता है। अतः सामान्य-विशेष रहित गोव्यक्ति में शक्ति गृहीत होने पर भी उसके आधार पर अत्यन्त भिन्न अन्य गोव्यक्ति का भी ज्ञान माना जाय तो अश्व-व्यक्ति का बोध उससे क्यों नहीं होगा? क्योंकि, गोव्यक्ति के समान ही अश्वव्यक्ति भी सामान्य-विशेष-विनिर्मुक्त ही है।

जाति में शक्ति मानने पर, उत्पन्न, उत्पद्यमान सभी व्यक्तियों की प्रतीति हो सकती है। क्योंकि व्यक्ति तथा जाति अत्यन्त भिन्न नहीं है। अतः, जाति में शक्ति मानने पर किसी प्रकार की अनुपपत्ति नहीं है। इसी प्रकार शुक्ल गोव्यक्ति को दिखाकर गो शब्द का अर्थ अभिहित करने पर वह पुरुष जब कृष्णवर्ण की गौ को देखेगा तब उसको अर्थ बोध नहीं होगा। क्योंकि, शुक्लवर्ण की गोव्यक्ति से कृष्णवर्ण की गोव्यक्ति भिन्न है। अतः पूर्व कथित दोषों को दृष्टि में रखकर व्यक्ति को शब्द का अभिधेय नहीं

माना जा सकता है। व्यक्ति में शक्ति मानने पर 'गाय लाओ' यह सुनकर सन्देह भी होगा, किस वर्ण की गौ को लाऊँ और शाब्द ज्ञान संशयात्मक उत्पन्न नहीं होता है। अपि तु निश्चयात्मक ही होता है, किन्तु व्यक्ति में शक्ति मानने पर यह सन्देह स्वाभाविक है। जाति को शब्द का अभिधेय मानने पर गो शब्द को सुनने के बाद गो जाति-विषयक प्राथमिक ज्ञान निश्चयात्मक ही होगा। इसके बाद विशेष स्वरूप अज्ञात होने से संशय होगा कि किस वर्ण की गौ लाऊँ, इसलिए भी व्यक्ति शब्द का वाच्य नहीं है।

नैयायिकों के मत में विशिष्ट में शक्ति मानी जाती है, यह भी ठीक नहीं है। अर्थात् जाति विशिष्ट व्यक्ति शब्द का वाच्य नहीं हो सकती है। क्योंकि यह स्वरूप मानने पर व्यक्ति विशेष्य है, जाति उसका विशेषण है, ऐसी स्थिति में विशेषण का प्रथम ज्ञान हुए विना विशिष्ट बुद्धि नहीं हो सकती है। क्योंकि दण्डी पुरुष को देखकर प्रथम में ही 'यह दण्ड' इस प्रकार ज्ञान नहीं होता है, अपि तु उसके हाथ में जो दण्ड है उसका प्रथम ज्ञान होने के बाद ही दण्ड, पुरुष एवं दोनों के सम्बन्ध ज्ञान के बाद दण्डी यह बोध होगा। अतः, जाति-विशिष्ट-व्यक्ति में शक्ति मानने पर जाति-विशिष्ट-व्यक्ति की प्रतीति से पूर्व जाति का ज्ञान आवश्यक है, और शब्द शक्ति के आधार पर प्रथम जाति के ही बोधगम्य होने पर अभिधा व्यापार के द्वारा पुनः व्यक्तिरूप विशेष्य का बोध नहीं हो सकता है, क्योंकि अनुभवसिद्ध यह नियम सकलजन स्वीकृत है कि 'शब्दबुद्धि-कर्मणां विरम्य व्यापाराभावः' अर्थात् शब्द, ज्ञान और कर्म का व्यापार निवृत्त होने पर पुनः उसकी प्रवृत्ति नहीं हो सकती है। अत एव विशिष्ट प्रतीति के स्थल में व्यक्ति का विशेषण जो जाति उसी को शब्द का अभिधेय मानने पर अभिधा शक्ति के विरत व्यापार होने पर जाति-विशिष्ट-व्यक्ति शब्द का वाच्य नहो हो सकती है। इसीलिए, कुमारिल भट्ट ने कहा है—

"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"

शब्द की अभिधाशक्ति के द्वारा जाति रूप विशेषण को अवगत कराने के बाद व्यक्तिरूप विशेष्य उसका वाच्य नहीं हो सकता है, तब लक्षणा वृत्तिरूप व्यापारद्वारक व्यापार से शब्द से व्यक्ति की भी प्रतीति में कोई वाधा नहीं है।

आकृति की वाच्यता मीमांसकों की केवल उत्प्रेक्षामात्र नहीं है, अपितु यह अन्वय-व्यतिरेक सिद्ध है। क्योंकि उच्चारण करने पर गो व्यक्ति की प्रतीति होती है—यह सभी लोगों का अनुभव सिद्ध विषय है। व्यक्ति की प्रतीति शब्द से होती है या आकृति से उत्पन्न होती है—यह सन्देह का विषय है। यह भी देखा जाता है कि शाब्द ज्ञान न होने पर भी जो आकृति अर्थात् जाति का अनुभव करता है उसके साथ व्यक्ति का भी अनुभव करताहै। किन्तु मानसिक दुर्बलता आदि किसी कारण से आकृति जिसके ज्ञान का

गोचर नहीं होता है उनके ज्ञान का गोचर व्यक्ति भी नहीं होगा, अतः अन्वय व्यतिरेक से यह सिद्ध होता है कि आकृति के ज्ञान से ही व्यक्ति की प्रतीति होती है। ऐसी स्थिति में व्यक्ति को शब्द का अभिधेय न होने से आकृति को ही शब्द का वाच्य अर्थ मानना उचित है। क्योंकि, शब्द के श्रवण के बाद आकृति का बोध होने पर व्यक्ति का भी ज्ञान होता है। "आकृतिः" = आकृति अर्थात् जाति, "तु"—पूर्व पक्ष की निवृत्ति के लिए हैं, "क्रियार्थत्वात्"=क्योंकि क्रियार्थता अर्थात् कर्मसम्पादन रूप प्रयोजन रहने से, स्थान-स्थान में कर्मसम्पादन प्रयोजन होने से व्यक्ति शब्द का अभिधेय होने पर वह सम्पन्न नहीं हो सकता है, अतः, आकृति अर्थात् जाति ही शब्द का वाच्य अर्थ है ॥ ३३ ॥

**न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥३४॥**

शा० भा०—अथ यदुक्तं न क्रिया सम्भवेद् 'व्रीहीन् प्रोक्षति' इति। न द्रव्यशब्दः स्यात्, 'षड् देया' इति। अन्यदर्शनवचनं च न स्यात्, अन्यं[1] तद्रूपमिति। तत् परिहर्तव्यम् ॥ ३४ ॥

**तदर्थत्वात् प्रयोगस्याविभागः ॥ ३५ ॥**

शा० भा०—आकृत्यर्थत्वाच्छब्दस्य यस्या व्यक्तेराकृत्या सम्बन्धः तत्र प्रयोगः प्रोक्षणं हि द्रव्यस्य कर्तव्यतया श्रूयते। कतमस्य? यद् यजतिसाधनम्। अपूर्वप्रयुक्तत्वात्तस्य, नाऽऽकृतेः। अशक्यत्वात्[1]। तत्र व्रीहिशब्द आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय। स ह्याकृतिं प्रत्याययिष्यति, आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेक्ष्यतीति। तेनाऽऽकृतिवचनं न विरुध्यत इति। एवं षड् देया गावो दक्षिणा इति दक्षिणाद्रव्ये संख्यायाः प्रयोक्तव्ये[3] गाव इत्याकृतिवचनो विशेषकः। तथा अन्यमिति विनष्टस्य प्रतिनिधेरन्यत्वसम्बन्धः। तत्र पशुशब्द आकृतिवचन आकृत्या[4] विशेक्ष्यतीति। तस्माद् गौरश्व इत्येवमादयः शब्दा आकृतेरभिधायका इति सिद्धम् ॥ ३५ ॥ क. उत्तरम् आकृतिशक्त्यधिकरणम्।

॥ इति श्रीशबरस्वामिनः कृतौ[1] मीमांसाभाष्ये प्रथमस्याध्यायस्य स्मृतिपादोऽयम् तृतीयः पादः ॥

———

१ ब. अथान्यं।

२. ब. संख्ययायोक्तव्ये।

४. ब. स्वामिः कृत पु० पा०।

१. ब. अशक्तत्वात्तत्र।

३. आकृत्यविशक्ष्यतीति।

भा० वि०—प्रथमेनेतिचेदित्यनेनाकृतिवचनत्वपक्षं परामृश्य न क्रिया स्यादित्यादिना पूर्वपक्षहेतुत्रयं प्रयोगचोदनाभावादिरूपमनुभाष्यत इति व्याचष्टे—**अथ यदुक्तमित्यादिना**। अद्रव्यशब्दत्वादिति सूत्रेण द्वितीयतयोक्तं हेतुं न द्रव्यमिति चेदिति तृतीयतया अनूदितमपि स्वयं द्वितीयतया व्याचष्टे—**न द्रव्यशब्दः स्यादिति**। अनेन संख्यापदस्यानुषङ्गेऽपि सूचितः। अन्यदर्शनादिति तृतीयतयोक्तमर्थान्तरविधानमिति द्वितीयतया अनूदितं च हेतुं न स्यादिति पदद्वयानुषङ्गेण तृतीयतया व्याचष्टे—**अन्यदर्शनेति** ॥ ३४ ॥

भा० वि०—अनूदितस्य हेतुत्रयस्य परिहार्यतामुक्त्वा परिहारसूत्रमादत्ते—**तदित्यादिना**। तत्र न क्रिया स्यादित्यनूदितप्रयोगचोदनाभावनिराकरणपरतया तावद्व्याचष्टे—**आकृत्यर्थत्वादित्यादिना**। प्रयोगः अनुष्ठानम्। एवं चशब्दस्य न्यायेनाकृत्यर्थत्वावधारणादालम्भनादिक्रियाया द्रव्ये प्रयोगस्यानुष्ठानस्याविभागः आकृत्या सह सम्बन्धविशेषः कारणमिति सूत्रं योजितम्।

नन्वाकृतिपक्षे तस्या एवापूर्वसाधनत्वापत्तेः कथं तत्सम्बन्धिन्यां व्यक्तौ प्रोक्षणादिप्रयोगः, तत्राह—**प्रोक्षणं हीति**।

ननु द्रव्याणामाकृतिसम्बन्धिनामनेकत्वात् कस्येत्यनध्यवसायः स्यादिति पृच्छति—**कतमस्येति**। व्रीहिभिर्यजेतेति यागसाधनत्वेन विहितान् व्रीहीनुद्दिश्य प्रोक्षणादीनां विधानान्नानध्यसाय इति परिहरति—**यजति यागसाधनमिति**। कस्माद्यागसाधनस्य द्रव्यस्यैवेति नियम इत्यपेक्षायां तस्यैव यागद्वारा अपूर्वसाधनत्वात् तत्प्रयुक्तत्वाच्च प्रोक्षणादीनामित्याह—**अपूर्वेति**। द्रव्यस्यैवेत्यस्य व्यावर्त्यमाह—**नाकृतेरिति**। **अशक्यत्वादिति**। त्यक्तुमशक्यत्वेनापूर्वसाधनासामर्थ्यादित्यर्थः।

नन्वेवमपूर्वीयत्वेन व्यक्तेरेव प्रोक्षणादिसम्बन्धे किमाकृत्यभिधानेनेति, तत्राह—**तत्र व्रीहिशब्द इति**। एतदेव विवृणोति—**स इति**। तेन यत्र व्यक्तेरेव प्रयोगान्वयः तत्रापि तत्प्रयोगितयाकृत्यभिधानं न विरुध्यत इति निगमयति—**तेनेति**। न द्रव्यमितिचेदित्येतदुत्तरत्वेनापि तदर्थत्वादित्यादि सूत्रं व्याचष्टे—**तथा षड् देयाः इत्यादिना**। तत्र व्यक्तेरेव संख्यान्वयेऽपि तद्विशेषणतया आकृतिवचनमविरुद्धमित्यर्थः। अत्र त्वाकृत्यर्थत्वाच्छब्दस्य षडादिसङ्ख्याया अपि द्रव्ये प्रयोगस्य प्रकर्षकत्वेन विशेषणत्वेन प्रयोगस्याविभागः सम्बन्धः कारणमिति सूत्रं व्याख्येयम्, अर्थान्तरविधानं न स्यादित्युत्तरत्वेनापि व्याचष्टे—**तथान्यमितीति**। नष्टस्य पशोः प्रतिनिधित्वेन य उपात्तः तस्यैवान्यत्वादिसम्बन्धेऽपि तद्विशेषकत्वेनाकृतिवचनं न विरुध्यत इत्यर्थः। अत्रापि न्यायेनाकृत्यर्थत्वाच्छब्दस्य प्रतिनिहिते द्रव्यान्तरेऽन्यत्वादिधर्मवति प्रयोगस्यानुष्ठानस्याविभागस्सम्बन्ध-

विशेषः कारणमिति सूत्रयोजना द्रष्टव्या। उक्तेनैवागृहीतविशेषणन्यायेन गुणक्रियादिशब्दानां तद्वाचित्वमपि सिद्धं कृत्वोपसंहरति—तस्मादिति। एवं प्रसङ्गागतं पदानामाकृत्यर्थविचारं परिसमाप्य, प्रकृतं स्मृत्याचारोपस्थापितश्रुति प्रामाण्यमुपसंहरति—इतीति ॥ ३५ ॥

॥ इति श्रीमन्नारायणामृतपूज्यपादशिष्यश्रीगोविन्दामृतमुनिविरचिते शाबरभाष्यविवरणे प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

---

त० वा०—ये त्वाऽऽलम्भनादिचोदनाभावादयो **'न क्रिया स्यात्'** इत्येतत्सूत्रानुभाषिताः पूर्वपक्षोक्ता हेतवः तेषां सर्वेषामनेन सूत्रेण परिहारोऽभिधीयते—

**अविभागादित्यस्य चतुर्धा व्याख्यानम्**

**'तदर्थत्वात्प्रयोगस्याविभागः'** इति। तदर्थत्वात्—अपूर्वार्थत्वादालम्भनप्रोक्षणाद्यङ्गानामपूर्वसाधने प्रयोगेण भवितव्यम्, द्रव्यं चापूर्वसाधनम्, यागेन स्वसिद्ध्यर्थमाक्षिप्तत्वात्, नाऽऽकृतिः समर्थत्वात्, तदभिधानं तु द्रव्यनियमार्थं प्रतिपत्तव्यम्, न स्वार्थम्। जातेरनपेक्षितत्वाददृष्टार्थत्वप्रसङ्गात्साधनत्वाप्रतीतेश्च।

यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते, तदपि द्रव्यनियामकत्वेनैव, न साक्षादयोग्यत्वात्। तेनाऽऽकृत्यभिधानस्य द्रव्यनियमार्थत्वाद् द्रव्ये वाऽऽलम्भनप्रोक्षणसंख्याकारकसामानाधिकरण्यादिसंभवाददृष्टता। तदाह—प्रयोगस्याविभाग इत्याकृतिपक्षेऽप्यालम्भनादिप्रयोगस्य द्रव्यादविभक्ततैवेति।

अथवाऽऽकृत्यभिधानस्य द्रव्यनियमार्थत्वादुक्तवत्प्रयोगस्याविभाग इति।

यद्वा। आकृतिव्यक्त्योरत्यन्तभेदाभावात्कदाचिद् व्यक्तिरूपेण द्रव्यमभिधीयते, कदाचित्सामान्यरूपेण यथा—विवक्षितम्। तथा—शब्दस्योभयरूपवस्त्वर्थत्वाद् व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागः नानारूपतेति। जातेर्वा व्यक्तितोऽत्यन्तभेदाभावाद्, व्यक्तौ कृता धर्मा जातौ कृता एव भवन्तीति, न प्रयोगस्य विभागेन प्रयोजनमिति।

यद्वा। आकृतिव्यक्त्योरुभयोर्यागार्थत्वाद्धर्माणां च यत्र क्वचन यागसाधने कृतानां प्रयोजनवत्त्वादद्रव्यादविभक्ततेति।

तस्मादाकृतिपक्षेऽप्यालम्भनादिसंभवादाकृतिरेव शब्दार्थं इति सिद्धम् ॥३४-३५॥

(इति आकृत्यधिकरणम् ॥ ९ ॥)

॥ इति श्रीभट्टकुमारिलस्वामिकृतौ मीमांसावार्तिके प्रथमस्याध्यस्य तृतीयः पादः ॥

---

न्या० सु०—तस्मादित्युपसंहारभाष्यम् ।

व्यक्त्यभिधाने निरस्तेऽपि, सम्बन्धाभिधानादिपूर्वपक्षाणामनिरस्तकत्वात्परिशेषासिद्धेर-युक्तमाशङ्क्य, समर्थ्यते एवमिति । 'न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति-चेदिति सूत्रं प्रथमं वेति चेदिति सूत्रावयवेनाकृत्यभिधानपक्षपरामर्शादाकृतिवाचिताया-मालम्भनादिक्रिया न स्यात्, अन्यं तद्वर्णं तद्वयसमालभेतेति चार्थान्तरे आलम्भनविधानं न स्यात् । षड् देया इति च द्रव्याश्रयस्य संख्यालक्षणस्य वाचकः षडिति शब्दो न स्यादिति, पूर्वपक्षसूत्रार्थानुभाषणार्थत्वेनाथ यदुक्तमित्यादिभाष्येण व्याख्याय, तत्परिहारार्थ-त्वेन तदर्थत्वात्प्रयोगस्याविभाग इति सूत्रं व्याख्यातुं सङ्क्षेपेणानुसन्धत्ते—ये त्विति । भाष्यकृतेदं सूत्रं न्यायेन शब्दस्याकृत्यर्थत्वावधारणादालम्भादिक्रियाया द्रव्ये प्रयोगस्या-नुष्ठानस्य षडादिसंख्यायाश्च द्रव्ये प्रकर्षकत्वेन विशेषकत्वेन योगस्यान्वयस्योपाकृतपशुना सैव प्रतिनिहिते द्रव्यान्तरे प्रयोगस्यानुष्ठानस्याविभागो द्रव्यस्याकृत्या सम्बन्धः कारणम् । जातिवाचिनोऽपि शब्दस्य लक्षणया व्यक्तिपरत्वादविरोध इत्याशय इत्येवं व्याख्यातम् ॥ ३४ ॥

न्या० सु०—तत्स्पष्टत्वादव्याख्याय स्वयमन्यथा व्याचष्टे—तदर्थत्वादिति । प्रयुज्य-मानक्रियाप्रयोजनत्वेनानिर्दिष्टमप्यपूर्वं बुद्धिस्थत्वात्तच्छब्देन परामृश्याऽपूर्वार्थत्वादालम्भना-देराकृतिपक्षेऽपि प्रयोगस्यानुष्ठानस्याविशेष इति व्याख्येयमित्यर्थः ।

नन्वाकृतिपक्षे तस्या एवापूर्वसाधनत्वावगतिः कथं पक्षद्वये प्रयोगस्य विशेष इत्या-शङ्क्याह—द्रव्यं चेति । यागद्वारा पश्वादेरपूर्वसाधनत्वम्, न चाकृतिर्निष्क्रियत्वात्यक्तुं योक्तुं शक्येत्यर्थः । किमर्थं तर्ह्याकृत्यभिधानमत आह—तदभिधानं त्विति । नन्वदृष्टार्थत्वेनैव तर्ह्याकृतेः प्रोक्षणादिवदपूर्वसाधनत्वं भविष्यतीत्याशङ्क्य क्रियारूपाया जातेस्तद्द्वारमन्त-रेण दृष्टसाधनत्वा—प्रतीतेतिरित्युक्तम् । नन्वाकृतेः साधनत्वाभावे पशुना यजेतेत्यादि-करणनिर्देशो न युज्यत इत्याशङ्क्याह—यदपीति । अनुपात्तस्य द्रव्यस्य क्रियासाधनशक्तेर-नवधारितविशेषस्य चोपादानायोगादाकृत्या च विना द्रव्यविशेषानवधारणाद् द्रव्यविशेषा-वच्छेदकत्वेनैवाकृतेः करणत्वम्, न साक्षादित्यर्थः । अत्रादिसूत्रं योजयति—तेनेति । न द्रव्यमित्यनुभाषणसूत्रगतेन द्रव्यशब्देन बुद्धिस्थं द्रव्यं तच्छब्देन परामृश्यत इति भावः ।

प्रयोगस्याविभाग इति सूत्रावयवव्याख्यानार्थं 'द्रव्ये वे'त्युक्तम्, तमेवावतारणपूर्वकं व्याख्यातार्थे योजयति—तदाहेति । आकृतिपक्षेऽपि प्रयोगस्याविशेष इत्येवमेव वात्राप्यपूर्वार्थत्वादिति पूर्वव्याख्याभवदुत्तरावयवो योज्य इत्याह—अथ वेति । व्यक्त्या-कृत्योस्त्वभेदविवक्षायां भेदानामेव वाय्यं प्रत्येकं सर्वेषां वाचक इति पूर्वप्रस्थानोक्तन्यायेन पक्षद्वयेऽपि व्यक्त्यभिधानाविशेषात्स्वरूपेणैवासौ वाच्या, जात्यात्मना वेत्येतावन्मात्रस्य विचारार्थत्वात्सिद्धान्तेऽपि क्रियाद्युत्पत्तेस्तुल्यत्वाद्यदि परं जात्यात्मना व्यक्त्यभिधानपक्षे निर्धारितविशेषव्यक्त्युपादानासम्भवात् क्रियाद्यनुपपत्तिर्वाच्या । तच्च स्वरूपेणाप्येकव्यक्त्या-

भिधाने तदुत्पत्तेः प्रागुत्तरकालं च क्रियानुपपत्तेः सर्वव्यक्त्यभिधाने च सर्वोपादानशक्तेः कदाचिदपि क्रियानुष्ठानासम्भवेनानिर्धारितविशेषव्यक्त्यभिधानस्यावश्याङ्गीकार्यत्वा-त्तुल्यमित्येतदर्थप्रतिपादनाय अन्यथासूत्रं व्याचष्टे—यद्वेति । द्रव्यशब्दवाच्याया व्यक्तेरुभय-रूपत्वेऽपि व्यावृत्ताकारतात्र व्यक्तिरूपशब्देनाभिमता । पक्षविकल्पार्थौ कदाचिच्छब्दौ । अस्मिन्नपि व्याख्याने पूर्वप्रकृतद्रव्यपरामर्शिनं तच्छब्दमभिप्रेत्यानुवृत्तव्यावृत्तोभयरूपवद-निर्धारितविशेषद्रव्यार्थत्वाच्छब्दस्य पूर्वपक्षेऽपि प्रयोगस्यानुष्ठानस्य निर्द्धारितविशेषव्यक्ति-विषयत्वायोगान्न विभागो व्याहस्यतेति योजयितुम् —शब्दस्येत्युक्तम् ।

यद्वा जातिश्च व्यक्तिश्च तामस एवार्थ इत्येवं तदर्थत्वादिति सूत्रावयवेनैव जाति-व्यक्त्योरत्यन्तभेदाभावोऽभिधीयते । ततश्चाकृतौ विहितस्यालम्भादिप्रयोगस्य विभागो निष्कृष्टाकृतिविषयता नास्तीति न क्रियानुपपत्त्यादिदोषापत्तिरिति चतुर्थी व्याख्यामाह—जातेर्वेति । भेदेऽपि आकृतिर्व्यक्त्या न क्रिया स्यादित्यनुभाषणसूत्रनिर्दिष्टां क्रियां तच्छब्देन परामृश्याप्याकृतावनवच्छिन्नव्यक्त्युपादानाभावेन आकृतिनिरपेक्षया व्यक्त्या साधनत्वा-योगेन उभयोरन्योन्यापेक्षयोर्यागापूर्वसाधनत्वावसायात्साधनत्वापेक्षायाः शक्तेरपि साधन-शक्तत्वाच्च । धर्माणां कर्मसम्बन्धे च शेषिसाहित्यस्याविवक्षितत्वेनैकत्रापि कृतानामुप-कारकत्वोपपत्तेरपूर्वसाधनव्रीहिष्विव विहितानां धर्माणां यवेष्वाकृतावपि विहितानां व्यक्तावनुष्ठानोपपत्तेर्व्यक्त्याकृत्योर्द्वयोर्यागापूर्वार्थत्वाच्चाकृतौ विहितस्यालम्भादिप्रयोगस्य व्यक्तिविषयत्वाद्विभागो भेदो नास्तीति नाकृत्यभिधानपक्षे क्रियानुपपत्तिरितिसूत्रं व्याख्येय-मित्याह—यद्वेति । तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति । सास्नाद्येकार्थसम्बन्धि-गोत्वमात्रस्य वाचकः गोशब्द इति विज्ञातमन्वयव्यतिरेकिगमित्यनेन न्यायेनान्वयव्यतिरेक-बलेनैवाकृत्यभिधानस्याविचारितसिद्धत्वात्प्रयोगचोदनाद्यनुपपत्तेस्त्वदसम्भवाच्छङ्कामात्रं निरा-कर्त्तुमेतदधिकरणमिति सूचयितुम्--आकृतिपक्षेऽपीत्युक्तम् ॥३५॥

॥ इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वर-विरचितायां तन्त्रवार्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

———

भा० प्र०—जाति के अभिधेय होने पर जिन दोषों की सम्भावना "प्रयोगचोदना-भावात्" "अन्यदर्शनात्" एवं "अद्रव्यशब्दात्" इन तीन सूत्रों से प्रदर्शित की है; उसी की आशङ्का से यह कहा गया है। कारण, सिद्धान्ती इसका समाधान नहीं करते है वरन्, इसका उल्लेख मात्र किया जाता है।

"क्रिया" = प्रोक्षणादिक्रिया, "न स्यात्" = नहीं हो सकती है, "इति चेत्" = यदि यह कहा जाय कि, "अर्थान्तरे विधानम्" = अन्य अर्थ का विधान अर्थात् नष्ट द्रव्य के स्थान में अन्य द्रव्य के स्थान पर अन्य द्रव्य का विधान नहीं हो सकता है।

अतः, "न द्रव्यम्" = अर्थात् द्रव्य नहीं है आकृति होने से लिङ्ग, संख्या आदि गुणों का अन्वय नहीं हो सकता है। "इति चेत्" = यदि यह कहा जाय ॥ ३४ ॥

भा० प्र०—पूर्व पक्ष की आशङ्का के उत्तर में सिद्धान्तियों ने कहा है कि शब्द का वाच्य जाति को मानने पर कोई भी अनुपपत्ति नहीं हैं। क्योंकि जाति और द्रव्य का अत्यन्त भेद नहीं हैं, इसलिए द्रव्य का ही प्रोक्षण आदि होगा। यदि यह कहा जाय कि जाति को क्यों वाच्य कहा जायगा ? इसके समाधान में कहना है कि "तदर्थत्वात्" जाति के निर्देश के साथ द्रव्य का उल्लेख होने पर उसका अन्यथा नहीं हो सकता है। एक जातीय द्रव्य के स्थान में स्वेच्छापूर्वक अन्य जातीय द्रव्य का व्यवहार नहीं किया जा सकता है। एवं "श्येनचितं चिन्वीत" इत्यादि क्रिया के भी लोप की सम्भावना नहीं है। इस कारण से अभिधान अर्थात् शब्द के द्वारा द्रव्य का नियम अर्थात् व्यवस्था करने के लिए जाति को ही अभिधेय कहा गया है। अतः, "व्रीहीन् प्रोक्षति" इस स्थल में प्रोक्षण क्रिया का आश्रय जो व्रीहि द्रव्य उसी को व्रीहित्व जाति विशेष माना गया है। इस प्रकार "षड् देयाः" इस स्थल में संख्या रूप गुण का आश्रय जो गोव्यक्ति उसको गोत्वजाति विशेष माना गया है। इस प्रकार "यदि पशुरुपाकृतः पलायेत तदा अन्यं पशुमालभेत्" इस स्थल में भी पशु शब्द के द्वारा पशुत्व जाति अभिहित होने से विनष्ट पशु व्यक्ति का जो अन्य प्रतिनिधि होगा उसी का विशेष निर्देश किया जाता है। अन्य स्थल में भी इसी प्रकार अवगत करना चाहिए। अतः, शब्द का अभिधेय आकृति या जाति होने पर व्यक्ति उससे अभिन्न नहीं है अथवा लक्षणा से व्यक्ति का बोध होने से व्यक्तिरूप द्रव्य ही लिङ्ग, संख्या, कारक आदि का आश्रय होता है। उसमें लिङ्ग, संख्या आदि का सामाधिकरण्यरूप से अन्वय होने में कोई बाधा नहीं है। इसीलिए आकृति ही पदार्थ अर्थात् शब्द का वाच्य अर्थ है।

"तदर्थत्वात्" = तदर्थता अर्थात् द्रव्य की नियमार्थता के कारण अर्थात् द्रव्य की विशेष रूप में व्यवस्था करना रूप प्रयोजन होने से, आकृति ही शब्द का वाच्य है। 'प्रयोगस्य' = प्रयोग का अर्थात् प्रोक्षण आदि क्रिया का, 'अविभागः' = द्रव्य से विभाग = विच्छेद नहीं है, अर्थात् द्रव्यादि में ही प्रोक्षण आदि क्रियायें होती है। द्रव्य की व्यवस्था करने के लिए ही शब्द के द्वारा आकृति को विषय किया गया है। आकृति से द्रव्य का विभाग अर्थात् भेद नहीं होने से प्रोक्षण आदि क्रियायें भी द्रव्य की ही होती है, किन्तु वह द्रव्य से विच्छिन्न नहीं होता है ॥ ३५ ॥

॥ इति श्रीगोस्वामिदामोदरलालात्मजमहाप्रभुलालगोस्वामिविरचितभावप्रकाशिकायां प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

# मीमांसादर्शनस्थश्लोकानां सूची

र

## ह

# मीमांसादर्शनस्थशब्दसूची